ल्लितपादारविन्दोदारनखरादर्शसौन्दर्या लक्षणतर्कच्छन्दःसाहित्यालंकारत्रिषष्टिशलाकापुरुषचरित्रयोगशास्त्रप्रमुखानेकशास्त्रनिर्माणोन्मूलितजगत्स्रष्टृविशिष्टसृष्टिचातुर्याः कोविदवृन्दवर्याः श्रीहेमचन्द्राचार्यो यद्यपि स्वोपज्ञश्रीसिद्धहेमचन्द्राभिधानस्य संस्कृतशब्दानुशासनस्य निःशेषशब्दव्युत्पादनवपुषः सुप्रतिप्रसन्नाध्यायाङ्गस्य सुललितपदन्यासस्य प्रभूतप्रश्रोत्तरप्रवृत्तिमद्गन्धोद्धुरस्य गजस्येवाल्पप्रमाणे ग्रन्थे समुद्गक इव निबन्धः कर्तुं दुःशकस्तथापि मन्दमतय एतद्बृहद्वृत्तावधीतायामपि भूरिसंज्ञाधिकारनियमविभाषापरिभाषोत्सर्गापवादादिविचारातिबाहुल्येनैतस्यामुक्तं प्रयोगजातं सम्यग्विवेक्तुं न शक्ष्यन्त्यतस्तेषां सकलप्रयोगजातस्य सम्यग्विविक्तये तथानेन शब्दानुशासनेन प्रधानोपाध्यायेनेव सर्वेपि शब्दाः शिष्या इव सम्यग्व्युत्पादिता अपि यावन्महाकाव्ये लोकव्यवहार इव न व्यापारितास्तावत्स्वमत्यान्यत्राव्यवहारिकेर्थे प्रयुज्यमाना नाभीष्टार्थसिद्धिभाजो भवन्तीति ते यस्मिन्नर्थे यथा प्रयुज्यन्ते तथा दिग्मात्रेण दर्शनार्थं तथा संसिद्धशब्दसंदर्भपुष्पोत्करसंभृतादस्माद्व्याकरणात्पुष्पकरण्डकादिवोद्धृत्यैतत्प्रयोगप्रसूनप्रकरः काव्यदाम्नि गुम्फितः सुमतिभिरपि सुखेन ग्राह्यो भवतीत्येतदर्थमेतच्छब्दानुशासनविशेषहेतुश्रीसिद्धचक्रवर्तिश्रीजयसिंहदेववंशावदातवर्णनाय च द्व्याश्रयं शब्दानुशासनप्रयोगसंदर्भसंग्रहस्वरूपतया सर्वकाव्यलक्षणलक्षितकथाप्रबन्धस्वरूपतया च यथार्थाभिधानं महाकाव्यं चिकीर्षन्तः शिष्टसमयपरिपालनाय निर्विघ्नशास्त्रसमाप्तये च तस्यादौ श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासननमस्कारानुसारेणाभीष्टदेवताप्रणिधानरूपं नमस्कारं चक्रुः ॥

---

१ सी डी °[illegible]°. २ सी °वृन्द°. ३ सी °न्धोर°. डी °न्धोद्धर°. ४ सी °[illegible]°. ५ सी °[illegible]°. ६ एफ् विज्ञा [illegible]°. ७ सी °पुष्पोत्क°. डी °[illegible]°. ८ सी डी °[illegible]°. ९ सी °[illegible]°. १० सी डी °अयश°. ११ डी °[illegible]°. १२ एफ् [illegible]°.

अर्हमित्यक्षरं ब्रह्म वाचकं परमेष्ठिनः ।
सिद्धचक्रस्य सद्बीजं सर्वतः प्रणिदध्महे ॥ १ ॥

१. अर्हमिति वर्णसमुदायं सर्वत सर्वस्मिन्क्षेत्रे काले च प्रणिदध्महे ।
आत्मानं ध्यायकं वीजमध्ये न्यस्तं संक्षेपेणार्हकारैर्ध्येयैः सर्वतो वेष्टितं
चिन्तयामः । यद्वा । अर्हंशब्दवाच्येन भगवतार्हता ध्येयेनाभिन्नमात्मानं
ध्यायकं ध्यायाम इत्यर्थः । कीदृशम् । निर्मुक्तात्मकत्वात्परमे पदे सिद्धिलक्षणे
तिष्ठति । "परमात्किव" इत्यौणादिके कितीनि "भीरुष्ठानादयः" [२.३.३१.]
इति यत्वे गणपाठसामर्थ्यात्सप्तम्या अलुपि परमेष्ठी तस्य परमेष्ठिनो भगव-
तोर्हतो वाचकं प्रतिपादकमत एवाक्षरं ब्रह्माभिधानाभिधेययोरभेदोपचा-
रादचलं ज्ञानं परमज्ञानस्वरूपपरमेष्ठिवाचकमित्यर्थः । यद्वा । अक्षरमिति
भिन्नं विशेषणं ब्रह्मेति च । ततोक्षरं शाश्वतमेतदभिधेयस्य भगवत. पर-
मपदप्राप्तत्वेनाविनश्वरत्वाद्ब्रह्म च परमज्ञानस्वरूपम् । यद्वा । अक्षरस्य मो-
क्षस्य हेतुत्वादक्षरं ब्रह्मणो ज्ञानस्य हेतुत्वाच्च ब्रह्मात एव च सिद्धचक्रस्य
सिद्धा विद्यासिद्धादयस्तेषां चक्रमिव चक्रं यन्त्रकविशेषस्तत्र सत् आद्य-
त्वेन प्रधानं वीजं तत्त्वाक्षरम् । स्वर्णसिद्ध्यादिमहासिद्धिहेतोः सिद्धचक्रस्य
पञ्च वीजानि वर्तन्ते तेष्विदमाद्यक्षरमित्यर्थः । तेन स्वर्णसिद्ध्यादिमहा-
सिद्धीनामिदं मूलहेतुरित्युक्तम् । अत एव चेदं ध्यानार्हमित्यर्थः । नन्व-
र्हमित्यस्य योभिधेयः स एव प्रणिधेयत्वेन मुख्यः । अर्हमिति शब्दस्त्व-
र्हद्वाचकत्वेन प्रणिधानार्हत्वाद्गौणः । गौणं च मुख्यानुयायीति मुख्यस्यैव
प्रणिधानं कर्तुमुचितम् । एवं चार्हमित्यक्षरं ब्रह्मवाच्यं श्रीपरमेष्ठिनं सि-
द्धचक्रादिवीजेन सर्वतः प्रणिदध्मह इति कार्यं स्यात् । अत्र चैवमन्वयः ।
सिद्धचक्रादिवीजेनार्हमित्यनेन वाच्यं परमेष्ठिनं प्रणिदध्मह इति । नैवम् ।

१ सी डी °ता ध्ये°. २ सी डी ध्याया°. ३ एफ् °ष्ठी अस्य ४ सी डी °रूप प°. ५ सी °मेतत°. एफ् °मेव त°. ६ सी भव°. ७ सी डी °नहे°. ८ सी डी °घमक्ष°. ९ बी सी डी एफ् °र्थः । एते°. १० सी डी °सिद्धादि°.

यथा कश्चित्स्वस्वामिना प्रेषिते लिखिते समायाते स्वामिनीवान्तरङ्गं बहुमानं प्रकटयन् स्वामिनि सातिशयां प्रीतिं प्रकाशयत्येवं परमेष्ठिनो वाचकमर्हमिति प्रणिदधत् श्रीहेमचन्द्रसूरिर्मुख्ये प्रणिधेयेऽर्हति[3] सातिशयं प्रणिधानं न्यापितवान्। येन हि यस्य नामापि ध्यातं तेन स नितरां ध्यात इति यथोक्तमेव साधु। तथा सर्वपार्षदत्वादस्य काव्यस्य सर्वदर्शनानुयायी नमस्कारो वाच्य इत्यर्हशब्देन परमेष्ठिशब्देन च हरिहरब्रह्माणोऽपि व्याख्येयाः। यथा परमेष्ठिनो हरेर्हरस्य ब्रह्मणश्च वाचकमर्हमिति प्रणिदध्महे। अर्हशब्दस्य ह्येते त्रयोऽपि वाच्याः। यदुक्तम्।

अकारेणोच्यते विष्णू रेफे ब्रह्मा व्यवस्थितः।
हकारेण हरः प्रोक्तस्तदन्ते परमं पदम्॥ इति।

शेषं प्राग्वद्व्याख्येयम्॥

अर्हम्। इत्यनेन शब्दानुशासनसूत्रादिस्थः "अर्हम्" [१] इति नमस्कारः सूचितः। अक्षरं महत्यादिना च तद्वृत्तिः सूचिता॥

अथैतत्काव्यनायकवंशमाशीर्वादपूर्वं प्रशंसन्नाह।

**भीमकान्तोद्धतोदात्तललितशान्तगुणात्मने।**
**भद्रं चौलुक्यवंशाय कृतस्याद्वादसिद्धये॥ २॥**

[illegible]. चौलुक्यवंशाय चुलुके संध्यावन्दनाय विधात्राम्बुना भृते हस्ते भवो "दिगादिदेहांशाद्यः" [६. ३. १२४.] इति ये चुलुक्यः। उक्तं च।

अयोध्या मातङ्गाः परिगलितपक्षाः क्षितिभृतो
जडप्रीतिः कूर्मः फणिपतिरयं च द्विरसनः।
इति ध्यातुर्धातुः क्षितिविधृतये सान्ध्यचुलुका-
त्समुत्तस्थौ कश्चिद्विलसदसिपट्टः स सुभटः॥

१ सी [illegible]. डी [illegible]. २ बी °वान्तर म°. सी °वान्तर म°. ३ बी [illegible] ४ सी डी [illegible]. ५ सी डी °ध्मः। यदुक्तम्।
६ ए [illegible]

चुलुक्यस्यादिक्षत्रियविशेषपुरुषस्यायं "तस्येदम्" [६.३.१६०.] इत्यणि चौलुक्यः । स चासौ वंशश्च । यद्वा । चुलुकोत्पन्नः पुरुषोप्यभेदाच्चुलुकस्तस्यापत्यं वृद्धं गर्गादित्वाद्यञि [६.१.४२.] चौलुक्यस्तस्य वंशः संतानश्चौलुक्यवंशस्तस्मै भद्रं स्वस्त्यस्त्वित्याशीर्वादः । "तद्भद्रायुष्य०" [२.२.६६.] इत्यादिना चतुर्थी । यत्रान्यत्क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयुज्यते इत्यत्र भवन्तीत्यस्योपलक्षणत्वात्पञ्चम्यादिपरोपि । तेनात्रास्त्विति ज्ञेयम् । आशीर्वाददाने हेतुगर्भं विशेषणमाह । क्लृप्तस्याद्वादसिद्धय इति । स्यादित्यसक्धातोर्यात्प्रत्ययान्तस्य प्रतिरूपको विधिविचारणास्तित्वविवादानेकान्तसंशयाद्यर्थवृत्तिरव्ययः । अत्र तु भीमकान्तेति विशेषणेनानेकान्तस्यैव साध्यत्वादनेकान्तवृत्तिर्गृह्यते । तस्य तत्पूर्वको वा वादः स्याद्वादो नित्यत्वानित्यत्वाद्यनेकधर्मशबलैकवस्त्वभ्युपगमरूपः श्रीमदार्हतमतप्रधानप्रासादचूलावलम्बिप्रलम्बोद्दण्डपाण्डुरपताकायमानोनेकान्तवादः । सिद्धिर्निष्पत्तिर्ज्ञापनं वा । क्लृप्ता निर्मिता स्याद्वादस्य सिद्धिर्येन तस्मै । स्याद्वादसिद्धिविधानेपि हेतुविशेषणमाह । भीमकान्तोद्धतोदात्तहिंस्रशान्तगुणात्मन इति । भीमा रौद्राः कान्ताः सौम्या उद्धता अविनयप्रधाना उदात्ता विनयप्रधाना हिंस्रा घातुकाः शान्ता दयाप्रधाना ये गुणा धर्मास्त एव धर्मधर्मिणोरभेदविवक्षया वंशस्य भीमत्वादिधर्मैः सहैक्यादात्मा स्वरूपं यस्य तस्मै । अत्र च भीमगुणात्मकत्वकान्तगुणात्मकत्वादीनां परस्परविरुद्धानामपि विरोधो रोधोभाग इव प्रत्यक्षप्रमाणमत्तवृषभेण बाध्यमानो भ्रंसते । यत उक्तम् ।

दृश्यत्वान्न विरोधोपि कथ्यते युक्तिशालिभिः ।
विरोधोनुपलम्भो हि यतो जैनमते मतः ॥

यदि ह्येषामेकत्र दृश्यमानानामपि विरोध उद्भाव्येत तदैकस्मिन्नपि

---

१ बी सी डी °दानहे°. २ सी डी °गर्भवि°. ३ सी डी °धिर्विचा°. ४ एफ् °कान्तास° ५ सी डी °न्तवादसिद्धिनिष्पत्तिज्ञापनवृ°. ६ बी °त्वाद्य°. ७ सी डी °लाविल°. ८ सी डी °त्मकादी°. ९ सी डी °धो मा°. १० सी डी °भेणे ना°. ११ सी डी भ्रशते. १२ सी डी °रोधानु°.

पुरुषे पुत्रत्वपितृत्वे स्थूलत्वकृशत्वे लघुत्वमहत्त्वे न घटेयाताम् । अथै-कोपि पुमान्स्वजनकापेक्षया पुत्रः स्वपुत्रापेक्षया जनकः स्थूलापेक्षया कृशः कृशापेक्षया स्थूलो महदपेक्षया लघुर्लघ्वपेक्षया च महानिति विप-क्षभेदेन विरुद्धधर्मा अप्येते घटन्ते तदत्रापि समानम । तथाहि । शत्रू-नुद्दिश्य भीमगुणत्वं प्रजानु कान्तगुणत्वं दर्पिष्ठेषूद्धतगुणत्वं पूज्येषूदात्त-गुणत्वं व्यसनिषु हिंस्रगुणत्वं कृपापात्रेषु शान्तत्वं चेति । एवं च प्रत्य-क्षसिद्धभीमकान्तगुणाद्यनेकधर्मात्मकेनानेन चौलुक्यवंशेन दृष्टान्तभूते-न नित्यानित्याद्यनेकधर्मशबलैकवस्त्वभ्युपगमरूपस्याद्वादसिद्धिविधानपूर्वकं दर्शनान्तरीयाणां बौद्धसांख्यादीनामेकान्तानित्यत्वैकान्तनित्यत्वादिवादेषु स्याद्वादस्यैव न्याय्यत्व सूचितम । अत एव श्रीहेमचन्द्रसूरेर्यतिमौलेरा-शीर्वादार्होयं वंश इति । व्रतिनो हि धार्मिकं विनान्यस्य प्रशंसायां दोष-संभव. ॥

स्याद्वादसिद्धये । इत्यनेन "सिद्धिः स्याद्वादात्" [२] इति सूत्रार्थः सूचितः ॥

अथान्येभ्योधिकेन येन गुणेनायं वंशोत्र काव्ये वर्ण्यस्तं प्रकर्षयन्नाह ।

लोकात्सालातुरीयादेः शब्दसिद्धिरिवानघा ।
चौलुक्यवंशाज्जयति नयधर्मव्यवस्थितिः ॥ ३ ॥

३. चौलुक्यवंशात् "गम्ययपः कर्माधारे" [२.२.७४.] इति कर्मणि पञ्चमी । चौलुक्यवंशं प्राप्य नयधर्मव्यवस्थितिर्नयो न्यायो धर्मोहिंसादि-र्नयेन धर्मो नयधर्मस्तस्य स्थितिर्व्यवस्था सम्यक्प्रतिपाल्यमानत्वेन न विद्यतेघ दुःखं व्यसनं पापं वा यस्यां सानघा श्रेयसी सती जयति सर्वोत्कर्षेण वर्तते । यथा सालातुरीयादेर्लोकात् सलातुर आभिजनो निवासोस्य "सलातुरा-दीयण्" [६.३.२१५.] इतीयणि सालातुरीयः पाणिनिस्तत्प्रभृतिम । आदि-शब्दाच्चन्द्रशाकटायनादिवैयाकरणानां श्रीसिद्धसेनमल्लवादिहरिभद्रसू-

---

१ सी डी [illegible] . २ सी डी [illegible] . ३ सी डी एफ् [illegible] . ४ सी डी [illegible] . ५ सी डी [illegible] . ६ ए एफ् [illegible] . ७ सी डी एफ् [illegible] . ८ सी डी एफ् [illegible] . ९ सी डी [illegible] .

रिप्रभृतितार्किकाणां च परिग्रहः । लोकं वैयाकरणसमयविदं[1] प्रमाणविदं च प्राप्य शब्दसिद्धिः साधुशब्दनिष्पत्तिरनघासाधुत्वदोषरहिता सती जयति । अथवात्र श्लोक इहेत्यध्याहार्यम् । सिद्धिर्व्यवस्थित्यपेक्षया च गम्ययस्त्वम् । ततोयमर्थः । सालातुरीयादिलोकमाश्रित्य यानघा शब्दसिद्धिर्ये[2] प्रयोगार्हाः शब्दाः सिद्धाः सा यथेह प्रबन्धे जयति । इयं हि काव्यफला काव्ये चात्र शब्दानुशासनक्रमानतिक्रमेण निबध्यमानेषु शब्देषु स्वफलप्राप्त्योत्कर्षवती भवति तथा चौलुक्यवंशं प्राप्य यानघा नयधर्मव्यवस्थितिः सेह प्रारभ्यमाणे प्रबन्ध आधारे जयति । इयं चानघत्वेन स्वय[3]मेवोत्कृष्टाप्यस्मिन्काव्ये निबध्यमाना विशेषेणोत्कृष्टा भवतीत्यर्थः । भवति हि विशिष्टाधारकृतो विशेषो यथा राजा सर्वाङ्गभूषितोपि रूप[4]पात्रमपि यदास्थानमण्डपे सिंहासनमध्यारोहति तदान्यां कां चन शोभां लभत एवमत्रापीति । अत्र च व्याख्याने लोकात्सालातुरीयादेरित्यत्र शब्दसि[5]द्धिः सामान्योक्तावपि श्रीहेमचन्द्रसूरिकृतात्र काव्येभिधेयत्वेनावबोध्या स्वोपज्ञतया तत्क्रमानतिक्रमेणैवात्र सिद्धशब्दानां प्रयोगात् । एतेन चास्य काव्यस्य स्वोपज्ञशब्दानुशासनसंसिद्धशब्दैश्चौलु[6]क्यनयधर्मव्यवस्थित्या च सहाभिधानाभिधेयलक्षणः संबन्ध उक्तः । प्रयोजनं च सिद्धानां शब्दानां काव्यविषयं प्रयोगज्ञानम् । नयधर्मव्यवस्थितिज्ञानं चानन्तरम् । पर[7]ंपरं च सिद्धशब्दप्रयोगज्ञानेभीष्टदेवतादिस्तुत्या[8]दिक्रमेण नयधर्मव्यवस्थि[9]तिज्ञानेन च नयधर्मानुष्ठानादिक्रमेण निःश्रेयसमुक्तम् । तथास्य द्वयोराश्रयत्वाद् द्व्याश्रय इत्य[10]न्वर्थं नाम[11]ापि व्यञ्जितम् ॥

लोकात् । इत्यादिना "लोकात्" [३] इति सूत्रार्थः सूचितः ॥

---

१ सी डी °द च. २ सी डी °र्यैन प्र°. ३ एफ् स्वमे°. ४ सी डी °पमात्र°. ५ बी सी डी °सिद्धेः सा°. ६ सी °क्यवंशस्य न°. डी °क्यवंश्यस्य न°. ७ एफ् °र च. ८ सी डी °त्या क्र°. ९ एफ् °स्थितिः । श°. १० बी °त्यर्थना°. सी °त्यना°. ११ एफ् °मातिव्य°.

अथैतदेव पुरं धर्मार्थकामोपनिबद्धवर्णनाभिस्त्रिंशेन शतेन श्लोकैर्वर्णयति[1] । धर्मार्थकामवर्णना यथायथं स्वयमेवाभ्यूह्याः ।

सपत्नीर्ष्याविधीहाभिः श्रीद्धेऽत्रानुपतीष्यते ।
मधूत्तमं वधूढाभिः सभ्रूत्क्षेपं मृदूरुभिः ॥ ५ ॥

५. श्रिया सर्वसमृद्ध्येद्धे भासुरेऽत्र पुरे मृदूरुभिः कोमलसक्थीभिर्वधूढाभिर्वध्वो योषितो[2] या ऊढाः पाणिगृहीत्यस्ताभिरनुपति भर्तृसमीप उत्तमं[3] पत्या स्वयं दीयमानत्वेन प्रेमकन्दलो[4]द्भेदकत्वाद्वा मनोज्ञं मधु मद्यमिष्यते । कथम् । सह भ्रुवोरुत्क्षेपेणोपहासाय[5] चालनेनास्ति यत्तत्सभ्रूत्क्षेपं यथा स्यादेवम् । यतः सपत्नीनां येर्ष्या परसंपत्तौ चेतसो व्यारोषस्तस्या[6] विधिः[7] करणं तत्रेहाभिलाषो यासां ताभिः । यथायथा सपत्न्यः प्रियकृत[8]तथाविधप्रेमसंपत्तिं पश्यन्त्यो गाढतरेर्ष्यया म्लायन्ति तथातथा वधूढा भ्रूत्क्षेपेणोपहस्य मधु पिबन्तीत्यर्थः ॥

उमाभर्तृषभस्कन्धा मातापितृषिपूजकाः ।
नृभर्तृऋषभा[9] अस्मिन्नासन्पितृणवर्जिताः ॥ ६ ॥

६. नृभर्तृऋषभा नृणां भर्तारः स्वामिनो[10] नृभर्तारो राजानस्तेषु[11] ऋषभा मुख्या राजाधिराजा वनराजादयोऽस्मिन् पुर आसन् । एतेनास्य[12] पुरस्य चिरंतनतोक्ता[13] । कीदृशाः । उमाभर्ता शंभुस्तस्य ऋषभो बलीवर्दस्तत्स्कन्धवत्स्थूलबलिष्ठाः[14] स्कन्धा येषां ते । तथा मातापितृ(तृ?)षिपूजका माता च पिता च मातापितरौ[15] तौ च ऋषयश्च तेषां पूजका अर्चकाः । याज-

१ **एफ्** °र्णना. There is here an evident omission of intermediate letters २ **बी** °पित ऊ°. ३ **एफ्** °म मधु प°. ४ **ए** °लोद्रेक°. ५ **ए** °पेणाप°. ६ **सी** °रोरन°. ७ **बी** °धि कार°. ८ **सी** °कृत त°. **डी** °कृतां त°. ९ The commentary in Ms C begins with. उमाभर्ता शंभुः १० **डी** °नो रा°. ११ **एफ्** राजन°. १२ **ए बी एफ्** °स्य चि°. १३ **एफ्** °तनोक्ताः ।. १४ **एफ्** °स्तस्य स्क°. १५ **सी डी** °रौ च

कादित्वात्समासः । [३. १. ७८.] । एतेन विनयोक्तिः । अत एव पितृणवर्जिताः । पितृणामृणमपत्याभावस्तेन वर्जिताः पुत्रवन्त इत्यर्थः । भवति हि पूज्य[1]पूजकानां पुत्रादिसमृद्धिः ॥

होतृतं पोतॄतं मातॢतं पितॢतमुद्गृणन् ।
अत्र स्याज्जडजिह्वोपि वाग्मी विद्यामठे पठन् ॥ ७ ॥

७. अत्र पुरे । मठ[2]श्छात्राद्यालयः । विद्यायै मठो विद्यामठो धर्माद्यर्थमुपाध्यायच्छात्राणां भोजनाच्छादनादिसामग्र्योपेत ईश्वरैः कारितो वेश्मविशेषस्तत्र । जातावेकवचनम् । विद्यामठेष्वित्यर्थः । जडा वर्णमात्रोच्चारणेप्यपटुर्जिह्वा यस्य स जड[3]जिह्वोप्युपाध्यायाध्याप[4]नैः[5]पुण्येन होतृत्-पोतॄत्-मातॢत्[6]-पितॢत्-शब्दान् दुरुच्चार्यानप्युद्गृणन्नुच्चारयन्[7] सन् वाग्मी पटुवाक् स्यात् । जडजिह्वा हि जिह्वापाटवाय विषमवर्णानुच्चार्यन्ते[8] ॥

अमुष्मिन्पुरुषार्थानां त्रिरूपत्वव्यवस्थितिः ।
ऌकारस्य ऋकारेण संधाविव विराजते ॥ ८ ॥

८. अमुष्मिन् पुरे[9] पुरुषार्थानां धर्मार्थकामानां त्रिरूपत्वव्यवस्थितिः । त्रीणि रूपाणि[10] स्वरूपाणि येषां तेषां भावस्त्रिरूपत्वं तस्य [11]व्यवस्थितिर्व्यवस्था विराजते । परस्परे[12]णा[13]बाधया स्वस्ववेलायां प्रवर्तनेन धर्मार्थकामानां त्रीणि रूपाणि[14] व्यवस्थि[15]तानि शोभन्त इत्यर्थः । यथा । ऌकारस्य ऋकारेण सह संधौ त्रिरूपत्वव्यवस्थितिः । कॄकारः । कॢऋकारः । कॢकारः । इत्येवं रूपत्रयव्यवस्था राजते ॥

---

१ सी पूज°. २ बी मठ छात्रा°. ३ सी °टप्यु°. ४ सी °पनै°. ५ बी °पुण्येन. ६ प पफ् °त् श°. ७ सी डी °न् वा°. ८ सी डी °जिह्वो हि. ९ सी पुर°. १० प °णि ये°. ११ सी व्यस्थि° १२ बी °रानबा°. १३ सी °बाधाया. १४ पफ् °णि स्वरूपाणि व्य°. १५ सी °स्थितिशो°.

गम्लृतं पत्लृतं शक्लृतं लाक्षणिका इव ।
अत्राक्षरमपि[3] प्राज्ञा न वदन्ति निरर्थकम् ॥ ९ ॥

९. यथा लाक्षणिका वैयाकरणा गमः पतः शकश्च धातूनां संबन्धिनम् लृतम् लृकारमनुबन्धमक्षार्यार्थत्वान्निरर्थकं न वदन्ति तथात्र पुरे प्राज्ञाः पण्डिताः प्राज्ञत्वादक्षरमपि[3] स्वरव्यञ्जनमात्रमपि निरर्थकं निःप्रयोजनं न वदन्ति । एतेनात्रत्यजनानामवाचालत्वमुक्तम् ॥

अस्मिन् महर्षिस्तुल्ये नृपाञ्शममहार्षीन् ।
दृष्ट्वेव लज्जिता जग्मुस्ते द्यां सप्त महर्षयः ॥ १० ॥

१०. अस्मिन् पुरे । नृपान् । अपिरत्र गम्यते । प्रचण्डदोर्दण्डोग्रान् राज्ञोपि शमेन कृत्वा महार्षीन् महामुनितुल्यान् दृष्ट्वा लज्जिता इव तेतिशमित्वेन प्रसिद्धाः सप्त महर्षयो मरीचि१अत्रि२अङ्गिर.३पुलस्त्य४पुलह५क्रतु६वसिष्ठाख्या७ महामुनयो द्यां व्योम जग्मुर्गताः । योपि येनोत्तमेन गुणेनोत्तमंमन्यः स्यात्स यदान्यस्मिन्नात्मनोतिहीनेपि तं गुणं पश्यति तदा लोकोपहासेन लज्जितो देशान्तरं याति ॥

भान्ति मत्तेभगामिन्यो रम्भास्तम्भनिभोरवः ।
सर्वर्तुमण्डितोद्यानेष्वत्रल्कारभ्रुवोङ्गनाः ॥ ११ ॥

११. इह पुरे सर्वर्तुमण्डितोद्यानेषु सर्वैः षड्भिर्ऋतुभिरुपचाराद्धेमन्तशिशिरवसन्तग्रीष्मवर्षाशरदाख्यषड्ऋतुजन्यपुष्पफलादिभिर्मण्डितानि[10] देवताप्रभावादिनावतरणाद्भूषितानि[11] यान्युद्यानान्युपवनानि[12] तेषु मत्तेभगामि-

१ सी °ग्लृ°. २ सी एफ् °क्षणका°. ३ सी °पि शा. ४ सी °दति नि°.

१ एफ् °मक्षा°. २ एफ् °कार्यर्थ°. ३ सी डी °पि नि°. ४ डी राज्ञ उपश°. एफ् राज्ञोपि. ५ सी °शोपशमन कृ°. ६ ए बी सी एफ् °स्त्यकल°. ७ ए एफ् °वशिष्ठा°. ८ एफ् °ख्या मु°. ९ सी लोप°. १० सी देवाप्र°. डी देवप्र°. ११ सी डी °रणक्र°. १२ सी डी °नानि°.

न्यः पुष्पफलाद्युच्चयनाय मदोन्मत्तहस्तिवत्सविलासं विहरमाणाः[1] सत्यो-ङ्गना भान्ति यतो रम्भास्तम्भनिभोरवः कदलीकाण्डतुल्यसक्थ्यस्त-था नागरलिपौ वक्राकारत्वकारो लिख्यते तद्वद्वक्रे[2] भ्रुवौ यासां ताः । रूपवत्य इत्यर्थः ॥

"औदन्ताः स्वराः" [१.१.४–४२.] इत्यादिभिः सूत्रैर्विधीयमानानां[3] स्वरादि-संज्ञाना प्रयोजनम् "इवर्णादेरस्वे स्वरे यवरलम्" [१.२.२१.] इत्यादिविधिसू-त्रेष्वेवेति तदुदाहरणदर्शनेनैवैता ज्ञापिता भविष्यन्तीति स्वरादिसंज्ञासूत्राण्यु-ल्लङ्घ्य विधिसूत्रोदाहरणानि दर्शितवान् । तथा हि ।

धर्मागारम् । नयास्पदम् । नाम्नाणहिल[4] । सदाश्लिष्टम् । अनुपतीष्यते । विधीहाभिः । श्रीद्धे । सपत्नीर्ष्या । मधूत्तमम् । मृदूरुभिः । सभ्रूत्क्षेपम् । वधूढाभिः । भर्तृपभ[5] । गम्लृतम् । इत्यत्र "समानानां तेन दीर्घः" [१] इति दीर्घः ॥ बहुवचनं व्याप्त्यर्थम् । तेनोत्तरसूत्रेणं लृऋतोरपि ऋलृति ह्रस्वो भवति । कृऋकारः । मातृलृतम् । अन्यथा "ऋस्तयोः" [५] इति परत्वाद् ऋरेव स्यात् ॥

महऋपि । नृभर्तृऋपभाः[9] । मातृलृतम् । शक्लृलृतम् । इत्यत्र[10] "ऋलृति ह्रस्वो वा" [२] इति वा ह्रस्वः ॥ पक्षे । महर्षयः । उमाभर्तृपभ[11] । होतॄतम् । गम्लृतम् ॥ कश्चित्तु ह्रस्वत्वा[12]भावपक्षे प्रकृतिभावमपीच्छति । तन्मते महाऋषीन् ॥

ऋता । कृकारः ॥ लृता । पक्लृतम् । इत्यत्र "लृत ऋलृ ऋलृभ्यां वा" [३] इति लृतो वा ऋलृ आदेशौ[13] ॥ पक्षे । ऋता सह पूर्वेण ह्रस्व उत्तरेण ऋकारश्च । कृऋकार. । कृकारः ॥ लृता च सह दीर्घत्वं ह्रस्वत्वं च । गम्लृतम् । शक्लृलृतम् ॥

ऋता । पितृषि ॥ लृता । पोलृतम् । इत्यत्र[14] "ऋतो वा तौ च" [४] इति

१ सी °माणस°. २ एफ् °वक्रौ भ्रु°. ३ सी डी °ना प्र°. ४ सी डी °हिल।. ५ ए एफ् °पभ. । ग°. ६ एफ् °नामिति । व°. ७ एफ् °ण ऋलनो°. ८ एफ् °पोलृ°. ९ एफ् °पभ. । मा°. १० एफ् °त्र ह्र°. ११ एफ् °पभः । हो°. १२ बी ह्रस्वाभा°. १३ सी °देशप°. डी °देश । प°. १४ सी डी °त्र ऋस्त°.

ऋत ॠॡ आदेशौ ॥ पक्षे । ऋति । भर्द्दृषभ । भर्तृऋषभाः ॥ ऌति । होतॄतम् । मातृॡतम् ॥ तौ च वा । पितृण । पितॢतम् । पक्षे यथाप्राप्तम् ॥

ॠकारः । होॠतम् । इत्यत्र "ऋस्तयोः" [५] इति ऌऋतोः स्थाने यथासंख्यमृता ऌता च सह ऋकारः ॥

मत्तेभ । दृष्ट्वेव । मण्डितोद्यानेषु । निभोरवः । सर्वर्तु । महर्षयः । अन्नल्कार । इत्यत्र "अवर्णस्य" [६] इत्यादिना एद्रादयः ॥ अकारस्य ईत्-ऋत्-ऌन्निमित्तकानि आकारस्य ईत्-वत्-ऊर्त्-ऋत्-ऌत्-ऌन्निमित्तकानि चोदाहरणानि स्वयं ज्ञेयानि । एवमन्यत्राप्यदर्शितोदाहरणानि स्वयं ज्ञेयानि ॥

ननु "ऌत ॠॡ ऋऌभ्यां वा" [३] इत्यादिसूत्रापेक्षया "ऋऌति ह्रस्वो वा" [२] इति सूत्रस्य "ऋतो वा तौ च" [४] इत्यस्यापेक्षयो "ऌत ॠॡ ऋऌभ्यां वा"[३] इत्यस्य च प्राथम्यादेतदुदाहरणगर्भाणां दशमाष्टमनवमश्लोकानां पञ्चमश्लोकानन्तरमुपन्यासः कर्तुमुचितस्तदनु "ऋतो वा तौ च" [४] इत्युदाहरणगर्भयोः षष्ठसप्तमश्लोकयोः । एवं हि सूत्रक्रमोऽनुसृतः स्यात् । सत्यम् । लाघवार्थम् । एवं ह्युपन्यासे क्रमप्राप्तं भर्तृषभेत्येतद् ऋति "समानानां तेन दीर्घः" [१] इति दीर्घोदाहरणम् "ऋतो वा तौ च" [४] इत्यस्य विकल्पोदाहरणं च युगपद्दर्शितं स्यात्तथा महर्षय इत्येतद् "ऋऌति ह्रस्वो वा" [२] इत्यस्य विकल्पोदाहरणम् "अवर्णस्येवर्णादि°" [६] इत्यत्रावर्णग्रहणेनाप्तस्य आत ऋति परे अर्कार्योदाहरणं च युगपद्दर्शितं स्यादिति सर्वमुपपन्नम् । एवमन्यत्रापि व्युत्क्रमोपन्यासकारणानि यथायथं सुधिया स्वयमभ्यूह्यानि ॥

इहर्णार्णं कम्बलार्णं वत्सरार्णं दशार्णकम् ।
वसनार्णं वत्सतरार्णं प्रार्णं वा न कस्य चित् ॥ १२ ॥

१२. इह पुरे ऋणस्यावयवतया ऋणमृणार्णं कलान्तरं कम्बलस्य

---

१ डी वास्ति न.

---

१ एफ् °तृऋत°. २ सी °दयश्च ।. ३ सी डी °नि चो°. ४ एफ् °त्-ऋत्-ऋ°. ५ सी डी एफ् °या "ऋत°. ६ बी सी डी दीर्घो°. ७ ए बी °त्यत्र व°. ८ बी सी डी °थ स्वधि°.

ऋणं कम्बलार्णं वत्सरस्य वर्षस्य ऋणं वत्सरार्णं दशानां रूपकादीनामृणं दशार्णं कुत्सितमल्पमज्ञातं वा दशार्णं दशार्णकं वसनार्णं वस्त्रस्य ऋणं वत्सतरार्णं तर्णकस्य ऋणं प्रकृष्टमृणं प्रार्णं वा। कस्य चिन्नास्तीति प्रत्येकमभिसंबध्यते । वाशब्दः पूर्वोक्तऋणार्णाद्यपेक्षया विकल्पार्थः । एतेनात्रत्यलोकानामैश्वर्यातिशयोक्तिः ॥

सुखेतोप्रऋणार्तश्च परमर्तो रतीच्छया ।

अस्मिन् स्मरऋतः स्त्रीभिर्मुदर्तो रमते जनः ॥ १३ ॥

१३. अस्मिन्पुरे जनः स्त्रीभिः सह रमते[3] । चः पूर्ववाक्यार्थापेक्षया समुच्चये । कीदृक्सन् । अप्रऋणार्तः । न प्रकृष्टेन ऋणेन ऋतः पीडित ईश्वर इत्यर्थः । अतएव सुखेतोनुपमभोजनाच्छादनविलेपनादिजनितं सुखं प्राप्तोत एव च मुदा प्रीत्या कर्त्र्यार्यते स्म ऋतः प्राप्तो यथा देवदत्तेन ग्रामो गतः प्राप्त इत्यर्थः । अत एव च स्मरऋतः कामेन पीडितोत एव च रतीच्छया निधुवनाभिलाषेण कर्त्र्या परमर्तः । परमं प्रकृष्टं गाढं यथा स्यादेवमृत. पीडितः ॥

प्रार्णम् । दशार्णकम् । ऋणार्णम् । वसनार्णम् । कम्बलार्णम् । वत्सरार्णम् । वत्सतरार्णम् । इत्यत्र "ऋणे प्र०" [ ७ ] इत्यादिना आर् ॥ समानानामिति बहुवचनस्य व्याप्त्यर्थत्वेनोक्त्वादिहोत्तरत्र च ह्रस्वोपि भवति । प्रऋण ॥

ऋणार्तः । इत्यत्र "ऋते०" [८] इत्यादिना आर् ॥ ह्रस्वोपि भवति । स्मरऋतः ॥ ऋत इति किम् । सुखेतः॥ तृतीयाग्रहण किम् । परमर्तः । समास इति किम् । मुदर्तः॥

इहर्च्छन्ति पराच्छन्ति खे प्रार्च्छन्त्यहिसद्मनि ।

प्रर्षयोत्र स्वतेजोभिरनपेतास्तपोमयैः ॥ १४ ॥

१४. अत्र पुरे वर्तमानाः प्रर्षयस्तपोध्यानादिविशेषेण प्रकृष्टा मु-

१ एफ् 'ना ऋण रू'. २ सी पूर्व ऋ'. डी पूर्वेग ऋ'. ३ सी एफ् 'ते । च पू'. ४ बी सी डी 'नितेन सु'. ५ बी सी डी सुखेन प्रा'. ६ सी डी प्राप्त'. ७ सी 'मानानि'. ८ डी 'नि । अप्र'. ९ सी 'दि आ'.

नय इह मर्त्यलोकेऽध्यादावृच्छन्ति यान्ति । तथा ख ऊर्ध्वलोके पराच्छेन्ति प्रकर्षेण गच्छन्ति । तथाहिसद्मन्यधोलोके च प्राच्छेन्ति । यतस्तपोमयैस्तपांसि प्रकृतानि कारणतया येपु तैस्तपोमयैः स्वतेजोभिः स्वकीयप्रभावैरनपेताः संयुक्ताः । तपःप्रभावादत्रत्यमुनीनां त्रिभुवनमपि गृहाङ्गणमित्यर्थः । एवं[3] च तपःप्रभावोपेतमहामुन्यवस्थित्यास्य पुरस्यातिपावित्र्यं सूचितम् ॥

प्राच्छेन्ति । पराच्छेन्ति । इत्यत्र "ऋत्यारुपसर्गस्य" [ ९ ] इत्यार ॥ उपसर्गस्येति किम् । इहर्च्छेन्ति । येन धातुना युक्ताः प्रादयस्तं प्रत्युपसर्गसंज्ञास्तेनेह न स्यात् । प्रर्षयः ॥

प्रार्षयन्ति शमे धर्मधुरायां प्रर्षभन्ति च ।
अत्र प्रऋजवन्त्येव दुर्जनेष्वपि[1] साधवः ॥ १५ ॥

१५. अत्र पुरे साधवः सज्जनाः शम इन्द्रियजयविषये प्रार्षयन्ति प्रकर्षेण ऋषय इवाचरन्ति । "कर्तुः क्विप्०" [३.४.२५.] इति क्विप् । तथा धर्मधुरायां धर्मकार्यप्राग्भारविषये प्रर्षभन्ति प्रकर्षेण[4] ऋषभा इवाचरन्ति यथा धवलाः शकटादिधुरं वहन्त्येवं धर्मधुरामिति । अतिधार्मिका इत्यर्थः । अत एव दुर्जनेष्वपि[5] खलेष्वपि प्रऋजवन्त्येव प्रकर्षेण[6] ऋजव इवाचरन्ति । हितमेव कुर्वन्तीत्यर्थः ॥

प्रार्षयन्ति प्रर्षभन्ति । इत्यत्र "नाम्नि वा" [ १० ] इति वा आर् ॥ केचित्तु पक्षे ह्रस्वत्वमपीच्छन्ति । प्रऋजवन्ति ॥

प्राल्कारायितवेणीकाः प्रल्कारायितभ्रुवः ।
प्रल्कारयन्ति खे दन्तज्योत्स्नयात्र मृगीदृशः ॥ १६ ॥

---

१ सी डी °नेष्विव सा°.

---

१ एफ् °कीयै प्र°. २ सी डी °प्रतापैर°. ३ एफ् °व म°. ४ सी डी °प ऋ°. ५ सी डी एफ् °पि प्र°. ६ सी डी °र्षे ऋ°.

१६. अत्र पुरे प्राल्कारायिताः[1] प्रकर्षेण ल्कारवदाचरितवत्यः । कुटिला इत्यर्थः । वेण्यः कवर्यो यासां ता एवं प्रल्कारायितभ्रुवो मृगीदृशो दन्तज्योत्स्नया दन्तकान्त्या कृत्वा खे व्योम्नि प्रल्कारयन्ति प्रकर्षेण ल्कारान् कुर्वन्ति दन्तानामतिनैर्मल्यान्मृगीदृशां[3] दन्तकान्तय ल्कारकारा व्योम्नि स्फुरन्तीत्यर्थः । दन्तकान्तिज्योत्स्नयोर्नैर्मल्यादिगुणैः साद्दृश्याद्दन्तकान्तिर्ज्योत्स्नात्वेन व्यपदिश्यते । अतो ज्योत्स्नाशब्दस्य चन्द्रिकावाचकस्याप्यत्र प्रयोगो न दुष्यति ॥

प्राल्कारायिते प्रल्कारयन्ति । इत्यत्र "ऌत्याल्वा" [ ११ ] इति वाल ॥ अत्रापि पक्षे ह्रस्वत्वमित्येके । प्रलृकारायित ॥

उपस्थिते प्रभोः कार्ये गुणौघैर्धौतवृत्तयः ।
प्रैषप्रौढा इह प्रैष्याः प्रौहप्रौढिं न कुर्वते ॥ १७ ॥

१७. अत्र पुरे प्रभोः स्वामिनः कार्ये उपस्थित उपागते सति प्रैष्या भृत्याः प्रौहप्रौढि प्रौहे कथमिदं करिष्यत इत्येवंरूपे वितर्के प्रौढिं प्रागल्भ्यं न कुर्वते यतः प्रैष इदमेवं कार्यमिति स्वामिनियोगे प्रौढाः समर्था दुष्करस्यापि स्वाम्यादेशस्य तत्क्षणादेव कारका इत्यर्थः । प्रैषप्रौढत्वमपि कुत इत्याह । गुणौघैः स्वामिभक्तिसुशक्तिस्थैर्यधैर्यादिभिर्धौतेव धौता निर्मला वृत्तिर्व्यापारो येषां ते ॥

ओघ. । गुणौघैः । इत्यत्र "ऐदौत्सध्यक्षरैः" [१२] इति ऐदौतौ ॥
धौत । इत्यत्र "ऊठा" [१३] इति औत् ॥
प्रैष । प्रैष्याः । प्रौढाः । प्रौढिम् । प्रौह । इत्यत्र "प्रस्यैष०" [ १४ ] इत्यादिना ऐदौतौ ॥

---

१ सी °कारायि°. २ सी डी °कारयि°. ३ एफ् °दृशोद°. ४ बी सी °कान्तिज्योत्स्नयो नै°. डी °कान्तिज्योंत्स्नायाश्च नै°. ५ सी डी °त प्रल्कारायित प्र°. ६ सी डी °कारवि° ७ ए °ति प्रैष्या° ८ सी डी प्रौढत्व प्रा°. ९ एफ् °पि स्वा°. १० सी डी °क्तिस्थै°. ११ एफ् °ना ऐदौ°.

स्वैरिस्मराक्षौहिणीनां स्वैरस्त्रीणामभावतः ।
इहैव धर्मः सोद्येव त्रेतात्रेति वितर्क्यते ॥ १८ ॥

१८. इहैवाणहिलपाटक एव नान्यदेशेपु धर्मोस्तीति तथात्र पत्तनेद्येवाद्यापि कलिकालेपि स स्त्रीमहासतीत्वादिधर्मप्रधानत्वेन प्रसिद्धस्त्रेता द्वितीययुगमस्तीति च लोकैर्वितर्क्यते । इति[1] र्वाक्यसमाप्त्यर्थ उभयत्रापि योज्यः । कुतः । अभावतोभावात् । कासाम् । स्वैरस्त्रीणाम् । स्व आत्मीयैः[2] स्वेच्छाकृत ईर आसाम् । यद्वा । स्वेनात्मना न[3] तु श्वशुराद्यनुज्ञयेरन्ति ईरते वा विचरन्ति "नाम्युपान्त्य°" [५.१.५४.] इत्यादिना के स्वैरा याः स्त्रियस्तासां कुलटानाम् । किंभूतानाम् । स्वयमीरितुं शीलमस्य स्वैरी स्वतन्त्रो यः स्मरः कामस्तस्याक्षौहिण्य इव दुःसाध्यानां कामविपक्षाणां मुनीनामपि रूपलावण्यलीलाकटाक्षविक्षेपादिशस्त्रैः साधकत्वात्सेनाविशेषा इवे[4] याः । यद्वा । स्वैरिण्यो या स्मराक्षौहिण्यस्ता इव याः । तासाम् ॥

स्वैर । स्वैरि । अक्षौहिणीनाम् । इत्यत्र "स्वैरस्वैरि°" [ १५ ] इत्यादिना ऐदौतौ ॥ यदा तु स्वैरिण्यश्च[5] ताः स्मराक्षौहिण्यश्चेति समासस्तदा स्वैरिण्य इत्यत्र "नामग्रहणे लिङ्गविशिष्टस्यापि" [ न्या° सू° १६ ] ग्रहणमिति न्यायादैत् ॥

अद्येव । इत्यत्र "अनियोगे लुगेवे" [१६] इत्यस्य लुक् ॥ नियोगे तु इहैव धर्मः ॥

नौतुनेत्रा न वृद्धोतुक्रूरा नाभौतुलम्पटाः ।
न दीर्घोष्ठा न ह्रस्वौष्ठा नौष्ठस्थूला इह स्त्रियः ॥ १९ ॥

१९. सुगमः । नवरं नौतुनेत्राः न मार्जारवत्कपिलरौद्राक्ष्यः । न च वृद्धोतुवत्क्रूराशयाः । न च बालौतुवल्लम्पटाः । तथा स्थूलशब्दोत्र गुण-

१ सी एफ् °ति वाक्य°. २ एफ् °यस्वे°. ३ बी सी न श्व°. ४ ए °व । य°. ५ सी डी स्वैरण्य°.

मात्रवाची । ओष्ठयोः स्थूलः स्थूलत्वं यासां ता ओष्ठस्थूला न । यद्वा । गुणिवचनः स्थूलशब्दः । नौष्ठाभ्यां स्थूलाः । न स्थूलोष्ठय इत्यर्थः ॥

दीर्घोष्ठाः ह्रस्वोष्ठाः । वृद्धोतु अभ्रौतु । इत्यत्र "नौष्ठौतौ[1] समासे" [१७] इति वाळुक् ॥ समास इति किम् । नौष्ठस्थूलाः । नौतुनेत्राः ॥

अत्रोपैति जनः स्वोढां न प्रोखति परस्त्रियम् ।
प्रेलितः श्रोत्रियोङ्कारैर्धर्मश्चास्मिन्नुपैधते ॥ २० ॥

२०. अत्र पुरे जनो लोकः स्वोढां स्वेनौढामात्मना परिणीता-मुपैत्युपगच्छति[2] । सेवत इत्यर्थः । ननु स्वदारांस्तावत्सेवते परदारानपि[3] सेविष्यत इत्याह । परस्त्रियं परेणोढां नारीं न प्रोखति धार्मिकत्वान्न गच्छति । अत एवास्मिन्पुरे धर्मश्च न केवलमुक्तनीत्या कामः किं त्वार्थपुमर्थोप्युपैधते वर्धते । परस्त्रीवर्जनं हि परमधर्मवृद्धिनिबन्धनं स-र्वशास्त्रेषु गीयते । उत्प्रेक्ष्यते[6] । श्रोत्रियोंकारैः प्रेलित इव । श्रोत्रियाणां यष्टॄणां यागादिविधिकाल उच्चारणेन संबन्धिनो य ओंकाराः प्रणवास्तैः प्रेरित इव प्रेरितो वर्धस्व वर्धस्वेति दत्तानुमतिक इवेत्यर्थः । अत्रत्यलोकस्य परदारवर्जकत्वेन धर्मः स्वयमेव वर्धते श्रोत्रियैश्च यागादिविधौ वेदमं-त्रानुचारयद्भिः स्थाने स्थान ओंकारा उच्चार्यन्ते तेषां चानुमतेरप्यर्थस्य दर्शनादेवमुत्प्रेक्षा । अत्रोत्प्रेक्षा साक्षादनुक्तापि वाक्यार्थसामर्थ्यादवसीयत इति । नचैवंविधे[12] विषय इवादिशब्दप्रयोगमन्तरेणासंबद्धतैवेति शक्यं वक्तुम् । गमकत्वात् । अन्यत्रापि तदप्रयोगे तदर्थावगतिदर्शनात् । यथा माघकाव्ये ।

---

१ बी "थोष्ठोतौ. सी डी "वोष्ठोतौ. २ एफ् °पैति से°. ३ एफ् °पि न से°. ४ एफ् °ष. पु°. ५ बी °रम ध° ६ सी डी एफ् °त्प्रेक्षते. ७ सी डी °नि । भो°. ८ सी डी °णा या°. ९ ए °श्र णो°. १० एफ् °मत्रोचा°. ११ सी डी °क्षा मा°. १२ एफ् °व विध°.

त्रासाकुलः परिपतन्परितो निकेतान्पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि ।
तस्थौ तथापि न मृगः क्वचिदङ्गनाभिराकर्णपूर्णनयनेषुहतेक्षणश्रीः ॥५.२६.

परितः सर्वतो निकेतान्परिपतन्नाक्रामन्न कैश्चिदपि चापपाणिभिरसौ मृगोनुवद्धस्तथापि न क्वचित्तस्थौ त्रासचापलयोगात्स्वाभाविकादेव । तत्र चोत्प्रेक्षा ध्वन्यते । अङ्गनाभिराकर्णपूर्णैर्नेत्रशरैर्हृतेक्षणश्रीः सर्वस्वभूतास्य यतोतो न तस्थौ । नन्वेतदप्यसंवद्धमस्तु । न । शब्दार्थव्यवहारे हि प्रसिद्धिरेव प्रमाणम् । एवमन्यत्रापि ज्ञेयम् ॥

ओत्रियोंकारः । स्वोढाम् । इत्यत्र "ओमाङि" [१८] इत्यलुक् ॥ आङि दीर्घत्वेनैव सिद्धे लुग्विधानमनर्थकं स्यादित्याङित्याङादेशो गृह्यते । तेन आ ऊढा ओढा । ततस्तेन समासः ॥

प्रेलितः । प्रोखति । इत्यत्र "उपसर्गस्य०" [१९] इत्यादिनाल्लुक् । अनिणेधिति किम् । उपेति । उपैधते ॥

अत्र गुर्वर्थपित्र्यर्थनतिलाकृतिभिर्जनैः ।
प्रोजायते प्रौषधयन् धर्मः प्रेकत्युपैकितैः ॥ २१ ॥

२१. अत्र पुरे धर्मः प्रोजायते प्रकर्षेणौजस्वीव बलिष्ठ इवाचरति । कैः कृत्वा । जनैः । किंभूतैः सद्भिः । गुरुर्धर्माचार्यो विद्याचार्यो वा तस्मा इयं गुर्वर्था । पितरौ मातापितरौ ताभ्यामियं पित्र्यर्था । द्वन्द्वे ते ये नती प्रणामौ ताभ्यामेव न तु रोगादिना ऌकारस्येव ॡकारस्येव वा वक्रा आकृतिः संस्थानं येषां तैः । विनीतैरित्यर्थः । अत एवोपपन्नं यथा स्यादेवमेक इव मुख्या इवाचरन्ति स्म । क्विपि के च उपैकिताः । तैः । सर्वगुणमूलविनर्यवत्त्वेन प्रधानैरित्यर्थः । यथौजस्वी स्वौजसा शत्रून् पराभवति

---

१ एफ् °तान् पत°. २ बी एफ् °नाक्रम°. ३ एफ् °नारा°. ४ सी डी यतो न. ५ सी डी एफ् °स्तु । श°. ६ बी आङ् दी°. ७ एफ् °धि इति. ८ एफ् °यत्वेन°.

स्वानुकूलान् स्वजनादींश्च पो[1]षयति तथा धर्मोप्यत्रत्यजनविनयलक्ष[2]णेन महाबलेन बलिष्ठत्वादहंकारादीन् स्वशत्रूनभिभवति स्वानुकूलान् दानशीलादींश्च पोषयतीत्यर्थः । अत एव प्रेकति प्रकर्षेणैक इवासाधारण इवाचरति । बलिष्ठत्वेन निःसपत्नत्वान्निरुपमो भवतीत्यर्थः । उत्प्रेक्ष[3]यते । प्रौषधयन् । पूर्ववदुत्प्रेक्षात्रावसेया । प्रकर्षेण बलकान्त्यादिवृद्धिकरी[4]मोषधिं कुर्वन्निव । णिज् । करोतिः सामान्यकरणार्थोपि प्रस्तावादिह विशेषे भक्षणकरणे वर्तते । यद्वा । अनेकार्थत्वाद्धातूनां करोतिरिह भक्षणार्थस्तेनौषधिं भक्षयन्निवेत्यर्थः । यो हि बलकान्त्यादिवृद्धिकरी[5]मोषधिं भक्षयति स तत्प्रभावादोजस्वी निरुपमश्च स्यात् । अचिन्त्यो हि मणिमन्त्रौ[6]षधीनां प्रभावः ॥

रजतं चारु ईक्षित्वा हारि अत्र च काञ्चनम् ।
दधियेतन्मधुवेतत्कुमारी एवमूहते ॥ २२ ॥

२२. सुगमः । नवरं हारि जात्यत्वाद्रम्यम् । एतत्प्रत्यक्षं वस्तु दधि वर्तते । एवं तथैतत्प्रत्यक्षं वस्तु मधु वर्तते । एवं च बालिका वितर्कयति । सावर्ण्याद्बाल्याच्चैवमूहः । एवमिति भिन्नक्रमे यथास्थानं योजित एव । एवंशब्देनैव कर्मण उक्तत्वाद्दधियेतदित्यत्र मधुवेतदित्यत्र च नामार्थमात्रे प्रथमैव ॥

रोदस्यौ पावयन्त्येनोलवन्यौर्वाग्निनायिनी ।
अन्व्येतिद्धत्ता ब्राह्म्यत्र गव्यनाव्यजला नदी ॥ २३ ॥

२३. अत्र पुरे ब्राह्मी ब्रह्मणोपत्यं नदी सरस्वत्यस्ति । कीदृशी । ब्रह्मणः पुत्रीत्वेन महातीर्थत्वादेनः पापं लूयतेनयेत्येनोलवनी । अत एव रोदस्यौ द्यावापृथिव्यौ पावयंन्ती पवित्रयन्ती । तथौर्वोग्नि वडवानलं

१ एफ् °षति. २ बी 'क्षणम°' सी एफ् °क्षणे म°. ३ सी डी एफ् °त्प्रेक्षंत. ४ बी सी डी 'रीमोष°'. ५ बी सी 'रीमोष°'. ६ एफ् °मन्त्रमहौष°. ७ सी डी °ष्ठ मधु. ८ एफ् °थैव त°. ९ सी डी °यन्ति । ता°. १० ए बी °न्नी म°.

समुद्रमवश्यं नीतवती "णिन् चावश्यकाधमर्ण्ये" [५.४.३६.] इति णिनि औवाग्निनायिनी । सकलं जगद्रक्षयिष्यामीति वदन्तं वडवाग्निं ब्रह्मादिष्टा सरस्वती समुद्रे प्रक्षिप्तवतीति पुराणम् । अत एव श्रव्यं श्रवणार्हमितिवृत्तं चरितं यस्याः सा । तथा गव्यं सुस्वादुशीतलशुभपरिणामत्वादिना गोभ्यो हितं नाव्यं चागाधत्वान्नावा तार्यं च जलं यस्यां सा । एतेनास्य पुरस्यातिपावित्र्यं निर्दोषजलप्राचुर्यं चोक्तम् ॥

न गव्यत्यत्र गोयानो नौयानो न च नाव्यति ।
उपोयमानः श्राव्याभिर्लौयमानीसुगीतिभिः ॥ २४ ॥

२४. अत्र पुरे गोयानो वृषवाहनो नरो न गव्यति न गामिच्छति तथा नौयानश्च प्रवहणवाहनः पुमान्न नाव्यति न नावमिच्छति । यतः श्राव्याभिर्मधुरतयावश्यं श्रवणार्हाभिर्लौयमानीसुगीतिभिः । लूयते कूर्चश्रेण्यां लूयमानो देवलो मार्दङ्गिकादिस्तस्यापत्यानि स्त्रियः "अत इञ्" [६.१.३१.] लौयमान्यो गायन्यः । यद्वा । लूयन्ते लूयमानाः केदारास्तेषामिमा रक्षित्र्यः "तस्येदम्" [६.३.१६०] इत्यणि लौयमान्यो गोप्यः । तासां सुगीतयः शोभनगानानि । ताभिरुपोयमानो व्याप्यमानः । आवर्ज्यमान इत्यर्थः । एवं नाम सुगीतीनां माधुर्यादिगुणैर्हृतहृदया यावता स्वस्य यानहेतुत्वेनात्यभीष्टमपि गवादिकं यानं चौराद्यैरपह्रियमाणमपि गोयानादयः सुगीतिश्रवणभङ्गभयेनावहेलयन्तीत्यर्थः ॥

प्रेकति उपकितैः । प्रोजायते प्रौपधयन् । इत्यत्र " वा नाम्नि" [२०] इत्यस्य लुग्वा ॥

प्रेकत्युपैकितैः । गुर्वर्थ । पित्र्यर्यं । लाकृतिभिः । इत्यत्र "इवर्णादेः° [२१] इत्यादिना यवरलाः ॥ केचित्त्विवर्णादिभ्यः परान् यवरलानिच्छन्ति । दधियेतत् । मधुवेतत् । तन्मतसंग्रहार्थमिवर्णादेरिति पञ्चमी व्याख्येया ॥

---

१ सी °स्वादुशी°. २ सी डी °ति त°. ३ एफ् °वल°.

हारि अत्र । चारु ईक्षित्वा । इत्यत्र "ह्रस्वोपदे वा" [२२] इति वा ह्रस्वः ॥ पक्षे । आह्यत्र ॥ कश्चित्तु प्रकृतिभावमपीच्छति । कुमारी एवम् ॥ अपद इति किम् । रोदस्यौ ॥

पावयन्ती । और्वाग्निनायिनी । इत्यत्र "एदैतोयाय्" [२३] इत्ययायौ ॥

लवनी । पावयन्ती । इत्यत्र "ओदौतोवाव्" [२४] इत्यवावौ ॥

गव्यति । नाव्यति । श्रव्य । आव्याभिः । गव्य । नाव्य । इत्यत्र "य्यक्ये" [२५] इत्यवावौ ॥ अक्य इति किम् । उपोयमानः । लौयमानी ॥ क्यवर्जनाद्यकारादिः प्रत्ययो गृह्यते । तेनेह न भवति । गोयानः । नौयानः ॥

पित्र्ये पक्षेत्र वीक्षन्ते[1] गवाक्षस्थाः पुरन्ध्रयः ।
गोक्षानन्दितृणां भूमिं गवाक्षानन्दिनीं नदीम् ॥ २५ ॥

२५. अत्र पुरे पितृषु साधुः पित्र्यस्तस्मिन् पित्र्ये पक्षे श्राद्धपक्षे गवाक्षस्था वातायनस्थिताः पुरन्ध्रयो विलासिन्यो भूमिं वीक्षन्ते विशेषेण पश्यन्ति । यतो गवां धेनूनां वृषभाणां चाक्षाणीन्द्रियाणि तेषां तृप्तिहेतुत्वादानन्दीनि आह्लादनशीलानि तृणानि हरितानि यस्यां ताम् । तथा नदीं सरस्वतीं च वीक्षन्ते । यतो गवाक्षानन्दिनीं तृष्णाद्युच्छेदकत्वाद्गवेन्द्रियाणामाह्लादयित्रीम् । शरदि हि भूमिर्हरिताभिरामत्वेन नदी च स्वच्छजलपूर्णत्वेन विशेषेण दर्शनीया स्यात् । एतेनात्र महर्द्धिकातिसुस्थिता विलासिन्यः सन्तीत्युक्तम् ॥

---

१ सी डी एफ् वीक्ष्यन्ते.

---

१ ए अन्य. ।. २ एफ् °मानः ।. ३ सी डी एफ् °नः ॥ २४ ॥ ४ सी °स्था इन°. ५ डी एफ् °णा वाह्ला°.

गवोष्ट्रिभिर्गवेन्द्रांसैर्गवुष्ट्रप्रियवीरुधः ।
गोअग्रस्थायिभिश्चास्य निषेव्यन्ते बहिर्भुवः ॥ २६ ॥

२६. अस्य पुरस्य बहिर्भुवो बाह्यभूमयो गावश्चोष्ट्राश्च गवोष्ट्रमस्त्येषां तैर्गवोष्ट्रिभिर्गोपालोष्ट्रपालैर्गवोष्ट्रस्य चारणाय निषेव्यन्ते । किंभूतैः । गवामिन्द्रो गवेन्द्रः शण्डस्तदंसवदंसौ स्कन्धौ येषां तैः । गोदुग्धोष्ट्रीदुग्धपानेनावलितस्कन्धैरित्यर्थः । तथा गोर्वृषस्याग्रमग्रभागः ककुत्प्रदेशस्तत्र तिष्ठन्तीत्येवंशीलास्तैर्गोअग्रस्थायिभिश्च वीवधाहारिभिश्च वीवधाहरणाय च सेव्यन्ते । यतः कीदृश्यः । गवुष्ट्रस्य वृषकरभव्रजस्योपलक्षणादश्वादेश्च प्रिया वीरुधो लता यासु ताः । पत्तनगोचरे हि वृषभोष्ट्रादिप्रियचारिसंकीर्णं महद्वनमस्ति ॥

पित्र्ये । इत्यत्र "ऋतो रस्तद्धिते" [२६] इति रादेशः ॥

पक्षेत्र । गोक्ष । इत्यत्र " एदोतः०" [२७] इत्यादिनास्य लुक् ॥

गवाक्ष । इत्यत्र "गोर्नाम्नि०" [२८] इत्यादिना अवादेशः ॥ नाम्नीति किम् । गोक्ष ॥ कश्चित्त्वसंज्ञायामपि गवाक्षेतीच्छति ॥

गवोष्ट्रिभिः गवुष्ट्र । इत्यत्र "स्वरे वानक्षे" [२९] इति वावादेशः ॥ अनक्ष इति किम् । गोक्ष ॥

गवेन्द्र । इत्यत्र "इन्द्रे" [३०] इत्यवः ॥

गोअग्र । इत्यत्र "वात्यसंधिः" [३१] इति वासंधिः ॥ पक्षे । गोक्ष ॥

व्रज३ आस्स्वेति मा वास्स्व३ इति स्वाधीनभर्तृकाः ।
इदं ब्रूहि३ इदं मा वा ब्रूहीत्याहुरिह प्रियम् ॥ २७ ॥

२७. सुगमः । नवरं व्रज३ इत्यत्र इदं ब्रूहि इत्यत्र च वाक्यपरि-

१ प °षां ते गो°. २ प पफ़् °ला ये तैर्गो°. ३ डी सी °दृशो ग°. ४ पफ़् गोक्षः ।. ५ पफ़् गोक्षः ।. ६ प सी डी ब्रूहीत्य°.

समान्यर्थ इतिशब्दो योज्यः । तथा स्वाधीनो रतगुणाकृष्टत्वेनायत्तो भर्ता यासां ताः स्वाधीनभर्तृकाः "क्षियाशीः प्रैषे" [७.४.९२.] इति सर्वत्र प्लुतः ॥

प्रज३ आस्व । इत्यत्र "प्लुतोनितौ" [३२] इत्यसंधिः ॥ अनिताविति किम् । आस्स्वेति । अत्र प्लुतस्य सधिः ॥ केचित्त्विविशब्दे विकल्पमिच्छन्ति । आस्स्व३ इति आस्स्वेति ॥

मृहि३ इदम् । इत्यत्र "इ३ वा" [३३] इति वासंधिः ॥ पक्षे । मृहीति । अत्रापि प्लुतस्य सधिः ॥

मणी इव जपावर्णकुसुमे हारिणी अपि ।
अहो३ किं स्वि३दमू३ अग्नी३ इत्युज्झ्येते इहार्भकैः ॥ २८ ॥

२८. इह पुरे जपावर्णकुसुमे जपा वर्णश्च वृक्षभेदौ तयोः कुसुमे मणी इव रत्ने इव हारिणी अपि । मणयो हि सामान्येन कान्तिमन्तो रक्ताश्च वर्ण्यन्त इति कान्तिमत्तारक्तताढ्यतया मनोहरे अप्यर्भकैर्बालकैरुज्झ्येते त्यज्येते । ननु बालका रम्यं वस्तु कौतुकाद्बालस्वभावाच्च प्रत्युत गृह्णन्ति तत्किमिति हारिणी अपि ते त्यज्येते इत्याह । अहो३ किंस्वि३दमू३ अग्नी३ इतीति । अमू जपावर्णकुसुमे किमग्नी वह्निकणाविति बुद्ध्या । अहो इति किंस्विदिति च निपातद्वयं वितर्कातिशयद्योतनाय । वितर्कस्य धान्तरात्मप्रश्नरूपत्वात् "प्रश्ने च प्रतिपदम्" [७.४.९८.] इति प्लुतः ॥ सावर्ण्याद्बाल्याच्चाग्निकणभ्रान्तिः ॥

---

१ सी डी °वर्णे कु°.

---

१ एफ् °ति प्लु°. २ सी डी °प्र बा. ३ सी डी °बालैरु°. ४ सी °तनद्र°. ५ एफ् °स्वाद्वाहि°.

मणीव मसृणौ चक्रदंपतीव युतौ स्तनौ ।
विजेतुं रोदसीवात्र स्त्रीणां भातः स्मरायुधे ॥ २९ ॥

२९. अत्र पुरे स्त्रीणां स्तनौ भातः । कीदृशौ । मणीव रत्ने इव मसृणौ कठिनकोमलौ । तथा चक्रदंपतीव । जाया च पतिश्च दंपती चक्रश्च चक्री च चक्रौ चक्रौ च तौ दंपती च चक्रदंपती चक्रवाकमिथुनम् । तौ यथा प्रेमातिरेकादन्योन्यं युतौ भवतस्तथा युतावतिस्थूलत्वादन्योन्यं मिलितौ । उत्प्रेक्ष्येते । रोदसी द्यावापृथिव्यौ जेतुं परा भवितुं स्मरायुधे इव कामशस्त्रद्वयमिव रोदस्योरपि द्वयोर्जेतव्यत्वात् ॥

हारिणी अपि । अमू३ अमी । उज्ज्येते इह । इत्यत्र "ईदूदेद्विवचनम्" [१४] इत्यसंधिः ॥ एषां प्लुतानामितावपि संधिर्न स्यात् । अमी३इति ॥ केचित्तु मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ ममेति प्रयोगदर्शनान्मणी इव मणीवेत्यादावसंधिप्रतिषेध वर्णयन्ति तदयुक्तम् । वाशब्देनोपमार्थेन सिद्धत्वात् ॥ अन्ये तु यथादर्शनं संधिमसंधि चेच्छन्ति । मणीव । दंपतीव । रोदसीवं । मणी इव ॥

अमी अमुमुईचोस्य नखाः कण्ठे इ ईक्षिताः ।
अ एहि त्वमु उत्तिष्ठ यद्वा एवं नु मन्यसे ॥ ३० ॥
ऊ ऊहस्व त्वमे अस्मिन्नी ईदृशि रतिः कथम् ।
तदो अलमनेनेति सखीमाहात्र मानिनी ॥ ३१ ॥

३०, ३१. अत्र पुरे किल काचिन्नायिका पत्यौ सपत्नीनखक्षता-

१ सी अत ए°.

१ डी °नमेतौ. २ एफ् °ताविति°. ३ सी डी °त्प्रेक्षेते. एफ् °त्प्रेक्षते. ४ सी डी °तु स्म°. ५ डी °ति प्रायो°. ६ प °सीव ॥.

दिकं दृष्ट्वात्यन्तं रुष्टा पादपातादिकां प्रसादनक्रियां कुर्वाणेपि मानिनीत्वाद्यदा कथमपि न प्रसीदति तदा तत्सखीपार्श्वात्स तां प्रसादयति। तां च सखीमनुनयार्थं पत्यपराधं निगूहयन्ती मानिनी रुषाह ब्रूते। यथा। अ इति संबोधने। हे सखि एहि मद्वचःश्रवणाय मत्पार्श्वमागच्छ। इ इति संबोधने। हे सखि अमू विप्रकृष्टवर्तिनी सपत्नीमश्वति गच्छति यस्तस्यामुमुईचोस्य प्रियस्य कण्ठेमी प्रत्यक्षवर्तिनो नखास्त्वयेक्षिता दृष्टाः। एवं तया प्रत्यक्षमपराधे दर्शितेपि यावदद्यापि सखी किंचिन्न प्रतिवदति तावन्मानिनी मदुक्तं सत्यमप्येषा नाङ्गीकरोतीति कोपाविष्टाह। उ उत्तिष्ठ यद्या एवं नु मन्यस इति। उ इति संबोधने। आ निरनुबन्धः पूर्ववाक्यार्थवैपरीत्ये वर्तते। पूर्वं यत्त्वया पत्यपराद्धं मनितं तद्यदीदानीमेवं नु मन्यसे नु निश्चितमन्यथा मन्यसे तदा हे सखि उत्तिष्ठ मत्पार्श्वाद्गच्छ पूर्वं मनितस्यार्थस्य केनापि द्रव्यलोभादिना हेतुनान्यथाभाषिण्या त्वयापि न प्रयोजनमित्यर्थः॥ एवं परुषोक्तौ सखी मा रुषदिति विचिन्त्य पुनस्तां सान्नाह। ऊ ऊहस्वेत्यादि। ऊ इत्यक्षमायाम। पतिमक्षाम्यन्ती प्राह। ए इति संबोधने। हे सखि त्वमूहस्व त्वमेव स्वचेतसि पर्यालोचय। ई इति खेदे। खिद्येहमीदृशि व्यक्तमत्यन्तमपराद्धर्यस्मिन्न पत्यौ विषये कथं रतिः प्रीतिः स्यात्। न कथमपीत्यर्थः। ओ इति संबोधने। हे सखि तत्तस्माद्धेतोरनेन पत्यालम्। सृतामिति॥

न जानू अरुजल्लङ्कां भ्रमतो यस्य मारुतेः।
अद्दो आन्तं जिगमिषो रुजेत्तस्यापि जान्विह॥ ३२॥

३२. जानू इत्यत्र उ लोकसंबोधने। हे लोका यस्य मारुतेर्हनूमतो लङ्कां रावणपुरीं भ्रमतो दहनाय पर्यटतः सतो जान्वष्ठीवान्नारुजन्न

---

१ सी °मान°. डी °माषन°. २ डी °दा कदा क°. ३ सी एफ् °यन्ती मा°. ४ एफ् °व न°. ५ सी एफ् °प पुरु°. ६ एफ् °ला तवोमलवचसा सा प्राह। ७ एफ् °ली क°.

श्रान्तम् । अहो इत्याश्चर्ये । जान्विहेत्यत्र उ इति संबोधने । हे लोका आश्चर्यं तस्यापि मारुतेरपीह पुर आन्तादन्तं मर्यादीकृत्याभिव्याप्य वा श्रीविशेषत्रिलोकनाथ जिगमिषोर्गन्तुमिच्छोः सतो जानु रुजेत् खिद्येत। संभावने सप्तमी । इदमहं संभावयामीत्यर्थः । एतेनास्य लङ्कासकाशादपि महत्तमत्वोक्तिः ॥ आन्तमित्यत्र क्रियाविशेषणे द्वितीया [ २. २. ४१. ] ॥

अमी अमुमुद्रेषः । इत्यत्र "अदोमुमी" [३५] इत्यसंधिः ॥

अ एहि । आ एवं नु मन्यसे । इ इंक्षिताः। ई ईदृशि । उ उत्तिष्ठ । ऊ ऊहस्व । ए अस्मिन् । ओ अलम् । इत्यत्र "चादिः स्वरोनाङ्" [३६] इत्यसंधिः ॥ स्वरे पर इति प्रत्यासत्तेस्तन्निमित्तकसंधिप्रतिषेधादिह दीर्घत्वलक्षणः संधिर्भवत्येव । जानू अरुजत ॥ केचित्तु चाद्यचादिस्थानस्याचादिरूपत्वात्स्वरनिमित्तकमपि संधिमिच्छन्ति । जान्विह ॥ अनाङिति किम् । आन्तम् ॥

अहो आन्तम् । इत्यत्र "ओदन्तः" [३७] इत्यसंधिः ॥

उ इत्यॄ इति वितिँ चाहो इत्याह्वायके गुरौ ।
विभो इति प्रभवितिं चाह्वात्र विनयी जनः ॥ ३३ ॥

३३. सुगम. । नवरं सर्वत्र उ इति संबोधने । आगच्छेत्यादिका च क्रिया सर्वत्राध्याहार्या । संबोध्यानां च बहुत्वाद्बहूनि संबोधनपदानि[4] । तथा विभो इति प्रभवितीत्येतयोः प्रत्युत्तरवाक्ययोरादिशेत्यादिक्रियाध्याहार्या । उपलक्षणत्वाद्भगवन्नित्यादीन्यपि गुरुसंबोधनपदानि ज्ञेयानि । प्रत्युत्तरदायिनामनेकत्वात् । इतिः सर्वत्र वाक्यपरिसमाप्तौ ॥

---

१ ए एफ् °ति वाहो.

---

१ सी डी °त्तमोक्ति ।. २ एफ् °र उ इति स°. ३ डी °बोधनीयानां. ४ एफ् °नि ज्ञेयानि । त°. ५ सी डी °ति स°.

बिभो इति प्रभविति । इत्यत्र "सौ नवेतौ" [३८] इति वासंधिः ॥
व इति । इत्यत्र "ऊँ चोम्" [३९] इति वासंधिः । असंधिपक्षे च उम् ऊँ इत्येवंरूपो दीर्घोनुनासिको वा । ऊँ इति ॥ पक्षे । संधिः । विति[2] ॥ मित्करणं स्वरूपपरिग्रहार्थम् । तेन विकृतस्य न भवति । अह[3] उ अहो इति ॥

किमु अम्वा किमु तातः किम्वीशो गीरु इत्यभूत् ।
गुरुं मति नृणामत्र वृद्ध्यै घञु अलं यथा ॥ ३४ ॥

३४. अत्र पुरे गुरुं धर्माचार्यं[4] विद्याचार्यं वा प्रति लक्ष्यीकृत्यैवं-[5][6]विधा नृणां गीर्वाणी वृद्ध्यै धनसंतत्यादिवृद्धिनिमित्तमलं समर्थाभवत्[7]। भवति हि वृद्धिः पूज्येषु पूजोपचारवचनादिना[10]। का गीरित्याह । उ हे गुरो वात्सल्यपरमोपकारित्वादिना त्वमस्माकं किमु अम्वा किमु किं वा तातः किम्वीशः किंवा स्वामीति । यथा उ हे लोका घञ् प्रत्ययो ञानुबन्धत्वाद्वृद्ध्यायैकारौकारारलक्षणायै[8] समर्थो भवति । शब्दसाम्येनोपमा । किम्शब्दा उनिपातयुताः सर्वेपि[11] वितर्कस्य वाचकाः ॥

किम्वीशः । इत्यत्र "अम्वर्गात्[12]०" [४०] इत्यादिना वकारो वा स चासन् । असत्त्वादनुस्वारानुनासिकाभावः ॥ पक्षे । किमु अम्वा ॥ वर्गादिति किम् । गीरु इति ॥ अजिति किम् । घञु अलम् ॥ स्वर इति किम् । किमु तातः ॥

सामँ साम ध्रुवं तावद्दधिँ दधि मधुँ मधु ।
श्रूयन्ते सुभ्रुवामत्र न यावन्मधुरा गिरः ॥ ३५ ॥

३५. सामवेददधिमधूनि हि अतिमधुरत्वादिप्रधानगुणोपेतानि स्युः ।

---

१ डी या भवति प°. २ ए बी एफ् °ति ॥ कि°. ३ डी उ अहो अ°. ४ डी गुरुधर्माचार्य वा. ५ सी एफ् °र्य वा. ६ सी डी लक्षीकृ°. ७ बी °कृत्यैवं°. सी °कृत्यैव. ८ एफ् °लक्षणा°. ९ सी डी भवेत् ।. १० सी डी °दि ना°. ११ सी °दि ना°. १२ एफ् °र्गादि°.

परमेतानि तावदेव स्वेनस्वेनातिमाधुर्यादिप्रधानगुणेनोपेतानि यावदत्र पुरे सुभ्रुवां गिरो न श्रूयन्ते । तासु चातिमधुरतमत्वादिप्रधानतमगुणोपेतासु श्रुतासु सामादि न किंचिदित्यर्थः । अत्राद्याः सामादिशब्दाः सामवेदादिवाचकाः । द्वितीयास्तु तद्गुणवाचकाः । तावद्यावतोः "क्रियाविशेषणात्" [ २. २. ४१. ] इति "कालाध्वनोर्व्याप्तौ" [ २. २. ४२. ] इति वा द्वितीया ॥

अमू पाणी मृदू पद्मे किमु किं नु नखा अमी ।
केसराणीति तर्क्यन्ते जनैरस्मिन्मृगीदृशाम् ॥ ३६ ॥

३६. अस्मिन्पुरे जनैर्मृगीदृशां स्त्रीणां पाणी नखाश्च तर्क्यन्ते । कथमित्याह । अमू प्रत्यक्षौ मृदू कोमलौ पाणी किमु पद्मे तथामी पाणिस्था नखा रक्तत्वान्मृदुत्वाच्च किं नु केसराणि पद्मस्थानि किञ्जल्कानीति ॥

सामँ साम । दधिँ दधि । मधुँ मधु । इत्यत्र "अइउवर्णस्य०" [४१] इत्यादिना वानुनासिकः ॥ अन्त इति किम् । गिरः । मधुराः ॥ अनीदादेरिति किम् । पाणी । अमू । मृदू । अमी । किमुँ ॥

द्वितीयः पादो लक्षणतः समर्थितः ॥

एतज्यायान् क्षमौ स्तोतुं न चतुर्मुखषण्मुखौ ।
हेतुर्ष्टद्धेरेतण्णिद्धङ्गिश्चद्धद्धूयेत सूरिभिः ॥ ३७ ॥

३७. आस्तां तावदेकमुखः कश्चिद्यावच्चतुर्मुखषण्मुखावपि । अ-

१ एफ् ॥ ३६ ॥ द्वितीयपादो लक्षण° ॥

१ सी डी °गुणोपे°. एफ् °गणेनोपे°. २ एफ् °नगु°. ३ डी ३६ ॥ स्त्री°. ४ डी °त्वाच. ५ डी किम् पा°. ६ एफ् °द्वादिरि°. ७ एफ् °मु ॥ ३६ इति द्वितीय. पादः ॥

पित्त्राध्याहार्यः । अक्षस्कन्दावप्येतन्न्यायानस्य पुरस्य नीतीः स्तोतुमेतावन्त ईदृशाश्चात्र न्याया इति वर्णयितुं न क्षमौ न समर्थौ । एतेनात्रत्यन्यायानां श्रेष्ठतमत्वमसंख्यत्वं चोक्तम् । अत एवैतत्पुरं सूरिभिस्तत्त्वातत्त्वविवेककुशलैर्वृद्धेर्धनधान्यद्विपदचतुष्पदादिसमृद्धिवर्धनस्य हेतुः कारणं कृपेत कथ्यते । वर्तमानाया अर्थेपि कचित्सप्तमी दृश्यते । भवति हि न्यायवति पुरे लोकः श्रीपात्रम् । यद्वा । सूरिभिर्वास्तुविद्याकुशलैर्वास्तुविद्यानुसारेण निर्मितत्वाद्वृद्धेर्हेतुर्कृप्येत । वास्तुविद्यानतिक्रमेण निर्मिते हि पुरे श्रीर्विजृम्भते । णिद्वञ्ञिद्वादिति । यथा णित् णानुबन्धो णिगादिर्नित ञानुबन्धो ञिजादिश्च प्रत्ययो वृद्धेरैदौदार्लक्षणाया हेतुः सूरिभिर्वैयाकरणैः कथ्यते ॥

अस्मिन् सागरुधूमेव्दशङ्काभाग्णशिखः शिखी ।
समुत्कचञ्चुरुद्भम्य सुवाङ्क्वत उन्मनाः ॥ ३८ ॥

३८. सहागरोर्धूमेन वर्तते यत्तस्मिन् सागरुधूमेस्मिन् पत्तने णैवर्णकाराकारा शिखा चूडा यस्य स णशिखस्तथा वकाराकारा चञ्चुर्यस्य स वचञ्चुः । नागरलिपौ हि णकारवकारावेवं लिख्येते । यथा । णा व । शिखी मयूर उद्भम्य ग्रीवामूर्ध्वीकृत्य सुवाग्मधुरस्वरं यथा स्यादेवं ङ्वते केकायते । कीदृक् सन् । अब्दशङ्काभाग् मेघवितर्कवान् । अत एव सुरत्संगमाभिप्रायेण समुत्सहर्षः । अत एव चोन्मना उत्कण्ठितः । एतेनैवं नासात्रागरुः प्रभूतो देवगृहेषु विलासिभवनेषु च दन्दह्यते यावता तद्धूमो नभस्तलेभ्रपटलविभ्रमं वहतीत्युक्तं स्यात् ॥

१ एफ् °हि अथा°. २ सी °मम् । सू°. डी °भम् । अथवा सू°. ३ सी एफ् °त्सृ°. ४ सी डी °न द्रप °ख्या°. ५ बी °ट्टास्य. ६ बी सी डी °स्मुः. ७ एफ् °सु इ°.

न यो हल्ँमात्रझल्मात्राभिज्ञः सोपि क्षणाज्ज्ञवेत् ।
ज्ञाता षण्णां दर्शनानामस्मिन्वाङ्मयसद्मनि ॥ ३९ ॥

३९. यो नरो न हल्ँमात्रझल्मात्राभिज्ञः । हल् व्यञ्जनम् । हलेव हल्ँमात्रम् । झल् धुट् । झलेव झल्मात्रम् । मात्रशब्दोत्र स्वार्थ एव । द्वन्द्वे । तयोरभिज्ञो ज्ञाता न स्यात् । यो व्यञ्जनधुट्संज्ञामपि न वेत्तीत्यर्थः । सोप्यस्मिन्पुरे षण्णां षट्संख्याना दर्शनानां जैन१बौद्ध२सांख्य३वैशेषिक४नैयायिक५जैमिनीय६मतसंबन्धिनां तत्तत्तत्त्वदेवताप्रमाणादिप्रकाशकशास्त्राणां क्षणाज्झटिति ज्ञाता भवेत् । यतः किंभूतेस्मिन् । वाङ्मयसद्मनि वाचां विकारोवयवो[३] वा वाङ्मयं व्याकरणतर्कसिद्धान्तसाहित्यादिसर्वशास्त्राणि । तच्च पुरुषविशेषं पुस्तकादिं[४] चाधारं विना नावतिष्ठत इत्यर्थाद्वाङ्मयस्य वाङ्मयवतां पुरुषविशेषपुस्तकादीनां सद्मनि गृहे सर्वशास्त्रपाठसामर्थ्योपेत इत्यर्थः ॥

सुवाङ्भवते । लिहङ्ङ्र्पेत । लिहज्झिहत् । सलुड्ड । एतल्लिहत् । शङ्खमाण्ण । एतत्पायान् । उदक्र्य । षण्मुखी । उन्मनाः । इत्यत्र "तृतीयस्य पञ्चमे" [१] इति वानुनासिकः ॥ तृतीयस्येति किम् । चतुर्मुख ॥ पञ्चम इति किम् । क्षणाज्ज्ञवेद् । केचित्तु व्यञ्जनस्य स्थानेनुनासिके वानुनासिकमिच्छन्ति । तस्य च "ह्रस्वाङ्ङणनो द्वे" [१. ३. २७] इति द्वित्वं च नेच्छन्ति । तन्मते । हल्ँमात्र झल्मात्र ॥

वाङ्मय । षण्णाम् । इत्यत्र "प्रत्यये च" [२] इति नित्यमनुनासिकः ॥ पदान्त इत्येव । सद्मनि ॥

---

१ बी तत्तत्त्व°. २ एफ् °ज्झटिति. ३ सी डी °वो वाङ्म°. ४ बी °दि वाधा°. ५ बी सी डी एफ् °मुखः ।. ६ डी °के चानु°. ७ एफ् °ल्मात्रे स°. ८ एफ् °ल्मात्रम् ।. ९ बी °क्यः ष°. एफ् °क्यं प°.

तावद्धिमांशुरानन्दी तावद्हेमाद्रिरुन्नतः ।
वाग्ग्लादिनोत्र नेक्ष्यन्ते यावद्विष्वग्हिता नराः ॥ ४० ॥

४०. हिमांशुश्चन्द्रस्तावदानन्दी जगतामाह्लादयिता । तथा हेमाद्रिर्मेरुस्तावदुन्नत उच्चो यावदत्र पुरे नराः सज्जना नेक्ष्यन्ते । किंभूताः । वाग्ग्लादिनो वाचा सत्यमितमधुरया वाण्या ह्लादिनः सकलपृथ्व्या आनन्दनशीलाः । तथा विष्वग्हिता विष्वक् समंततः सर्वैः प्रकारैः सर्वेषु च हिता अनुकूलाः । एतेनोन्नतमनस्कत्वसूचा । उन्नताशया हि विष्वग्हिताः स्युः । तुच्छाशयास्तु कदाचित्कार्यवशेन हिताः कदाचिन्नेति । वाग्ग्लादिविष्वग्घितानामत्रत्यजनानां दर्शने सुधांशुमेरू आनन्दकोन्नतावपि न किंचित्प्रतिभासेते इत्यर्थः ॥

यशःकृतककुब्भासैर्द्विड्ढुतिप्रथितैर्नृपैः ।
ककुब्हस्तिवलैरत्र तुरापाड्ह्रियमश्नुते ॥ ४१ ॥

४१. अत्र पुरे नृपैर्वनराजादिभिर्हेतुभिस्तुरापाडिन्द्रो ह्रियमश्नुते लभते । कीदृशैः । ककुब्हस्तिवलैः । दिग्गजपराक्रमैरत एव द्विड्ढुतिप्रथितैः । द्विषां शत्रूणां हृत्या हननेन सर्वत्र विख्यातैरत एव च यशसा कीर्त्या कृतः ककुभां दिशां हासो लक्षणयोद्योतो यैस्तैः । अत्रत्यनृपान्मनुष्यानपि बलादिना स्वस्मादधिकान् दृष्ट्वेन्द्रो लज्जत इत्यर्थः ॥

अनञ्जलिव सोजहल्भ्यां धर्मार्थाभ्यां युतो जनः ।
निरीक्ष्यतेत्र निष्पापं चेष्टयन् हितकाम्यया ॥ ४२ ॥

४२. अत्र पुरे स सर्वत्र प्रसिद्धो जनो लोको हितकाम्ययैहिकपा-

१ एफ् ज्योत्स्नया दा°. २ सी डी °प्रथितैर्न्नां क्ना°. ३ सी °न्दरी°. ४ एफ् °द् हिमांशु°. ५ एफ् हन°. ६ बी °भ नृ°.

रत्रिकश्रेयइच्छया निष्पापं निरवद्यं वस्तु चेष्टयन् व्यवहरन्सन्धर्मार्थाभ्यां धर्मधनाभ्यां युतो निरीक्ष्यते । भवतो हि निष्पापव्यापारिणां धर्मार्थाविति । पाणिन्यादयो[1] हि केचित् स्वरव्यञ्जनयोरच्हल्संज्ञां कुर्वन्ति । ततो यथानच् स्वररहितो हल् व्यञ्जनम् अच्हल्भ्यां स्वरव्यञ्जनाभ्यां युतो निरीक्ष्यते । अस्वरं हि व्यञ्जनं पुरःस्थिताभ्यां स्वरव्यञ्जनाभ्यां युतं स्यात् ॥

वाग्ग्लादिनः विष्वग्हिताः । अनज्झल् अज्झल्भ्याम् । द्विड्वति तुराषाड्ढियम् । तावद्धिमांशुः तावद्धेमाद्रिः । ककुब्भासैः ककुब्हस्ति । इत्यत्र "ततो हश्चतुर्थः" [३] इति वा चतुर्थः ॥ तत इति किम् । चेष्टयन् हित ॥

वाक्छूरान्वीक्ष्य सोप्यस्मिन्वाक्पतिः स्यादवाक्शिराः ।
राज्ञां यशोभिस्तच्छ्वेतं यच्श्वेतं न कदाप्यभूत् ॥ ४३ ॥

४३. अस्मिन्पुरे वाक्छूरान् वाचा सुभटान्महावादिनो वीक्ष्य स वाक्पतित्वेन सर्वत्र प्रसिद्धो वाक्पतिरपि[3] बृहस्पतिरप्यवाक्शिरा लज्जया नीचैर्मूर्धा स्यात् । संभावनेत्र सप्तमी । अत्रत्यविदुषां वाक्पतेरप्यतिमात्रं वाग्मित्वादिदमहं संभावयामीत्यर्थः । तथा यद्वस्तु कज्जलव्योमादि[4] सदा कृष्णत्वेन कदापि श्वेतं शुभ्रं नाभूत्तदप्यत्र राज्ञां वनराजादीनां यशोभिरतिबाहुल्याच् श्वेतमभूत् । कविरूढ्या हि यशः श्वेतं वर्ण्यते ॥

वषट्ठौषट् शान्तिकृतां वाक् श्च्योतति सुधामिह ।
अप्छायिदेवो नाप्सायी पश्यञ् श्रियमिहागताम् ॥ ४४ ॥

४४. इह पुरे शान्तिकृतां नगरादिक्षुद्रोपद्रवमार्याद्युपशान्तिविधा-

---

१ एफ् °प्छायी दे°.

---

१ बी °यो के°. २ बी सी °च्अल्°. ३ सी डी °रप्य°. ४ एफ् °दि महाक्ट°. ५ सी डी °न्तिध्यायि°.

यिनां द्विजानाम् । वषट्श्रौषट्शब्दावव्यये मन्त्राक्षरे इन्द्राहुतौ वर्तेते । शान्तिकर्मार्थाग्निकारिकादिविधानकाले वषट्श्रौषड्रूपा वाक् वाणी सुधामिव सुधां श्च्योतति स्रवति । मार्याद्युपद्रवोच्छेदकत्वेनात्याह्लादकत्वात् । एतेनास्य पुरस्य निरुपद्रवत्वमुक्तम् । तथा श्रियं लक्ष्मीदेवीमिह पुर आगतां पश्यन् सन्नप्सु जलेषु शेत इत्येवंशीलोप्छायी स चासौ देवश्चाप्छायिदेवोऽब्धिशयनः श्रीपतिर्नाप्शायी नाब्धिशयनः संभाव्यते । प्रस्तावादत्र संभाव्यत इत्यध्याहार्यम् । श्रियोत्रागमनात्सुप्ते तद्वियोगे निद्राया अभावाच्छ्रीपतिरप्यत्रागत इति संभाव्यत इत्यर्थः ॥

यास्कृरान् अवाकिराः । तच्छ्वेतम् यच्छ्वेतम् । वषट्श्रौषट् श्रौषट् शान्ति । अप्छायि अप्शायी । इत्यत्र "प्रथमाद्०" [४] इत्यादिना वा छः ॥ प्रथमादिति किम् । पश्यन् श्रियम् ॥ अघुटीति किम् । वाक् श्च्योतति ॥

अस्यान्तःकृतिभिः कल्यैर्खजैत्रैः फलदैः परम् ।
धर्मः प्रीतः कलिः खिन्नः फलितः सन्मनोरथः ॥ ४५ ॥

४५. अस्य पुरस्यान्तर्मध्ये कल्यैर्दानशीलतपःस्वाध्यायादिभिर्धर्मक्रियाभिः कृत्वा परमतिशयेन धर्मः प्रीतः प्रहृष्टः । विजृम्भित इत्यर्थः । अत एव कलिः पापयुगं खिन्नः संतप्तः । अत एव च सन्मनोरथः सतां साधूनां मनोवाञ्छा फलितः सिद्धः । किंभूतैः सद्भिः । खजैत्रैर्जेतार एव सस्मार्पणि[७.२.१६४.] जैत्राः । खानामिन्द्रियाणां जैत्रा वशीकारिणस्तैः । अत एव पुण्यहेतुत्वेन कृतं पुण्यमस्त्येषु तैः कृतिभिः । अत एव फलं स्वर्गापवर्गादिकं ददति ये तैः फलदैः ॥

कृतिभिःकल्यैः । अन्तःकृतिभिः । कल्यैःखजैत्रैः । फलदैःपरम् । खजैत्रैःफलदैः ।

१ एफ् 'ना म'. २ बी 'रूपमा'. ३ सी डी एफ् 'नि स्रव'. ४ सी 'ना मा'. ५ एफ् 'जैत्र, प'. ६ डी 'दैः । अन्त'. ७ डी 'म् । वृत्य'.

इत्यत्र "रः कखे" [५] इत्यादिना ≍क ≍पौ वा ॥ पक्षे । प्रीतः कलिः । कलिः खिन्नः । धर्मः प्रीतः । खिन्नः फलितः ॥

स्वयंभूश्श्रीपतिः शंभुस्सूर्यः सोमष्षडाननः ।
नृपैः षट्चक्रभृत्तुल्यैरस्यान्तस्स्थापिताः सुराः ॥ ४६ ॥

४६. नृपैर्वनराजादिभिर्महाधार्मिकत्वादस्य पुरस्यान्तर्मध्ये धर्मार्थकारि[2]तनव्यप्रासादेषु स्वयंभूर्भगवानर्हन् ब्रह्मा च । श्रीपतिर्विष्णुः । शंभुर्हरः । सोमश्चन्द्रः । सूर्यो रविः । षडाननः स्कन्दश्च । एते सुरा देवाः स्थापिताः । किंभूतैः । षण्णां चक्रभृ[3]तां मांधातृ(१)धुन्धुमार(२)हरिश्चन्द्र(३)पुरूरवो(४)भरत(५)कार्तवीर्या(६)ख्यानां समाहारः षट्चक्रभृत् । बलसैन्यादिना तेन तुल्यैः ॥

स्वयंभूश्श्रीपतिः । सोमष्षडाननः । शंभुस्सूर्यः । अन्तस्स्थापिताः । इत्यत्र "शषसे शषसं वा" [६] इति वा शषसाः ॥ पक्षे । श्रीपतिः शंभुः । नृपैः षट् । सूर्यः सोमः ॥

निस्तन्द्रैश्चञ्चलैश्छेकैष्टीकमानैष्ठकारिभिः ।
तैस्तैस्थट्टैरिहाश्वानां रसति व्यथितेव भूः ॥ ४७ ॥

४७. इह पुरेश्वानां तैस्तैः । अने[4]कैरित्यर्थः[5] । थट्टैः समूहैः कृत्वा भू रसति शब्दायते । कीदृशैः । निस्तन्द्रैर्निरालस्यैस्तेजस्विभिरित्यर्थः । चञ्चलैर्जात्यहयस्वभावेन चपलैः । छेकैः सुशिक्षितत्वेन गतिपञ्चककरणदक्षैरत एव टीकमानैर्वाह्यालिकादौ वल्गद्भिरत एव च ठकाराकारखुरैर्भू[6]म्या हननेर्न ठं ठकारं भूपृष्ठे कुर्वन्तीत्येवंशीला ये तैष्ठकारिभिः । उत्प्रे[7]क्ष्यते । व्यथितेव पीडितेव । अन्योपि हि व्यथावान् रटति । भुवश्च

१ एफ् °खषफ इ°. २ सी °रिनव्याप्रा°. ३ डी °भृताना मा°. ४ बी एफ् °कैस्थट्टैः. ५ ए सी °र्थ । स्थट्टैः. ६ सी डी °न ठ°. ७ सी डी °त्प्रेक्षते.

पीडासंभावनाश्वखुरघातात् । तैस्तैरित्यत्र वीप्सायां द्विरुक्तिः । वीप्सा चात्र पश्चात्तद्बहुत्वगुणेनैव ॥

निस्तन्द्रैश्चपलैश्छेकैष्टीकमानैष्ठकारिभिः । तैस्तैः । निस्तन्द्रैः । तैस्थटैः । इत्यत्र "घटते" [७] इत्यादिना शषसाः ॥

गायंस्तारं वहंश्छायां व्रजंश्चारु वधूजनः ।
दृश्यतेऽस्मिंष्ठको यूनां कुर्वंष्टलतमं मनः ॥ ४८ ॥

४८. अस्मिन्पुरे वधूजनो यूनामेव ठकश्छलेक इव दृश्यते । कीदृक् सन् । तारं तारस्वरं यथा स्यादेवं गायन् विप्रलम्भादिप्रधानगीतिकाद्यम् छायां रूपलावण्यकान्तिवेषादिकृतशोभां वहन् धारयंश्चारु सलीलं व्रजन्गत एव यूनां तरुणानां मनश्चित्तं टलति विक्लवीभवति अचि प्रवृत्ते तमपि च टलतमं स्मरातिरेकादतिशयेन निःसत्त्वं कुर्वन् । ठकोऽपि हि ठकतागोपनार्थं लोकच्छलनार्थं च तारं गायति छायां शिष्टजनोचितां वेषादिशोभां वहति चारु शिष्टजनोचितं गच्छति ततश्चूर्णक्षेपादिना लोकानां मनो विक्लवीकरोतीति ॥

जानंस्थूत्कसमान्प्राणांश्चरंष्टङ्कारिकार्मुकः ।
परांश्छ्यन् भटलोकोऽस्मिंस्त्रायकः शरणार्थिनाम् ॥ ४९ ॥

४९. अस्मिन्पुरे भटलोकः शरणार्थिनां प्राणैषिणां त्रायको रक्षकोऽस्ति । एतेनात्रत्यलोकस्य निर्भयत्वोक्तिः । कीदृक् । चरन् गच्छन् । तथा प्राणान्थूत्कसमान्, थूत्कृततुल्यान् थूत्कृतवत्त्याज्यादिकार्ये परित्याज्याञ्जानन् । एतेन सात्त्विकत्वोक्तिः । तथा टं करोतीत्येवंशीलं टंकारि

१ एफ् "न कर्तव्ये" इति ग्रं°. २ सी एफ् "ष्ट ई°. ३ एफ् "स्यति. ४ सी डी एफ् "गी" ॥. ५ डी "ना श्रा°. ६ सी डी रक्षाकारको°. ७ एफ् "स्फोर्ष ॥.

कार्मुकं धनुर्यस्य स निरन्तरं धनुरास्फालयन्नित्यर्थः । एतेन धनुर्विद्याकौशलोक्तिः । तथा परान् शत्रूंश्छ्यन् विनाशयन् । एतेन बलिष्ठत्वोक्तिः ॥

अत्रान्यस्मिँस्थुडँष्ठाभकुचो भाति वधूजनः ।
प्रशाञ्चरन् त्सरुकोपि कोपि नैवात्र दारुणः ॥ ५० ॥

५०. अस्मिन्पुरे ठाभौ ठकारवद्वृत्तौ कुचौ स्तनौ यस्य स वधूजनः कुलाङ्गनालोकोङ्गानि स्तनादीनवयवांस्थुडन्नुत्तरीयादिना संवृण्वन् सन् भाति । कुलाङ्गनानां हि सर्वाङ्गोपाङ्गसंगोपनं शोभातिशयहेतुः । तथात्र त्सरौ खड्गादिमुष्टौ कुशलः "कुशले" [६. ३. ९५.] इति के त्सरुकोपि खड्गादिशस्त्रभृद्भटलोकोपि । आस्तां वणिगादिरित्यपेरर्थः । प्रशान्तुपशान्तः संश्चरन्नस्ति । विचरतीत्यर्थः । अतश्चात्र कोपि नैव दारुणो रौद्रः । एतेनात्र राजाज्ञाया अतिसौष्टवमुक्तम् ॥

भवंश्चार । प्राणांश्चरन् । बहूंश्छायाम् । परांश्छ्यन् । कुर्वंष्टल । चरंष्टक्कारि । भवंस्थक । स्थुडंष्ठाभ । गायंस्तारम् । अस्मिंस्त्रायक । जानंस्थूत्क । अस्मिँस्थुडन् । इत्यत्र "नोप्रशान" [ ८ ] इत्यादिना शषसा अनुस्वारानुनासिकौ च पूर्वस्य ॥ अप्रशान इति किम् । प्रशाञ्चरन् । अधुट्पर इति किम् । चरन् त्सरुकः ॥

पुंस्कामा अप्यपुंश्चल्य इह पुँस्कोकिलस्वनाः ।
अपुंश्छन्नैरपुंस्खेटैः पुंश्छेकैर्भान्ति भर्तृभिः ॥ ५१ ॥

५१. इह पुरे स्त्रियो भर्तृभिः सह भान्ति । कीदृश्यः । कोकिलः परपुष्टः । पुमांश्चासौ कोकिलश्च पुंस्कोकिलस्तस्येव स्वनः स्वरो यासां

---

१ एफ् °न् मा°. २ एफ् °था त्स°. ३ सी डी °खङ्गश°. ४ डी °त्यर्थः ।. ५ ए एफ् °शान्तुप°. ६ सी डी सचर°. ७ सी डी °वत्सु°. ८ सी डी °शाने इ°. एफ् °शाने इ°.

तास्तथा पुंस्कामा अप्यपुंश्चल्यः । पुमांसं कामयन्ते पुंस्कामाः । पुमांसं चलयन्ति पुंश्चल्यः कुलटाः । न तथापुंश्चल्यः सत्यः । अपिर्विरोधे । पुंमात्रकामनविवक्षया विरोधः । अविरोधस्तु स्वपतेरेव कामनविवक्षया । अत एवापुंश्चल्यः । किंभूतैर्भर्तृभिः । पुंश्छेकैः पुरुषेषु विदग्धैः । तथापुंस्खेटैः । खेटा अधमाः । पुमांसो ये खेटाः पुंस्खेटाः । न तथापुंस्खेटास्तैः । परदारसेवादिनिन्द्यकर्मरहितैरित्यर्थः । अतएवापुंश्छन्नैः न पुंसान्येन पुरुषेणाच्छादितैः । विद्वत्तया सदाचारतया च सर्वपुरुषेषु मुख्यैरित्यर्थः । भवति ह्युत्तमगुणानां दंपतीनां संबन्धः शोभातिशयहेतुः ॥

न पुंटिट्टिभपुँश्चौरा न च पुँस्खलपुंछकाः ।
न पुंस्फल्गुर्न पुँस्फेरुर्न पुंस्पशुरिह कचित् ॥ ५२ ॥

५२. टिट्टिभा उत्पादशयनाः पक्षिभेदाः । पुमांसष्टिट्टिभा इवोद्धतत्वात् पुंटिट्टिभाः । तथा पुमांसश्च ते चौराश्च पुंश्चौराः । द्वन्द्वे । पुंटिट्टिभपुंश्चौराः । इह पुरे कचित्कस्मिन्नपि स्थाने न सन्तीति संटङ्कः । एवं सर्पत्रास्तिक्रिया नञा सह योज्या । खला दुर्जनाः । पुमांसश्च ते खलाश्च पुंस्खलाः । एवं पुंछकाः पुंश्छलकाः । ततो द्वन्द्वः । तथा पुंसु फल्गुः पुमर्थविफलत्वेन निष्फलः पुंस्फल्गुः । तथा पुमान् फेरुरिव भीरुत्वात् शृगाल इव पुंस्फेरुः । तथा पुमान् पशुरिव मूर्खत्वात् पुंस्पशुः ॥

पुंस्प्रष्ठैः पुंस्तमैः पुँस्त्वपुंख्यातैः सह सौहृदम् ।
पुंधुराः सपुंस्यष्टाः पुंगवा अत्र कुर्वते ॥ ५३ ॥

१ बी सी डी °ष्ठैः पुंस्त्वपुंख्यातैः पुनर्भ. स°.

१ ए पुमान्यान°. बी पुनोव. २ ए बी °टा पु°. सी °टा न°. ३ बी °दा न°. ४ एफ् °चा नि°. ५ सी डी °द पु°. ६ सी° कालनो°. ७ ए सी डी एफ् पुंप पु°. ८ डी एफ् नि.दप:.

५३. अत्र पुरे पुमांसो गाव इव पुंगवा नरश्रेष्ठाः पुंस्तमैः श्रेष्ठपुरुषैः सह सौहृदं मैत्रीं कुर्वते । किंभूतैः । पुंस्त्वपुंख्यातैः । पुंस्त्वेन पुरुषकारेण शौर्येण पुंसु ख्यातैः प्रसिद्धैः । अत एव पुंस्प्रष्ठैः पुरुषेष्वग्रेसरैः । पुंगवा अपि किंभूताः । पुंष्टकुराः । नृणां स्वामिनः अत एव सपुंस्थट्टाः पुरुषौघावृताः । एतेनात्रत्यजना गुणिनो गुणानुरागिणश्चेत्युक्तम् ॥

पुंशूरा अत्र पुंष्टकाः परपुंस्थुत्कृतासहाः ।
अपुंक्षुद्राः प्रकुर्वन्ति सेवां चौलुक्यभूभुजाम् ॥ ५४ ॥

५४. अत्र पुरे पुंष्टकाः पुमांसः पौरुषोपेता ये टकाः क्षत्रियजातिभेदास्ते चौलुक्यभूभुजां मूलराजादीनां सेवां प्रकुर्वन्ति । कीदृशाः । पुंशूराः पुंसु पौरुषोपेतेषु भटेषु शूराः । अत एव परे शत्रवो ये पुमांसस्तेषां यत् थुत्कृतं न्यक्काराय मुखविकृतिपूर्वं शब्दविशेषस्तस्याप्यसहा अक्षमाः । तथा क्षुद्राः क्लिष्टचेतस्का द्रोहाद्यभिप्रायेण । पुमांसश्च ते क्षुद्राश्च पुंक्षुद्रा न तथापुंक्षुद्राः ॥

पुंस्कामाः । पुँस्कोकिल । अपुंस्खेटैः । पुँस्खल । अपुंश्चल्यः । पुँश्चौराः । अपुंश्छन्नैः । पुँश्छेकैः । पुंष्टिट्टिभ । पुँष्टकाः । पुँष्ठकाः । पुँष्टकुराः । पुंस्तमैः । पुँस्त्व । पुंस्थट्टाः । पुँस्थुत्कृत । पुंस्पशुः । पुँस्प्रष्ठैः । पुँस्फल्गुः । पुंस्फेरुः । इत्यत्र "पुमोशिटि" [९] इत्यादिना रोन्तादेशोनुस्वारानुनासिकौ च पूर्वस्य ॥ अशिटीति किम् । पुंशूराः । अघोष इति किम् । पुंगवाः । अधुट्पर इत्येव । अपुंक्षुद्राः । अख्यागीति किम् । पुंख्यातैः ॥

---

१ डी °स्थुत्कृता°. एफ् °स्थूत्कृता°.

---

१ एफ् °गावः पुं°. २ ए सी डी एफ् पुस्सु ख्या°. ३ सी डी °वापि. ४ सी डी °गुणा°. ५ ए सी डी एफ् पुस्सु पौ°. ६ डी एफ् थूत्कृत. ७ ए °छकाः ।. ८ एफ् °स्त्वसपु°. ९ सी एफ् °स्थुत्कृत. डी °स्थूत्कृतम्.

नॄँᳶप्रीणन् किं हरिश्चन्द्रो नॄँᳶपाता किं पुरूरवाः ।
नॄन्पुष्यन् किमु मांधतेत्यत्र तर्क्येत भूपतिः ॥ ५५ ॥

५५. अत्र पुरे भूपतिर्नॄन्प्रजाः प्रीणन् मधुरवचनादिदानेन सुखयन् सन् किमयं हरिश्चन्द्रस्तृतीयचक्री । हरिश्चन्द्रेण हि प्रजा अत्यन्तं प्रीणिताः । इत्येवं प्रकारेण तर्क्येत संभाव्यते । जनैरिति संबन्धः । अग्रेप्येवं योजना कार्या । पाता चौरादिभ्यो रक्षन् पुरूरवाश्चतुर्थचक्री । पुष्यन् इत्यत्र पुषिरन्तर्भूतणिगर्थः सकर्मकः । दानसन्मानादिना पोषयन्नित्यर्थः । मांधाता आद्यचक्री ॥

नॄँᳶप्रीणन् नॄँᳶपाता । इत्यत्र "नॄनः पेषु वा" [१०] इति रोन्तादेशो वानुस्वारानुनासिकौ च पूर्वस्य ॥ पक्षे । नॄन्पुष्यन् ॥

कांस्कान् रथान्भटान् काँस्कानश्वान् कान् कानिभानिह ।
न पश्यति सहस्राक्षो दृक्सहस्रं कृतार्थयन् ॥ ५६ ॥

५६. सहस्राक्ष इन्द्रो दृक्सहस्रं लोचनसहस्रं कृतार्थयन् कृतार्थमाचक्षाण सन्निह पुरे कांस्कान् रथान् कांस्कान् भटान् पत्तीन् कानश्वान् कानिभांश्च न पश्यति किं तु सर्वानपि[६] गजादीन् । सर्वोत्कृष्टगुणैर्निरुपमत्वेनादृष्टपूर्वदर्शनात्स्वमक्षिसहस्रं सफलं मन्यमानः सहस्राक्षः सेर्ष्यं पश्यतीत्यर्थः । एतेनात्र चतुरङ्गबलसंपद्विशेष उक्तः ॥

कांस्कान् । काँस्कान् । इत्यत्र "द्विः कानः कानि सः" [११] इति सोन्तादेशोनुस्वारानुनासिकौ च पूर्वस्य ॥ द्विरिति किम् । कान्कान् ॥

१ एफ् °नृः प्रि ना°.

१ एफ् °न् प्रत्य... २ एफ् °न जितवर्तेत स°. ३ एफ् °दां एवावौता°. ४ सी °स १°. ५ एफ् °नृ कान्कान°. ६ एफ् °पि राजा°. ७ एफ् सहर्ष.

रत्नसंकरसंस्कारि त्वष्टा पश्येदिदं यदि ।
संस्स्कर्तुं स्वःपुरीं कं कमुपस्कारं न चिन्तयेत् ॥ ५७ ॥

५७. रत्नानां नानाजातीयानां मणीनां संकरो मेलकस्तेन संस्कारः शोभातिशयो विद्यते यत्र तद्रत्नसंकरसंस्कारीदं पुरं त्वष्टा देववर्धकिर्यदि पश्येत्तदा स्वःपुरीममरावतीं संस्कर्तुं विशेष्टुं कं कमुपस्कारं प्रयत्नं न चिन्तयेत्। किं तु येन येन प्रयत्नेन स्वःपुर्येतत्पुरसदृशी स्यात्तं तं सर्वमपि परिभावयेदित्यर्थः । एतेनास्य स्वःपुरीसकाशादप्यधिकं रम्यत्वमुक्तम् ॥

न यथा कोपि सस्कर्ता संचस्कार यथा न च ।
अरोचकी गुणेष्वत्र सँस्कर्तुं यतते तथा ॥ ५८ ॥

५८. अत्र पुरे न रोचते धान्यं क्षुधोभावादस्मिन् "नाम्नि पुंसि च" [५.३.१२२.] इति णके अरोचको बुभुक्षाया अभावः सोस्त्यस्य "प्राणिस्थाद्°" [७.२.६०] इत्यादिना रुग्वाचित्वादिनि अरोचकी नरो गुणेषु व्यञ्जनेषु विषये संस्कर्तुं हिङ्गुकर्पूरादिक्षेपेण तथा तेन प्रकारेण यतते प्रवर्तते यथा कोपि पुमान् न संस्कर्ता न संस्करिष्यति यथा कोपि न च नैव संचस्कार संस्कृतवान् ॥

संस्कारि । सँस्कर्तुम् । इत्यत्र "स्सटि समः" [१२] इति सोन्तादेशोनुस्वारानुनासिकौ च पूर्वस्य ॥ स्सटीति किम् । संकर । कॄत् विक्षेपे । संकरणं संकरोत् । कृगोभावान्नात्र स्सट् ॥ संचस्कार । इत्यत्र तु व्यवधानान्न भवति । सम इति किम् । उपस्कारम् ॥

---

१ ए °ना स°. २ सी डी एफ् °सस्कारी°. ३ ए °न प्र° सी डी °न स्व.°. ४ एफ् °क्षुधाना°. ५ एफ् नास्तिस्मि. ६ डी °वस्तस्य. ७ डी °ते व°. एफ् °ते य°. ८ ए एफ् °र्ता स°. ९ सी एफ् सस्कारि. १० ए सी सँस्कर्तुम्.

सस्कर्ता । इत्यत्र "लुक्" [१३] इति लुगन्तादेशः । पृथग्योगादनुस्वारानुनासिकौ च पूर्वस्येति निवृत्तमिति तौ न भवतः ॥ केचित्त्वत्राप्यनुनासिकमिच्छन्ति । सँस्कर्तुम् ॥

चतुरं चंचलत्यश्वा मंदं दंद्रमति द्विपाः ।
रम्यश्चंक्रम्यते स्त्रैणं सर्वोस्मिन्पंफुलद्गुणः ॥ ५९ ॥

५९. अस्मिन्पुरे चतुरं धौरितकादिगतिबन्धुरं यथा स्यादेवमश्वाश्चंचलति कुटिलं चलन्ति । वलान्तीत्यर्थः । यङ्लुबन्तः । तथा द्विपा गजा मन्दं सलीलं यथा स्यादेवं दंद्रमति कुटिलं गच्छन्ति । तथा स्त्रैणं स्त्रीसमूहो रम्यं सलीलमन्थरं यथा स्यादेवं चंक्रम्यते कुटिलं गच्छन्ति । एवं च न केवलमश्वादीनामुत्कृष्टगुणैत्वं किं त्वस्मिन् सर्वोपि घटपटादिः पदार्थः पंफुल्यतीतिशयेन फलन्तीतिविलसन्तो गुणाः सौन्दर्यादयो यस्य स पंफुलद्गुणोस्ति । सर्वमप्यत्र वस्तु गुणोत्कृष्टमित्यर्थः ॥

दन्दन्द्रमितच्छायान् सदा पंम्फुलितांस्तरून् ।
खचङ्क्रमणकन्याश्च चर्चूर्यन्तेत्र कौतुकात् ॥ ६० ॥

६०. खे आकाशे कुटिलं क्रामन्तीत्येवंशीला "द्रमक्रम॰" [५.२.४६] इत्यादिनाने खचङ्क्रमणा विद्याधरादयस्तेषां कन्या बालिका अत्र पुरे वर्तमानानस्तरूनुपवनद्रुमान कौतुकाच्चर्चूर्यन्ते मास्मान् जनश्चौर्य इत्यपवादी-

१ ए सी डी °चरति°.

१ ए बी सी डी धौरितिका°. २ सी डी एफ् °लीलम°. ३ एफ् °त्वव्वंसं. ४ सी डी एफ् °ति°. ५ ए °फल°. सी डी फुफल°. ६ सी डी °तिरि°. ७ एफ् १६८°. सी डी फुफल°. ८ बी डी °मनोज्ञे°. ९ बी सी °ता फुल्ल°.

दिति प्रच्छन्नगत्या गर्हितं विचरन्ति । यतो दूरमनिकटं यथा स्यादेवमत्युन्नतत्वात् दन्द्रमिता कुटिलं गता छाया येषां तांस्तथा वनाधिष्ठायकदैवतविशेषप्रभावात्सदा पम्फुलितान[1]त्यर्थं फलितान्[2] । एतेनात्रत्यतरूणां छायाफलादिना स्वर्वृक्षेभ्योऽप्यत्युत्कृष्टतोक्ता[3] ॥

रंरम्यन्ते जना गोभिरभ्रंलिहवहँल्लिहैः ।
प्रीयन्ते काम्यतपसः संयताः सय्यँतैरिह ॥ ६१ ॥

६१. इह पुरे जना लोका अभ्रं मेघं लिहन्ति स्थूलोन्नतत्वात्स्पृशन्त्यभ्रंलिहा ये वहं ककुदं लिहन्ति जातिस्वभावाज्जिह्वया स्पृशन्ति वहँल्लिहास्तैर्गोभिर्वृषभैः कृत्वा रंरम्यन्ते वाहादिना होडा[4]पातनेन परस्परमत्यर्थं क्रीडन्ति । एतेन जनानामतिसुखितत्वोक्तिः । तथेह काम्यमभिलषणीयं तपो यैस्ते संयताः[5] सुविहितमुनयः सय्यँतैः[6] सुविहितसाधुभिः सह प्रीयन्ते एकधर्मस्नेहेन स्निह्यन्ति । एतेनात्र सुविहितानां सुविहितैः सह श्राद्धभक्तादिना[7] न विरोध इत्युक्तम् ॥

चंक्रम्यते चङ्क्रमण । चंचलति चञ्चूर्यन्ते । दंद्रमति दन्द्रमित । पंफुलत्[8] पम्फुलितान्[9] । चतुरं चंचलति रम्यश्चंक्रम्यते । मंदं दंद्रमति दूरन्दंद्रमित । संयँताः सय्यँतैः । अभ्रंलिहवहँल्लिहैः । इत्यत्र "तौ मुम०" [१४] इत्यादिना स्वागमस्य पदान्ते वर्तमानस्य च मस्य स्वावनुस्वारानुनासिकौ वर्णौ पर्यायेण । पदान्त इत्येव । काम्य । स्वाविति किम् । रंरम्यते । क्षेणं सर्वः[10] ।

---

१ ए सी डी पम्फलि°. २ एफ् °तान् ए°. ३ एफ् °स्योप्युत्क°. ४ एफ् होटपा°. ५ ए सी सयुताः. ६ ए सी सयतैः. ७ एफ् °भक्त्यादि°. ८ ए सी डी पम्फल°. ९ ए सी डी पम्फलि°. १० ए °यतैः स°.

अत्र मन्दं ह्मलत्स्त्रैणम्ह्मालयेत्कस्य नो मनः।
स्वैरं ह्लत्करिकुलं ह्लालयत्यवनीमपि ॥ ६२ ॥

६२. अत्र पुरे मन्दं मन्थरं ह्मलद्गच्छत् स्त्रैणं स्त्रीसमूहः कस्य वशिनोपि मनो नो ह्मालयेत् सोत्कण्ठं न कुर्यात् । किं तु सर्वस्यापि । तथापिर्भिन्नक्रमे स्वैरमित्यस्माज् ज्ञेयः । स्वैरमपि स्वेच्छयापि मन्दमपीत्यर्थः । ह्लद्गच्छत्करिकुलं हस्तिवृन्दमवनिं भूमिं ह्लालयति गिरिवन्महत्त्वात्कम्पयति । यद्वा । अपिर्यथास्थान एव योज्यः । आस्तां तावद्यज्जनादि कम्पयति यावत्तावदवनीमपि । अवनी ह्यचलत्वेन प्रसिद्धा । अत्र च स्त्रैणहास्तिकयोः समानधर्म्योक्त्योपमानोपमेयता व्यज्यते । यथात्र हास्तिकं स्वैरं चलदवनीमपि चालयति तथा मन्थरं चलत्स्त्रैणं वशिनामपि मन इति ॥

अभ्यागतानां निर्मातुं ह्लत्तिं ह्लादितमानसः ।
असंह्नुवान आत्मानन्ह्नुतेर्थं नात्र कश्चन ॥ ६३ ॥

६३. अत्र पुरेभ्यागतानामतिथीनां ह्लत्तिं पाद्यभोजनवस्त्राद्यातिथ्यसंपादनेनानन्दं निर्मातुं कर्तुं कश्चन कोप्यर्थं द्रव्यं न ह्नुते सांप्रतं व्यवहारेषु लाभो नास्ति प्रत्युत हानिरेवेत्यतः क्व द्रव्यमिति प्रकारेण न गोपायति । किं तु तदर्थे सर्वस्वं व्ययतीत्यर्थः । कीदृक् सन् । ह्लादितं भाग्यैरौदार्यत्वादतिथिं दृष्ट्वा प्रमोदितं मानसं चित्तं येन स तथा । अत एवासंह्नुवानोतिथिदृष्टिव्यक्तेनातिरोधानः ॥

१ सी 'स्त्रैण ह्ल'.

१ सी डी "मदं". २ बी सी डी ध्मोलयो" ३ ए सी म्मदः". ४ एफ् "रि ... ". ५ एफ् "दा". ६ सी डी "तिथ्या". ७ एफ् "दत".

पदार्थं ह्यस्तनँह्यद्यापश्यँल्लोको निषेवते ।
अत्र त्रैलोक्यसम्राजं हरिपूज्यं ज्वलद्द्युतिम् ॥ ६४ ॥

६४. अत्र पुरे पदार्थं यौवनसंपदादिकं ह्यस्तनं कल्ये भवमद्य वर्तमानेह्न्यपश्यन् सन् लोकस्त्रैलोक्यसम्राजं त्रिजगत्स्वामिनं श्रीमदर्हन्तं निषेवतेनित्यरूपं संसारं भावयंस्तदुच्छेदायाराधयति । किंभूतम् । हरिपूज्यं शक्राच्यं ज्वलद्द्युतिं स्फुरत्कान्तिम् । योपि लोको ह्यस्तनं पदार्थं धनादि चौराद्यपहृतत्वेनाद्यापश्यन् स्यात्स तत्प्राप्त्यर्थी ज्वलद्द्युतिं स्फुरत्तेजसमत एव हरिपूज्यं विष्णुमिवार्च्यं त्रैलोक्यसम्राजं महाराजं निषेवत इत्युक्तिः ॥

मन्दं ह्मलत । ब्रणन्ह्मालयेत् । असंह्नुवानः । आत्मानन्ह्नुते । पदार्थं ह्यस्तनेम् । ह्यस्तनँह्यद्य । स्यैरं ह्मलत् । कुलन्ह्मालयति । निर्मातुं ह्नुतिम् । ह्नुतिल्ह्लादित । इत्यत्र "मनयवे°" [१५] इत्यादिनानुस्वारानुनासिकौ स्वौ पर्यायेण ॥ मादिपर इति किम् । सम्राजं हरि ॥ ह इति किम् । पूज्यं ज्वलत् ॥

सम्राजम् । इत्यत्र "सम्राट्" [ १६ ] इति मस्यानुस्वाराभावो निपात्यते ॥

प्राङ् शौर्यवृत्तौ प्राङ्क्छास्त्रे प्राङ्क्शमे प्राङ् समाधिषु ।
प्राङ् सत्ये प्राङ् षड्दर्शन्यां प्राङ् षडङ्ग्यामितो जनः ॥६५॥

६५. अस्मिन् "आद्यादिभ्यस्तस्" [७.२.८४.] इति तसि इतोस्मिन्पुरे जनः शौर्यवृत्तौ प्राङ् प्रथमोस्ति । एवमग्रेतना अपि प्राङ्शब्दा योज्याः । शास्त्रे कार्यकारणयोरभेदाच्छास्त्रशब्देन तत्परिज्ञानमुच्यते तत्र । एवं षड्दर्शनीषडङ्गीशब्दाभ्यामपि । शम इन्द्रियजये । समाधिषु

१ एफ् °क्यसाम्रा°.

१ एफ् °न् सन् त°. २ एफ् °नय्द्यद्य ।. ३ एफ् °वलेला°. ४ एफ् °ण मनयादि°. ५ बी °ट्दर्शिनी°.

ण्डिवन्मयूरेष्विव षड्जरुणसु षड्जस्वरमुच्चारयत्सु । तथा क्रुङ्क्ष्विव सारसेष्विव मध्यमं मध्यमस्वरं प्राञ्चन्ति गच्छन्ति ये तेषु मध्यमप्राङ्क्षु । उक्तं च

षड्जं मयूरा ब्रुवते गावस्त्वृषभभाषिणः ।
अजाविकं तु गान्धारं क्रौञ्चः क्वणति मध्यमम् ॥ १ ॥
पुष्पसाधारणे काले पिकः कूजति पञ्चमम् ।
धैवतं ह्रेषते वाजी निषादं बृंहते गजः ॥ २ ॥

एतेन गायनानां सर्वस्वरकरणकौशलमुक्तम् ॥

प्राङ्क् शेते । प्राङ्क्छास्ते । प्राङ् शमे । प्राङ्क् षड्दर्शन्याम् । प्राङ् षडङ्ग्याम् । प्राङ्क् समाधिषु । प्राङ् मत्ये । स्मृतिगुण्ट श्रुति । श्रुतिगुण्ट्छास्त्र । शास्त्रगुणशब्द । नक्षत्रगुण्ट षाड्गुण्य । षाड्गुण्यगुणपद् । शब्दगुण्ट् सुवण् । सुवण् सदा । क्रुङ्क्षु । प्राङ्क्षु । पञ्चमकुण्ट्सु । पङ्गरण्सु । इत्यत्र "ङ्णोः कटौ०" [१७] इत्यादिना कटावन्तौ वा ॥ ङ्णोरिति किम् । गायत्सु ॥

अस्मिन्त्सम्राट्सुराष्ट्राट्सिन्धुराट्त्सिन्धुरान्रणात् ।
क्ष्मास्वाराट् श्च्योतितकरान्श्च्योतद्गण्डान्समानयत् ॥ ६८ ॥

६८. क्ष्मायां भुवि स्वाराडिव क्ष्मास्वाराट् राजादःश्लोकोक्तासाधारणविशेषणाद्भीमः सम्राट् सर्वनृपशासकः सन् रणाद्रणं विधाय "गम्ययपः"[२.२.७३.] इति पञ्चमी । सुराष्ट्राट्सिन्धुराट्त्सिन्धुरान् सुराष्ट्रासिन्धू देशभेदौ । तत्स्वामिनोः सिन्धुरान् गजानस्मिन्पुरे समानयत् । किंभूतान् । श्च्योतिता मदं स्रोतुमारब्धाः कराः शुण्डा येषां तांस्तथा

१ प °ट् श्चोति°.

१ प °ङ्क्ष°. २ डी °जादिक. ३ पफ् प्ङर°. ४ डी कटावन्ताविल्या°. पफ् कटावन्ती शिटीत्या°. ५ बी सी डी °राट् सु°. ६ डी मदैः श्च्योतु°.

श्च्योतद्गण्डान् मदक्षारिकपोलान् । भीमेन हि सुराष्ट्रेशसिन्धुराजौ रणे जित्वा तद्गजेन्द्राः पत्तन आनीताः ॥

सम्राट्सुराष्ट्रा । अस्मिन्त्सम्राट् । इत्यत्र "ङ्नः सः त्सोश्वः" [ १८ ] इति सस्य त्सादेशो वा ॥ ढकारनिर्देशाट्टत्वं न भवति ॥ केचिट्टत्वमपीच्छन्ति । सिन्धुराट्त्सिन्धुरान् ॥ पक्षे । सुराष्ट्राराट्सिन्धुराट् ॥ गण्डान् समानयत ॥ स इति किम् । सिन्धुरान् रणात् ॥ अश्च इति किम् । स्वाराट् श्च्योतित । कराञ्श्च्योतत ॥

भजञ्छौर्यं वहञ्शौचं पालयञ्शरणागतान् ।
जनोस्यान्तरनन्तश्रीर्वदञ्श्च्योतति मध्विव ॥ ६९ ॥

६९. अस्य पुर्य्यान्तर्मध्ये शौर्यं भजन्नत एव शरणागतांस्त्राणार्थिनः पालयन् जनो भटलोको वदन् मयि रक्षके भवद्भिर्न भेतव्यमिति भाषमाणः सन्नभयवाक्यस्यातिसुखदत्वान्मध्विव श्च्योतति[६] क्षरति । ननु लोभेन शरणागतान्पालयिष्यति । नेत्याह । शौचं निर्लोभतां वहन् यतोनन्तश्रीरसंख्यलक्ष्मीकः । बहुलक्ष्मीको हि प्रायेण तृप्तत्वादेवंविधमशौचं न करोति । यद्वा । अनन्तस्येव श्रीर्यस्य सोनन्तश्रीर्विष्णुतुल्यः । विष्णुर्हि निरपेक्ष एव जगद्रक्षति ॥

प्रातरत्राग्निरादित्या अनन्त इन्द्र आसिताः ।
सुचेत३यन्वेहि पय अ३ग्नेत्रेत्यध्वरे गिरः ॥ ७० ॥

७०. अत्र पुरेध्वरे यागे गिरो वर्तन्ते । अर्थादध्वर्यूणाम् । कथमित्याह । प्रातरित्यादि । केषांचिद्याज्ञिकानामेवं वाचो यथा हे सुचेत३ः शोभनमनस्क

---

१ सी डी °ध्विह ॥

---

१ एफ् °चित् ट°. २ ए °राड्मि°. ३ सी डी °न् ग°. ४ एफ् श्च्योतति ।. ५ एफ् °गनाना त्रा° ६ सी डी °नि न°. ७ ए °क्ष्मीको हि. ८ डी या गि°. ९ ए °तः३शो°. सी डी तः शो°. एफ् त३शो°.

प्रातः प्रभाते त्वयाग्निर्वह्निदेवता आदित्या धातृ१अर्यमन्२मित्र३वरुण ४अंशु५भंग६इन्द्र ७विवस्वन् ८पूषन्९पर्जन्य१०त्वष्टृ११विष्णु१२संज्ञा द्वादश सूर्या अनन्तो विष्णुरिन्द्रः शक्रश्चात्र प्रदेश आसिता मन्त्रैराहूय स्थापिता इति । तथान्येषां पयोभिमन्त्रेण जलाभ्याह्वानं कुर्वतां याज्ञिकानामेवं वाचो यथा हे पयो जलदेवते तथा हे अ३ग्ने वह्निदेवतेत्रं प्रदेशेन्वेहि अन्वागच्छावतरेति यावदिति च । इतिर्भिन्नक्रमे । स्थापिता इत्यत्र अ३ग्ने इत्यत्र च योज्यः ॥

भजञ्छौर्यं वहञ्शौचं इत्यत्र "नः शि ञ्" [१९] इति ञ् वा ॥ पक्षे पालयञ् शरण ॥ अश्च इत्येव । वदञ् श्र्योतति ॥

जनोस्य । इत्यत्र "अतोति रोरुः" [२०] इति रोरुकारादेशः ॥ अत इति किम् । आदित्या अनन्त । सुचेत३यन्वेहि । "दूरादामन्त्र्यस्य°" [७.४.९९] इत्यादिना प्लुतः ॥ अतीति किम् । अनन्त इन्द्र । इन्द्र आसिताः ॥ पय अ३ग्ने । "दूरादामन्त्र्यस्य°" [७.४.९९] इत्यादिना प्लुतः ॥ रोरिति किम् । प्रातरत्र ॥

स्वर्वासिनामपि रतिर्भवेदत्र मनोरमे ।
देहि नः सुमन३नेति देहिनामिह भारती ॥ ७१ ॥

७१. अत्र पुरे स्वर्वासिनामपि देवानामपि रतिः सुखं भवेत् । संभावने सप्तमी । इदमहं संभावयामीत्यर्थः । यतः किंभूते । मनोरमे नानाद्भुतालयत्वाच्चित्तावर्जके । तथेह पुरे देहिनां प्राणिनां हे सुमन३औदार्यधार्मिकत्वादिगुणैः शोभनचेतस्क नोस्मभ्यं किंचिद्देहीति भारती वाणी नास्ति । सर्वस्येश्वरत्वेन याचकानामभावाद्याचकदर्शनेनैव यथाकामं दानाद्वा ॥

---

१ ए सी °न·३ने°. बी °न३नें°.

---

१ धी सी °भाग°. २ एफ् °र्वन्तो या°. ३ बी °तेन्वे°. ४ सी डी °अग्ने३ इ°. ५ एफ् °हि । अ°. ६ एफ् °म् । प°. ७ सी डी °पि र°. ८ ए °नः३ औ°.

मनोरमे । इत्यत्र "घोषवति" [ २१ ] इत्युत्वम् ॥ घोषवतीति किम् । देहिनः सुमनेः ॥ अत इत्येव । रतिर्भवेत् । सुमन ३ नेति ॥ रोरित्येव । स्ववासिनाम् ॥

भो गन्धर्वा भगो नागा अघो देवाः किमीदृशम् ।
पुरमस्त्येवमत्रोच्चैर्वदन्ति व्योमचारिणः ॥ ७२ ॥

७२. स्पष्टः । नवरमत्रेत्यत्र विषयसप्तम्याः स्थाने त्रप् । निरुपमत्वादत्र पुरविषये व्योमचारिणो विद्याधराद्या एवं वदन्ति । भो भगो अघो इत्यामन्त्रणेऽव्ययानि ॥

गन्धर्वा भगोः । भो गन्धर्वा. । भगो नागाः । अघो देवाः । इत्यत्र "अवर्णभो°" [ २२ ] इत्यादिना रोर्लुक् ॥ घोषवतीत्येव । देवाः किम् ॥

सदा साध्युदयेध्विन्दुर्निष्कलङ्कगुणान्वितः ।
भव्याजय्याव्यलोकोस्मिन्न च वृक्ष लता न च ॥ ७३ ॥

७३. अस्मिन्पुरे भविष्यति गुणपात्रमिति "भव्यगेय°" [ ५.१.७ ] इत्यादिना कर्तरि ये भव्यो मोक्षगमनयोग्योत एवाजय्यो भावतः सर्वविरतिसामायिकान्वितत्वेन रागाद्यान्तरशत्रुभिर्जेतुमशक्योतएव चाव्ययं मोक्षं करोति । णिच् । अव्ययतीति । विच् । अव्यय् मोक्षसाधको यो लोकः स मुनिजनः । वृक्ष वृक्षाणां व्रश्चनं "क्रुत्संपदादिभ्यः क्विप्" [ ५.३.११४ ]

---

१ एफ् °नि. क°.

---

१ एफ् °त्युक्त घो°. २ ए बी डी °न.३ अ°. ३ ए डी °न.३ने° बी °नः-३नेति. ४ डी °रा ए°. ५ D drops the first part, गन्धर्वाभगोः, evidently without understanding the purpose of its insertion which is to illustrate अवर्ण preceeding a *visarga*. ६ सी भव्यो ७ एफ् °एवाव्य°. ८ ए °ति क्विपि अ°. ९ सी डी °को लो° १० एफ् वृक्षा°.

इति क्विपि वृक्षवृश्चं करोति णिच्यन्त्यस्वरादिलोपे वृक्षवयति[1] क्विपि वृक्षे वृक्षाणां छेदको न च नैवास्ति[2]। एवं लता न च। लताच्छेदकोपि नैवास्ति। वृक्षलता जन्मजराजीवनमरणारोहणाहारादिसचेतनधर्मवत्त्वेन सचेतना इति ताः प्राणातिपातनिवृत्तत्वेन न च्छिनत्तीत्यर्थः। यतोध्यारूढ उमीशमध्युः। स चासाविन्दुश्चाध्विन्दुः। स इवे निष्कलङ्का निर्दोषा ये गुणा दयादयः। ईश्वरभालस्थस्य हि कलामात्रस्येन्दोः प्रतिपदिन्दोरिवे निष्कलङ्कत्वात्तैरन्वितः। नन्वत्र पुरे को गुणो येनैवंविधगुणोपेतो मुनिजनोत्र तिष्ठति तत्राह। यतः सदा सर्वदा साध्युदये साधूनां मुनीनामीस्तपःसंयमादिलक्ष्मीस्तस्या उदयो वृद्धिर्यत्र तस्मिन्निर्जीवक्षेत्रताविशुद्धाहारप्राप्त्यादिसंयमगुणोपेततया मुनिजनप्रायोग्य इत्यर्थः॥

वृक्षलता। लता न च। अन्यलोक। इत्यत्र "व्योः" [२३] इति व(य?)योर्लुक्॥ पदान्त इत्येव। भव्यर्जिव्य। कश्चित्तु स्वरजयोरनादिस्थयोर्यकारवकारयोर्घोषवत्यवर्णादन्यतोपि लोपमिच्छति। अध्विन्दु। साध्युदये॥

वन्ध एते दृशा अस्याः कमले क इव भ्रमः।
क इत्थं नेह कामिन्याः स्तुत्या अन्योन्यमुद्यताः॥ ७४॥

७४. कामिन्याः स्तुत्यै लोचनाद्यवयवसौन्दर्यवर्णनायेह पुरेन्योन्यं के नोद्यताः। कथमित्याह। हे वन्धो बान्धवास्याः प्रत्यक्षायाः कामिन्या एते प्रत्यक्षे दृशौ नेत्रे कमले। अत्रार्थे क इव भ्रमः को नाम संशयः। इवोसंभावनायाम्। एते दृशौ पद्मे एव। अत्रार्थे न काप्यसंभावना कार्येत्यर्थ इत्थम्॥

---

१ एफ् °ति तीति कि°. २ ए °क्षव् वृ° [वृ नहि.]. ३ सी °स्ति वृ°. ४ बी सी डी °रणरो°. ५ एफ् °व निः क°. ६ एफ् °व निः क°. ७ एफ् °नयो°. ८ बी °जय्या।.

अघो अर्क भगो ईश भो इन्द्र उ चतुर्भुज ।
इत्यादौ ब्रह्मयज्ञस्य स्मरन्ति ब्राह्मणा इह ॥ ७५ ॥

७५. इह पुरे ब्राह्मणा द्विजा ब्रह्मयज्ञस्याध्ययनस्यादौ प्रारम्भेघो अर्क हे रवे भगो ईश हे शंभो भो इन्द्र उ चतुर्भुज हे विष्णो । जयेत्यादिका क्रिया सर्वत्राध्याहार्या । इत्येवंप्रकारेण स्मरन्त्यर्थादर्कादीन् । निर्विघ्नाध्ययनप्रवृत्तये अर्काद्यभीष्टदेवताः स्मृत्वा ब्राह्मणा वेदाध्ययनं कुर्वन्तीत्यर्थः ॥

अघोयिन्द्र भगोयिन्दो भोयादित्यायु विष्णवु ।
असावु कयु वोत्रेति नृपे पृच्छन्ति खेचराः ॥ ७६ ॥

७६. अत्रे नृपेत्र पुरेस्ति यो नृपस्तत्र विषये खेचरा देवा इन्द्रादीन्पृच्छन्ति । कथमित्याह । अघो इन्द्र भगो इन्दो भो आदित्या द्वादशार्का उ विष्णो वो युष्माकं मध्येसौ नृपः कः । किं प्रश्ने । युष्माकं मध्येसौ किमिन्द्रः किं वेन्दुः किं वा कोप्येको रविः किं वा विष्णुरिति । अत्रत्यनृप ऐश्वर्यकान्तत्वतेजस्वित्वरक्षकत्वादिगुणदर्शनादिन्द्रचन्द्रादित्यविष्णुशङ्कयैवं प्रश्नः । विष्णवु असावु कयु इत्यत्र त्रयोप्युत्रः पादपूरणे ॥

तयीश्वरास्तयारामा इमेसाववनीपतिः ।
वन्धवत्र साधवीक्षस्वागन्ताविति वागिह ॥ ७७ ॥

७७. इह पुर आगन्तावागन्तुकजनविषये वागस्ति । यथा हे बन्धो

१ सी °श शभो इन्द्र च°. डी °श शभो इन्द्र उ च°. २ सी डी त ईश्व°.

१ एफ् °ष्णो जीवेत्या°. २ ए °दिकि° ३ डी सी °दीननि°. ४ एफ् °त्र पु°
५ ए विष्णुवुः अ°. सी विष्णुवु.

वान्धव साधो शिष्ट ये त्वया पूर्वं वार्तया श्रुतास्त इम ईश्वरो आढ्याः । तथा येषां फलान्यमृतरसस्वादूनि त्वमास्वादयो ये त्वया श्रुतपूर्वाश्च त इम आरामा उद्यानानि । तथा यं त्वं यशसा दृष्टपूर्वी सोसावनीपतिर्भूपो वर्तते । अत्र प्रदेश ईक्षस्वालोकयार्थादीश्वरादीनेवेति ॥

यथितोस्मायिदं देहि यथितोस्मायिदं पुनः ।
उदारायीश्वरायाहुरत्रेति स्वनियोगिनः ॥ ७८ ॥

७८. अत्र पुर उदारायीश्वरा आढ्याः स्वनियोगिनः स्वभाण्डागारिकाँनित्येवंप्रकारेणाहुः । यथा । अहो नियोगिन् यो याचकजन इतोस्मिन् विवक्षिते पूर्वादिदिग्विभागेस्त्यस्मायिदं स्वर्णदुर्वर्णादि देहि । यः पुनरिनोस्मिन् विवक्षिते पश्चिमादिप्रदेशेस्त्यस्मायिदं पूर्वस्मादन्यद्भोजनवस्त्रादिकं देहीति ॥

बन्ध एते । दशा अस्याः । क इव । स्तुत्या अन्योन्य । भो इन्द्र । भगो ईश । अघो अर्क । इत्यत्र "स्वरे वा" [ २४ ] इति वययोर्वा लुक् ॥

पक्षे । विष्णवु । असावु । कयु । आदित्यायु । भोयादित्याः । भगोयिन्दो । अघोयिन्द्र । इत्यत्र "अस्पष्टा°" [२५] इत्यादिना वँययोः स्थाने नित्यमस्पष्टावीपत्स्पृष्टतरौ वयौ । अवर्णात्त्वनुञि वा । वन्धवत्र । साधवीक्षस्व । असाववनीपतिः । आगन्ताविति । तयीश्वराः । तयारामाः । अस्मायिदम् अस्मायिदम् । यथितः यथितः । उदारायीश्वराः । ईश्वरायाहुः । अनुञीति किम् । उँञि अस्पष्टावेव यथा स्यातां तथा चोदाहृतम् ॥

यथितः । उदारायीश्वराः । भोयादित्याः । भगोयिन्दो । अघोयिन्द्र । इत्यत्र "रोर्यः" [ २६ ] इति रोः स्थाने यः ॥ अवर्णादित्येव । आहुरत्र ॥

---

१ **सी डी** °राधा. । त°. २ **बी सी डी** त्वमस्वा°. ३ **सी डी** °था यत् स्व. **एफ्** °था य°. ४ **बी सी डी** कानाहुः. ५ **ए** °द पूर्वस्मायिद पू°. ६ **ए एफ्** वयो°. ७ **एफ्** वयोः. ८ **ए बी सी डी** रौ यवौ ।. ९ **ए** उडि अ°.

त्वमीशो भविनामर्हन् भवान् विष्णुर्भवानजः ।
स्तुवन्नाह सुभणणेवं श्रद्धया युङ्ङिहार्हतः ॥ ७९ ॥

७९ इह पुरेर्हन् देवतास्यार्हतः श्रावकः । श्रद्धया भावनया युङ् युक्तः पुलकाञ्चिताङ्गो[2] नेत्रजलाप्लावितकपोलश्चेत्यर्थः[3] । सुष्ठु भणति विचि सुभण् मधुरगीश्च सन् स्तुवंस्तीर्थकरं नुवन् सन्नेवमाह भक्तिविशेषेणार्हन्तं प्रतीदं ब्रूते । यथा हे अर्हन् जिनेश्वर भविनां भव्यानां त्वमीशस्त्वमेव महेश्वरो भवान् विष्णुस्त्वमेव नारायणो भवानजस्त्वमेव स्रष्टा । तवैव मुक्तिप्राप्तिहेतुत्वात्वत्तोन्यद्धरहरिब्रह्माख्यं[5] देवतान्तरं भव्यलोकानामाराध्यं नास्तीत्यर्थ इति ॥

युङ्ङिह । सुभणणेवम् । स्तुवन्नाह । इत्यत्र "ह्रस्वात्°" [२७] इत्यादिना द्वित्वम् ॥ ह्रस्वादिति किम् । भवान्जः ॥ ङणन इति किम्[6] । त्वमीशः ॥ स्वर इत्येव । अर्हन् भवान् ॥ पदान्त इत्येव । भविनाम् ॥

आच्छायां दीपिकाच्छाया खड्गाच्छायेव माच्छिदत् ।
माच्छायाः कुर्वते रत्नदीपानत्राप्रमाच्छवीन् ॥ ८० ॥

८०. अत्र पुरे मया लक्ष्म्या छाया शोभा येषां ते माच्छाया ईश्वरा रत्नदीपान् रत्नान्येव दीपान् मणिमयान् प्रदीपान् कुर्वते । किंभूतान् । प्रमिमीते विचि प्रमा नास्ति प्रमा परिच्छेत्ता यस्याः सा तथाभूता छविः कान्तिर्येषां तान् । सर्वतः प्रसरत्कान्तीनित्यर्थः । रत्नदीपकरणे हेतुमाह । दीपिकाच्छाया दीपप्रष्ठेन्धकार[7] आच्छायामीषदपि लक्ष्मी माच्छिदन्मास्म[8] विनाशयत् । यथा खड्गाच्छाया आच्छायां छिनत्ति । दीपखड्गयोश्छाये हि स्पृश्यमाने अश्रिये स्याताम् । यत्पुराणम् ।

१ सी °तः श्रा°. २ एफ् °काचिता°. ३ एफ् °जलप्ला°. ४ एफ् प्रत्येव ब्रू°. ५ एफ् °द्धरिहरब्र°. ६ ए °किं किमत्र स्व°. ७ डी °रच्छाया आ°. ८ एफ् °न्मा वि°.

अजारजः खररजस्तथा [1]संमार्जनीरजः ।
दीपमञ्चकयोश्छाया लक्ष्मी हन्ति पुरोकृताम् ॥ इति ॥

दीपिकाच्छाया खट्वाछाया । इत्यत्र "अनाङ्माङ°" [२८] इत्यादिना वा छस्य द्वित्वम् ॥ अनाङ्माङ इति किम् । आच्छायाम् । माच्छिदत् ॥ ङित्करणान्माच्छाया इत्यत्र विकल्प एव । तेन पक्षे माछाया इत्यपि ज्ञेयम् । आङ्साहचर्येणाव्ययस्य माङो ग्रहणात्प्रमाछवीनित्यत्रापि विकल्पस्तेन प्रमाच्छवीनित्यपि ज्ञेयम् ॥

हे३च्छातोदरि हे३छेके तन्वि३च्छद्म न यद्विधुः ।
ह्रीच्छन्निच्छति ते वक्त्रच्छायामत्रेति गीर्नृणाम् ॥ ८१ ॥

८१. अत्र पुरे नृणां प्रस्तावात्कामिनामित्ये[3]वंविधा गीरस्ति । यथा हे३च्छातोदरि कृशोदरि हे३छेके[4] हे[5] तन्वि३कृशाङ्गि त्वन्मुखेन्दीवर-लक्ष्म्या निर्जितत्वाद् ह्रीच्छन् लज्जमानः सन् विधुश्चन्द्रो यत्ते वक्त्रच्छायां मुखलक्ष्मीमिच्छति प्राप्तुं वाञ्छति तन्न च्छद्म न कूटं किं तु सत्यमेतदि-त्यर्थ इति ॥

हे३च्छातोदरि हे३छेके । इत्यत्र "प्लुताद्वा" [२९] इति वा द्वित्वम् ॥ हेहै-[6]ष्वेषामेव" [७.४.१००] इति प्लुतः ॥ दीर्घादित्येव । तन्वि३च्छद्म । "दूरादा-मन्त्र्य°" [७.४.९९] इत्यादिना प्लुतः ॥

इच्छति । ह्रीच्छन् । वक्त्रच्छायाम् । इत्यत्र "स्वरेभ्यः" [३०] इति पदान्ते-पदान्ते च द्वित्वम् ॥

ब्रह्मवद्ब्रह्मवेत्तारो ह्रुतार्काः कर्कशत्विषा ।
कीर्त्या प्रोर्ण्णोनुवत्याशा अस्मिन्नर्हा गुणह्रदाः ॥ ८२ ॥

८२. अस्मिन्पुरेऽर्हन्ति पूजामित्यर्हा योगिनः कीर्त्या साधुवादेनाशा

---

१ ए बी सी डी सन्मार्ज°. २ एफ् °राजिता°. ३ बी °व गी. ४ बी °के३हे°. ५ एफ् हे३त°. ६ सी डी °ष्वेकामे°.

दिशः प्रोण्णोनुर्वत्यत्यर्थं व्याप्नुवन्ति । कीदृशाः सन्तेः । अगाधा जलाश्रयभेदा ह्रदाः । गुणानां शमेन्द्रियजयादीनां ह्रदा इव गुणह्रदाः । गुणपरिपूर्णा इत्यर्थः । अत एव ब्रह्मवद्विधातेव ब्रह्म परमज्ञानं विन्दन्ति लभन्त इत्येवंशीला ब्रह्मवेत्तारोत एव च कर्कशत्विषा प्रौढज्ञानतेजसा ह्रुत आच्छादितोर्क्को रविर्यैस्ते ॥

अर्ह्राः । कर्केश । ब्रह्मवत् ब्रह्म । इत्यत्र "र्होदर्ह°" [ ३१ ] इत्यादिना वा द्वित्वम् ॥ अर्हस्वरस्येति किम् । गुणह्रदाः । अर्हाः । वेत्तारः ॥ स्वरेभ्य इत्येव । ह्रुत ॥ अन्विति किम् । प्रोण्णोनुवति । अत्र द्विर्वचने कृते द्वित्वं यथा स्यात् ॥

असय्ँय्यँतः सय्यँतत्वङ्को नास्मिन्नागतोभजत्त् ।
पित्रर्थमित्रार्थपरान् विधिरत्रैव चासृजत् ॥ ८३ ॥

८३. एवं नामात्र महात्मानः सर्वसावद्यविरताः संयता आसन् । यावतात्रागतोसय्य्ँय्यँतोपि तान् दृष्ट्वा समुच्छलितविवेकैः सय्यँतत्वमभजदिति तात्पर्यम् । तथैवंनामात्र वहवः पितृकार्यमित्रकार्यपरायणा जना दृश्यन्ते । यावता ज्ञायतेन्यस्थानकानि मुक्त्वात्रैव विधाता तान् सृष्टवानित्यर्थः ॥

इतक्कुविक्क्लैः कान्तः कृतार्चः प्राह दैवतम् ।
नमतँउपाहि गो३त्रातउपाहि घो३त्र भुवः प्रभो ॥८४॥

८४. इतोस्मिन्पुरे कान्त उच्छलच्छ्रद्धापूरेणोच्छ्वसिताङ्गत्वान्मनोहरः

---

१ ए °तक्कुवि°. २ बी °लः का°. ३ ए तज्याहि. ४. सी एफ् प्रभो..

---

१ सी डी °वत्यर्थ. २ ए न्तः सगा°. ३ डी एफ् °गाधज°. ४ सी °न वदन्ति. डी एफ् °न विदन्ति. ५ एफ् र्कोपि यैस्ते. ६ ए सी डी °शः।. ७ ए °ना द्वि°. ८ सी डी ह्रुतं अ°. । ९ सी सय्यता. एफ् सय्येता°. १० ए बी सी डी °तोसयतो°. ११ ए बी सी डी °कः सयत°. १२ सी °र्यप°. १३ सी एफ् °पूरणो°.

कृतार्चो विहितपूजोपचारः कलो मधुरवाक् च सन् कविः काव्यकर्ता दैवतमर्हदादिकां स्वाभीष्टदेवतां प्राह । कथमित्याह। हे गो३ त्रातः संसारसागरोत्तारकत्वेन भूस्थलोकस्य रक्षणशीलात एव हे भुवः प्रभो पृथिव्याः स्वामिंस्तथा हे घो३ त्र स्वर्गस्थलोकरक्षके दैवत नमतः प्रणम्रानस्मदादीन् पाहि पाहि रक्ष रक्षार्थात्संसारदुःखेभ्य इति । कविरित्यत्र जातावेकवचनम् । वक्ता हर्षभयादिभिराक्षिप्तमनास्तथा स्तुवन् निन्दन् यत्पदमसकृद् ब्रूयात्तत्पुनरुक्तं न दोषायेत्यलंकारविदां समयात्पाहि पाहीति न पुनरुक्तदोषः ॥ गो३त्रातः । घो३त्र । इत्यत्र "दूरादामन्त्र्यस्य°" [७.४.९९] इत्यादिना प्लुतः ॥

पात्रे यथाविधि प्रत्तधनश्चन्द्रसमो गुणैः ।
धैर्ययुग्ग् वीर्ययुग् राजत्यत्र सर्वोपि सत्यवाक् ॥ ८५ ॥

८५. अत्र पुरे सर्वोपि लोको राजति । यतः कीदृक् । पात्रे ज्ञानदर्शनचारित्राधारे तीर्थकृदादौ यथाविध्यागमोक्तकल्पानुसारेण प्रत्तं प्रदातुमारब्धं धनं वित्तं येन सः। एतेनौदार्यविवेकावुक्तौ । धैर्ययुग्ग् वीर्ययुग् । आपत्स्वप्यचलचित्तता धैर्यं वीर्यं पराक्रमस्ताभ्यां युक्तः । सत्यवागवितथवचनः । अत एव गुणैरौदार्यादिभिः कृत्वा चन्द्रसम इन्दुवन्निर्मलः ॥

विरामे । धैर्ययुग्ग् वीर्ययुग् । अभजत्त् असृजत् ॥ एकव्यञ्जने । मित्रार्थं पित्र्यं । त्वड्ङ्कः । असर्व्यतः सर्व्यतत्वम् । इतक्कविः कविक्कुलः । नमतप्पाहि गो३त्रातप्पाहि । कलः कान्तः कान्तः कृतार्चः । गो३त्रातः घो३त्र। इत्यत्र "अदीर्घात्°" [३२] इत्यादिना वा द्वित्वम् ॥ अन्विस्यधिकारात् कत्वगत्वादिषु कृतेषु पश्चाद्द्वित्वम् । अदीर्घादिति किम् । वाक् । पात्रे ॥ विरामैकव्यञ्जन

---

१ सी डी °क् स°. २ सी डी एफ् °दिक स्वा°. ३ एफ् °ह । हे. ४ सी डी °क देव°. ५ सी डी °क्ष वि°. ६ एफ् °अने कि°.

इति किम् । चन्द्र । यथाविधि सयुक्तव्यञ्जनेपीच्छन्त्येके । भ्रत्त ॥ अर्हस्वरस्येत्येव । सर्व ॥

सल्त्राकारा अनुल्केस्मिन् यद्युल्कान्ति मणिप्रभाः ।
अवल्म्मीके च वल्मीकन्त्युन्नता द्रव्यराशयः ॥ ८६ ॥

८६. अनुल्कं महारिष्टरहितत्वेन तत्सूचकोल्कोत्पातरहितेस्मिन्पुरं यदि परं सह ला लकारेण वर्तते यो त्र त्रकारस्तद्वदाकार आकृतिर्यासां ताः सल्त्राकारा मणिप्रभा रत्नभास उल्कान्ति बाहुल्यादारक्तत्वाच्चोल्कावदाचरन्ति । तथा वंहीयोवास्तव्यजनातिसंकीर्णत्वेन न विद्यन्ते वल्म्मीकाः सर्पागाराणि मृत्तिकाकूटा यत्र तस्मिन्नवल्मीके चास्मिन् यदि परं द्रव्यराशयो वित्तकूटानि वल्मीकन्ति वल्मीका इव चरन्ति यत उन्नता उच्चाः । चः पूर्ववाक्यार्थापेक्षयासमुच्चये । यदीत्युभयत्र योज्यम् ॥

अनुल्के उल्कान्ति । अवल्म्मीके वल्मीकन्ति । इत्यत्र "अम्वर्गस्य॰" [३३] इत्यादिना वा द्वित्वम् ॥ वर्गस्येति किम् । द्रव्य ॥ अञिति किम् । सल्त्र ॥ अन्तस्थात इति किम् । उन्नताः ॥

सखि दध्यत्र दध्यत्र सखि मध्विह मध्विह ।
वाग्वाल्यमन्मनात्रेति कुमारीभिः प्रतन्यते ॥ ८७ ॥

८७. हे सखि । अत्र प्रदेशे दध्यस्ति तथात्रापि प्रदेशे दध्यस्ति ।

१ ए सी °नुल्केस्मि°

१ सी °नुल्के स°. २ एफ् °कोल्कापात.° ३ एफ् °नालिस.° ४ ए एफ् °के वास्मि°. ५ एफ् °क्यापे°. ६ डी °ना द्वि.° ७ एफ् °स्येत्येव । द्र°. ८ सी डी °त्र । अल्त्र ॥. ९ बी सी डी °स्या इ°.

तथा हे सखि । इह मध्विहापि स्थाने मध्वस्तीत्येवंप्रकारेणात्र पुरे वाल्यमन्मना बालत्वादव्यक्तमधुरा वाग् वाणी कुमारीभिः प्रतन्यते विस्तार्यते । दध्यत्रेत्यादि स्वप्रधानमेव वाक्यद्वयमपि । यद्वात्राकृतयवद्वित्वस्य वाक्यस्य "असकृत्संभ्रमे" [७. ४ ७२.] इति संभ्रमे द्विरुक्तिः । ततो यवयोर्द्वित्वं वा । तदायमर्थः । हे सखि । अत्र प्रदेशे दध्यस्त्यत्र प्रदेशे दध्यस्ति । एवं मध्विह मध्विहेत्येवं संभ्रमप्रकारेण ॥

दध्य्यत्र दध्यत्र । मध्व्विह मध्विह । इत्यत्र "ततोस्याः" [३४] इति वा द्वित्वम् ॥ तत इति किम् । वाल्य ॥ अस्या इति किम् । वाग्वाल्यमन्मना ॥

कष्टंकष्टं कृतञ्छन्नञ्छन्नं मे स्फुरितं स्फुटम् ।
कलिः प्यातः पूत्करोतीत्यत्र शङ्खध्वनिच्छलात् ॥ ८८ ॥

८८. पत्तने हि किल देवसद्मसु प्रातःक्षणे धर्ममहाराजजागर्याकृतपुद्ध. सदा शङ्खो वाद्यते । तद्ध्वनिमपह्नुत्यान्यदुत्प्रेक्ष्यते । अत्र पुरे प्रातः प्रभाते शङ्खध्वनिच्छलात्कलिः पापयुगं पूत्करोत्युच्चैः कोकूयत इव । कथमित्याह । मे मम स्फुटं सर्वजगत्प्रकटं स्फुरितं विजृम्भितं सर्वलोकान्यायप्रवृत्तिलक्षणं छन्नं छन्नं गुप्तं गुप्तं कृतम् । प्रस्तावान्नयसद्मनानेन पुरेण तस्मात् कष्टं कष्टं दुःखं दुःखं ममास्तीति । यस्य हि वस्तु केनापि चौरादिना गोप्यते स तद्वियोगेन दुःखितः सन् पूत्करोति । अत्र चान्यायानां नाम्नोप्यभावेन कलिकालस्फुरितस्याज्ञायमानत्वादेवमपह्नुतिः ॥

कष्टं कष्टं कृतञ्छन्नञ्छन्नमित्यत्र वीप्सायां कष्टच्छन्नयोर्द्विरुक्तिं कृत्वा प्रथमद्वितीययोर्द्वित्वम् ॥

---

१ डी कृतँच्छन्नँञ्छ°.

---

१ सी डी वाल्यत्वा°. २ बी °तो वयो°. ३ सी डी °त्युच्चैः. को°.

स्त्रैणः कण्ठः कलङ्कान्तङ्कामिभिश्श्चात्र निश्चितम् ।
जयशङ्खः स्वरापूर्णॅप्रतीतॅपुष्पधन्वनः ॥ ८९ ॥

८९. अत्र पुरे स्त्रीणामयं स्त्रैणः कलस्वरोपेतत्वात्कलो मधुरोत एव कान्तो मनोज्ञः कण्ठो गलकन्दलो निश्चितमवश्यं पुष्पधन्वनः कामस्य स्वरापूर्णः शब्दायमानो जयशङ्खो विजयहेतुः कम्बुः कामिभिः प्रतीतो ज्ञातः । अत्रत्यस्त्रीणां कलकण्ठत्वेन स्वं स्मरजितं दृष्ट्वा कामिभिः[2] कलः स्त्रीकण्ठः शङ्खाकारत्वात्कामराजस्य शब्दायमानो जयशङ्खो निःसशयं ज्ञात इत्यर्थः ॥

कष्टूं कष्टं[3] कष्टं कृतम् । स्त्रैणः कण्ठः कण्ठः[4] कलः । कलिः प्यातः प्यातः पूत्करोति । कलङ्कान्तः कान्तङ्कामिभिः । आपूर्णॅप्रतीतः प्रतीतॅपुष्प । कामिभिश्श्चात्र निश्चितम् । कष्टूं कष्टम् । स्प्फुरितं स्फुटम् । इत्यत्र "शिटः प्रथम°"[३५] इत्यादिना [वा] द्वित्वम् ॥ शिट इति किम् । पूत्करोति । शङ्खः ॥ प्रथमद्वितीयस्येति किम् । स्वर ॥ अनुनासिकादप्यादेशरूपात्केचिदिच्छन्ति । कृतञ्च्छत्रं छन्नञ्छन्नम् ॥

अत्रोच्चश्श्वसच्छ्रवः पेयं क्षीरं क्षरति गौः सताम् ।
सतृट्ष्षट्पदपातव्यं पङ्करुट्षण्डवन्मधु ॥ ९० ॥

९०. अत्र पुरे सतां साधूनां गौर्वाणी उच्चश्श्वसच्छ्रवःपेयमुच्छ्वसन्ति सुखानुभवेन सोल्लासानि यानि श्रवांसि श्रोत्राणि तैः पेयं पातव्यं क्षीरं दुग्धं क्षरति परिणामसुन्दरत्वेन मधुरत्वेन च स्रवतीव ।

१ ए °त. पु.°

१ बी सी डी °कण्ठेन. २ °भिः स्त्री°. ३ डी °ष्ट कृ°. ४ सी डी कलः. ५ सी डी °त स्प्फु°. ६ सी डी एफ् °नुभावे°. ७ ए °न च. ८ ए बी सी डी °च मन°

यापि गौर्धेनुः साप्युच्चश्श्रवसच्श्रवसा तर्णकादिना लेह्यं क्ष्षीरं क्षरतीत्युक्तिः । यथा पङ्करुट्ष्पण्डमम्भोजवनं सतृषः साभिलाषा ये षट्पदा भृङ्गास्तैः पातव्यं लेह्यं मधु मकरन्दं क्षरति । अस्यां चोपमायां क्षरतीति सामान्यपदं गवा स्त्रीलिङ्गेन पङ्करुट्ष्पण्डशब्देन नपुंसकेन च सह न भिद्यत इति सामान्यशब्दभेदाख्यदोषाभावः । उक्तं च ।

सामान्यशब्दभेदःसोयं यत्रापरत्र शक्येत ।
योजयितुं नाभग्नं तत्सामान्याभिधायि पदम् ॥ इति ॥

**कृतमत्स्स्यध्वजोत्स्सेकाः स्त्रियः प्स्सातात्प्स्सरःश्रियः ।**
**अस्मिन् सद्यो मनो यूनां मभ्नन्ति ख्यातविभ्रमाः ॥९१॥**

९१. अस्मिन्पुरे स्त्रियः सद्यो दर्शनकाल एव यूनां मनो मभ्नन्ति क्षोभयन्ति । यतः प्स्सातात्प्स्सरःश्रियो रूपलावण्याद्यतिशयेन ग्रस्तदेवाङ्गनारूपलावण्यादिलक्ष्मीकास्तथा ख्याता अतिरामणीयकेन प्रसिद्धा विभ्रमा विलासा यासां ता अत एव कृतमत्स्यध्वजोत्सेका विहितकामोद्रेकाः ॥

उच्चश्श्रवसच्श्रवः । सतृट्ष्षट्पद पङ्करुट्ष्पण्डवत् । मत्स्स्य उत्स्सेकाः । क्ष्षीरं क्षरति । प्स्सातात्प्स्सरः । इत्यत्र "ततः शिटः" [३६] इति वा द्वित्वम् ॥ तत इति किम् । अस्मिन् सद्यः । शिट इति किम् । मभ्नन्ति । ख्यात ॥

**तपःकार्श्श्यजुषां हर्षकृतां हिंस्रोपि दर्शनात् ।**
**धनुस्त्यागं करोत्यस्मिन्नर्कवत्कार्स्सरोत्स्सवे ॥ ९२ ॥**

९२. अस्मिन् पुरे तपसा न तु रोगत्वादिना कार्श्यं कृशत्वं जु-

१ सी डी °प्यादि°. २ एफ् °था ता. ३ एफ् °यकत्वेन. ४ बी सी डी °ति द्वि°.

पन्ते सेवन्ते ये तेषां तपस्विनां दर्शनात् हिंस्रोपि क्रूरकर्मा व्याधादिरपि[1] धनुस्त्यागं मृगादिवधार्थमुपात्तस्य धनुषस्त्यागं करोति यतो हर्षकृतां धन्या एते भगवन्तो ये शान्तदान्तास्तपसैवमात्मानं[2][3] क्लेशयन्ति तत्किं वय निरपराधजीवव्यापादनपापवृत्त्यात्मानं दुर्गतौ पातयाम इति प्रकारेण व्याधादिलोकस्यापि हर्षं क्रूरत्वोपशर्मकं[4] मनउल्लासमतिशान्तत्वतीव्रतपश्चरणकरणादिना[5][6] कुर्वन्ति[7] ये तेषाम् । यथार्को रविः कृसरा सप्तधान्यानि तस्या अयम् अणि कार्सरो य उत्सवस्तस्मिन् कार्सरोत्सव उत्तरायणदिने धनुस्त्यागं धनूराशित्यागं करोति । रविर्ह्युत्तरायणदिने धनूराशेर्मकरराशिं संक्रामति । शब्दश्लेषेणोपमा ॥

दर्शनात् । हर्षं । कार्सर । इत्यत्र "न रात्स्वरे" [३७] इति रात्परस्य शिटो न द्वित्वम् ॥ रादिति किम् । उत्स्सवे ॥ स्वर इति किम् । कार्श्र्य ॥ शिट इत्येव । अर्क ॥

पुत्रादिन्पुत्रपुत्रादिन्नथवा पुंत्रहत्यपि[1] ।
पुंत्रजग्धीति[2] नाक्रोशत्यस्मिन्मधुरगीर्जनः[8] ॥ ९३ ॥

९३. अस्मिन्पुरे जनो लोकः पुरुषं स्त्रियं च नाक्रोशति न निष्ठुरं वक्ति यतो मधुरगीर्मृदुवाक्य । कथं नाक्रोशतीत्याह । हे पुत्रादिन्नभीक्ष्णं पुत्राणां भक्षक हे पुत्रपुत्रादिन्नभीक्ष्णं पौत्राणां भक्षक त्वयेदं कार्यं विनाशितमित्याद्यध्याहार्यम् । इत्येवंप्रकारेण नरम् । अथवा तथा पुत्रो हतोनया "अनाच्छादजात्यादेर्न वा" [२ ४. ४७.] इति ङ्यां पुंत्र-[9]

---

१ ए सी पुत्रह°. २ ए सी पुत्रज°.

---

१ सी °दि भा°. २ एफ् शान्ता दा°. ३ सी डी °सैवात्मा°. ४ सी °मकम°. ५ एफ् °हास शा°. ६ सी डी °रणा°. ७ सी डी °न्ति ते°. ८ बी सी डी एफ् जनः पु°. ९ ए सी डी पुत्रह°.

हंती तत्संबोधनं हे पुंत्रहति । तथा हे पुत्रजग्धि भक्षितपुत्रे त्वयेदं दुष्टु कृतमिति स्त्रियं च ॥

पुत्रादिपुत्रपुत्रादिर्वर्जितेत्रोपहस्यते ।
पुत्रादिपुत्रपुत्रादिमत्स्यो न्यायः प्रचेतसः ॥ ९४ ॥

९४. पुत्रादिन पुत्रभक्षिण. पुत्रपुत्रादिनश्च पौत्रभक्षिणो मत्स्या यत्र स प्रचेतसोपांपतेर्वरुणस्य न्यायोत्र पुर उपहस्यतेर्थाल्लोकैः । यतः पुत्रादिपुत्रपुत्रादिर्वर्जिते पुत्रादी पुत्रसंहारी यः पुत्रपुत्रादी पौत्रसंहारी शाकिन्यादिलोकस्तेन वर्जिते रहिते ॥

पुत्रादिन् । पुत्रपुत्रादिन्निति नाक्रोशति । इत्यत्र "पुत्रस्य°" [३८] इत्यादिना न द्वित्वम् ॥ आदिन्पुत्रादिनीति किम् । पुत्रहति पुत्रजग्धीति नाक्रोशति ॥ आक्रोश इति किम् । पुत्रादिपुत्रपुत्रादिवर्जिते पुत्रादिपुत्रपुत्रादिमत्स्यः । एषु "अदीर्घात्°" [१.३ ३२] इत्यादिना विकल्प एव ॥

कम्बुकण्ठ्योत्र तन्वङ्ग्यश्चश्वदब्जन्मलोचनाः ।
रंरम्यन्ते यद्भ्रुवोग्रे लुठन्किङ्करति स्मरः ॥ ९५ ॥

९५. अत्र पुरे तन्वङ्ग्यः कृशाङ्ग्यो जलक्रीडादिभी रंरम्यन्तेत्यर्थं क्रीडन्ति । कीदृश्यः । कम्बुः शङ्खस्तद्वद्वर्तुलत्रिरेखो मधुरस्वरश्च कण्ठो यासां तास्तथा चश्वदब्जन्मलोचनाः विकस्वरेन्दीवराक्ष्यः यद्भ्रुवोग्रे यासां भ्रुवः पुरो लुठन्परिवर्तमानः स्मरः कामः किंकरति किंकरवदाचरति । अत्रत्यतन्वङ्गीनां यत्र यत्र भ्रुवोर्निक्षेपस्तत्र तत्र स्मरो विजृम्भत इत्यर्थः । किंकरोपि हि भक्तिविशेषख्यापनाय स्वामिनोग्रे लुठति ॥

१ डी °ह्लेत°. २ ए सी डी पुत्रह°. ३ एफ् °था पु°. ४ सी डी एफ् दुष्ट कृ°. ५ एफ् °री च शा°. ६ ए °न्तेत्यर्थं. ७ सी डी °त्र भ्रु°.

म् । किङ्करति । कंम्बु । नू । तन्वञ्चथः । षञ्चत् । कण्ठ्यः । कवुङोचि कण्ठः । रंरम्यन्ते । इत्यत्र "म्नां धुट्०" [३९] इत्यादिना निमित्तवर्गस्यैवान्त्यः ॥ धुडिति किम् । अब्जन्मै ॥ धुड्वर्ग इति किम् । रंरम्यन्ते ॥ अपदान्त इति किम् । लुठन् किकरति ॥

पद्मान्युन्मधुलिंहीव सुदृंश्यास्यानि सुभ्रुवाम् ।
चेतांसीहाच्छताजुंषि पुंसां स्वःसिन्धुवारिवत् ॥ ९६ ॥

९६. यथा पद्मान्युदूर्ध्वं मधुलिहौ भृङ्गदंपती येषु तान्युन्मधुलिंहि भृङ्गमिथुनयुतानि स्युस्तथेह पुरे सुभ्रुवामास्यानि मुखानि सुदृंशि रम्येक्षणद्वन्द्वानि सन्ति । पश्चार्द्धं स्पष्टम् ॥

पिण्ड्ढि गर्वं मुखेनेन्दोः स्वःस्त्रीभ्यः स्वं विशिण्ड्ढि च ।
इति शास्ति वदन्साधु स्त्रीजनेत्र सखीजनः ॥ ९७ ॥

९७. अत्र पुरे सखीजनः साध्वनेकभङ्गीचतुरं यथा स्यादेवं वदन् सन् स्त्रीजने विषये शास्ति शिक्षां दत्ते । कथमित्याह । पिण्ढीत्यादि । अत्युत्कृष्टवृत्तत्वकान्तत्वादिश्रीशालिना मुखेन कृत्वा चन्द्रगर्वस्य चूर्णने तथातिशयितरूपादिश्रिया देवीभ्यः सकाशात्स्वस्य विशिष्टीकरणे च तवाधुनावसर इत्यर्थ इति ॥ "प्रैषानुज्ञा०" [५.४.२९] इत्यादिनात्र पञ्चमी ॥

म् । पुंसां । नू । सुदृंशि । अच्छताजुंषि । चेतांसि । उन्मधुलिंहि । इत्यत्र "शिड्ढे०" [४०] इत्यादिनानुस्वारः ॥ म्नामिति बहुवचनात् सुदृंशीत्यत्र असं बाधित्वानेनानुस्वार एव ॥ शिड्ढ इति किम् । इन्दोः ॥ अपदान्त इत्येव । वदन् साधु ॥ अन्वित्येव । पिण्ड्ढि । शिण्ड्ढि । अत्र पिषशिषोर्हौ तस्य धित्वे षस्य डत्वे च शिड्भावाच्छ्नकारस्यानुस्वारो न भवति ॥

१ सी डी एफ् स्वर्लो°.

१ एफ् कम्बुवत् । नू. २ सी डी धुटिति. ३ एफ् °न्म । र°. ४ सी डी °न्ते । लु°. ५ सी डी एफ् °जनवि°. ६ एफ् °तेत्र क°. ७ एफ् °ड्ढेनुस्वार इत्यनु°.

मृदू रक्तः शुची रम्योस्मिन्नाढ्यस्त्रीजनः सुखी ।
अहो रात्रिं च नो वेत्ति स्वारामाजनसंनिभः ॥ ९८ ॥

९८. अस्मिन्पुर आढ्यस्त्रीजनोहो रात्रिं च नो वेत्ति । कीदृक् सन् । मृदुः कोमलपाण्याद्यवयवः कोमलवचनो वा । रक्तः स्वपत्यावनुरागवान् । शुचिरुज्ज्वलाङ्गनेपथ्यः कौटिल्यादिपङ्करहितो वा । रम्यो रूपलावण्याद्यतिशयवान् । सुखी नीरोगत्वसर्वसंपत्तिसामग्र्यादिना सुखितः । अत एव स्वारामाजनसंनिभः स्वर्गस्त्रीसदृशः ॥ अतिसुखितत्वेनोदितमस्तमितं च न जानातीत्यर्थः । स्वारामाजनोप्युक्तविशेषणोपेतो दिनं रात्रिं च न जानाति ॥

स्वारामा । शुची रम्यः । मृदू रक्तः । इत्यत्र "रो रे लुग्°" [४१] इत्यादिना रस्य लुगकारेकारोकाराणां चानन्तराणां दीर्घः ॥ अन्वित्येव । अहो रात्रिम् । अत्र पूर्वमेव रोरुत्वे रेफाभावाल्लुग्दीर्घाभावः सिद्धः ॥

उमामाढिमसक्तानां प्रौढानां लीढसौरभः ।
मधुलिड्ढौकते लेढुं मोढात्राव्रढ आननम् ॥ ९९ ॥

९९. अत्र पुर उमामाढिप्रसक्तानामुमाया गौर्या माढिर्महनं पूजा तत्र प्रसक्तानामासक्तानां प्रौढानामिद्धवयोमन्युकामानां प्रगल्भस्त्रीणामाननं मुखं लेढुमाघ्रातुमाव्रढ उद्यतः सन् मधुलिट् पूजार्थोपनीतपुष्पसहचरो भृङ्गो ढौकत आगच्छति यतो मोढा मुखे पद्मभ्रमवान् । कुतः । यतो लीढसौरभ आघ्रातमुखसौगन्ध्यः पूजार्थानीतपुष्पाणि

---

१ सी डी °ढ्यः स्त्री°.

---

१ डी °पताव°. २ सी डी °क्तानां. ३ बी सी डी पफ् °पुष्फस°.
९

मुक्त्वा सौरभातिशयाढ्यत्वात्प्रौढानां मुखान्याघ्रातुं भृङ्गः पुनः पुनर्ढौकत इत्यर्थः ॥

माढि । लीढ । प्रौढानाम् । इत्यत्र "ढस्तड्ढे" [४२] इति ढस्य लुगकारेकारोकाराणां च दीर्घः ॥ तड्ढ इति किम् । मधुलिड् ढौकते । नायं लुप्यमानढकारनिमित्तो ढः ॥ अदिदुत इत्येव । आवृढः ॥ अन्वित्येव । लेढुम् । मोढा । अत्र गुणे कृते पश्चाड्ढलोपः ॥

न वोढास्य श्रियां स्वर्गो न सोढा वर्णने गुरुः ।
व्यूढोत्तम्भितकेतूत्थैरुत्स्तौतीत्यारवैर्मरुत् ॥ १०० ॥

१००. मरुद्वायुर्व्यूढा विशाला उत्तम्भिताः कोट्यधिपतिगृहादिषूर्ध्वीकृता ये केतवो ध्वजास्तेभ्य उत्थोत्थानं येषां तैरारवैः पटत्पटिति[१] शब्दैः कृत्वोत्स्तौतीव[२] प्रावल्येन वर्णयतीव । अर्थादिदं पुरम् । कथमित्याह । अस्य पुरस्य श्रियां प्रासादादिलक्ष्मीणां स्वर्गोपि न वोढा न धारयत्यत एवास्य वर्णने गुरुर्वाचस्पतिरपि न सोढा[३] न समर्थ[४] इति ॥

असंस्तब्धः सुसंस्थानः सूत्स्थानः सैप ते पतिः ।
मुग्धास्मिन्निति सख्युक्त्योत्तिष्ठन्त्यङ्गमुदस्तभत् ॥ १०१ ॥

१०१. किल काचिन्नायिका मुग्धा पत्यौ समीपमागतेपि मुग्धत्वादभ्युत्थानादिप्रतिपत्तिं[५] न कृतवतीति सख्या शिक्षार्थमुक्ता । यथा हे सखि स निरुपमगुणैः[६] सर्वत्र प्रसिद्ध एष प्रत्यक्षस्ते तव पतिः सुष्ठु त्वदीयचित्तावर्जनापेक्षित्वेन[७] शोभनमूर्ध्वं[८] स्थानमवस्थितिर्यस्य स सूत्स्थान

१ बी सी °स्युक्त्योत्ति°.

१ एफ् °त्पटेति. २ ए °तीतिव. ३ ए °ढा स°. ४ एफ् °र्थः ॥. ५ डी °त्ति नि°. ६ डी °णैः स स°. ७ सी °पेक्षत्वे°. ८ एफ् °नमुदूर्ध्व°. ९ सी डी °मूर्ध्वंस्था°

ऊर्ध्वोस्ति । कीदृक् सन् । सुष्ठु सर्वसामुद्रिकलक्षणोपेतत्वेन शोभन-संस्थानं शरीरावयवरचना यस्य स सुसंस्थानः सुरूप इत्यर्थः । तथा-संस्तब्धोनहंकारस्त्वयि सप्रश्रय इत्यर्थ. । तदेतदभ्युत्थानाय त्वमप्युत्तिष्ठेति व्यञ्जितमित्येवंप्रकारेणास्मिन्पुरे सख्युक्त्या वयस्याशिक्षयोत्तिष्ठन्ती पत्युरभ्युत्थानायोर्ध्वीभवन्ती मुग्धा नवोढा रुयङ्गमुदस्तभर्तृ स्तम्भरहितं चक्रे । विनीतं चकारेत्यर्थः । यद्वा । किल कां चन मुग्धां निकटमायान्तं पतिं दृष्ट्वा सद्यः स्मरोद्रेकात्स्तम्भेन सात्विकविकारेणाक्रान्तां किंकर्तव्यतामूढामभ्युत्थानादिप्रतिपत्तिमकुर्वाणां निकटस्था सख्येवमाह । यथा हे सखि स प्रसिद्ध एष प्रत्यक्षस्ते पतिरसंस्तब्धस्त्वद्दर्शनेपि गाम्भीर्यातिरेकात्स्तम्भरहितोङ्गेयस्तंम्भविकार इत्यर्थः । अत एव सुसंस्थानोविकृताकारः सन् सूत्स्थान ऊर्ध्वस्थितोस्ति । एतेनेदं व्यञ्जितं यदुत सखीजनमेलापकेपि त्वं मुग्धतयागम्भीरत्वात्पतिदर्शने स्तम्भान्वितात एव विकृतोपविष्टा चाभूरितीत्येवंप्रकारेणास्मिन्पुरे सख्युक्त्या मुग्धोत्तिष्ठन्ती पत्युरभ्युत्थानायोर्ध्वीभवन्ती सत्यङ्गमुदस्तभर्तृ स्तम्भरहितं चक्रे । एवं व्यङ्गयोक्त्या सख्या तत्कामचेष्टायां प्रकटितायां पत्युरभ्युत्थानायोत्तिष्ठन्ती स्तम्भसंरम्भमाच्छादयामासेत्यर्थः ॥

**सोढा । वोढा । इत्यत्र "सहिवहेः०" [ ४३ ] इत्यादिना ढस्य लुगवर्णस्य चौकारः ॥ अवर्णस्येति किम् । म्यूढ ॥**

**केतूत्थैः । उत्तम्भित । इत्यत्र "उदःस्था०" [ ४४ ] इत्यादिना सस्य लुक् ॥ उद इति किम् । सुसंस्थानः । असंस्तब्धः ॥ स्थास्तम्भ इति किम् । उत्स्तौति ॥**

---

१ सी °मुद्रक° २ सी °भनस°. ३ सी डी °राघव°. ४ एफ् °सुस्था°. ५ बी सी °ख्युक्तावयस्याः शि°. ६ सी डी °त् मंरम्भ°. ७ ए सी °क्रान्त कि°. ८ सी °खि प्र°. ९ डी °स्तम्भोवि°. १० सी डी °र· सू°. ११ एफ् °कृता-निकारायानासत्युप°. १२ सी °ख्युक्ततामु°. १३ सी डी °त् सरम्भ°. १४ डी °म्भमा°. १५ एफ् °म् । अ°. १६ सी डी °स्थानम् ।.

स इति किम् । उत्तिष्ठन्ती । उदस्तम्भत् ॥ प्रत्यासत्तेः स्थास्तम्भविशेषणस्यैवोदो ग्रहणादिह न भवति । उत्स्थानः । अत्र ह्युदः स्थानेत्यनेन नाम्ना सिद्धताव्यभावरूपेण संबन्धो न तु पूर्वापरीभूतमात्रवाचिना धातुनेति ॥ सूत्स्थानः ॥

मैप ते पतिः इत्यत्र "तदः सेः०" [४३] इत्यादिना सेर्लुक् ॥

यद्विक्रमः सकोप्यस्य यत्प्रस प्रभुतागुणः ।
इन्द्र एष मैष वास्माद्राज्येपोत्र स्तुतिक्रमः ॥ १०२ ॥

१०२. अत्र पुरे राज्ञि नृपविषय एप एवंविधः स्तुतिक्रमो वर्णनारीतिर्भवति । यथा यद्यस्माद्धेतोरस्य राज्ञो विक्रमः शौर्यं सको यक इन्द्रे । श्रूयते स इत्यर्थः । तस्मादेष राजा इन्द्रः शक्रः । तथा यद्यस्मादस्य राज्ञः प्रभुतागुण आज्ञैश्वर्यं प्रस य इन्द्रे श्रूयते । तस्मात्प्रकृष्ट इत्यर्थः । तस्मात्मैष वास्मादस्मादिन्द्रात् प्रकृष्टो वैष राजेति ॥

एषकः किं सकः स्वर्गस्तस्यानेषो हि डम्बरः ।
सोप्यसः किमभूत्सिद्धैरत्रैवं क्रियते भ्रमः ॥ १०३ ॥

१०३. अनेकाद्भुतश्रीनिधानत्वादत्र पुरविषये सिद्धैर्देवभेदैरेवमेवंविधो भ्रम. संशयः क्रियते यथा सकः सदा दृष्टपूर्वः स्वर्गो नाकः किमेपकः प्रत्यक्षेणोपलभ्यमानपुरलक्षणः । यद्वा । नायं स्वर्गः । कुत इत्याह । तस्यानेपो हि डम्बर इति हि स्फुटं तस्य स्वर्गस्य डम्बर[२] आडम्बरो लक्ष्मीविलासोनेपः प्रत्यक्षेणोपलभ्यमानेदंपुराडम्बर एष न[३] एपोनेपोन्योन्यादृशो हीन इत्यर्थः । तत्किं सोप्यसोभूत् । अपिरेवार्थे । स एव स्वर्ग एव । किं न सोसोन्यः स्वरूपं परित्यज्य रूपान्तरवानभूत् । अनेप[४] इत्यस्य च प्रत्यक्षोपलभ्यमानपत्तनाडम्बराद्धिलक्षणाडम्बरमात्रवाचित्वेन

१ प °ग्मादि°. २ एफ् °र ल°. ३ डी न न ए°. ४ एफ् °पोन्यो°. ५ सी °ष- पपपग्य. डी °ष प्प ए°. ६ सीडी °त्वे य°.

यद्यपि स्वर्गाडम्बरोधिकोपि वाच्यः स्यात् तथापि पत्तनाडम्बरात्स्वर्गाडम्बरो हीन एव ज्ञेयः । पत्तनस्यात्र वर्ण्यत्वात् ॥

एप प्रेष[1] । सकोपि । प्रैष वा ॥ प्रस प्रभु[2] । इत्यत्र "एतदश्च०" [४६] इत्यादिना मेर्लुक् ॥ अनञ्समास इति किम् । एपकः किम् । सकः स्वर्गः । अनेपो हि । अमः किम् ॥ व्यञ्जन इति किम् । एषोत्र[3][4] । सोपि ॥

सरूपयुक्ताः सद्माग्रे राजन्त्यत्र कुलस्त्रियः ।
व्यञ्जनाग्रे पञ्चमान्तस्थावद्वालोपशोभिताः ॥ १०४ ॥

१०४. अत्र पुरे वालैः केशैः । ववयोरैक्याद्बालैरर्भकैर्वा[5] । उपशोभिताः कुलस्त्रियः सद्माग्रे गृहद्वारदेशे सरूपयुक्ताः[6] सरूपैः समानरूपैर्भर्तृभिर्युताः सत्यो राजन्ति[7] शोभन्ते । भवति हि शोभातिशय स्त्रीणां समानभर्तृयुक्तानाम् । यथा वा विकल्पेन लोपो वालोपस्तेन शोभिता वालोपशोभिताः[8] पञ्चमान्तस्था ङञणनमयरलवा वर्णा व्यञ्जनाग्रे व्यञ्जनात्पराः सरूपयुक्ताः सरूपैः[9] समानैरूपैर्ङञणनमयरलवैर्युक्ताः[10] सत्यो[सन्तो ?] राजन्ति ॥

कुञ्चो ङ्ङौ कुङ्ङौ[11] कुङ्गौ[12] । अदितेरयमादित्यः स देवतास्य आदित्य स्थालीपाक आदित्य्य[13] इति वा । इत्यादिपु हि व्यञ्जनात्पराः पञ्चमान्तस्थाः सरूपेषु[14] परेपु "व्यञ्जनात्पञ्चमा०" [४७] इत्यादिना वा लुप्यन्ते । एतेन "व्यञ्जनात्पञ्चमा०" [४७] इत्यादिसूत्रोदाहरणानि सर्वाण्यपि सूचितानि ॥

---

१ एफ् °भुतेस°. २ सी डी हि सक कि° । एफ् हि । असोवाव्य°. ३ सी °पोसोपि ॥ स°. ४ ए °त्र ॥. ५ सी °शैर्बवयो° डी शैर्ववयो°. ६ वी °क्ताः सह स°. ७ ए वी एफ् °न्ति भ° ८ एफ् °भिता. पध°. ९ सी °रूपैर्ङ°. १० डी °नयुक्तैरू°. ११ डी कुङ्ङौ कुङ्ङौ. १२ सी कुङ्ङौ १३ डी °दित्या°. १४ एफ् °पु व्य°.

धर्मं शिण्ढि गुणाञ् शिण्ड्ढि पिण्ढ्यघं पिण्ड्ढि दुष्कलिम्[1] ।
प्रत्तं गृहाण नाप्रत्तं शिक्षात्रेति विपश्चिताम् ॥ १०५ ॥

१०५. शिण्ढि सदाचाराचरणेन विशिष्टीकुरु । पिण्ढि चूर्णय । प्रत्तं स्वामिना दत्तम् । नाप्रत्तम् । नञ् मार्थे । अदत्तं मा गृहाणेत्यर्थः । शिष्टं स्पष्टम ॥

शार्ङ्गिणः सक्थ्न उद्भूतां गुणदर्प्त्रीं सुरस्त्रियम् ।
अत्र नार्यः कलाबोद्ध्र्यो विजयन्ते निजैर्गुणैः ॥ १०६ ॥

१०६. अत्र पुरे कला गीतनृत्ताद्याश्चतुःषष्टिस्तासां बोद्ध्र्यो ज्ञात्र्यो नार्यः सुरस्त्रियं स्वर्वेश्यां निजैर्गुणै रूपादिभिर्विजयन्ते उत्कृष्टत्वात्पराभवन्ति । किंभूताम् । शार्ङ्गिणो विष्णोः सक्थ्न ऊरुप्रदेशादुद्भूतां संजाताम् । हरेः किलातितीव्रं तपस्तपस्यतः क्षोभाय स्वपदापहारक्षुभितेनेन्द्रेणाप्सरसः प्रेषितास्ताश्च क्षोभनाय नृत्तादिविलासान् कुर्वतीर्दृष्ट्वा तद्दर्पापनोदाय हरिणा निजसक्थि विदार्यागताप्सरोरूपजैत्री उर्वशीनाम्नी स्त्री निर्ममे इति लोकोक्तिः । अत एव गुणदर्प्त्रीं गुणै रूपलावण्यादिभिर्दर्पिष्ठामपि ॥

प्रत्त प्रत्तम् । शिण्ढि शिण्ड्ढि । पिण्ढि पिण्ड्ढि । इत्यत्र "धुटो धुटि स्वे वा" [४८] इति धुटो लुग्वा ॥ धुट इति किम् । शार्ङ्गिणः ॥ धुटीति किम् । सक्थ्नः ॥ स्व इति किम् । दर्प्त्रीम् ॥ व्यञ्जनादित्येव । बोद्ध्र्यः ॥

---

१ सी डी °घ्यलम्.

---

१ डी एफ् °र्धः । दोष १५°. २ एफ् °नृत्याद्या°. ३ एफ् °पष्टिकलास्ता°. ४ डी °वेश्या नि°. ५ एफ् नृत्यादि°. ६ एफ् °ष्ठामिति ॥. ७ एफ् °ङ्गिणो ॥ धु°.

अस्तब्धा दुग्धशुद्धात्मन्मा लज्जस्व प्रगल्भ्यताम् ।
पिण्ड्ढि मानं सपत्नीनां मुग्धास्मिन्निति पाठ्यते ॥ १०७ ॥

१०७. अस्मिन्पुरे मुग्धा नवोढा पाठ्यते सखीभिः शिक्ष्यते । कथमित्याह । हे दुग्धशुद्धात्मन्नकुटिलाशये भर्तुः समीपागमे मा लज्जस्व किं तु प्रगल्भ्यतां शृङ्गाररसारस्वकलाकौशलप्रकाशनेन प्रगल्भीभूयताम् । ततश्च प्रेयसोतिवल्लभीभवनेन सपत्नीनां मानं सौभाग्यविषयं[३] गर्वं पिण्ढि चूर्णयेति । यतोस्तब्धा विनीता । यो ह्यस्तब्धो विनीतः स्यात्स[४] मुग्धो मूर्खोप्युपाध्यायेन पाठ्यते ॥

लज्जस्व । दुग्ध । मुग्धा । पिण्ड्ढि । शुद्ध । अस्तब्धा । इत्यत्र "तृतीय०" [४९] इत्यादिना धुटः स्थानिप्रत्यासन्नस्तृतीयः[६] । तृतीयचतुर्थ इति किम् । पाठ्यते ॥ धुट इत्येव । प्रगल्भ्यताम् ॥

षट्कर्माणोत्र वाक्पूतास्तत्तद्विद्याककुप्श्रुताः ।
विश्वामित्रप्रभाच्छेदे मैत्रावरुणनिष्ठुराः ॥ १०८ ॥

१०८. षट् कर्माणि यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहलक्षणानि प्रतिदिनकृत्यानि येषां ते षट्कर्माणो द्विजा अत्र पुरे सन्ति । कीदृशा वाक्पूताः सत्यमितवाक्त्वेन वचनेन पवित्राः[७] । एतेन सदनुष्ठानवत्त्वमुपलक्षितम् । तथा तास्ता अनेकप्रकारत्वेन प्रसिद्धा या विद्याः शिक्षाकल्पादयश्चतुर्दश ताभिः ककुप्सु दिक्षु श्रुता विख्याताः । एतेन ज्ञानित्वोक्तिः । अत एव विश्वामित्रप्रभाच्छेदे विश्वस्योपद्रवकारित्वेनामित्राः शत्रवो विश्वामित्रा दैत्यराक्षसादयस्त एवान्यायकारित्वाद्विश्वामित्रो गाधिसूनुस्तस्य

---

१ **एफ्** °स्व प्र°. २ **सी** °य त°. ३ **सी डी** °य सर्व. ४ **सी डी** °त्स मू°. ५ **एफ्** °र्खोपि मू°. ६ **सी** स्थानप्र°. **डी** स्थानेप्र°. ७ **एफ्** °वित्रिता. ।.

यः प्रभाच्छेदः प्रतापोच्छेदस्तत्र मैत्रावरुणनिष्ठुरा उर्वश्यां मित्रावरुणाभ्यां जातत्वान्मित्रावरुणयोरयमपत्यत्वेन मैत्रावरुणो वशिष्ठस्तद्वन्निष्ठुराः प्रचण्डाः। वशिष्ठो ह्यर्बुदाश्रमस्थो विश्वामित्रेण राज्ञार्बुदागतेनापहृताया नन्दिनीधेनोः प्रत्याहरणाय महायागं कृत्वाग्निकुण्डे चतुर्हस्तं चतुर्वेदं कोपावेशात् हुमित्युच्चारयन्तं तेजस्विनं महाभटं निष्पादितवान् ।

स जित्वा कौशिकं जन्ये धेनुं प्रत्याहरन्मुनेः ।
प्रीत्युन्मुखात् प्रमाराख्यां प्राप प्राज्यैर्वरैः सह । इति ।

यथा वसिष्ठेन महाज्ञानक्रियाबलेन विश्वामित्रस्य माहात्म्यमपहृतमेवं विश्वोपद्रवकारिणां दैत्यादीनां दर्पमपहरन्त इत्यर्थः । यद्वा । षट् कर्माणि देवपूजागुरूपास्तिस्वाध्यायसंयमतपोदानरूपाणि प्रतिदिनकृत्यानि येषां ते षट्कर्माणः परमश्रावका अत्र सन्ति । किंभूता वाक्पूतास्तथा तत्तयानेकविधत्वेन प्रसिद्धया विद्यया श्रुतज्ञानेनैं मतिज्ञानेन वा ककुप्सु श्रुता अत एव विश्वे समस्ता येमित्रा रागद्वेषाद्यन्तरङ्गशत्रवस्त एव विश्वामित्रस्तत्प्रभाच्छेदे मैत्रावरुणनिष्ठुराः ॥

वाक्पूताः । प्रभाच्छेदे । षट्कर्माणः । तत्तत् । ककुप्श्रुताः । अमित्र । इत्यत्र "अघोषे०" [ ५० ] इत्यादिना प्रथमः ॥ अघोष इति किम् । विद्या ॥ अशिट इति किम् । निष्ठुराः ॥

अवाक् सुवाग् सतृड् निस्तृड् सलुप् निर्लुब् विमुत्समुद् ।
देहभागभरैः सध्यङ् भवत्यत्राद्भुतास्पदे ॥ १०९ ॥

१०९. अत्र पुरेवाक् जडजिह्वत्वेन कुत्सितवाग् मूकत्वेन वाग्रहितो

१ बी वसिष्ठ°. २. सी डी °त्रेणार्बु°. ३ सी डी एफ् वशिष्ठे°. ४ एफ् °न वा. ५ सी डी °मित्रास्त°. ६ एफ् °द्या: ॥.

वा देहभाक् प्राण्युपाध्यायमन्त्रौषधिदेवतादिप्रभावेण सुवाग्। संस्कृतवचनो भवति। तथा सतृट् धनधान्यादिषु सतृष्णो निस्तृट् स्वर्णरूप्यादिसिद्ध्या पूर्णमनोरथत्वाद्विगतस्पृहः। तथा सलुप् शरीरावयवच्छेदवान् निर्लुप् देवतादिप्रभावेण पूर्णाङ्गावयवः। तथा विमुत् रोगातङ्कादिना गतहर्षः समुद् महौषैद्यादिसंपत्त्या विगतरोगाद्युपद्रवत्वात्सहर्षो भवति। अत एवात्र देहभागमरैर्देवैः सध्यङ् समो भवति। देवा अपि इह सुवाचो निस्तृषो निर्लुपः समुदश्च स्युः। यतोऽद्भुतास्पदे महोपाध्यायसप्रत्ययमन्त्रौषधीदेवतादिजनितानामद्भुतानां स्थाने॥

अवाक् सुवाग्। सतृट् निस्तृट्। विमुत् समुद्। सलुप् निर्लुब्। अत्र "विरामे वा" [५१] इति वा प्रथमः॥ विराम इति किम्। देहभागमरैः॥ धुट इत्येव। सध्यङ्॥

कण्ठलग्नाः सदा स्त्रीणाम् खेलन्ति इह पिङ्गकाः।
विरामे न प्रवर्तन्ते कदाचित्संधयो यथा॥ ११०॥

११०. मिन्वन्ति विलासान् "भृङ्गशार्ङ्गादयः" इति गप्रत्ययान्तः पञ्चमोपान्त्यः पिङ्ग इति निपातः। यद्वा। सिटानादरेण गच्छति गायति वा "पृषोदरादयः" [३.२.१५५] इति षत्वे पिड्ग इति टवर्गीयतृतीयोपान्त्यः। अज्ञातेऽर्थे कपि पिङ्गका भुजङ्गाः स्त्रीणां कण्ठलग्नाः कण्ठाश्लिष्टाः सन्त इह पुरे सदा खेलन्ति क्रीडन्ति। यथा विरामे वर्णानां विरतौ सति संधयः संधिकार्याणि "न संधिः" [१.३.५२] इति प्रतिषेधात्कदाचिन्न प्रवर्तन्ते। तथा विरामे खेलनान्निवृत्तिविषये न प्रवर्तन्ते नोद्यच्छन्ति॥

खेलन्ति इह। स्त्रीणाम् खेलन्ति। इत्यत्र "न संधिः" [५२] इति संध्यभावः॥ विरामे न प्रवर्तन्ते कदाचित्संधयो यथेत्यनेन चोपमानेन ते आहुः। तद् लुनाति। भवान् लुनाति इत्यादीनि शेषोदाहरणानि ज्ञापितानि॥

---

१ एफ् °ताप्र° २ सी तथा°. ३ बी °ड् सुवर्ण°. ४ एफ् °हाविधा°. ५ सी डी °महौष°. ६ °पधदे°. ७ एफ् °ज्ञातार्थे. ८ सी °ति नसधिमा°. ९ सी डी °त्यादिशे°.

यदि स्त्रीणां श्रुतास्मिन् गीर्यदि दृष्टा मुखेन्दवः ।
कलः क्काणः खरः पिक्याः फल्गुश्चन्द्रोपि तर्क्यते ॥ १११ ॥

१११. अस्मिन्पुरे स्त्रीणां यदि गीर्वाणी श्रुता तदा पिक्याः कोकिलायाः कलो मधुरोपि क्काणः शब्दः खरः कठोरस्तर्क्यते । अर्थाल्लोकैः । तथा स्त्रीणां मुखेन्दवो यदि दृष्टास्तदास्तां तावदन्यः कमलादिर्यावच्चन्द्रोपि सकलजगदाह्लादनहेतुकत्वेन सर्वत्र प्रसिद्ध इन्दुरपि फल्गुर्निरर्थकस्तर्क्यते । स्त्रीमुखेन्दुभिरेव सर्वलोकाह्लादनलक्षणस्य चन्द्रकार्यस्य कृतत्वाच्चन्द्रेण न किंचित्कार्यमिति लोकैर्विमृश्यत इत्यर्थः ॥

वसन्ताद्यर्तुभिः सर्वैर्युगपत्पर्युपासिते ।
प्राच्छन्ति क्रीडयोद्याने नार्पत्या इह नार्कुलैः ॥ ११२ ॥

११२. नृपतेरपत्यानि "अनि दम्यणि°" [६.१.१५] इत्यादिना ञ्ये नार्पत्या राजकुमारा नार्कुलैर्नृकुले उपचारान्नृगुणोपेतक्षत्रियवंशे भवैः पौरुषोपेतक्षत्रियकुमारैः सह क्रीडया गेन्दुकक्रीडादिकया हेतुनोद्याने प्राच्छन्ति गच्छन्ति । यत. कीदृशे सर्वैः षड्भिर्वसन्ताद्यर्तुभिर्युगपत्समकालं पर्युपासिते सेविते । सर्वक्रीडार्हरामणीयक इत्यर्थः ॥

विरामे । मुखेन्दवः । अघोषे । कलः क्काणः खर. पिक्याः फल्गुः । ऋतुभिः सर्वैः इत्यत्र "र. पदान्ते°" [५.३] इत्यादिना रस्य विसर्गः ॥ फल्गुश्चन्द्र इत्यादिषु तु शादय एवापवादत्वात्स्युः ॥ पदान्त इति किम् । तर्क्यते । सर्वैः ॥ कथं नार्पत्या. नार्कुलैः वसन्ताद्यर्तुभिः प्राच्छन्तीत्यादि । असिद्धं बहिरङ्गमन्तरङ्गे [न्या० सू० २०] इति वृद्धेरारादेशाश्रयस्य रेफस्यासिद्धत्वाद्विसर्गो न

१ एफ् 'कुले'. २ एफ् 'स्य कर्तृत्वा°. ३ एफ् अणि द°. ४ °न्यण् इ°ि. ५ सी डी 'मुले' ६० एफ् °कुलैरप°. ६ डी °वशभ°. ७ डी 'दृशे स°. ८ एफ् °नावि°. ९ एफ् ऋ ।°. १० ए सी डी एफ् ष्मरा°.

स्यात् । एवं क॒ॅपावपि ॥ तयोरिति किम् । सर्वैर्युगपत् । अन्वित्यधिकाराद् गीः इत्यादिषु दीर्घत्वे कृते पश्चाद्विसर्गः । अन्यथा हि पूर्वं विसर्गे कृत इरुरोरभोवाद्दीर्घो न स्यात् ॥

प्रभुकार्येषु धूःख्यातैः क्षत्रियैः प्सातसाध्वसैः ।
भात्यत्र श्रीमतां द्वारं खड्गिभिः त्सरुपाणिभिः ॥ ११३ ॥

११३. अत्र पुरे श्रीमतां द्वारं सौधबहिर्भागः क्षत्रियैः कृत्वा भाति । कीदृशैः । शक्तिस्वामिभक्त्यतिशयेन प्रभुकार्येषु स्वामिकृत्येषु धूःख्यातैः धुर्यादौ प्रसिद्धैः । प्सातसाध्वसैर्ग्रस्तभयैः । शूरत्वेन निर्भयैरित्यर्थः । खड्गिभिः खड्गप्रहरणान्वितैः खड्गे पार्श्वस्थेपि खड्गिन उच्यन्ते तन्निराकरणायाह । त्सरुः खड्गमुष्टिः पाणौ येषां तैः खड्गव्यग्रकरैः । धनिनां हि सौधद्वारे रक्षार्थं खड्गव्यग्रकरामहाभटास्तिष्ठन्ति ॥

धूःख्यातैः । इत्यत्र "ख्यागि" [५४] इति रस्य विसर्ग एव ॥

खड्गिभिः त्सरु । क्षत्रियैः प्सात । ख्यातैः क्षत्रियैः । इत्यत्र "शिट्यघोषात्" [५५] इति रस्य विसर्ग एव ॥

मदाम्भश्श्योतिनोत्रेभा लावण्याम्भश्श्च्युतः स्त्रियः ।
दानाम्भःश्च्युत्कराश्चाढ्या धनं निष्ठ्यूतवद्विदुः ॥ ११४ ॥

११४. अत्र पुर इभा गजा मदाम्भश्श्योतिनो मदजलस्राविणो मदोन्मत्ताः सन्ति । तथा स्त्रियो लावण्याम्भश्श्च्युतो लावण्यपात्राणिसन्ति । तथाढ्या धनिनो दानं हि जलदानपूर्वं दीयत इति स्मृतेर्दानाम्भःश्च्युद्दानस्य जलं क्षरन् करो हस्तो येषां ते तथा सन्तो धनमुदारत्वाभि-

१ एफ् °ण्याम्भःश्च्युत.°. २ एफ् °नाम्भश्श्च्युत्क°.

१ एफ् °त्वे प°. २ बी °भावत्वाद्दी°. ३ एफ् अस्मिन्पु°. ४ All mss. read जलश्राविणः. ५ एफ् °ण्याम्भः श्च्युतो. ६ एफ् °नाम्भश्च्यु°. ७ सी डी °था रसतो ध°.

ष्ठ्यूतवच्छ्लेष्मवद्विदुर्जानन्ति । लीलयैवार्थिभ्यो वाञ्छितमर्थं ददतीत्यर्थः । एतेनार्थकामधर्मसंपद उक्ताः ॥

निष्ठ्यूतांशुषु दृष्ट्वात्र रत्नवेदीषु वाणिनीः ।
निःष्ठ्यूताश्रूस्खलद्वाचस्स्खलदृष्टीर्न कः स्खलेत् ॥ ११५ ॥

११५. अत्र पुरे वाणिनीश्छेका मत्ताश्च विलासिनीर्दृष्ट्वा कः पुमान् न स्खलेद्धैर्यान्न पतेत् । यतो निष्ठ्यूता उन्मुक्ता अंशवः किरणा यकाभिस्तासु रत्नवेदीषु गृहद्वारबहिर्देशवर्तिमणिमयवितर्दिषु स्थितास्तथा निःष्ठ्यूतानि मुक्तान्यश्रूणि मदवशान्नेत्रजलानि यकाभिस्ताः । तथा स्खलन्ती मदादर्धोक्तेपि विरमन्ती वाक् यासां ताः । तथा स्खलन्ती मदेन साश्रुत्वाद् घूर्णमानत्वाच्च पुरस्थाखिलपदार्थग्रहणेपि संकुचन्ती दृष्टिर्यासां ताश्च । मदे हि व्यभिचारिभावेश्रुक्षरणवाक्स्खलनलक्षणा अनुभावाः स्युस्तत्कार्यत्वादेषाम् । यदुक्तम् ।

हर्षोत्कर्षो मदः पानात्स्खलदङ्गवचोगतिः । इत्यादि ॥

मदाम्भश्श्योतिनः । निष्ठ्यूतवत् । निःष्ठ्यूताश्रूस्खलत् । इत्यत्र "व्यत्यये लुग्वा" [५६] इति रस्य लुग्वा ॥ पक्षे । अम्भश्श्च्युतः । दानाम्भःश्च्युत् । निष्ठ्यूते । निःष्ठ्यूत । वाचस्स्खलत् । कःस्खलेत् ॥

गीर्षु चेतःसु च स्वच्छा महत्सु वरिवस्यकाः ।
धूर्पूचितासु च दृढा राजद्वार्षु नरा इह ॥ ११६ ॥

११६. इह पुरे राजद्वार्षु नृपप्रासादद्वारेषु विज्ञापकानां विज्ञप्तिवि-

१ डी °धूस्खल°. २ सी डी °तस्तु

१ एफ् °छेका°. २ बी सी डी °निर्मुक्ता°. ३ एफ् °था म° ४ सी डी °पुर. स्था°. ५ बी सी डी °दार्थग्र° ६ ए सी डी एफ् निष्ठ्यू°. ७ ए °त । श्च°. ८ ए °चस्खल°.

धये नराः प्रतीहाराः सन्ति । किंविधा. । उचितासु योग्यासु धूर्पु योग्यविज्ञापनादिपु राजकार्यप्राग्भारेपु दृढा धारणसमर्था एवंविधा अप्यविनीतो विज्ञापकलोकवैमुख्यायैव स्युस्तन्निराकरणायाह । महत्सु पूजार्हेपु वरिवस्यका उचितासनदानादिना सन्मानका विनीता इत्यर्थः । कायेन विनीता अपि वचसा मनसा[3] चाविनीता विज्ञापकानां वैमुख्यायैव स्युस्तन्निराकरणायाह । गीर्पु चेर्त.सु च स्वच्छा[5] अकुटिलवचसोकुटिलाशयाश्चेत्यर्थः ॥

गीर्पु । धूर्पु । द्वार्पु । इत्यत्र "अरो. सुपि र." [५७] इति रेफ एव । अरोरिति किम् । चेर्त.सु ॥ र इत्येव । महत्सु ॥

गीर्पतिर्गीᳶपतिः सत्यमहर्पतिरहᳶपतिः ।
वाक्तेजोभ्राजिलोकेस्मिन् कौ हि गीःपत्यहःपती ॥ ११७॥

११७. अत्र प्रथमौ गीर्पत्यहर्पतिशब्दावनुवाद्यौ द्वितीयौ तु विधेयौ । तथाहि गीर्पतिर्वाचस्पतिः सत्यमवितथं गीᳶपतिर्गिरां वाचां पतिः स्वामीति योन्वर्थस्तेनान्वितोस्तीत्यर्थः । तथाहर्पतिर्दिनकरः सत्यमहᳶपतिस्तेजोभिरह्नां कारकत्वाद्यथार्थोह्नां पतिश्चास्ति । परमस्मिन्पुरे जने वाक्तेजोभ्राजि वाणीप्रतापाभ्यां सर्वोत्कृष्टत्वाच्छोभमाने सति गीःपत्यहःपती हि स्फुटं कौ । न कावपीत्यर्थः । इति काका व्याख्या ॥

त्वं भुवो धूर्पतिः कीर्तेर्धूᳶपतिर्धूःपतिः श्रियः ।
प्रचेतो राजन् प्रचेता राजन्नत्रेति गीर्नृणाम् ॥ ११८ ॥

११८. अत्र पुरे गीरस्त्यर्थात् राज्ञि विषये । कथमित्याह । हे

१ बी °ता शा°. २ ए एफ् °लोके वै°. ३ ए सी °सा वावि°. एफ् °सावि°. ४ डी °तस्सु च. ५ सी °च्छा कुटिलवचसोकु°. एफ् °च्छा अकुटिलाशया इत्य°. ६ सी डी °तन्सु ॥. ७ एफ् गी पतिवाच°.

प्रचेत औदार्यधार्मिकत्वादिगुणैः प्रकृष्टमनस्कात एव प्रचेता वरुणतुल्य तथा हे राजन् सौम्यत्वेन चन्द्रतुल्य हे राजन्नृप त्वं भुवः पृथ्व्या धूर्पतिर्धूर्यानमुखं धूरिव धूः प्रथमः स चासौ पतिश्च धूर्पतिः । मुख्यस्वामीत्यर्थः । यद्वा धूर्भारस्तस्याः पतिर्धूर्पतिः । नित्यसापेक्षत्वात्समासः । भुवः कार्यप्राग्भारप्रभुरित्यर्थः । अत एव श्रियो राज्यलक्ष्म्या धूःपतिः । अत एव च कीर्तेर्धूष्पतिर्वर्तस इति ॥

अहर्पतिः । गीर्पतिः । धूर्पतिः । इत्येतेकृतविसर्गाः प्रचेता राजन्नित्ययं च कृतोत्वाभावो "वाहर्पत्यादयः" [५८] इति वा निपात्याः । पक्षे ॥ अहःपती । अहष्पतिः । गीः पतिः । गीष्पतिः । धूःपतिः । धूष्पतिः । प्रचेतोराजन् ॥

सम्राट्स्वाराट्समस्तावच्छ्रीदवच्छ्रीजुषो जनाः ।
क्ष्णोदक्षमगिरश्चास्मिन् सन्तो वाक्पतिसंनिभाः ॥ ११९ ॥

११९. तावच्छब्दः प्रक्रमार्थः । अस्मिन्पुरे सम्राट् राजाधिराजस्तावत्स्वाराट्समः परमैश्वर्यादिनेन्द्रतुल्योस्ति । तथा जनाः श्रीदवद्धनद इव श्रीजुषस्तथा सन्तश्च विद्वांसश्च वाक्पतिसंनिभा वाचस्पतितुल्याः सन्ति । यतः क्ष्णोदक्षमाः संगतार्थत्वान्महार्थत्वाच्च विचारसहा गिरो येषां ते । एतेनास्य पुरस्य स्वर्गता व्यञ्जिता ॥

उध्वसर्पत्स्वच्छलावण्याः स्त्रियः प्रेक्ष्यात्र मन्यते ।
अप्सु जाता अप्सरसो जम्भारिर्जलमानुषीः ॥ १२० ॥

१२०. अत्र पुर उध्वसर्पदुल्लसत्स्वच्छं निर्मलं लावण्यं सौन्दर्यं यासां

१ सी अप्सु जा°.

१ ए 'चेतम् औ°. सी डी °चेत। औ°. २ सी डी °त्वे च°. ३ बी एफ् राजन्°. ४ एफ् °तिः । धू°.

ताः स्त्रियो नारीः प्रेक्ष्य जम्भारिरिन्द्रोऽप्सरसो देवीर्जलमानुषीर्जलमोनवीरिव मन्यते । यतः कीदृशीरप्सरसोऽप्सुजलेषु जाताः समुत्पन्नाः । अप्सरसो हि समुद्रे मथ्यमाने जलाज्जाता इति प्रसिद्धिः । जलमानुष्यश्चाप्स्वेव जायन्तेतो जलमानुषीणामिवात्रत्योच्छलल्लावण्यनायिकापेक्षयात्यन्तं निर्लावण्यत्वादप्सरसां जलमानुषीत्वेन मननमित्यर्थः ॥

त्वपोदक्षम । तावच्छ्रीस्त्वच्छ्री । सम्राट्स्वाराट्समः । उधसर्पेत्स्वच्छ । अप्सु अप्सरस. । इत्यत्र "शिट्याद्यस्य" [५९] इत्यादिना वा द्वितीयः ॥ आद्यस्येति किम् । अस्मिन्सन्त । शिटीति किम् । वाक्पति ॥

उच्छलच्चामरस्मेराः स्फुरच्छत्रोज्ज्वलाः सदा ।
शश्वज्झपितदौर्गत्या अस्मिञ् शुशुभिरे श्रियः ॥ १२१ ॥

१२१. अस्मिन्पुरे श्रियो राज्यादिलक्ष्म्य. शुशुभिरे । यतः शश्वत्सदा झपितं हिंसितं दौर्गत्यं दारिद्र्यं यकाभिस्ताः । एतेन स्वरिपूच्छेद उक्तः। अत एव सदोच्छलन्ति राजादिवीजनायोत्क्षिप्यमाणतयोर्ध्वं गच्छन्ति यानि चामराणि तैः स्मेरा हासान्विता इव विकस्वरा इत्यर्थः । तथा सदा स्फुरन्ति विकस्वराणि यानि च्छत्राणि श्वेतातपत्राणि तैरुज्ज्वलाः । ये हि शश्वज्झपितदौर्गत्याः सदामहर्द्धिकाः स्युस्ते सदोच्छलच्चामरस्मेराः स्फुरच्छत्रोज्ज्वलाश्च सन्तः शोभन्ते ॥

प्रशाश्वरञ्जनं प्रीणञ्झषञ्जकुटिलाशयान् ।
विद्वांछात्रेष्वत्र तत्तञ्जुङ्कुवे गीरिव स्वयम् ॥ १२२ ॥

१ ए शस्वज्झ°. २ ए विद्वाच्छात्रे सी विद्यारछात्रे. डी विद्वाँश्छात्रे.

१ वी सी डी एफ् °मानवी°. २ ए °मानुषीरि°. ३ एफ् °स्य द्वितीयो वा इति प्रथमस्य द्वितीयोवा ॥. ४ ए वी °ति ॥ ५ ए शस्वत्सदाम्ज्झपित इसि°. ६ सी डी °रिद्र य°. ७ ए °दिवीज°. ८ एफ् °था स्फु°. ९ ए ये श°.

१२२. अत्र पुरे विद्वान्। जातावेकवचनम्। पण्डितजातिश्छात्रेषु विषये तत्तद्यद्यच्छात्रा अध्येतुमिच्छन्ति तत्तद्व्याकरणादि जुहुवे व्याख्यदतो ज्ञायते गीरिव स्वयं मूर्ता सरस्वतीव। कीदृक् सन्। प्रशान् विद्यावलेपादिरहितस्तथा चरन्नतिभूरित्वेन दूरस्थानां छात्राणामध्ययनात् प्रमाद्यतामुत्साहनाय तन्मध्ये विचरंस्तथा व्कुटिलाशयान्। वकारवत्कुटिलचित्तान् परस्परमात्सर्यादिना कलहादि कुर्वतश्छात्रानित्यर्थः। झषन् प्रलम्बकम्बया ताडयन्नत एव भव्यरीत्या पाठनेन जनं प्रीणन्। गीरपि प्रशान्ता सर्वत्र स्वेच्छया विहरति व्कुटिलाशयान् कुवादिनो झषति निराकरोति जनं प्रीणयति तत्तदनेकविधं शास्त्रजातं व्याख्याति च। यद्वात्र पुरे चरन् कणवृत्त्यै भ्राम्यन् सन् विद्वान्वेदोपाध्यायश्छात्रेषु वैदुषु तत्तद्यद्यदध्येतुमिच्छन्ति तत्तद्वेदशास्त्रं जुहुवे वेदान्पाठितवानित्यर्थः। वेदपाठो हि द्विजैर्भिक्षाभ्रमणं कुर्वद्भिर्विधीयते। शेषं पूर्ववत्॥

स यज्ञपुरुषः स्पर्द्धामस्मिन् राज्ञा कथं वहेत्।
द्विपद्याच्ञैकवज्रेण पिष्टं यस्याखिलं यशः॥ १२३॥

१२३. दानैकशौण्डत्वेनात्रत्यराजस्य याच्ञया सर्वथाखण्डितयशस्कत्वादस्मिन् राज्ञात्रत्यनृपेण सह स्पर्धां साम्यं स यज्ञपुरुषो विष्णुः कथं वहेत्। यस्याखिलं यशो द्विपतः शत्रोर्या याच्ञा प्रार्थना सैव यशःशरीरस्य चूर्णकत्वेनैकमद्वितीयं निरुपमं वज्रमशनिस्तेन पिष्टं चूर्णितम्। मित्रादपि याच्ञा लाघवहेतोर्यशः पिनष्टि किं पुनः शत्रोः। विष्णुना तु द्विपन् बलिर्वामनीभूय त्रिपदीं याचित इति॥

---

१ सी डी °ति ङ°. २ एफ् जुहुवे. ३ एफ् वहन्वा°. ४ ए °न चू°. ५ ए °या सर्व°.

मूर्धन्यत्वं शश्वट्टवट्ठवड्डवढ्ढवण्णवत् ।
सूनृतस्फुटवक्तॄणामीट्टे को नेह कोविदः ॥ १२४ ॥

१२४. इह पुरे सूनृतस्फुटवक्तॄणां सत्यप्रकटवादिनां मूर्धन्यत्वं मूर्धस्थायित्वमन्यस्थानस्थाखिलसूनृतस्फुटवक्तृभ्यः प्रधानतामित्यर्थः । कः कोविदो विद्वान्नेट्टे । किं तु सर्वोपि वर्णयतीत्यर्थः । यथा टस्य ठस्य डस्य ढस्य णस्य च मूर्धस्थानभवत्वेन मूर्धन्यत्वं मूर्धस्थानभवत्वं कोविदो वैयाकरण ऋवर्णटवर्गरषा मूर्धन्या इति शिक्षापदेन वर्णयति । शब्दश्लेषेणोपमा ॥

तन्वण्डामरतामग्रे कुर्वण्णकुटिलालकाः ।
स्मरोस्मिण्ढौकितधनुर्विश्वमट्टितुमङ्गति ॥ १२५ ॥

१२५. स्मरो विश्वमट्टितुं हिण्डितुं विजययात्रां कर्तुमित्यर्थः । अङ्गत्युद्यच्छति । कीदृक्सन् । अस्मिन्पुरे वर्तमाना णाकुटिलालका णकारवत्कुटिलकेशीः स्त्रीर्जगज्जयायाग्रे कुर्वन् । एतेन सैन्यसंपदुक्ता । तथा ढौकितं जगज्जयाय प्रगुणीकृतं हस्ते गृहीतं धनुर्येन सः । धनुशब्दोत्रोदन्तः । सान्ते तु धन्वनादेशः स्यात् । एतेनास्त्रसंपदुक्ता । अत एव डामरतां प्रतापप्रचण्डिमानं तन्वन् विस्तारयन् । योपि सेनाशस्त्रप्रतापसंपदन्वितो विजिगीषुर्नृपः स्यात्स विश्वं जेतुमङ्गतीति ॥

शकारेण योगे । उच्शलत् । अस्मिञ्शुशुभिरे ॥ चवर्गेण । उच्शलच्चामर । स्फुरच्छत्र । उज्ज्वल । शाश्वज्झपित । तञ्जुडुचे । प्रशाञ्चरञ्जनम् । प्रीणञ्झपञ्च ॥ पूर्वेण चवर्गेण । याच्ञा । यज्ञ । राज्ञा ॥ पूर्वेण शकारेण परेण च षकारेण प्रतिषेधो वक्ष्यते । पूर्वेण तु षकारेण । पिष्टम् ॥ टवर्गेण । शश्वट्टवट्ठवड्डवढ्ढवण्णवत् ॥ अड्ड । अड्डति ॥ अट्ट । अट्टितुम् । तन्वण्डामरताम् । अस्मिण्ढौकित । कुर्वण्ण ॥ पूर्वेण टवर्गेण । ईट्टे । इत्यत्र "तवर्गस्य°" [६०] इत्यादिना चवर्गटवर्गादेशौ ॥

---

१ एफ़् °स मू°. २ सी डी सन् । पुरे ।. ३ ए °षु नृपः. ४ एफ़् °चटवर्गा°.

कस्मात्पापट्षि दोष्ष्वात्ता प्रश्ने बम्भणिष किं न हि ।
लज्जां वृश्चेति मुग्धायां शिक्षेह प्रियसंनिधौ ॥ १२६ ॥

१२६. इह पुरे प्रियसंनिधौ सति मुग्धायां विषये शिक्षा । अर्थात्सखीनाम । कथमित्याह । हे सखि दोष्षु बाहुष्वात्ता भर्त्रा गृहीता सती कस्मात्पापट्षि कुटिलं गच्छसि पत्युः सकाशात्किमिति वक्रीभूय यासीत्यर्थः । तथा प्रश्ने पत्युः पृच्छायां किं किमिति न हि बम्भणिष नैव भृशं भाषसे । तथा लज्जां वृश्च छिन्द्धीति । मुग्धायामित्यत्र जातावेकवचनम् । अन्यथा दोष्ष्वित्यत्र बहुवचनं नोपपद्येत ॥

चवर्गेण । वृश्च लज्जाम् ॥ पकारेण । दोष्षु ॥ टवर्गेण । पापट्षि ॥ बम्भणिष ।
इत्यत्र "सस्य शषौ" [६१] इति शषौ ॥
प्रश्ने । अत्र "न शात्" [६२] इति णो न ॥

नगेट्तुङ्गत्वलक्ष्मीजुट्थूत्कृतद्विड्द्युलिड्ध्वजैः ।
नागेड्धवलैः शीर्षैर्विभ्राट्सालोत्र सर्वतः ॥ १२७ ॥

१२७. अत्र पुरे सालः कोट्टः सर्वतः सर्वासु दिक्ष्वस्ति । कीदृग् । नगेड् गिरीशो मेरुस्तस्य या तुङ्गत्वलक्ष्मीरौन्नत्यश्रीस्तां जुषते सेवते यः सः । तथा द्युलिहोत्युच्चप्राकारशिरःस्थत्वेनाकाशस्पृशो ये ध्वजास्तैः कृत्वा थूत्कृतद्विट् थूत्कृतमत्र प्रस्तावादश्वफेनस्तस्य द्विट् जेता । अतिश्वेतकेतुरित्यर्थः । यद्वा थूत्कृतं थूत्करणं द्वेष्टि

स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ।
आक्रोशत्यवजानाति कदर्थयति निन्दति ।

१ सी डी असमा°. २ एफ् °ज्जा प्रश्ने°. ३ ए °गेड्ग°. ४ एफ् जुड्थू°.

१ सी डी °ती अस्मा°. २ सी डी °त्किमपि व°. ३ सी डी एफ् नैव भृ°. ४ एफ् °वंत्र स°. ५ बी °त्स्य श्री°. ६ सी डी °तम°. ७ एफ् °तुभिरि°.

तमन्वेत्यनुबध्नाति तच्छीलति[1] निषेधति ।
तस्य[2] वानुकरोतीति शब्दाः सादृश्यसूचिनः ॥

इति वचनादनुकरोति ॥ थूत्कृतद्विट्द्युलिडित्यत्र द्युशब्दोपादानाद्दिवं प्रति स्वरामणीयकाहंयुत्वेनावज्ञया द्युलिड्ध्वजैः कृत्वा थूत्कुर्वन्निवेत्यर्थः ॥ तथा यथा नागेट् शेषाहिर्धवलैः[3] शीर्षैः शिरःसहस्रेण विभ्राजते । एवं धवलैः शीर्षाकारत्वेन शीर्षैः कपिशीर्षैः कृत्वा विभ्राट् शोभमानः ॥

सषण्णवतिपाषण्डं हृष्टाश्रमचतुष्टयम् ।
स्थितं षण्णगरी[1]: षण्णां जित्वैतच्चक्रवर्तिनाम् ॥ १२८ ॥

१२८. एतत्पुरं षण्णां चक्रवर्तिनां धुन्धुमारादीनां षट् षट्संख्या नगरी राजधानीर्जित्वा श्रीविशेषेण परिभूय स्थितम् । यतः कीदृग् । षड्दर्शनव्यतिरिक्ताः कुत्सितव्रताचाराः सर्वलिङ्गिनः पाषण्डास्ते च लोकोक्त्या षण्णवतिसंख्यया रूढाः सर्वधर्मसाधनसामग्रीसद्भावेन समग्रस्वस्वधर्मनिर्वाहात्सह षण्णवत्या पाषण्डैर्वर्तते[4] तत् । तथा चत्वारोवयवा यस्य चतुःसमुदायस्य तच्चतुष्टयं हृष्टं[5] प्रमुदितमाश्रमाणां ब्रह्मचारि १ गृहि २ वानप्रस्थ ३ भिक्षू ४ णां चतुष्टयं यत्र तत् । एतेनास्यात्यन्तं महर्द्धिकतोक्ता[6] ॥

द्विषन्षड्ग्राम कामादीँल्लीलया विघ्नशान्तये ।
तीर्थकृत्षोडशः शान्तिः स्मर्यते तद्वयैरिह ॥[2] १२९ ॥

१२९. इह पुरे षोडशस्तीर्थकृत् शान्तिः शान्तिनाथो विघ्नशान्तयेन्तरङ्गाणां रागादीनां बाह्यानां मार्यादीनां चोपद्रवाणामुपशमार्थं[7] तस्मिन्[8]

१ एफ् °रोप°. २ एफ् ॥ २९ इति तृतीयपादः ॥ इ°.

१ ए बी सी एफ् °च्छील तनि. २ बी °स्य चानु°. ३ सी डी °लैः शि°. ४ एफ् °ते इति त°. ५ डी °ष्ट मु°. ६ बी °र्द्धितो°. ७ एफ् °वाणां चोप°. ८ ए °यस्तस्मि°.

शान्तौ लयश्चित्तैकाग्र्यं येषां तैस्तल्लयैर्नरैः स्मर्यते प्रणिधीयते । यतः कीदृक् । पड् नाम । नामेति प्रसिद्धिद्योतको[1] निपातः । षडिति संख्यया प्रसिद्धान् कामादीन् काम १ क्रोध २ मान ३ मद ४ लोभ ५ हर्षा ६ नान्तररिपूँल्लीलया द्विषन्पराभवन् ॥

नगेट्तुङ्गत्वलक्ष्मीजुट्थूत्कृतद्विड्युलिड्ध्वजैः । नागेड्नु । विश्राड्सालः । इत्यत्र "पदान्तात्° " [ ६३ ] इत्यादिना तवर्गसयोष्टवर्गयौ न ॥ टवर्गादिति किम् । चतुष्टयम् ॥ अनाम्नगरीनवतेरिति[2] किम् । षण्णाम् । षण्णगरीः[3] । षण्णवति ॥ नामित्यामादेशस्य ग्रहणादिह प्रतिषेधो भवत्येव । षड्नाम ॥

तीर्थकृत्षोडशः । द्विषन्षड् । इत्यत्र "षि तवर्गस्य" [ ६४ ] इति तवर्गस्य टवर्गो न स्यात् ॥

तल्लयैः । कामादील्लीँलया[4] । इत्यत्र "लि लौ" [६५] इति[5] स्थान्यासन्नावनुनासिकाननुनासिकौ लौ ॥

तृतीयः पादः ॥

धर्माय चार्थकामाभ्यां चात्र लोका अभीप्सवः ।
मुक्तये[1] चातिजरसैर्योगिभिः प्रणिधीयते ॥ १३० ॥

१३०. अत्रत्यलोका धर्ममर्थं कामं च स्वस्वकाले साधयन्तीति पूर्वार्धस्य भावार्थः । तथात्र योगो यमादिरष्टविधोस्त्येषां तैर्योगिभिरति[6]जरसैः सततयोगाभ्यासेन जरामतिक्रान्तैः सद्भिर्मुक्तये मोक्षाय प्रणिधीयते परमात्मनो ध्यानं क्रियते ॥

---

१ ए °ये चाति°.

---

१ बी सी डी °सिद्धयो°. एफ् °सिद्धोयो°. २ डी °वतिरि. एफ् °वतीति. ३ ए बी सी °री।. ४ एफ् °मांछी°. ५ एफ् °तिस्थित्यास°. ६ एफ् °भिः समाधिस्थैर°. ७ सी डी °तत यो°.

अमीभिरेभिरिमकैरमुकैश्च महात्मभिः ।
भात्यदोतिजरैः सिद्धैरत्रेति जगदुर्जनाः ॥ १३१ ॥[1]

१३१. अत्र पुरे जनाः सिद्धाद्भुतगुणरञ्जितत्वेनान्यजनानां पुरो जगदुः । कथमित्याह । अमीभिः प्रत्यक्षविप्रकृष्टैरेभिः प्रत्यक्षसमीपतरैरिमकैरल्पैरज्ञातैर्वा प्रत्यक्षसमीपतरैरमुकैश्चाल्पैरज्ञातैर्वा प्रत्यक्षविप्रकृष्टैश्च महात्मभिरतिजरैर्योगप्रभावेण जरामतिक्रान्तैः सिद्धैर्विद्यासिद्धैः[2] कृत्वादः पुरं भाति पवित्रीभवतीत्यर्थ[3] इति ॥

लोकाः । अर्थकामाभ्याम् । धर्माय । इत्यत्र "अत आः०"[१] इत्यादिना-आकारः ॥ अत इति किम् । अभीप्सवः ॥ स्यादाविति किम् । मुक्तये[4] ॥

सिद्धैः । अतिजरैः । इत्यत्र "भिस ऐस्"[6] [ २ ] इति भिस ऐस् ॥ एसादेशेनैव सिद्ध ऐस्करणं संनिपातन्यायस्यानित्यत्वज्ञापनार्थम् । तेन अतिजरसैः । इत्यपि सिद्धम् । अत इत्येव । योगिभिः ॥

इमकैः । अमुकैः । इत्यत्र "इदम्०" [ ३ ] इत्यादिना भिस ऐस् ॥ अक्येवेति किम् । एभिः । अमीभिः ॥

एभिर्नयनयोः प्रीतिरेषां श्रीरेभ्य उत्सवः ।
एषु धर्म इति श्रीमद्गृहान् को नास्य वर्णयेत् ॥ १३२ ॥

१३२. अस्य पुरस्य श्रीमद्गृहानाढ्यानां वेश्मानि दारान्वा को न वर्णयेत् । कथमित्याह । एभिः श्रीमद्गृहैः कृत्वा सौन्दर्यातिशयान्नयनयोर्लोकेक्षणयोः प्रीतिराह्लदः स्यात्तथैषां श्रीर्लक्ष्मीर्वर्तते तथैभ्यः सकाशादुत्सवो वसन्तोत्सवादिर्महः[7] प्रवर्तते तथैषु धर्मो देवपूजादानादिरस्ति । भोगधर्मफलत्वेनैषां लक्ष्मीर्न निरर्थिकेत्यर्थ[8] इति ॥

---

१ **सी डी** ॥ सि°. २ **डी** सिद्धैः कृ°. ३ **सी** °वित्रील°. **एफ्** °वित्रं भ°. ४ **एफ्** आः स्यादावित्या°. ५ **ए** °ति मु°. ६ **ए** ऐस् एसा. **एफ्** ऐसिति एसा°. ७ **बी एफ्** °दिमहः. ८ **बी सी डी एफ्** °रर्थके°.

भक्त्या गुरुषु पित्रोश्च मोक्षाय ज्ञानसंग्रहात् ।
जनेनाजरसाप्यत्र स्फुरज्जरसिन स्थितम् ॥ १३३ ॥

१३३. अत्र पुरे जनेनाजरसापि जरावर्जितेनापि तरुणेनापि स्फुरन्ती जरा यस्य तेन स्फुरज्जरसिन वृद्धेन स्थितम् । हेतू आह । गुरुषु धर्माचार्येषु पित्रोश्च मातापित्रोश्च विषये भक्त्या विनयेन तथा मोक्षाय यद् ज्ञानं धर्मशास्त्रपरिज्ञानं तस्यैव न तु संसारहेतुकामशास्त्रादिज्ञानस्य यः संग्रहो धारणं तस्माच्च । परिणतानां हि प्रायेण धर्मार्थितया विनयो मुक्तिहेतुज्ञानसंग्रहश्च स्यान्न तु यूनां मदमदनबाहुल्यात् ॥

सर्वस्य दूरजरसः प्रत्यासन्नजरस्य च ।
योगिनातिजरेणेह स्पर्धाध्यात्मे सदा लयात् ॥ १३४ ॥

१३४. इह पुरे सर्वस्य दूरजरसस्तरुणस्य प्रत्यासन्नजरस्य च वृद्धस्य च । कर्तरि षष्ठी । अतिजरेण योगाभ्यासप्रकर्षाज्जरामतिक्रान्तेन योगिना सह सदा स्पर्धा जयेच्छास्ति । कस्मादित्याह । आत्मनि विभक्त्यर्थेऽव्ययीभावे "अनः" [७.३.८८] इत्यति समासान्ते चाध्यात्मं तस्मिन्नात्मनि यो लयः सर्वथा बाह्येन्द्रियनिरोधेन तदेकाग्रचित्तता तस्मात् "गम्ययप" [२.२.७४] इत्यादिना पञ्चमी । लयमाश्रित्य यादृग् महाध्यानं योगीन्द्राः कुर्वन्ति तादृगत्रैत्यो लोकः सर्वोपि करोतीत्यर्थः । अध्यात्म इत्यत्र सामान्यविशेषभावेन द्वौ भावौ यथासन आस्ते इत्यत्रासनं सामान्यविशेषभिन्नम् । अध्यात्म इति ह्यात्मनि यो भावस्तत्र लय इति विज्ञायते । तत्र सामान्यभावो वृत्तावन्तर्भूतस्तं प्रत्याधारभावश्च योसौ लयो विशेषभावः स वृत्तौ नान्तर्भूतस्तं प्रति सामान्यभावस्याधारभावश्चेति तत्र सप्तमी भवति ॥

---

१ सी डी °शास्त्र प°. २ सी डी °दन°. ३ सी डी पफ् °त्रत्यलो°. ४ सी डी °स्त मल°. ५ डी °वश्चे°.

एषु। एषाम्। एभिः। एभ्यः। नयनयोः। इत्यत्र "एद्बहुस्भोसि" [४] इत्येत्॥ बहुिति किम्। अस्य। स्भोसीति किम्। गृहान्॥ अत इत्येव। गुरुषु। पित्रोः॥

जनेन। अतिजरेण। सर्वस्य। प्रत्यासन्नजरस्य। इत्यत्र "टाङसोरिनस्यौ" [५] इतीनस्यादेशौ। अत इत्येव। अजरसा। दूरंजरसः। अत्र परत्वान्नित्यत्वाच्च प्रागेव जरसादेशे कृतेकारान्तत्वाभावः। अन्ये तु प्रागेवेनादेशं संनिपातलक्षण-स्यानित्यत्वाश्रयणात्पश्चाज्जरसादेशं चेच्छन्त। स्फुरज्जरसिन इत्यपि मन्यन्ते॥

मोक्षाय। सम्रहात्। इत्यत्र "ङेङस्योर्यातौ" [६] इति यादादेशौ॥

सर्वस्मै प्रियकर्तास्मिन् सर्वस्मादुज्ज्वलो गुणैः।
नृपः श्रीमूलराजोभूच्चौलुक्यकुलचन्द्रमाः॥ १३५॥

१३५. अथात्र काव्ये वर्णनीयेषु चौलुक्येषु मध्ये[१] प्रथमो[२] यो राजात्र पुरेभूत्तमासर्गान्तमुपश्लोकयति॥ मूले चौलुक्येष्वादावत्र पुरे राजा मूलराजो यद्वा मूले[६] नक्षत्रे राजा[७] चन्द्रो मूलराजस्तत्र जात-त्वान्मूलराजः श्रिया युक्तो मूलराजः श्रीमूलराजो नाम[८] नृपोभूत्। कीदृक्। गुणैः[९] परोपकरित्वादिभिः कृत्वा सर्वस्मात्समस्तलोकात्[१०]संकाशा-दुज्ज्वलोत एव सर्वस्मै प्रियकर्ता वाञ्छितकारी। अत एव[११] च चौलु-क्यकुलचन्द्रमाः। चन्द्रमा अपि गुणैः कान्ततादिभिः[१२] सर्वस्मादुज्ज्व-लोत एव सर्वस्मै प्रियकर्ता। तथा श्रिय आवासत्वाच्छ्रियो नक्षत्रप-तित्वान्मूलस्य[१३] मूलनक्षत्रस्य च राजा प्रभुः स्यादित्युक्तिः॥

---

१ एफ् °भ्यः अनयो.. २ एफ् °त एव किम्। गु°. ३ एफ् °ध्ये यः प्र°. ४ सी डी एफ् °मो रा°. ५ एफ् मूलन°. ६ बी सी डी °ले मूलन°. ७ सी °जा स्त°. डी °जा तत्र. ८ एफ् °नामा नृ°. ९ एफ् °णैश्च प°. १० एफ् °त्समस्तलोकसका°. ११ सी डी एफ् °व चौ°. १२ एफ् °न्तत्वादि°. १३ एफ् °लन°.

विश्वस्माद॑त्यशेतासौ विश्वस्मायुपकारकः ।
किंसर्वस्मै परसर्वस्मै च यः कामदोभवत् ॥ १३६ ॥

१३६. यो विश्वस्मै हीनायोत्तमाय चोपकारको रक्षादानादिनोपकर्ता सन किंसर्वस्मै कुत्सितसर्वस्मै हीनलोकाय परसर्वस्मै च प्रकृष्टसर्वस्मायुत्तमलोकाय च कामदो मनोरथपूरकोभूदसौ स मूलराजो विश्वस्मात्सर्वलोकाद॑त्यशेतोत्कृष्टोभूत् ॥

तमस्तोभिभवः कालेप्यसर्वस्मिन्महोदयः ।
हीनतास्मादुभौ हेतू उभयस्मिन् रवौ विधौ ॥ १३७ ॥

१३७. उभौ हेतू "सर्वादेः सर्वाः" [२.२.११९] इति प्रथमाया द्वितीयाया वा द्विवचनम् । द्वाभ्यां कारणाभ्यामस्मान्नृपात्सकाशादुभयस्मिन् द्वितये हीनता न्यूनत्वमासीत् । कस्मिन्नुभयस्मिन्नित्याह । रवौ सूर्ये विधौ चन्द्रे च । कौ हेतू इत्याह । तमस्तो राहोः सकाशादभिभवो ग्रहणलक्षणपराभवैः । अपिः समुच्चये । तथासर्वस्मिन्काले महोदयो न सर्वस्मिन्काले महान् जगत्प्रकाशक उदयः स्यात् । रवेर्दिन एव चन्द्रस्य च रात्रावेव महोदयात् । अस्य च राज्ञस्तमस्तोज्ञानान्नाभिभवो राज्यलक्ष्मीप्रतापादीनां सदा वृद्ध्या सदा महोदयश्चेति ॥

अन्यस्मै भास्करायान्यतरस्मै विष्णुशक्रयोः ।
रुद्राणामन्यतमस्मै नमोस्मै चक्रिरे नृपाः ॥ १३८ ॥

१३८. नृपा अस्मै मूलराजाय नमो नमस्कारं चक्रिरे यतोन्यस्मै

१ डी °दतिशे°. २ एफ् °स्तोविभ°.

१ एफ् °र्वस्मै चोत्त°. २ सी °दभिशे°. डी °दतिशे°. ३ बी डी एफ् °णः प°. ४ सी डी °वः स°. ५ एफ् °नान्न परिभवो राजल°.

भास्कराय महाप्रतापित्वाद्द्वितीयाय रवये तथा विष्णुशक्रयोर्मध्येन्यं-तरस्मा एकतरस्मै प्रजारक्षापरमैश्वर्यादीनामुभयधर्माणां सद्भावाद्विष्णवे शक्राय वेत्यर्थ । तथा रुद्राणामन्यतमस्मै लीलाविलासित्वादिना अज १ एकपाद २ अहिर्बुध्न ३ विरूपाक्ष ४ रैवत ५ हर ६ बहुरूप ७ त्र्य-म्बक ८ सावित्र ९ जयन्त १० पिनाकि ११ नाम्नामेकादशरुद्राणां मध्येजाय यावत्पिनाकिने वेत्यर्थः । भास्करादिभ्यो हि देवतात्वान्नृपा पयि नमस्कारं कुर्वन्ति ॥

देवेभ्योन्यतमायास्मायितरस्मै फणीशिने ।
श्लाघित्वा सुधियः कुर्युः कतरस्मै पुनः स्तुतिम् ॥ १३९ ॥

१३९. अस्मै नृपाय श्लाघित्वा नृपं श्लाघ्यं परं लोकं ज्ञाप्यं जानन्तं प्रयोज्य नृपं[3] वर्णयित्वेति यावत्सुधियः कतरस्मै कस्मै राज्ञे पुनः स्तुति कुर्युः । यत कीदृशाय । देवेभ्योन्यतमाय शक्तिरूपाद्यतिशयेन देवानां मध्य एकतरस्मै तथेतरस्मै फणीशिने भूभारधारित्वेन द्वितीयाय शे-षाय । सुरशेषाहितुल्यत्वेन सर्वनृपोत्कृष्टत्वादस्य श्लाघायां कृतायाम-न्यस्य श्लाघां कर्तुं न कोपि वाञ्छतीत्यर्थः ॥ "निर्धारणे पञ्चम्यप्यन्ये" [ श्रीसिद्ध० व्या० वृ० ] इति तन्मतमाश्रित्य देवेभ्य इत्यत्र निर्धारणे पञ्चमी । कतरस्मायित्यत्र संप्रदाने चतुर्थी ॥

यतरस्मै ततरस्मै प्रार्थयित्रे ददावसौ ।
यतमस्मै ततमस्मै दोषकर्त्रे चुकोप च ॥ १४० ॥

१४०. स्पष्टः । किं तु यतरस्मै[4] ततरस्मै शत्रवे मित्राय च । यत-मस्मै ततमस्मै मित्राय शत्रवे च । दोषकर्त्रेन्यायकारिणे ॥

---

१ एफ् °न्यस्मा. २ डी एफ् °पाद् २ अ°. ३ एफ् °प च व°.
४ एफ् °स्मै श°.

दातृष्वेकतमस्मादेकतरस्माच्च दस्रयोः[1] ।
कतमस्मिन्सर्वतमे देशेस्मान्नाभ्यगाद्यशः ॥ १४१ ॥

१४१. अस्मान्नृपात्सकाशात्सर्वतमेतिशयेन सर्वस्मिन्देशे कतमस्मिन्[1]कस्मिन् यशो नाभ्यगान्न ययौ । सर्वशब्दोत्र तमप्यसंकुचितवृत्तिस्ततो जगत्त्रयेप्यस्य यशो विस्तीर्णमित्यर्थः । यतो दातृषु मध्य एकतमस्मादसाधारणात्तथा रूपातिशयेन दस्रयोरश्विनीकुमारयोर्मध्य एकतरस्मादन्यतरस्मात् । दानरूपातिशयेन हि प्रसरति दिशो[2] दिशं[3] यशो नरस्य ॥

त्वस्माद्याच्ञापराविन्द्रोपेन्द्रौ दानैकशालिनः ।
नेमस्मायपि कल्पेते[2] नास्य हेतुं गुणत्वतम् ॥ १४२ ॥

१४२. गुणत्वतं हेतुम् । त्वच्छब्दः समुच्चयार्थः । शौर्यौदार्यादिगुणसमूहेन हेतुनेन्द्रोपेन्द्रौ शक्रविष्णू अस्य राज्ञो नेमस्मायपि खण्डायाप्यर्थाद्गुणकलायापि न कल्पेते[4] नालं भवतः । यतो दानेनैकेनाद्वितीयेन न तु याच्ञया शालते शोभत इत्येवंशीलो यस्तस्य । प्रभूतगुणैरपीन्द्रोपेन्द्रौ दानैकशालिनोस्य गुणांशमात्रस्यापि तुल्यौ न भवत इत्यर्थः । यतस्त्वस्मादन्यस्माद्याच्ञापरौ याचकौ । इन्द्रो हि बलिष्ठे बलिदैत्येप्रभवन् विष्णुं बलिबन्धं[5] ययाचे[6] विष्णुश्च बलिं त्रिपदीमिति । याच्ञायां[7] च सर्वे गुणा भ्रंसन्ते । उक्तं च ।

देहीति वचनं श्रुत्वा देहस्थाः पञ्च देवताः ।
नश्यन्ति तत्क्षणादेव श्रीर्ह्रीधीधृतिकीर्तयः ॥ १ ॥

---

१ ए दश्रयो. ।. २ बी कल्प्येते.

---

१ सी °स्मि य°. एफ् °स्मिन्कतरस्मि°. २ बी °शोदशय°. ३ सी डी °शो नृपस्य. ४ बी कल्प्येते. ५ ए बी डी °लिवध य°. सी °लिबन्ध य°. ६ बी चेति वि°. ७ बी सी डी °या स°

गुणास्तावद्यशस्तावद्यावद्यांचेत नो नरः ।
प्रार्थनायां पुनस्तेपि प्रणश्यन्ति हता इव ॥ २ ॥

पूर्वस्माच्च परस्माच्च समस्मादसमाद्गुणैः ।
उत्कृष्टो राजकाद्दत्ते स्मिस्मै स्मैप विस्मयम् ॥ १४३ ॥

१४३. एष राजा सिमस्मै सर्वस्मै लोकाय विस्मयमाश्चर्यं दत्ते स्म । यतः पूर्वस्माचैतदपेक्षया जन्मना प्रथमात्परस्माच्च जन्मना पश्चिमाच्च किं बहुना समस्मात्सर्वस्माद्राजकान्नृपौघादुत्कृष्ट उत्तमः । ननु तद्राजकं विगुणं भविष्यतीति तन्मध्ये चासौ केनाप्येकेन गुणेन युक्त उत्कृष्टो भविष्यति यथान्धेषु काणोपि भातीति निर्गुणत्वनिराकरणायाह । गुणैः शौर्यादिभिरसमादसाधारणात् ॥

दक्षिणस्मादुत्तरस्मादपरस्मात्तथान्यतः ।
कृष्णायास्मायवरस्मायधरस्मिन्न को नतः ॥ १४४ ॥

१४४. दक्षिणस्मादुत्तरस्मादपरस्मात्पश्चिमात्तथान्यतः पूर्वस्माच्च देशादागत्यास्मै राज्ञेधरस्मिन्नधोदेशे पादयोः को न नतो यतः प्रजारक्षाप्रतापादिनावरस्मै कृष्णाय द्वितीयाय विष्णवे । कृष्णाय हि सर्वदेशेभ्य आगत्य जनः प्रणमति । एतेनास्य राज्ञः सर्वजगद्वशीकार उक्तः । दक्षिणस्मादित्यादौ कुसूलात्पचतीत्यादाविवोपात्तविषयेपादाने पञ्चमी ॥

परस्वायास्पृहयालुः स्वस्मायश्लाघनः सदा ।
दक्षिणाय द्विजस्वाय स्वस्मायिव ददावसौ ॥ १४५ ॥

१४५. असौ राजा दक्षिणाय प्रवीणाय द्विजस्वाय ब्राह्मणज्ञातये स्वस्मायिवात्मीयाय स्वजनायेव सदा गोधनादि ददौ । दाताप्यन्यायेन

---

१ एफ् °याचति नो. २ सी °यमा°. ३ एफ् °ष्यतीति.

परद्रव्याणि गृहीत्वा ददत्सन्निन्द्य एव स्यादित्याह । परस्वायान्यद्रव्या-यास्पृहयालुरन्यायेन परद्रव्यमगृह्णन्नित्यर्थः । एवंभूतोपि दत्वा विक-त्थनो निन्द्य एव स्यादित्याह । स्वस्मायात्मनेश्लाघनः ॥

चक्रुरस्यारयो वस्त्रायान्तरस्मै कृतस्पृहाः ।
अन्तरायाः पुरो याच्ञामन्तरस्माद्गृहादपि ॥ १४६ ॥

१४६. अस्य राज्ञोरयः पुरमध्ये मा स्म वयं प्रत्यभिज्ञायोमहि[हा इ ?]त्याशङ्कया पुरेषु प्रवेष्टुमशक्तत्वादन्तरायाः पुरश्चण्डालादिपुर्याः सकाशाद-न्तरस्माद्गृहादपि । अपिः समुच्चये । नगरबाह्याच्चण्डालादिगृहाच्चण्डाला-दिगृहयुक्ताद्वा नगराभ्यन्तरगृहाच्च सकाशाद्याच्ञां वस्त्रप्रार्थनां चक्रुः । यतोन्तरस्मै वस्त्राय कृतस्पृहाः । अतिनिःस्वत्वेन वस्त्राभावाद्वस्त्रचतुष्टय-मध्ये तृतीयाय चतुर्थाय वा स्पृहयालवः । एवं चानेन राज्ञा शत्रवो रोगः कृता इत्युक्तम् ॥

अमुष्मै तेजसैकस्मै यस्तस्थे समरान्तरे ।
कृतान्तः कुपितस्त्यस्मै तस्मिन् दैवं पराङ्मुखम् ॥ १४७ ॥

१४७. समरान्तरे रणमध्ये योरातिस्तेजसा प्रतापेनैकस्मायद्वितीयायामुष्मै राज्ञे तस्थे स्थानेनात्मानं वीरं प्रकाशितवांस्त्यस्मै शत्रवे कृतान्तः कुपितस्तथा तस्मिञ्शत्रौ दैवं पराङ्मुखं स मृत एवेत्यर्थः । अमुष्मा इत्यत्र "श्लाघह्नुस्था०" [ २.२.६० ] इत्यादिना चतुर्थी । तस्थ इत्यत्र "ज्ञीप्सास्थेये" [ ३.३. ६४ ] इत्यात्मनेपदम् ॥

यस्मायेतस्मै शासित्रे द्वकयोर्घोर्भुवस्तथा ।
त्वादृशोस्मादृशां पुण्यैरित्यश्लाघिष्ट वासवः ॥ १४८ ॥

---

१ प °त्सर्वनिन्द्य. बी सी डी °त्सर्वत्रनिन्द्य. २ पफू °यान्याम" ३ पफू °रश्चाण्डा°. ४ पफू °वान्त्स्मै. ५ सी °तस्त्यस्मै तस्मि दै°.

भवादृक्कीदृगेतस्मिन्नतिसर्वे यदीर्ष्यसि ।
उत्तरे कोशले मन्त्र इत्थमस्योद्यमेभवत् ।। १४९ ।।

१४८,१४९. अस्य मूलराजस्योद्यमे विजययात्रायां सत्युत्तरे कोशले। सामीप्यकाधारेत्र सप्तमी । उत्तरकोशलाख्यनृपसमीपे मन्त्रः कोशलनृपमन्त्रिणामभून् । कथमित्याह । हे राजंस्त्वादृशो[2] भवत्सदृशो भूपोस्मादृशामस्माकं पुण्यैर्वर्तेत इत्येवंप्रकारेण । यस्मायेतस्मै राज्ञे वासव इन्द्रोप्यस्पृहिष्ट । यतः किं भूताय । द्वकयोर्द्वयोः[3] शासित्रे रक्षित्रे । कयोर्द्वकयोरित्याह । द्योः स्वर्गस्य तथा भुवः पृथ्व्याश्च । अन्यायिभ्यो ह्यसौ रक्षन् भुवः शास्ता । न्यायकरग्रहोपार्जितधनैर्यागान्कारयन्द्योश्च शास्ता। यतः

"यज्ञेषु वह्नौ विधिवद्धुतं देवानामुपतिष्ठते"

इति श्रुतिः । तथाचोक्तं रघौ ।

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ।। १.२६ ।। इति ।

अविसर्वे बलादिना विश्वत्रयेप्युत्कृष्टत्वात्सर्वमतिक्रान्त एतस्मिन्मूलराजविषये हे कोशलेश्वर यत्त्वमीर्ष्यसि कोयं मत्पुर इति यन्न क्षाम्यसि तत्भवादृक्कीदृक् कीदृशः । कियन्मात्र इत्थम् । यस्मायेतस्मा इत्यत्र यदेतच्छब्दौ द्वावप्यनुवाद्यमात्रार्थप्रतीतिकृतौ । यथा

यदेतच्चन्द्रान्तर्जलदलवलीलां प्रकुरुते
तदाचष्टे लोकः[5] शशक इति नो मां प्रति तथा ।

---

१ सी °अस्यो°. २ सी °शो भू°. ३ एफ् °द्वयो°. ४ बी सी एफ् °तस्मिन्तस्मि°. ५ ए बी °लोक इत्यत्र

अहं त्वेवं मन्ये त्वदरिविरहाक्रान्ततरुणी-

कटाक्षोल्कापातव्रणशतकलङ्काङ्किततनुः ॥

इत्यत्र ॥

सर्वस्मै । परसर्वस्मै[1] । किंसर्वस्मै । सर्वस्मात् । विश्वस्मै । विश्वस्मात् । असर्वस्मिन् । अस्मिन् । इत्येतेषु "सर्वादेः स्मैस्मातौ" [७] "ङेः स्मिन्" [८] इत्येताभ्यां स्मैस्मात्स्मिन्नादेशाः ॥

उभशब्दस्य द्विवचनस्वार्थिकप्रत्ययविषयत्वात्स्मैप्रभृतयो न स्युः । गणपाठस्तु हेत्वर्थप्रयोगे सर्वविभक्त्यर्थः । उभौ हेतू[2] । उभयस्मिन् ॥ अन्यस्मै । अन्यतरस्मै । इतरग्रहणेनैव सिद्धेन्यतरग्रहणं डतमप्रत्ययान्तस्यान्यशब्दस्य सर्वादित्वनिवृत्त्यर्थम् । अन्यतमाय ॥ अन्येत्वाहुः । नायं डतरप्रत्ययान्तोन्यतर[3]शब्दः किंत्वव्युत्पन्नस्तरोत्तरपदस्तरवन्तो वा । तन्मते डतमान्तस्याप्यन्यशब्दस्य सर्वादित्वम् । अन्यतमस्मै । इतरस्मै । डतरडतमौ प्रत्ययौ । तयोः स्वार्थिकत्वात्प्रकृतिद्वारेणैव सिद्धे पृथगुपादानमत्र प्रकरणेन्यस्वार्थिकप्रत्ययान्तानामग्रहणार्थ[4]मन्यादिलक्षणार्थं च । कतरस्मै । कतमस्मिन् । यतरस्मै । यतमस्मै[5] । ततरस्मै । ततमस्मै । एकतरस्मात्[6] । एकतमस्मात् । इह न भवति । सर्वतमे ॥ त्वशब्दोन्यार्थः । त्वस्मात् ॥ त्वच्छब्दः समुच्चये । तस्य स्मायादयो न भवन्तीति हेत्वर्थयोगे सर्वविभक्त्यादि प्रयोजनम् । गुणत्वतं हेतुम् ॥ नेमशब्दोर्धार्थः । नेमस्मै ॥ समसिमौ सर्वार्थौ । समस्मात्[7] । सिमस्मै । सर्वार्थत्वाभावे न स्यात् । असमात् ॥ स्वाभिधेयापेक्षे[8] चावधिनियमे व्यवस्थापरपर्याये गम्यमाने पूर्वपरावरदक्षिणोत्तरापराधराणि । पूर्वस्मात् । परस्मात् । अवरस्मै । दक्षिणस्मात्[9] । उत्तरस्मात् । अपरस्मात्[10] । अधरस्मिन् ।

१ सी डी °स्मै म°. २ सी हेतौ । ३ एफ् °तरः श°. ४ सी °णार्थं°. ५ सी डी °तमस्मै । कतमस्मिन् । ततरस्मै । ततमस्मै । ए° ।. ६ ए एफ् °स्मै ततम°. ७ ए °स्मात् इ°. ८ बी °पेक्षयाव°. एफ् °पेक्षया चा°. ९ डी °स्मात् उ°. १० एफ् अप°.

व्यवस्थाया अन्यत्र न स्यात् । दक्षिणाय द्विजस्वाय । आत्मात्मीयज्ञातिधनार्थवृत्तिः स्वशब्दः । आत्मात्मीययो । स्वस्मै । स्वस्मायिव ॥ ज्ञातिधनयोस्तु न । द्विजस्वाय । परस्वाय ॥ बहिर्भावेन वाह्येन वा योगे उपसंव्यान उपसंवीयमाने चार्थेन्तरशब्दो न चेद्बहिर्योगेपि पुरि वर्तते । अन्तरस्माद्गृहात् । अन्तरस्मै वस्त्राय । पुरि तु न । अन्तरायाः पुरः । बहिर्योगोपसंव्यानादेरन्यत्र तु न स्यात् । समरान्तरे ॥ त्यस्मै । तस्मिन् । यस्मै । अमुष्मै । अस्मै । एतस्मै । एकस्मै । द्वियुष्मद्भवत्त्वस्मदां स्मायादयो न सम्भवन्तीति सर्वविभक्त्यादयः प्रयोजनम् । द्वकयोः । त्वादृशः । भवादृक् । अस्मादृशाम् । कीदृक् ॥ सर्वे चामी संज्ञायां सर्वादयो न स्युः । तेनेह न स्यात् । उत्तरे कोशले । सर्वादेरिति षष्ठीनिर्देशेन तत्संबन्धिविज्ञानादिह न भवति । अतिसर्वे ॥

नेमे दासीकृता नेमा हताश्चानेन भूभुजः ।
अर्धे द्विपा हयाश्चार्धाः सन्नद्धाः सर्व एव न ॥ १५० ॥

१५० अनेन राज्ञा नेमेर्धा भूभुजो दासीकृतास्तथा नेमाश्च भूभुजो हताः । ये नृपास्तं प्रणतास्ते सेवकीकृताः । ये तु दर्पोद्धुरत्वान्न प्रणतास्ते समूलमुन्मूलिता इत्यर्थः । तत्किं तज्जयाय सर्वं सैन्यं सन्नद्धमित्याह । अर्धे इत्यादि कण्ठ्यम् । एतेन सैन्यस्यातिबाहुल्यमुक्तम् ॥

पूर्वं तेजस्विनोभूवन् प्रथमे चरमेपि च ।
न प्रथमा न चरमा उदितेस्मिन् रवाविव ॥ १५१ ॥

१५१ पूर्वं मूलराजोदयात्प्रथमं प्रथमे मुख्याश्चरमेपि चामुख्याश्चापि नृपास्तेजस्विनः प्रतापिनोभूवन् । अस्मिन्नृपे महाप्रतापित्वाद्रवाविवोदिते

१ सी डी °सवी°. २ एफ् °स्मै अमुष्मिन् अ°. ३ डी °पोंद्धतत्वा°. ४ एफ् °मे चा°.

सति न प्रथमास्तेजस्विनोभूवन्न च चरमाः । सूर्योदयादपि पूर्वं रात्रौ प्रथमे मुख्याश्चन्द्रग्रहाश्चरमेपि चामुख्या नक्षत्रतारास्तेजस्विनो भवन्ति रवौ तूदिते नेति ॥

द्वये त्रयाश्चतुष्टये पञ्चतयाश्च के चन ।
गुणानस्य क्षमा वक्तुमल्पेल्पा गीर्पतेर्न ये ॥ १५२ ॥

१५२ ये गीर्पतेर्बृहस्पतेः सकाशान्नाल्पा वाग्मितया न न्यूनास्तेल्पे के चन स्तोकाः केप्यस्य राज्ञो गुणाञ्शौर्यादीन्वक्तुं वर्णयितुं क्षमाः । अल्पेपि कियन्त इत्याह । द्वौ त्रयश्चत्वारः पञ्च वावयवा येषां ते तथा द्वौ त्रयश्चत्वारः पञ्च वेत्यर्थः । द्वय इत्यत्र द्वाववयवौ येषामिति यच्छब्द-वाच्ययोर्द्वयोरपि गौरवविवक्षायां "गुरावेकश्च" [२.२.१२४] इति बहुत्वा-द्बहुवचनम् । अन्यथा द्विवचनमेव प्रसक्तम् ॥

कतिपयेपि गीर्वाणा नागाः कतिपया अपि ।
मणयः कौस्तुभस्येव बभूवुर्नास्य संनिभाः ॥ १५३ ॥

१५३ कतिपयेपि स्तोका अपि गीर्वाणा ऊर्ध्ववासिदेवाः । नागा नागकुमाराः । ऊर्ध्वलोकेधोलोके च मूलराजतुल्यो न कोप्यभूदित्यर्थः । शिष्टं स्पष्टम् ॥

सर्वे । इत्यत्र "जस इः" [९] इति-इः ।

नेमे नेमाः । अर्धे अर्धाः । प्रथमे प्रथमाः । चरमे चरमाः । चतुष्टये पञ्चतयाः । द्वये त्रयाः । अल्पे अल्पाः । कतिपये कतिपयाः । इत्यत्र "नेमार्ध०" [१०] इत्यादिना वा जस इः ॥

---

१ सी डी °प्र चर°. २ सी डी °वन्न°. ३ डी °र्थः । शेष स्प°. ४ एफ् °इ. ने°.

शैलाः पूर्वापरे पूर्वापराश्च जलधेस्तटाः ।
सैन्येभरदनक्षुण्णाः कीर्तयन्त्यस्य दिग्जयम् ॥ १५४ ॥

१५४. कण्ठ्यः[1] । परं पूर्वापर इति पूर्वे[2] पूर्वदिग्वर्तिनोपराः पश्चिमदिग्वर्तिनः ॥

पूर्वापरे पूर्वापराः । इत्यत्र "द्वन्द्वे वा" [११] इति वा जस इः ॥

पूर्वापराच्छ्रियं कर्षन्दक्षिणोत्तरतोप्ययम् ।
दक्षिणोत्तरपूर्वाणां प्रतीच्याश्चाभवत्पतिः ॥ १५५ ॥

१५५. पूर्वा[4] चापरा च पूर्वापरं तस्मात् । एवं दक्षिणोत्तरतः । चतुर्भ्योपि दिग्भ्य इत्यर्थः[5] । शिष्टं स्पष्टम् ॥

पूर्वापरात् । दक्षिणोत्तरपूर्वाणाम् । इत्यत्र "न सर्वादिः" [१२] इति सर्वसर्वादिकार्याभाव । "सर्वादयोस्यादौ" [३ २.६१] इति पुंवत्तु भवत्येव । तत्र भूतपूर्वस्यापि[6] सर्वादेर्ग्रहणात् ॥

ननामास्मै श्रिया पूर्वायौजःपूर्वाय राजकम् ।
सोस्मायह्नावरायेवास्निह्यन्मासावराय नु ॥ १५६ ॥

१५६. अस्मै राज्ञे राजकं नृपौघो ननाम । यतः श्रिया सैन्यादिसंपदा पूर्वाय प्रथमाय तथौजःपूर्वायौजोभिः पराक्रमैः प्रथमाय । ओजसा पूर्वायेति तु वाक्ये "ओजोञ्ज०" [३ २.१२]इत्यादिनालुक् स्यात् । स च राजास्मै राजकायाह्नावरायेव मासावराय नु दिनेन मासेन वा लघव इवास्निह्यदप्रीयत । न तु गर्वेण पराङ्मुखोभूदित्यर्थः । अह्नावराय मासावरायेत्येताभ्यां दिनेन मासेनचानुजो भ्रातेव गम्यतेस्निह्यदिति क्रियापदात् ॥

---

१ सी डी कण्ठ्यम् । २ सी °र्वे दि°. ३ एफ़ °राः द°. ४ बी सी डी °र्वा चप°. ५ डी °र्थ. । शेष स्प°. ६ एफ़ °पि स्यादे°.

श्रिया पूर्वाय । ओजःपूर्वाय । अह्नावराय । मासावराय । इत्यत्र "तृतीयान्तात्°" [१३] इत्यादिना सर्वादिकार्यं न ॥

**कृष्णायास्मै द्वितीयस्मै द्वितीयायासिना नृपाः ।**
**द्वितीयस्मात्तृतीयाच्च देशादेत्य नमो व्यधुः ॥ १५७ ॥**

१५७. गूर्जरत्रादेशापेक्षया द्वितीयस्मात्तृतीयाच्च देशादुपलक्षणत्वात्सर्वदेशेभ्य इत्यर्थः । एत्यागत्य नृपा अस्मै राज्ञे नमः प्रणामं व्यधुः । यतो द्वितीयस्मै कृष्णाय । ईदृशायापि कुत इत्याह । यतोसिना द्वितीयाय महाबलत्वेन सैन्यादिसहायनिरपेक्षायेत्यर्थः ॥

**द्वितीयस्यास्तृतीयाया नृपकीर्तेरमर्षणः ।**
**जगत्यस्मिन्द्वितीयास्मिंस्तृतीये चैष विश्रुतः ॥ १५८ ॥**

१५८. एष राजास्मिन् जगति पृथिव्यां द्वितीयस्मिन् जगति पाताले तृतीये च जगति स्वर्गे च विश्रुतो विख्यातः । यतो द्वितीयस्यास्तृतीयायाः स्वकीर्त्यपेक्षयान्यस्या अन्यतरस्याश्चोपलक्षणत्वात्सर्वस्या इत्यर्थः । नृपकीर्तेरन्यराजयशसः कर्मणोमर्षणोसोढा । परिभावुक इत्यर्थः । अतश्चायमेव सर्वत्र प्रसिद्ध इति भावः ॥

**तेजसा सूर्यजातीये सर्वेषां प्रलयो द्विषाम् ।**
**कान्त्या द्वितीयके चेन्दौ हर्षोस्मिन् सुहृदामभूत् ॥ १५९ ॥**

१५९. तेजसा प्रतापेन कृत्वा सूर्यः प्रकारोस्य तस्मिन्सूर्यजातीये सूर्यवत्प्रचण्डेस्मिन् राज्ञि सर्वेषां द्विषां प्रलयः क्षयोभूत् । एतत्प्रता-

१. सी °नायस्माच्च.

१ सी डी °रदे एफ् °रधात्रीदे°. २ एफ् °तीयस्माच्च. ३ बी सी डी एफ् पृथ्व्या द्वि°. ४ एफ् °र्गे वि°. ५ बी एफ् °यंप्र°

पेनापि सर्वे शत्रवः प्रलीना इत्यर्थः । तथा कान्त्या सौम्यतया कृत्वा द्वितीयकेज्ञाते द्वितीय इन्दौ च चन्द्रे चास्मिन् सर्वेषां सुहृदां मित्राणां हर्ष आनन्दोभूत् । एतद्दर्शनेनापि सर्वे सुहृद आनन्दिता इत्यर्थ. । अस्मिन्नित्यत्र नैमित्तिक आधारे सप्तमी । द्विट्प्रलयसुहृद्धर्षयोरयं निमित्तमित्यर्थः ॥

द्वितीयस्मै द्वितीयाय । द्वितीयस्मात् तृतीयात् । द्वितीयस्मिन् तृतीये । द्वितीयस्याः तृतीयायाः । इत्यत्र "तीय ङित्कार्ये वा" [१४] इति वा सर्वादिकार्यम् । ङित्कार्य इति किम् । तत्रैव सर्वादित्वं यथा स्यान्नान्यत्र । तेनाक न स्यात्तथा च कप्रत्यये सति स्वार्थिकप्रत्ययान्ताग्रहणात्स्मैप्रभृतयो न स्युः । द्वितीयके ॥ अर्थवतः प्रतिपदोक्तस्य च ग्रहणादिह न स्यात् । सूर्यजातीये ॥

सर्वेषाम् । इत्यत्र "अवर्णस्यामः साम्" [१५] इति साम् ॥

पूर्वे न्याये तथा धर्मे पूर्वस्मिन्नेष तत्परः ।
पूर्वस्मात्पुरुरवसस्तत्पूर्वान्नाप्यहीयत ॥ १६० ॥

१६०. एष राजा नाहीयत न न्यूनोभूत् । कस्मात् । पुरूरवसो बौधाच्चतुर्थचक्रिणः सकाशात् । तथा पूर्वस्मात्पुरूरवस एव प्रथमात्तत्पितुर्बुधात् । तथा तत्पूर्वादपि तस्माद्बुधात्पूर्वः प्रथमः पिता चन्द्रस्तस्मादपि यतः पूर्वे पुरूरवःप्रभृतिपूर्वराजसंबंद्धे न्याये नीतौ तथा पूर्वस्मिन्धर्मे तदनुष्ठाने तत्परस्तन्निष्ठः । पूर्वनृपाचरितौ न्यायधर्मौ पालयन्नित्यर्थः । अहीयतेति कर्मकर्तरि ॥

---

१ एफ् °तीयेन्दौ　२ डी °तीयस्मा°.　३ एफ् °न् । द्वितीये । तृतीयस्मिन् । तृ°. ४ एफ् °स्या । द्वितीयाया. । तृतीयस्या. । तृ°. ५ एफ् °र्थमिति. ६ सी °दि ङिकार्यत्व.　७ सी डी °था चाकप्रत्य°.　८ एफ् °जा न हीयेत.　९ एफ् °नो भवेत्. १० एफ् °बन्धे न्या°.

**पूर्वे दैत्या बलिप्रायाः पूर्वाः कर्णादयो नृपाः ।**
**क्षमायां स्मारितास्त्यागक्रियाया अमुना किल ॥ १६१ ॥**

१६१. किलेति सत्ये । अमुना राज्ञा त्यागक्रियाया दानाद्धेतोर्बलिप्रायाः । प्रायो बाहुल्यतुल्ययोः । बलिसदृशाः पूर्वेऽग्रेतना दैत्याः । तथा कर्णादयः कर्णः कौरवपक्षीयो राजा तदादयो दधीचिजीमूतवाहनाद्याः पूर्वो नृपाश्च स्मारिताः स्मृतिपथमानीताः । बलिकर्णादिवद्ददावित्यर्थः । बलिकर्णादयो हि लोके[1] दानशौण्डत्वेन प्रसिद्धाः । यदुक्तम् ।

अतिदानाद्बलिर्बद्धः ॥
त्वचं कर्णः शिबिर्मांसं जीवं जीमूतवाहनः ।
ददौ दधीचिरस्थीनि नास्त्यदेयं[2] महात्मनाम् ॥

**निस्त्रिंशे बहुखट्वायां रिपुकीलालपि व्यधात् ।**
**स्थानमेषोनुरक्तायाः क्रीडायै विजयश्रियः ॥ १६२ ॥**

१६२. एष राजानुरक्तायाः शौर्यादिगुणैरावर्जिताया विजयश्रियः क्रीडायै विलासाय बहुखट्वायामीषदूनखट्वायां विस्तृततया पल्यङ्कतुल्ये निस्त्रिंशे खड्गे स्थानमावासं व्यधाद्दत्तवान् । यतो रिपूणां कीलालं रुधिरं पिबति यस्तस्मिञ्शत्रूच्छेदके[3] इत्यर्थः । शत्रूच्छेदकत्वादस्य खड्गे विजयश्रीर्न्यवसदित्यर्थः । याप्यनुरक्ता स्त्री स्यात्तस्या रतये पतिः खट्वायां स्थानं ददाति ॥

पूर्वे पूर्वाः । पूर्वस्मात् पूर्वात् । पूर्वस्मिन् पूर्वे । इत्येषु "नवभ्य°" [१६] इ-

स्यादिना ह्रस्मात्स्मिनो वा ॥

क्रीडायै । क्रियायाः । अनुरक्तायाः । क्षमायाम् । इत्यत्र " आपो ङिताम्°"

---

१ बी लोका दा°. २ सी डी नास्ति दे°. ३ ए °कत्वा°. ४ एफ् °इत्यत्र न°.

[१७] इत्यादिना यै-यास्-यास्-यामः ॥ आप इति पकारः किम् । कीलालपि । तत्संबन्धिविज्ञानादिह न भवति । बहुखट्वाय नराय । एतच्चोदाहरणं स्वयं ज्ञेयम् । इह तु भवति । बहुखट्वायां निस्त्रिंशे ॥

हितः प्रजायै सर्वस्यै सर्वस्याः संपदः पदम् ।
ख्यातोसौ दिशि सर्वस्यां सर्वस्या नृपसंहतेः ॥ १६३ ॥

१६३. अयं राजा सर्वस्या भूतभवद्भाविन्या नृपसंहतेः सकाशात्सर्वस्यां दिशि दशस्वपि दिक्षु ख्यातोभूत् । यतः सर्वस्यै प्रजायै हितोनुकूलः । तथा सर्वस्याः सैन्यकोशादिकायाः संपदः पदं स्थानम् ॥

सर्वस्यै । सर्वस्याः । सर्वस्याः । सर्वस्याम् । इत्यत्र "सर्वादेः°" [१८] इत्यादिना डस्पूर्वा यैयास्यास्याम. ॥

लीलया भुजयोर्लक्ष्मीवसुधे अस्य बिभ्रतः ।
कुन्दावदातैरोदस्यौ यशोभिः पूरिते इमे ॥१६४ ॥

१६४. स्पष्टः ।

लीलया । भुजयोः । इत्यत्र "टौस्येत्" [१९] इत्येत् ॥

पूरिते । इमे । लक्ष्मीवसुधे बिभ्रतः । इत्यत्र "औता" [२०] इत्येत् ॥

चारू चापेषुधी त्यक्त्वा समरेष्वस्य वैरिभिः ।
गुरू अबलताभीती शिश्रियाते अतिस्त्रियौ ॥ १६५ ॥

१६५. अस्य राज्ञः समरेषु वैरिभिश्चारू रणालंकर्मीणौ चापेषुधी धनुस्तूणौ त्यक्त्वाबलताभीती निःसत्वताभये शिश्रियाते आश्रिते । कीदृशे ।

१ सी डी °रः । की°. २ सी °बन्धवि°. ३ एफ् °र्वस्या । स°. ४ सी डी निःस्वत्व°.

गुरू महत्यौ । अत एवातिस्त्रियौ । स्त्रीशब्देनात्र स्त्रीगते अवलताभीती उपचारादुच्यते। स्त्रियमतिक्रान्ते स्त्रीगतावलताभीतिसकाशादप्यधिके इत्यर्थ. । यदायं राजा रणभूमिमापतति तदा वैरिणः स्त्रीभ्योप्यधिकम-वलाभीताश्च सन्तः शस्त्राणि मुञ्चन्तीत्यर्थः । यावप्यतिस्त्रियौ ब्रह्म-चारित्वात्स्त्रियमतिक्रान्तौ चारू प्रशान्ततया मनोहारिणौ गुरू आचार्यौ भवतस्तौ चापेपुधी त्यक्त्वा वैरिभिरपि श्रीयेते तथाविधैतद्दर्शने वैरानुबन्धोपशमादित्युक्तिः ॥

अस्याभूवन्ननाहार्या बुद्धयः कामधेनवः ।
त्रासादतिस्त्रयोनेन चक्रिरेहंयवोरयः ॥ १६६ ॥

१६६. अस्य राज्ञोनाहार्या अकृत्रिमा मन्त्र्याद्युपदेशं विनापि संसिद्धा इत्यर्थः । बुद्धयो मनोभीप्सितपूरकत्वेनानाहार्याः केनापि हर्तु-मशक्याः कामधेनव इव कामधेनवोभूवन् । अत एवानेन राज्ञा-हंयवोहंकारिणोरयस्त्रासाद्भीतेरतिस्त्रयः स्त्रियोपि सकाशाद्भीरवश्चक्रिरे ॥

अवलताभीती । गुरू चापेपुधी चारू त्यक्त्वा । इत्यत्र "इदुतोः" [२१] इत्या-दिना-ईदूतौ ॥ अस्त्रेरिति किम् । अतिस्त्रियौ । इदमेव चास्त्रिग्रहणं ज्ञापकं परे-णापीयादेशेनेत्कार्यं न बाध्यत इति । तेनातिस्त्रय ॥

अरय. । अहंयवः । बुद्धयः । धेनव. । अतिस्त्रयः । इत्यत्र "जस्येदोत्" [२२] इत्येदोतौ ॥

---

१ एफ् °तिस्त्रियो°.

---

१ एफ् °ते स्त्रीम°. २ एफ् °वलताभी.° ३ ए मुञ्चन्तीत्य°. सी डी मुञ्चन्ती°. ४ एफ् °स्तात्स्त्रीम°. ५ एफ् °रूपशा°. ६ डी °हंका°. ७ बी सी °तिस्त्रियः ८ एफ् °चारूमुद°. ९ एफ् °नेतत्का°.

मुनेरपि मुनेरस्य साधोः साधोरपि स्फुटम् ।
कीर्तये चारवे यत्नो जज्ञे वुद्ध्याः प्रकर्षतः ॥ १६७ ॥

१६७. अस्य राज्ञो वुद्ध्याः प्रकर्षतश्चारवे निष्कलङ्कायै कीर्तये स्फुटं प्रकटं यत्नोभूत् । यथा यथा लोके कीर्तिः स्यात् तथा तथावर्तिष्टेत्यर्थः । वुद्धिप्रकर्षे हेतुगर्भं विशेषणद्वयमाह । मुनेरपि सकाशान्मुनेरत्यन्तं जितेन्द्रियस्येत्यर्थः । तथा साधोरपि शिष्टादपि सकाशात्साधोः । स्याद्धिजितेन्द्रियस्य सदाचारस्य च नरस्य वुद्धिप्रकर्षः ॥

कीर्तये । चारवे । मुनेः । साधोः । मुनेः । साधोः । इत्येषु "ङित्यदिति" [२३] इत्येदोतौ ॥ अदितीति किम् । वुध्याः ॥

ते गुणा अमुना कीर्तिशुचिनात्मनि रोपिताः ।
शंभोः सख्यावपां पत्यौ द्योः पत्तौ च विधौ च ये ॥ १६८

१६८. शंभोः सख्यौ धनदेपां पत्यौ वरुणे द्योः पतौ चेन्द्रे च विधौ चेन्दौ च ये गुणा औदार्यन्यायपरमैश्वर्यसौम्यत्वादयः सन्ति ते गुणा अमुना राज्ञात्मनि रोपिताः संस्थापिताः । अत एव कीर्तिशुचिना । महापुरुषगुणधारणे हि निष्कलङ्कं यशः प्रसरति ॥

बहुपत्यौ भुवनानामसखौ रणकर्मणि ।
अस्मिन्नरपतौ सर्वान्को गुणान्वक्तुमीश्वरः ॥ १६९ ॥

१६९. भुवनानां बहुपत्यौ भुवनानां पतिर्जगन्नाथो विष्णुस्तस्मिन्नीपदूने शौर्यादिगुणैर्विष्णुतुल्य इत्यर्थः । अत एव रणकर्मणि युद्धक्रियायां

१ ए °यै च की°. २ एफ् °वतिष्ठतीत्य°. ३ बी °गर्भवि°. ४ एफ् बुद्धेः प्र°. ५ एफ् °तौ आदि°. ६ एफ् °पत्नौ व°. ७ एफ् °ताः । अ°. ८ एफ् °धारिणो हि.

नास्ति सखास्य तस्मिन्नसखौ सहायानपेक्ष इत्यर्थः । अस्मिन्नरपतौ मूलराजे वर्तमानान् गुणान् शौर्यादीन्कः पुमान्वक्तुं वर्णयितुमीश्वरः शक्तः । विष्णुसाम्येनास्य गुणानामानन्त्यान्न कोपीत्यर्थः । बहुपत्यावित्यत्रपतिशब्दो यद्यपि भुवनानामित्यपेक्षते तथाप्यस्य नित्यसापेक्षत्वेन तद्धितवृत्तिस्ततो भुवनानां बहुपत्यावित्यस्य नृपविशेषणत्वम् ॥

शुचिना । अमुना । इत्यत्र "टः पुंसि ना" [२४] इति ना ॥ पतौ । विधौ । इत्यत्र "ङिडौं" [२५] इति डौः ॥

सख्यौ । पत्यौ । इत्यत्र "केवल°" [२६] इत्यादिना-औः ॥ पताविति कश्चित् ॥ केवलग्रहणं किम् । असखौ । नरपतौ । एषु पूर्वेण डौरेव ॥ अन्ये तु बहुप्रत्ययपूर्वादपि पतिशब्दादाकारमेवेच्छन्ति । बहुपत्यौ ॥

हरेः सख्या भुवः पत्या सख्ये चास्पृहयालुना ।
स्थितं रणेमुना पत्ये वृतश्चायं जयश्रिया ॥ १७० ॥

१७०. अमुना भुवः पत्या राज्ञा रणे स्थितं न कदाचिदपि नष्टमित्यर्थः । नन्वनेन मित्रसाहाय्यान्न नष्टं भविष्यतीत्याह । सख्ये मित्रायास्पृहयालुना निरपेक्षेण । नन्वस्य मित्रमेव न भविष्यत्यतो दैवेनैवास्पृहयालुः कृत इत्याह । हरेः सख्या च । सख्ये चेति चोप्यर्थो भिन्नक्रमे । नैकयागकारणेन स्वर्गस्य तर्पकत्वादिन्द्रस्य मित्रेणापि सख्यस्योभयनिष्ठत्वादिन्द्रे मित्रे सत्यपीत्यर्थः । एतेनातिपराक्रमित्वोक्तिः । नन्वेवं तर्हि शत्रुशस्त्रज्वलनेस्य पतङ्गायितं भविष्यति । नेत्याह । अयं राजा जयश्रिया पत्ये भर्त्रे धृतश्चात्मभर्त्रीकृतश्चेत्यर्थः ॥

---

१ सी डी °त्वा यस्य°. २ सी डी °तिडौ. ३ एफ् °च्छति । ब°. ४ एफ् °त्विष्ट°. ५ एफ् °मनेक°. ६ ए °नापि प°

कान्त्या सदृग्विशः पत्युर्मधोः सख्युश्च रूपतः ।
शंभोः सख्युः श्रियः पत्युर्हीयते स्म न संपदा ॥ १७१ ॥

१७१. मधोः सख्युश्च कामस्य सदृक् राजा । शंभोः सख्युर्धनदात् । श्रियः पत्युर्नारायणात् । शिष्टं स्पष्टम् ॥

सख्या । पत्या । सख्ये । पत्ये । सख्युः । पत्युः । सख्यु । पत्युः । इत्यत्र "न नाम्दिदेत्" [२७] इति न नादेशौकारौ ॥

अस्योपायचतुःस्तन्यै बुद्ध्यै धेन्वै नु साधवे ।
शुचये कीर्तिदुग्धायै स्पृहयामास वासवः ॥ १७२ ॥

१७२. अस्य राज्ञो बुद्ध्यै धेन्वै न्वर्थात्कामधेनव इव वासवः स्पृहयामास । कामधेनुरिवैतद्बुद्धिर्ममापि भूयादित्यैच्छदित्यर्थः । यतः साधवे मनोज्ञायै । कुतः साधुत्वमित्याह । यत उपायाः सामदानभेददण्डा एव चत्वार स्तना यस्यास्तस्यै । तथा कीर्तिरेव श्वेतत्वाप्यायकत्वादिना दुग्धं यस्यास्तस्यै । बुद्ध्या हि यथौचित्यं नियुज्यमाना उपायाः स्वफलसाधकत्वाद्यशोदुग्धं प्रभुवन्ति । तथा शुचये पवित्रायै ॥

तस्याः कीर्त्या मतेस्तस्या अस्मिन्विश्वोपरि स्थिते ।
सजिष्णोरपि दैत्याजिभीर्वा भीर्निर्ययौ दिवः ॥ १७३ ॥

१७३. तस्याः कीर्त्यास्तस्या मतेः । "गम्ययपः०" [२ २.७४] इत्यादिनात्र पञ्चमी । तां शौर्यादिगुणोद्भवां कीर्तिं तां पूर्ववर्णितां मतिं च प्राप्य विश्वोपरि स्थिते विश्वत्रयोपरिवर्तिनि सर्वोत्तम इत्यर्थः । अस्मिन् राज्ञि सति दिवः स्वर्गाद्भीर्निर्ययौ । कीदृश्याः । सजिष्णोरपि जिष्णुना शक्रेण

१ सी डी °स्य च म°. २ डी °त् । शेष स्प°. ३ ए कीर्तेस्त°. ४ सी डी °तां म°. ५ ए °रिव°.

प्रभुणा सहिताया अपि दैत्याजिभीर्वा दानवरणाद्भीरोः। एतेन सर्वोत्कृष्टैः शौर्यादिगुणैर्बुद्ध्या च शक्राजय्या अपि दैत्या अनेन जिता इत्युक्तम् ॥

असिधेनोः कामधेन्वा जयाप्त्यां समितौ ग्रहात् ।
नृपपङ्क्त्या महाबुद्धेरपि क्षोभमसौ व्यधात् ॥ १७४ ॥

१७४. असौ राजा समितौ रणेसिधेनोः खड्गयष्टेर्ग्रहात् महत्यतिशयिता बुद्धिः संध्यादीनां यथौचित्येन व्यापारणगोचरा मतिर्यस्यास्तस्या अपि नृपपङ्क्त्याः क्षोभं संत्रासं व्यधात् । ननु यद्यमुनासिधेनुर्गृहीता तत्किं नृपपङ्क्तिर्महाबुद्धिरपि क्षुब्धेत्याह । यतो जयाप्त्यां विजयप्रापणे कामधेन्वा अवश्यमेव विजयदात्र्या इत्यर्थः । अथ च यस्य जयाप्त्यां जयलाभविषये कामधेन्वा ग्रहोनुग्रहः प्रसादः स्यात्स तस्मात्प्रसादात्समितौ सभायां महाबुद्धेरपि महाविदुषोपि क्षोभं करोति ॥

लम्बश्रुतेः स्निग्धदृष्ट्या अस्यातन्वां तनौ सुराः ।
जाताश्चर्या दिवः पृथ्व्यां पृथ्व्या दिवि च ते ययुः ॥१७५

१७५. ते रूपवत्त्वेन सर्वत्र प्रसिद्धाः सुरा दिवः स्वर्गात्पृथ्व्यां ययुः । पृथ्व्याश्च दिवि ययुः । यतो लम्बश्रुतेः स्कन्धविश्रान्तकर्णस्य स्निग्धदृष्ट्या अरूक्षेक्षणस्योपलक्षणत्वात्सुरूपसश्रीकसर्वाङ्गावयवस्यास्य राज्ञोतन्वां विस्तीर्णायां समचतुरस्रसंस्थानायामित्यर्थः । तनौ देहविषये जाताश्चर्या अत्यद्भुतरूपश्रीकत्वादेतन्मूर्तिदर्शनाय देवा अपि गतागतं चक्रुरित्यर्थः ॥

एफ् जयाप्ता.

१ एफ् °नौ समामेसि°. २ एफ् °ग्रहणात्. ३ सी डी संशय. ४ एफ् यद्यमु°. ५ डी °धवा य°. ६ सी °गांपवगांत्पृ°. ७ ए °तुश्रम°.

पृथ्व्या वध्वाः करं गृह्णँल्लक्ष्म्यै वध्वायमं सुखः ।
लुब्धोन्यकीर्तिवध्वां च परवध्वाः पराङपि ॥ १७६ ॥

१७६. सुगमः । नवरं यो वध्वन्तरस्य करं गृह्णात्युद्वाहं करोति स पूर्ववध्वा दुःखायैव स्यात् । योपि परवध्वाः पराङ्मुखः स्यात् सोन्यवधूं नेच्छतीति विरोधः । तद्भङ्गस्त्वेवम् । पृथ्व्या वध्वाः करं राजग्राह्यं भागं गृह्णन्सन् लक्ष्म्यै वध्वै सुखः सुखकार्येभूत् । लक्ष्म्या वर्धकत्वात् । तथा परवध्वाः पराङ् पराङ्मुखोन्यकीर्तिवध्वां शत्रुकीर्तिकान्तायां लुब्धश्चाभूत् । अपिर्गृह्णन्नित्यत्रापि योज्यः ॥

ग्रामण्येपि खलप्वे नु निस्पृहोसौ परस्त्रियै ।
सुलक्ष्म्यै च सुवध्वै च न स्म कस्मै चिदीर्ष्यति ॥१७७॥

१७७. असौ राजा शोभना अतुच्छत्वात्प्रधाना लक्ष्म्यो धनधान्यादिसंपदो यस्य तस्मै सुलक्ष्म्यै च तथा शोभना रूपलावण्याद्यन्विता वधूर्भार्या यस्य । केचित्तु नित्यदितां ङ्यूङन्तानामेव कचमिच्छन्ति तन्मतेत्र कजभावः । तस्मै सुवध्वै च कस्मै चित्कस्मायप्येकस्मै नेर्ष्यति नासूयति । असहमानो रम्यतमामपि परस्य लक्ष्मीं वधूं च न गृह्णातीत्यर्थः । यतो ग्रामं नयति ग्रामणीर्ग्रामपतिर्महर्द्धिक इत्यर्थः । तस्मै ग्रामण्येपि खलं पुनाति यस्तस्मै खलप्वे नु दासायेव दरिद्रायेवेत्यर्थः । अस्पृहयालुर्यथा धनेच्छया दरिद्रं न कोपीच्छति तथायमीश्वरमपीत्यर्थः । तथा परस्त्रियायन्यभार्यायै ग्रामण्येपि रूपलावण्यादिभिरुत्कृष्टायामपि खलप्वे नु कर्मकर्यायिवास्पृहयालुरनभिलाषुकः ॥

बुध्यै शुचये । कीर्त्याः मतेः । नृपपङ्क्त्याः महाबुद्धेः । जयाख्यां समितौ ।

१ सी °वधूर्नेच्छ°. डी °वधूर्नेच्छ°. २ एफ् °च्छतिवि°. ३ एफ् °कार्योभू°. ४ ए एफ् °पि गृह्न°. ५ एफ् °नातीति. ६ सी डी °येवेत्य°. ७ सी एफ् °र्यो म°. ८ सी डी एफ् °ङ्क्त्या म°

धेन्वै साधवे । भीर्वाः सजिष्णोः । कामधेन्वाः असिधेनोः । अतन्वां तनौ । इत्यत्र "स्त्रिया ङिताम्" [२८] इत्यादिना तत्संबन्धिनामन्यसंबन्धिनां वा ङितां वा दैदासदासदामः ॥ अन्ये तु पुरुषस्य समासार्थत्वे सति नेच्छन्ति । तन्मते लम्बश्रुतेरस्येत्येव स्यात् न तु लम्बश्रुत्या इति ॥ अन्यस्तु पुरुषस्यैव समासार्थत्व इच्छति न स्त्रियाः । तन्मते स्निग्धदृष्ट्या अस्येत्यत्रैव स्यात् । न तु स्निग्धदृष्टे स्त्रिया इति ॥ इदुत इत्येव । ढिवः ॥

लक्ष्म्यै । पृथ्व्याः । पृथ्व्याः । पृथ्व्याम् । वध्वै । परवध्वाः । वध्वाः । वध्वाम् । सुलक्ष्म्यै । सुवध्वै कस्मै चित् । इत्यत्र "स्त्रीदूतः" [२९] इति तत्संबन्धिनामन्यसंबन्धिनां वा ङितां दैदास्दास्दामः ॥ स्त्रिया इत्यनुवर्तमाने पुनः स्त्रीग्रहणं नित्यस्त्रीविषयार्थम् । तेनेह न भवति । ग्रामण्ये खलप्वे परस्त्रियै ॥ ईदूत इति किम् । दिवः । दिवि ॥

भुवि श्रियै धियै वासो ह्रियाः स्थानं भियोपदम् ।
द्युभुवा आपतत्स्त्रीणां ललासैष भ्रुवो भ्रुवाम् ॥ १७८ ॥

१७८. दिवो भूर्द्युभूस्तस्या द्युभुवाः स्वर्गभूमेः सकाशाद् भुवि मर्त्यलोक आपतत्स्त्रीणामेतदद्भुतरूपादिगुणश्रीदिदृक्षयागच्छद्देवाङ्गनानां भ्रुव एकस्या भ्रुवः सकाशाद् भ्रुवामपरस्यां भ्रुव्येष राजा ललास विक्रीड । अत्र भ्रूशब्देन तन्निकटं चक्षुरुपलक्ष्यते । एकस्माच्चक्षुषोपरस्मिंश्चक्षुषि ललास । सर्वाभिरपि देवीभिरहमहमिकयासौ दृष्ट इत्यर्थः । यतः श्रियै रूपादिलक्ष्म्यै धियै बुद्धये च वासः । तादर्थ्ये चतुर्थीयम् । श्रियो बुद्धेश्च गृहमित्यर्थः । तथा ह्रिया लज्जायाः स्थानम् । एतेन कुलीनत्वोक्तिः । तथा भियोपदमस्थानम् । एतेन शूरत्वोक्तिः ॥

---

१ एफ् °ता वा. २ एफ् °ता दै° ३ एफ् अस्यैत्य°. ४ एफ् °ध्वे व°. ५ ए एफ् °यै इदुत. ६ एफ् दिवि ॥. ७ सी भूस्त°. ८ एफ् °कटचक्षुरूप ल°. ९ सी डी °रह°.

यवक्रियेस्यारिस्त्रियै भिल्ला नद्यां कटप्रुवे ।
अप्रध्यै कूपवर्षाभ्वायिवाधावन्त निष्कृपम् ॥ १७९ ॥

१७९. अस्य राज्ञोरिस्त्रियै शत्रुभार्यायै निष्कृपं निर्दयं यथा स्यादेवं भिल्ला मेदा अधावन्त ग्रहणार्थं धाविताः । कीदृश्यै । यवा हि कदन्नत्वात्समर्घतरा लभ्यन्त इति यवानेव क्रीणाति या तेस्यायतिनि स्त्रायायित्यर्थः । तथा मूलराजेन पत्यौ हते भयेनारण्ये पलायमानत्वान्नद्यां नदीमध्ये नावाद्यसंपत्त्या कटेनैव वीरणादितृणमयेन प्रवते तरति या तस्यै तथा प्रकर्षेण ध्यायति प्रधीर्न तथा या तस्याग्प्रध्यै । हा दैव कथं भविष्यामीत्यार्तध्यानपरायायित्यर्थः । तथा कूपवर्षाभ्वायिव यथा कूपमण्डूकी कूपादन्यत्र किंचिज्जानाति तथा राज्ञीत्वात्स्वभवनादन्यन्मार्गोमार्गादिकमजानत्यायित्यर्थः । कूपमण्डूक्यायपि भिल्ला निष्कृपं मारणाय धावन्ति । भिल्ला हि दुर्दुरानपि मारयन्ति ॥

श्रियै श्रियै । सुभुवाः सुभुवः । ह्रियाः ह्रियः । भ्रुवा भ्रुवि । इत्यत्र "वेयुवोस्त्रिया." [३०] इति वा ङेदासृदासृदाम. । इयुव इति किम् । अप्रध्यै । वर्षाभ्वै । पूर्वेण नित्यमेव ॥ अस्त्रिया इति किम् । अरिस्त्रियै ॥ स्त्रीदूत इत्येव । यवक्रियै कटप्रुवेरिस्त्रियै ॥

असौ निरुपमश्रीणां नानारूपश्रियामिव ।
स्त्रीणां नतभ्रुवां भ्रूणां रक्षाचार्यकमाचरत् ॥ १८० ॥

१८०. नतभ्रुवां नम्रभ्रूणां स्त्रीणां संबन्धिनीनां भ्रूणामसौ राजा र-

---

१ एफ् कृटव°.

---

१ ° डी °ह्याम्लेच्छा अ°. २ सी डी तस्यै । इति°. ३ एबी °निम्ना°. ४ एफ् कटकेनै°. ५ एफ् °न्मार्गोन्मार्गादि°. ६ एफ् °ये भ्रु°. ७ सी डी °स्त्रियामिति. ८ एफ् °वे ॥.

ङ्गाचार्यकं नटोपाध्यायत्वमाचरंश्चक्रे। एवं सौन्दर्यतर्जितस्मरं दृष्ट्वा नारीणामभिलाषातिशयेन मुहुर्मुहुर्भ्रुव उल्लसन्ति। ततो यथा रङ्गाचार्यो नायिका नर्तयति तथायं लीलावतीभ्रुवो नर्तितवानित्यर्थः। कीदृशीनाम्। निरुपमा सर्वोत्तमा श्रीः सौन्दर्यादिलक्ष्मीर्यासां तासामत एव नानारूपश्रियामिव। एवं ज्ञायते नैताः स्त्रियः किं तर्ह्यनेकमूर्तयो लक्ष्मीदेव्यस्तासाम्॥

श्रीणां श्रियाम्। भ्रूणां भ्रुवाम्। इत्यत्र "आमो नाम्वा" [३१] इति वा नाम्॥ अस्त्रिया इत्येव। स्त्रीणाम्॥

याचकानां महतीनामाशानामेष पूरकः।
ग्रामण्यां सोमपां नित्यं तद्वधूनां च पूजकः॥ १८१॥

१८१. याचकानां द्विजादीनां संबन्धिनीनां महतीनां राज्यादिलाभविषयत्वाद्बृहतीनामाशानां मनोरथानां पूरकोभूत्तथा ग्रामण्यां व्रतनियमादिभिः प्रकृष्टानां सोमपां वल्लीरसपायिनां यायजूकभेदानां तद्वधूनां च सोमपाभार्याणां च नित्यं पूजकोभूत्॥

याचकानाम्। आशानाम्। महतीनाम्। वधूनाम्। इत्यत्र "ह्रस्वापश्च" [३२] इति नाम्॥ ह्रस्वापश्चेति किम्। सोमपाम्। ग्रामण्याम्॥

धामाष्टानां धीगुणानां षण्णां जेतान्तरद्विषाम्।
गुणानामतिपञ्चानां भूश्चतुर्णां छन्दसामसौ॥ १८२॥

१८२. असौ राजा षण्णां क्रोध १ मान २ मद ३ स्मर ४ लोभ ५ संमदाना ६ मन्तरद्विषां जेताभूत्। अत एवाष्टानां शुश्रूषा १ श्रवण २-

---

१ बी सी एव सौ°. एफ् एवं सौ°. altered to एव सौ°. २ ए °दृशाना. ३ सी डी °यामित्ये°. ४ एफ् इत्येत्यादिना नाम्. ५ ए °ण्या॥ ६ सी° र४स°. ७ एफ् °भ५रणांणामान्त°.

ग्रहण ३ धारण ४ ऊह ५ अपोह ६ अर्थविज्ञान ७ तत्वज्ञानाना८धीगुणानां धाम स्थानमभूत् । अत एव च पञ्चातिक्रान्ता ये[1] तेषामतिपञ्चानां षण्णां संधि १ विग्रह २ यान ३ आसन ४ द्वैधीभाव ५ संश्रयाणां ६ गुणानां भूर्यथौचित्यं प्रवर्तनादुत्पत्तिस्थानमभूत् । तथा चतुर्णामृग् १ यजुः[2] २-साम ३ अथर्वणानां ४ छन्दसां वेदानां च भूः पाठेनाध्येत्रध्यापकसाहाय्यकरणादिना चोत्पत्तिस्थानमभूत् । निगृहीतान्तरशत्रुर्हि सुस्थचित्तत्वाद्बुद्धिपात्रं स्यात् । धीमांश्च बुद्धिप्रकर्षेण संध्यादीन् सम्यग् नियुङ्क्ते शास्त्रपाठादि च करोति ॥

चतुर्णाम् । षण्णाम् । इत्यत्र "संख्यानां र्ष्णाम्" [३३] इति नाम् ॥ तत्संबन्धिविज्ञानादिह न स्यात् । अतिपञ्चाम् ॥ संख्यानामिति किम् । द्विपाम् ॥ बहुवचन व्याप्त्यर्थम् । तेन भूतपूर्वनान्ताया अपि । अष्टानाम् । एतेनैव नान्तसंख्याया[4] मूलोदाहरणमपि सूचितम् ॥

अतित्रयाणां वर्णानामतित्रीणामुदन्वताम् ।
प्रभुरेष त्रयाणां च पुमर्थानां प्रवर्तकः ॥ १८३ ॥

१८३. एष राजा त्रयाणां पुमर्थानां प्रवर्तकस्त्रीन्धर्मार्थकामान्यथोचितं प्रयुञ्जानः सन् प्रभुरभूत् । केषाम् । अतित्रयाणां त्रीनतिक्रान्तानां चतुर्णां वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणां न्यायेन पालनात्तथा । अतित्रीणां चतुर्णामुदन्वतां च पूर्वपश्चिमदक्षिणोत्तराब्धीनां च चतुर्दिग्विजयात् ॥ त्रयाणां चेत्यत्र चः समुच्चयार्थो भिन्नक्रमे ।

त्रयाणाम् । इत्यत्र "त्रेस्त्रयः" [३४] इति नाम् त्रेस्त्रयादेशश्च ॥ तत्संबन्धिविज्ञानादिह न स्यात् । अतित्रीणाम् ॥ अतत्संबन्धिनः स्यादित्येके । अतित्रयाणाम् ॥

---

१ ए कः ॥ १८३ ॥ स्त्रीन्ध°.

---

१ सी डी येषा°. २ सी °जुः२अ°. ३ एफ् °पूर्वायाना°. ४ एफ् °ख्याम्°.

**मुनेः साधोश्च सत्कर्ता मदं हर्ता कले रिपोः ।**
**अद्भुतैरेष विभवैर्द्योर्विशेषं चकार गोः ॥ १८४ ॥**

१८४. एष राजाद्भुतैराश्चर्यकारिभिर्विभवैः सदा प्रवर्तमानैर्महोत्सवादिलक्ष्मीभिः कृत्वा द्योः स्वर्गात्सकाशाद्गोर्भूमेर्विशेषमतिशयं चकार। ननु कलौ प्रतिक्षणं पदार्थानां हीयमानत्वात्कुतोद्भुतविभवसंभव इत्याह। रिपो. शत्रुभूतात्कलेः कलिकालात्सकाशान्मदं सांप्रतमनीतिरूपा मदाज्ञैव सर्वत्रास्खलितेत्येवं गर्वं हर्ता । यतो मुनेर्निःसङ्गस्य साधोश्च शिष्टजनस्य सत्कर्ता रक्षादानादिना सन्मानकः। यथा यथासौ मुनीन्साधूंश्च सच्चक्रे तथा तथा कलिः क्षीणस्ततश्च महर्द्ध्या भूः स्वर्गादपि विशिष्टाभूदित्यर्थः ॥

कलेः । मुने. । रिपोः । साधोः । द्योः । गोः । इत्यत्र "एदोद्भ्याम्°" [३५] इत्यादिना ङसिङसो रेफः ॥

**पत्युर्जयश्रियः पत्युः सख्युः सख्युर्बिडौजसः ।**
**एनोलून्युरुमाभर्तुर्नन्तुरस्मादभून्नयः ॥ १८५ ॥**

१८५. अस्मान्नृपान्नयो न्यायोभूत् । यतः पतिमिच्छति क्यनि दीर्घत्वे पतीयति क्विपि यलोपे च पतीस्तस्याः पत्युः स्वामिनमिच्छन्त्या जयश्रिय. पत्युः शत्रूच्छेदेन नायकात्। एतेन सैन्यकोशाद्युत्कृष्टसंपदा महर्द्धिकत्वमुक्तम् । तथैनोलून्युः पूर्ववत्क्यनि क्विप्येनोलूर्नि पापच्छेदमिच्छतोत एव सख्युः सखायमिच्छतो विडौजस इन्द्रस्य सख्युर्यागा-

---

१ एफ् 'न. । म'. २ एफ् दाभू°. ३ एफ् °न्मन्द सा°. ४ सी डी सम्मान°. ५ सी डी 'भासौ ६ एफ् 'त्वे क्वि°. ७ सी डी °पि य्वोः प्वय् व्यञ्जने लुक् र्तात्व°. ८ एफ् क्विपि यलोपे लूनि. पा°. ९ डी °लूनीस्तस्यैनोलून्युः पा°.

द्दिधर्मानुष्ठानविधानेनाह्लादकत्वान्मित्रात्तथोमाभर्तुर्हरस्य नन्तुरेतेन विशेषणत्रयेणातिधार्मिकत्वमुक्तम् । महर्द्धिको धार्मिकश्च न्यायमेव करोति ॥

खि । सख्युरस्मात् ॥ ति । पत्युरस्मात् ॥ खी ती । सख्युर्विढौजसः । पत्युर्जयश्रियः । इत्यत्र "खितिखीतीय उर्" [३६] इति ङसिङसोरुर् ॥ लून्युः । इत्यत्र "क्तादेशोपि" [२ १.६१] इति नस्यासत्वात्तीरूपत्व उर् ॥

नन्तुरस्मात् । भर्तुः । इत्यत्र "ऋतो डुर्" [३७] इति डुर् ॥

सुधास्वसारं वोढारमतिनप्तारमुष्णगोः ।
अमुं भूपप्रशास्तारं लब्ध्वा मुमुदिरे प्रजाः ॥ १८६ ॥

१८६. अमुं भूपप्रशास्तारं राजाधिराजं लब्ध्वा प्रजा मुमुदिरे । यतः सुधायाः स्वसा भगिनी लक्ष्मीर्द्वयोरप्येकस्मिन्नब्धावुत्पन्नत्वात्तां वोढारमिव वोढारं सम्यक्प्रजापालनादिना विष्णुतुल्यमतएवोष्णगो रवेर्नप्तारं पौत्रमतिक्रान्तम् । सूर्यस्य पुत्रो मनुस्तस्य पुत्र इक्ष्वाकुः सूर्यस्य पौत्रस्तस्मादपि नीतिप्रजापालनादिनाधिकमित्यर्थः । अथवातिनप्तारमतिशयितं पौत्रं लब्ध्वा । प्रकृष्टपौत्रजन्मनि प्रजा लोका मोदन्ते ॥

शंभोः क्षत्तारमाज्ञायां त्वष्टारमिव कौशले ।
अमुं होतारः पोतारो नेष्टारस्तुष्टुवुः क्रतौ ॥ १८७ ॥

१८७. होतारः पोतारो नेष्टारश्च ऋत्विग्विशेषाः क्रतौ यज्ञेमुं नृपं तुष्टुवुः । यतः शंभोर्हरस्याज्ञायां विषये क्षत्तारं प्रतीहारमिव । यथा शंभो-

---

१ एफ् °तारो पो°.

---

१ एफ् °येण धा°. २ सी डी °कश्च. ३ एफ् °ढार स°. ४ सी डी °पि प्र°. ५ एफ् °लोको मोदते ॥.

णाज्ञां नन्दिप्रतीहारः[1] करोति[2] तथा शंभूक्तयज्ञादिविधिरूपाज्ञायाः कारकमित्यर्थः । तथा कौशले यागादिविधिविषये नैपुणे त्वष्टारमिव । यथा त्वष्टा वर्धकिः[3] शिल्पक्रियाकुशलः स्यात्तथा यागादिधर्म्यक्रियायां कुशलमित्यर्थः । एवं चास्य यागादिविषयं क्रियाज्ञानं चोक्तम् ॥

पितरः सन्तु संतुष्टा देवाश्च त्वयि यष्टरि ।
चण्डिकामात नन्देति प्रस्तोतारोब्रुवन्निमम् ॥ १८८ ॥

१८८. प्रस्तोतार ऋत्विग्विशेषा इमं नृपमब्रूवन् । कथमित्याह । चण्डिका चाण्डालदेवीनाम्नी[4] माता यस्य । यद्वा चण्डिका गौरी प्रतिपालिकात्वान्माता[5] यस्य । तस्य संबोधनं हे चण्डिकामात त्वयि विषये पितरः पूर्वजा देवाश्च संतुष्टाः सन्तु । यतो यष्टरि[6] यागैः पितृदेवानां पूजके । ततश्च नन्देति ॥

वोढारम् । स्वसारम् । नप्तारम् । नेष्टारः । त्वष्टारम् । क्षत्तारम् । होतारः[7] । पोतारः । प्रशास्तारम् । इत्यत्र "तृस्वसृ°" [३८] इत्यादिना-आर् ॥ तृशब्दस्यार्थवतो ग्रहणेन प्रत्ययग्रहणान्नप्त्रादीनामव्युत्पन्नानां संज्ञाशब्दानां तृशब्दस्य ग्रहणं न स्यादिति तेषां पृथगुपादानम् । इदमेव च ज्ञापकम् "अर्थवद्ग्रहणे नानर्थकस्य" [न्या० सू० १४] ग्रहणं भवतीति ॥ व्युत्पत्तिपक्षे तृग्रहणेनैव सिद्धे नप्त्रादिग्रहण नियमार्थं तेनान्येषामौणादिकानां न स्यात् ॥ पितरः ॥ केचित्तु प्रस्तोतृप्रशास्तृउद्गातृप्रतिहर्तृप्रतिशास्तृशब्दानामौणादिकानामप्यारं मन्यन्ते । प्रस्तोतारः[8] ॥

पितरः । यष्टरि । इत्यत्र "अर्डौं च" [३९] इत्यर् ॥

चण्डिकामात । इत्यत्र "मातुर्मात°" [४०] इत्यादिना मात इत्यकारान्तादेशः ॥

---

१ बी सी 'प्रतिहा°'. २ एफ् °ति यथा. ३ सी °किः शल्यक्रि°. ४ ए चाण्डल°. ५ एफ् 'पालकत्वा°. ६ एफ् °रि योगैः. ७ बी °रः प्र°. ८ सी °रः प्र°.

मातः क्षितेम्ब हे लक्ष्मि शंभो तद्वधु चण्डिके ।
अम्बाडे गोत्रदेवि क स्थेत्यस्य प्रालपन्द्विषः ॥ १८९ ॥

१८९. स्पष्टः । नवरं तद्वधु हे गौरिप्रिये । अम्बाडे मातः । इति प्रालपन् । अनेन रणे पातिता द्विषः क्षित्यादिदेवताः स्मरन्त एवमकरुण-मित्यर्थः ॥

भटाग्रणीः सतां मित्र रूपेण परमे नृप ।
त्वया श्रीमन् धृतोर्वीत्यूचेमुं सप्रेयसी जनः ॥ १९० ॥

१९०. सुगमः । किं तु परमश्चासाविश्च परमेः । तस्य संबोधनं हे परमे । रूपेण कृत्वा प्रकृष्टकाम । तथा सह प्रेयसीभिर्वर्तते यः स सप्रेयसी सभार्यो लोकः ।

मातः । क्षिते । शंभो । इत्यत्र "ह्रस्वस्य गुणः" [ ४१ ] इति गुणः ॥

ह्रस्वस्येति किम् । लक्ष्मि । तद्वधु ॥

चण्डिके । इत्यत्र "एदापः" [ ४२ ] इत्येत् ॥

नित्यदित् । देवि । लक्ष्मि । तद्वधु ॥ द्विस्वरोम्बार्थ । अम्ब । इत्यत्र "नित्यदित्०" [ ४३ ] इत्यादिना ह्रस्वः ॥ नित्यदिदिति किम् । भटाग्रणीः । अम्बार्थानां द्विस्वरविशेषणं किम् । अम्बाडे ॥ आप इत्येव । मातः ॥

नृप । अम् । मित्र । परमे । इत्यत्र "अदेतः०" [ ४४ ] इत्यादिना सेस्तदा-देशस्यामश्च लुक् ॥

---

१ पफ़ तद्वधु.

---

१ सी डी पफ़ हरिप्रि°. २ पफ़ °तः अति°. ३ पफ़ ° स्वस्येति न्हस्वः । न्ह°. ४ पफ़ °रार्थ. ५ पफ़ °द्विद्विस्वरे त्या°. ६ प पफ़ °दिति.

उर्वी । सप्रेयसी । धृता । श्रीमन् । इत्यत्र "दीर्घङ्याप्°" [ ४५ ] इत्यादिना सेर्लुक् ॥ एभ्य इति किम् । जनः ॥

अमुम् । इत्यत्र "समानादमोत°" [ ४६ ] इत्यमोतो लुक् ॥

चतुर्णा छन्दसां षण्णामङ्गानामेष वेदिता ।
विद्यानां च चतसृणां शक्तीनां तिसृणां गृहम् ॥१९१॥

१९१. एष राजा चतुर्णां छन्दसां वेदानां तथा षण्णामङ्गानां शिक्षा-१ कल्प २ व्याकरण ३ छन्दो ४ ज्योति ५ निरुक्तीनां ६ च वेदितार्थ-तो ज्ञाताभूत्तथा चतसृणां विद्यानामान्वीक्षिकी १ त्रयी २ वार्ता-३ दण्डनीतीनां ४ गृहं तत्तत्पुस्तकसंग्रहादिनाधारोभूत् । तथा तत्तच्छास्त्रो-क्तार्थानुसारेण प्रवृत्त्या तिसृणां शक्तीनां प्रभुत्वशक्ति १ उत्साहशक्ति-२ मन्त्रशक्तीनां ३ गृहं स्थानमभूत् । एतेन सर्वशास्त्राणि ज्ञातानि संगृहीतानि । तदुक्ताचरणाच्च फलप्राप्त्यास्य तानि सफलान्यभूवन्नित्यर्थः ॥

अङ्गानाम् । शक्तीनाम् । इत्यत्र "दीर्घो नामि°" [ ४७ ] इत्यादिना दीर्घः ॥ अतिसृचतसृप्र इति किम् । तिसृणाम् । चतसृणाम् । षण्णाम् । चतुर्णाम् । नामीति किम् । छन्दसाम् ॥

नृणामीशेत्रारिनृणां शक्तीः प्राणांश्च हर्तरि ।
न कोपि चतुरह्न्याजौ त्र्यह्ने ह्यहनि वापतत् ॥ १९२ ॥

१९२. अत्रास्मिन्नृणामीशे नृपेरिनृणां शक्तीः प्रभुत्वोत्साहमन्त्ररूपा बलानि वा प्राणांश्च हर्तर्यपनयनशीले सत्याजौ रणे कोपि शत्रुर्नापतन्न दुढौके । कीदृश्याजौ । चतुर्ष्वहःसु भव इति विग्रहे "भवे" [ ६. ३. १२३ ]

---

१ ए चतसृणां छं°. २ ए एफ् °ति ५ निर°. ३ एफ् तेच°. ४ एफ् °नि न°. ५ एफ् °न्यभव°. ६ ए °नि च प्रा°.

इत्यविषये "सर्वांश०" [ ७. ३. ११७ ] इत्यादिनाट् । अह्लादेशश्च । ततो "द्विगोरनपत्ये०" [ ६. १. २४ ] इत्यादिनाणो लुपि चतुरह्नस्तस्मिंश्चतुरह्नि । एवं त्र्यह्ने त्र्यह्नि वा स्तोककालीनेपीत्यर्थ. । आजेः प्रयोगः पुंस्यपि दृश्यते । तथा च माघे ।

वाह्नाजनि मानासे साराजावनमा ततः । [१९.३३] इति ॥

असायाह्नेपि सायाह्नेविपोस्वाप्सीन्न जातु चित् ।
अदीप्यत प्रतापेन सायाह्नि हुताशवत् ॥ १९३ ॥

१९३. यथा सायाह्नि संध्याकाले निषिद्धत्वान्न कोपि स्वपिति तथैष राजासायाह्नेप्यसंध्यायामपि स्वापार्हे कालेपीत्यर्थः । जातु चित्कदाचिदपि नास्वाप्सीत् । सदापि प्रजापालने जागरूकोभूदित्यर्थः । तथा यथा सायाह्नि हुताशोग्निः प्रतापेन दीप्त्या कृत्वा दीप्यते तथैष प्रतापेन तेजसा कृत्वादीप्यत ॥

पैत्रे त्र्यह्नि दैवतेपि त्र्यह्ने ब्राह्मे त्र्यहन्यपि ।
गुणानां वर्ण्यमानानां कोप्यन्तं नास्य लब्धवान् ॥१९४॥

१९४. सुगमः । किं तु पितॄणामयं पैत्रस्तस्मिन् । विगतमह्नो त्र्यह्नस्तस्मिन् त्र्यह्नि गतदिने । दैवते दैवसंबन्धिनि । ब्राह्मे विधातृसंबन्धिनि । पैत्रत्र्यहादि प्रमाणं चेदम् ।

---

१ एफ् °ह ॥ १९३ ॥ म°. २ बी पैत्र्ये त्र्य°.

---

१ सी डी °थापि मा°. २ एफ् °सेसरा°. ३ ए बी डी एफ् °मानतः. ४ एफ् स्वापेर्हे. ५ एफ् °प्सीदित्यर्थः । स°. ६ ए °था सा°. ७ सी एफ् °प्यते ॥ पै°. ८ ए °ते देव°. ९ डी ब्राह्म्ये वि°.

भवेत्पैत्रं त्वहोरात्रं मासेनाब्देन दैवतम् ।
दैवे युगसहस्रे द्वे ब्राह्ममिति ॥

एतद्गुणानां वर्ण्यमानानां पैत्रदैवतब्राह्मदिनान्यप्यतिक्रामन्ति न तु ते पूर्यन्त इत्यर्थः ॥

नृणाम् नृणाम् । इत्यत्र "नुर्वा" [ ४८ ] इति वा दीर्घः ॥

प्राणान् । इत्यत्र "शसोता°" [ ४९ ] इत्यादिना शसोता सह दीर्घः पुंसि शसः सस्य नश्च । पुल्लिङ्गाभावे तु दीर्घत्वमेव । शफीः ॥

चतुरह्नि । [1]द्व्यहनि । सायाह्नि । सायाहनि । [2]त्र्यह्नि । त्र्यहनि । इत्यत्र "संख्यासाय°" [ ५० ] इत्यादिनाह्नस्याहनादेशो वा । अहनादेशे [3]तु "ईङौ वा" [ २. १. १०९ ] इति वानोस्य लुक् । पक्षे[4] त्र्यह्ने । असायाह्ने । त्र्यह्ने ॥

अष्टाभ्यो दिग्गजेभ्यश्चाष्टभ्योद्रिभ्यश्च धूर्नियाम् ।
अत्यष्टानोत्र निधयोत्यष्टाश्चाभिमुखा ग्रहाः ॥ १९५ ॥

१९५. अत्र नृपविषयेष्टावतिक्रान्ता अत्यष्टानो नव महापद्म १ पद्म २ शङ्ख ३ मकर ४ कच्छप ५ मुकुन्द ६ कुन्द ७ नील ८ चर्चाख्या ९ निधय. । तथात्यष्टा नव । अर्क १ सोम २ मङ्गल ३ बुध ४ गुरु ५ शुक्र ६ शनैश्चर ७ राहु ८ केतवो ९ ग्रहा अभिमुखा अनुकूला अभवन् । यतः किंभूते । अष्टाभ्य ऐरावत १ पुण्डरीक २ वामन ३ कुमुद ४ अञ्जन ५ पुष्पदन्त ६ सार्वभौम ७ सुप्रतीकेभ्यो ८ दिग्गजेभ्यश्च । तथाष्टभ्यो विन्ध्य १ पारिजात २ शुक्तिमत् ३ ऋक्षपर्वत ४ माहेन्द्र-

१ एफ् °त्यष्टा°.

१ सी डी एफ् °द्व्यहनि°. २ एफ् °त्र्यह्नि°. ३ सी डी °त्रि°. ४ सी डी °ह मा°. ५ एफ् °नि त्र्यह°. ६ एफ् °क्षे अह्ने. ७ डी °पतिवि°. ८ एफ् °नि७°. ९ सी डी अनु°. १० सी डी °न् । किं°.

५ सद्य ६ व(म ?)लय ७ हिमवद्भ्यो ८ द्रिभ्यश्चं कुलाचलेभ्यश्च सकाशात्स-म्यक्पालनया भूभारस्यात्मनि निक्षेपाद्धुरं भूभारं नयत्यात्मानं प्रापयति यस्तस्मिन्धूर्नियां सकलभूभारधर इत्यर्थः। अष्टभिर्दिग्गजैः कुलाचलैश्च भूध्रियत इति कविरूढिः। अथ च यो धूर्नीः कार्यप्राग्भारकरणक्षमः स्यात्तस्मिन्सर्वोप्यनुकूलः स्यादिति ॥

नियाम्। इत्यत्र "निय आम्" [ ५१ ] इत्याम् ॥

अष्टाभ्य.। अष्टभ्य·। अत्यष्टाः। अत्यष्टानः। इत्यत्र "वाष्टन आः स्यादौ"[५२] इति वा-आकारः ॥

अष्टावष्ट तथात्यष्टावस्य भावान्विजानतः ।
कीर्त्यात्यष्टौ कृताः क्ष्मांशा दिशोष्टाष्टौ नगाः सिताः॥१९६॥

१९६. अस्य राज्ञः कीर्त्या सिताः श्वेताः कृताः। क इत्याह। अष्टा-वतिक्रान्ता अत्यष्टौ नवेन्द्रद्वीपं १ कशेरुमत् २ ताम्रपर्ण ३ गभस्ति-मन ४ नागद्वीप ५ सौम्य ६ गन्धर्व ७ वरुण ८ कुमारिद्वीपाख्याः ९क्ष्मांशा पृथ्वीखण्डानि। तथाष्टावैन्द्र्याग्नेयीयाम्यानैर्ऋतीवारुणीवाय-व्याकौबेर्यैशान्यो दिशः। तथाष्टौ नगाः कुलाचलाः। यतोष्टौ तथाष्ट तथा-त्यष्टौ नव। सर्वसंख्यया पञ्चविंशतिं भावांस्तत्त्वानि विजानतो वेदितुः। सांख्यमते हि पञ्चविंशतिः पदार्था वर्ण्यन्ते। तथाहि सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः १ तदुद्भूतं महत्तत्त्वं २ तस्मादहंकारः ३ तस्माच्च स्पर्शन ४ रसन ५ घ्राण ६ चक्षुः ७ श्रोत्र ८ नामानि पञ्च बुद्धी-न्द्रियाणि। पायु ९ उपस्थ १० वचः ११ पाणि १२ पादा-१३ ख्यानि पञ्च कर्मेन्द्रियाणि। तथा मनः १४। तथा रूप १५ रस-

१ एफ़ °श्च स°. २ ए °ति रू°. ३ एफ़ अत्यष्टान.। इ°. ४ ए सी डी °ति आ° ५ सी डी °प १ सकेरु°. ६ बी °मारद्वी°. ७ ए एफ़ °नैऋती°. ८ सी डी एफ़ °शति भा°. ९ सी डी एफ़ °तिप°. १० सी डी° णि म°.

१६ गन्ध १७ स्पर्श १८ शब्द १९ संज्ञानि पञ्च तनुमात्राणि । इति षोडशको गणः । तनुमात्रोद्भूतानि तेजो २० जल २१ पृथ्वी २२ नभो-२३ वायु २४ संज्ञानि पञ्चभूतानि । अकर्ता विगुणो भोक्ता चात्मा २५ चेति । सांख्यमते पञ्चविंशतितत्त्वव्यतिरिक्तमन्यंजगन्नास्ति । ततश्च सकलजगत्स्वरूपज्ञस्येत्यर्थः । एवंविधस्य च कीर्तिः सर्वत्रापि प्रसरति ॥

अष्टौ नगाः । अष्टौ भावान् । इत्यत्र "अष्ट और्जस्शसोः" [ ५३ ] इत्यौः ॥ कृतात्वस्य निर्देशादिह न स्यात् । अष्ट दिशः । अष्ट भावान् । अतत्संबन्धिनोर-पीच्छन्त्येके । अत्यष्टौ क्ष्मांशाः । अत्यष्टौ भावान् ॥

त्रातुं षडष्ट भुवनान्युचिते ततीह
स्थामान्यधुर्यति हराः किल पञ्च षट् च ।
तूणे भृशं जयकृते दधतोस्य चास्तां
मन्ये हयद्विपबले परिवारमात्रम् ॥ १९७ ॥

१९७. किलेति संभावनायाम् । पञ्च षट् च हरा एकादश रुद्रा राजि यति यावन्ति स्थामान्यभवंस्तति तावन्ति स्थामानि बलानीह राज्ञि न्यधुः । स्वकीयानि सर्वाण्यपि बलान्यास्मिंस्थापितवन्त इत्यर्थः । यतः षडष्ट भुवनानि भूर्लोक १ भुवर्लोक २ स्वर्लोक ३ महर्लोक ४ जनलोक-५ तपोलोक ६ सत्यलोका ७ ख्यानि सप्त सप्तभिर्वायुस्कन्धैर्मिलितानि चतुर्दश जगन्ति त्रातुं रक्षितुमुचिते । रक्षितुं क्षमे हि सर्वोपि स्ववस्तु निदधाति । अत एव तथाहं मन्येस्य राज्ञो जयकृते विजयार्थं तूणे नृणां तूपलक्षणत्वाद्धनुश्च । भृशमत्यर्थं दधतः सतो हयद्विपबले अश्वगज-

१ सी षट्।

१ बी पफ् °न्यद्धग°. २ पफ् °ष्टौ नागा.. ३ पफ् औरित्यादिना औः. ४ बी च °. ५ प° लि ब° ६ प बी भुवोलोक. पफ् भुविलोक. ७ डी °कज°. ८ बी ६.४ हान°. ९ डी °क.५ पातालल्लो°. १० बी डी पफ् तूणीरो उप°. सी. तूणीर उप°.

सैन्ये। उपलक्षणत्वाद्रथपत्तिबले अपि। परिवारमात्रं परिच्छद एवास्तामभूतां स्वबलेनैवास्य जगच्छासितुं क्षमत्वात्॥

यति अभवन्। तति न्यधुः। पट् पञ्च हराः। पढष्ट त्रातुम्। इत्यत्र "डतिष्ण०" [५४] इत्यादिना जस्-शसोर्लुक्॥

श्यामानि। भुवनानि। इत्यत्र "नपुंसकस्य शिः" [५५] इति जस्-शसोः शिः॥ नपुंसकस्येति किम्। हराः।

बले आस्ताम्। तूणे दधतः। इत्यत्र "औरीः" [५६] इति-ईः॥

परिवारमात्रम्। भृशं दधतः। इत्यत्र "अत स्यमोम्" [५७] इति स्यमोरम्॥ वसन्ततिलका छन्दः। सर्गान्ते छन्दोन्तरं क्रियत इति हि कविसमयः॥

अन्यद्बलं किल महोन्यतरद्रवीन्द्वोर्धैर्यं च नेतरदतीतरमस्य सर्वम्।
सैन्यं द्विषां कतमदेष न संजहार हृष्टं जगत्कतरदेकतरं न चक्रे १९८

१९८. अस्य राज्ञो बलं पराक्रमोन्यदपूर्वं लोकोत्तरमित्यर्थः। तथास्य महस्तेजो रवीन्द्वोः सूर्याचन्द्रमसोर्मध्येन्यतरदेकतरं द्विषां संतापकत्वाद्रवितेजो वा सज्जनानामाह्लादकत्वादिन्दुतेजोवेत्यर्थः। तथास्य धैर्यं चित्तावष्टम्भलक्षणो गुणो नेतरन्नान्यादृशमापद्यप्यविचलमित्यर्थः। किं बहुनास्य सर्वमौदार्यगाम्भीर्याद्यतीतरमितरानन्यानतिक्रान्तं सर्वोत्कृष्टमित्यर्थः। अतश्चैष राजा द्विषां सैन्यं कतमन्न संजहार। तथा कतरदेकतरं जगद्धृष्टं न चक्रे किं तु सर्वमपि॥

अन्यत्। अन्यतरत्। इतरत्। कतरत्। कतमत्। इत्यत्र "पञ्चत०" [५८] इत्यादिना स्यमोर्दः॥ अनेकतरस्येति किम्। एकतरम्॥ अन्यादेरिति किम्। सर्वम्॥ अन्यादिसंबन्धिनोः स्यमोर्ग्रहणादिह न स्यात्। अतीतरम्॥

---

१ पफ् °ति क°। २ बी °दृशामा°. ३ पफ् °अतोन्या इ°.

महः । जगत् । इत्यत्र "अनतो लुप्" [ ५९ ] इति स्यमोर्लुप् । अनत इति किम् । धैर्यम् । सैन्यम् ॥

सजरसमजरः परित्यजद्विजरः सज्जरसं च संगरे ।
स्वादो क नु वारि तिष्ठसीत्याक्रन्दत्तृषयास्य शात्रवम् ॥१९९॥

१९९. हे स्वादो मिष्ट वारि जल । क न्विति प्रश्ने । कस्मिन् स्थाने त्वं तिष्ठसि । आत्मानं दर्शयेत्यर्थः । इत्येवंप्रकारेणास्य राज्ञः शात्रवं शत्रुसमूहस्तृपया हेतुनाक्रन्दत् व्यलपत् । यतः किंभूतम् । संगरे रणेजरो जरारहितं तरुणं शात्रवं कर्तृ सजरसं जरान्वितं वृद्धं शात्रवं कर्म परित्यजन् । तथा सज्जरसं विद्यमानजरं वृद्धं शात्रवं कर्तृ विजरस्तरुणं शात्रवं कर्म परित्यजत् । अन्योन्याप्रतीक्षया भयातिरेकात्पलायमानमित्यर्थः । पलायमानस्य हि गाढायासेन तृषातिरेकः स्यात् ॥

अजरः । सजरसम् । विजरः । सजरसम् । इत्यत्र "जरसो वा" [ ६० ] इति वा स्यमोर्लुक् ॥

स्वादो । इत्यत्र "नामिनो लुग्वा" [ ६१ ] इति लुग्वा ॥ पक्षे लुबेव । हे वारि ॥ वैतालीयं छन्दः ॥

सक्थ्यायुः पथि खेत्तृणा रिपुनृपा अक्ष्णालमोक्रान्तरं
दध्नोस्थ्नश्च न जानते स्म मधुनोम्बूनां च पर्याकुलाः ।
अश्वीयानि सुवल्गुवल्गिसुमहांस्यत्युर्ज्यनूर्जिक्षणा-
त्तेषां दन्तिकुलानि चालमभवन्नस्मिन् रणारम्भिणि ॥ २०० ॥

१ ए °द्गाक्ष्मो°. एफ् °द्गाम्नो°.

१ सी डी °लुप्।. २ ए °नू स. ३ सी डी °द विल°. ४ सी डी °द्। रा°. ५ एफ् सजर°. ६ एफ् °सजर°.

२००. अस्मिन्नृपे रणारम्भिणि सति रिपुनृपाः सक्थ्नोरुणा हेतुनाग्रुर्जग्मु.। नेशुरित्यर्थः। कीदृशेन। पथि मार्गे खेत्तृणा खिद्यमानेन श्रमान्वितेन। एतेनैषां पूर्वं कदाचिदपि न रणे भङ्ग इति सूचितम्। यदि पूर्वमपि रणेऽमी भग्नाः स्युस्तदाभ्यासेन श्रमजयादेषां सक्थि नो खिद्येत। तथा दध्नोऽस्थ्नश्च मधुनो माक्षिकस्याम्बूनां चान्तरं विशेषं न जानते स्म। यतोऽभूतपूर्वपराभवोत्पत्त्याऽस्रमोक्त्रा बाष्पमोचनशीलेनाक्ष्णा दृष्ट्योपलक्षिता रोदनाज्जलाविलाक्षा इत्यर्थः। तथा पर्याकुला भयेनोद्भ्रान्ताः। ये पूर्वं रणे कदापि न भग्ना न रुदिता न च भीतास्तेऽप्यस्मिन् रणारम्भिणि सति भग्ना रुदिता भीताश्चेत्यर्थः। ततश्च तेषां रिपुनृपाणां सुमहांसि शोभनतेजस्कान्यत एव सुशिक्षितत्वाच्च सुष्ठु वलान्ति गतिविशेषान् कुर्वन्ति क्विपि सुवल्क्यश्वीयान्यश्वसमूहाः प्रहारैर्जर्जराङ्गतयावल्गि गतिविशेषरहितानि क्षणाच्छीघ्रमलमत्यर्थमभवन्। तथा सुमहांसि दन्तिकुलानि गजौघा अतिशयेनोर्जयन्ति क्विपि अत्यूर्ञ्जि। अतिबलिष्ठान्यनूर्जि बलरहितान्यभवन्॥

अस्रमोक्त्राक्ष्णा। खेत्तृणा। सक्थ्ना.। इत्यत्र "वान्यत॰" [६२] इत्यादिना वा पुंस्त्वम्॥

दध्नः। अस्थ्नः। सक्थ्ना। अक्ष्णा। इत्यत्र "दध्यस्थि॰" [६३] इत्यादिनान्तस्यान्॥

मधुनः। इत्यत्र "अनामृस्वरे नोन्तः" [६४] इति नोन्तः॥ अनामिति किम्। अम्बूनाम्॥

अश्वीयानि। इत्यत्र "स्वराच्छौ" [६५] इति नोन्तः॥

सुमहांसि। इत्यत्र "धुटां प्राक्" [६६] इति नोन्तः॥

अत्यूर्ञ्जि अनूर्जि। सुवल्कि अवल्गि। इत्यत्र "र्लो वा" [६७] इति वा नोन्तः॥

शार्दूलविक्रीडितं छन्दः॥

---

१ **सी डी** ॰भाश्रिते॰. २ **एफ्** ॰त्याश्रुमो॰. ३ **एफ्** ॰दनजला॰. ४ **सी** अस्रुमो॰. **एफ्** अश्रुमो॰. ५ **ए** ॰ना पु॰. ६ **सी डी** ॰क् नो॰. ७ **डी एफ्** ॰ति नो॰.

प्राङ् वीरेषु भवञ्जगन्ति चक्रवान् वश्यानि दोष्मानसौ
युङ् बुद्ध्या बलयुग् दृढांससुभगोनड्वानिवैकः पुमान् ।
गौर्गांगामवतामुनानयमयः पन्था ऋभुक्षाः सुखी
गा विप्रानवितुं विपक्षजलधौ मन्थाश्च खड्गः कृतः ॥ २०१ ॥

२०१. असौ राजा जगन्त्यूर्ध्वाधोमर्त्यलोकान् वश्यानि स्वायत्तानि चक्रवांश्चक्रे । कीदृशः । अनड्वानिव वृषभ इव दृढौ बलिष्ठौ स्थूलौ च यावंसौ स्कन्धौ ताभ्यां सुभगः । तथा शत्रुवधादिस्वकार्यकरणालंकर्मीणत्वात्प्रशस्यौ दोषौ भुजावस्य स्तः प्रशंसायां मतौ दोष्मान् । अतएव वीरेषु शूरेषु मध्ये प्राङ् प्रथमो मुख्यः । एतैर्विशेषणैरुत्साहशक्त्यतिशय उक्तः । तथा बुद्ध्या यथौचित्योपायादिप्रयोगविषयया मत्या युङ् युक्तः । एतेन मन्त्रशक्तिरुक्ता । तथा बलयुक् सैन्येन युक्तः । एतेन प्रभुत्वशक्तिरुक्ता । अत एवैकोसाधारणः पुमान भवन्संपद्यमानः । यथा वश्यानि चक्रवांस्तथाह । गौरित्यादि । अमुना राज्ञा गां पृथ्वीमवतान्यायिभ्यो रक्षता सता पन्था मार्गो नयः प्रकृतोस्मिन्नयमयो न्यायप्रचुरो न्यायप्रधानो वा कृतो न्यायमार्गः प्रवर्तित इत्यर्थः । अत एवामुना गौः पृथ्वी द्यौरिव स्वर्गतुल्या कृता । द्यौर्वा ज्ञेयः । एतेन मर्त्यलोकस्य वश्यत्वमुक्तम् । तथा गा धेनूर्विप्रांश्चावितुं दैत्येभ्यो रक्षितुं विपक्षजलधौ विपक्षशब्देन सामान्यतः शत्रुवाचकेनापि गा विप्रानवितुमिति विशेषोक्तेर्दैत्या उच्यन्ते । त एव हि गा विप्रांश्च घ्नन्ति । त एव दुर्विगाहत्वाज्जलधिः समुद्रः । तत्र खड्गः कृपाणो मन्था मन्थानकतुल्यः कृतः । विपक्षाः खड्गेन मथिता इत्यर्थः ।

१ एफ् ॥ २०१ ॥ इति श्रीहेमचन्द्राचार्यविरचिते द्व्याश्रयमहाकाव्येणहिलपत्तनश्रीमूलराजदोर्दण्डगो नाम प्रथमः सर्गः समाप्तः ॥ अ°.

१ डी °स्स ह्न. २ डी एफ् रक्षिता. ३ एफ् °तोस्मि । नय°. ४ ए सी डी °मय°. ५ ए स्येदं°. ६ एफ् °न्ते । अत एव च हि.

एतेनाधोलोकस्य वश्यतोक्ता । यतो दैत्याः पातालौकस उच्यन्ते । अत एवामुना ऋभुक्षेन्द्रः सुखी कृतः । एतेनोर्ध्वलोकस्य वश्यतोक्ता । गा विप्रानवितुं विपक्षजलधौ मन्थाश्च खङ्गः कृत इत्यनेन गोविप्ररक्षा-विपक्षमथनलक्षणमस्यावदातमग्रे वर्णयिष्यत इति सूचितम् ॥

प्राङ् । इत्यत्र "अचः" [६९] इति नोन्तः ॥

ऋदित् । भवन् । उदित् । चकृवान् । दोष्मान् । इत्यत्र "ऋदुदितः" [७०] इति नोन्त ॥

युङ् । इत्यत्र "युजोसमासे" [७१] इति नोन्तः ॥ असमास इति किम् । बलयुग् ॥

अनड्वान् । इत्यत्र "अनडुहः सौ" [७२] इति नोन्तः ॥

पुमान् । इत्यत्र "पुंसो. पुमन्स्" [७३] इति पुमन्सादेशः ॥

गौः । द्यौः । इत्यत्र "ओत औः" [७४] इति-औः ॥

गाम् । गाः । इत्यत्र "आ अम्शसोता" [७५] इति-आः ॥

पन्थाः । मन्थाः । ऋभुक्षाः । इत्यत्र "पथिन्मथिन्°" [७६] इत्यादिनान्तस्य आ । "एः" [७७] इत्यनेनेकारस्याप्या । "थोन्थ्" [७८] इत्यनेन थस्य न्थादेशश्च ॥

॥ इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहे-मचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तौ प्रथमः सर्गः समर्थितः ॥

---

१ ए बी सी एफ् °न्तः । म°. २ सी डी °सो पु°. ३ सी डी °त औः ॥. ४ ए °सोना इ°.

## द्वितीयः सर्गः ।

प्रथमसर्गे गोविप्ररक्षाविपक्षमथनमुख्यमस्यावदातमग्रे वर्णयिष्यत इति यत्सूचितं तच्छंभूपदेशेन प्रवृत्तमिति पूर्वं तमेवाह ।

**महीऋभुक्षोस्य मथोरिदश्चां नीतेः पथा क्ष्मां सुपथीं विधातुः ॥**
**रिरक्षिषोर्द्यां सऋभुक्षिकां च स्वप्ने कदापीदमुवाच शंभुः ॥१॥**

१. कदापि शंभुः सोमनाथोस्य राज्ञः स्वप्न इदं वक्ष्यमाणं दैत्यवधेन देवानां सुखीकरणरूपं कार्यमुवाच । यतो महीऋभुक्षः परमैश्वर्येण महामिन्द्रतुल्यस्य । तथारय एव स्थूलत्वाद्दधीनि तेषां मथो मन्थानकस्य । शत्रून् मथ्नत इत्यर्थः । तथा क्ष्मां पृथ्वीं नीतेः पथा न्यायमार्गेण कृत्वा शोभनोः पन्थानो मार्गा यस्यां "स्त्रियां नृतः" [२.४.१] इत्यादिना ङीः । सुपथ्यादित्वात्कजभावः । [७.३.१८१] तां सुपथीं विधातुः न्यायान्वितां पृथ्वीं कुर्वत इत्यर्थः । तथा सह ऋभुक्षा शक्रेण वर्तते या पूर्ववद् ङ्यां कजभावे च सऋभुक्षी दैत्यभीतिनिष्प्रतापत्वात् । कुत्सितालपाज्ञाता वा सऋभुक्षी कपि "ङ्यादीदूतः के" [२.४.१०४] इति सऋभुक्षिका । तां द्यां स्वर्गं रिरक्षिषोश्च पालयितुमिच्छोश्च शंभूपदेश्यं कार्यं स्वयमेव चिकीर्षत इत्यर्थः । एवंविधगुणोपेतश्चेदशोपदेशार्हः स्यात् ॥

१ सी मा.प्रभृति ८ श्लोका न सन्ति.

१ एफ् 'श्च १'. २ सी एफ् 'मा ९'. ३ ए तहा ४'. ४ सी एफ् 'निःप्रता'. ५ सी स्तोत्र २'. ६ एफ् 'देश्य'.

सुपथीम् । पथा । मथः । सऋभुक्षिकाम् । ऋभुक्षः । इत्यत्र "इन् ङीस्वरे लुक्" [७९] इति-इनो लुक् । सर्गेस्मिन्नुपजातिच्छन्दः ॥

अथ वृत्तद्वयेन शंभुः सामान्येनोपदेशमाह ।

बुद्ध्योशनन्नत्युशन प्रभाभिर्देवेषु भक्त्यानुशनश्चुलुक्य ।
धुर्यत्यनड्वन् प्रियचत्वरेभिर्वर्णैरुपायैः श्रुतिभिः पुमर्थैः ॥ २ ॥
धुर्योस्यनड्वानिव मेतिचत्वा हरेर्भुजस्त्वं तव के सखायः ।
चत्वारि पातस्तव दिङ्मुखानि भूयाननेहा स्मर देवकार्यम् ॥ ३ ॥

२, ३. हे चुलुक्य चुलुकवंशोद्भव बुद्ध्या कृत्वोशनन् दैत्यगुरुतुल्य । तथा प्रभाभिः कान्तिभिः कृत्वात्युशन शुक्रमतिक्रान्त । तथा देवेषु विषये भक्त्यान्तरप्रीत्या कृत्वानुशनोदैत्यगुरो देवेषु हितवांछकेत्यर्थः । तथा धूः कार्यप्राग्भारो धूरिव दुर्वहत्वात् धूर्योनमुखं तत्र धुर्यत्यनड्वन्नड्वाहं वृषमतिक्रान्त । तथैभिः सर्वजनप्रत्यक्षैरित्यर्थः । वर्णैर्ब्राह्मणक्षत्रियवैश्यशूद्रैरुपायैः सामदानभेददण्डैः श्रुतिभिः ऋग्यजुःसामाथर्वभिः पुमर्थैर्धर्मार्थकाममोक्षैश्च कृत्वा प्रियाश्चत्वारो यस्य हे प्रियचत्वः प्रियवर्णादिचतुष्टयेत्यर्थः । एतेन जनानुरागादिका सर्वसंपदुक्ता । चत्वारि दिङ्मुखानि सकलभूमिमित्यर्थः । पातो रक्षतः सतस्तव भूयाननेहा प्रभूतः कालोभूत् । अथ देवकार्यं स्मर । ननु कियन्मात्रोहं का च मे सहायसंपद्यदेवंविधं कार्यं भगवता मय्युपदिश्यत इत्याह । असि त्वं हरेश्चतुर्भुजस्य चतुरो भुजानतिक्रान्तोतिचत्वाः पञ्चमो भुजो बाहुः । एतेन नारायणांशत्वेनातिपराक्रमित्वमुक्तम् । अतएव मे ममानड्वानिव वृषभ इव त्वं धुर्यः सर्वकार्यप्राग्भारवहनक्षमः । अतश्च तव के सखायः का तव सहायापेक्षेत्यर्थः ॥

---

१ एफ् ॥ ३ ॥ युग्मम् । हे.

---

१ डी एफ् चुलक्य. २ ए एफ् चुलक°. ३ डी °नो देवगु°. ४ बी धूरेव. ५ एफ् °षभम°. ६ ए °तो रक्षकस्य स°. ७ एफ् °भूतका°.

सामान्येनोक्त्वाथ विशेषेणोपदेशमाह ।

विष्णोः सखा यान्न निहन्तुमीशो न तत्पिता वा पुरदंशकृद्धः ।
प्रभासविध्वंसपरेषु तेषु दण्डोशना त्वं भव सज्यधन्वा ॥ ४ ॥

४. विष्णोः सखार्जुनो यान् निहन्तुं नेशो न क्षमः । विष्णोः सखेति साभिप्रायम् । विष्णोर्दैत्यारेरपि यः सखा सोपि तथा । वाशब्दोप्यर्थे । तत्पिताप्यर्जुनजनकोप्यृद्धः सैन्यादिसंपद्युक्तः पुरदंशा इन्द्रो यान् न निहन्तुमीशः । एतेनातिवलिष्ठत्वोक्तिः । प्रभासविध्वंसपरेषु प्रभासाख्यतीर्थविनाशकारिषु तेषु ग्राहरिप्वादिषु दैत्येषु विषये त्वं सज्यधन्वारोपितचापः सन् । दण्डोशना दण्डो निग्रहः स एवान्यायिशिक्षाहेतुत्वाद्दण्डो दण्डशास्त्रम् । तत्रोशना शुक्रो भव । यथा शुक्रोन्यायिषु दण्डमुपदिष्टवांस्तथा त्वमेतेषु निग्रहं कुर्वित्यर्थः । एतेनार्जुनेन्द्राजय्यानप्येतान्दैत्यान्मत्प्रसादात्त्वं जेष्यसीति शंभुना सूचितम् । पुरदंशकृद्ध इत्यत्र "ऋलृति ह्रस्वो वा" [१.२.२] इति ह्रस्वः ॥

उशनन् । अत्युशन । इत्यत्र "वोशनस॰" [८०] इत्यादिनानो लुक् चान्तादेशो वा ॥ पक्षेनुशनः ॥

अत्यनड्वन् । प्रियचत्वः । इत्यत्र "उतः॰" [८१] इत्यादिना सस्वरो वादेशः ॥

अनड्वान् । अतिचत्वाः । चत्वारि । इत्यत्र "वाः शेषे" [८२] इति वाः ॥ शेष इति किम् । अनड्वन् । प्रियचत्वः ॥

सखायः । इत्यत्र "सख्युः॰" [८३] इत्यादिना-ऐकारोन्तादेशः ॥

---

१ एफ् पुरुद॰.

---

१ बी ॰दिर्दे॰. २ एफ् ॰पु वि॰. ३ बी स्त्रीति. ४ एफ् ॰रोव आदे॰. ५ एफ् ॰न् प्रि॰. ६ एफ् ॰स्युरितोद्याबैत् इति ऐ॰. ७ बी ॰कारान्ता॰.

तत्पिता । दण्डोशना । पुरदंशा । अनेहा । सखा । इत्यत्र "ऋदुशन" [८४] इत्यादिना डा-अन्तादेश ॥

सज्यधन्वा । द्विड्भुग्वानि । इत्यत्र "नि दीर्घ" [८५] इति दीर्घ ॥

अथ प्रबुद्धः स महान्नृपाणां श्रेयानयं स्वप्न इति प्रहर्षी ।
द्विड्ढा नृपूषाथ च वन्दिनोपि जगुर्वचांस्युक्तनवार्यमाणि ॥५॥

५. अथ स्वप्नदर्शनानन्तरं स मूलराजः प्रबुद्धः । कीदृश. । द्विड्ढा शत्रूच्छेदक ।अत एवं प्रतापै. सकललोकोद्द्योतकत्वाच्च नृपूषा नरेषु रवितुल्यांत एव च नृपाणां मध्ये महान् गुरुस्तथायं स्वप्न. श्रेयानतिप्रशस्य इति हेतोः प्रहर्षी सन् । अत्र च महान् सर्वलोकेन पूज्यः श्रेयानतिश्लाघ्यो द्विड्ढा मन्देहाख्यदैत्योच्छेदकः पूषा प्रबुद्धः । उदित इत्यर्थो व्यंज्यते । अथ प्रबोधानन्तरम् । चो युगपदर्थः । यदैव प्रबुद्धस्तदैव वन्दिनोपि । अपिः पुनरर्थे । मङ्गलपाठकाः पुनरुक्तो वर्णितो नवार्यमा नूतनरविर्येषु तानि वचांसि वक्ष्यमाणानि जगुः पेठु. । एतेन राज्ञो रात्रिशेष इदं शुभस्वप्नं जातमिति त्वरितमभीप्सितकार्यसिद्धिः सूच्यते ॥

अथ प्रभातवर्णकानि वन्दिवचांस्येव त्रिचत्वारिंशता वृत्तैराह ।

जगन्त्यपूषाण्यभितः प्रसारीण्यालोकहानि प्रसभं तमांसि ।
हन्त्यर्यमाथाददिरे द्विजेन्द्रैः सरांस्यनु स्वाम्पि तदर्घ आपः॥६॥

६. तमांस्यर्यमा प्रसभं बलाद्धन्ति । कीदृंशि । प्रसारीणि । क । अपूषाणि रविरहितानि जगन्त्यभितः सर्वतः । अभित इति सर्वार्थे निपातः । न तसन्तः । उभयार्थे विहितत्वात्तसः । द्वितीया तु "गौणात्°" [२. २. ३३]

---

१ ए °व स प्र°. २ बी °त्वान्नृपू°. ३ एफ् व्यज्यते. ४ एफ् °पि पु°.

इत्यादिसूत्रे बहुवचनात्। सर्वजगत्स्वित्यर्थः। तथालोकहानि दर्शनप्रतिघानीति। अथ तथा तस्यार्यम्णोर्घः पूजा तदर्घस्तस्मिन्। निमित्तसप्तमीयम्। सूर्यार्घार्थं शोभना आपो येषु तानि स्वाम्पि सरांस्यनुलक्ष्यीकृत्य या आपस्ता द्विजेन्द्रैराददिरेऽञ्जलौ गृहीताः। एतेन त्वमपि प्रतापेनोदीयमानार्यमश्रीरसि। तस्मात्सर्वजगद्व्यापकान् आः कष्टं लोकान् घ्नतस्तमःप्रकृतीन् ग्राहरिप्वादीन् दैत्याञ्जहि। येन द्विजेन्द्रैरर्घ्यसे इति राज्ञो ज्ञापितम्। एवं च दैवादनुवदद्भिर्बन्दिभिरपि शंभूपदेशोवश्यं कर्तव्यतया राज्ञो ज्ञापितः॥

कुर्वन्करैः स्वम्पि सरांस्युदेति तमिस्रपिण्डग्र इहोग्रतेजाः।
क्रोष्टेव भीमान्विशति प्रभूतक्रोष्टूनि कुञ्जानि तमिस्रपुञ्जः॥७॥

७. इहास्मिन्प्रभात उग्रतेजा उष्णांशुरुदेति। कीदृक्सन्। करैः किरणैः कृत्वा सरांसि स्वम्पि निर्मलजलानि कुर्वन्। तथा करैरेव तमिस्रपिण्डं तिमिरौघं ग्रसते तमिस्रपिण्डग्रः। अत एव क्रोष्टेव यथा शृगालः प्रातः स्वभावत एव भीमान् भययुक्तः सन् प्रभूतक्रोष्टूनि बहुशृगालानि कुञ्जानि वनगह्वराणि प्रविशति तथा तमिस्रपुञ्जो रवितेजसो भीमान् कुञ्जानि प्रविशति। एतेन त्वमप्युग्रतेजाः प्रचण्डप्रतापोसि। तस्मात्तामसप्रकृतीन् ग्राहरिप्वादिदैत्यान् ग्रसमानश्चेत्त्वमुत्थितस्तदा ते भीमन्तः कुञ्जेषु प्रवेक्ष्यन्तीति राज्ञो विजयो ज्ञापितः। अत्र च तमिस्रशब्दद्वयोपादानेपि भिन्नवाक्यत्वान्न पुनरुक्तदोषः॥

---

१ एफ् °रैः स्वापि २ ए °मिश्रमि°. ३ ए एफ् °मिश्रपु°.

---

१ एफ् सर्व ज° २ डी °मित्ते स°. ३ एफ् °लक्षीकृ°. ४ डी °न त्व द्वि° ५ एफ् °सि स्वापि ६ बी °मिश्रपि°. ७ एफ् °लः स्व°. ८ बी °मिश्रपु°. ९ बी °सो भीमानिव श्री°. १० एफ् °श्र त°.

श्रेयान् । वचांसि । महान् । इत्यत्र "न्स्महतोः०" [८६] इति दीर्घः ॥

प्रसारीणि । प्रहर्षी । आलोकहानि । द्विड्ढा । अपूषाणि । नृपूषा । नवार्यमाणि । अर्यमा । इत्यत्र "इन्हन्पूषा०" [८७] इत्यादिना दीर्घः ॥ "नि दीर्घः" [८५] इति सिद्धे नियमार्थं वचनम् । एषां शिसोरेव यथा स्यान्नान्यत्र । तेन बन्दिनः ।

आपः । इत्यत्र "अपः" [८८] इति दीर्घः ॥

स्वाम्पि स्वम्पि । इत्यत्र "नि वा" [८९] इति वा दीर्घः ॥

भीमान् । उग्रतेजाः । इत्यत्र "अभ्वादेः०" [९०] इत्यादिना दीर्घः ॥ अभ्वादेरिति किम् । पिण्डग्रः । 'अतु' इत्युदित्करणाददितो न भवति । कुर्वन् ॥

क्रोष्टा । इत्यत्र "क्रुशस्तु नस्तृच्पुंसि" [९१] इति तृजादेशः ॥ पुंसीति किम् । प्रभृतक्रोष्टूनि ॥

क्रोष्टोः सुहृत्क्रोष्टरि न प्रतीक्षा क्रोष्टून् शिशून् क्रोष्ट्र्यपि याति मुक्त्वा ।
क्रोष्टूनभीदं कियदुद्गतेऽर्के त्वयीव शत्रून्प्रति बाहुशालिन् ॥ ८ ॥[1]

८. अर्के उदिते क्रोष्टोः शृगालस्य सुहृत्क्रोष्टरि मित्रशृगाले यन्न प्रतीक्षा । तथा शिशूनपि क्रोष्टून् मुक्त्वा क्रोष्ट्री शृगाली यद्याति भयेन पलायते । इदमेतत्सुहृदादित्यजनं क्रोष्टून् क्रोष्टारश्च क्रोष्ट्र्यश्च "पुरुषः स्त्रिया" [३. १. १२६] इति पुरुषशेषे क्रोष्टारस्तानभिलक्ष्यीकृत्य कियत् । न किमपीत्यर्थः । अर्के दुर्भेद्यमन्देहादिदैत्यषष्टिसहस्राणामपि तेजोमात्रेणैव भेदके उदिते सति नृमात्रादपि भीरूणां क्रोष्टूणामातङ्कातिरेकाद्विपत्तिरपि संभाव्येत किं पुनः सुहृदादित्यजनमिति भावः । हे बाहुशालिन् भुजाबल-

१ एफू ॥ ८ ॥ इति चतुर्थपादः समर्थितः ॥

१ एफू °हान्तीत्य° २ एफू न्स्महेत्यादिना दी°. ३ एफू °न्हन्निला°. ४ ए °मार्थे व°. ५ एफू °श इत्यादिना तृ°. ६ एफू °लक्षीकृ°. ७ डी °भाव्यते किं°. एफू °भाव्यत । किं°. ८ ए °जावलिवि°.

विराजमान यथा त्वय्युदिते सति यत्सुहृदादीन् मुक्त्वा शत्रूणां स्वशिशून्मुक्त्वाशत्रुभार्याणां च क्रोष्टुवत्पलायनं तत्कियत्। यतोतिभयादेषां मरणमपि संभाव्यते ॥

क्रोष्टरि। क्रोष्टोः। इत्यत्र "टादौ स्वरे वा" [९२] इति वा तृजादेशः॥ टादाविति किम्। क्रोष्टून्॥ क्रोष्टॄन् इत्यपि कश्चित्॥

क्रोष्ट्री। इत्यत्र "स्त्रियाम्" [९३] इति तृजादेशः॥

चतुर्थः पाद समर्थितः॥

प्रेयश्चतस्रः प्रियतिस्र ईशास्तिस्रश्चतस्रोपि वधूर्विहाय।
प्रेयश्चतुष्क श्रुतिभिस्त्रिमूर्तावत्रोद्गते सांध्यविधौ यतन्ते ॥९॥

९. श्रुतिभिर्वेदैः कृत्वा प्रेयस्यो वल्लभाश्चतस्रो यस्य गङ्गो हे प्रेयश्चतुष्काभिप्रेतवेदचतुष्टयीक तिस्र ऋग्यजुःसामवेदलक्षणा मूर्तयो यस्य। रविर्हि त्रयीमयो वर्ण्यते। तस्मिंस्त्रिमूर्तावत्रार्क उद्गते सतीशा ईश्वरजनाः सांध्यविधौ प्रभातसंध्यावन्दनादिकृत्ये यतन्ते प्रवर्तन्ते। किं कृत्वा। आस्तामेका द्वे वा तिस्रोपि चतस्रोपि च वधूर्विहाय। यतः कीदृशाः। प्रेयस्यश्चतस्रो येषां ते प्रेयश्चतस्रो भार्याचतुष्टयान्विताः। तथा प्रियतिस्रः प्रियात्रयान्विताश्च। एतेनात्यन्तकामिनोप्येतत्सांध्यकृत्यं कुर्वन्ति। तस्मात्त्वमपि कुर्विति सूच्यते। प्रेयश्चतस्र इत्यादौ संख्याया विशेष्यत्वेन विवक्षितत्वाद् "विशेषणसर्वादि०" [३. १. १५०] इत्यादिना न प्राग् निपातो विशेषणभूताया संख्यायास्तत्र प्राग् निपातात्॥

सतितिस्त्रि भाभिः सुतिसर्युदञ्चच्चतस्त्रि चञ्चच्चतसर्यमुष्मिन्।
निधौ श्रुतीनां तिसृणां नवार्के जगन्ति राजच्चतसृणि दिग्भिः१०

१०. अमुष्मिन्प्रत्यक्षे नवार्के सति जगन्ति दिग्भिः कृत्वा राजन्त्यो-

१ एफ् °शत्रुभा°. २ एफ् °स्वा. ज°. ३ बी °मेका द्वे ४ डी °श्चा प्रेयान्तिस्रो येषा त प्रि°. ५ एफ् °ध्यविधि कु°. ६ एफ् सध्याया°.

पावित्र्यस्य तमसश्चापगमाच्चतस्रो येषु तानि राजन्वतसृणि शोभमानदिक्चतुष्टयान्वितानि सन्ति । यतः किंभूतेमुष्मिन् । त्रयीतनुत्वात्तिसृणां श्रुतीनां वेदानां निधौ स्थाने । एतेनातिपावित्र्योक्तिः । तथा भाभिः किरणैः कृत्वा सह तिसृभिर्वर्तते यस्मिन्सति त्रिसरि प्रथमोदितत्वात्किरणत्रयान्विते पश्चाच्च ता एव भाः सप्रकाशतरा बभूवुरिति भाभिः सुत्रिसरि सप्रकाशतरकिरणत्रयान्विते ततो भाभिरुद्यच्चतस्त्युदीयमानकिरणचतुष्टये क्षणाच्च भाभिश्चच्चतसरि विकसत्तराकिरणचतुष्टयान्विते च किं चिदुद्गत इत्यर्थः । एतेन तमोपहार उक्तः । योपि नवार्कतुल्योभिनवनृपः प्रवर्धमानतेजाः श्रुतीनां निधिश्च स्यात्तस्मिन्प्रवर्धमानप्रतापत्वात्प्रतापांशेनातिदुष्टनिग्रहपरे श्रुतिनिधित्वेन न्यायित्वाच्छिष्टपालके च सति जगन्ति राजद्दिक्चतुष्टयानि भवन्तीत्युक्तिः ॥

इष्ट्यादिभिः सत्तिसरः सतिस्रो द्विजाः क्रियाभिर्जरसं निहन्तुम् ।
असज्जराः सज्जरसस्तथाद्यं जरामतीतं पुरुषं स्मरन्ति ॥ ११ ॥

११. तथेति पूर्वोक्तसमुच्चये । असज्जरा अविद्यमानजरास्तरुणाः सज्जरसो वृद्धाश्च द्विजा ब्राह्मणा जरसं जरां निहन्तुम् । मुक्तय इत्यर्थः । जरामतीतं मुक्तमाद्यं पुरुषं विष्णुं स्मरन्ति । कीदृशाः । इष्ट्यादिभिर्यजनादिभिः क्रियाभिः षड्भिः प्रतिदिनकर्मभिः कृत्वा सत्यो विद्यमानास्तिस्रो येषां ते सत्तिसरः सतिस्रश्चोभयपदार्थमिलने स एषः । षट्कर्मयुक्ता इत्यर्थः । एतेन नैष्ठिकत्वोक्तिः । यद्वा ।

द्विजो विप्रक्षत्रिययोर्वैश्येदम्भे विहंगमे ।

इति वचनाद्द्विजा निर्दम्भा इष्ट्यादिभिर्देवपूजादिप्रतिदिनक्रियाभिः

---

१ एफ् °तेस्मिन्. २ सी °न्विता. ३ बी °नापि दु°. ४ एफ् °यादिभिः. ५ एफ् °धंमील°. ६ सी डी स एषः.

षड्भिरन्विता नैष्ठिकश्राद्धा मुक्तय आद्यं पुरुषं प्रथमजिनमृषभं स्मरन्ति।
प्रभाते[1] हि नैष्ठिकजना जाग्रतः स्वस्वदेवतां स्मरन्ति ॥

तिस्रः । चतस्रः । प्रियतिस्रः[2] । प्रेयश्चतस्रः । इत्यत्र "त्रिचतुर°" [१] इत्यादिना तिसृचतस्रादेशौ ॥ स्यादाविति किम् । त्रिमूर्तौ । प्रेयश्चतुष्क श्रुतिभिः ॥

तिस्रः । चतस्र. । प्रियतिस्र. । प्रेयश्चतस्रः । इत्यत्र "ऋतो रः स्वरेनि" [२] इति रः ॥ अनीति किम् । तिसृणाम् । राजचतसृणि ॥ अन्ये तूपसर्जनयोस्तिसृचतसृशब्दयोर्ङौ श्रुटि चानिस्वरादौ रत्वविकल्पमिच्छन्ति तन्मते । सतिसृि सुतिसरि । उदञ्चचतस्रि चञ्चचतसरि । सतिस्रः सत्तिसरः ॥

जरस जराम् । सजरस. असजरा. । इत्यत्र "जराया जरस् वा" [३] इति वा जरस ॥

स्नात्वाद्भिरीशैर्बहुराभिरात्तस्वद्भिर्द्विजेभ्यः परिकल्प्यते राः ।
युष्मासु नन्वल्पमिदं तथापि प्रसीदतास्मास्विति भाषमाणैः ॥१२॥

१२. शुचिभिर्दानं देयमिति स्मृतेरद्भिर्जलैः स्नात्वा शुचीभूय बहुराभिः प्रभूतधनैरीश्वरैर्द्विजेभ्यो रा द्रव्यं परिकल्प्यते संप्रदीयते। किंभूतैः सद्भिः । उदकदानपूर्वं दानं देयमित्यात्ताः पाणौ गृहीताः शोभना आपो यैस्तैः । तथौद्धत्यरहितं प्रियवाक्सहितं च दानं विदुषां श्लाघ्यमिति भाषमाणैः । किमित्याह । नन्विति संबोधने । यद्यपि युष्मासु बहुदानार्हेष्वित्यर्थः । इदं दीयमानं स्वं स्वल्पं तथाप्यस्मासु विषये प्रसीदत वस्तुग्रहणेनानुग्रहं कुरुतेति । प्रभाते हीश्वरैर्दानं दीयते ॥

---

१ एफ् °शैबहु°.

---

१ एफ् °ते नै°. २ सी डी °ष्ठिकेज°. ३ एफ् °स्रः प्रिय°. ४ सी डी °यचत°. ५ ए °तस°. ६ सी डी °वाक्यहि°. ७ सी डी °भाष्यमा°. ८ बी °न च स्व°.

अद्भिः । स्वद्भिः । इत्यत्र "अपोद्भे" [४] इत्यद् ॥

राः । बहुराभिः । इत्यत्र "आ रायो व्यञ्जने" [५] इत्या. ॥

युष्मासु । अस्मासु । इत्यत्र "युष्मदस्मदोः" [६] इत्याः ॥

त्वया मयातित्वयि चातिमय्याः किं तत्र यन्निस्पृह आवयोः सः ।
मिथ्याब्रवीद्युवयोर्वशेहं काचिद्वयस्यामिति खण्डिताह ॥ १३ ॥

१३. किल कश्चिच्छठोन्यनायिकासङ्गेन द्वे स्वनायिके वञ्चितवान् । तयोरेका खण्डिता वनितान्तरव्यासङ्गादनागते प्रिये दुःखसंतप्ता नायिका वयस्यां भर्तृकृतसमानापमानलक्षणव्यसनापातेन संजातमैत्र्यां[1] सखीम् । द्वितीयां खण्डितां सपत्नीमित्यर्थः । इत्येवं प्रकारेणाह यथा । आः कष्टं हे वयस्ये । अतित्वय्यतिमय्यन्यनायिकासक्तत्वात्त्वां मां चातिक्रान्ते तत्र शठप्रिये[3] विषये त्वया मया च किम् । न किंचिदित्यर्थः । यद्यस्मादावयोस्त्वयि मयि च विषये[4] स शठो निःस्पृहो निरपेक्षः । ननु सोवादीद्युवयोर्वशेहं वर्ते तत्कथमिति ब्रूष इत्याह । युवयोर्वश आयत्तौ[5] वर्तेहं यदब्रवीत्तन्मिथ्यालीकं प्रत्यक्षेणैवमावयोर्वञ्चनात् ॥

त्वया । मया । अतित्वयि । अतिमयि । युवयोः । आवयोः । इत्यत्र "टाड्योसि यः" [७] इति योन्तादेशः[6] ॥ टाड्योसीति किम् । अहम् ॥

युष्मभ्यमस्मभ्यमथो युषभ्यं तथेष्टयुष्मभ्यमथोप्यसभ्यम् ।
तथा प्रियास्मभ्यमदः प्रभातं षड्भ्योपि राजन् भवतात्सुखाय १४

१४. हे राजन् । अद एतत्प्रभातं षड्भ्योपि सुखाय भवतात् । केभ्यः षड्भ्य इत्याह । युष्मभ्यमथो तथास्मभ्यं तथा युषभ्यमस-

---

१ बी °मैत्र्या स. २ ए सी डी °नायका°. ३ एफ् °ये त्व°. ४ एफ् °ये श°. ५ बी एफ् °यत्तो व°. ६ एफ् °ति यान्ता°.

भ्यमपि युष्मानस्मांश्चाचक्षाणेभ्यो हितं वदद्भ्यो गुर्वादिभ्यश्चेत्यर्थः । तथेष्टा यूयं युष्मानाचक्षाणा वा येषां तेभ्यस्तथा प्रिया वयमस्मानाचक्षाणा वा येषां तेभ्यो युष्माकमस्माकं च स्वजनादिभ्यश्चेत्यर्थः ॥

**रात्रौ गतायां वियुतावयीह स्वपद्युवय्याशु युषान्वसान्नु ।**
**आवां युवां चार्ककरान्नमामश्चक्रावली न्वाहतुरुच्चनादैः ॥१५॥**

१५. प्रभाते हि विरहापगमेन हृष्टत्वाच्चक्रवाकास्तारं कूजन्ति । तश्चोत्प्रेक्ष्यते । इह प्रभाते चक्रश्च चक्री च पुरुषशेषे चक्रौ चक्रवाकमिथुनमली पूर्ववत्पुरुषशेषे भृङ्गमिथुनं कर्मोच्चनादैस्तारस्वरैः कृत्वाहतुर्नुवदत इव । किं तदित्याह । हे अली वियुतौ वियोगिनावावां यस्यां तस्यां तथा स्वपन्तौ निद्रयाचेतनौ युवां यस्यां तस्याम् । आवयोर्युवयोश्चाहितायामित्यर्थः । रात्रौ गतायां गमेरिहान्तर्भूतणिगर्थत्वाद् गमितायामर्ककरैरेवापनीतायां सत्यामावां युवां चार्ककरानाशु नमामः । यतः किंभूतान् । युषान्नु असान्नु । अत्यन्तं निकटवर्तित्वाद्युष्मानस्मांश्चाचक्षाणानिव कुशलवार्तादि पृच्छत इवेत्यर्थ इति । इतिरत्राध्याहार्यः । ये हि दीनानाथादयो महापुरुषैर्विपत्तेरुद्ध्रियन्ते कुशलवार्ताप्रश्नादिना संभाष्यन्ते च ते तदुपकारादिगुणोत्कीर्तनयान्योन्यं प्रोत्साहयन्तस्तान्प्रणमन्ति ॥

**जितास्मयोः किं जितयुष्मयोः स्त्रीदृशोः प्रबोधे कमलानि हासैः ।**
**इत्युत्पलैर्भृङ्गरवैरुदित्वा निमील्यते त्वत्पुरदीर्घिकायाम् ॥ १६ ॥**

१६. उत्पलैरिन्दीवरैस्त्वत्पुरदीर्घिकायां निमील्यते । किं कृत्वा । भृङ्गरवैर्मध्ये वध्यमानानां भ्रमराणां झङ्कारैरुदित्वेव । इवोत्र ज्ञेयः । किमुक्त्वेत्याह । हे कमलानि सूर्यविकासिपद्मानि जिता वयं यकाभ्यां

१ बी °क्ष्यन्ते । २ एफ् °न क्रमाच्च°. ३ बी एफ् °तिर°. ४ सी डी °भाख्यन्ते एफ् °भाव्यन्त. ५ एफ् च त° ६ ए सी गुणेकीर्त°. बी गुणकीर्त°. ७ एफ् °त्पुरादी°

तयोः स्त्रीदृशोः प्रबोधे विकासे सति । युष्माकं हासैर्निःश्रीकत्वादुत्पलान्येतानि स्त्रीदृग्भ्यां जितानीति स्मितैः किम् । न किंचित्[1] । अथ च हासैर्विकासैः किम् । यतो जिता यूयं यकाभ्यां तयोः । स्त्रीदृग्भ्यां[2] यूयमपि जितानीत्यर्थः । एतदुक्तं स्यात् । येह्यात्मनापि पराभूताः स्युस्तैरन्येषां पराभूतानां किं हसनीयमिति । प्रभाते हि कमलानि विकसन्त्युत्पलानि[3] च संकुचन्ति । स्त्रीदृशश्चोतिविकसन्त्यत इयमुक्तिः ॥

त्वया मदीयोथ मया त्वदीयो राजन्प्रतापोनुकृतस्त्वयीति ।
तर्काकुलो भानुरुदेति मन्दमित्याशयः संप्रति मद्विधानाम् ॥१७॥

१७ प्रभाते हि रविर्मन्दं मन्दमूर्ध्वमयते[5] तत इयमुक्तिः । संप्रति प्रातर्मया विधा सादृश्यं येषां तेषां मद्विधानां वन्यादिजनानामित्येवंविध आशयश्चित्ताभिप्रायः । इदं वयमुत्प्रेक्षामह इत्यर्थः । यथा हे राजन् मूलराज त्वया मदीयः प्रतापस्तेजोनुकृतोनुहृतोथाथवा मया त्वदीयः प्रतापोनुकृतो द्वयोरप्यावयोस्तुल्यप्रतापित्वादित्येवंप्रकारेण त्वयि विषये योसौ तर्कः संशयपूर्वं मनसा भणनं तेनाकुलो व्यामूढः सन् भानुरादित्यो मन्दमनुत्सुकं यथा स्यादेवमुदेति । तर्काकुलो ह्यन्यचित्तत्वात्प्रस्तुतं कार्यं मन्दमेव करोति ॥

योऽभ्यस्मदासीत्त्वदयन्नभिरत्वयो मापयन्कोत्र तवानुतापः ।
वदाम्यहं निश्चिनु तत्त्वमेवं मिथःसखीनामधुनेति वाचः ॥१८॥

१८. अधुना प्रभाते मिथःसखीनां कथमप्यन्योन्यं[6] प्रतिपन्नसखीत्वानां सपत्नीनां वाचः संबोधिका वाण्यो वर्तन्ते । कथमित्याह । हे सखि यः

---

१ एफ् °चिदित्यर्थः । हासैविकासैः । य°. २ एफ् °ग्भ्या वय°. ३ एफ् °नि सं°. ४ सी डी °श्चापि वि° ५ सी °तेन इ°. ६ पी °न्योन्यप्र°

प्रियस्त्वदयन् त्वत्समीपेद्याहं वत्स्यामीति त्वामाचक्षाणः सन्नध्यस्मन्मयि मत्समीप आसीदुवास । तथा यो मापयन् त्वत्समीपेद्याहं वत्स्यामीति मामाचक्षाणः सन्नधित्वत्त्वयि त्वत्समीप आसीदत्रास्मिन् प्रिये[1] विषये कस्तवानुतापः पश्चात्तापः । अयमर्थः[2] । यः शठत्वाद्वासविषये त्वामुक्त्वा मत्समीपेवसन्मां चोक्त्वा त्वत्समीपेवसत्तस्मिन् शठस्वभावे प्रिये सैषास्य वल्लभा नाहमिति किमित्यनुतप्यसे[3] द्वयोरपि[4] समानापमानकारित्वात् । यद्येवं तर्हि किं कार्यमित्याह । यत्तदोर्नित्याभिसंबन्धाद्यदिति गम्यम् । यदहं वदामि तत्पूर्वोक्तं भर्तुः शठस्वभावत्वमेवं निश्चिनु तथेत्यङ्गीकुर्विति ॥

निशि त्वकं मामहकं तथा[1] त्वां युक्तौ नु नावां विधिजृम्भितानि ।
प्रमाणमत्रातिवयं तथातियूयं रथाङ्गाविति कूजतो नु ॥ १९ ॥

१९. रथाङ्गौ चक्रवाकमिथुनमिति न्विदमिव कूजतो वदतः । यथा निशि रात्रौ निशामाहात्म्यात् कुत्सितात्पाज्ञाता वा त्वं त्वकं मां मामाचचक्षे मामवोचस्तथा निशि कुत्सितोल्पोज्ञातोवाहमहकं[7] त्वां त्वामाचचक्षे त्वामब्रवम्[8] । आवां नु । नुः पुनरर्थे । त्वं चाहं च पुनर्न युक्तौ न मिलितौ । यद्यपि निश्यावां संयोगाय प्रेम्णान्योन्यं शब्दायितवन्तौ तथापि न सयुक्तावित्यर्थः । नन्वत्र को हेतुरित्याह । अत्रावयोरयोगे विधिजृम्भितानि दैवविलसितानि प्रमाण हेतवो यतोतिवयं तथातियूयं दैवस्य प्रतिमल्लाभावान्मां त्वां चातिक्रान्तानीति ॥

युष्मभ्यम् । अस्मभ्यम् । अणिगन्तपक्षे[9] इष्टयुष्मभ्यम् । प्रियास्मभ्यम् । इत्यत्र "शेषे लुक्" [८] इति दस्य लुक् ॥

१ बी °धा त्व यु°.

१ एफ् प्रियवि°. २ एफ् °मथ यः. ३ बी किमत्य°. ४ सी डी °ः स द्व°. ५ एफ् °गाया मा°. ६ एफ् माच°. ७ एफ् °क त्वा°. ८ डी °मब्रव°. एफ् °मब्रुव°. ९ सी अणि°.

युषभ्यम् । असभ्यम् । इत्यत्र "मोर्वा" [९] इति मस्य वा लुक् ॥ पक्षे इष्टयुष्मभ्यम् । प्रियास्मभ्यमिति णिगन्तपक्षे । शेषइत्येव । युषान् । असान् । अत्र पूर्वेण मस्यात्वम् ॥

युवाम् । आवाम् । त्वपद्युवयि । वियुतावयि । इत्यत्र "मन्तस्य°" [१०] इत्यादिना युवावौ ॥ द्वयोरिति किम् । युष्मभ्यम् । अस्मभ्यम् ॥ द्वयोरिति युष्मदस्मदोर्विशेषणं किम् । जितयुष्मयो । जितास्मयोः । अत्र समास एव द्वित्वविशिष्टेर्थे वर्तते न युष्मदस्मदी इति युवावादेशौ न भवतः ॥

त्वया । मया । त्वयि । मयि ॥ प्रत्यये । त्वदीयः । मदीयः ॥ उत्तरपदे । त्वत्पुर । मद्विधानाम् । इत्यत्र "त्वमौ प्रत्यय°" [११] इत्यादिना त्वमौ ॥ त्वदयन् । इत्यत्र नित्यत्वादन्त्यस्वरादिलोपात्प्रागेव त्वमौ ॥ कश्चित्तु पूर्वमन्त्यस्वरादिलोपे त्वमादेशेकारस्य वृद्धौ प्वागमे मापयन्नित्याह ॥ प्रत्ययोत्तरपदे चेति किम् ; अध्यस्मन् । अन्तरङ्गत्वात्त्यादिद्वारेणैव त्वमादेशे सिद्धे प्रत्ययोत्तरपदग्रहणं "बहिरङ्गोपि लुबन्तरङ्गानपि विधीन् बाधते" [न्या० सू० ४६] इति न्यायज्ञापनार्थम् । तेन तदित्यादावन्तरङ्गमपि त्यदाद्यत्वादि न स्यात् । एके तु निमित्तनिरपेक्षमेकत्वविशिष्टेर्थे वर्तमानयोस्त्वमादेशाविच्छन्ति । तन्मते अधित्वत् ॥

त्वम् । अहम् । इत्यत्र "त्वमहं°" [१२] इत्यादिना त्वमहमौ सिना सह ॥ सिनेति किम् । आवाम् ॥ प्राक् चाक इति किम् । त्वकम् । अहकम् । इत्यत्राकः श्रुतिर्यथा स्यात् । अन्यथा पूर्वमकि सति "तन्मध्यपतितस्तद्ग्रहणेन गृह्यते" इति न्यायात्साकोप्यादेशः स्यात् ॥ केचित्तु त्वां मां चाचष्ट इति णौ त्वमादेशे वृद्धौ क्विपि मन्तयोरेव त्व-अह-आदेशविधानात्सौ त्वां मामिति । धातोरेव वृद्धि-

१ एफ् °स्मदोर्विशे°. २ बी °यि प्र°. ३ एफ् बाध्यते. ४ एफ् °त्, अधिमत्, त्व°. ५ डी त्वा मामाच°.

रिति मते त्व ममित्येव च भवतीति मन्यन्ते। ते हि प्रकृतिमात्रस्यादेशात् ङेङस्ङसीनाममादेश ङसस्त्वकारमिच्छन्ति। अत्र तु त्वमिति ममिति च स्वय ज्ञेयम् ॥

अतियूयम्। अतिवयम्। इत्यत्र "यूयं वय जसा" [१३] इति यूयवयमौ ॥

त्वां मां धिगावां च युवां तथास्मान्युष्मान्न यत्सत्तव सन्ममेशः।
ईक्षेति वाचो नृषु तुभ्यमिष्टमह्यं हितेष्वाश्वधुनोल्लसन्ति ॥ २० ॥

२०. इष्टा वयं यस्य तस्मायिष्टमह्यं तुभ्यं हितेषु त्वय्यत्यन्तं भक्तेषु नृष्वाधारेष्वधुना प्रभात इत्येवंविधा वाच आशूल्लसन्ति। यथा हे मित्र सन प्रसादपात्रत्वेन प्रधानस्त्वं सन्तौ युवां सन्तो यूयं च यस्य तस्य सत्तव तथा मन्नहं सन्तावावां सन्तो वयं च यस्य तस्य सन्ममेशः स्वामिनो मूलराजस्य यद्यस्मान्नेक्षा दर्शनं नाभूत्तत्तस्मात्त्वां मां युवामावां युष्मानस्मांश्च धिग् धिक्कारोऽस्त्विवति। अतिभक्तत्वात्प्रातस्त्वद्दर्शनेत्युत्कण्ठिताः सेवका यावत् क्षणमात्रं त्वद्दर्शनं न भवति तावदकृतार्थं मन्यमानाः स्वं निन्दन्तीत्यर्थः ॥

तुभ्यम्। इष्टमह्यम्। इत्यत्र "तुभ्यं मह्यं ङ्या" [१४] इति तुभ्यंमह्यमौ ॥

सत्तव। सन्मम। इत्यत्र "तव मम ङसा" [१५] इति तवममौ ॥

त्वाम्। माम्। युवाम्। आवाम्। इत्यत्र "अमौ मः" [१६] इति अम्-औ-स्थाने म् ॥

युष्मान्। अस्मान्। इत्यत्र "शसो न०" [१७] इति शसो न् ॥

१ ए ईक्ष्येति.

१ ए °ममम° २ बी एफ़् तु त्वामि°. ३ एफ़् °ति मामि°. ४ एफ़् °स्य म°. ५ ए सी °स्य तन्म°. ६ All Mss read धिक्कारो.

युष्मभ्यमस्मभ्यमसौहितस्त्वन्मद्युष्मदस्मत्प्रवरस्तथेशः ।
युष्माकमस्माकमिति ब्रुवाणा अमी नृपास्त्वामधुनोपयान्ति॥२१॥

२१. अमी प्रत्यक्षा नृपा अधुना सेवार्थं त्वामुपयान्ति। किंभूताः सन्तः। ब्रुवाणाः । किमित्याह । युष्माकमस्माकं चेशः स्वाम्यसौ मूलराजो युष्मभ्यमस्मभ्यं च हितोनुकूलः। तथा त्वत् त्वत्तो मद् मत्तो युष्मद् युष्मत्तस्तथास्मद अस्मत्तश्च सकाशात्प्रवरः शौर्यादिगुणैरुत्कृष्टो वर्तत इति ॥

युष्मभ्यम् अस्मभ्यम्। इत्यत्र "अभ्यं भ्यसः" [१८] इत्यभ्यम् ॥

त्वत् । मत् । युष्मत् । अस्मत्। इत्यत्र "ङसेश्चात्" [१९] इत्यत् ॥

युष्माकम् । अस्माकम् । इत्यत्र "आम आकम्" [२०] इत्याकम् ॥

अयं स वो नोवति दत्त ईष्टे तथैव वां नौ हित ईट् च ते मे ।
मिथो जनैरित्युदयन्नुतस्त्वा पुनातु सूर्यस्त्वमिव प्रभो मा ॥ २२ ॥

२२. हे प्रभो स्वामिन् यथा त्वमुदयन् श्रिया प्रवर्धमानः सन् वर्णाश्रमगुरुत्वेन[1] दर्शनस्तवनादिना पापमलक्षालकत्वान्मा माम् । जातावेकवचनम् । बन्दिजातिं पुनासि । तथा सूर्य उदयन् संस्त्वा त्वां पुनातु । किंभूत. सूर्यस्त्वं च । जनैर्मिथो नुतः स्तुतः । कथमित्याह। स सर्वत्र प्रसिद्धोयं प्रत्यक्षः सूर्यो राजा च वो युष्मान्नोस्मांश्चावति परकृतविघ्नोपद्रवादिभ्यो दवतात्वादधिपतित्वाच्च रक्षति। तथा वो युष्मभ्यं नोस्मभ्यं च दत्ते मनोवाञ्छितं ददाति। तथा वो युष्माकं नोस्माकं चेष्टे चेशो भवति। "स्मृत्यर्थ०"[२.२.११] इत्यादिना षष्ठी। यथा वो नोवति दत्त ईष्टे च तथैव वां युवां नावावां चावति युवाभ्यामावाभ्यां च दत्ते युवयोरावयोश्चेष्टे च । तथा ते तुभ्यं मे मह्यं च हितोनुकूलः । तथा ते तव मे ममेट्[2] च स्वामी चेति ॥

---

१ ए °र्णामक्रूणत्वे°. २ एफ् मेट् स्वा°.

वो नः । इत्यत्र "पदाद्युग्°" [२१] इत्यादिना द्वितीयाचतुर्थीषष्ठीबहुवचनैः सह वस्नसौ ॥

वां नौ । इत्यत्र "द्वित्वे वान्नौ" [२२] इति द्वितीयाचतुर्थीषष्ठीद्विवचनैः सह वांनावौ ॥

ते मे । इत्यत्र "ङेङसा ते मे" [२३] इति ते मे ॥

त्वा मा । इत्यत्र "अमा त्वा मा" [२४] इति त्वामादेशौ ॥

**महर्षयोस्मानतुशिष्ट कृत्यं देवाः समे मा परिरक्षतेति ।**
**विप्रा वरा मां प्रपुनीत चेति सूर्येश मावेति च वागिदानीम् ॥२३॥**

२३. इदानीं प्रभाते वाग् वाणी वर्तते । अर्थाद्धार्मिकाणाम् । कथं कथमित्याह । हे महर्षयोस्मान् कृत्यं धर्मकार्यमनुशिष्टोपदिशतेति । इतिरत्राध्याहार्यः । तथा हे देवा अर्हदादयः समे सर्वे मा मां परिरक्षत संसारापायेभ्यः पातेति । तथा हे विप्रा वरा ज्ञानक्रियाभ्यां श्रेष्ठा यूयं मां प्रपुनीताशीर्दानपूर्वं[3] मस्तकोपरि मन्त्रपूतदूर्वाक्षतक्षेपादिना पवित्रयतेति च । तथा हे सूर्य ईश स्वामिन् मा मामव रक्षेति । धार्मिका हि प्रातर्धर्मश्रवणादि वाञ्छन्ति ॥

महर्षयोस्मान् । इत्यत्र "असदिव°[4]" [२५] इत्यादिना-आमन्त्र्यपदस्यासत्त्वम् ॥

देवा. समे मा विप्रा वरा माम् । इत्यत्र "जस्वि°" [२६] इत्यादिना आमन्त्र्यविशेष्यस्य[5] वासत्त्वम् ॥

सूर्येश माव । इत्यत्र "नान्यत्" [२७] इति असत्त्वनिषेधः ॥

---

१ सी डी °ह वा°. २ डी वानौ च ते. एफ् वा नौ ते. ३ एफ् °शीर्वादपूर्वकं म°. ४ एफ् °दिह°. ५ एफ् °शेषस्य पदस्यास°.

नखास्तवाहोरसि वक्ति मां चास्तुभ्यं शपेथास्मि तवानपेक्षा ।
किमीक्षसे मां व्रज तां विमुञ्च मामित्यभीकं प्रतिवक्ति का चित् २४

२४. अभीकं प्रभातेनुनयन्तं कामुकं प्रति सपत्नीनखक्षतदर्शनात्कुपिता काचित्कामिनी वक्ति । कथमित्याह । अहेति साभ्यसूये संबोधने । अह अरे धृष्ट तवोरसि वक्षसि नखा नखक्षतानि सन्ति । आः कष्टं च त्वं पुनर्मा वक्षि भणसि । यदुत तुभ्यं शपे त्वमेव मच्चित्त वर्तन इत्यर्थं तव प्रत्ययार्थं मात्रादिशपथान्करोमीत्यर्थ इति । यतस्त्वमीदृगोनख्यास्यदहं तव न विद्यतेपेक्षाकाङ्क्षा यस्याः सानपेक्षा । त्वां नापेक्षे । त्वया मम न प्रयोजनमित्यर्थः । एवं च स्थिते मां किमीक्षसे किं चिन्तयसि व्रज तां स्वमनोभिप्रेतां नत्सपत्नीम् । विमुञ्च त्यज मामिति ॥

तुभ्यं शपे । मामित्यभीकम् । इत्यत्र "पादाद्योः" [२८] इति तेमादेशाभावः ॥

वक्षि मां च । नखास्तवाह । इत्यत्र "चाहह०" [२९] इत्यादिना मा ते आदेशाभावः ॥

किमीक्षसे माम् । इत्यत्र "दृश्यर्थैश्चिन्तायाम्" [३०] इति मादेशाभावः ॥

यूय न सुप्ता इति वोलसत्वं वयं तु सुप्ता इति नः पटुत्वम् ।
यूयं हि कान्तास्तदिना व ईयुर्वयं न कान्तास्तदिना न ओज्झन् २५

यूयं सुमृद्यो हि तदेष युष्मान् दुनोति भानुर्न वयं हि मृद्यः ।
तदेष नास्मांस्तुदतीति काक्वक्तयः सखीनामुदिता इदानीम् २६

२५,२६. इदानीं प्रभाते सखीनां काक्वक्तयः काकुवक्रोक्त्या सो-

१ एफ् °ति मा च वक्षि तुभ्यं. २ एफ् °यं तम्°. ३ एफ् ॥ २६ ॥ युष्मन्°

१ एफ् °ष्टं त्वं च पु°.

पहासं भणितश्च उदिता विजृम्भिताः । कथमित्याह । हे सख्यो[1] हि यस्माद् यूयं कान्ताः सौन्दर्यपात्रं तत्तस्माद्वो युष्माकमिना भर्तारो वो युष्मानीयू रन्तुमागताः । वयं न कान्तास्तदिना न औज्झन् । वयमपि कान्ता एवेत्यस्मद्भर्तारोप्यस्मान् रन्तुमागता एवेत्यर्थः । अत एव हे सख्यो यूयं न सुप्ताः सकलायां निशि निरन्तररमणक्रियया न शयिता इति हेतोर्वो युष्माकमलसत्वमपाटवम् । वयं तु सुप्ता इति नः पटुत्वम् । यूयमिव[3] वयमपि रात्रौ न सुप्ता अतस्तज्जन्यमस्माकमप्यपाटवमस्तीत्यर्थः । तथा हि[6] यस्माद्यूयं सुमृद्व्यो भर्तृप्रसादेन सदा सुखितत्वात्सुकुमाराङ्ग्यस्तत्तस्माद्धेतोरेष प्राभातिकोपि भानुर्युष्मान्दुनोति पीडयति न वयं हि मृद्व्यस्तदेष नास्मांस्तुदति । यूयमिव वयमपि मृद्व्य एवातोस्मानप्येष भानुस्तुदतीत्यर्थ इति । एतेन यथा वयमालस्यं शुक्त्वा तपं चावगणय्य सर्वप्राभातिककृत्येपूत्सहामहे तथा यूयमप्युत्सहध्वमिति सखीभिर्व्यज्यत इत्यर्थः ॥

इति वः । इति नः । इत्यत्र "नित्यमन्वादेशे" [२१] इति नित्यं वस्नसौ ॥

तदिना वः । तदेष युष्मान् । तदिना नः । तदेष नास्मान् । इत्यत्र "सपूर्वात्°" [२२] इत्यादिना वा वस्नसौ ॥

पात्रं नयैतच्छुचयैनदेतेनार्घं भजैनेन बलिं च देहि ।
जुहूस्रुचावानय तावदेते अथैनयोः प्रक्षिपसर्पिराशु ॥ २७ ॥

---

१ ए सी डी °ख्यो हियस्मा° २ ए °स्माद्वो वो यु°. सी डी °स्माद्धेतोर्युष्मा°. ३ एफ् °व रा°. ४ एफ् °तज°. ५ एफ् °मप्यस्माकमपा°. ६ ए सी डी हियस्मा°. ७ एफ् °प्युत्साह°.

कुण्डं खनेदं परिलिम्प चैनदिदं फलं धेह्यथ होमयैनम् ।
इदं सदेनेन यजस्व दध्नानयोः श्रुतं सत्कुरु चैनयोस्तत् २८

व्रजेमकस्मायथ देहि चास्मायेतेऽनयोर्थैषु नतिं कुरुष्व ।
अन्योन्यमित्यादिशतां द्विजानाममूर्गिरो ब्रह्मपुरीष्विदानीम् २९

२७–२९. इदानीं प्रभाते ब्रह्मपुरीषु द्विजानां यायजूकानाममूः प्रत्यक्षा गिर आज्ञावाण्यो वर्तन्ते । यतोऽन्योन्यमादिशताम । कथमित्याह । हे द्विजैतन् प्रत्यक्षं पात्रं यज्ञभाजनं नय जलस्थानादि प्रापय । तत एनदेव पात्रं शुचय जलक्षालनादिना पवित्रीकुरु । तथा हे द्विजैतेन पात्रेणार्घं पूजोपकरणं पुष्पफलादि भज गृहाणेत्यर्थः । ततोऽनेनैव पात्रेणेश्वरेन्द्रादिभ्यो बलिमुपहारं देहि । तथैते जुहूस्रुचौ । जुहूरुत्तरास्रुक् । ततो गोबलीवर्दन्यायेन स्रुच्शब्देनाधरा स्रुगुच्यते । द्वन्द्वे जुहूस्रुचावुत्तराधरस्रुचौ । तावदिति प्रक्रमे । आनय । अथानन्तरमेनयोरुत्तराधरस्रुचोराशु शीघ्रं होमाय सर्पिः प्राक्षिप । तथेदं कुण्डं खन पुरोवर्तिनीं भूमिं यागाग्न्याधानार्थं खननेन कुण्डाकारां कुर्वित्यर्थः । तत एतदेव कुण्डं परिलिम्प च समन्ताल्लिम्पस्व च । तथेदं फलमाम्रादि धेहि पाणौ धर । अथानन्तरमेनमेव फलं होमय जुहुधि । तथेदं दधि सद् वर्तते । ततोऽनेनैव दध्ना यजस्व यागं कुरु । तथानयोर्यायजूकयोः श्रुतं वेदादिशास्त्रसारं वर्तते । श्रुतवन्तावेतावित्यर्थः । तत्तस्माद्धे-

१ एफ् चैतदि°. २ एफ् २९ ॥ त्रिभिर्विशेषकम् ॥ इ°.

१ सी डी २९ ॥ प्र°. २ सी °ना प°. डी °नात्पवि°. ३ एफ् °था द्वि°. ४ सी डी °हूरु°. ५. ए सी °प. ।. ६ एफ् °म्प च ।. ७ एफ् °मेतदेव. ८ एफ् तथाने°. ९ बी एफ् °शास्त्र सा°.

तोरेनयोः[1] सत्कुरु सन्मानय । अनयोरित्यत्र संबन्धे[2] षष्ठी विषयसप्तमी वा ॥ तथेमकस्मै व्रज देशान्तरागतत्वादज्ञातमिमं दूरस्थं प्रत्यक्षं द्विजमानेतुं गच्छ । "गम्यस्याप्ये" [२,२,६२] इति चतुर्थी । अथानयनानन्तरमस्मायेवाज्ञातद्विजाय देहि स्वर्णादि वितर । तथैतेभ्यो दक्षिणाहवनीयगार्हपत्याख्याग्नयो वह्नयो वर्तन्तेथ ततश्चैतेष्वग्निषु[3] नतिं कुरुष्वेति[4] । ब्रह्मपुरी नाम धर्मार्थमीश्वरैः कारितानि धनधान्यद्विपदचतुष्पदादिसर्वसामग्रीसहितानि द्विजेभ्यो दत्तानि गृहाणि ॥

शुचयैनत् । भजैनेन । अथैनयोः । इत्यत्र "त्यदामेनद्" [३३] इत्यादिनैनद् ॥

चैनत्[5] । एनेन यजस्व । चैनयोः । इत्यत्र "इदमः" [३४] इत्येनद् ॥ केचित्त्विदम आदेशमेनमिति मान्तं द्वितीयैकवचन आहुस्तन्मते । होमयैनम् ॥

अस्मायित्यत्र "अव्यञ्जने" [३५] इति साक इदमोत् ॥ केचिदेतदोपीच्छन्ति । अथैषु ॥

एभिः कैरंशुमतेमिकस्यै[1] दिशेवतंसान्सृजता न्वनेन ।
द्यावापृथिव्योरनयोर्निजोयं परोयकं व्यक्तिरियं व्यधायि[2] ३०

३०. अनेन प्राभातिकेनांशुमता[6] द्यावापृथिव्योराकाशभुवोर्मध्येवं निजोयकं कुत्सितोल्पोज्ञातो वायं[7] परोन्य इत्येवंविधा व्यक्तिर्व्यधायि[8] । किंभूतेन सता । एभिः प्राभातिकैः करैः किरणैः कृत्वारुणत्वादिमिकस्यै[10]

१ एफ् °तेमक°. २ सी ३० किं भू°.

१ ए °तोः रन°. सी डी °तोरन°. २ एफ् °बन्धष°. ३ ए °तेग्नि°. ४ सी °ति । ···अनेन. त्रिंशश्लोकस्य 'व्यधायि' पर्यन्तं तत्र नास्ति. ५ ए सी °त् । अने°. ६ डी °ता सूर्येणानयोर्द्यावा°. ७ डी वायकं प°. ८ डी °व व्य°. ९ डी °यि अकारि । किं°. १० एफ् °दिमक°.

दिशे पूर्वं तमोभिभूतत्वेनानुकम्पितायै प्रत्यक्षायै पूर्वस्यायवतंसाञ्ज रक्तपुष्पमुकुटानिव सृजता कुर्वता । निशि हि द्यावापृथिव्योस्तमसा व्याप्तत्वान्निजपरयोर्ज्ञानं नासीद्रव्युदये तु बभूवेत्यर्थः ॥

एभिः । इत्यत्र "अनक्" [३६] इत्यत् ॥ अनगिति किम् । इमिकस्यै[१] ॥

अनेन । अनयोः । इत्यत्र "टौस्यनः" [३७] इति-अनः ॥

अयम् । इयम् । इत्यत्र "अयम्०" [३८] इत्यादिना-अयमियमौ । साकोप्ययमियमादेशौ भवतः ॥ अन्येस्त्वादेशे कृते[२] पश्चादकमिच्छन्ति । अयकम् ॥

दीपा इमे रव्युदये न राजन्त्यतीदमो हव्यभुजोपि नामी ।
स्य एष नेन्दुर्न स तारकौघो दैवाद्यतः कोपि कदापि सश्रीः ३१

३१. इमे रात्रौ येराजंस्ते दीपा रव्युदये सति न राजन्ति निःप्रकाशत्वात् [निष्प्रकाशकत्वात् ?] । तथामी ये रात्रावराजंस्तेतीदमोतितेजस्वित्वादिमान् दीपानतिक्रान्ता हव्यभुजोप्यग्नयश्च न राजन्ति । तथा स्यो रात्रि योतिप्रकाशितवान् स ऐष[३] प्रत्यक्ष इन्दुरपि न राजति । तथा स तारकौघो न राजति । यद्वा युक्तमेवैतद्यतो दैवाद्विधिवशात्कोपि कदापि सश्रीः श्रीयुतः स्यात् ॥

संध्या तनुर्ब्राह्म्यसकाविनोसावैशीद्वयोरप्यमुयोस्तृतीया ।
[१]त्वं चामुको मौरजिती त्रयीयं साक्षात्ततो नादमुयङ् पुमान्कः ॥

३२. हे राजन् । असकौ रव्युदयेन गतप्रायत्वादल्पेयं संध्या प्रभातसंध्या ब्रह्मण इयं ब्राह्मी तनुर्मूर्तिः । एवं किल श्रूयते । पुरा सिसृ-

---

१ सी त्व वासु°.

---

१ एफ् इमक°. २ एफ् °ते सति प°. ३ प सी एष प्र°.

क्षया प्रजासृजा बहवस्तन्वस्त्यक्तास्तत्र देवान्सृष्ट्वा या तनुस्त्यक्ता साहः संपन्ना । पुनर्दैत्यान्सृष्ट्वा या[3] तनुस्त्यक्ता सा रात्रिरूपाजायत । भूयो मर्त्यान्निर्माय तनुरुत्सृष्टा या सा प्रातःसंध्या समपद्यतेति । तथासौ प्रत्यक्ष इनो रविरीशस्य शंभोरियमैशी तनुः[4] । यदुक्तम् ।

क्षितिजलपवनहुताशनयजमानाकाशसोमसूर्याख्याः ।
ईशस्य मूर्तयोष्टौ चिरंतनैर्मुनिभिराख्याताः ॥ १ ॥

तथामुयोर्द्वयोरपि ब्रह्मेशतन्वोस्तृतीयासुकः प्रत्यक्षस्त्वं मौरजितो तनुर्वैष्णवी मूर्तिः । नृपो हि प्रजापालकत्वेन वैष्णवी मूर्तिरिति रूढिः । एवं चेयं प्रत्यक्षा त्रयी ब्रह्मशंभुविष्णुरूपा साक्षात्प्रत्यक्षास्ति । ततस्तस्माद्धेतोः कः पुमान्नादमुयङ्ङमूं[6] त्रयीं नाश्चति । अधुना संध्यां सूर्यं त्वां च त्रयीमूर्तित्वात्सर्वो लोकः पूजयतीत्यर्थः ॥

**संध्यां नृपार्चामुमुयङ् हरो यद्ब्रह्माप्यमुम्यङ् हरिरप्यदम्यङ् ।**
**ये नामुनामी अपि यान्ति मुक्तेर्निया पथाघस्य लुवा च लोकाः ॥**

३३. हे नृप संध्यां प्रभातसंध्यामर्च । यद्यस्माद्धेतोर्हरोप्यमूं संध्यामञ्चत्यमुमुयङ् । तथा ब्रह्माप्यमुम्यङ् । हरिरपि विष्णुरप्यदम्यङ् । अथ प्रत्यक्षेणाप्यस्या जगत्पूज्यतामाहुः[7] । लुवा चेति । चो भिन्नक्रमे । येन च हेतुनामुना पथा संध्यार्चालक्षणेनामी लोका अप्यासतां तावदागमगम्या हरादयः प्रत्यक्षा ब्राह्मणादयो जना अपि यान्ति संध्यार्चां कुर्वन्तीत्यर्थः । यतः किंभूतेन[8] । अघस्य पापस्य लुवा छेदकेन । अत एव मुक्तेर्मोक्षस्य नियाप्रापकेन ॥

१ डी सी एफ् स्तन्व्यस्त्य°. २ बी यास्तनु°. ३ डी °त्रितयाजा°. ४ एफ् °नुः । तदु°. ५ सी °मुनयो°. ६ एफ् °र्वोपि लो°. ७ सी डी °माह । उ°. ८ डी °तेनाप्यघ°.

**वेदानधीयन्त इनं स्तुवन्तो यवक्रियः शिश्रियुरग्निमेके ।**
**कुशासकृल्वः समिदुन्य एके कटप्रुवः सिन्धुतटान्यथेयुः ॥ ३४ ॥**

३४. यवान्होमार्थं क्रीणन्ति यवक्रियः । एकेग्निहोत्रिणोग्निकार्यार्थमाग्निं शिश्रियुः । कीदृशाः सन्तः । वेदानधीयन्तोकृच्छ्रेण पठन्तस्तथेनं रविं स्तुवन्तः । अथ तथैकेन्य ऋषयः कटेन प्रवन्ते तरन्ति कटप्रुवो जलपूर्णनदीमपि तरन्तः सन्त इत्यर्थः । सिन्धुतटानि नदीकूलानीयुः प्रापुः । यतः कुशासकृल्वोग्निहोत्रपरिस्तरणाद्यर्थं दर्भाणामसकृच्छेदकास्तथा समिध उन्नयन्ति समिदुन्योग्निज्वालनाय काष्ठाहारका अतिनैष्ठिका इत्यर्थः । नदीतटेषु हि प्रायेण दर्भादि बहु प्राप्यते ॥

इमे । इत्यत्र "दो मः स्यादौ" [३९] इति मः ॥ त्यदादिसंबन्धिविज्ञानादिह न स्यात् । अतीदमः ॥

कः । कदा । इत्यत्र "किमः कस्तसादौ च" [४०] इति कः ॥

स्यः । सैः । असौ । इमे । एषः । द्वयोः । तसादौ । यतः । कदा । इत्यत्र "आद्वेरः" [४१] इति-अः ॥

स्यः । सः । एषः । इत्यत्र "तः सौ सः" [४२] इति सः ॥

असौ । असकौ । इत्यत्र "अदस॰" [४३] इत्यादिनादस्य सः सेस्तु डौः ।

असुकः । इति "॰असुको वाकि" [४४] इति वा निपात्यते ॥ पक्षे । असकौ ॥

अमुयोः । इत्यत्र "मोवर्णस्य" [४५] इति मः ॥

अदमुयङ् । अमुमुयङ् । अमुमुयङ् । अदम्यङ् । इत्यत्र "वाद्रौ" [४६] इति वा दस्य मः ॥ द्वौ चात्र दकारौ तयोर्वा मे सति चातूरूप्यम् ॥

---

१ एफ् ॰प्रुवं सि॰.

---

१ बी ॰का इति. २ ए सी ॰ज्ञानना॰. ३ सी डी सः ...... सेस्तु. ४ सी ॰मुम्रय॰.

अमुमुयङ् । इत्यत्र "मादुवर्णोनु" [४७] इति-उवर्णः ॥ अन्विति किमर्थम् । अमुयोरित्यत्र एत्वादिषु कार्येषु कृतेपूवर्णो यथा स्यादित्येवमर्थम् ॥

अमुना । इत्यत्र "प्रागिनात्" [४८] इति उवर्णः ॥

अमी । इत्यत्र "बहुष्वेरीः" [४९] इति ईकारः ॥

नियौ । लुवा । अधीयन्तः । स्तुवन्तः । इत्यत्र "धातोरिवर्ण°" [५०] इत्यादिनेयुवौ ॥

ईयुः । इत्यत्र "इणः" [५१] इति-इय् ॥

यवक्रियः । कटप्रुवः । शिश्रियुः । इत्यत्र "संयोगात्" [५२] इति य्वोरपवादावियुवौ ॥ धातुना संयोगस्य विशेषणादिह न भवति । उन्यः । असकृल्वः ॥

**पश्यन्ति सिद्धस्त्रिय उद्भ्रुवोर्कमाराध्नुवन्तं किल पादपातैः ।**
**आशास्त्रियः स्त्रीरिव पद्मिनीश्च द्युश्रीस्त्रियं स्त्रीमिव खश्रियं च ३५**

३५. अणिमाद्यष्टविधैश्वर्यवन्तः सिद्धास्तेषां स्त्रिय उदूर्ध्वा भ्रुवो यासां ता उद्भ्रुवः सत्योर्कं पश्यन्ति । यतः पादपातैः किरणनिक्षेपैरथ च पादेषु पातैश्चरणप्रणामैः कृत्वाराध्नुवन्तं किल प्रसादयन्तमिव । काः । आशास्त्रियो दिगङ्गनास्तथा पद्मिनीः स्त्रीरिव । तथा रविकिरणपद्धशती स्वर्गमप्युद्योतयतीतिप्रसिद्धेर्द्युश्रीस्त्रियं स्वर्गलक्ष्मीमेवाङ्गनां खश्रियं चाकाशलक्ष्मीं च स्त्रीमिव । योपि कान्तः प्रेमानुविद्धः स्वकान्ताः पादपातैराराधयाति तमन्यस्त्रियोहो अस्य स्वकान्तासु प्रेमानुबन्धो यद्यस्माकमपीदृशः पतिः स्यादित्यभिलाषेणोद्भ्रुवः पश्यन्ति ॥

उद्भ्रुवः । आराध्नुवन्तम् । इत्यत्र "भ्रूश्नोः" [५३] इति-उव् ॥

---

१ एफ् °शाः स्त्रि°.

---

१ ए °वन्त्यः ।. २ एफ् °शाः स्त्रि°. ३ सी डी °लक्ष्मीं च. ४ एफ् प्रेम्णानु°.

सिद्धस्त्रिय.। इत्यत्र "स्त्रियाः" [५४] इति-इयू ॥

स्त्रियम् स्त्रीम्। स्त्रियः स्त्रीः। इत्यत्र "वाम्शसि" [५५] इति वा-इय् ॥

वस्वोवचिच्युः कुसुमानि चैत्याग्रण्यं जगत्प्वं सुधियोथ निन्युः।
दृन्भ्वोपि वर्षाभ्व इवाभिलङ्घ्योपलभ्य कारभ्वमिव प्रभातम् ३६

३६. कारो[2] निश्चयस्तत्र तेन वा भवति कारभूरग्रेगूस्तामिव यथा-ग्रेगूर्मार्गदर्शकः स्यात्तथा सर्ववस्तुदर्शकं प्रभातमुपलभ्य प्राप्य सुधियः पुष्पोच्चयदक्षा माला[3]कारा: कुसुमान्यवचिच्युरुच्चितवन्तः। अथ पुष्पाव-चयानन्तरं जगत्प्वं लोकानां पवित्रकं चैत्याग्रण्यं चैत्येषु देवायतनेषु श्रेष्ठं महाप्रभावत्वेन सर्वलोकपूज्यं जिनमन्दिरादि कुसुमानि निन्यु-र्विक्रयार्थं प्रापयन्। किं कृत्वा। दृन् हिंसन् भवति दृन्भूः। दृन्भ्वोपि सविषकीटकानपि वर्षाभ्व इव दर्दुरानिवाभिलङ्घ्योत्प्लवनेनातिक्रम्य। अहमहमिकया शीघ्रं गत्वेत्यर्थः। यतो वस्वो वसु द्रव्यमिच्छन्तः। प्रभाते हि मालिका. पुष्पाण्युच्चित्य विक्रयणार्थं देवप्रासादेषु नयन्ति। शीतलकालत्वात् दृन्भ्वश्च वाहुल्येन विचरन्ति ॥

चिकीर्विधूढेन्द्रदिशः पुनर्भ्वाः करोति काराभ्वमिनोन्धकारम्।
एतद्भुवः पुण्यकरभ्व एनस्तक्ष्णो नु टङ्का दलयन्ति भासः॥३७॥

३७. इनो रविरन्धकारं कारा गुप्तिः कारेव कारा गुहाकूपादि तत्र भवति तिष्ठति यस्तं करोति। कीदृक् सन्। विधुनेन्दुनोदयकाले[10] च संबन्धादूढेवोढा परिणीतेव येन्द्रदिक्पूर्वा तस्याः। पुनर्भ्वाः पुनरूढाया

१ सी डी °यू। स्त्रिय.।. २ सी डी °रो विनि°. ३ एफ् °लाकराः. ४ ए °च्युरच्चि°. बी °च्युरवचित°. ५ एफ् °क्रयणार्थ. ६ एफ् °न्भू इ°. ७ एफ् °ममिक°. ८ एफ् वसु द्र°. ९ बी सी °वप्रसा°. १० बी एफ् °ले स° सी डी °लेव स°.

इव । चिकीर्षीश्चिकीर्षुरुदयेन पूर्वदिशा संबन्धीभवन्नित्यर्थः । योपीनः स्वाम्यन्योढां कन्यां तस्मिन्मृते सति पुनः परिणयति सोन्धकारस्तुल्यमपवादवादिनमहितजनं काराभ्वं गुप्तिस्थं करोति । तथैतद्भुवो रविप्रभवा भासस्तक्ष्णो वर्धकेष्टङ्का नु टङ्किका यथा पाषाणादि विदारयन्ति तथैनः पापं दलयन्ति । यतः पुण्यस्य धर्मस्य करभ्वोग्रेग्व इव सर्वलोकस्य धर्ममार्गे प्रवर्तकत्वात् ॥

**पूर्वाचले धातुवपूंषि वप्राण्यर्वाण उद्यान्त्यघल्वन्युरंशोः ।**
**पक्वाम्रताम्रेह तदंह्रिवृक्णधूल्यभ्रलक्ष्मेव विभाति संध्या ॥ ३८ ॥**

३८. अघल्वनिमिच्छति लोकानामिति सापेक्षत्वेपि नित्यसापेक्षत्वेनैकार्थ्यान्क्यनि अघल्वन्युर्लोकपापच्छेदेच्छोरंशो रवेरर्वाणोश्वाः पूर्वाचल उदयाद्रिस्थानि वप्राणि रोधांस्युद्यान्त्युल्लङ्घन्ते । कीदृंशि । धातव एव वपुर्येषां तानि धातुमयानि । ततश्चेह पूर्वाद्रौ पक्वाम्रताम्रा परिपक्वाम्रफलवदारक्ताभ्रलक्ष्माकाशस्था संध्या भाति । कीदृक् । तेषामर्वणां येंह्रयः खुरास्तैर्वृक्णात्खाता या धूली धातुरेणुः सेव ॥

अवव्रिष्युः । निन्युः । इत्यत्र "योनेकस्वरस्य" [५६] इति यः ॥

वस्व । इत्यत्र "स्यादौ वः" [५७] इति वः ॥

चैत्याग्रण्यम् । जगह्वम् । इत्यत्र "क्विवृत्तेः०" [५८] इत्यादिना यवौ ॥

असुधिय इति किम् । सुधिय. ॥

दृन्भ्व । पुनर्भ्वाः । वर्षाभ्वः । कारभ्वम् । इत्यत्र "दृन्पुनर्०" [५९] इत्यादिना व. ॥ करशब्देनापीच्छन्त्यन्ये । करभ्वः ॥ काराशब्देनाप्यन्ये ।

---

१ बी °न्द्वीभ°. २ बी °प्रभावा. डी प्रभूता भा°. ३ प °वंस्य लो° सी डी °वंस्य. ४ डी ल्लनमि°. ५ डी स्थाने व°. ६ एफ् °भ्राकाशलभ्राका°. ७ डी एफ् °णु सेव. ८ डी °ना य्वौ ॥. ९ प सी डी °वौ । दृ°. १० एफ् कारान्वं°.

काराभ्वम् ॥ इनादिभिरिति किम्[1] । एतद्भुवः ॥ पूर्वेणैव सिद्धे नियमार्थमिदम् । एतैरेव भुवो नान्यैरिति ॥

तक्ष्णः । चिकीः । स्यादिविधौ च । अर्वाणः । वपूंपि । इत्यत्र “णपम्०” [६०] इत्यादिना णत्वपत्वानामसत्त्वादनोकारे[2]लोपः[3] । षस्य रुरुपान्त्यदीर्घत्वं च स्यात् ॥

पक्क । स्यादिविधौ च । अघल्क्न्युः । इत्यत्र “क्कादेशोपि” [६१] इति वनयोरसत्त्वाद्धुटि कत्वं स्याश्रित ईट्[4] च स्यात् ॥ अपीति किम् । वृक्ण । अत्र क्कादेशस्य नस्य सत्त्वाद् “यजसृज” [२,१,८७] इत्यादिना धुट्निमित्तः षो न भवति । कत्वे[5] त्वसत्त्वात्तद्भवत्येव ॥ परे स्यादिविधौ चेत्येव । लग्ना । अत्रास्यादिविधौ पूर्वसूत्रकार्ये “अघोपे प्रथमोशिटः” [१,३,५०] इति प्रथमत्वे[6] नत्वस्यासत्त्वाभावादघोषनिमित्त प्रथमो न भवति ॥

अग्वा लिलिक्षन्ति विमूर्छदात्मद्युतीः सजूःशाद्वल[1]शङ्कयेह ।
तमः पिपिक्षो[2]ररुणस्य दीव्यत्तोत्रा गिरो नो गणयन्ति[3] धुर्याः ३९

३९. अग्वा रवि[8]र्तुरगा लिलिक्षन्ति सिस्वादयिषन्ति । काः । इह पूर्वाचले विमूर्छदात्मद्युतीः । गिरौ मणयो वर्ण्यन्त इति कविरूढिरित्यस्य मणिमयशिलासु विमूर्छन्त्यः प्रतिफलन्त्यो या आत्मद्युतयः स्वकान्तयस्ताः । कया । सजूःशाद्वलशङ्कया । शाद्वल[9]शब्देनात्रोपचाराद्धरिततृणान्युच्यन्ते । सजूंषि[10] मिथः संबद्धान्यतिसान्द्राणि यानि शाद्वलानि[11] हरिततृणानि तेषां या शङ्का भ्रमस्तया । गिरौ हरितसंभवात्प्रति[12]फलितस्वकान्तीनां

१ बी एफ् °शाद्वल°. २ एफ् °क्षोरुर°. ३ सी °न्ति धूर्याः ।

१ ए सी डी °म् । पू°. २ ए °रलुक् । सस्य . ३ बी °पः । सस्य च लुप्. उपा° सी °पः । सस्य रु उपा°. डी पः । सस्य. ४ डी उरेव स्या°. ५ सी डी °त्वे स° ६ सी °त्वे त्व°. ७ एफ् नतस्य स°. ८ बी °तुरङ्गा लि°. ९ बी एफ् °शाद्वल°. १० सी डी सजूर्मिथः°. ११ बी एफ् शाद्वला°. १२ सी डी °तिकलि°.

नीलत्वाच्च तानि हरितानि संभावयन्त इत्यर्थः । अत एव धुर्या धुरीणा अश्वा अरुणस्य रविसारथेर्दीव्यद्गाढतोदनाद्देदीप्यमानं तोत्रं प्राजनं यासु ता दीव्यत्तोत्रास्तोत्रतोदनपुरःसरा गिरो हक्कारान्नो गणयन्ति । यदि ते शाद्वललिलिक्षया तोत्रहक्काराम्न[2] गणयन्ति तत्किं तास्तेषु प्रयुङ्क्तेसावित्याह । तमः पिपिक्षोरुच्छेत्तुकामस्य[3] तमःपेषकार्यकरणोत्सुकस्येत्यर्थः ॥

सुगीर्यमाणोपि गुरूक्तगीर्यन् श्रेयोरथे[1] धुर्यति धुर्यमाणः ।
कुर्यात्प्रशान् साधुरिहोपयोगं छुर्यादघं मोहजयं जगन्वान् ॥४०॥

४०. साधुरार्हतमुनिरिह प्रशात उपयोगं प्राभातिकानुष्ठानविशेषं कुर्यात् करोति । कीदृक्सन् । सुगीर्यमाणोपि शोभना गीर्वाग्देवी[4] सुगीस्तद्वदाचरन्नपि गुरूक्तगीर्यन् गुरुभिराचार्यैरुक्तां गिरं वाणीमिच्छन् । अपिर्विरोधे । यो ह्यतिविद्वत्तया वाग्देवीतुल्यः स्यात्तस्य सर्वशास्त्रपारगत्वेनाध्ययनविमुखत्वादाचार्योक्तगिरा किं प्रयोजनम् । विरोधपरिहारस्त्वेवम् । शोभना मधुरा गीर्वाणी यस्य[5] स सुगीस्तद्वदाचरन्नुपयोगवेलायां गुरोः पुरः स्थितो विनतशिरा[6] इच्छाकारेण संदिशतोपयोगं करोमीत्यादिपृच्छावाक्यानि मधुरमुच्चारयन्नित्यर्थः । तथा गुरुभिराचार्यैरुक्तां गिरं कुर्वित्यादिकामुत्तररूपां वाणीमिच्छन् । एतेन विनीतत्वोक्तिः[7] । तथा धुर्यति धुरमिच्छति श्रेयोरथे[8] । श्रेयोष्टादशशीलाङ्गसहस्रलक्षणो धर्मः । स एवालेख्ये[9] रथाकारत्वाद्रथः । तत्रविषये[10] धुर्यमाणो भू-

१ सी °थे धूर्य°.

१ बी एफ् °शाड्वल°. २ एसी डी °का न ग°. बी °कान्न°. एफ् °कारा न ग°. ३ एफ् पिपक्षो° ४ एफ् °वी तद्व° ५ एफ् °स सु° ६ सी डी °शिरना इ°. ७ एफ् धुराम्नि°. ८ एफ् °योष्टा°. ९ एफ् °लेल्यर°. १० सी °ये धूर्य°.

रिवाचरन्। यथा धू रथाधारः स्यादेवं यतिधर्मस्याधार इत्यर्थः। अत एव प्रशानुपशान्तरागद्वेषः। अत एव मोहजयं मोहनीयकर्मपराभवं जगन्वान् प्राप्त. समघं पापं छुर्योच्छिनत्ति। उपयोगविधिश्च श्रीभद्रबाहुस्वामिपादैरुक्तो यथा।

आपुच्छणत्थपढमा विईआ[2] पडिपुच्छणा य कायव्वा।
आवस्सिया[3] अ तईआ[4] जस्स य जोगो चउत्थो[5]॥ १॥
[ओघनिर्युक्तिभाष्ये गा २२८]

प्रथममापृच्छति यदुत संदिशथोपयोगं करोमि। एसा पढमा॥

उवओगकारावणिअं[6] काउस्सग्गं
अट्टहि ऊसासेहिं नमोक्कारं[7] चिन्तेइ।
तओनमोक्कारेणं[8] पारेऊणं भणइ
इच्छाकारेण संदिसह आयरिओ भणइ लाभो॥
साहू भणइ किहं[9][10] किं गिह्णामित्ति एसा
पडिपुच्छा तओ आयरिओ भणइ[11] जहत्ति।

यथा साधवो गृह्णन्तीत्यर्थः।

तओ[12] साहू भणइ आवस्सिया जस्स य जोगोत्ति[13]।
जं जं संजमस्स उवगारे वट्टइ तं तं गिण्हिस्सामि[14]॥

एवमसावनेन क्रमेणापृच्छने सति गुरुभिरनुज्ञात आवश्यिकां कृत्वा यस्य च योग इत्यभिधाय भिक्षार्थं निर्गच्छतीत्यर्थः॥

---

१ एफ् °व ज°. २ बी सी डी °श्या प°. ३ ए °स्सि आयत°. ४ बी सी डी °श्या ज°. ५ एफ् °त्थो य॥. ६ बी सी डी °णियं का°. ७ बी सी °मोकारं. ८ ए बी सी °मोकारे°. ९ बी एफ् किह गि°. १० सी डी °ह गि°. ११ बी एफ् °इ तह°. १२ सी डी एफ् तउ सा°. १३ बी एफ् जोगुत्ति। १४ बी गिन्हिस्सा°.

जङ्गन्म इत्युक्तिपरैः सपर्णध्वद्यष्टिभो रश्मिधृतानडुद्भिः ।
ग्राम्यैरविद्वद्भिरुदीक्ष्यतेसौ घूखास्त्रदिन्दुर्दधिपिण्डबुद्ध्या ॥ ४१ ॥

४१. ग्राम्यैरसाविन्दुर्दधिपिण्डबुद्ध्या स्थूलदधिवराटकाशङ्कयोदीक्ष्यत ऊर्ध्वमालोक्यते । कीदृक्सन् । घौर्व्योमैव पृथुत्वात् श्यामत्वाघोखा स्थाली तस्याः सकाशात्स्रंसतेधः पतति घूखास्रत् । कीदृशैः सद्भिः । जङ्गन्म इत्युक्तिपरैः कुटिलं गच्छाम इत्युच्चारयद्भिः । ग्राम्या हि प्रायेण प्रातः पत्रघासाद्यानयनायान्योन्यमाकारयन्तो बहिर्व्रजन्ति । तथा पर्णानि ध्वंसते पर्णध्वद्यायष्टिर्व्यङ्कुलदार्वादिः सह तया बदरीपत्रादिपातनार्थं वर्तन्ते ये तैः । तथा पत्रघासादिभारारोपार्थं रश्मौ रज्जौ धृता अवष्टब्धा अनड्वाहो वृषा यैस्तैः । तथाविद्वद्भिर्ग्राम्यत्वान्मुग्धैः । ग्रामेषु दधिबाहुल्येन ग्राम्याणां स्थाल्यधःपतद्घनदधिपिण्डस्य सुपरिचितत्वादेस्तकाले व्योम्नोधः पततीन्दौ तथात्वेनाध्यवसायः ॥

उदीयिवद्दैत्यरणाध्वरर्त्विक्सहस्रदृग्दिक्स्पृगुदक्करस्रक् ।
अजीवनग्भिर्मुनिभिर्दधृग्भिरुष्णिक्स्तुतो वोस्त्वघनट्कृतेर्कः ॥४२॥

४२. हे राजन् वो युष्माकमघनॅट्कृतेघस्य पापस्य या नट् नाशस्तस्या यत्कृत् करणं तस्यायर्कोस्तु । कीदृक् । उदीयिवांसस्तत्कालोदिता ये दैत्या मन्देहाख्याः षष्टिसहस्राणि तेषां यो रणः स एवाध्वरो यागस्तत्र ऋत्विक् । यथार्त्विक् पशुमेधयागे पशून् हन्ति तथा दैत्यान् रणे घ्नन्नित्यर्थः । तथा सहस्रदृश इन्द्रस्य दिशं पूर्वां स्पृशति यः सः ।

---

१ ए सी °ध्वद्यष्टि°. २ ए °धृद्भिरु°. ३ सी डी °नद्कृते°.

---

१ सी डी °रुदीर्घा स°. २ एफ् °रोपणार्थ. ३ बी वृषभा ये°. ४ सी °दत्तका°. डी °दत्रका°. ५ सी वोघयु°. ६ सी डी °नकृते°. ७ डी °णेहन्नि°.

तथोद[1]ञ्चन्त्यूर्ध्वं प्रसर[2]न्ती कर[3]स्रकिरणमाला यस्य सः । तथा नास्ति जीवन[4]ञ्जीवस्य नशनं येषां तैरजीवनग्भिरजरामरैर्दीर्घभिः प्रगल्भैर्मुनिभिरष्टाशीतिसहस्रसंख्यैर्वालि(ल?)खिल्याभिधैः कर्तृभिरुष्णिग्भिश्छन्दोभेदैः स्तुत उष्णिक्स्तुतः ॥

पिपिक्षोः । लिलिक्षन्ति । इत्यत्र "पढोः क[5]स्सि" [६२] इति कः ॥

विमूर्छत् । दीव्यत् । इत्यत्र "भ्वादेर्नामिनः०" [६३] इत्यादिना दीर्घः ॥

सजूः । इत्यत्र "पदान्ते" [६४] इति दीर्घः ॥ पदान्त इति किम् । गिरः ॥

धुर्यः । इत्यत्र "न यि०" [६५] इत्यादिना न दीर्घः ॥ तद्धित इति किम् । गीर्यन् । सुगीर्यमाणः ॥ केचित्तु क्यन्क्यङोरपि प्रतिषेधमिच्छन्ति । तन्मते । धु[6]र्यति । धुर्यमाणः ॥

कुर्यात् । छुर्यात् । इत्यत्र "कुरुच्छु[7]रः" [६६] इति न दीर्घः ॥

प्रशान् ॥ म्वोः । जङ्गन्मः । जगन्वान् । इत्यत्र "मो नो म्वोश्च" [६७] इति नः ॥

धूस्रत् । पर्णध्वत् । उदीयिवत् । अविद्वद्भिः । अनडुद्भिः । इत्यत्र[8] "स्रंस्ध्वंस्०" [६८] इत्यादिना[11] दः ॥

ऋत्वि[12]क् । दिक् । दृक् । स्पृ[13]क् । स्रक् । दधृग्भिः । उष्णिक् । इत्यत्र "ऋत्विजदिश०" [६९] इत्यादिना गः ॥

अजीवनग्भिः । अघनट् । इत्यत्र "नशो वा" [७०] इति वा गः ॥

---

१ डी एफ् °धत्यूर्ध्व. २ डी °रतीत्युदङ् क°. ३ एफ् °रसहस्र°. ४ सी °नजीव°. डी °वस्य जीवनस्य. ५ ए बी कः स्सि. ६ एफ् °र्यमा°. ७ सी °च्छुररिति. डी °च्छुर इ°. ८ एफ् °न् ज°. ९ सी °द्भिः उष्णि°. १० डी °त्र स्रन्स्ध्वन्स् इ°. ११ डी °ना पदान्तस्यस्यान्तस्यदः. १२ डी कुसिहस्रदृक् । दिक् । स्पृ°. १३ डी °क् । करस्र°.

युङ् शीकरैः प्राङ् मरुदुन्मदक्रुङ् सजू रजोभिः स्फुटमम्बुजानाम् ।
आदावहःस्वेष जडत्वदस्तद्रविः कृताहा अकृताह एव ॥ ४३ ॥

४३. अहःसु दिनेष्वादौ प्रभात एष मरुद्वातो जडत्वं शैत्यं ददाति जडत्वदोस्ति । कीदृक्सन् । शीकरैर्जलकणैर्युङ् युक्तोत एवोन्मदा उन्मत्ताः क्रुञ्चः सारसा यस्मात्सः । प्रातः शीतवातस्पर्शे हि क्रौञ्चा मार्यन्ति । तथा प्रशस्तं मृद्वञ्चति गच्छति प्राङ् । तथा विकसितत्वादम्बुजानां रजोभिः स्फुटं व्यक्तं सजूः संबद्धः । तत्तस्माद्धेतो रविः कृताहा अपि । अपिरत्राध्याहार्यः । अकृताह एव । दिने हि रविकिरणैर्जाड्यं खण्ड्यते तर्हि प्राभातिके शीतले वाते वाति तदवस्थमेवेत्यर्केण दिनं कृतमप्यकृतमेवेत्यर्थः ॥

युङ् । प्राङ् । क्रुङ् । इत्यत्र "युजञ्च°" [७१] इत्यादिना ङः ॥

रविः । रजोभिः । इत्यत्र "सो रुः" [७२] इति रुः ॥

सजूः । इत्यत्र "सजुषः" [७३] इति रुः ॥

कृताहा । अहःसु । इत्यत्र "अह्नः" [७४] इति रुः ॥ कृताहाः । इत्यत्र रुत्वस्यासत्वाभान्तलक्षणो दीर्घो भवति । कश्चित्तु दीर्घं नेच्छति । तन्मते कृताहः ॥

जयत्यहोरत्नमहर्विधित्सु स्फूर्जत्यहोरूपमथ प्रवृत्ताः ।
भवत्यहोरात्रकृताशिषोहो रथन्तरं सामविदश्च गातुम् ॥ ४४ ॥

४४. हे राजन्नहर्विधित्सु दिनं चिकीर्ष्वहोरत्नं दिनमणिः सूर्यो

१ सी °होरथ°.

१ ए क्रुञ्चसा°. २ सी °स्माद्धे°. डी °स्माद्धेतोस्स उन्मदक्रुङ् तथा स्फुटं प्रकटमम्बुजाना रजोभिः सजूः सहित एतेन शीतो मन्दः सुरभिश्च । त्रिधा वायुरुदात्त इति । तत्तस्माद्धे°. ३ एफ् °यन्ते । त°. ४ ए अकृ°. ५ सी डी °पिर°. ६ सी एफ् °प्रभा°. ७ ए सी डी °त्यर्थः ॥ ८ ए दिनीचि°.

जयत्युदेतीत्यर्थः ॥ अथार्कोदयानन्तरं प्रशस्तमहः "प्रशस्ते रूपप्" [७.३ १०] इति रूपपि अहोरूपं स्फूर्जति । तथा भवति त्वयि विषयेऽहोरात्रकृताशिषो नक्तंदिवं दत्ताशीर्वादाः सामविदश्च सामवेदज्ञा अहर्दिने । दिनारम्भ इत्यर्थः । "कालाध्वभाव°" [२.२.२३] इत्यादिनात्र द्वितीया । रथन्तरं सामवेदे सामविशेषं गातुं रागविशेषेणोच्चारयितुं प्रवृत्ताः । प्रातर्हि सामविद्भी रथन्तरं साम गीयत इति स्थितिः ।

अहर्विधित्सु । इत्यत्र "रोलुप्यरि" [७५] इति रः ॥ अरीति किम् । अहोरत्नम् । अहोरूपम् । अहोरात्र । अहो रथन्तरम् । अन्ये तु रूपरात्रिरथन्तरेष्वेव रेफादिषु रेफप्रतिषेधमिच्छन्ति ॥

एषाब्जिनी षट्पदवाग्भिराह सुदुग्निशावृत्तमिवैतदंशोः ।
वियोगभुत्पर्णघुडस्मि गोधुकालात्क यूयं वदत न्यघूढ्वम् ॥४५॥

४५. एषाब्जिनी पद्मिनी सुष्टु दुःखयति क्विपि णिलुपि संयोगान्तलोपेम्लोपे च सुदुक् सुष्टु कष्टोत्पादकमेतदुच्यमानं निशावृत्तमंशो रवेरग्रे षट्पदवाग्भिर्भृङ्गशब्दैः कृत्वाहेव वक्तीव । इवो भिन्नक्रमे । किमित्याह । वियोगं बुध्ये वियोगभुत् । युष्मद्विरहदुःखज्ञात एव पर्णानि गूहामि संकोचयामि पर्णघुडस्म्यहं वर्ते । हे अंशो यूयम् । अंशोरेकत्वेपि गौरवविवक्षया "गुरावेकश्च" [२ २.१२४] इति बहुवचनम् । वदत कथयत । दोहनं घुक् । गवां घुक् गोधुक् । तस्याः कालस्तस्माद्गोधुकालात् । "गम्ययप°" [२.२.७४] इत्यादिना पञ्चमी । संध्याकालमारभ्य क न्यघूढ्वं निलीना इति । यापि पतिव्रता भर्तरि प्रोषिते वियोगभुत्सती पतिवि-

१ प °र्णघुढ°. २ एफ् न्यगूढ्व°

१ सीडी °वेदसा°. २ एफ् °णोचर°. ३ बी एफ् °रात्रम् । अ° ४ सी °योगसु°. ५ सीडी °तवो°. एफ् °त प्रक°. ६ बी °स्याका°.

रहे सतीनां ताम्बूलभक्षणमनुचितमिति पर्णानि नागवल्लीपत्राणि निगूहति लक्षणया न खादति सा भर्तरि समागते कुलवधूत्वेन सलज्जत्वात् षट् पदानि यासु ता या वाचस्ताभिरल्पाक्षरवाणीभिर्विरहकष्टवृत्तान्तं तथेयन्ति दिनानि यूयं क न्यघृक्षमित्येतच्च वक्तीत्युक्तिः ॥

उदेति तुण्ढिन्नविबिम्बमैन्द्यास्ततस्तमोदामलिडेष लोकः।
प्रभोत्स्यते शोत्स्यति दास्यते च विधेयबोद्धा सुकृतं विधित्सुः॥४६॥

४६. ऐन्द्याः पूर्वस्या दिशस्तुण्डिभामुन्नतनाभिवर्ती करोति णिचि क्विपि च तुण्ढिन् तुण्डिसदृशत्वादैन्द्री तुण्डिभामिव कुर्वद्रविबिम्बमुदेति। ततोर्कोदयानन्तरं लोकः प्रभोत्स्यते जागरिष्यति शोत्स्यति स्नास्यति दास्यते च द्विजादिभ्यः। प्रातर्हि स्नात्वा दानं दीयते लोकैः। कीदृक् सन्। विधेयबोद्धा। विवेकित्वात्कृत्यं जानन्नत एव सुकृतं धर्मं विधित्सुश्चिकीर्षुरत एव च तमसो दाममालां लेढि खादति तमोदामलिडर्कस्तमिच्छति क्यनि क्विपि तमोदामलिट्। कदा रविरुदेष्यति येन प्राभातिकं देवपूजादि धर्मकृत्यं करोमीति रवेरुदयनमिच्छन्नित्यर्थः॥

धत्थ स्म मानं भ्रकुटिं स्म दात्थ धात्थ स्म धैर्यं यदु तात्पिधद्ध्वम्।
संदात्त कान्तानभिधात्त चोषःशङ्खोभिधत्ते न्विति मानिनीनाम्॥४७॥

४७. उषःशङ्खः प्रभाते राजद्वारादौ वाद्यमानः शङ्खो मानिनीनां पुरोभिधत्ते नु वक्तीव। किमित्याह। हे मानिन्यो भर्तृकृतापराधकुपि-

१ सी तुण्डिन्न°. २ एफ् °धध्वम्. ३ एफ् °त्त वोष.°.

१ एफ् °सु या°. २ सी °चान्तत°. ३ डी °न्त वक्ति त°. ४ एफ् न्यगृक्ष°
५ डी °तद्वक्ती° ६ सी डी तुण्डिभ दृ°. एफ् तुण्डिद् तुण्डिवा न°. ७ ए °ण्डि भतु°. ८ सी °ति वास्य°. ९ सी माला ले°. १० सी डी °दामर्क°.
११ ए °ति क्वि°. १२ एफ् °दिकं°. १३ सी एफ् °यमि°. १४ डी °दं व°.

ततया भर्तृषु यद्यूयं मानमहंकारं धत्थ स्म धृतवत्योत एव चाटूक्त्यादिना प्रसादयत्सु भर्तृषु यद्यूयं भ्रुकुटिं भ्रूविकार[2] दात्थ स्मात्यर्थं धृतवत्यस्तथा यद्धैर्यमेषां भर्तृणां संमुखमपि नेक्षिष्यामह इति चित्तावष्टम्भं धात्थ स्मात्यर्थं धृतवत्यस्तन्मानादिधरणं पिधध्वं स्थगयत । परित्यजतेत्यर्थः । किं तु संदात्त भृशं संधयत । धेट् धातुः पानार्थोपि संपूर्वः सधाने वर्तते । यदुक्तम् ।

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते । नीहाराहारसंहारप्रतीहारप्रहारवत् ॥

स्वकान्तैः सह संधानं कुरुतेत्यर्थः । तथा कान्तानभिधात्त भृशं वदत । यद्यपि युष्माभिरवज्ञाततयापमानेन कान्ता युष्मान्न संभाषन्ते तथापि यूयमुपेत्य तान् संभाषध्वमित्यर्थ इति । प्रातर्हि राजद्वारादिषु शङ्खो वाद्यते तत्स्वरं श्रुत्वा रात्रिर्विभातेति मानिन्यो मानं मुक्त्वा रिरंसौत्सुक्येन कान्तान् भजन्त इत्येवमुत्प्रेक्षा । अभिधत्ते न्विति वचनसंभावनया शङ्खस्यानुक्तमपि वाद्यमानत्वं प्रतीयते ॥

वाग्भि. । षट्पद । अब्जिनी । इत्यत्र "धुटस्तृतीयः" [७६] इति तृतीयः ॥ केचित्तु विसर्गजिह्वामूलीययोरप्यलाक्षणिकयोस्तृतीयत्वं गत्वमिच्छन्ति तन्मते सुदुग् ॥

पर्णघुट् । तुण्ढिव् । गोधुक् । वियोगभुत् ॥ सादौ । प्रभोत्स्यते ॥ ध्वादौ च । न्यघूढ्वम् । इत्यत्र "गडदबा°" [७७] इत्यादिना आदेश्चतुर्थः ॥ गडदबादेरिति किम् । शोत्स्यति ॥ चतुर्थान्तस्येति किम् । दास्यति ॥ एकस्वरस्येति किम् । तमोदामलिट् ॥ स्ध्वोरिति किम् । बोद्धा ॥

अभिधत्ते । धत्थ । विधित्सुः । पिधध्वम् । इत्यत्र "धागस्तथोश्च" [७८]

---

१ सी °मुखा नक्षि°. डी °मुखं ने°. २ एफ् नेष्या°. ३ ए बी सी डी °ण हि धा°. ४ बी एफ् °द व इ°. ५ सी डी °ति ए°.

इति चतुर्थः ॥ गकारः किम् । धयतेर्मा भूत् ॥ ढुर्येकुपि । संदात्त ॥ दधातेरपि यङ्लुबन्तस्य मा भूत् । "तिवा शवानुबन्धेन" [न्या०सू०१८] इत्यादिन्यायात् । दात्थ ॥ केचिद्यङ्लुबन्तस्यापीच्छन्ति । अभिधात्त । धात्थ ॥

**दुग्ध स्म दुग्धं स्म निधत्थ पार्यां पिधत्त दात्थ स्म च दात्त चापि।**
**तक्राणि वा दाद्ध किमम्बु दाद्धेत्याहुः समं संप्रति घोषवृद्धाः ४८**

४८. संप्रति प्रातर्घोषवृद्धा गोकुले वृद्धनराः समं युगपत्स्वपुत्रादीनाहुः । कथमित्याह । हे पुत्रादयो यूयं दुग्धं क्षीरं दुग्ध स्म क्षारितवन्तः । तथा पार्यां दोहिन्यां दुग्धं निधत्थ स्म निक्षिप्तवन्तश्च । तथा यूयं पार्यां निहितं दुग्धं पिधत्त वस्त्रादिना स्थगयत । तथा यूयं दुग्धं दात्थ स्मात्यर्थं पीतवन्तो दात्त चापि पुनरप्यत्यर्थं पिबत । वाथवा यूयं तक्राण्युदश्विन्ति दाद्धात्यर्थं पिबत । यदि दुग्धं न रोचते तदा तक्राणि पिबतेत्यर्थः । किमम्बु दाद्ध किमिति जलं पिबथेति ॥

दुग्धम् । दुग्ध । इत्यत्र "अधः०" [७९] इत्यादिना तथोर्धः ॥ अध इति किम् । दधातेर्यङ्लुबन्तधयतेश्च मा भूत् । पिधत्त । निधत्थ । दात्त । दात्थ ॥ केचित्तु यङ्लुबन्तधयतेरिच्छन्ति । दाद्ध । दाद्ध ॥

**लक्ष्मीमढ्वं पृथिवीं वहृढ्वस्तीर्ढ्व द्विषस्तत्सुखमासिषीध्वम् ।**
**स्तुध्वं गुरून्सांध्यविधिं क्रपीढ्वं स्तीर्षीढ्वमेतद्भुवनं यशोभिः ॥४९॥**

४९. अथ पञ्चवृत्त्या मूलराजमुपश्लोकयन्तः प्राभातिकविध्युप-

---

१ बी °च वापि.

---

१ सी एफ् °त् । दंर्ये°. २ एफ् दात्त । के°. ३ एफ् °भ स्म. ४ बी सी एफ् °च वापि. ५ बी दुग्धमपि न. ६ एफ् °बतेति. ७ एफ् °वन्तः°. ८ एफ् °कन्तः मा°. ९ ए सी डी °न्तः प्रभा°.

देशगर्भमाशासतश्चाहुः। हे राजन् यूयं लक्ष्मीं शक्तित्रयरूपां श्रियमवृढ्वमेववरत स्वीकृतवन्त इत्यर्थः। अत एव द्विषः शत्रूनस्तीर्ढ्वमाच्छादितवन्तो जितवन्त इत्यर्थः। अत एव पृथिवीं ववृढ्वे साधितवन्त इत्यर्थः। तत्तस्मान्निष्कण्टकसर्वसंपत्तिसंपूर्णमहाराज्यावाप्तिरूपाद्धेतोः सुखं पञ्चेन्द्रियानुकूलमासिषीध्वमवस्थेयास्त। तथा गुरून्मातापितॄन्धर्मोपदेष्टॄन्वा स्तुध्वं स्तूयास्त। आशिषि पञ्चम्यत्र। प्रभाते हि विशेषतो मङ्गलत्वात्पूज्याः स्तुताः। तथा सांध्यविधिं संध्यावन्दनदेवपूजादि प्राभातिककृत्यं कृषीढ्वं ततश्चैवद्भुवनं जगत्रयं यशोभिः कृत्वा स्तीर्षीढ्वमाच्छाद्यास्त व्याप्यास्तेत्यर्थः। निष्कण्टकसमृद्धराज्यप्राप्तिलक्षणस्य पुमर्थस्यैतान्येव फलानि यत्स्वैरं कामसेवनं गुरुस्तवनादिधर्मानुष्ठानस्य करणं यच्च यशसा जगद्व्यापनमिति। एतानि चाशीर्भङ्ग्या वन्दिभिर्नृप उपदिष्टानीत्यर्थः॥

अस्तीर्ढ्वम्। स्तीर्षीढ्वम्। ववृढ्वे। अवृढ्वम्। कृषीढ्वम्। इत्यत्र "नाम्यन्तात्०" [८०] इत्यादिना धस्य ढः॥ नाम्यन्तादिति धातोर्विशेषणं किम्। आसिषीध्वम्। परोक्षाद्यतन्याशिष इति किम्। स्तुध्वम्॥

धियाग्रहीढ्वं निशि निद्रया नाग्राहिढ्वमुद्युक्ततयाग्रहीध्वम्।
न वा जडिम्ना जगृहिढ्व आन्वग्राहिध्वमुत्कृष्टगुणैः सदा हि॥५०॥

५०. हे राजन् यूयं धिया कर्त्र्याग्रहीढ्वमाश्रिता इत्यर्थः। अत एव जडिम्ना मूर्खत्वेन कर्त्रा यूयं न वा जगृहिढ्वे नैवाश्रिताः। तथोद्युक्ततयोद्यमगुणेन यूयमग्रहीध्वमाश्रिता अत एव निद्रया नाग्राहिढ्वं ना-

१ सी °शासितश्चा°. डी °शासिनश्चा°. २ डी एफ् °मनवरत स्वी°. ३ बी सी डी °न च पृ°. ४ °पित्रादीन्ध°. ५ ए बी सी डी °दि प्रभा°. ६ बी °णस्याप्येपु°. ७ सी °धनादि°. ८ ए °ढ्व। कृ°. ९ ए सी डी °न्तादि°. १० ए आशिषी°.

श्रिता । हि यस्मादुत्कृष्टा गुणा बुद्ध्युत्साहादयो येषां तैर्गुणाधिकैर्गुरुभिः सदा यूयमान्वग्राहिध्वं सदुपदेशदानादिना समन्तादनुगृहीताः ॥

किमन्वकारिढ्वमुतान्वसारिध्वं किं नु मेहिध्व इनेन भाभिः ।
तमोलविढ्वं द्विषतोलविध्वं यूयं हि विश्वं पुपुविढ्व एतत् ॥ ५१ ॥

५१. हे राजन् हि यस्माद्यूयं नीतिशास्त्रादिसकलशास्त्रवेदितृत्वात्तमोज्ञानमलविढ्वम् । तथा द्विषतोरीनलविध्वम् । तथैतद्विश्वं भूलोकं पुपुविढ्व अन्यायमलापनयनेन पवित्रितवन्तः । तस्माद्धेतोरिनेन रविणा कर्त्रा भाभिस्तेजोभिः कृत्वा तमोलवनादिस्वकार्यनिष्पादनाय यूयं कर्म किमन्वकारिढ्वम् । अन्तर्भूतणिगर्थत्वात्कर्मणः । किं यूयं रविणात्मानमनुकारिताः स्वसदृशीकृता इत्यर्थः । उत किं[3] वेनेन भाभिः कृत्वा यूयमन्वसारिध्वमनुसृता रविणा किं तेजोभिर्भवतां साहाय्यं कृतमित्यर्थः । किं नु किं वा यूयं भाभिर्मेहिध्वे तेजोदानेन सन्मानिताः । इदमुक्तं स्यात्तमोलवनादीनि हि रविकार्याणि । एतानि च यूयमपि चक्र । ततो बन्दिभिरेवमाशङ्क्यते । योपीनेन स्वामिना स्वकार्यकरणक्षमतया स्वसदृशः कृत्वा लोके स्थाप्यते साहाय्याय सैन्यादिनानुगम्यते विभूतिदानादिना सत्क्रियते वा स स्वामिकार्याणि कुरुते ॥

यद्यज्ञविघ्नाल्लुलुविध्व एत्यानुग्राहिषीढ्वं ननु तैरिदानीम् ।
संस्कारिषीढ्वं परिकारिषीध्वं द्रागग्राहिषीध्वं च गुणैस्तदीयैः ॥५२॥

५२. हे राजन् यद्यज्ञविघ्नान् येषां मुनीनां यज्ञेषु विघ्नान्दैत्यादिकृतोपद्रवान् यूयं लुलुविध्वे । नन्विति संबोधने । तैर्मुनिभिरिदानीं प्रातरेत्याश्रमेभ्य आगत्यानुग्राहिषीढ्वमाशिषानुगृह्यध्वम् । मुनयो हि राज्ञः

१ एफ् °यमन्व°. २ ए सी °ढ्वस्तथा. ३ बी एफ् किं चेने°. ४ सी डी °न्ना°. ५ एफ् °भूतदा.

प्रातराशिषं ददति । तथा तैर्यूयं संस्कारिषीढ्वं[1] मन्त्रपाठपूर्वं तिलककरणेन विशिष्टीकृषीढ्वम् । तथा तैर्यूयं परिकारिषीध्वं[2] परिवार्यध्वम् । तथा[3] तदीयैर्मुनिसत्कैर्गुणैरुपशमादिभिः कर्तृभिर्द्राग्यूयं आहिषीध्वं चाश्रीयध्वम् परिवारस्य गुणाः स्वामिन्यध्यारोहन्ति ॥

सिंहासनायोत्सहिषीढ्वमाभां हरेर्ग्रहीषीध्वमथाधिसानोः ।
सदोयिषीढ्वं द्युलिडंशुरत्नं प्रौढ्या श्रियं जम्भभिदोयिषीध्वम् ॥५३॥

५३. हे राजन् यूयं द्युलिहो व्योमस्पृशोंशवः किरणा येषां तानि तथाविधानि रत्नानि यत्र तत् सद आस्थानमण्डपमयिषीढ्वं गम्यास्त । तथा सिंहासनायोत्सहिषीढ्वमुद्यम्यास्त[4] सिंहासन उपविशतेत्यर्थः । अथ सिंहासनोपवेशानन्तरमधिसानोर्गिरिप्रस्थमध्यारूढस्य हरेः सिंहस्याभां शोभां ग्रहीषीध्वमाश्रयिषीध्वम्[5] । एवं च प्रौढ्यानभिभवनीयाकारेण जम्भभिद इन्द्रस्य श्रियमयिषीध्वमाश्रयत ॥

दुग्धोज्ज्वलामुग्धदृशाम्बुरुण्मान्धग्मुग्द्विषां दानवलिट्प्रियोथ ।
अमूढधीः कृत्यविधावनुन्मुङ्नन्ध्रुगार्तिध्रुडसावुदस्थात् ॥ ५४ ॥

५४. अथैवं वन्दिभणनानन्तरमसौ मूलराज उदस्थात्तल्पादुत्थितः । कीदृक् । दुग्धवदुज्ज्वलामुग्धामूढा विगतनिद्रा या दृग्दृष्टिस्तया कृत्वा । जातावेकवचनाद्दुग्धोज्वलामुग्धदृग्भ्यामित्यर्थः । अम्बुरुही अस्य स्तः सोम्बुरुण्मानिवाम्बुरुण्मान् । प्रभाते हि निद्राघ्राणतयाक्षीणि[6] दुग्धोज्ज्वलानि विनिद्राणि च स्युः । कमलानि[7] चेत्युभयोरपि साम्यात्प्रबुद्ध-

---

१ सी °ण्मात्वग्मु°. २ बी सी °ध्रुगार्ति°.

---

१ एफ् °रिढ्व. २ ए °षीढ्व प°. ३ डी °था त्वदी°. ४ ए °घम्यस्त. ५ एफ् °षीढ्वमा°. ६ एफ् °णि उज्ज्व°. ७ सी डी °नि वेत्यु°.

कमलतुल्याक्ष इत्यर्थः । तथा मुग्द्विषां मुह्यन्ति मुहो मूढा अन्यायकारिण इत्यर्थः । ये द्विषो दैत्यादयस्तेषां दहतीति धक् विनाशयितात एव वृत्राय द्रुह्यति वृत्रध्रुगिन्द्रस्तस्यार्तिर्दैत्योपद्रवजनिता पीडा तस्यै द्रुह्यति जिघांसति यः सः । तथात एव दानवलिहं दैत्यघातिनं विष्णुमिच्छन्ति दानवलिहो देवास्तेषां प्रियः । तथामूढधीः पटुबुद्धिरत एव कृत्यविधौ नोन्मुह्यत्यनुन्मुट् । शंभुनो स्वप्रेतिगुरुकार्यमुपदिष्टं तत्कथं करिष्य इति न किंकर्तव्यतामूढो भवन्सन्नित्यर्थः ॥

द्रुग्धास्निगद्रूढमनः स्निडेष स्नुग्धामृतस्नूढवचाः श्रुतिस्नुक् ।
स्नीढैर्द्विजैः स्निग्धतनुः सुमन्त्रस्नुङ्भिर्वृतः सांध्यविधिं व्यधत्त ॥ ५५ ॥

५५. द्रुग्धा जिघांसिता अस्निहो द्विषो येन स दुष्टाग्निजिघृक्षुरित्यर्थः । तथाद्रूढं मनो येषां तेद्रूढमनसोवध्यकास्तेषु स्निह्यति यः सः शिष्टपालक इत्यर्थः । एष मूलराजः सांध्यविधिं संध्यावन्दनादि व्यधत्त । कीदृक्सन् । द्विजैर्वृतैः । किंभूतैः स्नीढैः । स्नात्वा सांध्यविधिर्विधीयत इति स्नानजलार्द्रत्वात्स्निग्धतनुभिः । तथा सुमन्त्रस्नुङ्भिः प्रभातसंध्योचितप्रधानवेदमन्त्रानुच्चारयद्भिः । तथा स्निग्धतनुः स्नानजलार्द्राङ्गः । तथा मधुरत्वात्स्नुग्धं क्षरितममृतं येन तत्स्नुग्धामृतमिव स्नूढमुद्गीर्णं वचो येन सः । तथा सन् श्रुतिं वेदं स्नुह्यत्युद्गिरति श्रुतिस्नुक् । प्रभातसंध्याविध्युचितानि वेदवाक्यानि मधुरमुच्चारयंश्चेत्यर्थः ॥

मेः । अग्राहिढ्वम् आन्वग्राहिध्वम् । अनुग्राहिषीढ्वं[4] ग्राहिषीध्वम् । अन्वसारिढ्वम् अन्वसारिध्वम् । संस्कारिषीढ्वं परिकारिषीध्वम् ॥ हृटः । जगृहिढ्वे मेहिध्वे । अमहीढ्वम् अग्रहीध्वम् । उत्साहिषीढ्वं[5] ग्रहीषीध्वम् । पुपुषिढ्वे तुतुषिध्वे ।

---

१ सी °न्ति क दा°. २ सी डी °ना च स्न°. ३ एफ् °तः । कीदृशैः द्वि°.
४ सी °षीध्वम् । अ°. ५ एफ् °षीध्व पु°.

[1]अलविढ्ढ्म् [2]अलविध्वम्। अयिषीढ्ढ्म् अयिषीध्वम्। इत्यत्र "हान्तस्याञ्नीभ्यां वा" [८१] इति वा ढः॥ परोक्षायां ञिर्न संभवतीति नोदाहृतः॥

प्रौढ्या। पदान्ते[3]। घुलिढ्। इत्यत्र "हो धुट्पदान्ते" [८२] इति हस्य ढः॥ असत्पर इत्येव। अम्बुरुण्मान्। अत्र ढत्वतृतीयत्वयोरसत्त्वात् "मावर्ण०" [२.१.९४] इत्यादिना मतोर्मो मत्वं न स्यात्॥

दुग्ध। पदान्ते[4]। धग्। इत्यत्र "भ्वादेर्दादेर्घः" [८३] इति घः॥ भ्वादेरिति किम्। दानवलिट्॥ दादेरिति किम्। प्रौढ्या। अम्बुरुण्मान्॥

अमुग्ध अमूढधी[5]। मुग् अनुन्मुट्[6]। द्रुग्ध अद्रूढ। वृत्रध्रुग्[7] अर्तिध्रुट्। जुग्ध घूढ। श्रुतिस्नुक् मन्त्रस्नुड्भिः। स्निग्ध स्नीढैः। अस्निक् स्निट्। इत्यत्र "मुहद्रुह०" [८४] इत्यादिना वा हस्य घः॥

स भक्तिभाग्वाग्नृपनद्धमौलिरत्नाञ्चितोपानदुपोढकृत्यः।
द्वास्थे किमार्त्थेति जनेषु वक्तर्यगात्सदो जम्बकजेहुलाभ्याम्॥५६॥

५६. स मूलराजो जम्बकजेहुलाभ्याम्[8]। जम्बको नाम मूलराजस्य महामन्त्री[9]। जेहुलश्च[10][11] खइराल्लराणको मूलराजस्य महाप्रधानम्[12]। ताभ्यां सह सदो मन्त्रमण्डपमगात्। यत[13] उपोढं तयोः[14] पुरो भणनाय चित्ते धारितं कृत्यं शंभूपदिष्टं दैत्यवधकार्यं येन सः। क सति। द्वास्थे

१ एफ् जम्बुक°.

१ सी अयि°. २ डी विध्व अ°. ३ एफ् °न्ते लि°. ४ डी °न्ते घुलिट् ध°. ५ बी एफ् °ढ मु°. ६ सी डी °ट् द्रुह् द्रु°. ७ बी सी एफ् °ग् आर्ति°. ८ एफ् जम्बुक°. ९ डी जम्बकजेहुलौ नाम मूलराजस्य महाप्रधानौ। ता°. एफ् जम्बुको. १० सी °हाम°. ११ ए °हुरश्च. १२ एफ् °धानः ता°. १३ एफ् यदुपो°. १४ एफ् °योः परो°.

प्रतीहारे । किंभूते । जनेषु विज्ञापकलोकेषु विषये[1] वक्तरि वदति । किमित्याह । किमात्थ किमिति ब्रूषेधुना विज्ञापनायां[2] नावसर इति तूष्णीं तिष्ठेत्यर्थ इति । निषेध्यानां जनानां बहुत्वेपि प्रत्येकं निषेधस्य[3] विवक्षितत्वादात्थेत्यत्रैकवचनम् । कीदृक् सः । भक्तिभाग्विनयान्विता वाग्वाणी येषां तैस्तथाभूतैर्नृपैर्नद्धाः परिहिता ये[4] मौलयो नृपचिह्न[5]मुकुटानि तत्र यानि रत्नानि तैरञ्चिते पूजिते उपानहौ पादुके यस्य स तथा । मुकुटबद्धनृपैः कृतप्राभातिकसेवावसर इत्यर्थः ॥

नद्ध । उपानत् । आत्थ । इत्यत्र "नहाहोर्धतौ" [८५] इति धतौ ॥

वक्तरि । वार्क् । जैः । भक्ति । भाग् । इत्यत्र "चजः कगम्" [८६] इति कगौ ॥

विप्रेट् स यष्टेव शतं क्रतूनां मार्ष्टा गुणानां गुणराष्टिसृड्भ्याम् ।
सम्राडमूभ्यामरिवर्गभृड्भ्यां स्रष्टेव विभ्राड्द्विधिकंसमृड्भ्याम् ॥५७॥

५७. स सम्राड् नृपेशोमूभ्यां जम्बकजेहुलाभ्यां सह विभ्राट् शोभमानोभूत् । कीदृक् । क्रतूनां शतं यष्टेव शतक्रतुरिव विप्रान् यजते पूजयति क्विपि विप्रेट् । यथेन्द्रः क्रतूनां शतं कारयन्विप्रानिष्टवांस्तथा यजन । तथा गुणानां धीमत्त्वकान्तत्वादीनां मार्ष्टा यथोचितं व्यापारणेन निर्मलीकारकः । कीदृग्भ्याममूभ्याम् । गुणराष्टिसृड्भ्यां गुणै राष्टिं राजनं शोभां सृजतः कुरुतो यौ ताभ्यां गुणैः शोभनाभ्यामित्यर्थः । अत एवारिवर्गं स्वस्य राज्ञश्च बाह्यमान्तरं च शत्रुसमूहं भृजतः

१ डी °येषु व°. २ एफ् °यानव°. ३ सी डी °षेधाय वि°. ४ एफ् ये मूह°. ५ सी °चिह्न मु°. डी °चिह्नानि मु°. ६ डी °क् इ°. एफ् °क् म°. ७ सी जः क°. ८ एफ् °मका°. ९ एफ् °चितव्यापारेण नि°. १० एफ् °ममव्यन्त°.

पचतो विनाशयतो यौ ताभ्यां यथा स्रष्टा हरो विधिकंसमृड्भ्यां विधिर्ब्रह्मा। कंसं मार्ष्टि शोधयति विनाशयतीत्यर्थः। कंसमृड् विष्णुस्ताभ्यां सहितो विभ्राजते॥

विरुद्धकार्ययोरुपनिपाते हि मन्त्रः स्यादिति ते वृत्तद्वयेनाह।

दन्तांशुजालैः परिभृष्टशङ्खक्षोदैरिवोद्भ्राष्टि सदः प्रकुर्वन्।
स विट्पतिः प्राह तयोर्निविष्टः प्रभासवृश्चृष्टनिदेशमैशम्॥५८॥

५८. निविष्टः सिंहासन उपविष्टः स विट्पतिर्विशां पतिर्नृपस्तयोर्जम्बकजेहुलयोरैशं शांभवं प्रभासं तीर्थं वृश्चन्त्युपद्रवन्ति प्रभासवृश्चो ग्राहार्यादयस्तेषां व्रष्टा छेदको यो निदेश उपदेशस्तं प्राह। तत्कालापेक्षया वर्तमानकालता। कीदृक्सन्। दन्तांशुजालैरतिश्वेतत्वात्परिभृष्टशङ्खक्षोदैरिव परिभृष्टः परिपक्वो यः शङ्खस्तस्य ये क्षोदाः क्षुद्यमाना अवयवा अर्थाद्द्रवीभूतास्तैरिव कृत्वा सदो मन्त्रमण्डपमुद्‌लसन्ती भ्राष्टिर्भ्रोजनं शोभा यस्य तत्। शङ्खद्रवविलिप्तमिवेत्यर्थः। प्रकुर्वन्। राजसभा हि शङ्खद्रवविलिप्ता स्यात्॥

कृतो मया ग्राहरिपुः स जज्ञे परं परिव्राट्तडलकुलग्नः।
प्रष्टास्मि तष्टास्य कथं न्वहं स्यां स्वरोपिते कः प्रजिहीः पुमानूर्क्॥५९

५९. ग्राहरिपुर्मया कृतः प्रतिष्ठितः। परं केवलं स ग्राहरिपुः कुत्सितं लग्नं राश्युदयो यस्य स कुलग्नः कुमुहूर्तजातोत एव न लज्जते-लभिर्लज्जः सन्परिव्राजस्तपस्विनस्तक्षति हिनस्ति परिव्राट्तड् तापसहिं-

१ सी डी °यती°. २ एफ् °जम्बुक°. ३ ए बी सी एफ् °रिभ्रष्ट°. ४ एफ् °मुल्ल°. ५ ए सी डी कृतम°.

सको जज्ञे । अस्म्यहं नु प्रष्टा युवां पृच्छामि । किमित्याह । नु इति वितर्के । युवां वितर्केथां कथमस्य ग्राहरिपोस्तष्टा विनाशकोहं स्यां भवेयम । अथ भणिष्यथो यद्यन्याय्येप तच्छिक्ष्यतां किमनेन प्रश्नेनेत्याह । स्वरोपित आत्मसंस्थापिते जन ऊर्जयतीत्यूर्क् सात्त्विकः पुमान्पुरुषगुणोपेतः कः प्रजिहीः प्रहर्तुमिच्छेत् । न कोपीत्यर्थः । एवं चास्य वध्यत्वावध्यत्वरूपयोर्विरुद्धकार्ययोरुपस्थितयोः किं कार्यमित्यहं युवां प्रष्टा ॥

तस्माद्युवां यद्विधेयं तद्वदतमित्याह ।

**त्वमभ्यपास्पा गुरुणाभ्यजर्घास्त्वं चोशनस्त्वं रिपुहा महात्मन् ।**
**भियामधामन्मतिधाम कृत्यं युवां ब्रुवाथामनर्हविलम्बम् ॥ ६० ॥**

६०. हे महात्मन् विपुलाशय भियां भयानामधामन्नस्थान मतिधाम बुद्धिगृह जम्बक रिपुहा त्वं गुरुणा बृहस्पतिना सहाभ्यपास्पा भृशमस्पर्धथाः । बुध्या त्वं बृहस्पतितुल्य इत्यर्थः । तथा हे महात्मन् भियामधामन्मतिधाम जेहुल रिपुहा त्वमुशनस्त्वं शुक्रत्वमभ्यजर्घा भृशमगृध्यो भृशमकाङ्क्षः । बुद्ध्यां त्वं शुक्रसम इत्यर्थः । तस्माद्युवां नास्त्यर्हो विलम्बो यत्र तत् शीघ्रं कृत्यं विधेयं ब्रुवाथाम् ॥

यज । यष्टा । विप्रेट् ॥ मृज । स्रष्टा । राड्भिसृड्भ्याम् ॥ मृज । मार्ष्टा । कंसमृड्भ्याम् ॥ राज । राष्टि । सम्राट् ॥ भ्राज । उद्भ्राष्टि । विभ्राड् ॥ भ्रस्ज । परिभृष्ट । वर्गभृड्भ्याम् ॥ व्रश्च । वृष्ट प्रभासवृट् ॥ परिव्राज । परिव्राड् ॥ शकारान्त । निविष्टः । विट् । छादेशोपि शो गृह्यते । प्रष्टा । इत्यत्र "यजसृज" [८७] इत्यादिना षः ॥

१ पफू जन्बुक. २ पफू °तितम इ°. ३ सी डी °मका°. ४ पफू °क शु°. ५ पफू हुर्वाथा°. ६ डी मक्ष्य । . ७ प यी यज़ह°.

लेढा । अलक् । तष्टा । तट् । इत्यत्र "संयोगस्य०" [८८] इत्यादिना स्कोर्लुक् ॥ संयोगस्येति किम् । कृतः ॥

पुमान् । इत्यत्र "पदस्य०" [८९] इति संयोगस्य लुगन्तादेश ॥ पदस्येति किम् । स्याम् ॥

प्रजिहीः । इत्यत्र "रात्सः" [९०] इति सस्यैव लुग् ॥ पूर्वेणैव सिद्धे नियमार्थं वचनम् । तेन रात्परस्य सस्यैव लोपो नान्यस्य । ऊर्क् । अभ्यजर्घाः । अभ्यपास्पा ॥

रिपुहा । इत्यत्र "नाम्नो नः०" [९१] इत्यादिना नस्य लुक् ॥ अनह्न इति किम् । अनहर्विलम्ब्यम् । अत्र परविधौ रेफस्यासत्त्वान्नलोपः स्यात् ॥

महात्मन् । इत्यत्र "नामन्त्र्ये" [९२] इति नलोपाभावः ॥

मतिधाम । अधामन् । इत्यत्र "क्लीबे वा" [९३] इति वा नस्य लुक् ॥

**नृपेथ तूष्णींवति जेहुलो लक्ष्मीवान् यशस्वान्नयवत्सु धीमान् ।**
**मुद्वानदोहीवतिकामुनीवत्यृषीवतीवाःशुचिवाग्बभाषे ॥ ६१ ॥**

६१. अथैवमुक्त्वा नृपे मूलराजे तूष्णींवति मौनस्थिते जेहुलोदो वक्ष्यमाणं बभाषे । उपादेयवाक्योहि मैत्रे भाषेतेत्युपादेयवाक्यताहेतुगर्भविशेषणान्याह । लक्ष्मी राज्यकोशादिश्रीरस्यास्ति लक्ष्मीवान् । लक्ष्मीवान हि प्रायेण सर्वमान्यतयोपादेयवाक्यः स्यात् । लक्ष्मीवानप्यन्याय्यन्यायोपदेशितयाग्राह्यवागेवेत्याह । नयवत्सु मध्ये यशस्वान् श्लाघ्यः । अतिन्यायित्वान्न्याय्यपि निर्बुद्धिरग्राह्यवागेवेत्याह । धीमान् । बुद्धिमानपि शोकातुरो विघटमानवाक्यतयाग्राह्यवागेवेत्याह । मुद्वान हर्षान्वितः । मुद्वानप्यश्लीलवाक्योसुखर्कत्वादग्राह्यवागेवेत्याह ।

१ बी लम्र. । २ ए °त्यस°. ३ सी डी °म् स्या°. ४ ए सी डी नामिन इ°. बी नाम्न् इ°. ५ डी मन मा°. ६ ए सी एफ् °न् हि. ७ ए °क्ष्मीमान°. ८ एफ् °करत्वा°.

अष्ठावाहीवत्यहीवतिका । कपि "ङ्यादीदूतः के" [२.४.१०४] इति ह्रस्वः । तस्याश्च मुनीवत्याश्च ऋषीवत्याश्च नदीनां यद्वार्जलं तद्वच्छुचिः पौनरुक्त्यासत्यत्वादिमलरहितत्वेन निर्मला वाग् वाणी यस्य सः ।

मकारान्तात् । तूष्णींवति ॥ मकारोपान्तात् । लक्ष्मीवान् ॥ अवर्णान्तात् । नयवन्मु ॥ अवर्णोपान्तात् । यशस्वान् ॥ अपञ्चमवर्गात् । मुद्वान् । इत्यत्र "मावर्ण" [९४] इत्यादिना मतोर्मस्य वः ॥ मावर्णान्तोपान्तापञ्चमवर्गादिति किम् । धीमान् ॥

अहीवतिका । मुनीवती । ऋषीवती । इत्यत्र "नाम्नि" [९५] इति मस्य वः ॥

चर्मण्वतीकर्तृसदृग्रुमण्वदुत्तुङ्ग कक्षीवदनल्पधर्मन् ।
युक्तं नताष्ठीवदिलेश शंभुराभीरचक्रीवति यच्चयदिक्षत् ॥ ६२ ॥

६२. हे चर्मण्वतीकर्तृसदृक् । चर्मण्वती नदी तस्याः कर्ता रन्तिदेवः । तेन हि गोमेधयागः कारितः । तत्र चानेकगोवधेन गोरक्तैर्नदी प्रवर्तिता । तस्याश्चानेकगोचर्मयुक्तत्वेन चर्मण्वतीति नाम प्रसिद्धम् । तस्य सदृक् महायागकारित्वात्तत्तुल्य । तथा हे रुमण्वदुत्तुङ्ग । लवणमस्यास्ति रुमण्वान्नाम पर्वतस्तद्वदुत्तुङ्गोन्नताशय । तथा हे कक्षीवदनल्पधर्मन् । कक्ष्याशब्दो योपान्त्यः सादृश्ययोगयोर्वर्तते । कक्ष्या धर्मयोगोस्यास्ति कक्षीवान्नामर्षिस्तद्वत्प्रभूतधर्म । तथास्थीनि सन्त्येषामष्ठीवन्तो जह्वोरुसंधयो नता अष्ठीवन्तो येषां ते तथेलेशा यस्य तत्संबोधनं हे प्रणतानेकभूप । आभीरे आभीरजातिर्मोहरिपुश्चक्रं मण्डलं मेहनान्ते-

१ बी °र्मन्वतीं°. २ ए सी °मन्वदु°.

१ एफ् °र्मानेतोस्य इ°. २ एफ् °आ क°. ३ डी °आ हे नताष्ठीवदिलेशाखी°. ४ डी °णाने°. ५ सी डी °रजा°. ६ ए एफ् °विमाह°.

स्यास्ति चक्रीवान् गर्दभ आभीर एवान्यायित्वेन निन्द्यत्वाच्चक्रीवांस्तस्मिन्विषये शंभुर्यदनुशासनं न्यदिक्षत्तद्युक्तम्। धार्मिकस्य सैन्यादिसर्वशक्तियुक्तस्य तवान्यायिनि ग्राहरिपौ विषये यः शांभवोनुशासनादेशः स कर्तव्यो मे प्रतिभातीत्यर्थः ॥

अथ राज्ञो मन्यूद्दीपनाय जगत्त्रयसंतापकानि ग्राहरिपोरनेकान्यन्यायपदानि बलानि च वृत्तचतुर्विंशत्या वदन्नीशादेशस्यैव युक्ततां द्रढयति।

औदन्वतद्रोहकरेण चर्मवत्यस्थिमत्यर्दिततीर्थपान्थैः।
कक्ष्यावतामप्यगमाभ्युदन्वत्प्रभासभूश्चक्रवतामुनाभूत् ॥ ६३ ॥

६३. उदन्वन्तं समुद्रमभि "लक्षणेनाभि°" [२.१.३३] इत्यादिनाव्ययीभावे अभ्युदन्वदुदन्वन्तं लक्ष्यीकृत्याभिमुखा प्रभासभूः प्रभासतीर्थभूमिः। प्रभासतीर्थं हि समुद्रसमीपेस्ति। यद्वाभ्यभित उदन्वती समुद्रोदकं बिभ्राणा या प्रभासभूः सा कक्ष्यावतामपि। कर्तरि षष्ठी। उद्यमवद्भिरप्यगमागम्याभूत्। केन हेतुना। अमुना ग्राहारिणा। कीदृशेन। उदकमस्यास्त्युदन्वानृषिस्तस्यापत्यमौदन्वत ऋषिस्तस्य। यद्वोदन्वान्नामाश्रमस्तत्र भवा ऋषयस्तेषाम्। द्रोहकरेण जिघांसुना। तथा चक्रवता सुराष्ट्रादेशस्वामिना। कीदृक्सती भूः। अर्दितामुनैव विनाशिता ये तीर्थपान्था यात्रिकास्तैः कृत्वा चर्मवती चर्मान्विता। तथास्थिमती कीकसान्विता च। अनेनानेकान् यात्रिकान् हतान् दृष्ट्वा यात्राश्रद्धालवोपि भयेन प्रभासे न गच्छन्तीत्यर्थः ॥

चर्मण्वती। अष्ठीवत्। चक्रीवति। कक्षीवत्। रुमण्वत्। इत्येते "चर्मण्वती°" [९६] इत्यादिना निपात्याः ॥ नाम्नीत्येव। चर्मवती। अस्थिमती। चक्रवता। कक्ष्यावताम् ॥

---

१ एफ् आहीर°. २ एफ् आहिरि°. ३ एफ् °ता दृढ°. ४ एफ् कक्षाव°. ५ बी रप्याग°. ६ ए बी °राष्ट्रदे°. ७ एफ् °पाताः ॥. ८ ए सी डी °व। अ°.

मरुधौ । अभ्युदन्वत ॥ नाम्नि । अभ्युदन्वत । औदन्वत । इत्येते "उदन्वा-
न्नब्धौ च" [१७] इति निपात्याः ॥

राजन्वती या हरिणा सुराष्ट्रा तां दन्तिमानूर्मिमदब्धिभीमः ।
शौर्योष्मकण्डूा कृमिमानिवाद्य स भूमिमान्राजवतीं व्यधत्त ॥६४॥

६४. या सुराष्ट्रा देशो हरिणा विष्णुना कृत्वा शोभनो राजास्त्यस्यां राजन्वत्यासीत् । तां सुराष्ट्रामद्य सांप्रतं स भूमिमान्भूपतिर्ग्राहरिपुर्निन्द्यो राजास्त्यस्या निन्दायां मतौ राजवतीं व्यधत्त । कीदृक्सन् । शौर्योष्मकण्डूा शौर्यस्य च ऊष्मा तीव्रता तेन या कण्डूः खर्जूर्युद्धविधानेच्छातिरेकस्तया कृमय सन्त्यस्य कृमिमानिव । कृमिमान् हि कण्डूयुक्तः स्यात् । अत एव दन्तिमान् गजविशेषान्वितः । अत एवोर्मिमदब्धिभीम । यथा कल्लोलान्वितः समुद्रो रौद्रः स्यादेवं दन्तिधारणाद्रौद्र. । सुराष्ट्रायामनिरौद्रोयं कुराजाभूदित्यर्थः ॥

गोहन्मुनीनां यवमन्करणां माहिष्मतीशो नु ककुद्मदंसः ।
पुरे गरुत्मद्द्रुमकुञ्जाहे वसत्यसौ भानुमतीशकल्पः ॥ ६५ ॥

६५. असौ ग्राहारि पुरे वामनस्थल्यां वसति । कीदृक्सन् । माहिष्मान्देशस्तत्र भवा माहिष्मती पुरी तस्या ईश. सहस्रार्जुनो नु यथा सहस्रार्जुनो मुनीनां गोहन् । तेन हि जमदग्निमुनेः कामधेनुर्हठादपहृतेति पुराणम् । तथा यवमन्तो होमार्थं गृहीतयवाः करा येषां तेषां यागविधानव्यमाणामित्यर्थ. । मुनीनां गा हव्यंगवीनहवनार्थं संगृहीता धेनूर्हरति घातयति गोहदपि । अपिरत्र ज्ञेयः । ककुद्मतो वृषभस्येवांसौ स्कन्धौ यस्य स ककुद्मदंसोतिमहिष्ठः । किंभूते पुरे । गरुत्मान् गरुडो द्रु-

---

१ एपू 'हा र'. २ बी 'न्मनि'. ३ सी डी 'दि'.

मान् मारुतिस्तयोस्तुल्या "न नृ°"[७.१.१०८] इत्यादिना कनिषेधे गरुत्मद्धनुमन्तो गरुडहनुमदादिरूपकालंकृता इत्यर्थः । ये ध्वजास्तेषामर्हे योग्येनेककोटीप्रभुमहेभ्याधिष्ठितहर्म्यैरम्यत्वात् । यद्वा । गरुत्मद्धनुमन्तौ ध्वजौ चिह्ने ययोस्तौ गरुत्मद्धनुमद्ध्वजौ वासुदेवार्जुनौ तयोरर्हे वासयोग्ये । वामनस्थल्यां हि वासुदेवार्जुनावुपितावभूताम् । चौरा हि दुर्गपल्ल्यादिस्थान एव वसन्त्ययं तु तथाभूतोपि बलिष्ठत्वेन सर्वथाकुतोभयत्वान्महर्द्धिके पुर एव स्वेच्छया वसतीत्यर्थः । अतश्च महोपन्यायित्वाद्भानुमतीशकल्पो भानुमत्या ईशो भर्ता दुर्योधन[3]स्तत्तुल्यः । सोपि यवमत्कराणां महापुरुषत्वाद्यवाकारसुप्रशस्तलक्षणान्वितहस्तानां मुनीनामुपशमेन मुनितुल्यानां पाण्डवानां गोहृद् द्यूतच्छलेन भूमेरपहर्ता सन् गरुत्मद्धनुमद्ध्वजार्हे पुरे गजपुर उवास ॥

राजन्वती[4] । इति "राजन्वान्सुराज्ञि" [९८] इति निपात्यम् ॥ सुराज्ञीति किम् । राजवतीम् ॥

ऊर्मिमत् । दल्मिमान् । भूमिमान् । कृमिमान् । यवमत् । गरुत्मत्[5] । ककुद्मत् । माहिष्मती । हनुमत् । भानुमती । इत्यत्र वस्य "नोर्म्यादिभ्यः" [९९] इति निषेधः ॥

निशास्ववस्कन्दिनि निश्यशायिन्यासन्यनासीन इहोग्रदोषि ।
मासार्धमासेन स आसनाय मन्येऽनुजो विंशतिदोष्ण इच्छेत् ॥ ६६ ॥

६६. इह ग्राहरिपौ सति मन्ये स शौर्यादिगुणैः प्रसिद्धो विंशतिदोष्णो रावणस्यानुजो विभीषणोर्धमासेन [6]मासा मासेन वासना[7]योपवेशनायेच्छेत् । यतः कीदृशीह । निशास्ववस्कन्दिनि धाटीप्रदे छलपर इत्यर्थः । तथा निश्यपि । अपिर्भिन्नक्रमः(?) अशायिनि सदोद्यत इत्यर्थः ।

---

१ एफ् °त एव म°. २ डी एफ् °हान्या°. ३ एफ् °नस्तेन तुल्य.. ४ एफ् °ती रा°. ५ ए °त्। मा°. ६ ए सी डी मासे°. ७ ए सी डी °नाये°.

तथोमप्रदोपि प्रचण्डबाहुपराक्रमेत एवासनि पीठेनासीने सदा शत्रूनास्कन्दति चेत्यर्थः। मास्सायं छलास्कन्दनेन मामुपद्रवदित्यस्माद्विभ्यद्विभीषणः कुत्राप्यवस्थितिं न बध्नातीत्यहं संभावयामीत्यर्थः॥

दुष्टो हृदा क्ष्माहृदयस्य शल्यं पदार्धपादेन स रावणोनः।
उद्रां निधेरप्युदकैररोध्यः भियासृजोसावपृणाद्विडस्त्रा॥ ६७॥

६७. स प्रसिद्धोसौ ग्राहारिः प्रियमसृग् रुधिरं येषां तान् राक्षसान् द्विडस्त्रा शत्रुरक्तेनापृणदप्रीणयत्। कीदृक्। हृदा चेतसा दुष्टो मायावी। अत एव क्ष्माया हृदयं चित्तमेव हृदयं वक्षस्तस्य शल्यमिव शल्यं लोकानां हृदये निविष्ट. शल्यमिव व्यथाकारीत्यर्थः। तथा स्वाभाविकवलेन विद्यावलेन चोद्रां जलानां निधेः समुद्रस्योदकैरप्यरोध्यो रोद्धुमशक्योत एव पदा चतुर्थभागेनार्धपादेनाष्टमभागेन वा रावणादूनो हीनो रावणोनः। सापेक्षत्वेपि गमकत्वात्समासः। रावणतुल्य इत्यर्थः। सोप्येवंविधः॥

लुलद्यकृत्युच्छकृति द्विडैभे ग्रन्नुच्चदन्ते यमदद्भिरस्त्रैः।
समद्ययूषेण नु रक्तयूष्णा यक्नापशक्नामदयत्पिशाचीः॥ ६८॥

६८. स ग्राहरिपू रक्तयूष्णा रुधिररसेन मद्ययूषेण नु सुरारसेनेव तथापगतं निर्गतं शकृद्विष्ठा यस्मात्तेन यक्ना कालखण्डेन पिशाचीर्व्यन्तरीविशेषानमदयन्मत्तीचक्रे। यतो यमदद्भिरतिरौद्रत्वात् शत्रूणां मृत्युहेतुत्वाच्चान्तकदन्ततुल्यैरस्त्रैः कृत्वोच्चदन्त उन्नतदशने द्विडैभे शत्रूणां गजौघे घ्नन्प्रहरन्। अत एव किंभूते द्विडैभे। लुलत्तीव्रप्रहारवशात्पतद्यकृत्कालेयं यस्य तस्मिन्। तथा भयेनोद्गतं शकृद्विष्ठा यस्य त-

१ एफ् °न्माद्विर्भी° २ सी ६७ प्र°. ३ एफ् °तुर्भागे°. ४ एफ् °महाभा°. ५ एफ् °मासेरा°. ६ सी °वणेतु° डी °वणेन तु°. ७ बी °सेणम°. ८ एफ् °त्वै. शसै.. ९ सी उक्त्व°. डी उच्चैः कृत°. १० एफ् मन्हर°.

स्मिन्। शत्रुसैन्यानि हत्वा तेषां रक्तेन मांसेन च कृत्वासौ पिशाची-रपोषयदित्यर्थः। लुलदित्यत्र लुडो धातोर्ऋफिडादित्वात् [२.३.१०४] डस्य लः। लुलिति धात्वन्तरं केचित्॥

गिरा[1] स्फुरन्नासिकया न्यकार्षीन्नसीतदृष्टिं द्विपदी[2]: सृजन्तम्।
वैयाघ्रपद्यं द्विपदीयबुद्धिं तीर्थे पदां स द्विपदाममित्रः॥ ६९॥

६९. स ग्राहरिपुर्व्याघ्रस्येव पादावस्य व्याघ्रपान्मुनिस्तस्य वृद्धमपत्यं गर्गादित्वाद्यञि [६.१.४२] वैयाघ्रपद्यं मुनि[2] स्फुरन्त्यवज्ञया भ्रु[3]-टन्ती नासिका यस्यां तया गिरा दुर्वाक्येन न्यकार्षीन्निर्भर्त्सितवान्। ननु वैयाघ्रपद्येनापि कायस्य वाचो मनसो वा तदनभीष्टकुव्यापारेणाय-मपराद्धो भविष्यति। नेत्याह। महायोगित्वान्नसि नासिकायामिते प्राप्ते दृष्टी यस्य तमितदृष्टिम्। एतेनास्य[4] कायकुव्यापारनिवृत्तिरुक्ता। तथा द्वौ पादौ यासु ता द्विपदीर्गाथाविशेषान् सृजन्तं कुर्वन्तम्। एतेन वचः कुव्यापारनिवृत्तिरुक्ता। तथा द्वौ पादौ यस्यासौ द्विपान्मनुष्य-स्तस्मै हिता द्विपदीया सा बुद्धिश्चेतोवृत्तिर्यस्य तम्। एतेन मनः[5]शुद्धि-रुक्ता। तर्हि किमित्येतं[6] न्यकार्षीदित्याह। यतस्तीर्थे प्रभासादिपुण्य-क्षेत्रे विषये पदां पद्यमानं गच्छन्तं जनमुपदेशदानेन प्रयुञ्जा[7]नानां [8]णिग्। क्विप्। द्विपदामुक्तासाधारणविशेषणान्मुनीनाममित्रः[9] शत्रुः॥

द्विपात्सु दुष्टेनुपपादुकेस्मिन्वृत्तानि विभ्रत्यतिगूढपान्दि।
लोकाच्चतुष्पाद्यति चैकपादितादप्यपाद्येत कथं न धर्मः॥७०॥

[10]७०. धर्मः कथं नापाद्येत। अत्र पादसमानार्थः पाच्छब्दः। अवि-

१ सी डी एफ् °रा स्फुर°. २ एफ् °पदीं स°

१ ए बी सी एफ् °तो ऋफि°. २ एफ् °निं स्फुर°. ३ एफ् मुटन्ती. ४ बी °स्य कु°. ५ सी डी मतेः शु°. ६ बी °त्येव न्य° एफ् °त्येन न्य°. ७ एफ् °आना. ८ बी एफ् णिच्।. ९ ए °मित्र श°. १० सी डी ७० क°.

धमानः पाचरणो यस्य सोपातपङ्कुः । स इव कथं नाचरेत् । क । सत्यस्मिन् ग्राहारौ । किंभूते । अनुपपादुकेनुपपदनशीलेनुपपन्ने । कार्यकार्यविचाररहित इत्यर्थः । अत एव द्विपात्सु नृषु विषये दुष्टे वधकाभिप्रायेत एव च लोकः कर्मतार्पन्न एकं पादं भागमाख्यायते स णिचि के चैकपादितस्तस्मादपि लोकाच्चतुष्पाद्यति । पादसमानार्थः पाच्छब्दोत्र । ततश्च चतुष्पाच्चतुर्णां पदां भागानां समाहारमिच्छति विश्वासनाय चतुर्थं भागं ग्रहीष्यामीत्युक्तादपि लोकाच्चतुरोपि भागान् ग्रहीतुकाम इत्यर्थः । अत एव चातिगूढपान्दि गूढपादं सर्पमपि रौद्रत्वेन कौटिल्येन चातिक्रान्तानि वृत्तानि लोकदण्डनादीनाचारान् बिभ्रति । कलिमाहात्म्यात्तावदधुना धर्म एकपादेनैवावतिष्ठते । महापापिष्ठेन ग्राहरिपुणा तु धर्मैकपादस्याप्युच्छेदितत्वाद्धर्मः पङ्गुरेवाभूदित्यर्थः । चः पूर्ववाक्यार्थापेक्षया समुच्चये ॥

मासा मासेन । निशि निशासु । आसनि आसनाय । इत्यत्र "मास०" [१००] इत्यादिना लुगन्तादेशो वा ॥

दद्भिः दन्ते । पदा पादेन । नसि नासिकया । हृदा हृदयस्य । द्विड्भ्रा प्रियासृज । यूष्णा यूषेण । उद्नाम् उदके । दोष्णः दोषि । यक्ना यकृति । शक्ना उच्छकृति । इत्यत्र "दन्तपाद" [१०१] इत्यादिना दद्दित्याद्यादेशा वा ॥

वैयाघ्रपद्यम् । द्विपदाम् । द्विपदीः । द्विपदीय । पदाम् । इत्यत्र "यस्वरे" [१०२] इत्यादिना पद् ॥ यस्वर इति किम् । द्विपात्सु ॥ अणिक्यधुटीति किम् । एकपादितावं ॥ क्यंति क्यनूक्यङोरविशेषेण ग्रहः । चतुष्पाद्यति । अपाद्येत । धुटि । गूढपान्दि । नाम्न इत्येव । अनुपपादुके ॥

---

१ सी डी °पन्नमेक २ सी डी °णा नु ध°. ३ एफ् °देश । ४ डी °पदाद । ५ बी एफ् °त । अतिगूढपान्दि । क्ये°. ६ बी एफ् °त । ना°

कृत्वा तिरश्चो नु पुरः पदाचोपाच्यानुदीच्यान्स नृपानहंयुः।
भ्रुवाप्युदीच्यैति हृदाप्युदीचा दिवं जिगीषुर्नृपतिः प्रतीच्याः ७१

७१. स प्रतीच्याः पश्चिमदिशः पतिर्ग्राहरिपुरपाच्यान्दक्षिणदेशसंबन्धिन उदीच्यानुत्तरदेशसंबन्धिनश्च नृपांस्तिरश्चो न्वजादिपशूनिव पुरोग्रतः पदाचः पादचारिणः कृत्वा भ्रुवाप्युदीच्योत्पाटितया हृदापि चेतसा चोदीचोत्पाटितेनैति गच्छति । यतोहंयुरनेकनृपपदातिभावनयनेन संजातस्वबलवीर्यसंपत्त्युत्कर्षोद्भवाध्मातः । गर्वाध्मातत्वात्कमपि चक्षुषा नेक्षते चेतसा न स्मरति चेत्यर्थः। उत्प्रेक्ष्यते। नायं गर्वातिरेकादुत्पाटितभ्रूहृदयः किं तु दिवं स्वर्गं जिगीषुर्नु। यो हि यज्जिगीषति स तदभिमुखं मनश्चक्षुश्च निक्षिपति॥

उदीच्यान्। उदीचा। उदीच्या। इत्यत्र "उदच उदीच्" [१०३] इत्युदीच्॥

अपाच्यान्। पदाचः। प्रतीच्याः। इत्यत्र "अच प्राग्दीर्घश्च" [१०४] इति चादेशः प्राग्दीर्घश्च॥ अन्वाचयशिष्टत्वाद्दीर्घत्वस्य तदभावेपि चादेशः स्यात्। तिरश्च.॥

विदुष्मतः पुंविदुषोप्यधर्मोपेयुष्मतः पापनिषेदुषोस्य।
रौद्रास्त्रवैदुष्यजुषोतिभाराद्विषेदुषी क्ष्मा विदुषी चरित्रम्॥ ७२॥

७२. अस्य ग्राहरिपोरतिभाराद्विषेदुषी विषण्णा दुःखिता सती क्ष्मास्य चरित्रं पापस्वरूपं वृत्तं विदुषी ज्ञात्री। एतन्महापापभराक्रान्ता पृथ्व्येवैतद्दुर्वृत्तं जानाति नान्यः कोपीत्यर्थः। यतो विद्वांसो भूम्ना सन्त्यस्य तस्य विदुष्मतोपि। अपिरत्रापि योज्यः। अधर्मोपेयिवांसोधर्ममुपगताः पापिष्ठाः प्रशस्याः सन्त्यस्य तस्याधर्मोपेयुष्मतः प्रभूत-

१ बी °दीच्योत्पा° २ एफ् °ध्मातत्वा°. ३ एफ् °चवशि° ४ डी ज्ञातवती। ए° ५ बी एफ् °मुपाग°.

विद्वत्सङ्गमेपि पापिष्ठजनसङ्गनिरतस्येत्यर्थः । अतश्च पुंविदुषोपि नृषु मध्ये जानतोपि पापनिषेदुषः पापेन्यायकर्माणि तस्थुषः । विद्वज्जनसङ्गत्या धर्माधर्मादिविवेकं जानतोपि पापिष्ठजनसङ्गातिप्रसङ्गेन पापकर्मनिरतस्येत्यर्थः । तथा रौद्राणि भीष्माणि रुद्रदैवतानि वा यान्यस्त्राणि शस्त्राणि तद्विषयं यद्वैदुष्यं नैपुण्यं तज्जुषते सेवते यस्तस्य । रौद्रास्त्रबलिष्ठत्वात्पापकर्मणः केनापि निवर्तयितुमशक्यस्य चेत्यर्थः ॥

वैदुष्य । विदुषः । विदुषी । निषेदुषः । विषेदुषी । विदुष्मतः । उपेयुष्मतः । इत्यत्र "क्वसुष्मतौ च" [१०५] इत्युष ॥

नृशंसतारण्यशुनोस्य यूनो जिघृक्षतो माघवनीं नु लक्ष्मीम् ।
मतिः शुनीपुच्छनिभातियूनी शल्यं मघोनीं भजतो मघोनः ॥७३॥

७३. यूनस्तरुणस्यास्य ग्राहरिपोर्नृशंसतया क्रूरत्वेनारण्यशुनो वृकतुल्यस्य सतो मतिरस्ति । किंभूता । अतियूनी युवानमतिक्रान्ता । युवा हि प्रायो यौवनेन मदोद्धतः स्यात्तस्मादपि मदोद्धतेत्यर्थः । शुनीपुच्छनिभा कुर्कुरीपुच्छवत्कुटिला च । उत्प्रेक्ष्यते । नास्य मतिर्मदेनोत्ताना वक्रा च किं तु माघवनीं शक्रसत्कां लक्ष्मीं जिघृक्षतो नु ग्रहीतुमिच्छोरिव । यो ह्युन्नतवार्दिस्थं फलं जिघृक्षति तस्योच्चफलोत्तारणायोत्ताना वक्राचाङ्कुटयष्टिः स्यात् । अत एव मघोनीं शचीं भजतोपि । अपिरत्र ज्ञेयः । मघोन इन्द्रस्य शल्यं रतिसुखसागरावगाहकालेपीन्द्रस्य तन्मतिर्हृदयस्था शल्यमिव दुःखाकरोतीत्यर्थः ॥

---

१ एफ् सङ्गति°. २ सी °णि त° ३ सी डी यद्विदु° ४ एफ् नैः पु° ५ एफ् निर्वर्तयि°. ६ एफ् शंससतारण्यशुनो नृसशत°. ७ एफ् °त्प्रेक्षते. ८ एफ् नु गृही°. ९ एफ् °क्रा च कुट. १० बी एफ् दुःख क°.

स यौवनाच्छौवनमत्ततामृल्लोलो युवत्यां मघवत्यभीरुः ।
कीलाल्पेष्वा विनिहत्य राज्ञो राज्ञीरुदस्रा निदधेवरोधे ॥ ७४ ॥

७४. स आहारिः कीलालपेष्वा रक्तं पिबता शरेण राज्ञो विनिहत्य तेषां राज्ञीरुदस्राः कष्टाद्रुदतीः सतीरवरोधेन्तःपुरे निदधे । यतः कीदृक् । यौवनाद्यूनो विकाराद्धेतोः शौवनमत्ततामृत् । शुन इयं शौवनी या मत्तता मदस्तां बिभर्ति यः सः । श्वेव मदनोन्मादीत्यर्थः । अत एव युवत्याम् । जातावेकवचनम् । युवतिषु लोलो लम्पटः । तथा मघवत्यपि । अपिरत्र ज्ञेयः । इन्द्रस्यशक्त्यादिभ्योपीत्यर्थः । अभीरुर्महाशक्तित्वात् ॥

शुनी । शुनः । अतियूनी । यूनः । मघोनीम् । मघोनः । इत्यत्र "श्वन्॰" [१०६] इत्यादिना वस्य उ॰ ॥ ङीस्याद्यघुट्स्वर इति किम् । शौवनं । यौवनात् । माघवनीम् ॥ नकारान्तनिर्देशादिह न स्यात् । युवत्याम् । मघवति । मघवदिति प्रकृत्यन्तरं शक्रवाचकम् ॥

कीलालप । इत्यत्र "लुगातोनापः" [१०७] इत्यातो लुक् ॥ अनाप इति किम् । उदस्राः ॥

राज्ञीः । राज्ञः । इत्यत्र "अनोस्य" [१०८] इत्यनोतो लुक् ॥

साम्नीव साम्नी इह ताक्ष्णवात्रैग्रस्थामनी राजनि धार्तराष्ट्रे ।
दुष्कर्मणि स्वर्मणि वीक्ष्य भूम्ना मूर्ध्ना न केघप्रतिदीम्नि नेमुः ॥७५॥

७५. अघप्रतिदीम्न्यप्यघस्य पापस्य प्रतिदीम्नीव दिवसतुल्ये पापै-

१ एफ् दु.कर्म॰.

१ सी डी ॰दग्नीर॰. २ सी डी ॰न मा॰.

कप्रवर्तकेपीत्यर्थः । धार्तराज्ञे धृता राजानो येन स धृतराजा आहारिपिता तस्यापत्य इह राजनि आहारौ भूम्ना वाहुल्येन मूर्ध्नो कृत्वा के न नेमु. । यत स्वर्वणि शोभनाश्वे । एतेन सैन्यसंपदुक्तिः । तथा दुष्कर्मणि निस्त्रिंशक्रिये । तथा किं कृत्वा । इह निरीक्ष्य । के । ताक्ष्णवार्त्रघ्नस्थामनी । तक्ष्णो त्वष्टवर्धकेरपत्यं ताक्ष्णो वृत्रासुरः । तथा वृत्रघ्नो वज्रिणोपत्यं वार्त्रघ्नोर्जुन । द्वन्द्वे तयोः स्थामनी पराक्रमौ । वृत्रासुरार्जुनयोरिवाखिलजगज्जैत्रं वलमत्रालोक्य चेत्यर्थः । यथा साम्नि सामवेद आधारे साम्नी रथतरबृहद्रथंतराख्यौ सामविशेषौ जिज्ञासादिना के चिन्निरीक्षन्ते । एतेनाघप्रतिदीव्न्यपि तस्मिन्सर्वेपि नेमुस्तत्रास्य सैन्यसंपन्निस्त्रिंशतातिवलवत्ताजनित भयमेव हेतुर्नान्तरङ्गो बहुमान इत्युक्तम् ॥

साम्नी । स्थामनी । साम्नि । राजनि । इत्यत्र "ईङौ वा" [१०९] इति वा-नोतो लुक् ॥

ताक्ष्णं । वार्त्रघ्न । धार्तराज्ञे । इत्यत्र "पादिहन्०" [११०] इत्यादिनातो लुक् ॥

स्वर्वणि । दुष्कर्मणि । इत्यत्र "न वमन्त०" [१११] इत्यादिनानोतो न लुक् ॥ मयोगादिति किम् । प्रतिदीव्नि । भूम्ना ॥ वमन्तेति किम् । मूर्ध्ना ॥

द्विजान्शतघ्न्यात्र मखघ्नि पृथ्वीप्लीह्नि घ्नति द्राक् स्पृहयन् हविर्भ्यः ।
अद्यैव मन्ये क्षुधितो बलारिः सृष्टिं धिगास्मिन् कुमतौ विधातुः॥७६॥

१ एफ् पृथ्वो प्ली°

१ एफ् दुःकर्म°. २ ए वार्त्रघ्नो° सी वावाघ्नो°. ३ ए सी डी °वदे सा° ४ बी °रीक्ष्यन्ते डी °रीक्षंते ५ बी सी डी °स्मिन्यत्सर्वे. ६ सी डी °भेक एव ७ सी डी °क्ष्ण धा° ८ एफ् दुःकर्म°. ९ एफ् °न्तसयोगादिति नो°.

७६. प्लीहोदररोगभेदः । पृथ्व्याः प्लीहि प्लीहव्याधिवज्जनानां दुःख-केत्र ग्राहरिपौ शतघ्न्यायुधविशेषेण द्विजान्न द्राग् प्रति हिंसत्यत एव मखघ्नि यागोच्छित्तिकारिणि सति मन्येहमद्यैव सांप्रतमेव न त्वग्रेपि बलागिरिन्द्रः क्षुधितः । यतो हविर्भ्ये इन्द्रोद्देशेन संप्रदेयमन्त्रपूतहव्यव-स्तुभ्य स्पृहयन् । तस्मात्कुमतौ पापबुद्धावस्मिन् ग्राहरिपौ विषये विधातुः स्रष्टुः सृष्टिं निर्माणं धिग्गर्हामहे ॥

शतघ्न्या । मखघ्नि । प्रति । इत्यत्र "हनो ह्नो घ्न्" [११२] इति घ्न् ॥ हन इति किम् । प्लीहि ॥

स्पृहयन् । मन्ये । इत्यत्र "लुगस्य°" [११३] इत्यादिनास्य लुक् ॥ अपद इति किम् । बलारिः अद्यैव ॥

कुमतौ । विधातुः । इत्यत्र "ङित्यन्त°" [११४] इत्यादिनान्त्यस्वरादेर्लुक् ॥

**भाती प्रथिम्ना मदतो विभान्ती समुन्मिषन्ती मिषती यमेन ।**
**गलिष्यती द्यां नु भुवं गलिष्यन्ती न्वस्य नेत्रे सदृशी तनुश्च ॥ ७७ ॥**

७७. अस्य ग्राहरिपोर्नेत्रे सदृशी समाने प्रस्तावात्तन्वा । तनुश्च मूर्ति. सदृशी समाना प्रस्तावान्नेत्राभ्याम् । तथा हि नेत्रे तावत्प्रथिम्ना विस्तारेण भाती शोभमाने । तथा मदतः क्षीबतया घूर्णमानत्वारक्त-त्वादिनेत्यर्थ. । विभान्ती तथा समुन्मिषन्ती मदवशादेवान्तरान्तरा विकरालं विकसन्ती । अत एव यमेन सह मिषती स्पर्धमाने यमवद्भीष्मे इत्यर्थ. । अत एवोत्प्रेक्ष्यते । न स्वभावतो यमेन मिषती किं तु द्यां स्वर्गं गलिष्यती नु संहरिष्यमाणे इव तथा भुवं गलिष्यन्ती नु । तनुरपि प्रथिम्ना स्थौल्यजनितविस्तारेण भाती तथा मदतोहंकारात्स्फु-

१ डी दुःखकेत्र altered into दुःखकारकेत्र. २ सी °तहतव्य°. डी °तहोनव्य°. ३ एफ् सृष्टिर्निर्मा°. ४ डी °नत्वर°. ५ सी °राल विककारस°. एफ् °रा विकारा°. ६ डी °रालम्बिविकारमन्ती ।.

रस्फुरायमाणात एव समुन्मिषन्त्युच्छ्वसन्ती । शेषविशेषणानामर्थ एकवचनेन प्राग्वत् ॥

यदास्य पार्श्वे धुनती दलन्ती स्यन्ती परांश्चापलताथ तूणे ।
तदैव सा द्यौर्दिविषत्सु मुक्तद्युषु द्युसद्भूर्द्युभवेत्कथं नु ॥ ७८ ॥

७८. यदास्य ग्राहारेः पार्श्वे चापलता स्यात् । कीदृक् । धुनती ज्याकर्षवशेन कम्पमाना तथा परान् शत्रून् दलन्ती शरक्षेपिकात्वेन विदारयन्ती स्यन्ती परानेवान्तं नयन्ती च । अथ तथा यदा तूणे तूणीरौ धुनती शराकर्षवशात्कम्पमाने शरक्षेपहेतुत्वात्परान् दलन्ती स्यन्ती च स्यातां तदैव दिविषत्सु मुक्तद्युषु भयवशात्त्यक्तस्वर्गेषु सत्सु द्युसदो देवान् दीव्यतीच्छति क्विपि ऊटि च द्युसद्भूर्देवानिच्छन्ती सती सा दीव्यति क्रीडति देवैरित्यन्वर्थेन प्रसिद्धा द्यौः स्वर्लोकः कथं न्वद्यौर्द्युभवेत् द्युभवेद्दीव्यति देवैरित्यन्वर्थयुक्ता कथं नाम स्यात् । न स्यादेवेत्यर्थः ॥

समुन्मिषन्ती । मिषती । गलिष्यन्ती गलिष्यती । विभान्ती भाती । अत्र "अवर्णाद्०" [११५] इत्यादिना वातुरन्तादेश ईङ्योः ॥ अभ इति किम् । धुनती ॥

स्यन्ती । दलन्ती । अत्र "श्यशवः" [११६] इत्यतुरन्तादेशः ईङ्योः ॥

द्यौः । इत्यत्र "दिव औः सौ" [११७] इत्यौः ॥ "निरनुबन्धग्रहणे न सानुबन्धकस्य" [न्या० सू० ३२] इति धातोर्न स्यात् । द्युसद्भूः ॥

मुक्तद्युषु । द्युसत् । इत्यत्र "उः०" [११८] इत्यादिना उः ॥ पदान्त इति किम् । दिविषत्सु ॥ अनूदिति किम् । द्यु भवेत् । अत्र "दीर्घश्वि०" [४ ३.१०८] इत्यादिना च्वौ दीर्घत्वं न स्यात् ॥

पञ्चमः पादः ॥

१ बी °य यथा. २ एफू °न्ती सा. ३ सी डी ए ॥ इति श्रीप°. एफू ए ॥ इति पञ्चमः पादः समर्थितः समाप्तः ॥

**महैनसां कारकवत्क्रियाणां हेतुः स्वतन्त्रः स कुकर्म कर्ता ।**
**विश्वं ततापाट दिशो ललङ्घेऽधीनास दुर्गाणि भयं न लेभे ॥ ७९॥**

७९. स ग्राहरिपुर्विश्वं ततापोद्वेजितवान् । कीदृक्सन् । स्वतन्त्रः सर्वोत्कटत्वात्कस्याप्यनायत्तः । तथा कुकर्म द्रोहवञ्चनादिकां निन्द्यां क्रियां कर्ता स्वयं कुर्वन् । तथा कारकवत् । यथा कारकं कर्त्रादि क्रियाणां धात्वर्थानां पाकादीनां हेतुस्तथा महैनसां महापापानां द्रोहवञ्चनादीनां हेतुः । अन्यैरपि महापापानि कारयंश्चेत्यर्थः । विश्वतापप्रकारानेवाह । आट दिशः । लोकलुण्टनाद्यर्थं सर्वाशा भ्रान्तवान् । तथा ललङ्घेऽब्धीन् । तथास दुर्गाणि । अद्रिकोट्टादिदुर्गस्थानानि बभञ्ज । दिक्षु पलायितोप्यब्धौ दुर्गे वा प्रविष्टोपि न कोप्यस्माद्दैत्याच्छुटित इत्यर्थः । तथा भयं न लेभे । एवं विश्वं सन्तापयन् स्वतन्त्रत्वात्कस्मादपि न भीत इत्यर्थः । योपि कुकर्मरूपः कर्ता विधाता कुदैवं स्यात्सोपि स्वतन्त्रो महैनसां क्रियाणां हेतुः सन्दुर्भिक्षडमराद्युत्पादनेन विश्वं लोकं तपति । दिगब्धिदुर्गाण्याश्रयन्नपि तस्मान्न छुटतीत्युक्तिः ॥

**केल्याप्यटन् भापयते स भूपान्वसूनि गां दोग्ध्यनुशास्त्यधर्मम् ।**
**मुनीन्न सामाह रुणद्धि वृत्तिं न सत्पथं पृच्छति याचतेर्थम् ॥८०॥**

८०. केल्यापि राजपाट्याप्यटन् गच्छन् सन् स ग्राहरिपुर्भूपान् भापयते । राजपाट्यामप्येतावता बलेन याति यावताश्वखुरोत्खातधूलीधूसरिताम्बरोसौ नूनमस्मानास्कन्तुमेतीत्याशङ्कातङ्काकुलान्करोतीत्यर्थः । एतेन च्छद्मपरत्वं बलसंपदतिशयश्चोक्ते । तथा गां पृथ्वीं वसूनि द्रव्याणि दोग्धि क्षारयति । एतेनामुनोर्वी करपीडिता कृतेत्युक्तम् ।

१ ए सी एफ् °स्तथैन°. २ एफ् °लायमानोप्य°. ३ सी डी °श्वं ताप°. ४ बी °त्पानने°. ५ एफ् °कं तापयति. ६ सी डी °न्न छु°. ७ एफ् स ग्रा°. ८ डी याव° ९ एफ् °श्वखरो°. १० एफ् °स्कन्दयितुमे°. ११ एफ् °ङ्काकु°.

तथा गामेवाधर्मं पापमनुशास्ति शिक्षयति पापे व्यापारयतीत्यर्थः । तथा मुनीन्[1] साम मधुरवाक्यं नाह निर्भर्त्सयतीत्यर्थः । तथा मुनीनेव वृत्तिं भिक्षाचर्योञ्छादिकां जीविकां रुणद्धि निवारयति । तथा मुनीन् सत्पथं न्यायमार्गं न पृच्छति न कथापयतीत्यर्थः । तथा मुनीनर्थं द्रव्यं याचते ॥

**रत्नानि रत्नाकरमुच्चिनोति निधीन् कुबेरं विजिगीषतेसौ ।**
**प्राणान्विपक्षैर्युधि भिक्ष्यते च स्वभर्तृभावं बत नीयते च ॥ ८१ ॥**

८१. असौ ग्राहारी रत्नाकरं सागरं रत्नान्युच्चिनोति वियोजयतीत्यर्थः । एतेन कोशसंपदुक्तिः । तथा कुबेरं धनदं निधीन् निधानानि विजिगीषते । एतेन संपूर्णेपि कोशे तद्वृद्धौ निरुद्यमित्वनिरास उक्तः । तथासौ युधि विपक्षैः प्राणान्[2] भिक्ष्यते चास्मान् जीवतो मुञ्चेति जीवितव्यं याच्यते[3] च । एतेन पराक्रमित्वोक्तिः । तथा बतेति खेदे । विपक्षैरेवासौ स्वभर्तृभावमात्मस्वामितां नीयते चात्मनः[4] स्वामी क्रियत इत्यर्थः । एतेन प्रभुसंपदुक्तिः[5] । एतेन सर्वेणास्य[6] दुःसाध्यत्वोक्तिः ॥

**जह्रेन्यदारान् स्वपुरीं दशास्यो गां कार्तवीर्यो यतिनं मुमोष ।**
**भ्रूणानकर्षद्भगिनीं च कंसोग्रहीत्किमेतानसकावनीतीः ॥ ८२ ॥**

८२. दशास्यो रावणोन्यदारान् रामभार्यां सीतां स्वपुरीं लङ्कां[7] जह्रे निनाय । तथा कार्तवीर्यः सहस्रार्जुनो यतिनं जमदग्निं गां कामधेनुं मुमोषापजहार । तथा कंसः कंसाख्यो[8] दैत्यो भगिनीं देवकीं भ्रूणान् गर्भानकर्षद्देवकीपार्श्वाद्वधार्थं भ्रूणान् गृहीतवानित्यर्थः । कं-

---

१ सी डी °नीने°. २ एफ् °न् विमक्ष्य°. ३ ए सी डी °ते । ए°. ४ सी डी °त्मन स्वा°. ५ एफ् °मुत्वस°. ६ एफ् °र्वेण प्रकारेणा°. ७ ए सी डी °ता ल°. ८ सी °ख्यो म.°

सस्य पितोग्रसेनो देवकीपिता[3] देवकश्च भ्रातराविति कंसभगिनीत्वं देवक्याः । एतान्दशास्यादीननीतीरन्यदारापहारादिकानन्यायानसकौ ग्राहारिः किमग्रहीत् । एषां पार्श्वादेता अनीतीः किमसौ जग्राहेत्यर्थः । एतासां सर्वासामप्यनीतीनामत्र दर्शनादेवमाशङ्का ॥

गजाश्वगाः सिन्धुपतिं ममन्थ महीभृतो भेदमुवाह चेत्थम् ।
इन्द्रं गुणान्दण्डितवान्नु कालं स घातयामास न तेन कालः ॥८३॥

८३. स ग्राहारिः सिन्धुपतिं[2] सिन्धुदेशाधिपं गजाश्वगा हस्तितुरङ्ग[3]वृषभान्ममन्थ मथित्वाग्रहीद्दण्डितवानित्यर्थः । तथा महीभृतो नृपान्भेदं संहत्यभावमुवाह च प्रापितवानन्यान्नृपान्कूटप्रयोगेण भेदितवानित्यर्थः । इत्थमनेन प्रकारेणेन्द्रं शक्रं गुणान् सिन्धुपतिमन्थनादीन् धर्मान् दण्डितवान्नु किं हठाज्जग्राह । इन्द्रो हि सिन्धुपतिमब्धिमैरावणं[6] गजमुच्चैःश्रवसमश्वं कामधेनुं गां च ममन्थ । तथा महीभृतोद्रीन्भेदं पक्षच्छेदमुवाह । एते चेन्द्रगुणा अत्रापीक्ष्यन्त इत्येवमाशङ्का । तथा स कालं यमं घातयामास । कर्माविवक्षायां जघान कालः । तं जघ्निवांसं स प्रयुयुजे युद्धादिविधानेन सं सर्वं[7] घातितवानित्यर्थः । न तु कालः कर्ता तेन ग्राहरिपुणा प्रयोज्यकर्त्रा घातयामास । हनने कालस्यापि स प्रयोक्ता न तु तस्य काल इत्यर्थः । इदमुक्तं स्याद्यत्रायं रुष्टस्तमसमयेपि यमो हन्ति यत्र[8] त्वयं प्रसन्नस्तं समयेपि यमो दूरान्नमस्करोति ॥

क्रियाणां हेतुः कारकवदित्यनेन "क्रियाहेतुः कारकम्" [१] इति सूत्रं सूचितम् ॥

१ सी डी °वक°. २ सी डी °न्धुदे°. ३ एफ् °ङ्गमवृ°. ४ एफ् °न्य अग्°. ५ बी °मथना°. ६ एफ् °तिमै°. ७ बी सर्वे. ८ एफ् °त्र चाय.

स्वतन्त्रः कर्तेत्यनेन "स्वतन्त्रः कर्ता" [२] इति सूत्रं[1] सूचितम् ॥ प्रयोजकोपि कर्तैवेति भापयते सः ॥

कर्मेत्यंशेन "कर्तुर्व्याप्यं कर्म" [३] इति सूत्रं[2] व्याञ्जि । तत्कर्म त्रेधा । निर्वर्त्यं विकार्यं प्राप्यं च । निर्वर्त्यं यथा । कुकर्म कर्ता ॥ विकार्यं यथा । विश्वं ततापं ॥ प्राप्यं यथा । आट दिशः ॥ त्रिविधमप्येतत्पुनस्त्रिविधमिष्टमनिष्टमनुभयं[3] च । तत्रेष्टम् । कुकर्मादि ॥ अनिष्टम् । अब्धीन् ललङ्घे । दुर्गाण्यास । भयं न लेभे[4] ॥ अनुभयम् । केल्याप्यटन् भापयते स भूपान् ॥ पुनस्तत्कर्म द्विविधं प्रधानेतरभेदात् । तच्च द्विकर्मकेषु धातुषु दुहि-भिक्षि-रुधि-प्रच्छि चिग्-ब्रूग्-शास्वर्थेषु याचि-जयति-प्रभृतिषु च भवति । दुह्यर्थे । वसूनि गां दोग्धि । भिक्ष्यर्थे[5] । मुनीन् याचतेर्थम् । एवं मुनीन् रुणद्धि वृत्तिम् । मुनींश्च सत्पथं पृच्छति । रत्नानि रत्नाकरमुच्चिनोति । मुनींश्च सामाह । गामधर्ममनुशास्ति ॥ याचेरनुक्तार्थस्योदाहरणं स्वयं ज्ञेयम् ॥ जयतिप्रभृति । निधीन् कुबेरं विजिगीषते । जहेन्यदारान्स्वपुरीम् । गां यतिनं मुमोष । भ्रूणानकर्षन्द्रगिनीम् । अग्रहीदेतानंनीतीः[6] ॥ गजाश्वगाः सिन्धुपतिं ममन्थ । महीभृतो भेदमुवाह । इन्द्रं गुणान्दण्डितवान्[7] ॥ तत्र दुहादीनामप्रधाने कर्मणि कर्मजः प्रत्ययः । असौ प्राणान्विपक्षैर्भिक्ष्यते[8] । नीप्रभृतीनां तु प्रधाने कर्मणि । असौ स्वभर्तृभावं नीयते ॥

कालं स घातयामास न तेन कालः । इत्यत्र "वाकर्मणाम्°" [४] इत्यादिणाणिगवस्थायां यः कर्ता स णौ सति वा कर्म ॥

सोजीगमत्स्वेदमिलां बलौघैरवोधयद्द्वाररुजं फणीन्द्रम् ।
अदर्शयत्कालपुरीमरातीनभोजयत्तत्पिशितं पिशाचान् ॥८४॥

---

१ सी डी सूचि°. २ एफ् °त्र व्यञ्जितम् । त°. ३ बी एफ् °ष्टमुभ°. ४ बी एफ् °भे । उभ°. ५ ए सी °र्थः । व°. ६ सी °ताक°. ७ ए सी °नीतीं । ग°. ८ एफ् °र्मजप्र°.

८४. स ग्राहारिर्वलौघैः कृत्वातिबाहुल्यादिलां महीं खेदं कष्टमजीगमत्प्रापितवान् । अत एव वलौघैः फणीन्द्रं शेषाहिं भाररुजं भारपीडामवोधयत् । तथा वलौघैररातीन्कालपुरीं संयमन्याख्यां यमपुरीमदर्शयत् व्यापादितवानित्यर्थः । अत एव पिशाचांस्तत्पिशितमभोजयत् । एतेन दिग्विजय उक्तः ॥

आश्रावयन्निग्रहगर्भवाचं वन्दीकृतान्दण्डमवीवदत्सः ।
संस्थापयन्वैरिशिरःसु पादं तेजोभिरुग्रैः कमपीपचन्न ॥ ८५ ॥

८५. स ग्राहारिर्हठापहृता नरो वन्दा अवन्दा वन्दाः कृता वन्दीकृतास्तान्निग्रहर्गर्भा । यद्येतावन्न दास्यथ तदाहं युष्मान्मारयिष्यामीति विनाशप्रधाना । या वाक् तामाश्रावयन् शृण्वतः प्रयुञ्जानः सन् वन्दीकृतानेव दण्डमवीवदद्द्राणितवानङ्गीकारितवानित्यर्थः । एतेन म्लेच्छाचारोस्योक्तः । तथा वैरिशिरःसु पादं संस्थापयन् शत्रूनतिन्यक्कुर्वन्नित्यर्थः । स उग्रैः प्रचण्डैस्तेजोभिः प्रतापैः कर्तृभिः कं नापीपचत्कं नादीदहत् ॥

स उज्जयन्ते चमरीर्मृगव्येष्वानाययन्नादयते श्ववृन्दैः ।
आक्रन्दयन्खादयति प्रभासतीर्थाश्रमैणीरपि चित्रकायैः ॥८६॥

८६. स ग्राहारिरुज्जयन्ते रैवतकाद्रौ मृगव्येष्वाखेटकेषु श्ववृन्दैः कुर्कुरौघैः कर्तृभिश्चमरीर्गोविशेषानानाययन्सन् श्ववृन्दैरेव कर्तृभिश्चमरीरादयते खादयति । तथा चित्रकायैर्द्वीपिभिः कर्तृभिः प्रभासतीर्थे य

१ सी आश्रव°.

१ सी स कारग्रा°. २ एफ् °रा अ°. ३ एफ् °तास्ता°. ४ डी °गर्भा य°. ५ डी °दद्रणि°. ६ ए सी डी °वानि°. ७ एफ् °दस्था°. ८ बी °न् सन् श°. ९ सी डी °भिः ता°. १० एफ् कुक्कुरौ°.

आश्रमा मुनिस्थानानि तेषां या एण्यो मृग्यस्ता अपि । आसतां ताव-द्वनस्था मृग्यः प्रभासतीर्थाश्रमावस्थित्यातिपावित्र्याद्वध्या अपील्यपेरर्थः । आक्रन्दयन् । क्रन्दिरत्रान्तर्भूतण्यर्थः सकर्मकः । तीर्थाश्रमैणीरप्याक्रन्दतः कर्णाद्यवयवग्रहेणाराटयतश्चित्रकायान्प्रयुञ्जानः संश्चित्रकायैरेव कर्तृभिः प्रभासतीर्थाश्रमैणीरपि खादयति ॥

तदेवमस्यात्यपन्यायकारितामतिबलिष्ठतां च प्रतिपाद्याधुना कार्यमाह ।

शब्दायय ह्वायय माद्य दूतैस्तं भक्षयन्तं जगताप्यभक्ष्यम् ।
शारीर्द्विपान्वाहय वाहयाज्ञां तद्दण्डचण्डां ननु दण्डनेत्रा ॥८७॥

८७. तत्तस्माद्धेतोः । नन्विति संबोधने । हे राजन्नभक्ष्यं गोमांसादि कर्म जगताप्यास्तां तावदात्मना लोकेनापि कर्त्रा भक्षयन्तम् । उपलक्षणत्वाद्भक्ष्यभक्षणाद्यन्यायेषु जगदपि प्रवर्तयन्तं सन्तमित्यर्थः । तं आहारिं दूतैः कर्तृभिर्मा शब्दायय मा वादय । तथा दूतैर्मा ह्वायय मा-कारय किं तु द्विपान् शारीर्हस्तिपर्याणानि वाहय । शारीर्धारयतो द्विपान् प्रयुङ्क्ष्व युद्धाय सन्नाहयेत्यर्थः । तथा दण्डनेत्रा सेनान्या कर्त्रा दण्डचण्डां तन्निग्रहरौद्रामाज्ञां वाहय प्रापय तं विनाशयेत्यर्थः ॥

गत्यर्थे । अजीगमत्खेदमिलाम् ॥ सामान्यबोधार्थे । अबोधयद्धाररुजं फणीन्द्रम् ॥ विशेषबोधार्थे । अदर्शयत्कालपुरीमरातीन् ॥ आहारार्थे । अभोजयत्तत्पिशितं पिशाचान् ॥ शब्दक्रिय । बन्दीकृतान्दण्डमवीवदत् ॥ शब्दव्याप्य । आश्रावयन्वाचं बन्दीकृतान् ॥ नित्याकर्मक । संस्थापयन् पादम् ॥ इत्यत्र "ग-

१ एफ् °चण्डीं न°.

१ ए °न्दतीः क°. २ एफ् °त्यन्या°. ३ एफ् °चण्डीं त°. ४ सी °त्यर्थः । अ°. ५ ए एफ् °धार्थः । अ°. ६ एफ् °धार्थः । अ°. ७ सी एफ् °रार्थः । अ°. ८ ए सी °मकः । स°.

तिबोध[1]" [५] इत्यादिनाणिकर्तो णौ कर्म ॥ गत्यर्थादीनामिति किम् । तेजोभिः कं नापीपचत् ॥ नयत्यादिवर्जनं किम् ॥ श्ववृन्दैश्चमरीरानाययन्[2] । चित्रकायैरेणीः खादयति । श्ववृन्दैश्चमरीरादयते । दूतैस्तं मा ह्वाययं[4] । दूतैस्तं मा शब्दायय । चित्रकायैरेणीराक्रन्दयन्[5] ॥

"भक्षेर्हिंसायाम्" [६] इत्यत्र हिंसायामेवेति नियमोऽहिंसायामणिकर्तुः कर्मसंज्ञाप्रतिषेधफल एवेत्यस्य सूत्रस्य जगताप्यभक्ष्यं भक्षयन्तमिति कर्मण्यावृत्त्युदाहरणमेव दर्शितम् ॥

शारीर्द्विपान्वाहय । इत्यत्र "वहेः प्रवेय" [७] इत्यणिकर्ता प्रवेयो णौ कर्म ॥ प्रवेय इति किम्[8] । दण्डनेत्राज्ञां वाहय ॥

ननु यदि आहारिर्महीपान्याय्यभक्ष्यभक्षणाद्यन्याये जनमपि प्रवर्तयति तदा तस्यैव दोषो नास्माकमिति राजा मा वोचादित्याह ॥

विहारयेद्यो जनतां कुवर्त्म विहारयेन्मृत्युपथं हि तेन ।
अहारयंस्तं किल दण्डमीशः स्वं हारयेद्धर्ममघेन तस्य ॥ ८८ ॥

८८. यः कोपि जनतां जनौघं कुवर्त्मान्यायमार्गं विहारयेद्भ्रमयेत्तेन कर्त्रा हि स्फुटमीशः समर्थो मृत्युपथं मरणं विहारयेन्मृत्युपथं विहरन्तं तं प्रयुञ्जीत गमयितुमर्हतीत्यर्थः । एतदेव व्यतिरेकेण[11] द्रढयति । किलेत्याप्तवादे । आप्ता[12] एवं वदन्ति । यो जनतां कुवर्त्म विहारयेत्तं[13] नरं दण्डं निग्रहमहारयन्नप्रापयन्नीशः समर्थस्तस्य जनतां कुवर्त्म विहारयितुरघेन पापेन कर्त्रा स्वमात्मीयं धर्मं हारयेच्चोरयेत्[14] । एतेन यदि त्व-

१ एफ् °बोधाहारार्थेत्या°. २ सी डी °म् । चम°. ३ एफ् °यत् । चि°. ४ ए °य । चि°. ५ एफ् °णीरक्र°. ६ सी डी °स्य ज°. ७ बी °न्वाहेत्य°. ८ एफ् °म् । ने°. ९ एफ् °हान्या°. १० एफ् °रयन्मृ°. ११ सी डी एफ् °णद्दढ°. १२ सी डी आप्त एव वदति. १३ एफ् °येद्भ्रमयेत्तं°. १४ सी डी °येत् वार°. एफ् °येत् ए.

मीशः सन् पापिष्ठमेवं जगत्पापे प्रवर्तयन्तं न निग्रहीष्यसि तदैतत्पापेन त्वमपि ग्रहीष्यस इत्युक्तम् ॥

एवमसावनिगृहीतः परलोकेहित इत्युक्त्वा यथेह लोकेप्यहितस्तथाह ॥

अप्यन्तकं स्थाम निकारयेत्स निकारयेस्तं यदि नात्मदण्डैः ।
उपेक्षिताः स्वं ह्यविकारयद्भिः सद्भिः खलाः कैर्न विकारयेयुः ॥८९॥

८९. यदि त्वं तं ग्राहारिमात्मदण्डैः स्वसैन्यैः कर्तृभिर्न निकारयेर्निग्रहेण न तिरस्कारयसि तदा स ग्राहारिः स्थाम बलेनान्तकमपि । आसतामन्ये युष्मादृशा नृपाः । सर्वत्रास्खलितबलं यममपि निकारयेद्ग्राहरिपुः स्वस्थामान्तकं निकुर्वत्प्रयुञ्जीत । स्वस्थाम्ना यममपि पराभवेदित्यर्थः । संभावने सप्तमी । एतेनास्मिन्ननिगृहीते महारोगवद्वर्धमानेसाध्यता गते त्वमपि विनङ्क्ष्यसीत्युक्तम्[२] । एतदेवार्थान्तरन्यासेन द(द्र)ढयति । हि यस्माद्धेतोः स्वमात्मानमविकारयद्भिः । अविकुर्वाणं[३] स्वं प्रयुञ्जानैरविकृतीभवद्भिरित्यर्थः[४] । सद्भिरुपेक्षिताः सन्तः खला दुर्जनाः कैः कर्तृभिर्न विकारयेयुः कान्विकुर्वाणान्न प्रयुञ्जीरन् । किं तु सर्वानपि स्वपदप्रच्यावनादिना विकृतान्कुर्युरित्यर्थः[५] ॥

विहारयेज्जनतां कुवर्त्म । विहारयेन्मृत्युपथं तेन । इत्यत्र गत्यर्थत्वात्प्राप्तौ । स्वमविकारयद्भिः । कैर्न विकारयेयुः । इत्यत्राकर्मकत्वात्प्राप्तौ[६] । अहारयत्त दण्डम् । हारयेद्धर्ममघेन । अन्तकं स्थाम निकारयेत्[७] । दण्डैस्तं निकारयेः । इत्यत्र प्राप्तौ "हृक्रोर्न वा" [८] इत्यणिक्कर्ता णौ कर्म वा ॥

१ सी[?] स्थाम्ना व°. २ सी डी °नक्ष्यसी°. ३ ए °ण स्वयं प्र°. सी एफ् °ण त्यप्र°. ४ बी °कृतैर्भव°. ५ एफ् °रयेयुरित्य°. ६ सी डी °प्तौ । आहा°. ७ एफ् °येरित्य°.

एवं च दण्डमवश्यकार्यतयोक्त्वा तत्प्रतिकूलां क्षमां निरस्यंस्तद्धेतुं रुषं वृत्तद्वयेन[2] कार्यामाह ।

**दुर्नीतिभिर्दर्शयमानमेतमद्यापि किं दर्शयसे प्रसन्नः ।**
**मा मायिनं जात्वभिवादयस्व न्याय्यैर्नयज्ञा ह्यभिवादयन्ते ॥९०॥**

९०. हे राजन्नद्याप्येतन्निग्रहोचितकाल उपस्थितेप्येतं ग्राहारिं त्वं प्रसन्नो नीरोषः सन् किं दर्शयसे । एष त्वां प्रसन्नं पश्यति जानाति तं पश्यन्तं त्वमेवानुकूलाचरणेन किमिति प्रयुङ्क्षे । अस्मिन्प्रसन्नं त्वं मा दर्शयेत्यर्थः[3] । यतः किंभूतमेतम् । दुर्नीतिभिः कर्त्रीभिर्दर्शयमानं दुर्नीतीरेतं पश्यन्तीरेतमेवानुकूलाचरणेन प्रयुञ्जानमपन्यायाश्रयमित्यर्थः । तथैनं मायिनं छद्मपरं सन्तं जातु कदा चिदपि माभिवादयस्व । एतं त्वां माययाभिवदन्तं प्रणमन्तं त्वमेवानुकूलाचरणेन मा प्रयुङ्क्ष्व । हि यस्माद्धेतोर्नयज्ञा नीतिवेदिनो न्याय्यैर्न्यायिभिः कर्तृभिरभिवादयन्ते न्याय्यानभिवदतः प्रणमतोनुकूलाचरणेन प्रयुञ्जते नान्याय्यानिति ॥

एतं दर्शयसे । दुर्नीतिभिर्दर्शयमानम् । एतं माभिवादयस्व । न्याय्यैरभिवादयन्ते । इत्यत्र "दृश्यभि°" [९] इत्यादिनाणिक्कर्तौ णौ कर्म वा ॥

**ननाथ यस्त्वां निशि नाथ नाथं तं नाथसे चेद्यशसामथोच्चैः ।**
**स्ववंशधर्मं स्मरसि स्मृतेर्वा चेत्तद्दयस्वेह रुषां क्षमां मा ॥ ९१ ॥**

९१. हे नाथ निशि यस्त्वां ननाथ ग्राहरिप्वादिदैत्यवधं याचितवांस्तं शंभुं नाथं प्रभुं चेन्नाथसे नाथो मे भूयादित्याशंससे । अथाथ वोच्चैरुन्नतानां यशसां दैत्यवधोत्थकीर्तीनां चेन्नाथसे यदि यशोर्थयसे[5] चेत्यर्थः । तथा स्ववंशधर्मं स्ववंशस्य चौलुक्यान्वयस्य धर्ममपन्याय्युच्छेदनरूप-[6]

१ एप °वका°. २ एफ़ °येनाह ।. ३ सी °र्थः । तथै°. ४ एफ़ °मन्या°. ५ बी °शोर्थ्यसि वेत्य°. ६ एफ़ °मन्या°.

माचारं स्मृतेर्वान्यायिनो निग्राह्या इत्याद्युपदेशरूपाया राजधर्मसंहितायाश्चेत्स्मरसि तत्तदेह ग्राहारौ विषये रुषां कोपानां दयस्व गच्छ कोपं कुर्वित्यर्थः । क्षमां मा क्षान्तिं मा दयस्व ॥

तद्वधाय नाहं शक्त इति राजा मा ज्ञासीदिति तद्वधशक्तौ हेतुमाह ।

**त्वमेव तस्येशिष इत्यदिक्षदीशान ईट् त्वां तदुपस्कुरुष्व ।**
**बलं धियां चास्य वधे रुजेद्धि राज्यस्य राष्ट्रं द्विडुपेक्षणामः ॥ ९२**

९२. हे राजंस्त्वमेव नान्यस्तस्य ग्राहारेरीशिषे प्रभवसि तं वशीकर्तुं शक्तोपीत्यर्थः । इति हेतोस्त्वामीशानस्तव स्वामी भवन्सन्नीट् शंभुस्त्वामदिक्षद्ग्राहारिवधायादिशत् । यदि त्वं तद्वधाय शक्तो नाभविष्यस्तदा शंभुस्त्वां तद्वधे नोपादिक्ष्यत् । तस्मात्तद्वधे त्वं शक्त इत्यर्थः । तत्तस्मादस्य ग्राहारेर्वधे बलं सैन्यमुपस्कुरुष्व सन्नाहादिसामग्र्या विशिण्ढि । तथास्य मायित्वेन केवलबलेन हन्तुमशक्यत्वाद्धियां चोपस्कुरुष्व मन्त्रविशेषेण बुद्धीर्विशिण्ढि विशिष्टबुद्धिप्रयोगं चेह कुर्वित्यर्थः । असौ स्वपापपरिपाकेनैव पक्ष्यते तदस्योपेक्षैव युक्तेति न वाच्यम् । हि यस्माद्विडुपेक्षणामः शत्रूपेक्षणमेवामो रोगो राज्यस्य राष्ट्रं देशं च रुजेत्पीडयेत् । अन्यो रोगः किल रोगिणमेव विनाशयति शत्रूपेक्षारोगस्तु राज्यं राष्ट्रं च विनाशयतीति ग्राहारिवधोपेक्षां मा कृथा इत्यर्थः ॥

अथ राज्ञस्तद्वधे विशेषेणोत्साहनाय यत्स्वयं सर्वविधेयोपदेष्टॄनपि युष्मान्प्रति मयैवमुपदिष्टं तत्सर्वं निरर्थकमिति दर्शयन्नाह ।

**संतापयन्तं ज्वरयन्तमुर्वीं तमामयं छेत्तुमलं निदेशैः ।**
**भुवः किलोज्जासयदद्रिचक्रं केनेन्द्र उज्जासयितुं नियुक्तः ॥ ९३ ॥**

---

१ सी डी कोप. २ बी °मा क्षा°. ३ प फ °दिक्षत्. ४ बी विशण्ढि । ५ बी °विशण्ढि. ६ प फ °वामो रो°.

९३. तं ग्राहारिं छेत्तु निदेशैर्युष्मान्प्रतिभणनैरलं सृतम् । कीदृशं तम । उर्वी[1] पृथ्वीं संतापयन्तं प्रभूतकरादिभिरुपद्रवन्तं ज्वरयन्तं निर्निमित्तसर्वस्वापहारादिभिः पीडयन्तं[2] च । अत एवामयं रोगतुल्यम् । ज्वराद्यामयोपि हि संतापयति[3] ज्वरयति चाङ्गभङ्गादिना बाधते च । यस्मात् । किलेत्याप्तवादे । भुव उज्ञासयत्पातेन हिंसदद्रिचक्रमुज्जासयितुं विदारयितुमिन्द्रः केन नियुक्तो व्यापारितो न केनापीत्यर्थः ॥

अथासौ संप्रत्येव निग्राह्य इति दर्शयन्नाह ।

**लोकस्य पिंषन्तमरिं ह्यनुन्नाटयन्नृपो नाटयति क्षमायाः ।**
**पेष्टा न चेत्तामसि तत्प्रजानामुत्क्राथयन्तं क्रथयेनमद्य ॥ ९४ ॥**

९४. हि यस्माल्लोकस्य पिंषन्तं हिंसन्तमरिमनुन्नाटयन्नहिंसन्नृपो नराणां पाता राजा क्षमाया मह्या नाटयति हिनस्ति । सर्वशक्तिमत्त्वेन यथार्थाभिधानः सन्नृपो यदि पृथ्वीविध्वंसिनो हि शत्रून्न निगृह्णाति तदा वस्तुतः स एव पृथ्वीं विनाशयतीत्यर्थः । तत्तस्माच्चेद्यद्यसि त्वं तां क्षमां न पेष्टा न हिंसिता तदा प्रजानामुत्क्राथयन्तं हिंसन्तमेनं ग्राहारिमद्य सांप्रतमेव क्रथय विनाशय मा कालविलम्बं कार्षीरित्यर्थः ॥

अथैवमेतद्वधं हेतुवादेन[4] द्रढयित्वावसरप्राप्तैर्महापुरुषदृष्टान्तैर्द्रढयन्नाह[5] ॥

**जम्भं यथाजीजसदुग्रधन्वा मधुं यथानीनटदब्धिशायी ।**
**पुरं यथाचिक्रथदीश एवं निघ्नन्तमुर्व्याः प्रणिजह्यमुं त्वम् ॥९५॥**

९५. यथोग्रधन्वेन्द्रो जम्भं जम्भाभिधं दैत्यमजीजसज्जघान । यथा[7] चाब्धिशायी विष्णुर्मधुं मधुदैत्यमनीनटद्धिंसितवान्[8] । यथा चेशो

---

१ डी °भि. कृत्वोप°. २ ए सी °न्त वात. ३ सी डी °ति चा°. ४ एफ् °शती°. ५ ए सी डी एफ् °न दृढ°. ६ बी एफ् °न्तैर्दृढ°. ७ सी °था वाब्धि°. ८ एफ् °टद्धिंसमि°.

हरः पुरं पुराख्यं दैत्यमचिक्रथद्धिंसितवान् । एवमुर्व्याः पृथ्व्या निघ्नन्तममुं ग्राहारिं त्वं प्रणिजहि हिन्धि ॥

श्रुत्वेति वाचं द्विषतां प्रहन्तुं राज्ञा खरादीनिव निप्रहन्त्रा ।
मन्त्री दृशा प्रेरित इत्यवोचत्स जम्बको जाम्बवदग्र्यबुद्धिः॥९६॥

९६. जम्बको नाम मन्त्रीति वक्ष्यमाणमवोचत् । यत इति पूर्वोक्तां वाचं जेहुलवाणीं श्रुत्वा द्विषतां ग्राहरिप्वादीनां शत्रूणां प्रहन्तुं राज्ञा मूलराजेन दृशा प्रेरितो व्यापारितः । शत्रवः कथं हन्तव्या इति दृक्संज्ञया पृष्ट इत्यर्थः । कस्मात्पृष्ट इत्याह । यतो जाम्बवान् सुग्रीवमन्त्री तस्येवाग्र्या बुद्धिर्यस्य सः खरादीन्निप्रहन्त्रेव यथा खरदूषणादीन्निप्रहन्त्रा राज्ञा रामेण द्विषतां रावणादीनां प्रहन्तुं दृक्संज्ञया पृष्टो जाम्बवानवोचत् ॥

यशसा नाथसे त नाथसे । इत्यत्र "नाथः" [१०] इति वा कर्म । "आशिषि नाथ." [३.३.३५] इत्यात्मनेपदम् ॥ आत्मन इत्येव । ननाथ त्वाम् ॥

स्मृतेः स्मरसि धर्मं स्मरसि । रुपां दयस्व क्षमां मा दयस्व । तस्येशिषे त्वामीशानः । इत्यत्र "स्मृत्यर्थ°" [११] इत्यादिना वा कर्म ॥

धियामुपस्कुरुष्व बलमुपस्कुरुष्व । इत्यत्र "कृगः°" [१२] इत्यादिना वा कर्म ॥

राज्यस्य रुजेत् राष्ट्रं रुजेत् । इत्यत्र "रुजार्थस्य°" [१३] इत्यादिना वा कर्म ॥ ज्वरिसतापिवर्जन किम् । उर्वीं ज्वरयन्तम् । संतापयन्तम् ॥

आमयं भुव उज्जासयत् । अद्रिचक्रमुज्जासयितुम् । क्षमाया नाटयति अरिम-

[१] एफ् जम्बुको जाम्बुव°.

१ एफ् °धहिसि° २ एफ् जम्बुको°. ३ एफ् जाम्बुवा°. ४ एफ् रुप ६° ५ एफ् °सतवि°. ६ एफ् °रन्त°. ७ ए क्षमया.

नुन्नाटयन् । प्रजानामुत्क्राथयन्तम् एनं क्रथय । लोकस्य पिंपन्तं तां पेष्टा । इत्यत्र "जासनाट°" [१४] इत्यादिना वा कर्म ॥ जासनाटक्राथनामाकारोपान्तनिर्देशो यत्राकारश्रुतिस्तत्र यथा स्यादित्येवमर्थः[1] । तेनेह न स्यात् । जम्भमजीजसत् । मधुमनीनटत् । पुरमचिक्रथत् । अत एव च क्राथे. कर्मसंज्ञाप्रतिषेधपक्षे ह्रस्वत्वाभावः । कर्मत्वे तु ह्रस्वत्वमेव ॥

उर्व्या निघ्नन्तम् । द्विषतां प्रहन्तुम् । इत्यत्र "निप्रेभ्यो घ्नः" [१५] इति[2] वा कर्म ॥ पक्षे । खरादीन्निप्रहन्ना । अमुं प्रणिजहि ॥

न क्रेपणायन् सुहृदां सुतांश्च व्यवाहरन्वा विभवानसूनाम् ।
कार्ये प्रभोर्जेहुलवत्त्ववादीत्तथ्यं च पथ्यं च न कश्चिदित्थम् ॥९७॥

९७. प्रभोः कार्ये । नैमित्तिक आधारे सप्तमीयम् । स्वामिकार्यार्थं[3] के स्वामिभक्तभृत्याः सुहृदां मित्राणां सुतांश्च मित्रेभ्यः प्रियतराण्यपत्यानि च नापणायन् । वाथवा । विभवान्[4] बाह्याः प्राणा नृणामर्थ इति सुतेभ्योपि प्रियतराणि द्रव्याण्यसूनां विभवेभ्योपि प्रियतराणां प्राणानां च न व्यवाहरन् क्रयविक्रये[5] द्यूतपणत्वे वा न नियुक्तवन्तः । किं त्वनेकेपि प्रभुकार्यार्थं सुहृदादि व्ययितवन्त इत्यर्थः । तुर्विशेषे । केवलं प्रभोः कार्ये जेहुलवत्तथ्यं[6] च सत्यं च पथ्यं च हितं चेत्थमुक्तरीत्या न कश्चिदकोप्यवादीत् । एतेन जेहुलस्यात्यन्तिकी स्वामिभक्तिः प्रज्ञातिशयश्चोक्तः ॥

सुहृदामपणायन् सुतानपणायन् । असूनां व्यवाहरन् विभवान्व्यवाहरन् । इत्यत्र "विनिमेय°" [१६] इत्यादिना वा कर्म ॥

---

१ सी डी °र्थस्तत्तस्या°. २ बी क्रार्थः क°. ३ एफ् इ वा. ४ ए विभानन्. ५ सी क्रये. ६ एफ् °थ्य हि°

अथ प्रभुकार्ये येसत्यमहितं च भाषन्ते तान् दूषयति ॥

कीर्तेः प्रदीव्यन्ति कुलं च दीव्यन्त्यात्मोन्नतेस्ते किल ये हि मन्त्रे ।
दीव्यन्ति कूटं चटुना च लोभमध्यासिताः पापमधिष्ठिताश्च ॥ ९८ ॥

९८. ये मन्त्रिणो मन्त्रे कूटमलीकेन चटुना च चाटुकारेण च दीव्यन्ति व्यवहरन्ति । कीदृशाः सन्तः । हि स्फुटं लोभं धनादिगार्ध्यमध्यासिता आश्रिता अत एव पापं वञ्चनाप्रयोगमधिष्ठिताश्च । लोभान्मन्त्रे सत्यं हितं च न भाषन्त इत्यर्थः । ते । किलेति सत्ये । कीर्तेः कुलं च प्रदीव्यन्ति । तथात्मोन्नतेः स्वमहत्त्वस्य दीव्यन्ति । क्रयविक्रयं द्यूतपणत्वे वा विनियुञ्जते कीर्तिं कुलमात्मोन्नतिं च निर्गमयन्तीत्यर्थः । तन्मन्त्रो हि किंपाकफलमिव मुखे मधुर आयतौ नायकस्य महाविपद्धेतुरित्येतेषां कीर्त्यादुच्छिनत्ति ॥

अथ यः प्रभुकार्ये सत्यवादी तं वर्णयति ॥

भर्तुः स चेतोधिशयीत सोधिवसेत्सभामावसतां च मौलिम् ।
गुरोः समीपं स उपोषितश्च ब्रूयात्सदोनूषितवान् स्फुटं यः ॥ ९९ ॥

९९. सदो मन्त्रमण्डपमनूषितवानध्यासितो यः स्फुटं सत्यं ब्रूयात्स नरो भर्तुः स्वामिनश्चेतोधिशयीताध्यासीत । तथा सभामावसतामाश्रयतां सभासदां मौलिमुत्तमाङ्गं मुकुटं वा सोधिवसेदारोहेत् । सर्वकार्येषु प्रष्टव्यतर्या सभ्येषु मौलिरिवोत्तमः स्यादित्यर्थः । तथा स गुरोः समीपमुपोषितश्च गुरुकुलं सेवितवांश्च तेनैव विद्या सम्यगधीतेत्यर्थः ॥

---

१ सी कीर्तिः प्र°.

---

१ बी °ताश्च श्रिताश्च. एफ् °ताश्चाश्रिताश्च. २ सी डी क्रये. ३ सी डी °यतील°. ४ बी एफ् गुरम° ५ बी एफ् °हेन स°. ६ डी °या सैन्येपु.

कीर्तेः प्रदीव्यन्ति कुलं प्रदीव्यन्ति । इत्यत्र "उपसर्गाद्दिवः" [१७] इति वा कर्म ॥ उपसर्गादिति किम् । आत्मोन्नतेर्दीव्यन्ति ॥ अत्र "न" [१८] इत्यनेन नित्य कर्मसंज्ञा न ॥

कृटं दीव्यन्ति । चटुना दीव्यन्ति । इत्यत्र "करणं च" [१९] इति दीव्यतेः करणं कर्म करणं च । तेन कर्मत्वे द्वितीया करणत्वे च तृतीया ॥

चेतोधिशयीत । पापमधिष्ठिताः । लोभमध्यासिताः । इत्यत्र "अधेः शीङ्°" [२०] इत्यादिना कर्म ॥

समीपमुपोषितः । सदोनूषितवान् । मौलिमधिवसेत् । सभामावसताम् । इत्यत्र "उपान्व्°" [२१] इत्यादिना कर्म ॥

अथासत्यस्य दोषान्सत्यस्य च गुणानुक्त्वा सत्यमेव वक्तुमुपक्रमते ॥

तच्चेर्थशास्त्रेभिनिविष्टबुद्धेर्वदाम्यमिथ्याभिनिविश्य पार्श्वम् ।
गोदोहमीशे त्रुटिमप्युदास्ते य आस्यते द्राग्नरकं हि तेन ॥१००॥

१००. यस्मात्सत्यासत्ये पूर्वोक्तगुणदोषोपेते तत्तस्माद्धेतोरर्थशास्त्रे नीतिशास्त्रेभिनिविष्टबुद्धेः क्षुण्णमतेः सतस्ते तव पार्श्वमभिनिविश्याश्रित्यामिथ्या सत्यमहं वदामि । वर्तमानकालनिर्देशोधुनैव वदामीति भणनस्यातिशैघ्यज्ञापनार्थः । शीघ्रवदने हेतुमाह । हि यस्मादीशे स्वामिनि स्वामिकार्यविषय इत्यर्थः ॥ गोदोहं यावता कालेन गौर्दुह्यते तावन्तं कालमित्यर्थः । त्रुटिमपि ।

प्रयत्नेन विमुक्तस्य यवस्य पततोम्बरात् ।
द्वियवं यावदध्वानं यः कालः स त्रुटिर्मतः ॥

इत्यतिसूक्ष्मकालमपि यो भृत्य उदास्त उपेक्षते तेन द्राग् नरकमास्यते स्थीयते स्वामिनो द्रोहस्येवोपेक्षाया अपि महापापहेतुत्वात् ॥

---

१ सी °हस्यैवो°. २ सी डी °पापे हे°.

अथ प्रतिज्ञातं सत्यमेव वृत्तनवकेन वदन्प्राग्ग्राहारेर्दुर्गसंपद्बलसंपद्दादिबलिष्ठतया दुःसाध्यत्वप्रतिपादनेन ग्राहारिं हन्तुं ससैन्यं दण्डनेतारं प्रेषयेति जेहुलवाक्यमाक्षिपंस्तस्य स्वयमास्कन्यतां वृत्तत्रयेणाह ॥

**क्रोशे गिरिर्योजनमाब्धिरस्य दुर्गं स्वपुर्यां वसतोस्त्यमुं तत् ।**
**समुत्थितं निश्यपि शालिपाकेप्यशायिनं मा स्म मथाः सुसाधम् ॥१०१**

१०१. अस्य ग्राहारेः स्वपुर्यां वामनस्थल्यां वसतः क्रोशे गिरिरुज्जयन्ताद्रिस्तथा योजनं क्रोशचतुष्टयेब्धिश्च दुर्गं दुर्गस्थानमस्ति । गिरिरब्धिश्चास्यातिनिकटं दुर्गमस्तीत्यर्थः । तत्तस्माद्धेतोरमुं ग्राहारिं सुसाधं सुखजेयं मा स्म मथा मा ज्ञासीः । कीदृशं सन्तम् । निश्यपि समुत्थितमुद्यतम् । अत एव शालिपाकेपि यावता कालेन शालिः पच्यते तावत्यपि काले । शालिर्हि स्तोककाले पच्यत इति स्तोककालमपीत्यर्थः । अशायिनम् । दुर्गबलयुक्तत्वात्सदोद्यतत्वाच्च दुःसाधं जानीहीत्यर्थः । क्रोशे योजनमित्यत्रैकवचनमस्य गिरिसमुद्रदुर्गयोरतिनैकट्यज्ञापनार्थम् । अन्यथा वामनस्थलीतो गिरेः क्रोशसप्तकेब्धेश्च पञ्चयोजन्यां वर्तमानत्वात्तदनुपपन्नं स्यात् । यद्वा वामनस्थल्यां तदा वास्तव्यानां तथा बाहुल्यात्तथा वासाच्चैतदुपपन्नम् । यदि पुनर्ग्राहारेरन्या का चिद्राजधानी यस्याः सकाशात्क्रोशे गिरिर्योजने चाब्धिस्तां न वेद्मि ॥

**गोदोहमप्युद्यममत्यजन्तो भजन्त्यहोरात्रममुं नृपास्तत् ।**
**क्रोशात्शतं सैन्यपतिं दिशंस्तद्वधाय दात्रेण तरुं लुनासि ॥१०२॥**

१०२. गोदोहमपि गोदोहकालमप्युद्यममत्यजन्तः सन्तो नृपा

१ बी °न्य ने°. २ सी °त्त्वये°. डी °त्तद्वयेनाह. ३ बी °नस्थान्या. ४ ए °साध्य त्वा°. ५ सी क्रोशा यो°. डी क्रोशो यो°. ६ एफ् गिरिः क्रो°. ७ एफ् °केष्वब्धिश्च. ८ बी °रेन्या. ९ ए °शेगिरियोज°. १० बी डी °ने वाब्धि°.

अमुं आहारिमहोरात्रम्। एतेन भक्त्यतिशयोक्तिः। भजन्ति। एतेन बलसंपदतिशयोक्तिः। तत्तस्मात्तद्वधाय आहारिहतये क्रोशान् शतं क्रोशशते दूरदेश इत्यर्थः। एतेन यदि सेनानीः कथमपि तेन भज्येत तदात्रस्थैर्भवद्भिरस्य साहाय्यं कर्तुं दुःशकमित्युक्तम्। सैन्यपतिं दिशन्नाज्ञापयंस्त्वं दात्रेण तरुं लुनासि यथा महत्त्वात्तरुर्दात्रेण च्छेत्तुं न शक्यते तथा त्वद्दण्डेशेनापि आहारिरित्यर्थ. ॥

अभिनिविश्य पार्श्वम्। इत्यत्र "वाभिनिविशः" [२२] इति कर्म वा ॥ व्यवस्थितविभापेयम्। तेन क चित्कर्मसंज्ञैव। क चिदाधारसंज्ञैव। शास्त्रेभिनिविष्टे ॥

काल। त्रुटिमुदास्ते निशि समुत्थितम्। अध्वा। योजनमस्ति क्रोशोस्ति। भाव। गोदोहमुदास्ते शालिपाकेप्यशायिनम्। देश। नरकमास्यते स्वपुर्यां वसतः। इत्यत्र "कालाध्वे०" [२३] इत्यादिना कालादिराधारः कर्म[५] वा। अकर्म च। यत्रापि पक्षे कर्मसंज्ञा तत्राकर्मसंज्ञापि[६] वा भवतीत्यर्थः। तेन नरकमास्यते इत्यत्र सकर्मकत्वाद्द्वितीया। अकर्मकत्वाच्च भाव आत्मनेपदम्॥ अन्ये तु सकर्मकाणामकर्मकाणां च प्रयोगे कालाध्वभावानामत्यन्तसंयोगे सति नित्यं कर्मत्वमिच्छन्ति। भजन्त्यहोरात्रममुम्। क्रोशान्सैन्यपतिं दिशन्। गोदोहमुद्यममत्यजन्तः॥

दात्रेण तरुं लुनासि। इत्यत्र "साधक०" [२४] इत्यादिना करणसंज्ञा॥

तद्वधाय दिशन्। इत्यत्र "कर्माभि०" [२५] इत्यादिना सं[११]प्रदानसंज्ञा॥

---

१ डी °शतदू°. २ ए बी सी डी °र्मे। व्य°. ३ डी °ष्टः। का°. ४ ए सी °ध्वत्या°. बी एफ् °ध्वभावेत्या°. ५ एफ् °र्म। अ°. ६ एफ् °पि भ°. ७ एफ् °काणा च. ८ ए °जन्ति हो°. ९ बी °जन्तम्। दा°. १० बी ना कार°. ११ सी-सप्र।

जयाय चेत्त्वं स्पृहयेर्यशो वा लोकाय कुप्यन्तमसूयमानम् ।
द्रुह्यन्तमीर्ष्यन्तममुं स्वयं तत्प्रद्रोग्धुमुत्क्रुध्य कृताभियोगः ॥१०३॥

१०३. जयाय चेत्त्वं स्पृहयेर्यशो वा जयं कीर्तिं वा यदीच्छसि तत्तदामुं ग्राहारिं प्रद्रोग्धुं जिघांसितु स्वयं कृताभियोगो विहितोद्यमः संस्त्वममुमेवोत्क्रुध्योत्क्रोधविषयं कुरु मा सहस्व । त्वं स्वयमभिषेणयेत्यर्थः । कीदृशम् । लोकाय कुप्यन्तममृष्यन्तमसूयमानं लोकस्यैव गुणेषु दोषानाविष्कुर्वाणं द्रुह्यन्तमपचिकीर्षन्तमीर्ष्यन्तं लोकसंपत्तौ चेतसा व्यारुष्यन्तम ॥

जयाय यशो वा स्पृहयेः । इत्यत्र "स्पृहेर्व्याप्यं वा" [२६] इति वा संप्रदानम् ॥

लोकाय कुप्यन्त द्रुह्यन्तमीर्ष्यन्तमसूयमानम् । इत्यत्र "क्रुद्द्रुह०" [२७] इत्यादिना संप्रदानम् ॥

असुमुत्क्रुध्य । अमुं प्रद्रोग्धुम् । इत्यत्र 'नोपसर्गात्क्रुद्द्रुहा" [२८] इति न संप्रदानम् ॥

अथ दृष्टान्तोक्त्या राज्ञा तस्य स्वयमास्कन्दनं द्रढयति ।

सिंहो निकुञ्जादभिसृत्य यूथाद्धन्तीभमुद्दामतमं मृगेभ्यः ।
यानात्स्वयं मा विरम प्रमाद्यं मा मा जुगुप्सस्व जगत्ततोवन् ॥१०४॥

१०४. सिंहो निकुञ्जाद्वनगह्वरादभिसृत्य निर्गत्य मृगेभ्य आरण्यपशुभ्य उद्दामतमं बलादिनोत्कृष्टतममिभं यूथान्मृगगणादाकृष्य हन्ति तस्मात्त्वमपि ततो ग्राहारेर्जगदवन् रक्षन्सन् स्वयं यानान्मा विरम

१ ए 'य यशो'. २ ए द्रुह्यन्त'. ३ एफ् 'म त्व मा जु'.

१ एफ् 'वि: कुर्वा'. २ एफ् 'ध्य: । अ'. ३ एफ् 'न द्रुह'. ४ ए 'मन.

दुःखहेतुरिदमात्मन इति विरज्य मा निवर्तस्व । तथा मा प्रमाद्य यत्कार्यं तद्दण्डनेनैव करिष्यतीत्यालस्यं कृत्वा मा निवर्तस्व । तथा मा जुगुप्सस्व नीचोयं स्वयमास्कन्तुमनुचित इति निन्दित्वा मा निवर्तस्व ॥

ननु साहाय्यकृन्मित्रसंपदादिरहितोयं सैन्येशेनापि सैन्यैरवष्टब्धो दुर्गस्थोपि निरुद्धधान्यादिप्रवेशस्थानः सुसाध एव तत्किं तत्साधनाय मम स्वयमभिषेणनेनेति राजा मा स्म वददित्यस्य महामित्रसंपदमप्याह ॥

युधोपराजिष्णुररेरभीरुस्त्राता तुरुष्कानपि कच्छदेशात् ।
कुतोप्यनन्तर्दधदस्य सोस्ति लक्षः सखा जात इवैकमातुः ॥१०५॥

१०५. सोनेकावदातैः प्रसिद्धो लक्षो नाम कच्छदेशस्वाम्येकमातुर्जात इव सहोदर इवातिस्निग्धः सखास्य ग्राहारेरस्ति । कीदृक् । अरेरभीरुरत्रस्नुरत एव युधो रणादपराजिष्णुर्दुःखेयं युदिति तामसहमानोनिवर्तिष्णुरत एव च कच्छदेशात्तुरुष्कानप्यासतामन्ये नृपाः सर्वजगद्भयंकरान्म्लेच्छानपि त्राता रक्षन्नत एवं च कुतोपि कस्मादप्यनन्तर्दधदनिलीयमानोनश्यन् ॥

ननु सखास्य दूरे भविष्यति ततः सन्नप्यसत्प्राय एवेति न वाच्यमित्याह ।

कच्छात्सुराष्ट्राष्टसु योजनेषु दीपोत्सवः पक्ष इवाश्वयुज्याः ।
फुल्लात्मभूतो न तदस्य दूरे स्यान्नाधिको भूमिपतिभ्य उन्र्याम् १०६

१०६. यथाश्वयुज्या आश्विनपूर्णिमाया आरभ्य पक्षे गते दीपो-

---

१ बी °दा र°. २ ए 'वन्धो°. ३ डी मा वादीदि°. ४ सी °र सपन्या° ॥ नवोत्तरशततमश्लोकावतरणस्थित 'सपन्याम्' इत्येतत्पदात्प्राक्तनो ग्रन्थो नास्ति. ५ एफ् °ष्णु-दुःखे°. ६ एफ् °व कु°.

त्सवो दीपालिका स्यात्तथा कच्छात्कच्छदेशाद्गतेष्वष्टसु योजनेषु सुराष्ट्रं सुराष्ट्रदेशो भवति तत्तस्माद्धेतोः फुल्लात्फुल्लाख्यान्महाराजात्प्रभूतो जातो लक्षाख्यः सखास्य ग्राहारेर्न दूरे । कीदृक् । उर्व्यां पृथ्वीविषये ये भूमिपतयस्तेभ्यः सकाशात्स्थाम्ना बलेनाधिकः ॥

तथापि द्वावेव शत्रू कृतौ । तौ चानेकमहाराजान्वितः सैन्यपतिरेव निग्रहीष्यति तत्किं स्वयमास्कन्दनेनेति न वाच्यमित्यनेकान् द्विष आह ॥

**येद्रौ समुद्रे च नृपा दधानाः क्षत्रत्वमात्मन्युषिता दृगग्रे ।**
**तेप्यस्य संवर्मयितार आजौ नैको न च द्वौ बहवो द्विषस्तत् ॥१०७॥**

१०७. आत्मनि स्वे क्षत्रत्वं क्षात्रधर्मं दधानाः । शौर्यादिक्षत्रियगुणान्विता इत्यर्थः । ये नृपा अद्रौ ये समुद्रे चाब्धिसमीपे चोषिताः स्थिताः सन्ति । ये चास्य ग्राहारेर्दृगग्रे दृष्टिपुर उषिताः सन्ति । सदा समीपस्था येमुं सेवन्त इत्यर्थः । तेपि । न केवलं स्वयं लक्षश्चेत्यपेर्थः । अस्य ग्राहारेराजौ रणनिमित्तं संवर्मयितारः संनत्स्यन्ते । तत्पक्षत्वात्तेपि त्वया सह योत्स्यन्त इत्यर्थः । तत्तस्मान्नैको ग्राहारिर्द्विट् न च द्वौ ग्राहारिलक्षौ द्विषौ किं तु बहवोनेके द्विषः ॥

"अपायेवधिरपादानम्" [२९] तत्त्रिविधम् । निर्दिष्टविषयम् । उपात्तविषयम् । अपेक्षितक्रियं च । निर्दिष्टविषयं यथा । निकुञ्जादभिसृत्य ॥ यत्र धातुर्धात्वन्तरार्थाङ्गं स्वार्थमाह तदुपात्तविषयम् । यथा यूथाद्धन्ति । अत्र ह्याकर्षणाङ्गे हनने हन्तिर्वर्तते ॥ अपेक्षितक्रियं यथा । मृगेभ्य उद्दामतमम् । अपायश्च कायसंसर्गपूर्वको बुद्धिसंसर्गपूर्वको वा विभाग उच्यते । तेन यानान्मा विरम । यानान्मा

१ एफ् °हयो°. २ डी एफ् °ष्टादे°. ३ बी °त्रू । तौ. ४ एफ् °ता. त्रु°. ५ एफ् °र् । उपे° ६ बी °त्र तु धात्व°. ७ ए °न्ति वर्त°. ८ एफ् °ते । उपे°. ९ ए या या वि°.

प्रमाद्य । यानान्मा जुगुप्सस्व । इत्यत्र दुःखहेतुं यानं बुद्ध्या प्राप्य नानेन कृत्यमस्तीति यानान्निवर्तमानो राजा जम्बुकेन निषिध्यत इति निवृत्तेरङ्गेषु विरामप्रमादजुगुप्सास्वेते धातवो वर्तन्त इति बुद्धिसंसर्गपूर्वकोपायः ॥ तथा जगत्ततोवन् । इत्यत्र राजा यदीदं जगद्ग्राहारिः पश्येन्नूनमस्य सर्वस्वमपहरेदिति बुद्ध्या ग्राहारिणा संयोज्य तस्मान्निवर्तयतीत्यपाय एवं ॥ तथा युधोपराजिष्णुः इत्यत्रापि युधमसहमानस्ततो न निवर्तत इत्यपाय एव ॥ अरेरभीरु । इत्यत्रापि वधबन्धक्लेशकारिणमरिं बुद्ध्या प्राप्य ततो न निवर्तत इत्यपाय एव । यद्यपि निवृत्तेरपेक्षयापादान स्यात्सा चात्र नञा निषिध्यत इत्यपादानं न प्राप्नोति तथापि निवृत्तेरपेक्षयात्र प्रथममपादानं ततः सा नञा निषिध्यत इति सर्वमुपपन्नम् । एवमन्यत्रापि ॥ त्राता तुरुष्कान् कच्छदेशात् । इत्यत्र तुरुष्कैर्देशसंपर्कं बुद्ध्या समीक्ष्य देशस्य विनाशं पश्यंस्तुरुष्कान् देशान्निवर्तयतीत्यपाय एव । कुतोप्यनन्तर्दधत् । इत्यत्र भयेन मा मां कोपि द्राक्षीदिति न तिरो भवतीत्यत्राप्यपायः ॥ एकमातुर्जात इत्यत्राप्येकमातुः पुत्रो निष्कामतीति स्फुट एवापायः ॥ फुल्लाप्रभूतः । इत्यत्रापि फुल्लाल्लक्ष संक्रामतीत्यपायोस्ति ॥ कच्छात्सुराष्ट्राष्टसु योजनेषु । इत्यत्र कच्छान्निःसृत्य गतेषु योजनेषु भवतीत्यर्थः ॥ आश्वयुज्या दीपोत्सवः पक्षे । ततः प्रभृति पक्षे गते भवतीत्यर्थः । उभयत्रापायः प्रतीयते ॥ भूमिपतिभ्योधिक इत्यत्र लक्षः पुंस्त्वादिना भूपैः सह संसृष्ट आधिक्येन धर्मेण ततो विभक्तः प्रतीयत इति सर्वत्राप्यपायविवक्षा ॥

वैषयिक । उर्व्यां भूमिपतिभ्यः । औपश्लेषिक । अट्टौ ये । अभिव्यापक । आत्मनि क्षत्रत्वम् । सामीप्यक । समुद्रे ये । नैमित्तिक । आजौ संवर्मयितारः ॥ औपचारिक । दृगग्र उषिताः । इत्यत्र "क्रियाश्रयस्य०" [३०] इत्यादिनाधिकरणम् ॥

---

१ एफ् जम्बुके°. २ एफ् °व । यद्य°. ३ डी °मरिवु°. ४ ए °धहिनिल°. ५ एफ् °ये मा ६ डी °त्यत्र कच्छादित्यत्रा°. ७ डी °तीति । उ°. ८ डी °यिकम् । उ°. ९ डी °भिभ्योप्यधिकः । औ°. १० एफ् °भिव्यक. ११ ए °पकः । आ°. १२ डी °रिकः । दृ°. १३ ए धी °याश्रिय°

एकः । द्वौ । बहवः । इत्यत्र "नाम्न." [२१] इत्यादिना प्रथमा विभक्तिः ॥

अथैवमुक्तदुर्गमित्रसहायसंपद्बलेन आहारेरतिबलिष्ठतां वदन्महाराजस्यैवायं साध्यो नान्यस्येति निर्धारयति ।

मित्रं नृपेन्द्र समया निकषाथ दुर्गं
यः सोप्यलं भवति किं पुनरन्तरा ते ।
तत्तं निहन्तुमवनीं दिवमन्तरेण
त्वामन्तरेण न हि संप्रति कश्चिदीशः ॥ १०८ ॥

१०८. हे नृपेन्द्र यः शत्रुर्मित्रं समया मित्रसमीपे स्यादथाथ वा दुर्गं निकषा पर्वताद्यादिदुर्गमस्थानसमीपे स्यात्सोप्यास्तां तावदेतद्द्वयसमीपस्थ एकतरसमीपस्थोप्यलं समर्थो भवति किं पुनस्ते मित्रदुर्गे अन्तरा। मित्रदुर्गयोर्यो मध्यवर्ती स नितरां बलिष्ठ इत्यर्थः । तत्तस्माद्धेतोस्तं आहारिं निहन्तुमवनीं दिवमन्तरेण द्यावापृथिव्योर्मध्ये त्वामन्तरेण विना संप्रत्यस्मिन्काले न कश्चित्कोपि सैन्यपत्यादिक ईशः समर्थः । वसन्ततिलका छन्दः ॥

योयं मित्रदुर्गसंपद्भ्यामतिबलिष्ठतया कस्याप्यन्यस्यासाध्यः स कदाचिन्ममाप्यसाध्यः स्यादिति राजा मा शङ्किष्टेत्याह ।

तेनाभीरान्येन सुराष्ट्रामतिवृद्धः
पार्थं स्थाम्ना त्वं चलितश्चेत्समराय ।
हा प्राणेशान्धिग्विधिमेवं प्रलपेयु-
र्वैरिस्त्रैणानीति विभो मां प्रतिभाति ॥ १०९ ॥

१०९. हे विभो स्वामिन्सुराष्ट्रां सुराष्ट्रादेशं येन लक्ष्यीकृत्य य

१ बी °त्रमहाम°. २ एफ् °हारिर°. ३ एफ् °दथवा. ४ एफ् ईदृश.. ५ एफ् °राष्ट्दे° ६ एफ् लक्षीकृ°.

आभीरा आभीरजातिक्षत्रिया ग्राहरिप्वादयस्तांस्तेन लक्ष्यीकृत्य चेद्यदि त्वं समराय चलितः कृतप्रयाणस्तदा हा प्राणेशान् कष्टं वल्लभानां मृत्युकालावाप्तेः । अत एव विधिं दैवं धिग् गर्हामहे । इत्येवं प्रकारेण वैरिस्त्रैणानि भाविस्वपतिमरणनिश्चयेन प्रलपेयुराक्रन्देयुरित्येवं मां प्रतिभाति मम प्रतिभासते । इत्यहं जानामीत्यर्थः । ननु ग्राहरिप्वाद्यरयोप्यातेशूरास्तत्तान्प्रति मयि रणायोद्यतेपि तत्पत्नीनां स्वभर्तृमृत्युनिश्चयेन विलापः कथं त्वया विमृश्यत इत्याह । यतस्त्वं पार्थमतिस्थाम्ना वृद्धोर्जुनस्यातिक्रमेण बलेन स्फीत. । अर्जुनादपि बलिष्ठ इत्यर्थः ॥

नृपेन्द्र । इत्यत्र "आमन्त्र्ये" [३२] इति प्रथमा ॥

मित्र समया । दुर्गं निकषा । हा प्राणेशान् । धिग्विधिम्[3] । अन्तरा ते । अवनीं दिवमन्तरेण । पार्थमति । येन सुराष्ट्राम् । तेनाभीरान् । इत्यत्र "गौणात्°" [३३] इत्यादिना द्वितीया ॥ बहुवचनादन्येनापि युक्ताद्भवति । मा प्रतिभाति ॥ धातुसंबद्धोत्र प्रतिस्तेन "भागिनि च°" [३७] इत्यादिना न सिध्यति । मत्तमयूरं छन्दः ॥

अथ मन्त्रमुपसंहरन्नाह ।

उपर्युपरि भूभृतोध्यधि वनान्यधोधोम्बुधी-
न्द्विषोभिगदितेमुना पुलकभृद्वपुः सर्वतः ।
भुजावुभयतः क्षिपन् दृशमथो उदस्थान्नृपः
स्थितौ तमभितश्च तौ परित उत्थितस्तान् जनः ॥[1]११०॥

११०. नृपो मूलराज उदस्थात् । कीदृक्सन् । वपुः सर्वतोङ्गस्य

१ एफ् इत्याचार्यश्रीहेमचन्द्राचार्यविरचिते शब्दानुशासनद्व्याश्रयमहाकाव्ये प्रभातमन्त्रवर्णनो नाम द्वितीयः सर्गः समाप्तः ॥

१ एफ् °रा जा°. २ ए लक्षीकृ°. ३ एफ् °ग्विधम् ।. ४ ए °गिनीवेल्या°. सी °गिनवेल्या°.

सर्वेषु प्रदेशेषु पुलकभृत् । क सति । भूभृतो गिरीनुपर्युपरि वनानि काननान्यध्यध्यम्बुधीनधोधः सर्वत्र क्रियाविशेषणादम्[1] । सप्तमी वा । द्विप इत्यत्रेतिशब्दोध्याहार्यः । ततोयमर्थः । भूभृद्वनाम्बुधीनां प्रत्यासन्नं द्विषो ग्राहरिप्वादिशत्रवो वर्तन्त इत्येतस्मिन्नमुना जेम्बकेनाभिगदिते[2] भणिते । यद्वा भूभृद्वनाम्बुधीनां[3] समीपे वर्तमानान्द्विषः शत्रूनभिलें-[4] क्ष्यीकृत्यामुना गदिते पूर्वोक्तरीत्या भणने[5] द्विषन्नामश्रवणोद्भूतवीररसोल्लासवशेन सर्वाङ्गीण[6]रोमाञ्चाञ्चित इत्यर्थः । तथा मद्दोर्दण्डयोः सतोः केप्यापि शत्रव इत्यहङ्कारेणोत्पन्नरणकण्ड्वा भुजावुभयतो दृशं क्षिपन् द्वयोरपि भुजयोरुपरि दृष्टिं व्यापारयन् । अथो भिन्नक्रमे नृप इत्यतो ज्ञेयः । अथो नृपोत्थानानन्तरं[7] तं नृपमभित उभयपार्श्वयोः स्थितौ[8] सन्तौ तौ जम्बकजेहुलावुदस्थाताम्[9][10] । उदस्थादित्येवार्थवशाद्विवचनान्ततया योज्यम् । तथा चो भिन्नक्रमे जन इत्यतो ज्ञेयः । तान्नृपजं-[11] म्बकजेहुलान्परितः सर्वतो मन्त्रमण्डपबहिःस्थितो जनश्च परिवारलोकश्चोत्थितः । नृप उदस्थादित्यनेनाग्रेतनसर्गे ग्राहारि[12] प्रति नृपस्य प्रस्थानं वर्णयिष्यत इति सूचितम् ॥

अधोधोम्बुधीन् । अध्यधिवनानि । उपर्युपरि भूभृतः । इत्यत्र "द्वित्वेधः०" [३४] इत्यादिना द्वितीया ॥

वपुः सर्वतः । भुजावुभयतः । तमभितः । तान्परितः । इत्यत्र "सर्वोभय०" [३५] इत्यादिना द्वितीया ॥ पृथ्वी छन्द ॥

॥ इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तौ द्वितीयः सर्गः समर्थितः ॥

---

१ सी °म् । स्वस°. २ ए एफ् जम्बुके° ३ ए °म्बुद्वीस°. ४ ए एफ् °ल... क्षीकृ°. ५ डी भणिते द्वि°. ६ डी °ङ्गीण रो°. ७ बी °र नृ°. ८ एफ् °तौ जम्बुक... ९ ए °कहेडु°. १० सी डी °जेहला°. ११ एफ् °जम्बुक°. १२ सी डी °रिं त प्र...

# द्व्याश्रयमहाकाव्ये

## तृतीयः सर्गः ।



॥ अर्हम् ॥ अथ विजययात्रानुकूलं शरत्कालं पञ्चाशता श्लोकैर्वर्णयति ।

अथ ग्राममभि शुभ्राभ्रा सुनीराभि सरः सरः ।
अभि दिग्विजयं साधुरुपतस्थे शरत्क्षणात् ॥ १ ॥

१. अथ मन्त्रावसरानन्तरं क्षणाद्ग्राहरिपुविषेणनविषयाचिन्तासमकालमेव शरदुपतस्थे विजृम्भिता । किं भूता । द्यां गगनमभिलक्ष्यीकृत्य शुभ्राभ्रा विशदमेघा । एतेनाभ्राणामवार्षुकत्वेनादित्यातपनिवारकत्वेन चास्याः सुखदतोक्ता । तथा सरः सरोभि तडागं तडागमभिव्याप्य सुनीरा निर्मलजला । एतेन पेयजलत्वोक्तिः । अत एवाभि दिग्विजयं साधुर्विजययात्राविषये साधुत्वप्रकारमापन्ना । एतेन राज्ञो ग्राहरिपुविषयाभिषेणनमनोरथस्य शीघ्रभाविनी सफलतोक्ता ॥

लक्षणे । ग्राममभि ॥ वीप्स्ये । अभि सरः सरः ॥ इत्थंभूते । अभि दिग्विजयम् । इत्यत्र "लक्षण०" [३६] इत्यादिना द्वितीया ॥

बभुः प्रति नृपं ग्रामपतिं पर्यनु कर्षकम् ।
प्रति ग्रामं दिशं पर्यनु क्षेत्रं सस्यसंपदः ॥ २ ॥

२. नृपमित्यादिषु सर्वेषु जातावेकवचनम् । प्रति ग्रामं दिशं परि

१ सी °जयाया°. २ ए सी °द्ग्राहारि° ३ सी डी °षये चि° ४ सी डी °ता धा. ५ ए सी डी एफ् °लक्षीकृ° ६ ए सी डी °न वास्या. ७ सी डी °डागम°. ८ सी डी एफ् वीप्स्ये । अ°.

अनु क्षेत्रं ग्रामान् दिशः क्षेत्राणि च लक्ष्यीकृत्य सस्यसंपदः प्रति नृपं राज्ञां भागे ग्रामपतिं परि ग्रामठक्कुराणां भागेनु कर्षकं हालिकानां भागे च बभुः प्राचुर्येण शुशुभिरे । शरदि हि कर्षकाणां धान्यानि निष्पद्यन्ते । तेभ्यो ग्रामभूस्वामित्वाद्ग्रामपतयो भागं गृह्णन्ति । तेभ्यश्च देशपतित्वान्नृपा भागं गृह्णन्ति ॥

प्रतीभमिभमन्वश्वमश्वं गां गां च पर्यसौ ।
साधुः प्रति मदमनु पालनं बलितां परि ॥ ३ ॥

३. असौ शरदिभमिभं प्रत्यभिव्याप्य मदं प्रति मदग्रहणविषये साधुः साधुत्वप्रकारमापन्नाभूत् । तथाश्वमश्वमन्वाभिव्याप्य पालनमनु रक्तस्रावादिचिकित्साकरणेन रक्तोद्गलनोद्भवरोगाद्रक्षणविषये साधुरभूत् । तथा गां गां च परि वृषं वृषमाभिव्याप्य बलितां परि बलिष्ठताविषये साधुरभूत् । शरदि हीभा माद्यन्ति । अश्वाश्च रक्तस्रावं कृत्वा घृतदानादिना पाल्यन्ते । वृषभाश्च बलिष्ठाः स्युः ॥

भागिनि । प्रति नृपम् । ग्रामपतिं परि । अनु कर्षकम् ॥ लक्षणे । प्रति ग्रामम् । दिशं परि । अनु क्षेत्रम् ॥ वीप्स्ये । इभमिभं प्रति । गां गां परि । अश्वमश्वमनु ॥ इत्थंभूते । मदं प्रति । बलितां परि । अनु पालनम् । इत्यत्र "भागिनि च°" [२७] इत्यादिना द्वितीया ॥

सरोन्ववसितान्यब्जान्यन्वेयुर्यत्सितच्छदाः ।
तेनर्तवोनु शरदमुप गङ्गामिवापगाः ॥ ४ ॥

४. सरोनु । सर इत्यत्र जातावेकवचनम् । अनुः सहार्थे । ततः

---

१ ए °यैच्छित°.

---

१ ए लक्षीकृ°. २ ए सी डी °गे न°. ३ ए बी एफ् °कश्रावा°. ४ बी °षभम°. ५ ए बी °क्तश्राव. ६ बी °म् । प°. ७ सी एफ् वीप्से । इ°. ८ बी इति जै°.

सरोभिः सह। षिञ् बन्धने। अवसीयन्ते स्मावसितानि संबद्धान्यब्जान्यनु। अत्रानुर्हेतौ। ततः सरोभिः सह संबद्धैरब्जैर्हेतुभि.। यदिति क्रियाविशेषणम्। यत्सितच्छदा राजहंसा एयुरागता.। अर्थाच्छरदि। वर्षासु मेघभयान्मानसं गताः शरदि हि तत आगच्छन्ति। तेन हेतुना ज्ञायते। ऋतवोनु शरदमुप गङ्गामिवापगा.। अत्रानूपौ हीनार्थौ। यथा गङ्गाया अन्या नद्यो हीनास्तथा शरदोन्य ऋतवः शिशिराद्या हीनास्तेषु सितच्छदागमनाभावात्। यो हि सितच्छदतुल्यैर्महापुरुषैराश्रीयते तस्मादन्ये हीनाः स्यु.॥

अब्जान्यन्वेयुः। सरोन्ववसितानि। इत्यत्र "हेतुसहार्थेनुना" [३८] इति द्वितीया॥

अनु शरदम्। उप गङ्गाम्। इत्यत्र "उत्कृष्टेनूपेन" [३९] इति द्वितीया॥

शालीन्पक्वान्सप्रमोदं रक्षन्त्यो गोपिका दिनम्।
क्रोशं व्यस्तारयन् गीतीर्नार्तिं गोदोहमप्ययुः॥ ५॥

५. गोपिकाः शालीनां रक्षिकाः स्त्रियो दिनं सकलदिवसं व्याप्य क्रोशं क्रोशप्रमाणभूमिं व्याप्य गीतीर्गानानि व्यस्तारयन्न पुनर्गोदोहमपि यावता कालेन गौर्दुह्यते तावन्तमपि कालमार्तिं खेदमयुर्गताः। यतः पक्वान्निष्पन्नान् शालीन् कलमादीन् सप्रमोदं सहर्षं यथा स्यादेवं रक्षन्त्यः शुकादिभ्यः। सुपक्वशालिदर्शनोद्भूतप्रमोदपारवश्येन सकलं दिनमुच्चैःस्वरेण गायन्त्योपि क्षणमपि खेदं न गता इत्यर्थः। शरदि हि शालयः पच्यन्ते॥

शालीन्पक्वान् रक्षन्त्यः। इत्यत्र "कर्मणि" [४०] इति द्वितीया॥

सप्रमोदं रक्षन्त्यः। इत्यत्र "क्रियाविशेषणात्" [४१] इति द्वितीया॥

---

१ बी °रदं व°. २ डी °रदि हि. ३ एफ् °राश्रिय°. ४ ए °स्माही°.

दिनं रक्षन्त्यः । क्रोशं व्यस्तारयन् । अत्र "काल०" [४२] इत्यादिना द्वि-
तीया ॥ भावादपीच्छन्त्यन्ये । गोदोहं[1] नार्तिमैयुः ॥

पारायणं नवाहेनाधीत्य क्रोशेन[1] चाशिषम् ।
गोदोहेन द्विजा याज्यानभ्यषिञ्चन्यथाविधि ॥ ६ ॥

६. गोदोहेन गोदोहमात्रकालव्याप्त्या यथाविधि[3] वेदोक्तशान्ति-
मन्त्रोच्चारणादिविध्यनुसारेण याज्यान्नृपामात्यादियजमानान् द्विजा
अभ्यषिञ्चन्नस्नपयन् । किं कृत्वा । नवाहेनाश्विनश्वेतप्रतिपदादिदिननव-
कस्य नवरात्रनाम्नो व्याप्त्या[5] पार्यते[6] गम्यतेऽनेन पारायणं वेदग्रन्थ-
मधीत्याध्ययनेन समाप्य पूर्णं गुणयित्वेति यावत् । तथा क्रोशेन
यावता कालेन क्रोशो गम्यते क्रोशप्रमाणक्षेत्रव्याप्त्या चाशिषं च सप्त-
शतिकाभिधां सप्तशतप्रमाणां चण्डिकास्तुतिं चाधीत्य गुणयित्वा ।
शरदि हि पारायणिका द्विजा आश्विनश्वेतप्रतिपदि देवायतनेषु दर्भश-
लाकैकशतमयब्रह्ममूर्तेरग्रतः कुङ्कुमादिसुरभिद्रव्याढ्यजलभृतं कुम्भं
स्थापयित्वा ततो महानवमीं यावदभुक्ता ब्रह्मचारिणो भूशायिनः पारा-
यणं कार्त्स्न्येन तथाधीयते यथा नवमे दिने पूर्णीस्यात्तथा महाप्रभाव-
त्वेन सप्तशतिकां च चण्डिकास्तुतिं महाशिषं गुणयन्ति । तथा च
मार्कण्डेयपुराणे चण्डिकोक्तिः ॥

शरत्काले महापूजा क्रियते या च वार्षिकी ।
तस्यां ममैतन्माहात्म्यमुच्चार्यं श्राव्यमेव च ॥ १ ॥

एतन्माहात्म्यं सप्तशतिकोक्तम्[10] । तदेवं[11] पारायणं महाशिषं चाधीत्य

१ सी एफ् °न चाशि°.

१ सी डी °दोहन ना° २ एफ् °मप्यु. ॥. ३ सी डी °धि देवोक्त° ४ बी °व्याप्त्ये°. ५ ए सी °ते तेन ६ बी सी डी °ण देवग्र° ७ सी डी पूर्वं गु°. ८ एफ् माणच°. ९ सी एफ् °वमी या°. १० सी °म् । एवेदे एव डी °म् । एतदेव परा°. ११ ए एफ् °देव पा°.

विजयदशम्यां कुम्भमुत्पाट्य तेभ्यः स्थानेभ्यो राजादिभवनमागत्य राजादिमहायजमानान्प्राङ्मुखानुदङ्मुखान्वा शुचिवस्त्रान्फलहस्तान् शान्तिमन्त्रोच्चारपूर्वं शान्तयेभिषिञ्चन्ति ॥

अधीयानैर्दिनमपि च्छन्दो नाग्राहि माणवैः।
गोपीगीत्या हृदोद्भ्रान्तैः समेन विषमेण च ॥ ७॥

७. अपिर्भिन्नक्रमे। दिनं सकलदिवसं व्याप्याधीयानैरपि पठद्भिरपि माणवैर्वटुभिश्छन्दो जयदेवादि वेदो वा नाग्राहि नागमितम्। केन कृत्वा। समेन तुल्यलक्षणलक्षितपादचतुष्टयेन श्रियादिसमच्छन्दसा विषमेण च भिन्नलक्षणलक्षितपादचतुष्केण पदचतुरूर्ध्वादिविषमच्छन्दसा च। यद्वा समेन लक्षणया सुखपाठ्यस्थानकेन विषमेण च दुःखपाठ्यस्थानकेन च। यतो गोपीगीत्या गोपीनां शाल्यादिरक्षिकाणां स्त्रीणां गानेन हेतुना हृदा कृत्वोद्भ्रान्तैः शून्यचित्तैः। शून्यचित्तेन बहुपठ्यमानमपि हि शास्त्रं नागच्छति ॥

धान्येनार्थ इतीन्द्रस्य मासा पूर्वं पयोमुचः।
कौतुकेनार्थिनः पौरा स्तम्भेनाद्राक्षुरुत्सवम् ॥ ८ ॥

८. धान्येनार्थः कार्यमिति हेतोर्य इन्द्रस्य स्तम्भेन महाध्वजपताकाकलितोन्नतस्थूणादण्डेनोपलक्षितं उत्सवस्तं पौरा अद्राक्षुः। किंभूताः सन्तः। कौतुकेनार्थिनोभिलाषुकाः। केत्याह। पयोमुचो वर्षार्तोः सकाशान्मासा मासेन पूर्वम्। 'पूर्वं तु पूर्वजे। प्रागग्रे श्रुतभेदे च' इत्यभिधानादग्रत आश्विनपूर्णिमायामित्यर्थः। इन्द्रमहोत्सवो हि श्वेताश्विनाष्टम्या आरभ्य पूर्णिमां यावद्विधीयते। तथा चावश्यकचूर्णावस्वाध्यायप्रस्ताव

---

१ बी डी °रा स्त°

---

१ सी °भति ॥. २ ए डी °दिर्वेदो. ३ ए बी सी डी एफ् °रूर्ध्वादि°. ४ डी °तमुत्स°. ५ सी डी °त्सव पौ°. ६ सी °रा आद्रा°. ७ बी °त्यर्थेभि°.

उक्तम् । इन्दमहो आसो य पुन्निमाए हवइत्ति ॥ भविष्योत्तरपुराणेपि शारदमहोत्सववर्णनावसर उक्तम् ॥

श्रवणादिभरण्यन्तं दिनानामष्टकं नृपः ।
शुभार्थं सर्वलोकानां कुर्यादिन्द्रमहोत्सवम् ॥ १ ॥

श्रवणभरणीनक्षत्रे ह्याश्विनश्वेताष्टमीपूर्णिमोद्देश एव चन्द्रेण युज्यते। अत एवाश्विनपूर्णिमाया आश्वयुजीति नाम । स चेन्द्रोत्सवः प्रचुरधान्यनिष्पत्त्याद्यर्थं क्रियते । तथा च वराहमिहिरसंहितायामैन्द्रं वचः ।

येषु देशेषु मनुजा भक्तिभारपुरःसराः ।
जनयिष्यन्ति वर्षान्ते मया दत्तं महाध्वजम् ॥ १ ॥
तेषु देशेषु मुदिताः प्रजा रोगविवर्जिताः ।
प्रभूतान्ना धर्मयुक्ता वृष्टमेघा महोत्सवाः ॥ २ ॥
भविष्यन्ति सुवेषाश्च सुभाषाश्च सुभूषणाः ॥ इत्यादि ॥

**मित्रैर्मासावरैर्वाचा निपुणैः सह गोकुले ।**
**गुडेन मिश्रं वेषेण श्लक्ष्णा गोपाः पयः पपुः ॥ ९ ॥**

९. स्पष्टः । किं तु वेषेण श्लक्ष्णाः सूक्ष्मा अकर्कशा वा गोकुलस्वामित्वाच्छरद उष्णत्वाच्च परिहितसूक्ष्ममृदुवस्त्रा इत्यर्थः । गोपा गोष्ठाधिकृता मासा मासेनावरैर्लघुभिरात्मसमानैरित्यर्थः । शरदि हि पित्तोद्रेकः स्यादितीक्षुविकारमिश्रपयःपानश्वेतसूक्ष्मांशुकपरिधानादिशैत्यक्रिया पथ्यत्वाद्विधेया । उक्तं च ।

शरत्काले स्फुरत्तेजःपुञ्जस्यार्कस्य रश्मिभिः ।
तप्तानां कुप्यति प्रायः प्राणिनां पित्तमुल्बणम् ॥ १ ॥ ततश्च
शालीन्दुरुग्घनाम्बूनि श्वेतसूक्ष्मांशुकानि च ।
क्षीरमिक्षुविकाराश्च सेव्याः शरदि भूरिशः ॥ २ ॥

---

१ एफ् °त्सव । श्र°. २ ए °त्सवप्र°. ३ एफ् °था व°. ४ ए °हरिस°. ५ बी °क्ष्णा शूक्ष्मा. ६ बी °तसुशूक्ष्म° एफ् °तसूक्ष्माव°. ७ ए °म् । शा°. ८ ए °तशूक्ष्मा°.

दाण्डायां गिरिणा काणाः खण्डाः शंकुलया मिथः ।
ग्राम्या युवतयानूना मुष्टिभिः कलहं व्यधुः ॥ १० ॥

१०. युवतया यौवनेनानूना अहीना यौवनस्था ग्राम्या ग्रामीणदारका मुष्टिभिर्मिथः कलहं युद्धं व्यधुर्यतो दण्डः प्रहरणमस्यां "प्रहरणात्क्रीडायां णः" [६.२.११६] इति णे दाण्डा शङ्कुलाकन्दुकक्रीडा । तस्यां गिरिणा कन्दुकेन कर्त्रा काणाः कृताः शङ्कुलागाढघातेनोर्ध्वमुच्छलितेन कन्दुकेनाक्ष्णो व्याघातात् । तथा शङ्कुलया वक्राग्रया क्रीडनयष्ट्या कर्त्र्या खण्डाः खण्डगुणोपेताः कृता. । मिथः प्रतिकूलमाहन्यमानात्कन्दुकात्स्खलितायाः शङ्कुलायाः पादेषु गाढप्रहारात्कुण्ठीकृता इत्यर्थः । शरदि हि पङ्कस्य शुष्कप्रायत्वाद्रजसश्चोत्थानाभावाद्दाण्डा क्रीडा प्रवर्तते । तस्यां च क्रीडकैः श्रेणीद्वयं कृत्वा शङ्कुलाभिर्मिथः प्रतिकूलं विवक्षितस्वस्वसीमपारप्रापणार्थं कन्दुक आहन्यते ॥

नवाहेन । क्रोशेनाधीत्य । इत्यत्र "सिद्धौ तृतीया" [४३] इति तृतीया ॥ सिद्धाविति किम् । अधीयानैर्दिनमपि च्छन्दो नाग्राहि माणवैः ॥ अत्र व्याप्तिमात्रं गम्यते न सिद्धिः ॥ भावादपीच्छन्त्यन्ये । गोदोहेनाभ्यपिक्षन् ॥

हेतौ । गोपीगीत्योत्क्रान्तैः ॥ कर्तरि । माणवैर्नाग्राहि ॥ करणे । हृदाक्रान्तैः । समेन विषमेण च नाग्राहि ॥ इत्थंभूतलक्षणे । स्तम्भेनाद्राक्षुरुत्सवम् । अत्र "हेतु॰" [४४] इत्यादिना तृतीया ॥ तथा धान्येनार्थः । मासा पूर्वम् । मासावरैः । मुष्टिभिः कलहम् । वाचा निपुणैः । गुडेन मिश्रम् । वेषेण श्लक्ष्णाः ।

---

१ ए दण्डा॰. २ ए सी ॰ण्डा श॰. ३ डी ॰तयोनू॰

---

१ डी ॰तयो यौ॰ २ डी ॰म्या ग्राम्याणा दा॰. ३ ए बी सी डी ॰मिथो क॰. ४ डी णे च दा॰. ५ बी ॰क्ष्णोर्व्याघा॰. ६ ए बी सी एफ् ॰त्कुण्टीकृ॰. ७ एफ् ॰नामवनाद्दण्डा. ८ एफ् ॰तसुसी॰.

युवतयानूना. । शकुलया खण्डाः । गिरिणा काणाः । इत्यादौ हेतौ कृतभवत्या-दिगम्यमानक्रियापेक्षया कर्तरि करणे वा तृतीया ॥

पुलिनानि सह क्षौमैः सरांसि नभसा समम् ।
ज्यौत्स्न्योमाहामिषन्मेघाः साकं कैलाससानुभिः ॥ ११ ॥

११. शरदि हि नदीतटानि प्रावृषेण्याम्बुपूरक्षालितत्वेन निर्मलानि तरङ्गितजलसंशोषेण तरङ्गि[1]तवालुकानि च स्युस्तथा शीतलत्वेन शरत्कालोचितत्वादावलनतरङ्गिता[2]नि श्वेता[3]नि क्षौमाणि दुकूलानि लोकैः परिधीयन्ते । तथा सरांसि नभश्चातिनिर्मलानि स्युस्तथा ज्यौत्स्न्यो ज्योत्स्नान्विता निशा अहश्चातिसप्रकाशानि स्युस्तथा मेघा निर्जलत्वेन कैलाससानवश्च वार्षिका[4]म्बुपूरधौतत्वे[5]नातिश्वेताः स्युस्ततश्च पुलिनादीनि क्षौमाद्यैः सह सादृश्यादमिषन् । येप्येकत्र स्थाने समानगुणाः स्युस्ते मिथः स्पर्धन्ते । अमा सह ॥

बन्धूकान्यधरैः स्त्रीणां पद्मानि युगपन्मुखैः ।
सार्धं हासैश्च कासा(शा ?)नि स्पर्धां न्यक्षेण चक्रिरे ॥१२॥

१२. स्पष्टः । नवरं युगपत्सह । न्यक्षे[6]ण सह सामस्त्येन । शरदि ह्यारक्तानि बन्धूकपुं[7]ष्पाणि विकसितानि पद्मानि श्वेतानि काशपुष्पाणि च जायन्ते ततोधरादिभिः सह स्पर्धा । एतेन चाधरादिसमानैर्बन्धूकादिभिः शरत् कामिनीव भातीति व्यञ्जितम् ॥

---

१ ए कानि

---

१ बी °तजलवा°. २ एफ् °नि क्षौ°. ३ सी °नि श्वेक्षौ°. ४ एफ् °काम्बूपू°. ५ एफ् °त्वेन श्वे°. ६ बी °ण मा°. ७ ए बी एफ् °पुष्पाणि.

कात्स्न्र्येनाब्जवनोद्भेदे सुखेनास्थुः सितच्छदाः ।
दुःखेनाब्दजले प्राप्ये कष्टेनासंश्च चातकाः ॥ १३ ॥

१३. कात्स्न्र्येन सामस्त्येन । उद्भेदे विकाशे । अब्दजले मेघजले[1] । शिष्टं स्पष्टम् ॥

सस्येष्वाप्येष्वनायासेनाप्येनायासमम्बुनि ।
पान्थाः पथि सुखं प्रोपुर्दुः[1]खमूपुश्च तत्प्रियाः ॥ १४ ॥

१४. प्राचुर्येण निष्पन्नत्वाद्धान्येषु सुखेन प्राप्येषु तथा जलपूर्णतडागादिकत्वात्सुखेन जले प्राप्ये सति पान्थाः पथि सुखं प्रोपुर्देशान्तरं गतास्तत्प्रियाश्च पान्थभार्याश्च दुःखमूपुर्विरहात्कष्टेन स्थिताः ॥

धर्मि. सह । इत्यत्र "सहार्थे" [४५] इति तृतीया ॥ अर्थग्रहणात् नभसा समम् । अक्षामा । सानुभिः सान्तम् । मुखैर्युगपत् । हासैः सार्धम् ॥ अर्थाद्गम्यमाने अर्थैः स्पर्धाम् । न्यक्षेण स्पर्धाम् । कात्स्न्र्येनाब्जवनोद्भेदे । इत्यादावपि सहार्थोऽस्ति ॥ सुखेनास्थुः । दुःखेन प्राप्ये । कष्टेनासन् । अनायासेनाप्येषु[4] । इत्यादावायासादिक्रियाभिः सह सुखादेः सहार्थोऽस्ति[6] । क्रियाविशेषणत्वविवक्षायां तु द्वितीयैव । अनायासमाप्ये । सुखं प्रोपुः । दुःखमूपुः ॥

जात्योग्रोनु तिमीन्वमेस्थात्प्रकृत्या शठो वक्रः ।
अक्ष्णा काणः पदा खञ्जः खलाः प्रायेण मायिनः ॥१५॥

१५. जात्या स्वभावेनोग्रः क्रूरस्तथा प्रकृत्या स्वभावेन शठो मा-

---

१ ए °प्रोखुर्दु°.

---

१ डी °ले । शेषं स्प°. २ सी डी °न प्राप्ये स्थि°. ३ सी °नाप्रा°. ४ डी °प्ये । इ°. ५ एफ् °दावस्या°. ६ डी °वाप्यादि°.

यावी बकस्तिमीन्मत्स्याननुलक्ष्यीकृत्य वप्रे नद्यादितटेस्थात् । कीदृक्सन् । अक्ष्णा काणस्तिमिग्रहणायाधोबद्धदृक्त्वेन संकोचितैकाक्षत्वात्काण इव भवन्नित्यर्थः । तथा पदा पादेन खञ्जो मायित्वात्तिमिविश्वासनाय खोडयन्मन्दं मन्दं गच्छंश्चेत्यर्थः । युक्तं चैतत् । यतः खलाः प्रायेण बाहुल्येन मायिनः स्युः । बकश्च जात्योग्रत्वात्खलः । शरदि ह्यनगाधे स्वच्छे च जले सुखेन दृश्यांस्तिमीन् ग्रहीतुं बका नद्यादितटेषु विचरन्ति ॥

गोत्रेण पुष्करावर्त किं त्वया गर्जितैः कृतम् ।
विद्युतालं भवत्वद्भिर्हंसा ऊचुर्न्विदं घनम् ॥ १६ ॥

१६. हंसा घनं मेघमिदं न्वेतदिवोचुः । यथा गोत्रेण संतानेन ह पुष्करावर्त पुष्करावर्तगोत्र मेघ स्वसमयाभावेन निष्फलत्वात्त्वया किम् । किमिति प्रतिषेधेव्ययम । एवं कृतमलं भवत्वित्येतेपि । कृतमित्यकारान्तोनव्ययोपि । त्वया तव गर्जितैर्विद्युताद्भिर्जलैश्च सृतमित्यर्थः । शरदि हि हंसाः कलं शब्दायन्ते तत्प्रतिकूला घनगर्जितादयश्च स्तोकं स्तोकं प्रादुर्भवन्तीत्येवमाशङ्का ॥

अक्ष्णा काणः । पदा खञ्जः । प्रकृत्या शठः । प्रायेण मायिनः । गोत्रेण पुष्करावर्त । जात्योग्र । इत्यत्र "यद्भेदैस्तद्वदाख्या" [४६] इति तृतीया ॥ प्रायेण मायिन इत्यत्र प्रायशब्दो बाहुल्यवचनस्तस्य च भेदो मायित्वं यथाक्ष्णः काणत्व मायित्वेन च बाहुल्यवतां खलानामाख्या । यथा काणत्वेन काणाक्षियुक्तस्य नरस्याख्येति तद्वदाख्यावाचिनः प्रायात्तृतीया ॥

---

१ बी °न् गृहीं°. २ सी स्वस्वस°. ३ एफ् नि फल°. ४ सी डी किमपि ५ सी डी कृत्यमि°. ६ ए °न्ते न त°. सी °न्ते नात्प्र°. डी °न्ते तान्प्रति°. ७ ए सी डी °कं प्रा°. ८ ए °शङ्का. ॥ ९ डी एफ् °थाक्ष्णा का°. १० बी खलना°. ११ एफ् °त्वे का°. १२ एफ् °णाक्षयु°. १३ एफ् प्रायस्तृ°.

गर्जितैः कृतम् अद्भिर्भवतु । विद्युतालम् । किं त्वया । इत्यत्र "कृतार्थैः"
[४७] इति तृतीया ॥

मघाभिः पायसं श्राद्धं मघासु ब्रह्मचर्यवत् ।
श्रुत्या स्मृतौ च प्रसिता विदधुर्विधिनोत्सुकाः ॥ १७ ॥

१७. द्विजा मघाभिर्मघाभिश्चन्द्रयुक्ताभिर्युक्ते काले पायसं दुग्धसंवन्धि श्राद्धं पितृतर्पणं विदधुर्यथा मघासु ब्रह्मचर्यं विदधुः । किंभूताः सन्तः । श्रुत्या वेदे स्मृतौ च धर्मशास्त्रे च प्रसिता नित्यप्रसक्ताः श्रुतिज्ञाः स्मृतिज्ञाश्च । अत एव विधिनोत्सुका विधिर्वामजान्ववनमनयज्ञोपवीतापसव्यत्वकरणादिस्तत्रात्यन्तं प्रसक्ताः । शरदि हि श्राद्धपक्षः स्यात्तत्र चावश्यं श्राद्धकृद्भिर्ब्रह्मचर्यं विधीयते । यत्स्मृतिः ।

ताम्बूलं दन्तकाष्ठं च स्निग्धस्नानमभोजनम् ।
रत्यौषधपरान्नानि श्राद्धकृत्सप्त वर्जयेत् ॥ १ ॥

अन्यथा तद्रेतः पितृमुख उपतिष्ठतीति । तत्र चावश्यं मघाश्चन्द्रेण युज्यन्ते । ततस्तास्वपि श्राद्धकृतो ब्रह्मचर्यं विदधति । अत एवोपमाद्वारेणोक्तं मघासु ब्रह्मचर्यवदिति । तथा मघासु पायसमेव श्राद्धं संकल्परूपं क्रियते । तथा च पितृसंहितायां पितृवचः ।

अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीम् ।
पायसं मधुसर्पिभ्र्यां वर्षासु च मघासु च ॥ इति ।

न तु पिण्डप्रदानादि क्रियते प्रत्यवायात् । तदुक्तं स्मृतौ ।

मघायां पिण्डदानेन ज्येष्ठपुत्रो विनश्यति । इत्यादि ॥

---

१ ए सी डी °घाटिभि°. एफ् घाभिश्च°. २ ए सी °काः प्रति°.
३ ए सी °त्स्मृति ता°. ४ सी एफ् श्राद्धस°. ५ ए वी सी एफ् °भ्यिा व°.
६ सी डी एफ् °ण्टप्रदा°.

उत्सुकाः करदानेववद्धाः कृष्या पशुष्वपि ।
व्रीहीन् द्विद्रोणान् द्विद्रोणान् द्विद्रोणैश्च तिलान्ददुः ॥१८॥

१८. कृष्या महीकर्षणे पशुष्वपि गोमहिष्यादिषु चावबद्धा नित्यप्रसक्ता अत एव करदाने । करः कृषिपशुचारणादिकृतराजकीयभूम्युपभोगहेतुको राजग्राह्यो भागः । तस्य दान उत्सुका अत्यन्तं प्रसक्ता असाधारणविशेषणोपादानाद्ग्राम्याः[1] करोद्ग्राहकराजपुरुषेभ्यो ददुः । कान् । व्रीहीन् । किंभूतान् । द्रोणश्चतुःषष्टिः[2] कुडवाः । द्वौ द्रोणौ मानमेषां "मानम्" [६.४.१६८] इतीकणो "आनाद्यद्विःलुप्" [६.४.१४०][3] इति लुपि वीप्सायां द्विरुक्तौ च द्विद्रोणान्द्विद्रोणान् । तथा द्विद्रोणैश्च तिलान् । चो भिन्नक्रमे । द्विद्रोणमानान्द्विद्रोणमानांस्तिलांश्च । शरदि[4] हि ग्राम्याः सस्येषु निष्पन्नेषु राजकरं ददते ॥

क्रौञ्चान्सहस्रं[1] सहस्रं पञ्चकेनान्वजीगणन् ।
सहस्रेण[2] शुकान् गोप्यः पञ्चकं पञ्चकं रसात् ॥ १९ ॥

१९. गोप्यः क्षेत्ररक्षिका नार्यः सहस्रं[5] सहस्रं क्रौञ्चान्पक्षिभेदान् रसात्कौतुकात्पञ्चकेन पञ्च संख्या मानमस्य "संख्या डते." [६.४.१३०] इत्यादिनाके पञ्चकः संघस्तेनान्वजीगणन्पञ्च पञ्च कृत्वा गणितवत्य इत्यर्थः । तथा सहस्रेण सहस्रसंख्यान् सहस्रसंख्यान् शुकान् । पञ्चकं पञ्चकमन्वजीगणन् । पञ्चकं पञ्चकमित्यत्र शुकसामानाधिकरण्येपि पञ्चकशब्दाद्ब्राह्मणाः संघ इतिवदेकवचनम् । शरदि हि क्रौञ्चाः शुकाश्च बाहुल्येन स्युः ॥

१ ए °हस्रसहस्र प° २ ए बी °हस्रेण.

१ एफ् °दाग्राम्या.. २ एफ् °ष्टिकु°. ३ बी °द्विः लु°. ४ सी °दि ग्रा°. ५ एफ् °स्र क्रौ°.

मघाभिः। मघासु। इत्यत्र "काले भात्°" [४८] इत्यादिना ना तृतीया॥

श्रुत्या प्रसिताः स्मृतौ[1] प्रसिताः। विधिनोत्सुकाः[2] करदाने उत्सुकाः। कृष्यावबद्धाः पशुष्ववबद्धाः। इत्यत्र "प्रसित°" [४९] इत्यादिना[3] वा तृतीया॥

द्विद्रोणे[4]। पञ्चकेन। सहस्रेण। इत्यत्र "व्याप्ये द्वि°" [५०] इत्यादिना वा तृतीया॥ पक्षे। द्विद्रोणान्द्विद्रोणान्[5]। पञ्चकं पञ्चकम्। सहस्रं सहस्रम्[6]॥ तृतीया वीप्सायां विहितेति तृतीयान्तस्य[7] पदस्य द्विरुक्तिर्न स्यात्। द्वितीया तु कर्मणि विहिता न वीप्सायामतस्तदन्तस्य द्विरुक्तिः स्यात्॥

संजानाना गुणैः प्रेम संजानन्तः पुरा रतेः।
संप्रायच्छन्त दासीभिर्व्रीहीन् ग्रामीणदारकाः॥ २०॥

२०. ग्रामीणदारका ग्राम्यपुत्रा[8] दासीभिश्चेटीनां व्रीहीन्संप्रायच्छन्त ददुः यतो गुणै रूपलावण्यादिगुणान्[9]प्रेम स्नेहं चार्थाद्दासीनां संजानाना[10] जानन्तस्तथा पुरा पूर्वं रतेः सुरतस्य संजानन्तः स्मरन्तः। ग्राम्या ह्यधर्म्यत्वाद्[11]धर्म्यासु दासीषु रमन्ते॥

संप्रायच्छद्बिसं हंस्यै हंसो यत्तन्मुदेभवत्।
आत्मने रोचनाल्लब्धं कस्मै न स्वदतेथ वा॥ २१॥

२१. हंसो यद्बिसं मृणालं हंस्यै स्वप्रियायै संप्रायच्छत्प्रेम्णा ददौ तद्बिसं हंस्या मुदेभवत्। अथ वात्मने रोचनाद्रोचत इत्येवं शील "इदित्°" [५.२.४४] इत्यादिनाने रोचनस्तस्माद्वल्लभाल्लब्धं प्राप्तं वस्तु कस्मै न स्वदते किं तु प्रीतेर्वर्धकत्वात्सर्वस्मै रुचिमुत्पादयतीत्यर्थः॥

---

१ प स्मृत्यौ प्र° २ सी डी °काः कृ°. ३ सी °ना तृ° ४ प °द्रोण्येत्स°. ५ सी °णान् प° ६ प °द्र्रसहस्रम्। तृ°. ७ पफ °यान्त्यप°. ८ पफ ग्रामपु°. ९ प रूपाला°. १० प नाजा°. ११ पफ °धर्मत्वा°.

जज्ञे स्वात्यम्बु मुक्ताभ्यो दुग्धं दध्ने न्वकल्पत[1] ।
रिक्तोपि न ययौ मेघः शरदे धारयन्नृणम् ॥ २२ ॥

२२. नुरुपमार्थे । यथा दुग्धं दध्नेकल्पत दधिरूपविकारमापन्नं तथा स्वातिशब्देन स्वातिनक्षत्रयुतरवियुक्तः[1] काल उपचारादुच्यते । स्वातावम्बु मेघजलं स्वात्यम्बु मुक्ताभ्यो जज्ञे मुक्ताफलरूपं[3] विकारमापन्नम् । शरदि दुग्धानि दधीनि चान्यर्तुसकाशात्प्रचुराणि[4] विशिष्टानि च स्युरित्युपमानेनोक्तम् । तथा स्वातौ जलकणा ये के चन शुक्तिमुखेषु पतन्ति ते सर्वेपि मुक्ताः स्युरिति प्रसिद्धिः । तथा मेघो रिक्तोपि जलवर्जितोपि न ययौ । उत्प्रेक्ष्यते[5] । शरदे ऋणं धारयन्नु ध्रियते तिष्ठति स्वरूपान्न प्रच्यवते ऋणं कर्तृ तद्ध्रियमाणं प्रयुञ्जान[6] इव । ऋणिको हि[7] रिक्तो द्रव्यरहित ऋणशोधनाशक्तत्वाद्यत्रोत्तमर्णेन[8][9] राजाज्ञया ध्रियते तस्मात्स्थानान्न गच्छति ॥

गुणैः संजानानाः । प्रेम संजानानाः । इत्यत्र "समो ज्ञोस्मृतौ वा" [५१] इति वा तृतीया ॥ अस्मृताविति किम् । रतेः संजानन्तः ॥

दासीभि. संप्रायच्छन्त । इत्यत्र "दामः०" [५२] इत्यादिना तृतीया । दाम आत्मनेपदं च ॥ अधर्म्ये[10] इति किम् । हंस्यै संप्रायच्छत् । अत्र "चतुर्थी" [५३] इति संप्रदाने चतुर्थी ॥

मुदेभवत् । इत्यत्र "तादर्थ्ये" [५४] इति चतुर्थी ॥

रुच्यर्थैः प्रेये । आत्मने रोचनात् । कस्मै स्वदते[11] ॥ क्रुध्यर्थैर्विकारे ।

---

१ ए °ल्पत· ।.

---

१ बी सी डी एफू °युक्तर°. २ एफू °युक्तका°. ३ सी मुक्ताफ°. ४ सी °न्यत्सर्वस°. ५ एफू °त्प्रेक्षते ।. ६ सी °युञ्जन°. डी °युञ्जत इ°. ७ सी हि रक्तो°. ८ एफू °नासक्त°. ९ डी °क्तश्चान्यत्रो°. १० एफू °धर्म इ°. ११ एफू °ते । क्रुध्य°.

दुग्धं दध्नेकल्पत । अग्ने स्वात्यम्बु मुक्ताभ्यः ॥ धारिणोत्तमर्णे । शरदे धारयमृणम् । इत्यत्र "रुचिक्लृप्यर्थे°" [५४] इत्यादिना चतुर्थी ॥

ध्वानैः प्रत्यशृणोन्मैत्रीं शिखिभ्योनुगृणन्घनः ।
तस्मै प्रतिगृणन्तस्तेप्याशृण्वन्केकयाथ ताम् ॥ २३ ॥

२३. ध्वानैर्गर्जितैः कृत्वा शिखिभ्यो मयूरेभ्योनुगृणन् शिख्युक्तमनुवदन्निव प्रशंसतो वा शिखिनः प्रोत्साहयन्निव घनो ध्वानैरेव मैत्रीमान्तरप्रीतिं शिखिभ्यः प्रत्यशृणोदिव मेघदर्शनमात्रोद्भूतशिखिकेकानन्तरमेव गर्जनादङ्गीचकारेव । अथ घनस्य मैत्रीप्रतिश्रवणानन्तरं केकया तस्मै घनाय प्रतिगृणन्तो घनोक्तमनुवदन्त इव प्रशंसन्तं वा घनं प्रोत्साहयन्त इव । तेपि शिखिनोपि तां मैत्रीं तस्मै केकया आशृण्वन्निव गर्जानन्तरमेव केकायनादङ्गीचक्रुरिव । शरद्यपि हि मेघा गर्जन्ति तद्गर्जाश्रवणाच्च शिखिनः प्रीताः केकायन्ते । अतश्चैवमुत्प्रेक्षा । अत एव शिखिघनानामाख्यातृत्वार्थिते उपपद्येते । उत्प्रेक्षाद्योतकाश्चेवशब्दा अत्रावसीयन्ते । यौ ह्यत्यन्तं स्निग्धौ वयस्यौ भवतस्तावन्योन्यमुक्तमनुवदन्तौ प्रशंसयोत्साहयन्तौ चावां मिथो वयस्याविति वाचापि मानसीं प्रीतिं प्रतिजानीते ॥

शिखिभ्यो मैत्रीं प्रत्यशृणोत् । तस्मै तामाशृण्वन् । इत्यत्र "प्रति°" [५६] इत्यादिना चतुर्थी ॥ अर्थिनीति किम् । शिखिभ्यो मैत्रीं प्रत्यशृणोदित्यत्र मैत्र्यां मा भूत् ॥

तस्मै प्रतिगृणन्तः । शिखिभ्योनुगृणन् । इत्यत्र "प्रत्यनोः°" [५७] इत्यादिना चतुर्थी ॥ आख्यातरीति किम् । तस्मै केकया प्रतिगृणन्त इत्यत्र केकायां मा भूत् ॥

---

१ सी अथाप व°. डी अथापि घ°. २ सी °र्जाश्राव°. ३ सी डी °पद्यते ।. ४ एफ् °मुक्ताम° ५ एफ् °नाति शि°. ६ बी प्रत्येत्या°. ७ सी °र्थी । आख्या°. ८ एफ् °द प्र°.

रात्स्यन्ति देवतास्तुभ्यं नाथ किं मह्यमीक्षसे ।
एवमाराधयन्सांयात्रिकेभ्यः कुलयोषितः ॥ २४ ॥

२४. कुलयोषितः सांयात्रिकेभ्यः पोतवणिग्भ्यः प्रस्तावाद्द्वीपान्तरे जिगमिषुभ्य आराधयन् । द्वीपान्तर[1]जिगमिषुपोतवणिजां क्षेमलाभादिविषयं दैवं पर्यालोचयन् । सविचारमूचुरित्यर्थो न[2] त्वकुलीना इव संभावितचिरकालीनविरहरूपमहापराधविधानरुष्टत्वा[3]त्ताश्रुकुशुः । कथमित्याह । हे नाथ वल्लभ रात्स्यन्ति देवतास्तुभ्यं तव द्वीपान्तरे[4] गच्छतः क्षेमलाभादिविषयं दैवं समुद्रदेवताद्या देवताः पर्यालोचयिष्यन्ति तव क्षेमलाभादिविषये देवताः सांनिध्यं करिष्यन्तीत्यर्थः । अतः कि मह्यमीक्षसे मम विरहेसौ पतिव्रता भीरुः कथं भविष्यतीति क्षेमा[5]क्षेमादिवि[6]षयं दैवं किमिति निरूपयसि । देवताप्रसादात्त्वयि क्षेमाभ्युदयादिमति त्वदेकशरणाया मम नितरां क्षेमाभ्युदयाद्येवेति म[7]दैवचिन्तया त्वया न खेद्यमिति भाव एवम् । यद्वा कुलयोषितः सांयात्रिकेभ्य आराधयन् । पोतवणिजां गमनविषयमभिप्रायं विचारितवत्यो विचारपूर्वमूचुरित्यर्थः । कथमित्याह । हे देव देववन्मर्मा[8]राध्य हे नाथ[9] ता मत्सपत्न्यस्तुभ्यमारा[10]त्स्यन्ति अकुलीनत्वेनासतीत्वादेतेस्मत्पतयः परपुरुषाभिसरणविघ्नाः कदा देशान्तरं यास्यन्तीति तव गमनाभिप्रायं[11] पर्यालोचयिष्यन्ति न तु वयं कुलीनत्वात्तस्मात्किं मह्यमीक्षसेस्या अभिप्रायः कीदृश इति विमतिपूर्वं किमिति निरूपयसि । अहं त्वद्विरहं क्षणमपि नाभिलषामीत्यर्थः । एवम् सांयात्रिकाणां कुलयोषितां च बहुत्वेपि प्रत्येकं स्वस्वभर्तारं प्रति भणनविवक्षया तुभ्यमित्यादावेकवचनम् ॥

१ एफ् °न्तर जि°. २ सी न कु°. ३ बी एफ् °त्वात्ताश्रु°. सी °त्वाभ्याश्रु°. डी °त्वादिभ्याश्रु°. ४ डी °न्तरमिच्छ°. ५ एफ् °मादि°. ६ सी डी °षये दै°. ७ ए °या निखे°. ८ डी °मात्रारा°. ९ ए °थ म°. १० ए °रात्सन्ति. ११ ए °य लो°.

असाधयन्न पुत्रेभ्यो दारेभ्यो दद्दशुर्न च ।
प्रोषुर्लाभाय राध्यन्तोपश्यन्तः श्रान्तयेध्वगाः ॥ २५ ॥

२५. अध्वगाः पान्थाः पुत्रेभ्यो नासाधयन् । अस्मद्विरहेमी कथं भविष्यन्तीति पुत्राणां क्षेमाक्षेमादिविषयं दैवं नाचिन्तयन् । एवं दारेभ्यो दद्दशुर्न च । किं तु लाभाय राध्यन्तो वृद्धिं विचारयन्तोत एव श्रान्तयेपश्यन्तो मार्गखेदमविचारयन्तः सन्तः प्रोषुः । शरदि हि पान्था व्यवहारार्थं देशान्तरं यान्ति ॥

तुभ्यं रात्स्यन्ति । मह्यमीक्षसे[२]। इत्यत्र "यद्वीक्ष्ये राधीक्षी" [५८] इति चतुर्थी ॥ राधीक्ष्यर्थधातुयोगेपीच्छन्त्यन्ये । सांयात्रिकेभ्य आराधयन् । पुत्रेभ्यो नासाधयन् । राधिरपरपठितश्चुरादिर्णिगन्तो वा । साधिर्णिगन्त एव । दारेभ्यो दद्दशुः[३]। राधीक्ष्यर्थविपयाद्विप्रष्टव्यादिच्छत्यन्यः । लाभाय राध्यन्तः । श्रान्तयेपश्यन्तः ॥

लोहिनीव तडिज्ज्योत्स्ना[१] तापाय विरहे हि तत् ।
स्त्रैणं स्म श्लाघते पत्ये तिष्ठते शपते ह्नुते ॥ २६ ॥

२६. विरहे[४] सति हि यस्माज्ज्योत्स्ना लोहिनीव तडिल्लोहिता विद्युदिव तापायासीत् । लोहिता हि विद्युत्सन्तापाय स्यात् । यदुक्तम् ।

वाताय कपिला विद्युदातपायातिलोहिनी ।
पीता वर्षाय[६] विज्ञेया दुर्भिक्षाय भवेत्सिता ॥ इति ।

तत्तस्मात्स्त्रैणं पत्ये श्लाघते स्म तिष्ठते स्म शपते स्म ह्नुते स्म ।

---

१ ए °डिज्ज्योत्स्ना.

---

१ एफ् °मादि°. २ बी °मीक्ष्यसे. ३ ए °भीक्षार्थ°. ४ सी डी वि स° ५ बी °दातापा°. ६ बी °र्षा च वि°. ७ सी °क्षायामवत्ति°.

स्मेति सर्वक्रियासु[1] योज्यम् । श्लाघास्थानशपथापह्नवान् कुर्वाणं स्त्रैणं कर्तृ आत्मानं ज्ञाप्यं जानन्तं पतिं प्रयोजयति स्मेत्यर्थः । पत्य इत्यत्र जातावेकवचनम् । इदमुक्तं[2] स्यात् । पतीनपराधकत्वेन चाटुकशतैरनुनयतोप्यवगणय्य मानावष्टम्भेनावस्थिता अपि शारद्[3]ज्योत्स्नोदये कामोद्रेकाद्विगलितमानाः सत्यो नार्यः । श्लाघया वक्रोक्तिभङ्गीभिः स्वप्रशंसया स्थित्यानुरागादिसूचकस्थानविशेषेण शपथेन सपत्न्युद्भावि[4]तस्य मिथ्यारूपस्य व्यलीकस्य निरासेन सपत्न्युद्भावितं पतिभिः संभाव्यमानं व्यलीकं यद्यस्मासु कुत्राप्यस्ति तदा वयं मात्रादिशरीरं स्पृशाम इति प्रत्यायकवाक्येन वा निह्नवेन च प्राग्मानवशेन कृतस्यावज्ञाद्यपराधस्याप[5]लापेन चात्यन्तिकानुरागभक्तिरिरंसुतादिगुणोपेतं ज्ञाप्यमात्मानं पतीन् ज्ञापितवत्यः ॥

तापाय लोहिनी तडित् । इत्यत्र "उत्पातेन ज्ञाप्ये" [५९] इति चतुर्थी ॥

पत्ये श्लाघते । ह्नुते । तिष्ठते । शपते । इत्यत्र "श्लाघह्नुस्था°" [६०] इत्यादिना चतुर्थी ॥

पाकाय प्रयता जग्मुर्नीवारेभ्यस्तप[1]स्विनः ।

चतुर्मासोपवासेपि नेयुर्ग्रामं[2] पुराय वा ॥ २७ ॥

२७. पाकाय प्रयताः पक्तुमुद्यताः सन्तस्तप[6]स्विनस्तापसा नीवारेभ्यो वनव्रीहीनाहर्तुं ययुः । एतेनैषां स्वयंपाकित्वमसंग्रहश्चो[7]क्तः । शरदि हि नीवारा बाहुल्येन स्युः । परं चतुर्षु मासेषु भवो "वर्षाका-

१ ए बी °पश्विन° । २ ए °युग्राम.

१ ए °सु युज्यते श्श°. २ सी °मुक्ते स्या°. ३ सी °रदाज्यो°. ४ सी डी °वित. ५ एफ् °पलपे°. ६ बी °पश्विन°. ७ सी °श्वोक्ते श°. डी एफ् °श्चोक्तः श°.

केभ्यः" [६.३ ८०] इतीकणि तस्य लुपि चतुर्मासः स चासावुपवासश्च तस्मिन्नपि चतुरो मासानभुक्त्वापीत्यर्थः। ग्रामं पुराय वा नेयुः पारणे प्रधानभिक्षालाभाद्यर्थं न गताः। एतेनातिनैष्ठिकत्वोक्तिः[1]। महातापसा हि केचिद्देवस्वपनैकादश्या आरभ्य देवोत्थानैकादशीं यावच्चतुरो वर्षामासानुपवासान्कुर्वन्ति। तत्पारणेपि वनस्थितैरेवारण्यकधान्यैः शिलोञ्छवृत्त्यानीतैः स्वयंपक्वैः प्राणयात्रां कुर्वन्ति न तु प्रधानभिक्षालाभाद्यर्थं ग्रामपुरादि वसत्स्थानमागच्छन्तीत्येषां धर्मः॥

चित्रां स्वातेर्विशाखायै गन्तुर्भानोस्त्विषार्दिताः।
यान्तोध्वानममन्यन्त न शुने स्वं न वा वुसम्॥ २८॥

२८. अध्वानं मार्गं यान्तोध्वगाः पान्थाः स्वमात्मानं शुने कुर्कुराय नामन्यन्तात्यन्तं कष्टाधारत्वेन शुनोप्यात्मानं निकृष्टं मेनिरे। न वा वुसं यद्वार्किंचित्करत्वादात्मानं पलालादप्यसारं मेनिरे। यतश्चित्रां गन्तुः स्वातेर्गन्तुर्विशाखायै गन्तुः। चित्रास्वातिविशाखानक्षत्रैः संयुज्यमानस्य सत इत्यर्थः। भानो रवेस्त्विषातपेनार्दिता अत्युष्णत्वात्पीडिताः। शरदि हि रविश्चित्रास्वातिविशाखाभिरवश्यं युज्यते तद्युक्तश्च प्रायोत्युष्णद्युतिः स्यात्॥

नाश्वं नावं शुकं काकं शृगालं मेनिरे वृषम्।
पयःपानोन्मदा गोपा महिषं तु शुने तृणम्॥ २९॥

२९. गोपा गोपाला वृष जातावेकवचनम्। शण्डानश्वं नावं शुकं काकं शृगालं वा न मेनिरे। निःसत्त्वतानायासस्ववश्यताकरणादिभि-

---

१ सी डी काष्ठ शृ°.

---

[1] पफ़ °ष्ठिकोक्तिः।.

रत्नादिभ्योपि निकृष्टमज्ञासिषुः । महिषं तु वृषाद्बलिष्ठत्वेन शुने तृणं वा मेनिरे । यतः पयःपानोन्मदाः क्षीरपाणोन्मत्ताः ॥

न तृणस्य बुसाय स्वं मन्तेवा[1]शुष्यदम्बुदः ।
सुखो हितोपि पृथ्व्यै द्योर्यदप्रीणान्न चातकम् ॥ ३० ॥

३०. तृणबुससकाशादपि स्वमकिंचित्करं मन्यमान इवाम्बुदो-[1] शुष्यन्निर्जलोभूत् । यद्यस्माद्धेतोरम्बुदश्चातकं नाप्रीणान्न तृप्तीचक्रे । कीदृक् । पृथ्व्यै सस्याद्युत्पत्तिहेतुत्वाद्द्योः स्वर्गस्य चानेकसस्यौषध्यादि-यज्ञोपकरणोत्पत्तिहेतुत्वात्सुखोपि । अपिरत्रापि योज्यः । सुखकार्यपि हितोप्यनुकूलोपि च । योप्यम्बुदे[2] उन्नतो महापुरुषः स पृथ्व्याः स्वर्गस्य च परोपकारि[3]त्वातिधार्मिकत्वादिभिर्गुणैः सुखोपि हितोपि च सन् यदा चतते याचते णके चातकं याचकं केनाप्यसाम[4]र्थ्येन न प्रीणाति तदा तृणबुसाभ्यामप्यात्मानमकिंचित्करं मन्यमानः सन् शुष्यति खिद्यत इत्युक्तिः ॥

पाकाय प्रयताः । इत्यत्र "तुमोर्थे°[5]" [६१] इत्यादिना चतुर्थी ॥

नीवारेभ्यो जग्मुः । इत्यत्र "गम्यस्याप्ये" [६२] इति चतुर्थी ॥

ग्रामं नेयुः पुराय नेयुः । इत्यत्र "गतेः°" [६३] इत्यादिना वा चतुर्थी ॥

अनाप्त इति किम् । अध्वानं यान्तः ॥ कृद्योगे तु परत्वात्षष्ठ्येव । स्वातेर्गन्तुः ॥ द्वितीयैवेत्यन्ये । चित्रां गन्तुः ॥ चतुर्थी[6] चेत्यन्ये । विशाखायै[7] गन्तुः ॥

1 बी °न्ते चा°.

1 सी °न्मदाः क्षी°. 2 बी एफ् °द इवाम्बुद उ°. 3 एफ् °रित्वेनाति°. 4 बी °मर्थ्येन. 5 ए बी तुमर्थे. 6 सी डी °तुर्थ्यैवेत्य°. 7 ए °खाये ग°.

न स्व शुनेमन्यन्त न स्वं बुसममन्यन्त । इत्यत्र "मन्यस्य" [६४] इत्यादिना वा चतुर्थी ॥ अनावादिभ्य इति किम् । न वृषं नावमन्नं शुकं शृगालं काकं वा मेनिरे ॥ कुत्स्यतेनेनेति करणाश्रयणं किम् । न स्वं शुने मेनिरे इत्यत्र स्वशब्दान्न स्यात् ॥ अतिग्रहणं किम् । महिषं तृणं मेनिरे । अत्र नञ्प्रयोगाभावे साम्यमात्रं प्रतीयते न त्वतिकुत्सा ॥ कुत्सामात्रेपीच्छन्त्येके। महिषं शुने मेनिरे ॥ न स्वं तृणस्य मन्तेति कृद्योगे परत्वात्पष्ठी । चतुर्थ्यपीति कश्चित् । न स्वं बुसाय मन्ता । न स्वं तृणस्य मन्ता ॥

पृथ्व्यै हितः द्योर्हितः । पृथ्व्यै सुखं द्योः सुखः । इत्यत्र "हितसुखाभ्याम्" [६५] इति वा चतुर्थी ॥

शं पथ्यं भद्रमायुष्यं स्तात्क्षेमोर्थश्च सिध्यतु ।
राज्ञः प्रजाभ्य इत्यूचेगस्तिरुद्यन्घनस्वनैः ॥ ३१ ॥

३१. अगस्तिरगस्त्यर्षिरुद्यन्सन्घनस्वनैर्मेघगर्जितैः कृत्वोच इव । इवोत्रावसीयते । किमित्याह । राज्ञः प्रजाभ्यश्च शं सुखं पथ्यं हितं भद्रं धनधान्यादिसंपल्लाभ आयुः प्रयोजनमस्य "स्वर्गस्वस्ति"[६.४.१२२] इत्यादिना ये आयुष्यमायुर्वृद्धिहेतुर्वस्तु क्षेमो[4] विपदभावश्च स्तादर्थश्च सिध्यतु कार्यं निष्पद्यतां चेति । शरदि ह्यगस्तिरुदेति घनगर्जितानि च स्युरित्येवमुत्प्रेक्षा[5] । मुनिर्ह्युद्यंस्तपोज्ञानादिविशेषेणोदीयमानो राजादिसमीपं गच्छन् घनस्वनैः सान्द्रध्वानैः[6] कृत्वा राज्ञः प्रजाभ्यश्च शमित्याद्याशीर्वादं वक्ति ॥

---

१ एफ् °त्सामत्रे°. २ एफ् °तः पृ°. ३ सी °स्त्य ऋषिरु°. ४ एफ् क्षेम वि°. ५ सी °त्प्रेक्ष्य मु°. डी °त्प्रेक्ष्यते मु°. ६ ए °ध्याने कृ°.

श्रेयश्चिरायुः कुशलं स्तात्कार्यं सिद्धिमेतु च ।
पुत्रेभ्यश्च स्नुषाणां चेत्यूचुर्बलिमहे स्त्रियः ॥ ३२ ॥

३२. बलिमहे बलिराज्यदिने कार्तिकश्वेतप्रतिपद्दिने स्त्रिय ऊचुः । किमित्याह । पुत्रेभ्यः स्नुषाणां च वधूटीनां च श्रेयो धनाद्यर्द्धिलाभश्चिरायुश्चिरजीवितं कुशलं च विपदभावश्च स्तात् कार्यं सिद्धि[2]मेतु[3] चेत्याशीर्वाक्यानि ॥

बलिमहो हि कार्तिककृष्णपञ्चदशीरात्रौ शुक्लप्रतिपद्दिने च स्यात् । तत्र च लोका यथाशक्ति सुवेषाः सुचेष्टाः प्रमुदितास्ताम्बूलाद्यास्वादनपरा भगिन्यादिस्त्रीः प्रणमन्ति । ताश्च चन्दनवर्धनादिपूर्वं श्रेयः स्तादित्याशीर्वादं ददते । यतः कार्तिकश्वेतप्रतिपदि यच्छुभमितरद्वा चेष्टते तच्चेष्टया सकलं वर्षं याति । यदुक्तं भविष्यत्पुराणे ।

पुरा वामनरूपेण याचयित्वा धरामिमाम् ।
बलिं यज्ञे हरिः सर्वं क्रान्तवान्विक्रमैस्त्रिभिः ॥ १ ॥
इन्द्राय दत्तवान् राज्यं बलिं पातालवासिनम् ।
कृत्वा दैत्यपतेर्दत्तमहोरात्रं पुनर्नृ[5]प ॥ २ ॥
पञ्चदश्यां निशा ह्येका कृष्णपक्षस्य कार्तिके ।
एकमग्रेतनदिनं बलिराज्येति चिह्नितम् ॥ ३ ॥
कार्तिके कृष्णपक्षस्य पञ्चदश्यां निशागमे ।
य[6]थेष्टचेष्टं दैत्यानां राज्यं तेषां महीतले ॥ ४ ॥
लोकश्चापि गृहस्यान्तः शय्यायां शुक्लतण्डुलैः ।
संस्थाप्य बलिराजानं फलैः पुष्पैश्च पूजयेत् ॥ ५ ॥
बलिमुद्दिश्य दीयन्ते दानानि कुरुनन्दन ।
यानि तान्यक्षयाण्याहुर्मयैवं संप्रदर्शितम् ॥ ६ ॥

---

१ प °भाविश्च. २ प सी सिद्धमे°. ३ प °तुश्चेत्या°. ४ प °म स्ता°. ५ प फ नृप. ॥. ६ प घेष्ट चे°. ७ प सी डी °तन्दुलैः ।.

एकमेवमहोरात्रं वर्षे वर्षे विशां पते ।
दत्तं दानवराज्यस्य आदर्शमिव भूतले ॥ ७ ॥
निरुजश्च जनः सर्वः सर्वोपद्रववर्जितः ।
कौमुदीकरणाद्राजन् भवतीह महीतले ॥ ८ ॥
यो यादृशेन भावेन तिष्ठत्यस्यां युधिष्ठिर ।
हर्षदैन्यादिरूपेण तस्य वर्षं प्रयाति हि ॥ ९ ॥
रुदितो रोदते वर्षं हृष्टो वर्षं प्रहृष्यति ।
भुक्तो भोक्ता भवेद्वर्षं सुस्थः सुस्थो भवेदिति ॥ १० ॥

हितार्थे । प्रजाभ्य. पथ्यं स्तात् राज्ञ. पथ्यं स्तात् ॥ सुखार्थे । शं प्रजाभ्यस्तात् शं राज्ञः स्तात् ॥ भद्रार्थे । भद्रं प्रजाभ्यः स्तात् । भद्रं राज्ञः स्तात । श्रेयः पुत्रेभ्यःस्तात् श्रेयः नृपाणां स्तात् ॥ आयुष्यार्थे । प्रजाभ्य आयुष्यं स्तात् राज्ञ आयुष्यं स्तात् । पुत्रेभ्यश्चिरायुः स्तात् नृपाणां चिरायुः स्तात् । क्षेमार्थे । प्रजाभ्यः क्षेमः स्तात् राज्ञः क्षेमः स्तात् पुत्रेभ्यः कुशलं स्तात् नृपाणां कुशलं स्तात् ॥ अर्थार्थे । अर्थः प्रजाभ्यः सिध्यतु अर्थो राज्ञः सिध्यतु ; कार्यं पुत्रेभ्यः सिद्धिमेतु कार्यं नृपाणां सिद्धिमेतु । इत्यत्र "तद्भद्र°" [६६] इत्यादिना वा चतुर्थी ॥

शरदा किं परिक्रीताः सहस्रायायुतेन वा ।
अलं केल्यै श्रियै शक्ता हंसास्तस्या यदन्वयुः ॥ ३३ ॥

---

१ ए हस्यस्त°.

---

१ बी सी डी °राजस्य. २ सी डी °तीति म°. ३ ए °त्यस्या युधिष्ठिरः । ह°. ४ ए सुस्थसु°. ५ ए सी °तार्थः प्र°. एफ् °तार्थे प्र°. ६ ए एफ् स्तात् । श्रे°. ७ ए सी डी क्षेम स्ता°. ८ सी स्तात् पु°. ९ ए स्तात् । अ°. १० एफ् °र्थः पुत्रेभ्य. सिध्यतु राज्ञोर्थ. सिध्यतु अर्थः प्रजाभ्यः सिध्यतु कार्यं प्रजाभ्यः सिद्धिमेतु कार्यं नृपाणा मेतु । इ°. ११ ए सी °दिवा. १२ डी एफ् °ना च°.

३३. केल्यै क्रीडायायलं समर्थास्तथा श्रियै शोभायै प्रस्तावाच्छरद एव शक्ता हंसास्तस्याः शरदो यद्यस्मादन्वयुरनुगमनं चक्रुस्तत्किं शरदा कर्ष्या सहस्राय रूपकादिदशशतेनायुतेन वा रूपकादिदशसहस्र्या वा कृत्वा परिक्रीता नियतकालं स्वीकृताः। ये हि येन परिक्रीताः स्युस्ते सेवकास्तस्य स्वामिनः केल्यायलं नर्मणे[1] शक्ताः श्रियै शोभायै शक्ताश्च सन्तोनुगच्छन्ति ॥

स्वधा पितृभ्य इन्द्राय वषट् स्वाहा हविर्भुजे ।
नमो देवेभ्य इत्यृत्विग्वाचः सस्यश्रियाफलन् ॥ ३४ ॥

३४. ऋत्विग्वाचो मेघवृष्टिसस्यनिष्पत्त्याद्यर्थं पूर्वकृतकारीरीष्ट्या-[2]दीनां प्रस्तावे यायजूकानां मन्त्राक्षरोच्चारणानि सस्यश्रिया प्रचुरधान्यनिष्पत्त्याफलन् सार्थका आसन् । का वाच इत्याह । पितृभ्यः स्वधा हविर्दानमस्तु । तथेन्द्राय वषट् हविर्दानमस्तु । तथा हविर्भुजेऽग्निदेवतायै स्वाहा हविर्दानमस्तु । तथा देवेभ्यो नमोस्त्विति ॥

प्रजाभ्यः स्वस्त्यभून्निद्रा समुद्रशयनाद्ययौ ।
आ सिन्धोः शाद्वलान्यासन्नश्मरात्पर्यपोषरात् ॥ ३५ ॥

३५. प्रजाभ्यः स्वस्ति सस्यादिसंपत्त्या लोकस्य क्षेममभूत् । तथा समुद्रशयनाद्विष्णोर्निद्रा ययौ । कार्तिकैकादश्यां हि विष्णुर्निद्रां जहातीति रूढिः । तथा आ सिन्धोः समुद्रं मर्यादीकृत्य नदीमभिव्याप्य वा शाद्वलानि[3] सहरितभूखण्डान्युपचाराद्धरितानि चासन् । कथम् । अश्मरात्परि अश्मवन्तं[4] देशं वर्जयित्वा तथोषरादपे रिरिणं (इरिणं)[5] देशं वर्जयित्वा ॥

---

१ बी शाड्वला॰. २ ए॰ ॰षणात् ।.

---

१ एफ् ॰मिन कल्यायलं निर्मणे. २ सी डी ॰रीष्टया॰. ३ बी शाड्वला॰. ४ सी ॰न्त त दे॰. डी ॰न्त त दे॰. ५ एफ् ॰परिणं.

महस्राय परिक्रीता अयुतेन परिक्रीताः । इत्यत्र "परिक्रयणे" [६७] इति वा चतुर्थी ॥

श्रियं शक्तः । अलं कल्यै । वषडिन्द्राय । नमो देवेभ्यः । प्रजाभ्यः स्वस्ति । स्वाहा हविर्भुजे । स्वधा पितृभ्यः । इत्यत्र "शक्तार्थ°" [६८] इत्यादिना चतुर्थी ॥

समुद्रशयनादर्यो । इत्यत्र "पञ्चमी°" [६९] इत्यादिना पञ्चमी ॥

आ सिन्धोः । इत्यत्र "आङावधौ" [७०] इति पञ्चमी ॥

अश्मरात्परि । ऊपरादप । इत्यत्र "परि°" [७१] इत्यादिना पञ्चमी ॥

प्रति द्विपमदामोदाद्गन्धं सप्तच्छदान्यधुः ।
शेफालीभ्यो ददुर्लास्यं प्रति गन्धाच्च मारुताः ॥ ३६ ॥

३६. सप्तच्छदानि सप्तपर्णतरुपुष्पाणि द्विपमदामोदात्प्रति हस्तिमदामोदस्य तुल्यं गन्धमधुरधारयन् । एतेन शरदि द्विपा माद्यन्ति सप्तच्छदाश्च द्विपमदामोदतुल्यं पुष्पन्तीत्युक्तम् । तथा मारुताश्च गन्धात्प्रति गन्धस्य प्रतिदानभूतं लास्यं नृत्तं शेफालीभ्यः शेफालीलतापुष्पेभ्यो ददुः । शेफालीनां गन्धं गृहीत्वा लास्यं ददुरित्यर्थः । अन्येपि नाट्योपाध्याया गन्धद्रव्यादि गृहीत्वा नर्तकीनां लास्यं ददति[६] ॥

द्विपमदामोदात्प्रति । गन्धात्प्रति । इत्यत्र "यतः प्रति°" [७२] इत्यादिना पञ्चमी । प्रतिशब्दाद्द्वितीया न ॥

उपाध्यायादधीत्येव केकी श्रुत्वा नटस्य वा ।
प्रासादाप्राभनर्तनं पौर्यैः प्रैक्षन्त चासनात् ॥ ३७ ॥

---

१ पफ़ °न्त वास°.

---

१ प स्माय. २ प आशाव°. ३ प बी पुष्पन्ती°. ४ बफ़-नृत्य शे°. ५ सी डी ना पञ्च°. ६ बी °ति । मो°.

३७. प्रासादाग्राद्देवगृहशिखरमारुह्य केकी मयूरो ननर्त । किं कृत्वा । उपाध्यायादधीत्येव नियमपूर्वं नृत्तविद्यां गृहीत्वेव । वाथ वा नटस्य श्रुत्वेव । इवोत्रापि योज्यः । द्रव्यादिदानेन नृत्तविद्यामाकर्ण्येव । यथोपाध्यायान्नियमपूर्वकं नटाद्वा द्रव्यादिदानेनात्तनृत्तविद्यो नृत्तज्ञत्वान्निपुणं नृत्यति तथा जातिस्वभावेन केकी चतुरं ननर्तेत्यर्थः । अत एवैनं केकिनं पौर्या आसनादासन उपविश्य प्रैक्षन्त कौतुकात्प्रकर्षेणापश्यन् । शरद्यपि मयूरा मत्ताः सन्तो जातिस्वभावेन प्रासादोद्युवस्थानमारुह्य नृत्यन्ति । यदुक्तम् ।

प्रोन्मादयन्ती विमदान्मयूरान्प्रगल्भयन्ती कुररान्द्विरेफान् ।
शरत्समभ्येति विकास्य पद्मानुन्मीलयन्ती कुमुदोत्पलानि ॥

उपाध्यायादधीत्य । इत्यत्र "आख्यातरि°" [७३] इत्यादिना पञ्चमी ॥ आख्यातरीति किम् । नटस्य श्रुत्वा ॥

प्रासादाग्रान्ननर्त । आसनात्प्रैक्षन्त । इत्यत्र "गम्ययपः°" [७४] इत्यादिना पञ्चमी ॥

**वर्षात्ययात्प्रभृत्यब्जोद्गमादारभ्य चावभौ ।**
**अन्यो वीणाक्वणाद्भिन्नो वेणुनादादलिस्वनः ॥ ३८ ॥**

३८. वर्षात्ययाद्वर्षाकालातिक्रमात्प्रभृत्यब्जोद्गमात्कमलवनोद्भेदादारभ्य चालिस्वन आवभौ । यतो वीणाक्वणादन्योन्यादृशोतिमधुर इत्यर्थः । तथा वेणुनादाद्भिन्नः । शरदि हि पद्मखण्डविकाशे मधुपानोन्मत्तानां भृङ्गाणां ध्वनिरतिमधुरः स्यात् ॥

---

१ सी डी °त्तवि°. २ ए नृत्यति. ३ ए प्रैक्ष्य कौ°. ४ एफ् °दाग्राच्च°. ५ ए बी सी एफ् °कुरर°. ६ बी °कास्य प°. ७ सी डी °दार°. ८ सी डी °दि प°.

गम्येपि पश्चिमे देशे ग्रामात्प्राच्यां ययुर्जनाः।
महानवम्या अपरेद्यु क्रोशात्सीम लङ्घितुम् ॥ ३९ ॥

३९. महानवम्या आश्विनश्वेतनवम्यो अपरे[2]नन्तरेह्नि दिने विजयदशम्यां ग्रामादुपलक्षणत्वात्पुरादेरपि सकाशात्प्राच्यां पूर्वदिशि जना ययुः। क सति। ग्रामात्सकाशात्पश्चिमे देशे पश्चिमदिग्विभागे गम्येपि नदीपर्वताद्यभावेन गन्तुं शक्येपि पश्चिमदेशं मुक्त्वेत्यर्थः। किं कर्तुं ययुः। क्रोशाद्गव्यूतात्परेण सीम। क्लीबेपि सीमष्शब्दं हलायुधभारवी मन्येते। ग्रामादिसीमभूमिं लङ्घितुं शकुनमार्गेणाभिप्रायेण ॥

विजयदशम्यां हि अस्तमयदिक्त्वेन लोके सामान्येनाप्रशस्ततया प्रसिद्धत्वात्पश्चिमदिशं वर्जयित्वोदयदिक्त्वेन लोके सर्वदिक्षु मध्ये सामान्येन मङ्गल्यदिक्तया प्रसिद्धत्वात्प्रायः पूर्वस्यां क्रोशात्परतः सकलवर्षशुभाशुभसूचकशकुनान्वेषणाय लोका यान्ति। तस्य च गमनस्य लोके सीमलङ्घनमिति संज्ञा रूढा। यद्वा ग्रामादित्युक्त्या जना ग्राम्या व्यज्यन्ते। ते विजयदशम्यां क्रोशात्परेण सीम लङ्घितुं ग्रामात्पश्चिमे देशे गम्येपि विजयदशम्यां हि प्रातरेव लोकाः सीम लङ्घितुं यान्ति। प्रातश्च पश्चिमदिशि सूर्यस्य पृष्ठवर्तित्वाद्यात्रा कर्तुमुचिता। यदुक्तम् ॥

यामयुग्मेषु रात्र्यन्वयामात्पूर्वादिगो रविः।
यात्रास्मिन्दक्षिणे वामे प्रवेशः पृष्ठगे द्वयमिति ॥

गन्तुमर्हेपि ग्राम्यत्वाद्ग्रामात्प्राच्यां ययुः। ग्राम्या हि मूर्खत्वात्तथाविधगम्यागम्यदिक्परिज्ञानाकौशलात्सामान्येन लोकव्यवहारे पश्चिमा न तथा प्रशस्या यथा पूर्वेति पश्चिमां गमनार्हामपि वर्जयित्वा पूर्वामेव यान्ति ॥

१ प °म्या प°. २ सी डी °रे नन्त°. ३ प सी डी °रती म°. ४ प शब्दमा°. ५ सी डी °त्परः स°. ६ पफू व्यज्यन्ते।. ७ सी °दिशो र°. ८ सी डी °गम्यदि°. ९ डी °त्वः सामा°.

आरात्तीराद्बहिर्नीराच्छीतेभ्य इतरै रवेः ।

अप्युस्रैस्तप्यमानोस्थादृणाद्बद्धो नु कच्छपः ॥ ४० ॥

४०. कच्छपः कमठो जातावेकवचनम् । शीतेभ्य इतरैरुष्णै रवेरुस्रैः किरणैस्तप्यमानोपि दह्यमानोप्यारात्तीरान्नद्यादितटसमीपे नीराद्बहिश्चास्थात्तस्थौ । उत्प्रेक्ष्यते । ऋणाद्बद्धो नु देयेन हेतुना निगडित इव । ऋणिको हि ऋणादुत्तमर्णेन बद्धो रवेरुष्णैः करैस्तप्यमानो नद्यादितटे तिष्ठति बद्धत्वान्न तु जलमध्ये प्रविशति । शरदि हि कच्छपा जातिस्वभावेन नद्यादितटेषु बाहुल्येन विचरन्ति । उक्तं च ।

अपङ्किलतटावटः शफरफाण्टफालोज्ज्वलः
पतत्कुररकातरभ्रमददभ्रमीनार्भकः ।
लुठत्कमठसैकतश्चलबकोटवाचाटितः
सरित्सलिलसंचयः शरदि मेदुरः सीदति ॥

प्रभृत्यर्थं । वर्षात्ययात्प्रभृति । अब्जोद्गमादारभ्य ॥ अन्यार्थं । अन्यः ऋणात् । भिन्नो मादात् । ग्रामात्प्राच्याम । बहिर्नीरात् । आरात्तीरात् । शीतेभ्य इतरैः । इत्यत्र "प्रभृत्यन्य०" [७५] इत्यादिना पञ्चमी ॥ दिशि दृष्टाः शब्दा दिक्शब्दा इति देशकालवृत्तिनापि स्यात् । ग्रामात्पश्चिमे देशे । नवम्या अपरेद्युः ॥ तथा गम्यमानेनापि दिक्शब्देन स्यात् । कोशात्सीम । परेणेति गम्यते ॥

ऋणाद्बद्धः । इत्यत्र "ऋणाद्धेतोः" [७६] इति पञ्चमी ॥

सौरभादनुरागेण मुदा बद्धोलिरभ्रमत् ।

कुमुदस्यान्तिकेब्जाच्च दूरे नीपस्य केतकात् ॥ ४१ ॥

---

१ सी डी °टनिष्ठस° २ एफ् °हिश्च स्था°. ३ एफ् करैः स्त°. ४ एफ् °त्यर्थः । व°. ५ सी डी °द । नी°. ६ ए °रान्नीरा°. ७ सी °ति गम्य°.

४१. अलिः सौरभादनुरागेण मुदा बद्धः सौरभहेतुको योनुराग-स्तद्धेतुका या मुद्धर्षस्तया हेतुना बद्धो व्याप्तः सन् कुमुदस्याब्जाच्च पद्मस्य चान्तिकेभ्रमत् । तथा नीपस्य कदम्बस्य केतकात्केतकीपुष्पाच्च दूरेभ्रमत् । नीपपुष्पस्य किंचित्तीक्ष्णपत्रत्वेन केतकस्य च कण्टकित्वेन नैकट्येन भ्रमणेङ्गविदारणभयात् । शरदि हि कैरवाण्यब्जानि च नवान्युद्भिद्यन्ते कदम्बानि केतकानि च वर्षोद्भवान्यपि शरद्यनुवर्तन्ते वर्ण्यन्ते च कविभिः । अथ वा शरद्यतीतप्रायरामणीयकत्वेन नीपकेतकयोरनुपभोग्यत्वाद्दूरेलिरभ्रमत् ॥

सौरभादनुरागेण । इत्यत्र "गुणाद्" [७७] इत्यादिना वा पञ्चमी ॥ अस्त्रियामिति किम् ॥ मुदा बद्धः ॥

केतकाद्दूरे नीपस्य दूरे । अब्जादन्तिके कुमुदस्यान्तिके । इत्यत्र "आराद्र्थैः" [७८] इति वा पञ्चमी ॥

स्तोकाज्जातीः स्पृशन् स्तोकेनाब्जान्यल्पाच्च शीकरान् ।
अल्पेन वानपि मरुत्कृच्छ्रात्सेहे वियोगिभिः ॥ ४२ ॥

४२. सुगमः । नवरं स्तोकाज्जातीर्जातिपुष्पाणि स्तोकेनाब्जानि च स्पृशन् । शरदि हि जातिपुष्पाणि स्युः ॥

कृच्छ्रेणार्कस्य वीक्ष्यत्वाद्ग्रीष्मः कतिपयाच्छरत् ।
प्रावृट्कतिपयेनाल्पैर्मेघैः स्तोकैश्च गर्जितैः ॥ ४३ ॥

४३. कृच्छ्रेणार्कस्य वीक्ष्यत्वाद्द्रष्टुं शक्यत्वाच्छरत्कालः कतिपयात्स्तोकेन ग्रीष्मोभूत्तथाल्पैर्मेघैः स्तोकैर्गर्जितैश्च कृत्वा कतिपयेन प्रावृडभूत् ॥

१ प बी °पुष्पाद्य. २ बी °पुष्पस्य. ३ सी डी अथो वा. ४ प सी डी °ना प°. ५ एफ् °रे । अ°. ६ सी डी °राद्र्थैः. ७ बी °नि पुष्पानि च. ८ प बी °पुष्पाणि. ९ सी डी °त्वाच्छ°. १० प प्राड°.

क्लान्ताः कृच्छ्रेण तापेन ज्योत्स्नायाः प्रागजानत ।
वीचिह्रादैस्ततोजानंश्चकोराः सरसां पयः ॥ ४४ ॥

४४. कृच्छ्रेण कष्टकारिणा तापेन सूर्यातपेन क्लान्ताः संतप्ताः सन्तश्चकोराः प्राक् सरसां पयो जलं स्वच्छत्वेन ज्योत्स्नाया अजानत ज्योत्स्नाबुद्ध्या प्रवृत्ता[2] इत्यर्थः । प्रवृत्तिरत्र जानातेरर्थः । यद्वा ज्योत्स्नाप्रियत्वाज्ज्योत्स्नायामत्यन्तरक्ताश्चित्तभ्रान्त्या सरःपयो ज्योत्स्नारूपेण प्रत्यपद्यन्तेत्यर्थः । मिथ्याज्ञानवचनोत्र जानातिर्मिथ्याज्ञानं चाज्ञानमेव । ततः पश्चाद्वीचिह्रादैः कल्लोलध्वानैः कृत्वा सरसां पयः सरसां पय एवाजानन् । सरसां पय इत्यनूद्यत्वेन विधेयत्वेन च योज्यम् ॥

स्तोकात् स्पृशन् स्तोकेन स्पृशन्[4] । अल्पात्स्पृशन् अल्पेन वान्[4] । कृच्छ्रात्सेहे कृच्छ्रेण वीक्ष्यत्वात् । कतिपयाद्ग्रीष्मः कतिपयेन प्रावृट् । इत्यत्र "स्तोकाल्प°" [७९] इत्यादिना वा पञ्चमी ॥ असत्त्व इति किम् । स्तोकैर्गर्जितैः । अल्पैर्मेघैः । कृच्छ्रेण तापेन ॥

ज्योत्स्नाया अजानत । इत्यत्र "अज्ञाने ज्ञः षष्ठी" [८०] इति षष्ठी ॥ अज्ञान इति किम् । ह्रादैः पयोजानन् ॥

सरसां पय. । इत्यत्र "शेषे" [८१] इति षष्ठी ॥

शैलस्योपर्यधोवस्तात्परस्तादुत्पतिष्णुभिः ।
उपरिष्टाच्छरल्लक्ष्म्या[1] नीलच्छत्रायितं शुकैः ॥ ४५ ॥

४५. शुकैः शरल्लक्ष्म्या उपरिष्टादूर्ध्वदेशे नीलच्छत्रायितं नीलात-

१ सी डी °लक्ष्मीनी°.

१ प °वृत्त्याः° २ सी °तेर्थ. ।. ३ सी °त्स्नाया°. ४ प पफ् °न्-मल्पे°. ५ प °न् । मक्°.

पत्रवदाचरितम् । यत्र शैलस्य गिरेरुपरि ऊर्ध्वदेशेऽधे ऊर्ध्वदेशापेक्षयाधस्तादवस्तात्पश्चिमदिग्विभागे परस्ताच्च पूर्वदिग्भागे चोपलक्षणत्वाद्दक्षिणोत्तरभागयोरप्युत्पतिष्णुभिरुच्छलद्भिः । यथा दण्डोपरि स्थित नीलवस्त्रेणोपर्यधश्चतुर्दिक्षु चावृतं नीलच्छत्रं राजादेरुपरि धृतं शोभातिशयाय स्यात्तथाद्रेः समन्तादुत्पतिष्णु शुकमण्डलं शरद इत्यर्थः । शरदि हि शुका बाहुल्येन स्युर्जातिप्रत्ययेन शैलाद्युच्चस्थानेषु निवसन्ति च ॥

ध्रुवस्याभाद्दक्षिणतो वातापेः प्सातुरुत्तरात् ।
पितॄणां दुर्गतेस्त्यागेऽध्वा द्योर्यानस्य साधकः ॥ ४६ ॥

४६. पितॄणामध्वा पितृदण्डः स्वर्गदण्डाख्यो वत्सेति नाम्ना ज्योतिषे प्रसिद्धोऽभात् । कीदृक् । पितॄणामेव दुर्गतेस्तिर्यक्त्वादिकुगतेः श्रुतौ तु दन्दशूकत्वाख्यया प्रसिद्धायास्त्यागे सति द्योः स्वर्गस्य कर्मणो यद्यानं गमनं तस्य कर्मणः साधको निष्पादकः । अनेन हि मार्गेण कृत्वा पितरो दुर्गतिं परिहृत्य स्वर्गं यान्तीति प्रवादः । काभादित्याह । ध्रुवस्य दक्षिणतो दक्षिणस्यां दिशि तथा वातापेर्दैत्यस्य कर्मणः प्सातुर्भक्षकस्यागस्तेः । द्विजानुपद्रवन्वातापिर्दैत्यो ह्यगस्त्येन भक्षित इति प्रसिद्धिः । उत्तरादुत्तरस्यां दिशि । शरदि हि वत्सस्य व्योममध्यस्थस्य मुखं पूर्वस्यां पुच्छश्च पश्चिमायां स्यात् । यदुक्तम् । कन्यासंक्रान्त्यादित्रितयं पूर्वादौ वत्स इति । तत्रस्थश्च ध्रुवापेक्षया दक्षिणस्यामगस्त्यापेक्षया चोत्तरस्यां स्यात् ॥

निद्रां योत्यक्तपूर्व्यब्दैर्गर्जकैः साध्वपां पिवैः ।
स तामत्यजदम्भोधौ कैटभस्य मधुं द्विषन् ॥ ४७ ॥

४७. सोम्भोधौ तिष्ठन् कैटभस्य मधुं द्विषन् कैटभमधुदैत्ययोः शत्रुर्वि-

---

१ ए सी डी °भस्ता°. २ एफ् °दिग्विभागे. ३ सी डी °स्यां स्यात् ।.

ष्णुस्तां निद्रामत्यजत् । योम्भोधावपां पिबैर्जलानि पिबद्भिर्जलभृतैरि-त्यर्थः । अत एव साध्वत्यन्तं गर्जकैरब्दैर्मेघैर्हेतुभिर्निद्राम् । त्यक्ता पूर्वमनेन त्यक्तपूर्वी न तथात्यक्तपूर्वी । घनप्रबलगर्जितैरपि यो वर्षासु न जजागारेत्यर्थः ॥

शैलस्योपरि । लक्ष्म्या उपरिष्टात् । शैलस्य परस्तात् । शैलस्यावस्तात् । शैलस्याधः । ध्रुवस्य दक्षिणतः । प्सातुरुत्तरात् । इत्यत्र "रिरिष्टात्°" [८२] इत्यादिना षष्ठी ॥

वातापेः प्सातुः । यानस्य साधकः । अपां पिबैः । घोर्यानस्य । दुर्गतेस्त्यागे । इत्यत्र "कर्मणि कृत." [८३] इति षष्ठी ॥ क्रियाविशेषणस्य कर्मत्वाभावान्न षष्ठी । साधु गर्जकैः ॥ कृत इति किम् । तामत्यजत् निद्रामत्यक्तपूर्वी ॥

कैटभस्य द्विषन् मधुं द्विषन् । इत्यत्र "द्विषो वा तृशः" [८४] इति वा षष्ठी ॥

पवने खं तुषाराणां तरलत्वस्य वीरुधाम् ।
दिशां नेतरि किञ्जल्काञ् श्रान्तानां शायिकाभवत्[1] ॥ ४८ ॥

४८. श्रान्तानां शायिकाभवन् खेदापगमात्स्वापोभूत् । क्व सति । पवने । कीदृशे । खं तुषाराणां नेतरि शीकरानाकाशं प्रापयितरि । तथा तरलत्वस्य वीरुधां नेतरि मृदुत्वाल्लताश्चलत्वं प्रापयति । तथा दिशां नेतरि किञ्जल्कान् । शरदि ह्यनियतदिक्को गुणत्रयोपेतो वातो वर्ण्यते ॥

---

१ सी डी ॥ खेदा°.

---

१ पफ् °स्याधः । २ बी °त्वात्र. ३ प° पूर्वम् ॥. ४ प °णा तेनरि. ५ पफ् °तम्°. ६ पफ् °था देशान्तर ने°.

म तुषाराणां नेतरि । तरलत्वस्य वीरुधां नेतरि । यद्वा दिशां नेतरि किञ्ज-स्कान् । तरलत्वस्य वीरुधां नेतरि । इत्यत्र "वैकत्र द्वयो." [८५] इति द्वयोः कर्मणोरेकतरस्मिन्वा षष्ठी । अन्यत्र पूर्वेण नित्यमेव ॥

भ्रान्तानां शायिका । इत्यत्र "कर्तरि" [८६] इति षष्ठी ॥

कृतिः स्वराणां क्रौञ्चीभिर्विपञ्चीनामिवाबभौ ।
ऋतुमत्येव काशाल्याः कुसुमस्य प्रकाशनम् ॥ ४९ ॥

४९. यथा विपञ्चीनां वीणानां कर्त्रीणां स्वराणां कर्मणां कृतिरा-बभौ । एवं क्रौञ्चीभिः कर्त्रीभिः । शरदि हि क्रौञ्च्यो मधुरं कूजन्ति । तथा यथा ऋतुमत्या स्त्रिया कर्त्र्या कुसुमस्य स्त्रीधर्मस्य कर्मणः प्रका-शनं भवत्येवं काशाल्याः काशतरुपङ्क्तेः कर्त्र्याः कुसुमस्य । जातावेक-वचनम् । पुष्पाणां कर्मणां प्रकाशनमाविर्भावो बभूव ॥

शृङ्गस्य त्याग एणानां मित्रस्येव दुरात्मभिः ।
विभित्सा भेदिका चोक्ष्णां पयसामिव रोधसः ॥ ५० ॥

५०. यथा दुरात्मभिर्दुर्जनैः कर्तृभिर्मित्रस्य कर्मणस्त्यागः स्यात्तथै-णानां कर्तॄणां शृङ्गस्य कर्मणस्त्यागोभूत् । शरदि हि रुरुशम्बरादि-मृगाणां शृङ्गाणि पतन्ति । तथोक्ष्णां कर्तॄणां रोधसस्तटस्य कर्मणो विभित्सा भेत्तुमिच्छा भेदिका च विदारणं चाभूत् । पयसामिव यथा जलैर्वर्षासु रोधसो विभित्सा भेदिका चाभूत् । शरदि हि वृषभा मत्ता नद्यादितटानि विलिखन्ति ॥

स्वराणां कृतिर्विपञ्चीनामिवक्रौञ्चीभिः । कुसुमस्य प्रकाशनं काशाल्या ऋतुमत्येव ।

---

१ एफ् °रि प°. २ सी कृतेरा°. ३ सी डी °स्य जाता°. ४ ए °काचिवि°. ५ ए °नि गलि°. ६ सी °मस्य.

शुक्लस्य त्याग एणानां भिन्नस्येव दुरात्मभिः । इत्यत्र "द्विहेतो°" [८७] इत्यादिना कर्तरि षष्ठी वा ॥ अकृयणकस्येति किम् । बिभित्सा भेदिका चोक्ष्णां पयसामिव रोधस. ॥

स्तुत्यमान्यानुयानीयगातव्यादेयसद्गुणः ।
नृणां देवैश्च स तदा राजा यात्रां प्रचक्रमे ॥ ५१ ॥

५१. स राजा मूलराजस्तदा शरत्काले यात्रां प्रयाणकं प्रचक्रमे प्रारेभे । कीदृक् । नृणां कर्तॄणां देवैश्च कर्तृभिस्तुत्याः श्लाघ्या मान्याः पूज्या अनुयानीया अनुसरणीया गातव्या गेया आदेया ग्राह्याः सन्तः शोभना गुणाः शौर्यादयो यस्य सः ॥

नृणां देवैश्च स्तुत्यमान्यानुयानीयगातव्यादेय । इत्यत्र "कृत्यस्य वा" [८८] इति कर्तरि वा षष्ठी ॥ अत्र च नित्यसापेक्षत्वात्समासः ॥

अथ यात्रोपक्रमं षट्त्रिंशता श्लोकैर्वर्णयति ।

नेतव्योन्तं रिपुः पात्रा गामनेनेच्छुना यशः ।
पूरंपूरं नभो नादैर्दुन्दुभिः प्रोचिवानिदम् ॥ ५२ ॥

५२. नादैः कृत्वा नभः पूरंपूरं व्याप्यव्याप्य दुन्दुभिर्विजयया-श्राढकेदं प्रोचिवान् । तदेवाह । अनेन मूलराजेन यश इच्छुनात एव गां भुवं पात्रा दुर्नयनिराकरणेन रक्षता सता रिपुर्ग्राहारिरन्तं क्षयं नेतव्यः ॥

---

१ ए °यगीत°.

---

१ एफ् °न्नस्यैव २ सी डी °जराजस्त°. ३ एफ् °या गीत°. ४ बी °नीयागा°. ५ ए °र्तवेरि. ६ सी डी °प्य दु°. ७ ए °भिविज°. ८ ए °ना ए°. ९ बी °नयिनि° १० एफ् °पुग्राहा°

पवमानो जगत्तन्वन्स्वरं बिभ्राणमुच्चताम्।
चक्राणो मङ्गलं शङ्खश्छन्दोधीयन्निव द्विजः॥ ५३॥

५३. शङ्खो विजयकम्बुर्मङ्गलं राजादीनां चक्राणश्चक्रे। कीदृक्सन्। उच्चतामुदात्ततां बिभ्राणं स्वरं तन्वन्। तथा जगल्लोकं पवमानो मङ्गल्योदात्तस्वरत्वात्पवित्रयन्। तथा छन्दो वेदमधीयन्नकृच्छ्रेण पठन्नत एवोच्चतां बिभ्राणं स्वरं तन्वन्नत एव च जगत्पवमानः सन् द्विजो मङ्गलं चक्रे। यात्राकाले हि माङ्गल्यार्थं शङ्खो वाद्यते द्विजाश्च वेदमुच्चारयन्ति॥

ढक्काभिश्चक्रिभिर्ध्वानं दुःसहं दिग्गजैरपि।
सोस्त्रभृत्कारको यात्रां बुध्यानो वज्रिणाप्यभूत्॥ ५४॥

५४. दिग्गजैरपि दुःसहं सोढुमशक्यं ध्वानं चक्रिभिः करणशीलाभिर्ढक्काभिर्विजयभेरीभिः कृत्वा स मूलराजो वज्रिणापि बुध्यानः सुखेन ज्ञेयोभून्। कीदृक्सन्। यात्रां कारकोस्त्रभृद्यात्रां करिष्यामीति खड्गादिशस्त्रभृत्। "क्रियायाम्" [५.३.१३] इत्यादिना णकच्। यात्रां चिकीर्षोर्मूलराजस्य युद्धोचितास्त्रग्रहणं ढक्काभिर्वाद्यमानाभिरिन्द्रेणापि ज्ञातमित्यर्थः। राजा हि यात्रां चिकीर्षुर्यदा युद्धोचितास्त्रग्रहणमुहूर्तं साधयति तदा विशेषतो विजयढक्का वाद्यन्ते॥

नेतव्योन्तं रिपुरनेन। इत्यत्र "नोभयोर्हेतोः [८९] इति कर्मकर्त्रोर्न षष्ठी॥ तृन्। पात्रा गाम्। उदेन्त। यस्य इच्छुना॥ अव्यय। नमः पूरपूरम्॥ क्वसु। इदं प्रोषिवान्॥ आनेस्तुरसृष्टानुबन्धनिर्देशात्कानशानानेशां ग्रहणम्। कान। मङ्गलं चक्राणः॥ शान। जगत्पवमानः॥ आनश्। उच्चतां बिभ्राणम्॥ अतृश्। छन्दोधीयन्॥ शतृ। स्वरं तन्वन्॥ कि। ध्वानं चक्रिभिः॥ णकच्।

---

१ एफ् °नो माङ्°. २ सी °दन्तः य°. ३ सी °व्यय न°. ४ ए °नसा म°. ५ एफ् शान°। ज°.

यात्रां कारकोऽभूत् ॥ खलर्थे । दिग्गजैर्दुःसहम् । युञ्जानो वज्रिणा । इत्यत्र "तृ-मुदन्त°" [९०] इत्यादिना न षष्ठी ॥

मृदङ्गै रुद्धवद्भिर्द्यां ध्वनिनानुकृतो घनः ।
शिखिभिः शीलिताः केका गतैर्हर्षं सतां मताः ॥ ५५ ॥

५५. ध्वनिना कृत्वा द्यां व्योम रुद्धवद्भिर्व्याप्तवद्भिर्मृदङ्गैः कर्तृभिर्ध्वनिनैव घनो मेघोऽनुकृतो मेघगर्जिविडम्बितेत्यर्थः । अतश्च घनगर्जाशङ्कया हर्षं गतैः शिखिभिर्मयूरैः केकाः शीलिता अभ्यस्ताः कृता इत्यर्थः । कीदृश्यः । सतां विदुषां केकालक्षणज्ञानां कर्तृणां मता माधुर्यादिगुणप्रधानत्वेन मूलराजारब्धयात्रासाफल्यज्ञापकत्वादभीष्टाः ॥

आरक्षे रक्षितं भूपस्यासितं प्रति योषितः ।
कीर्तेः श्रिया नु हसितं मौक्तिकस्वस्तिकान्व्यधुः ॥ ५६ ॥

५६. आरक्षैरङ्गरक्षै रक्षितं भूपस्य मूलराजस्य कर्तुरास्यतेऽस्मिन् "अद्यर्थाच्चाधारे" [ ५. १. १२ ] इति क्ते आसितं सिंहासनं प्रति लक्ष्यीकृत्य योषितोऽविधवनार्यो मौक्तिकस्वस्तिकान्माङ्गलिक्याय व्यधुः । कीदृशान । कीर्तेः श्रिया हसितं नु । निर्मलत्वात्कीर्तिकर्तृकाणि लक्ष्मीकर्तृकाणि च हास्यानीव ॥

मृदङ्गैरनुकृतः । द्यां रुद्धवद्भिः । हर्षं गतैः । इत्यत्र "क्तयोः°" [९१] इत्यादिना न षष्ठी ॥ असदाधार इति किम् । सतां मताः । "ज्ञानेच्छा°" [५.२.९२] आदिसूत्रेण सत्यत्र क्तः ॥ कथं शिखिभिः शीलिताः । आरक्षै रक्षितम् । भूतेयं क्तः । वर्तमाने प्रतीतिस्तु प्रकरणादिना ॥

---

१ सी °ता के°.

---

१ ए °भिध्वनि° २ सी °नु मे°. ३ ए सी °का शी°. ४ डी °राजस्य या°. ५ एफ् °न नृप° ६ एफ् °रिमन्निनि अ°. ७ ए एफ् लक्षीकृ° ८ सी डी °गि वा हा°. ९ बी एफ् °मानप्र°.

आधारे। भूपस्यासितम्। कीर्तेर्हसितम्। श्रिया हसितम्। इत्यत्र "वा क्लीबे" [९२] इति वा षष्ठी॥

कामुकस्य श्रियां भूपा राज्ञ आज्ञां प्रपादुकाः।
सुराष्ट्रां गमिनस्तस्थुस्तत्र कोटिं नु दायिनः॥ ५७॥

५७. राज्ञो मूलराजस्याज्ञां प्रपादुका आश्रयन्तो भूपास्तत्रासनसमीपे तस्थुः[१]। कीदृशः सतः[२]। श्रियां शत्रुलक्ष्मीणां[३] कर्मणां[४] कामुकस्येच्छोरत एव ग्राहारिपोरुच्छेदाय सुराष्ट्रां देशं गामिनो गन्तुकामस्य। उत्प्रेक्ष्यते[५]। कोटिं नु दायिनो दीनारादिकोटिं धारयन्त इव। अधमर्णा हि श्रियां कामुकस्याज्ञां प्रपादुकाः सन्तः समीपे तिष्ठन्ति॥

जगदागामिनोरिष्टस्यावश्यं छेदिनो द्विजाः।
एयुस्तत्राशितारो द्विर्मासे मासो द्विरम्बुपाः॥ ५८॥

५८. तत्रासनसमीपे शान्तिकर्मणे[६] द्विजा एयुः। किंभूताः। मासे द्विर्द्वौ वारावशितारो[७] भोक्तारस्तथा मासो मासस्य द्विरम्बुपा द्वौ वारौ जलपायिनस्तीव्रतपश्चारिण इत्यर्थः। अत एव जगल्लोकमागामिनो भाविनोपीत्यर्थः। अरिष्टस्याशुभस्यावश्यं छेदिनः॥

आज्ञां प्रपादुकाः[८]। इत्यत्र "अकमेरकस्य" [९३] इति न षष्ठी॥ अकमेरिति किम्। श्रियां कामुकस्य॥

सुराष्ट्रां गमिनः। जगदागामिनः। कोटिं दायिनः। इत्यत्र "एष्यदृणेनः" [९४] इति न षष्ठी॥ एष्यदृणेन इति[९] किम्। अरिष्टस्यावश्यं छेदिनः। अत्र "णिन् चावश्यकाधमर्ण्ये" [५.४.३६] इत्यावश्यकेर्थे णिन्॥

---

१ बी °ति प°. २ डी °दृशाः सन्त.।. ३ सी श्रियो श°. ४ एफ् °क्ष्मीनां क°. ५ ए °त्प्रेक्षिते।. बी त्प्रेक्ष्यन्ते।. सी डी °त्प्रेक्षते।. ६ सी °र्मणा द्वि°. ७ एफ् °रावशि°. ८ ए °कार इ°. ९ ए °ति किम्।

एयुवत्रे । इत्यत्र "सप्तमी°" [१५] इत्यादिना सप्तमी ॥

मासे द्विराशितारः । इत्यत्र "न वा°" [१६] इत्यादिना वा सप्तमी ॥ पक्षे शेषषष्ठी । मासो द्विरम्बुपाः ॥

सौवस्तिकैः सन्मुहूर्ते आयुक्तैस्तपसः श्रुते ।
मन्त्रे शान्तेश्च कुशलैश्चक्रे हस्त्यश्वपूजनम् ॥ ५९ ॥

५९. सौवस्तिकैः पुरोहितैः सन्मुहूर्ते शुभवेलायां हस्त्यश्वपूजनं शान्तये मन्त्रोच्चारपूर्वं पुष्पादिना चक्रे । किंभूतैः । तपसस्तपश्चरण आयुक्तैस्तत्परैः । एतेन नैष्ठिकत्वोक्तिः । तथा श्रुत आगम आयुक्तैः । एतेन ज्ञानित्वोक्तिः । अत एव मन्त्रे कुशलैर्निपुणैरत एवं च शान्तेः शान्तिकर्मणि कुशलैश्च ॥

मन्त्रे कुशलैः । श्रुत आयुक्तैः । इत्यत्र "कुशल°" [१७] इत्यादिना वा सप्तमी ॥ पक्षे शेषषष्ठी । शान्तेः कुशलैः । तपस आयुक्तैः ॥

स्वामिनोश्वेष्विभानां चानसां पत्तिषु चेश्वराः ।
लक्ष्म्यां क्षितेश्चाधिपतेः सद्योद्वारं सिषेविरे ॥ ६० ॥

६०. अश्वेष्विभानां च स्वामिनोनसां रथानां पत्तिषु चेश्वराश्चतुरङ्गबलनायका लक्ष्म्यां राज्यश्रियः क्षितेश्चाधिपतेर्मूलराजस्य द्वारं सिंहद्वारं सद्यः सिषेविरे ॥

---

१ ए लक्ष्या हित°.

---

१ एफ् °त्र । स°. २ एफ् शेषे षष्ठी. ३ सी डी शातये. ४ एफ् °परत°. ५ एफ् °नित्वोक्तिः ।. ६ बी °न शा°. ७ सी °ना स°. ८ एफ् शेषे षष्ठी. ९ बी राजश्रिया क्षि°.

प्रतिभूभिः श्रियः कीर्तौ धर्मे नीतेश्च साक्षिभिः।
शुक्रे गुरोः प्रसूतैर्नु दायादैर्न्वायि मन्त्रिभिः॥ ६१॥

६१. मन्त्रिभिरायि नृपान्तिक आगतम्। किंभूतैः। धर्मे धर्मस्य नीतेश्च न्यायस्य च साक्षिभिर्लग्नकैः। स्थानभूतैरित्यर्थः। तथा श्रियः कीर्तौ च प्रतिभूभिर्लग्नकैः स्थानैरित्यर्थः। तथा महामतित्वाच्छुक्रस्य गुरोर्बृहस्पतेर्वा प्रसूतैर्न्वपत्यैरिव। यद्वा दायादैर्नु गोत्रिभिरिव॥

भवेष्विमानां स्वामिन। पनिष्वनसामीश्वराः। लक्ष्म्या क्षितेरधिपतेः। शुक्रे गुरोर्दायादैः। धर्मे नीतेः साक्षिभिः। कीर्तौ श्रियः प्रतिभूभिः। शुक्रे गुरोः प्रसूतैः। इत्यत्र "स्वामी" [९८] इत्यादिना वा सप्तमी। पक्षे शेषषष्ठी॥

ज्योतिषेधीतिनो जन्म च्छायायां शङ्कुमादधुः।
द्विष्यसाधु नृपे साधु लग्नं साधयितुं क्षणात्॥ ६२॥

६२. जन्म जन्मकालं प्राप्य जन्मन आरभ्येत्यर्थः। "कालाध्वनो-र्व्याप्तौ" [२.२.४२] इति द्वितीया। ज्योतिषेधीतमेभिरधीतिनः। "इष्टादेः" [७.१.१६७] इतीन्। आजन्माधीतज्योतिषाः। अत्यन्तं ज्योतिःशास्त्रज्ञा इत्यर्थः। आदधुः समभूभागेस्थापयन्। क। छायायाम्। छायानिमित्तं शङ्कुं ज्योतिःशास्त्रोक्तसरलत्वादिगुणोपेतं सप्ताङ्गुलादिप्रमाणं कालमान-कारणं काष्ठकीलकम्। किं कर्तुम्। लग्नं मेषादि क्षणाच्छीघ्रं साधयि-तुम्। कीदृक्। द्विषि शत्राव साधु क्षयकारि नृपे मूलराजे साध्वभ्युद-

१ डी °तिष्यधी°. २ ए °साधु नृ°

१ सी डी ॥ मन्त्रिभिर्लग्नैः स्थानैरि° २ ए कीर्त्या श्रि° ३ सी °ना स°. ४ एफ् शेषे षष्ठी. ५ सी °न्मका°. ६ एफ् °न्म आ°. ७ डी °तिष्यधी°. ८ सी डी °त्यन्तज्यो° ९ एफ् °न् : क छा°. १० बी एफ् °रक का°.

यकारि । शङ्कुर्हि च्छायामानानयनायातपवति समभूभागे स्थाप्यते । तेन च कालो मीयते । कालमानेन च लग्नं साध्यते । छायायां शङ्कुमादधुरित्यनेन यात्रालग्नदिनस्य रजोवगुण्डनाद्युत्पातरहितत्वेन श्रेष्ठत्वं सूचितम् ॥

स्वं प्रत्यसाधून्साधूंश्चागणयन्वेत्रिणां पतिः ।
साधून्स्वामिनि तत्कार्ये निपुणांश्चाग्रतो व्यधात् ॥ ६३ ॥

६३. वेत्रिणां पतिः प्रतीहारेशः स्वामिनि मूलराजे साधून्भक्तांस्तत्कार्ये स्वाम्यर्थे निपुणान्विधानचतुरानग्रतो मूलराजस्य पुरतो व्यधाच्चक्रे । कीदृक्सन् । अतिस्वामिभक्तत्वात्स्वमात्मानं प्रत्यसाधूनभक्तान् साधूंश्च भक्तानगणयन्नपरिभावयन् ॥

हसन्तो निपुणान्मातुः पितुः साधूंश्च शस्त्रिणः ।
प्रतीशं निपुणास्तस्थुः श्रेण्या द्वारेऽङ्गरक्षकाः ॥ ६४ ॥

६४. अङ्गरक्षकाः श्रेण्या पङ्क्त्या द्वारे तस्थुः । किंभूताः सन्तः । ईशं स्वामिनं प्रति निपुणा रक्षाचतुरा अत एव मातुर्निपुणान्मात्रैव निपुणान्मन्यमानान्पितुः साधूंश्च पित्रैव साधून्मन्यमानान्भटान्हसन्तस्तथा शस्त्रिणः प्रहरणहस्ताः ॥

ज्योतिषेधीतिनः । इत्यत्र "व्याप्ये क्तेनः" [९९] इति सप्तमी ॥ व्याप्य इति किम् । जन्माधीतिनो ज्योतिषे । अत्र जन्मनो मा भूत् ॥

छायाया शङ्कुमादधुः । इत्यत्र "तद्युक्ते हेतौ" [१००] इति सप्तमी ॥

---

१ एफ् °धूंश्च ग°.

---

१ सी डी °ने च°. २ एफ् °मिनमू° ३ ए सी °धून् भ°. ४ एफ् °कानग°. ५ बी ॥ भे°. ६ ए °रात°. ७ डी °तिध्य धां°

द्रिष्यसाधु । इत्यत्र "अर्मेति" [१०१] इत्यादिना सप्तमी ॥ अप्रत्यादा-विति किम् । स्वं प्रत्यसाधून् ॥

नृपे साधु । इत्यत्र "साधुना" [१०२] इति सप्तमी ॥ अप्रत्यादाविल्येव । स्वं प्रति साधून् ॥

तत्कार्ये निपुणान् । स्वामिनि साधून् । इत्यत्र "निपुणेन" [१०३] इत्या-दिना सप्तमी ॥ अर्चायामिति किम् । मातुर्निपुणान् । पितुः साधून् ॥ अप्रत्या-दाविल्येव । प्रतीशं निपुणाः ॥

भृत्यानामधि चौलुक्येऽध्यद्रिषु क्ष्माभुजां बलम् ।
उपखार्यामिव द्रोणो मिलत्यागाद्वलेधिकम् ॥ ६५ ॥

६५. चौलुक्येऽधि भृत्यानां मूलराजस्येशस्य किंकराणामध्यद्रिषु क्ष्माभुजामीशयेषु पर्वतेषु स्वामिनां राज्ञां बलं सैन्यं बले मूलराजसैन्ये मिलति सत्यधिकमर्गलमागाद्यदेतन्मध्य एव । उपखार्यां द्रोण इव । यथा खार्याः षोडशद्रोण्या द्रोणश्चतुराढकी अधिक इत्यर्थः । एतावन्मू-लराजबलमामिलद्यावति बहूनामप्यद्रिनृपाणां बलं खार्यां द्रोणतुल्यमभू-दित्यर्थः ॥

वेणौ ध्वनति भेर्यास्त भेर्यां वेणुरपि क्षणात् ।
आसीनेषु द्विजेष्वापुः स्वं सुता एषु च द्विजाः ॥ ६६ ॥

६६. वेणुशब्देनात्र वेणूपलक्षितं प्रेक्षणकमभिव्यज्यते । भेरीशब्देन च भेर्युपलक्षितं तूर्यम् । ततो वेणौ वंशोपलक्षिते प्रेक्षणके ध्वनति लयप्र-धानं वाद्यमानैर्वेणुवीणादिभिः शब्दायमाने भेरी भेर्युपलक्षितं तूर्यं प्रे-

१ एफ् °प्रत्यादाविल्या°. २ सी डी °न् । तत्का°. ३ बी °लममाद°. ४ एफ् खार्या षो°. ५ एफ् °द्रोण्या द्रो°. ६ सी डी °ण इव तु°. ७ एफ् °व्यज्यते. ८ सी डी °माने वी°. ९ एफ् °मानैर्भेरी.

क्षणकस्य विघ्नाभावार्थमास्त निर्ध्वानं स्थिता । तथा भेर्यां तूर्ये ध्वनन्त्यां वेणुरपि प्रेक्षणकमपि क्षणादास्त निरर्थकत्वात् । यात्रार्थमुद्यते हि नृप उत्सवार्थं पर्यायेण प्रेक्षणकं तूर्यवादनं च स्यात् । तथा द्विजेष्वासीनेषु द्रव्यप्राप्तिगृहितेषु सूता भट्टाः स्वं द्रव्यमापुर्लेभिरे । एषु च सूतेष्वासीनेषु द्विजाः स्वमापुः । यात्रार्थमुद्यतो हि राजा वीराश्च गुणोत्कीर्तकेभ्यो भट्टेभ्यो यशसे वेदपाठिभ्यो द्विजेभ्यश्च धर्मार्थं द्रव्यं ददाति ॥

स्वे । अध्यद्रिषु क्ष्माभुजाम् ॥ ईशे । अधि चौलुक्ये भृत्यानाम् । इत्यत्र "स्वेशेधिना" [१०४] इति सप्तमी । अधिः स्वस्वामिसंबन्धं द्योतयति ॥

उपखार्यां द्रोणः । इत्यत्र "उपेनाधिकिनि" [१०५] इति सप्तमी । उपोधिकाधिकिसबन्ध द्योतयति ॥

बलेमिलत्यागाद् । इत्यत्र "यद्भावः" [१०६] इत्यादिना सप्तमी ॥ यत्र क्रियार्हाणां कारकत्वं तद्विपर्ययो वा । यथा भेर्यां ध्वनन्त्यां वेणुरास्त । द्विजेष्वासीनेषु स्व सूता आपुः । यत्र च क्रियानर्हाणामकारकत्वं तद्विपर्ययो वा । यथा सूतेष्वासीनेषु द्विजा स्वमापु । वेणौ ध्वनति भेर्यास्त । तत्रापि भावो भावस्य लक्षण भवतीत्यनेनैव सप्तमी । अत्र च वेण्वपेक्षयोदात्तध्वानत्वेन वाद्येषु मुख्यत्वेन च ध्वानक्रियार्हत्वाद्भेर्याः सूतापेक्षया तपश्चरणादिक्रियाप्रधानत्वेन दानक्रियार्हत्वाद्द्विजाना च क्रियार्हता । भेर्यपेक्षया वेणोर्द्विजापेक्षया सूतानां च ध्वानदानक्रियानर्हत्वेन क्रियानर्हता ॥

ग्रामो यो योजनान्यष्टौ योजनेषु दशस्वितः ।
पर्वेवाह्नि त्रयोदश्या यात्रां द्रष्टुं स आययौ ॥ ६७ ॥

१ सी डी निध्वान. २ सी डी वेणुर्वेणु°. ३ एफ् °भ्यो य°. ४ सी डी °भ्यः ध°. ५ पी ददाति ॥. ६ एफ् °शे चौ°. ७ बी °धिकानि.

६७. यथा त्रयोदश्यास्तिथेः सकाशादह्नि दिने चतुर्दशीलक्षणे गत इति गम्यते । पर्व पूर्णिमा स्यात्तथेतः पत्तनाद्यो ग्रामो ग्रामस्थो लोकोऽष्टौ योजनान्यष्टसु योजनेषु गतेषु दशसु वा योजनेषु गतेष्वभूत्स ग्रामो यात्रां प्रयाणं द्रष्टुमाययौ । नानोत्सवादिनात्यद्भुतत्वाद्दूरदेशस्थोपि लोकः कौतुकेन यात्रां द्रष्टुमागत इत्यर्थः ॥

इतो ग्रामो योजनान्यष्टौ । इतो ग्रामो योजनेषु दशसु । इत्यत्र "गते गम्ये°" [१०७] इत्यादिनैकार्थ्यं वा । पक्षे पूर्वेण सप्तमी ॥ अध्वन इति किम् । त्रयोदश्या अह्नि पर्व । अत्रैकार्थ्याभावे पूर्वेण नित्यं सप्तमी ॥

पौर्यो रुदत्सु बालेषु सीदतां गृहकर्मणाम् ।
पर्युर्द्रष्टुं नृपं श्रेष्ठं नृष्विन्द्रमिव नाकिनाम् ॥ ६८ ॥

६८. बालेषु रुदत्सु मातृविरहेण रुदतो बालकान् सीदतां गृहकर्मणामप्रवर्तमानान् रन्धनादीन् गृहव्यापारांश्चानादृत्य पौर्यो नृपं द्रष्टुं कौतुकादेयुः । यतो नाकिनां मध्य इन्द्रमिव नृषु मध्ये श्रेष्ठं रूपैश्वर्यादिगुणैरुत्कृष्टम् ॥

तदास्त्रिभ्यो वरा योधा रेजुर्यैः स्थानकस्थितैः ।
विद्धः क्रोशात्क्रोशयोर्वा म्रियेत क्षणयोः क्षणात् ॥ ६९ ॥

६९. तदा यात्रोपक्रमकालेऽस्त्रिभ्योऽस्त्रं धनुरस्त्येषां तेभ्यो वरा धनुर्धरेषु श्रेष्ठा योधा रेजुः स्वावसरप्राप्तिसंभावनया तेजस्विनोभूवन् । यैर्योधैः स्थानकस्थितैरालीढादिस्थानावस्थितैः सद्भिः क्रोशाद्गव्यूतात्क्रो-

१ प °र्युद्रष्टु. २ सी नृपश्रे°.

१ सी यात्राप्र°. २ सी °त्र गम्ये°. ३ एफ् °र्मणा प्र°. ४ एफ् मध्ये श्रे°. ५ एफ् °ष्ठा रे°. ६ प स्वावव°.

शयोर्वा विद्धः सन् क्षणयोरल्पमानकालभेदयोः क्षणाद्वा । पूर्वो वात्रापि योज्यः । म्रियेत । ये दूरवेध्यवेधिनो महाप्राणाश्चेत्यर्थः । सभावने सप्तमी ॥

सीदतां कर्मणामेयुः । रुदत्सु बालेष्वेयुः । इत्यत्र "षष्ठी वानादरे" [१०८] इति वा षष्ठी । पक्षे पूर्वेण सप्तमी ॥

नाकिना नृषु श्रेष्ठम् । इत्यत्र "सप्तमी च°" [१०९] इत्यादिना षष्ठीसप्तम्यौ ॥ अन्ये तु पञ्चमीमपीच्छन्ति । अश्विभ्यो वरा योधाः ॥

स्थिनैः क्रोशात्क्रोशयोर्वा विद्धः । क्षणात्क्षणयोर्वा म्रियेत । इत्यत्र "क्रियामध्येध्व°" [११०] इत्यादिना पञ्चमीसप्तम्यौ । इह धानुष्कावस्थानमेका क्रिया पुरुषव्यधश्च द्वितीया । तन्मध्ये क्रोशोध्वा । तथा व्यधनमेका क्रिया मरणं च द्वितीया । तन्मध्ये क्षणः कालः ॥

संघट्टशीर्णस्त्रीहारैर्मुक्तानां राजवेश्मनि ।
खार्याः खार्योरप्यधिको द्रोणोर्धेन तदाभवत् ॥ ७० ॥

७०. तदा यात्रोपक्रमकाले राजवेश्मनि संघट्टेनान्योन्यं संमर्देन शीर्णास्त्रुटिता ये स्त्रीहारास्तैर्हेतुभिर्मुक्तानां मुक्ताफलानामर्धेन द्व्याढक्या कैश्चिदधिकोध्यारूढो द्रोण आढकचतुष्कमभूत् । कीदृक् । खार्या मुक्तानामेव द्रोणषोडशकात्खार्योरपि । अपिर्विकल्पार्थः । खारीद्वये वाधिकोध्यारूढवान् । अक्षतक्षेपादिमाङ्गलिक्यविधयेहमहमिकयागतमहेभ्यकुलस्त्रीणामतिबाहुल्यादेवं नाम संमर्दे हारास्त्रुटिता यावता राजगृहाङ्गणे मुक्ताफलानामेका द्वे वा खार्यौ सार्धद्रोणेनाधिके अभूतामित्यर्थः ॥

१ सी डी भवेत् ।.

१ सी डी म्रियते । ये. २ बी °द्धः । विद्धःक्ष° ३ सी क्षणकाल । डी क्षण काल ।. ४ ए बी एफ् कश्चोधि°. ५ बी °पिर्वि° ६ एफ् °पिविक°. ७ बी °र्देन हा° ८ ए सी डी °ङ्गणमु°. ९ ए °त्ताखर्या°.

अधिको द्रोणः खार्योः। अधिको द्रोणः खार्याः। इत्यत्र "अधिकेन°" [१११] इत्यादिना सप्तमीपञ्चम्यौ॥

अधिको द्रोणोर्धेन। इत्यत्र "तृतीयाल्पीयसः" [११२] इति तृतीया॥

नाक्षतैश्चन्दनान्नाना न दध्नो दूर्वया पृथक्।
न पुष्पेभ्यः फलं वार्ते पात्राणि दधिरेङ्गनाः॥ ७१॥

७१. नानापृथक्शब्दावसहायार्थौ। अङ्गनाः पात्राणि न दधिरे। कौदृशि। अक्षतैरखण्डतण्डुलैश्चन्दनाद्य श्रीखण्डद्रवेण च नानासहायानि। तथा दध्नो दूर्वया च पृथगसहायानि। तथा पुष्पेभ्यः फलं च नालिकेरादि च ऋते विनाभूतानि। अक्षतचन्दनदधिदूर्वापुष्पफलोपेतानि पात्राणि राजादिगृहेषु महेभ्यादिकुलाङ्गनाश्चन्दनवर्धनादिमाङ्गलिक्याय नयन्तीति स्थितिः॥

पृथग्दध्नः। पृथग्दूर्वया। नाना चन्दनात्। नानाक्षतैः। इत्यत्र "पृथग्नाना°" [११३] इत्यादिना पञ्चमीतृतीये॥

फलमृते। पुष्पेभ्य ऋते। इत्यत्र "ऋते द्वितीया च" [११४] इति द्वितीयापञ्चम्यौ॥

नासन्विनाङ्गरागेण कौसुम्भं भूषणात्स्त्रियः।
तुल्या रतेः श्रिया चेन्दोः पद्मेन च समैर्मुखैः॥ ७२॥

७२. इन्दोः पद्मेन च समैस्तुल्यैर्मुखैः कृत्वा रतेः कामपत्न्याः श्रिया च विष्णुभार्यया तुल्याः स्त्रियो नासन्। कथम्। अङ्गरागेण कौसुम्भं कुसुम्भरक्तवस्त्रं च भूषणात्स्वर्णालंकाराच्च विना मङ्गल्यत्वात्।

---

१ बी डी एफ् °ल चर्ते. २ ए °णा स्त्रि°

---

१ एफ् °धिकद्रोणः खार्या इ°. २ ए °णोधेन।. ३ सी डी °थग्दू°.

सुरूपा विभूषितालंकृताः सधवाश्च युवतयो राजादिमङ्गल्यकर्मसु व्यापृता अभूवन्नित्यर्थः ॥

विना कौसुम्भम् । विना भूषणात् । विनाङ्गरागेण । इत्यत्र "विना°" [११५] इत्यादिना द्वितीयापञ्चमीतृतीयाः ॥

श्रिया तुल्याः । रतेस्तुल्याः । पद्मेन समैः । इन्दोः समैः । इत्यत्र "तुल्यार्थैः°" [११६] इत्यादिना तृतीयाषष्ठ्यौ ॥

दत्ताः प्रासादं पूर्वेण गोपुरस्यापरेण च ।
प्राक्प्रयाणादुत्सवेन हेतुना कुङ्कुमच्छटाः ॥ ७३ ॥

७३. प्रयाणात्प्राक्प्रथममुत्सवेन हेतुना यात्रामहोत्सवार्थं कुङ्कुमच्छटा दत्ताः कुङ्कुमाम्बुना भूश्छटितेत्यर्थः । क । प्रासादं पूर्वेण पूर्वाभिमुखाद्राजभवनात्पूर्वस्यामदूरवर्तिन्यां दिशि गोपुरस्य पूर्वदिगभिमुखस्य पूर्द्वारस्यापरेण चापरस्यामदूरवर्तिन्यां दिशि च । प्रासादापेक्षया गोपुरस्य पूर्वत्वाद्गोपुरापेक्षया च प्रासादस्यापरत्वात्प्रासादादारभ्य गोपुरं यावदित्यर्थः ॥

स्नेहाय हेतवे भक्तेर्निमित्तान्मुदि कारणे ।
नरेन्द्रदर्शनस्यार्थस्योत्सुकोभून्न कस्तदा ॥ ७४ ॥

७४. स्नेहाय हेतवे प्रेम्णा हेतुना भक्तेर्निमित्ताद्बहुमानेन हेतुना मुदि कारणे हर्षाद्धेतोर्यन्नरेन्द्रदर्शनं तस्यार्थस्य मूलराजदर्शनेन हेतुना तदा यात्रारम्भकाले क उत्सुको नाभूत् ॥

प्रासादं पूर्वेण । गोपुरस्यापरेण । इत्यत्र "द्वितीया°" [११७] इत्यादिना द्वितीयाषष्ठ्यौ ॥ अनञ्चेरिति किम् । प्राक्प्रयाणात् ॥

उत्सवेन हेतुना । स्नेहाय हेतवे । भक्तेर्निमित्तात् । दर्शनस्यार्थस्य । मुदि कारणे । इत्यत्र "हेत्वर्थैः°" [११८] इत्यादिना तृतीयाद्या विभक्तयः ॥

१ डी °ता अल°. २ बी सी डी °ताः सुध°. ३ बी °पृत्यभू°. एफ् °पृत्याग्°. ४ ए नाद्विती°. ५ ए °रतुल्या°.

योहेतुर्वाजिनां हेषा[1] यं हेतुं दन्तिनां मदः।
हेतुनोक्ष्णां ध्वनिर्येनार्थाय यस्मै भटोद्यमः॥ ७५॥
सोच्छ्वासौ[3] भूर्यतो हेतोर्यस्य हेतोः सुखो मरुत्।
तत्र हेतौ न दूरेण राज्ञो भावी जयो महान्॥ ७६[4]॥

७५,७६. येन हेतुनाश्वादीनां हेषादयोभवंस्तेन हेतुना राज्ञो मूलराजस्य मूलराजाद्वा महान् जयो न दूरे भावी शीघ्रमेव भविष्यति। वाजिहेषादिभिर्यात्राविषयशुभचिह्नैर्भाविनो[1] यात्राकार्यस्य विजयस्य नैकट्यं सूचितमित्यर्थः[2]॥ संदानितकमिति युग्मस्य संज्ञा। यदुक्तम्। एकद्वित्रिचतुश्छन्दोभिर्मुक्तकसंदानितकविशेषककलापकानि॥

अथ दूरे[5]पि लोकस्यान्तिके नु तेजसा ज्वलन्।
न दूराच्छ्रेयसां सिंहासनमध्यास्त भूपतिः॥ ७७॥

७७. अथ सैन्यसज्जनाद्यनन्तरं भूपतिः सिंहासनमध्यास्त। कीदृक्सन्। श्रेयसां पुण्यानां मङ्गलकर्मणां वा न दूरान्निकटस्थ इत्यर्थः। अत एव लोकस्य दूरेपि राजसामन्तादिव्याप्तनिकटप्रदेशकत्वादनिकटेपि वर्तमानस्तेजसा प्रतापेन कान्त्या[3] वा ज्वलन् सँल्लोकस्यान्तिके नु समीप इव वर्तमानः। न दूराच्छ्रेयसामिति सिंहासनस्य वा विशेषणम्। सिंहासनसमीपे हि मुक्तास्वस्तिकादीनि माङ्गलिक्यानि कृतानि स्युः॥

---

१ सी हेषा यं. २ ए °षा ये हे°. ३ सी डी °सा सूर्य°. ४ एफ् ॥ ७६ ॥ युग्मम्।. ५ सी° रेवि लो°

---

१ सी °वितो या°. २ एफ् °र्थः॥ युग्मम्॥ सं°. ३ सी °न्त्या व ज्व°. डी °न्त्या च ज्व°.

दूरं राज्ञोपठन् सूता विप्रः सर्वोन्तिकेन तु ।
अन्तिकाद्गुरु[1]राशास्त गायनाश्चान्तिकं जगुः ॥ ७८ ॥

७८. राज्ञो नृपस्य नृपाद्वा दूरं सूता भट्टा अपठन्[1] । विप्रस्तु ब्राह्मणजातिः पुनः सर्वोपि राज्ञोन्तिके वेदमपठत् । गुरुः पुरोहितजातिः सर्वोपि राज्ञोन्तिकात्समीप आशास्ताशिषं दत्तवान् । कृत्यविधिमकथयद्वा । गायनाश्च राज्ञोन्तिकं[2] निकटे जगुः ॥

यो हेतुः । यं हेतुम् । येन हेतुना । यस्मै अर्थाय । यतो हेतोः[3] । यस्य हेतोः । तत्र हेतौ । इत्यत्र "सर्वादेः सर्वाः" [११९] इति सर्वा विभक्तयः ॥

दूरेण राज्ञ । दूराच्छ्रेयसाम् । दूरे लोकस्य । दूरं राज्ञः ॥ अन्तिकार्थे । राज्ञोन्तिकेन । राज्ञोन्तिकात् । लोकस्यान्तिके । राज्ञोन्तिकम्[4] । इत्यत्र "असत्वाराद्[5]" [१२०] इत्यादिना टा-ङसि-ङि-अम्प्रत्ययाः ॥

विप्रः सर्वः सूताः । सर्वो गुरुः गायनाः । इत्यत्र "जाति°" [१२१] इत्यादिनैकोर्थो बहुवद्वा ॥

स्थास्यावः सुखमद्यावां भास्यामोद्य वयं श्रिया ।
इति तूर्यप्रतिरवैर्जल्पतः स्मेव रोदसी ॥ ७९ ॥

७९. तूर्यप्रतिरवैर्यात्रामाङ्गलिक्यविधापनाय सिंहासनमध्यासीने राज्ञि विशेषतो वाद्यमानानां[6] नान्दीतूर्याणां व्योमादौ प्रतिशब्दितैः कृत्वा रोदसी[7] जल्पतः स्मेव । किमित्याह । अद्य संप्रत्यस्मदुपप्लाविदैत्यानामुच्छेत्स्य[8]मानत्वादावां सुखं स्थास्यावोत एवाद्य वयमावां श्रिया भास्यामः ॥

---

१ सी °रताशा°.

---

१ सी डी °ठव । वि°. २ बी एफ् °न्तिके नि°. ३ सी डी °तो. । त°. ४ एफ् °न्तिके । इ°. ५ एफ् °सत्वेला°. ६ ए °ना दीतू°. ७ ए °सीव ज° ८ ए बी सी डी एफ् °माणला°.

वेद्म्यहं तद्ब्रुवं ब्रूमः पार्थो यः फल्गुनीष्वभूत् ।
स त्वं जयेति वक्तास्य पुरोधास्तिलकं व्यधात् ॥ ८० ॥

८०. पुरोधा अस्य राज्ञो यात्रोचितं तिलकं व्यधात् । कीदृक्सन् । वक्ता वदन् । किमित्याह । तदहं वेद्मि जाने तथा तद्ब्रुवं ब्रूमस्तत्त्वाहं सर्वत्र कीर्तयामि । यत्किम् । यः पार्थः फाल्गुनोर्जुनः फल्गुनीषु[1] फल्गुनीभिश्चन्द्रयुक्ताभिर्युक्ते[2] कालेभूज्जातः स पार्थस्त्वं भवानेव । तत्पराक्रमादिगुणोपेतत्वात् । तस्माज्जय शत्रुपराभवेनोत्कृष्टो भव । अर्जुनो हि शत्रुजयेनोत्कृष्टोभूदिति ॥

धूयमाने अलक्ष्येतां राजानमनु चामरे ।
शशाङ्कमनु फल्गुन्यौ किं नु प्रोष्ठपदे नु किम् ॥ ८१ ॥

८१. राजानं मूलराजमनुलक्ष्यीकृत्य धूयमाने वीजनार्थं चल्यमाने[3] चामरे अलक्ष्येतां लोकैरुत्प्रेक्षिते । कथमित्याह । शशाङ्कं चन्द्रमनुर्लक्ष्यीकृत्य[4] किं नु फल्गुन्यौ किं नु किं वा प्रोष्ठपदे । धूयमानचामरद्वयमध्यस्थो राजा पूर्वफल्गुन्योः पूर्वभद्रपदयोस्तारिकयोर्मध्यस्थश्चन्द्र[5] इव लोकैर्ज्ञात[6] इत्यर्थः ॥

यान्तु याम्यां दिशं[1] प्रोष्ठपदासु तव शत्रवः ।
जय त्वं यूयमेधध्वमिति ज्योतिर्विदोवदन् ॥ ८२ ॥

८२. ज्योतिर्विदो[7]वदन्नात्मानुरूपा आशिषो ददुः । यथा हे राजंस्तव शत्रवो माहरिप्वादयः प्रोष्ठपदासु प्रोष्ठपदाभिः[8] पूर्वभद्रपदाभिरुत्त-

---

१ ए दिशि प्रो°.

---

१ एफ् °नीभि°. २ ए °भियुक्ते. ३ सी °य वल्य.° डी °य चाल्य°. ४ ए °लक्षीकृ°. ५. सी डी °धोमं°. ६ सी डी लोके ज्ञा°. ७ सी निर्वेदो°. ८ बी दादिभि°.

रभद्रपदाभिर्वा[1] चन्द्रयुक्ताभिर्युक्ते काले याम्यां दिशं[2] दक्षिणां यान्तु । म्रियन्तामित्यर्थः । प्रोष्ठपदासु हि दक्षिणदिशि याने पुनरागमनं न स्यात् । यदुक्तम् ॥

धनिष्ठारेवतीमध्ये चन्द्रे चरति यो व्रजेत् ।
दक्षिणस्यां कदाप्यस्य पुनरागमनं न हि ॥

ततश्च जय त्वं तथा यूयमेधध्वं लक्ष्म्या[3] त्वं वर्धस्वेति ॥

युवामर्च्यौ गृहा लक्ष्म्या[1] यूयमस्य भुजाविति ।
कल्याणतिलकाकृष्टा दारा जगुरिवालिनः ॥ ८३ ॥

८३. अस्य राज्ञो भुजौ कल्याणहेतुत्वात्कल्याणं[4] कल्याणाय वा पुरोधसा कृतं यत्तिलकं तेनाकृष्टाः सौरभेण दूरादानीता अलिनो भृङ्गस्य दारा भृङ्गी[5] जगुरिव[6] गायन्ति स्मेव । कथमित्याह । हे भुजौ यूयं युवां लक्ष्म्या[7] विजयादिश्रियो गृहा आश्रयावत एव युवामर्च्यौ स्थ इति । भुजयोर्गानाशङ्का च तयोरेव भविष्यज्जयहेतुत्वेन यात्रारम्भकाले गानार्हत्वात्[8] । या अपि दारा आकृष्टितिलकाकृष्टा भवन्ति तास्तस्याकृष्टुर्गानादिकं कुर्वन्तीत्युक्तिः ॥

गोदौ ग्रामं खलतिकं वनानि देशमश्मकान्[2] ।
भोक्तारोन्येपि भूपास्तं नमस्कृत्याग्रतोभवन् ॥ ८४[3] ॥

८४. स्पष्टः ॥

---

१ ए लक्ष्मा यू°. २ बी °मस्मका°. ३ सी डी ॥ ८४ ॥ पुर°.

---

१ एफ् °भिर्यु°. २ ए दिशि द°. ३ ए लक्ष्या त्व. ४ सी डी °ल्याण क°. ५ एफ् भृङ्गयो ज°. ६ सी °व क°. डी °व स्मे°. ७ सी लक्ष्मा वि°. ८ सी डी °त् । यथा अ°.

पुरस्खेलिपुरस्पातिपुरस्फकैः स तैर्विभान् ।
नमः करोति स्म महालक्ष्म्यै भक्तिपुरस्कृतः ॥ ८५[2] ॥

८५. महालक्ष्म्यै नमः करोति स्म । नमःशब्दमुच्चारितवान्ननाम वा । इष्टदेवताप्रणामपूर्वं[1] हि यात्रा क्रियत इति स्थितिः । कीदृवसन् । भक्तिपुरस्कृतो बहुमानेन प्रेरितस्तथा तैर्गोदग्रामादिभोक्तृभिरन्यैश्च नृपैर्विभान् । यतः पुरस्खेलिपुरस्पातिपुरस्फकैः । कैश्चित्पुरस्खेलिभिः प्रसादपात्रत्वादग्रे क्रीडनशीलैः कैश्चिच्च पुरस्पातिभिर्भक्त्यतिशयख्यापनायाग्रे लुठद्भिः कैश्चिच्च पुरस्फकैर्विनयान्नीचैर्गच्छद्भिः ॥

आवां स्यास्वावः । वय भास्याम. । वेद्म्यहम् । वयं ब्रूमः । इत्यत्र "अविशेषणे°" [१२२] इत्यादिनास्मदो द्वावेकश्चार्थो वा बहुवत् ॥

फल्गुन्यौ फल्गुनीषु । प्रोष्ठपदे प्रोष्ठपदासु । इत्यत्र "फल्गुनी°" [१२३] इत्यादिना द्वावर्थौ बहुवद्वा ॥

जय त्वम् । यूयमेधध्वम् । युवामचर्चौ । यूयं गृहाः । इत्यत्र "गुरावेकश्च" [१२४] इति द्वावेकश्चार्थो बहुवद्वा ॥ दाराः । गृहाः । देशमश्मकान् । गोदौ ग्रामम् । खलतिकं वनानि[4] इत्यत्र सर्वलिङ्गसंख्ये वस्तुनि स्याद्वादमनुपतति मुख्योपचरितार्थानुपातिनि च शब्दात्मनि रूढितस्तत्तल्लिङ्गसंख्योपादानव्यवस्थानुसर्तव्या ॥

षष्ठः पादः समर्थितः ॥

नमस्कृत्य । पुरस्कृतः । पुरस्खेलि । पुरस्पाति । पुरस्फकैः । इत्यत्र "नमस्पुरसो°" [१] इत्यादिना सः ॥ गतेरिति किम् । नमः करोति । अत्र नमःशब्दान्तरं न त्वव्ययमिति । नमःशब्दस्य कृद्योगे विकल्पेन गतिसंज्ञाविधानाद्वा ॥

---

१ एफ् °क्तिभरपु°. २ एफ् ॥ ८५ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां शब्दानुशासनद्व्याश्रयमहाकाव्ये षष्ठपादसमर्थितः । समाप्तः ।

---

१ एफ् °र्वं या°. २ सी °नेव प्रे°. ३ सी °दाष्टपदासु. ४ ए °लिङ्गयस°. ५ सी डी इति प°. ६ सी डी °त॰ इति षष्ठः पादः समाप्तः ॥ ७ सी °स्कृतः ।

स्थितं पादं तिरः कृत्वा तिरस्कृतगिरिं गजम् ।
तिरःकृतारिः सोध्यास्त तिरस्कृत्वा रविं त्विषा ॥ ८६ ॥

८६. तिरःकृता अन्तर्हिता जिता अरयो येन स[1] तथा स मूलराजस्त्विषा तेजसा कृत्वा रविं तिरस्कृत्वान्तर्धाय विजित्यातितेजस्वीभूयेत्यर्थः । गजमध्यास्त । कीदृशम् । तिरस्कृतगिरिमौन्नत्येन पराभूताद्रिम् । यदि शैलादप्युन्नतो गजस्तर्हि कथं तमध्यास्तेत्याह । यतः पादं तिरःकृत्वा तिरश्चीनं विधायाधोवनम्येत्यर्थः । स्थितं निश्चलीभूतम् । गजो हि पाश्चात्ययो[2]ः पादयोर्मध्ये ये[3]न केनाप्यारुह्यते । तमसावधोवनमयति । ति[4]रस्कृत्वा रविं त्विषा तिरस्कृतगिरिं गजं सोध्यास्तेत्यनेन यथा रविर्गिरिमुदयाचलमारोहति तथायं गजमिति व्यज्यते ॥

तिरस्कृत तिरःकृत । इत्यत्र "तिरसो वा" [२] इति वा सः ॥ गतेरिति किम् । तिरः कृत्वा ॥ अगतेरप्यन्तर्द्धाविच्छत्यन्यः । तिरस्कृत्वा ॥

पुंस्फाल्गुनः स पुंस्पाता मत्तपुंस्करिणस्तदा ।
शिरस्पदमलंचक्रे पुंस्खड्गिभिरधस्पदम् ॥ ८७ ॥

८७. स मूलराजस्तदा यात्राकाले मत्तो मदोत्कटः पुमान्पौरुषोपेतश्च यः करी तस्य शिरस्पदं कुम्भस्थलस्थानमलंचक्रे । कीदृक् । पुंस्सु पौरुषोपेतेषु फाल्गुन इवार्जुन इव पुं[5]स्फाल्गुनोत एव पुंस्पाता पुरुषाणां रक्षकः । तथा पुंस्खड्गिभिः पौरुषोपेतखड्गधरैश्चाधस्पदं हस्तिनोर्ध[6]स्थानमलंचक्रे । करीन्द्रो हि राज्ञाध्यासित. परप्रवेशनिवारणाय खड्गिभिरधः प[7]रिचार्यत इति स्थितिः ॥

---

१ सी °रवि.

---

१ सी स मू°. २ ए °यो पा°. ३ ए सी येना के°. ४ ए सी °रकृत्वा डी° रः कृत्वा. ५ डी पुस्पा°. ६ बी °ध.स्था°. ७ बी °रिवार्य°.

पुंस्करिणः । पुंस्तद्भिमिः । पुंस्पाता । पुंस्फाल्गुनः । इत्यत्र "पुंसः" [३] इति सः ॥

शिरस्पदम् । अधस्पदम् । इत्यत्र "शिरोधसः०" [४] इत्यादिना सः ॥

अथ राज्ञः प्रस्थानमेव श्लोकानामेकोनत्रिंशता वर्णयति ।

श्रेयस्कामः सहस्कंसोयस्कुशावान्यशस्कृते ।
यान्सोपश्यत्ययस्कुम्भं पयस्कर्णीशुभं पुरः ॥ ८८ ॥

८८. स राजा पयस्कुम्भं जलघटं पुरोपश्यन् । कीदृक्सन् । सहसो बलस्य कंसः पात्रमत एवाय.प्रधाना कुशायस्कुशा । अत्र प्रस्तावादङ्कुशः । सास्यास्ति अयस्कुशावान्यशस्कृते शत्रुजयोत्थकीर्त्यर्थं यान् शत्रुं प्रति गच्छन्नत एव च श्रेयः कामयते अपि श्रेयस्कामः कुशलार्थी । किंभूतं कुम्भम् । पयश्च कर्णी च पयस्कर्ण्यौ ताभ्यां शुभमभग्नकर्णं जलपूर्णं चेत्यर्थः । यात्रायां हि जलपूर्णस्य पूर्णकलशस्याग्रतो दर्शनं महाशकुनम् ॥

ऊर्जस्पात्रं पुनःकारं गीःकारः सव्यतोस्य गौः ।
यशस्कल्पो द्विषद्दुर्गं रोधस्पाशं शशंस नु ॥ ८९ ॥

८९. गौः शण्डः सव्यतो राज्ञो वामदेशे पुनर्वारंवारं कारः करणं यत्र तद्यथा स्यादेवं गिरं शब्दं करोतीति गीःकारः सन्नस्य राज्ञो द्विषद्दुर्गं शत्रुदुर्गस्थानं रोधस्पाशं निन्द्यतटं शशंस नूवाचेव । यथाहं रोधस्पाशं सुखेन विक्षिपामि तथा त्वं द्विषद्दुर्गं विक्षेप्स्यसीति शब्दायमानः शण्डो वददिवेत्यर्थ. । कीदृक् । ऊर्जस्पात्रं बलिष्ठस्तथेषदूनं यशो यशस्कल्पः । "वाधन्ते स्वार्थिकाः क्वचित्" इति क्लीबत्वाभावः । अविश्वेतत्वाद्यशस्तुल्यः । यात्रायामीदृक् शण्डः शकुनराजः ॥

---

१ सी पुरपल्गु°. २ ए सी डी °स्कर्णी ता°. ३ बी °लसत्या°. ४ सी निन्द्यं त°. ५ बी °आया हीदृ°. ६ सी °क् सण्ड°.

गौः पयस्कं क्षरन्त्यस्य स्वःकल्पायां पुरो भुवि ।
पयस्काम्यदधःकाम्यदवाःकाम्यत्सुताभवत् ॥ ९० ॥

९०. अस्य राज्ञो गच्छतः पुरः स्वःकल्पायां क्षीरतरुच्छायाहरिततृणशुचित्वादिगुणरम्यत्वेन स्वर्गतुल्यायां भुवि गौर्धेनुरभूत् । कीदृशी सती । पयस्काम्यन् क्षीरकण्ठत्वेन दुग्धाभिलाषुकोत एवाधःकाम्यन् दुग्धपानायाधस्तनप्रदेशस्येच्छुरवाःकाम्यन्नवप्रसूतत्वाज्जलस्याप्यनिच्छुः सुतो वत्सो यस्याः सात एवापत्यस्नेहेन पयस्कमल्पं पयो दुग्धं क्षरन्ती स्रवन्ती । गन्तुकस्य हीदृग्गौः शकुनमतल्लिका ॥

यशस्कृते । श्रेयस्कामः । सहस्कंसः । पयस्कुम्भम् । अयस्कुशावान् । पयस्कर्णी । ऊर्जस्पात्रम् । इत्यत्र "अतःकृकमि°" [५] इत्यादिना सः ॥ अत इति किम् । गीःकारः ॥ अनव्ययस्येति किम् । पुनःकारम् ॥

रोधस्पाशम् । यशस्कल्पः । पयस्कम् । इत्यत्र "प्रत्यये" [६] इति सः ॥ अनव्ययस्येत्येव : स्वःकल्पायाम् ॥

पयस्काम्यत् । इत्यत्र "रोः काम्ये" [७] इति सः ॥ रोरिति किम् । अवाःकाम्यत् । अनव्ययस्येत्येव । अधःकाम्यत् ॥

ज्योतिष्काम्यत्सु धूःकाम्यन् धनुष्कल्पभ्रुवं स्त्रियम् ।
ससर्पिष्कामगीष्पाशां निष्कलङ्कां स ऐक्षत ॥ ९१ ॥

९१. स राजा ज्योतिर्ज्ञानमिच्छन्ति ये तेषु ज्योतिष्काम्यत्सु धूःकाम्यन् धुरमिच्छन् शकुननिमित्तादिज्ञेषु मध्ये धुरीणः सन् स्त्रियमैक्षत । कीदृशीम् । धनुष्कल्पे कुटिलत्वेन चापतुल्ये भ्रुवौ यस्यास्ताम् ।

---

१ सी °ष्पाशनि°.

---

१ बी भरस्य स्त°. २ डी °जल तस्या°. ३ ए सी डी °स्नेव. ४ बी °ध्येपु धु°.

एतेन रूपवत्त्वमुपलक्षितम् । तथासती गोष्पाशा निन्द्या गीर्यस्यास्तां शुभवादिनीम् । तथा निष्कलङ्कामक्षतशीलां सतीमित्यर्थः । कुष्ठादिकलङ्करहितां वा । तथा ससार्पिष्कां[1] घृतभृतभाजनान्विताम् । यात्रायां हीदृक्स्त्रीरत्नदर्शनं शकुनरत्नम् ॥

दुष्प्रापशकुनान्याविष्पुण्यान्याविष्कृतोद्यमः ।
निष्पिप्रिये बहिष्पश्यन्स बहिष्कृतदुष्कृतः ॥ ९२ ॥

९२. बहिष्कृतदुष्कृतो निर्धूतपापः स राजा निष्पिप्रिये भाविजय[2]सिद्धिनिश्चयेन नितरां प्रीतः । कीदृक्सन् । आविष्कृतोद्यमः प्रकटितयात्रोत्साहः सन् । दुष्प्रापशकुनानि श्रेष्ठत्वाद्दुर्लभानि पूर्वोक्तानि शकुनानि बहिः प्रासाद्बाह्यदेशे पश्यन् । कीदृंशि । आविष्कृतं ज्ञापितं पुण्यं शुभं दैवं यैः । वृत्तौ गतार्थत्वात्कृतशब्दलोपः । तान्याविष्पुण्यानि ॥

धनुश्चतुष्करं प्रादुष्कुर्वन्[2]स[3] याँश्चतुष्पथे ।
अदाप्पुरुष्यनैष्कुल्यैः प्रादुष्प्रेमार्चितो न कैः ॥ ९३ ॥

९३. स राजा चतुष्पथे चतुष्के यान्सन् प्रादुष्कृतं प्रकटितं प्रेमानुरागो यत्र गतार्थत्वात्कृतशब्दलोपे प्रादुष्प्रेम कैर्नार्चितः पुष्पादिढौकनैर्न पूजितः । किंभूतैः । दुष्टाः[3] पुरुषा दुष्पुरुषास्तेषां भावो दौष्पुरुष्यं दुष्टपौरुषं कुलान्निर्गता निष्कुलास्तेषां भावो नैष्कुल्यमकुलीनता द्वन्द्वे ते न स्तो येषां तैः पुरप्रधानैरित्यर्थः । कीदृक्[4]सन् । चतुष्करं[5] चतुर्हस्तप्रमाणम् । अत्र प्रमाणान्मात्रटो "द्विगोः संशये च" [७.१.१४३.] इति लोपः । धनुः प्रादुष्कुर्वन् प्रकटयन् ॥

---

१ बी °दुष्कृत° २ डी °र्वन्यान्स चतु°. ३ बी °न्स याश्च°. सी °न्सयान् चतु°.

---

१ सी °पिंका घृ°. २ बी °विविज°. ३ बी °ष्टापु°. ४ बी °क्सः । च°. ५ सी °तुर्ह°.

अगीष्पाशाम्। धनुष्कल्प। ससर्पिष्काम्। ज्योतिष्काम्यत्सु। इत्यत्र "नामिनस्तयोः षः" [८] इति षः॥ रोः काम्य इत्येव। धूःकाम्यन्॥

निष्कलङ्काम्। निष्पिप्रिये। दुष्कृतः। दुष्प्राप। बहिष्कृत। बहिष्पश्यन्। आविष्कृत। आविष्पुण्यानि। प्रादुष्कुर्वन्। प्रादुष्प्रेम। चतुष्करम्। चतुष्पथे। इत्यत्र "निर्दुर्०" [९] इत्यादिना षः॥ कथम् अदौष्पुरुष्यनैष्कुल्यैः। एकदेशविकृतस्यानन्यत्वात्॥

द्विःफलं त्रिःफलं स द्विष्पुष्पं त्रि꣩पुष्पमुज्झतः।
द्विष्खे त्रिःखे क्षिप्तलाजान् द्विष्कांस्त्रिष्कान् जगाद नः॥९४॥

९४. नृपः कान्पुंसो द्विः कान्पुंसस्त्रिर्वा न जगाद किं तु सर्वानपि वारद्वयं वारत्रयं वा ललापेत्यर्थः। किंभूतान्। राज्ञो माङ्गलिक्यार्थं द्विर्द्वौ वारौ फलम्। जातावेकवचनम्। वीजपूरादिफलानि त्रिःफलं त्रीन्वारांश्च फलानि। द्विष्पुष्पं त्रि꣩पुष्पं द्वौ त्रींश्च वारान्पुष्पाण्युज्झतो राज्ञोग्रे वर्षतस्तथा द्विष्खे त्रिःखे व्योम्नि च द्वौ वारौ त्रीन्वारांश्च क्षिप्तलाजान्प्रेरिताक्षतान्॥

द्विष्कान्। द्विष्खे। द्विष्पुष्पम्। द्विष्फलम्। इत्यत्र "सुचो वा" [१०] इति वा षः। पक्षे ꣩क꣩फौ(पौ) विसर्गश्च। त्रिष्कान्। त्रिःखे। त्रि꣩पुष्पं। त्रिःफलम्॥

जनैस्तस्य वपुष्प्रेक्ष्य ज्योतिष्खर्वयदुष्णगोः।
आयुष्काम्यं जनुष्ख्यातं चक्षुष्फलितमूहितम्॥ ९५॥

९५. जनैरायुर्जीवितं काम्यं मनोज्ञं जनुर्जन्म ख्यातं सर्वत्र प्रसि-

१ बी द्विष्फल.

१ सी रो का°. २ ए सी डी °दुःकुर्व°. ३ बी सी अनैष्कुल्यदौष्कु°. डी अनैष्कु°.

दम् । कृतकृत्यमित्यर्थः । चक्षुर्लोचनं फलितं सफलमूहितं वितर्कितम् । किं कृत्वा उष्णगो रवेर्ज्योतिस्तेजः खर्वयल्लघयत्तस्य राज्ञो वपुः प्रेक्ष्य ॥

रोचिष्कवलयद्भानोर्दृग्ज्योतिष्फलायन्नृणाम् ।
सर्वार्चिष्पिदधत्खेगाद्बर्हिः पाण्डुरयद्रजः ॥ ९६ ॥

९६. रजः सैन्यपादघातोत्था धूलिः खेगात् । कीदृक्सन् । बर्हिः । जातावेकवचनम् । दर्भान्पाण्डुरयत् । पृथ्वीस्थं वनगहनादि व्याप्नुवदित्यर्थः । तथोर्ध्वं प्रसृमरत्वाद्भानो रोचिः किरणान्कवलयद्ग्रसमानम् । तथातिनिविडत्वात्सर्वेषां दीपादीनामर्चिः कान्तिः सर्वार्चिस्तत्पिदधवृत एव नृणां दृग्ज्योतिर्लोचनदीप्तिं फलायन्निष्फलयच्च । रजोतिनिविडं रोदसी व्यापेत्यर्थः ॥

रोचिष्कवलयत् । ज्योतिष्खर्वयत् । सर्वार्चिष्पिदधत् । दृग्ज्योतिष्फलायत् । आयुष्काम्यम् । जनुष्प्रत्नम् । वपुष्प्रेक्ष्य । चक्षुष्फलितम् । इत्यत्र "वेसु°" [११] इत्यादिना वा षः ॥ पक्षे । बर्हिः पाण्डुरयत् इत्यादि ॥

अर्चिष्पारश्वधं ज्योतिष्कौन्तं च रुरुचे तदा ।
तन्वदैन्द्रं धनुष्खण्डमीक्ष्यमाणं धनुष्करैः ॥ ९७ ॥

९७. तदा मेघतुल्ये रजसि नभोव्यापिनि सतीत्यर्थः । पारश्वधं परशुशस्त्रसंबन्ध्यर्चिर्दीप्तिः कौन्तं प्राससंबन्धि ज्योतिश्च रुरुचे । कीदृशम् । स्वर्णमण्यादिखचितत्वेनोल्लसदनेकवर्णप्रभाजालत्वादैन्द्रं शक्रसंबन्धि धनुष्खण्डं तन्वदेत एवं धनुष्करैर्धानुष्कैरद्भुतधनुर्भ्रान्त्येक्ष्यमाणम् ॥

१ बी °तिफ°. २ बी °मीक्षमा°.

१ बी °न च फ°. २ ए °दद प°. ३ सी डी °न च भ°.

धनुष्फलकयोग्याभिस्तत्रारुष्पाणयो बभुः ।
सर्पिष्पाः सुभटा बर्हिष्खननैर्ब्राह्मणा इव ॥ ९८ ॥

९८. सर्पिष्पा घृतपायिनोतिबलिष्ठा इत्यर्थः । सुभटा विशेषतो दानसन्मानपात्रत्वाद्बभुः । यतो धनुष्फलकयोश्चापस्फरयोर्या योग्या निरन्तराभ्यासास्ताभिः कृत्वारुर्व्रणं पाणौ येषां ते धनुर्विद्यायां खड्गविद्यायां च कुशला इत्यर्थः । यथा सर्पिष्पा जातिस्वभावेनात्यन्तं घृतप्रियत्वाद् घृतपायिनो ब्राह्मणा भान्ति । यतो बर्हिष्खननैः पवित्रिकाद्यर्थं दर्भच्छेदनैररुष्पाणयो दर्भाणां तीक्ष्णाग्रत्वाद्व्रणितहस्ताः क्रियानैष्ठिका इत्यर्थः ॥

नृपो ज्योतिष्क्रमं छ्यद्भिश्छन्नश्छत्रैश्छदि[1]ष्फलैः ।
भ्रातुष्पुत्रं द[2]ढकस्य कस्कोसेविष्ट नानुयान् ॥ ९९ ॥

९९. कस्को नृपोनुय[3]न्ननुव्रजन्सन् द[4]ढकस्य द[5]ढकाख्यपितृव्यस्य भ्रातुष्पुत्रं भ्रातृजं मूलराजं नासेविष्ट । कीदृक् । छत्रैश्छन्नः सर्वतोप्यावृतो महर्द्धिक इत्यर्थः । कीदृशैः । छदिः पटलं तद्वदवनतप्रान्ततया सर्वतश्छायाकारितया च फलन्ति संपद्यन्ते यानि तैश्छ[6]दिष्फलैरत एव ज्योतिष्क्रमं सूर्यातपखेदं छ्यद्भिरपनयद्भिः । सर्वोपि नृपवर्गोमुं मद्वद्भ्यर्भजदित्यर्थः ॥ राजिबीजद[7]ढकाख्यो भ्रातर आदिपुरुषाः । राजेरपत्यं मूलराजो बीजद[8]ढकयोस्तु भ्रातुष्पुत्रः ॥

१ बी °दिप्पलैः २ बी दढक°.

१ डी °पस्फुर°. २ सी °दनै°. ३ प सी डी° यान् व्र°. ४ बी दढक°. ५ बी दढका°. ६ सी दिप्पलै°. ७ बी °दढका°. ८ बी °दढक°.

दिक्षु प्रसारिसैन्येषु भारार्तवपुषं महीम्।
सिपिचुर्गदपाथोभिः[1] पुपूर्षव इव द्विपाः॥ १०० ॥

१००. दिक्षु प्रसारिसैन्येषु बलेषु प्रसरत्सु सत्सु भारार्तवपुषं प्राग्भारेणाक्रान्तदेहां सतीं महीं द्विपा मदपाथोभिः सिपिचुः[1]। उत्प्रेक्ष्यन्ते पुपूर्षव इव[2]। ये हि पालयितुमिच्छवो दयालवः स्युस्ते भाराक्रान्तवपुषं जनं खेदापनयनायाम्भोभिः सिञ्चन्ति॥

लिलिक्षन्निव किं निंस्से वर्हींष्युद्गोर्षु पुंस्स्विति[2]।
स्थितः सर्पिःष्विव वशावार्ष्विभः कथमप्यगात्॥ १०१ ॥

१०१. इभः कथमपि महता कष्टेनागात्ययौ। यतः सर्पिःष्विव घृतेष्विव वशावार्षु हस्तिनीनांमूत्रेषु स्थितोनुरागातिरेकेण[3] तद्गन्धामोदलुब्धत्वादवस्थितः। केषु सत्सु। पुंस्सु हस्तिपकेषु। किंभूतेषु। उद्गीर्पूच्छलद्वाणीकेष्वपि। कथमित्याह। अहो गज लिलिक्षन्निवात्तुमिच्छन्निव वर्हींषि दर्भान् किं निंस्से किमिति चुम्बसीति॥

ज्योतिर्भ्रान्तम्। आर्चिष्पारश्यधम्। इत्यत्र "नैकार्थेक्रिये"[4] [१२] इति षत्वाभावः॥

ज्योतिष्कुलम्। बर्हिष्प्रजननैः। सर्पिष्पाः। छदिष्फलैः। धनुष्करैः। धनुष्खण्डम्। अरुष्पागयः। धनुष्फलक। इत्यत्र "समासेसमस्तस्य°" [१३] इति षत्वम्॥ भ्रातुष्पुत्रम्। कस्कः। इत्यत्र "भ्रातुष्पुत्र°" [१४] इत्यादिना रेफस्य षत्वं सत्वं च निपात्यते॥

---

१ डी सिपिसुर्मं°. २ ए डी पुस्तिवति।. बी पुस्विति।.

---

१ डी सिषिचुः।. २ बी °व पिपालयिषव इव। ये. ३ सी स्थितानु°. ४ बी °कार्थ्येक्रि°.

नामिनः । वपुषम् । सैन्येषु । सिषिचु[1] । असेविष्ट ॥ अन्तस्थायाः । वार्षु । उस्रीषु । पुपूर्षवः ॥ कवर्गात् । दिक्षु । लिलिक्षन् ॥ शिड्न्तरेपि । सर्पिःषु । यहींषि । अत्र "नाम्यन्तस्था°" [१५] इत्यादिना षत्वम् ॥ शिड्ग्रहणेनैव सिद्धे नकारोपादान नकारस्थानेनैवानुस्वारेण यथा स्यादित्येवमर्थम् । तेन मकारानुस्वारेण न स्यात् । पुंस्सु[2] ॥ शिटा नकारेण चान्तर इति प्रत्येकं वाक्यपरिसमाप्तेरुभयव्यवधाने न स्यात् । निंस्से ॥

अग्निष्टुतः पथि ज्योतिष्टोमायुष्टोमवेदिनः ।
अग्निष्टोमविदो वन्याः सैन्यमैक्षन्त तापसाः ॥ १०२ ॥

१०२. वन्या वनवासिनस्तापसाः पथि सैन्यं कौतुकादैक्षन्त । किंभूताः । ज्योतिषो ज्योतिषे वा स्तोमो यागो ज्योतिष्टोम एवमायुष्टोमश्च तेजोवृद्ध्यर्थमायुर्वृद्ध्यर्थं च ।न॥ माणौ यागभेदौ तद्वेदिनः । यद्वा । ज्योतिषां ज्ञानानां स्तोमः संतानस्तेनायुष्टोमवेदिनो जीवितसंतानज्ञास्तथाग्निष्टोमोग्निस्तुतिप्रधानः[3] प्रथमो यागस्तद्वेदिनः । एतेन ज्ञानितोक्ता । तथा यागाग्निकारिकादिकारित्वेनाग्निं स्तुवन्त्यग्निष्टुतः । एतेन क्रियानिष्ठत्वोक्तिः ॥

अग्निष्टुत । इत्यत्र "समासेग्नेः स्तुतः" [ १६ ] इति षत्वम् ॥

ज्योतिष्टोम । आयुष्टोम । अग्निष्टोम । इत्यत्र "ज्योतिः°" [१७] इत्यादिना षः ॥

मातृष्वसृपितृष्वस्रोर्वियुग्ग्राम्यार्भको रुदन् ।
अतिमातुःष्वसृपितुःष्वसाश्वासि चमूस्त्रिया ॥ १०३ ॥

१०३. मातृष्वसृपितृष्वस्रोर्जननीभगिनीजनकभगिन्योर्वियुग्वियुक्तोत एव रुदन् ग्राम्यार्भकश्चमूस्त्रियाश्वासि[4] मधुरालापादिना-

---

१ ए बी डी °षिचुः । अ°. २ बी पुंसु । शि°. ३ सी °नप्र°. ४ ए °यास्वासि.

श्वासितः । यतो वत्सलत्वादिनातिक्रान्ते मातुःष्वसृपितुःष्वसारौ यया तया ॥

मातुःस्वस्रा पितुःस्वस्रा मुन्नदीस्नाः सह व्रजाः ।
क्रीडानिष्णान्नदीष्णातृनत्वरन्तेक्षितुं द्विपान् ॥ १०४ ॥

१०४. मातुःस्वस्रा पितुःस्वस्रोपलक्षणार्थत्वान्मातृपक्षेण पितृपक्षेण च सह व्रजा गोकुलस्था जना द्विपानीक्षितुमत्वरन्त ससंभ्रमं चेलुः । यतो मुद्धर्षः सैव पूरेणाप्लावकत्वान्नदी तत्र स्नान्ति के मुन्नदीस्नाः । कुतूहलपूराप्लाविता इत्यर्थः । यतः किंभूतान् । नदीष्णातृन्कौशलान्नद्यां स्नायकान् । एतदपि कुत इत्याह । यतः क्रीडानिष्णान् जलकेलिकरणचतुरान् । गजो हि जलकेलिं कुर्वन्तोत्यद्भुतत्वादृश्याः स्युः ॥

स्वःसिन्धाविव निस्नानप्रतिस्नाताः समुच्छ्रयात् ।
प्रतिष्णातप्रतिष्णानव्यूता ध्वजपटा बभुः ॥ १०५ ॥

१०५. रथादिस्था ध्वजपटा बभुः । यतः प्रतिष्णातं क्षालनेन शुद्धं यत्प्रतिष्णानं सूत्रं तेन व्यूता निर्मलसूत्रमयाः । उत्प्रेक्ष्यन्ते । समुच्छ्रयादौन्नत्याद्धेतोः स्वःसिन्धौ व्योमगङ्गायां निस्नानप्रतिस्नाता इव निस्नानेन निश्चितस्नानेन कृत्वा प्रतिस्नाता इव निर्मलीभूता इव । येपि प्रतिष्णातमतिव्याप्त्यादिदोषाभावेन शुद्धं यत्प्रतिष्णानं वेदादिसूत्रं तेन व्यूताः पाठेनात्यन्तं वासिताशयाः स्वःसिन्धौ निश्चितं स्नावाश्च स्युस्ते समुच्छ्रयाँल्लोकमध्य औन्नत्याद्ध्वजपटा इव भान्तीत्युक्तिः ॥

---

१ बी °दीला स°.

---

१ प सी °तुः स्वसा°. २ सी °जा दि ज°. ३ सी °दृशाः स्युः ॥°. ४ सी °यां न क्रा°. ५ प सी °तिशाता. ६ सी °याः स्वासि°. ७ बी °या लोक°. ८ प °स्या ध्वज°.

मातृष्वसृपितृष्वस्रोः । इत्यत्र "मातृपितुः स्वसुः" [ १८ ] इति षः ॥

मातुःष्वसृपितुःष्वसा । इत्यत्र "अलुपि वा" [ १९ ] इति वा षः ॥ पक्षे । मातुः स्वसा । पितुः स्वसा ॥

निष्णान् । नदीष्णातृन् । इत्यत्र "निनद्याः°" [२०] इत्यादिना षः ॥ कौशल इति किम् । निस्नान । मुस्नदीस्नाः ॥

प्रतिष्णात । इत्यत्र "प्रतेः°" [ २१ ] इत्यादिना षः ॥ सूत्र इति किम् । प्रतिस्नाताः ॥

प्रतिष्णान । इत्यत्र "स्नानस्य नाम्नि" [ २२ ] इति षः ॥

रथाश्वीत्कृतिविस्तारैर्वैष्टरा विष्टरं श्रियाम् ।
दधुर्वनर्पिविष्टारबृहतीगानविस्तरम् ॥ १०६ ॥

१०६. विष्टरस्य वृक्षस्येमे वैष्टरा रथाश्वीत्कृतिविस्तारैः कृत्वा वनर्पिभि. कर्तृभिर्विष्टारबृहत्याश्छन्दोभेदस्य यानि गानानि गीतयस्तेषां विस्तरं प्रथां दधुरधारयन् । किंभूतम् । श्रियां गाम्भीर्यमाधुर्यादिशोभानां विष्टरमासनं स्थानमित्यर्थः । वनर्पिच्छन्दोगानतुल्यानि चीत्कृतानि रथाश्वक्रुरित्यर्थः ॥

वैष्टराः । विष्टरम् । विष्टारबृहती । इत्यत्र "वे स्त्रः" [२३] इति षः ॥ नाम्नीत्येव । विस्तारैः । विस्तरम् ॥

अश्वकण्ठेषु मण्यात्योभिनिष्टानावलीनिभाः ।
शशंसुरभिनिस्ताना युधिष्ठिरगुणं नृपम् ॥ १०७ ॥

१०७. अश्वकण्ठेष्वभिनिष्टानावलीनिभा वर्तुलत्वेन विसर्गश्रेणीस-

१ बी °त्कृवि°. २ सी °गमान.°

१ डी °र्षि°. २ ए सी डी °तिसान°. ३ सी °त्ता नवर्पि°.

भिभा मण्यात्यो हेमशङ्खादिमयमणिपङ्क्तयो नृपं शशंसुस्तुष्टुवुरिव। इवोवसेयः। यतश्चलनेनान्योन्यं संसर्गादन्योन्येनैव च कर्त्राभिनिस्तन्यन्ते शब्दाय्यन्तेभिनिस्तानाः। किमिति शशंसुरित्याह। यतो युधिष्ठिरगुणं न्यायादिगुणैर्युधिष्ठिरतुल्यम्॥

गविष्ठिराभाः श्रीषेणहरिसिंहादयोब्रुडन्।
विष्वक्सेनोग्रसेनोरुसेनेत्र कटकोदधौ॥ १०८॥

१०८. गविष्ठिराभा न्यायादिना गविष्ठिरमुनिसमाः श्रीषेणहरिसिंहादयो राजानोत्र मूलराजीये कटकोदधावब्रुडन्नलेक्ष्यी बभूवुः। यतो विष्वक्सेनो विष्णुरुग्रसेनः कंसपिता द्वन्द्वे तयोरिवोर्व्यो बृहत्यः सेनाः कटकविशेषा यत्र तस्मिन्नतिमात्रानेकनृपसेनालयत्वादत्यन्तं महाप्रमाण इत्यर्थः॥

अभिनिष्टान। इत्ययम् "अभिनिष्टानः" [२४] इति निपात्यते॥ नाम्नीत्येव। अभिनिस्तानाः[3]॥

गविष्टिर। युधिष्टिर। इत्यत्र "गवि°" [२५] इत्यादिना षः॥

श्रीषेण। इत्यत्र "एत्यकः" [२६] इति षः॥ एतीति किम्। हरिसिंह[4]॥ अक इति किम्। विष्वक्सेन॥ नाम्नीत्येव। उरुसेने॥ नाम्यन्तस्थाकवर्गादित्येव। उग्रसेन॥

अग्रे रोहिणिषेणोभूत्पश्चाद्रोहिणिसेनजः।
पार्श्वे शतभिषक्सेनः स पुनर्वसुषेणकः॥ १०९॥

१०९. स्पष्टः। किं तु रोहिणिषेणादयो राजविशेषाः। तथाह्यातः

१ बी °वोत्रावब्राव°. २ सी °लक्ष्यी ब°. ३ सी °निष्टाना°. ४ प डी °सिंहः। अ°. ५ सी °स्याव°.

पुनर्वसुषेणः कश्चि पुनर्वसुषेणकः । यद्वा । पुनर्वसुषेणो मुख्योस्य "सोस्य मुख्यः" [७.१.१८८] इति के पुनर्वसुषेणकः सङ्घः । सह तेन वर्तते यः स शतभिषक्सेनो नृपः पार्श्वेभूत् । एकस्मिन्पार्श्वे शतभिषक्सेनोपरस्मिंश्च पुनर्वसुषेणकोभूदित्यर्थः ॥

रोहिणिषेणः[1] रोहिणिसेन । इत्यत्र "आदितो वा" [२७] इति वा षः ॥

इत इति किम् । पुनर्वसुषेणकः । पूर्वेण नित्यमेव । शतभिषक्सेनः ॥

विष्ठलं कुष्ठलं क्रान्त्वा परिष्ठलकपिस्थले ।
उष्ट्राः शमिष्ठलं जग्मुः कृष्ट्वा रूढान् कपिष्ठलान् ॥ ११० ॥

११० उष्ट्राः शमिष्ठलं शमीनां स्थलं जग्मुः शमीतरुपत्रप्रियत्वात् । किं कृत्वा । क्रान्त्वोल्लङ्घ्य । कानि । विगतं वीनां[2] वा पक्षिणां स्थलं विष्ठलं कुत्सितं कोर्वा पृथ्व्याः स्थलं कुष्ठलं परिगतमाम्रादिभिर्व्याप्तं स्थलं परिष्ठलं कपीनां स्थलं कपिस्थलं द्वन्द्वे ते च । तथा रूढांश्च-टितान्कपिष्ठलान्[3] । कपिष्ठलो नाम गोत्रस्याद्यः प्रवर्तयिता यस्तत्राप-त्यसंततिर्व्यपदिश्यते । उपचारात्तद्वंश्या अप्युच्यन्ते । तान् भटविशे-षान्कृष्ट्वा बलादाकृष्य ॥

विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठल । इत्यत्र "विकुशमि॰" [२८] इत्यादिना षः ॥

कपिष्ठलान्[4] । इत्यत्र "कपेर्गोत्रे" [२९] इति षः ॥ गोत्र इति किम् । कपिस्थले ॥

---

१ सी °ष्ठ च°.

---

१ ए सी डी °षेण । रो°. २ सी वीमा वा. ३ सी °ष्ठलो°. ४ बी °लान् ब°.

द्विष्ठत्रिष्ठेष्वपुर्गोष्ठेष्वाम्बष्ठ्याम्बष्ठताजुषः ।
पयोशङ्कुष्ठकाङ्गुष्ठं भूमिष्ठापष्ठपत्तयः ॥ १११ ॥

१११. भूमौ तिष्ठन्ति भूमिष्ठा अप मार्गं परिहृत्य तिष्ठन्त्यपष्ठाश्च ये पत्तयस्ते गोष्ठेषु गोकुलेषु पयो दुग्धमपुः पिबन्ति स्म । कथम् । शङ्कौ शल्याख्ये तिष्ठन्ति शङ्कुष्ठा अज्ञाताः शङ्कुष्ठाः शङ्कुष्ठका न तथाशङ्कुष्ठकाः पयःपानव्यापृतत्वेनाप्रहरणा अङ्गावयवे तिष्ठन्त्यङ्गुष्ठा अङ्गुल्यो यत्र पाने तत् । किंभूतेषु गोष्ठेषु । द्विष्ठत्रिष्ठेषु द्वयोः स्थानयोस्त्रिषु वा स्थानेषु तिष्ठत्सु । किंभूताः पत्तयः । अम्बायां मातरि तिष्ठन्ति "ङ्यापो बहुलं नाम्नि" [ २ ४.९९ ] इति ह्रस्वे अम्बष्ठो मातृमुखः । तस्य भावः ष्यणि आम्बष्ठ्यं तस्याम्बष्ठता । अम्बोपह्वकर्ता तस्यायं कार्यभूतः अणि आम्बोपह्वरूपो धर्मस्तत्र तिष्ठति "स्थाप॰" [ ५. १. १४१ ] इत्यादिना के आम्बष्ठस्तस्य भावोपह्वस्तां जुषन्ते सेवन्ते ये ते धनुर्विद्यादिकलाकुशला इत्यर्थः ॥

अनम्बाष्ठा असव्यष्ठकुन्तशेकुष्ठपाणयः ।
परमेष्ठादिविष्ठाजीन्पुञ्जिष्ठाः पथ्यकीर्तयन् ॥ ११२ ॥

११२. अनम्बाष्ठा अमातृमुखाः शस्त्रविद्यानिपुणा असव्यष्ठो दक्षिणपार्श्वस्थः कुन्तः प्रासो येषां तेसव्यष्ठकुन्ताः शेकुः पक्षिविशेषस्तत्प्रकृतिध्वजोप्यभेदात् शेकुः । "न नृपूजार्थ" [७.१.१०८] इत्यादिना काभावः । तत्रस्थः पाणिर्येषां ते शेकुष्ठपाणयः । वामपादमोचकमध्यस्थान् महाभटत्वसूचकान् शेकादिजन्तूपलक्षितान्ध्वजान्वामहस्तेनावष्टभ्नन्त इत्यर्थः । विशेषणकर्मधारयेसव्यष्ठकुन्तशेकुष्ठपाणयोश्वारोहसुभटाः पथि पुञ्जिष्ठाः समुदायस्थाः सन्तोकीर्तयन्नवर्णयन् ।

---

[1] बी °ङ्गावय° २ बी °पु च स्था° ३ ए सी डी °ग्थापत्या° ४ सी °स्थकु° ५ सी °दमौत्रक°

कान् । परमे पदे तिष्ठन्ति परमेष्ठा दिवि स्वर्गे तिष्ठन्ति दिविष्ठा द्वन्द्वे परमेष्ठदिविष्ठा रामचन्द्रादयस्तेषामाजीन् रणान् ॥

दुःषेधाग्निष्ठमाञ्जिष्ठदृष्टीन्बर्हिष्ठपाणयः ।
परिकारा अकुष्ठाङ्गा गजान्निन्युः सुषेधताम् ॥ ११३ ॥

११३. परिकारा हस्तिपरिचारका गजान्सुषेधतां प्रशस्तगतितां निन्युः । यतो दुष्टः सेधो गतिर्येषां ते दुःषेधास्तथाग्नौ तिष्ठन्त्यग्निष्ठा मञ्जौ शब्दे तिष्ठति मञ्जिष्ठा तया रक्ता माञ्जिष्ठी अग्निष्ठानामिव माञ्जिष्ठी आरक्ता दृष्टिर्येषां ते तथा । ततो विशेषणकर्मधारयः । तान्मदोद्रेकाद्दुष्टगतीनारक्ताक्षांश्च । किंभूताः सन्तः । अश्वारूढत्वेनाकुष्ठमभूमिष्टमङ्गं येषां ते । यद्वा । पादचारिणोपि हस्तिवेगगामित्वात्फालप्रदानैराकाशस्था इव तथा बर्हिःष्ठपाणयः पिञ्छिकाहस्ताः । परिकारा हि पिञ्छिकाहस्ता द्विधा हस्तिवेगजैत्राश्वारूढा हस्तिवेगजैत्राः पादचारिणश्च । त उभयेपि गजाग्रगा मदोद्रेकेण शीघ्रगं गजं पिञ्छिकाभीक्ष्णाच्छोटनैः खेदयित्वा मदं चोपशमय्य स्वभावगतिं नयन्तीति स्थितिः ॥

स्थपुटेष्वप्यनिःषेधैरदुःषन्धिपदैर्हयैः ।
रथाः सुषंधयो यान्तो निःषंधय इवाबभुः ॥ ११४ ॥

११४. रथा निःषंधय इव संधिरहिता इवाबभुः । यतः सुषंधयः सुश्लिष्टसंधानाः । तथा हयैः कृत्वा यान्तः । किंभूतैः । अदुःषंधीनि गुल्फप्रदेशे दुष्टसंधानरहितानि पदानि पादा येषां तैः । एतेन सुलक्षणत्वोक्तिः ।

१ पी डी °ष्ठ°. २ बी °दुष°.

१ बी सी °रिचार°. २ बी °गति नि°. ३ सी °ततो त°. ४ ए सी डी °श्वारूढत्वेना°. ५ सी °ष्ठि°. ६ ए सी डी °नि ये°.

अत एव स्थपुटेष्वपि विषमप्रदेशेष्वप्यनिःषेधैरसंवालितगतिभिः । सुषंधित्वेनास्खलितगतित्वेन चालक्ष्यसंधित्वादेककाष्ठमया इव रथा ज्ञाता इत्यर्थः ॥

निःषामाणो महामात्रैर्दुःषामाणः सुषामभिः ।
अभीरुष्ठानसैन्यस्य प्रष्ठतां निन्यिरे गजाः ॥ ११५ ॥

११५. साम्नः सामवेदान्निष्क्रान्ता निःषामाणः । गजा हि सामवेदात्प्रसूता इति गजलक्ष्मशास्त्रम् । गजाः सुषामभिः शोभनैः सामवाक्यैः कृत्वा शोभनसामोपायान्वितैर्वा महामात्रैर्हस्तिपकैः कर्तृभिर्निन्यिरे नीताः । काम् । अभीरूणां निर्भीकाणां स्थानं निवासो यत्सैन्यं तस्ये प्रष्ठतामग्रेसरत्वम् । यतो दुष्टमरुचितं साम सांत्वनमीप येषां तेतिमदोत्कटत्वेनात्यसहना इत्यर्थः । येपि गजा इव गजा वलिष्ठा दर्पिष्ठाश्च महायोधा युद्धप्रियत्वेन दुःषामाणो रुचितसामोपायाँ अत एव निःषामाणो मुक्तसामोपायाः स्युस्ते सुषामभिर्महामात्रैः प्रधानैर्युद्धार्थमभीरुष्ठानसैन्यस्य प्रष्ठतां स्वर्णपट्टबन्धेन मुख्यतां नीयन्त इत्युक्तिः ॥

गोष्ठेषु । अनम्बाष्ठाः । "ङ्यापो बहुलं नाम्नि" [२. ४. ९९] इति ह्रस्वत्वेन आम्बष्ठ्य । श्लिष्टनिर्देशादुभाभ्यामपि स्यात् । आम्बष्ठता । सव्यष्ठ । अपष्ठ । द्विष्ठ । त्रिष्ठेषु । भूमिष्ठ । अग्निष्ठ । शेकुष्ठ । शङ्कुष्ठ । कुष्ठ । अङ्गुष्ठम् । माञ्जिष्ठ । पुञ्जिष्ठाः । बर्हिःष्ठ । परमेष्ठ । दिविष्ठ । इत्यत्र "गोम्बाम्ब०" [३०] इत्यादिना षः ॥

---

१ सी °णसु°.

---

१ बी °रस्खलि°. २ बी °स्य पृष्टता°. ३ बी °याऽत°. ४ बी °त्वे आ°. ५ बी °ष्ठ । मा°. ६ बी °र्हिष्ठ° । ७ बी °गोम्बेला°.

अनिःषेधः । दुःषेधं । सुषेधताम् । निःषधयः । दुःषधि । सुषंधयः । निःषामाणः । दुःषामाणः । सुषामभिः । इत्यत्र "निर्दुःसोः°" [३१] इत्यादिना षः ।

प्रष्टताम् । इत्यत्र "प्रष्टोऽग्रगे" [३२] इति षो निपात्यः ॥

भीरुष्ठान । इत्यत्र "भीरुष्ठानादयः" [३३] इति षो निपात्यः ॥

रूढारुष्टोर्जद्रुपुष्ठं सुतेजस्ता बहिष्टराम् ।
सुदोस्त्वं चेति निष्ट्यानामर्घति स्म चतुष्टयम् ॥ ११६ ॥

११६. बहिष्टरामतिशयेन बाह्यदेशे वर्तमानानां निर्गता वर्णाश्रमेभ्यो "निसो गते" [६. ३. १८] इति त्यचि निष्ट्यास्तेषां निष्ट्यानां चण्डालानां चतुष्टयं महाभटत्वसूचकत्वादर्घति स्म बहुधनादिना मान्यमभूत् । अर्घधातुरगणपठितः । किं तदित्याह । रूढारुष्टा रूढाक्षत्रणतोर्जद्रुपुष्ठं बलिष्ठशरीरता सुतेजस्ता शोभनप्रतापता शोभनकान्तिता वा सुदोस्त्वं च प्रौढभुजपराक्रमता चेति ॥

स्वाम्याज्ञयाथ सूर्याचिष्टो निष्टप्तवपुष्टमाः ।
जम्बूमाल्यां सरित्यूपुर्द्विषन्निस्तापिनो नृपाः ॥ ११७ ॥

११७. अथ द्विषन्निस्तापिनः शत्रूनभीक्ष्णं सन्तापयन्तो नृपाः स्वाम्याज्ञया मूलराजादेशेन जम्बूमाल्यामेवंनाम्न्यां सरिति नद्यामूपुर्वसन्ति स्म । यतः सूर्याचिष्टः । अत्राद्यादित्वात्तस् [७. २. ८४] । रविकिरणैर्निष्टप्तं संतप्तं वपुष्टममतिप्रशस्यं वपुर्येषां ते ॥

---

१. बी °पुद्रिग°.

---

१ ए सी डी '५. । सु° ।. २ बी °निप°. ३ सी °दारू°. ४ बी °ष्टुप° ष°. ५ बी सुज प°. ६ सी °स्तान°. ७ सी °तप्तव°.

अथासर्गसमाप्ति सैन्यावासनं वर्णयति ।

सैनिकानां श्रमं जक्षुः सुष्वापयिषवो नु तान् ।
सिस्वेदयिषविनांशूनासिस्वादयिषवो द्रुमाः ॥ ११८ ॥

११८. द्रुमाः सैनिकानां श्रमं मार्गखेदं जक्षुरभक्षयन्नपनिन्युरित्यर्थः । किंभूताः सन्तः । सिस्वेदयिषवोत्युष्णत्वेन प्रस्वेदयितुमिच्छवो य इनांशवो रविकिरणास्तानासिस्वादयिषवः सान्द्रपत्रप्रकरेण भक्षयितुमिच्छवोपनयन्त इत्यर्थः । अत एव तान्सैनिकान्सुष्वापयिषवो नु शाययितुमिच्छव इव । ये हि सुष्वापयिषवो भृत्याः स्युस्तेपि पटकुटीबन्धनेन छायाकरणाद्रविकिरणान्निवारयन्तो मार्गश्रममपनयन्ति ॥

तुष्टूषुर्वीचिनादैः किं प्रोत्सिसाहयिषुः किमु ।
वपुः सिसिक्षतो नागान्नद्यम्भोभिरसीषिचत् ॥ ११९ ॥

११९. अङ्गं सिसिक्षतः सिस्नपयिषून्नागानम्भोभिः कर्तृभिर्नद्यसीषिचदस्नपयत् । कीदृक्सती । वीचिनादैः कृत्वा किं तुष्टूषुः[1] किं नागान्स्तोतुमिच्छन्ती[2] स्तुवतीवेत्यर्थः[3] । किमु किं वा प्रोत्सिसाहयिषुः श्रान्त्वसन्तप्तत्वात्स्नानार्थं प्रोत्सहमानान्नागान्प्रयोक्तुमिच्छुः प्रोत्साहयन्तीवेत्यर्थः[4] । जनन्यादिरपि हि स्तुवती प्रोत्साहयन्ती च वालकान्स्नपयति ॥

सुषुप्सन्तं न तुष्टाव कंचित्कोपीत्यतर्जयत् ।
किं सोषुपिषमाणे त्वं न्यतिसुषुपिषे प्रभौ ॥ १२० ॥

१२०. सुषुप्सन्तं शयितुमिच्छन्तं स्वपन्तमित्यर्थः । कंचिद्भृत्यं कोपि भृत्यो न तुष्टाव किंत्वतर्जयत्[5] । कथमित्याह । प्रभौ स्वामिनि सोषुपिषमाणेत्यर्थं स्वप्तुमिच्छति किं[6] त्वं न्यतिसुषुपिषे प्रभुसंबन्धि[7]-

१ डी °ष्टूषुः किं°. २ °सी °न्ती स्तुव°. ३ बी डी °वन्तीवे°. ४ बी सी डी °वन्ती प्रो°. ५ सी °किं तु त°. ६ सी °किं तु न्य°. ७ ए सी डी °बन्धेस्वा°.

स्वापक्रियाव्यतिहारेण किमिति सुप्त इति । विभौ हि सोपुपिषमाणे भृत्यस्य स्वापोविनयहेतुत्वेनायुक्तः ॥

सुसोपुपिषमाणोपि कोपीनाज्ञामधीपिपन् ।
नासिषञ्जयिषच्चक्षुः सिसञ्जयिषुरिन्धनम् ॥ १२१ ॥

१२१. कोपि भृत्यः सुसोपुपिषमाणोपि श्रान्तत्वेनात्यर्थं स्वप्तुमिच्छन्नपि चक्षुर्नासिषञ्जयिषन्मेलयितुं नैच्छन्न सुप्त इत्यर्थः । यत इन्धनं सिसञ्जयिषुर्मेलयितुमिच्छन्मेलयन्नित्यर्थः । एतदपि कुत इत्याह । यत इनाज्ञामनेकग्राहकसद्भावेनेन्धनं पश्चाद्दुर्लभं भविष्यत्यतोधुनैव त्वया संग्राह्यमित्थंरूपं प्रभुनिदेशमधीपिपन् स्मर्तुमिच्छन्स्मरन्नित्यर्थः । एतेन भृत्यस्यात्यन्तं स्वामिभक्तिरुक्ता ॥

रुदाकृष्टा । वपुष्टम् । सूर्याचिष्टः । निष्टयानाम् । चतुष्टयम् । बहिष्टराम् । यपुष्टमाः । इत्यत्र "ह्रस्वान्नामिनस्ति" [३४] इति षः ॥ ह्रस्वादिति किम् । सुदोस्तम् ॥ नामिन इत्येव । सुतेजस्ता ॥

निष्टस । इत्यत्र "निसः०" [३५] इत्यादिना षः ॥ अनासेवायामिति किम् । पुनःपुनः करणे मा भूत् । द्विषन्निस्तापिनः ॥

जक्षुः । ऊषुः । इत्यत्र "घस्वसः" [३६] इति षः ॥

सुष्वापयिषवः । सुष्पु । इत्यत्र "णिस्तोरेवा०" [३७] इत्यादिना षः ॥ स्वदादिपर्युदासः किम् । आसिस्वादयिषवः । सिस्वेदयिषु । प्रोत्सिसाहयिषुः ॥ स्तौतिसाहचर्यात्स्वदादिपर्युदासेन सदृशग्रहणाच्च ण्यन्तानामपि षोपदेशानामेव ग्रहणम् । तथा च कृतत्वात्सकारस्य "नाम्यन्तस्था०" [२. ३. १५] इत्यादिना सिद्धे णिस्तोरेव षणि षत्वं नाम्यस्य । तेनेह न

सूत्रेणैव सिद्धे नियमार्थं वचनम् । णिस्तोरेव षणि षत्वं नान्यस्य । तेनेह न

१ ए सी 'हि सुषपि'. डी हि सुपुपि'. २ सी 'वेनन्ध'. ३ बी 'त्यन्तस्वा'.
४ ए सी 'शामिनस्ति'.

स्याद् । सिसिक्षतः । एवकारः षण्येव णिस्तोरिति विपरीतनियमनिवृत्त्यर्थस्तेने- हापि भवति । असीषिचत् । तुष्टाव । षत्वं किम् । सुसुप्सन्तम् ॥ नकारः किम् । स्यतिसुषुपिषे । नात्र सन् किं तु परोक्षा से ॥ कथमधीषिषन् । षणि निमित्ते धातोः षत्वनियम उक्त इह तु सन एव द्विरुक्तस्य षत्व न धातोरिति न प्रति- षेधः । अत्र इं दु द्रु शुं श्रु गतौ ज्ञानेर्थे इणक गतौ वा । अज्ञानेर्थे हीणो गमादेशः स्यात् ॥ सोषुपिषमाण इत्यत्र यङि षत्वं पश्चात्सन्निति न प्रतिषेधः । येषां तु दर्शने द्वित्वेपि पुनः सनि द्विरुक्तिस्तन्मते सुसोषुपिषमाण इत्यत्र षणि सुशब्दा- त्परस्य सस्य षत्वं न भवत्येव ॥

असिषञ्जयिषत् सिसञ्जयिषुः । इत्यत्र "सञ्जेर्वा" [३८] इति वा षः ॥

हयाननभिषुण्वन्तोभ्यषुण्वन्केचिदम्भसि ।
घर्माभिषूयमाणांश्चाभ्यषुवन्सुहृदो मुहुः ॥ १२२ ॥

१२२. केचिदश्वपालाः शोभनावर्तान्वितत्वेन शोभनं हृद्वक्षो येषां तान्सुहृदो हयान्घर्माभिषूयमाणानातपेनाक्रम्यमाणान्सतो मुहुर्वारं- वारमम्भसि जलेभ्यषुण्वन्नस्नपयन् । अन्तर्भूतणिगर्थोत्र सुग् । किंभूताः सन्तोनभिषुण्वन्तो गाढजलप्रहारैरपीडयन्तः । एतेन स्नापनकौश- लोक्तिः । स्वयमस्नान्तो वा । एतेन चैषामात्मनोपि हयेषु बाढं वात्स- ल्यमुक्तम् । तथा सुहृदो मित्राणि घर्माभिषूयमाणानत एव हयन्तीति हयास्तान् क्लाम्यतः सतोम्भस्यभ्यषुवंश्च क्षिप्तवन्तश्च ॥

कर्माभिष्टुत्यमभ्यस्यन्येभिष्यत्यनिले श्रमम् ।
भृत्यांस्ताननभिष्टोभान्स्वामिनोभ्यष्टुवन्मुदा ॥ १२३ ॥

१२३. अनिले श्रमं मार्गखेदमभिष्यति नदीशीकरोन्मिश्रत्वेना-

---

१ बी °भ्यष्यन्ये°. २ ए सी °भ्यष्टव°.

---

१ बी °शनार्थे°. २ ए सी °माणो इ°. डी °माणे इ°. ३ बी °यशि ष°. ४ बी °ते नैषा° ५ सी °मान°. ६ सी °भ्यक्ष.

ति शीतत्वादपनयति स्मेति पुनर्नवीभूताङ्गत्वेनाभिष्टुत्यं प्रशस्यं कर्म क्रियां ये भृत्या अभ्यष्टवन्समापयंस्तानभिष्टोभः स्तम्भो जाड्यं तेन रहितान् दक्षान्भृत्यान्स्वामिनो मुदाभ्यष्टुवन्प्रशशंसुः। भृत्या हि कर्मान्त एव प्रशस्यन्त इति नीतिः। यदुक्तम्।

प्रत्यक्षे गुरवः स्तुत्याः परोक्षे मित्रबान्धवाः।
कर्मान्ते भृत्यवर्गाश्च पुत्रा नैव मृताः स्त्रियः॥ १॥

अभ्यष्टोभन्त दूष्याणि क्ष्मां केप्यभिसुसूषवः।
अभ्यसुरुत्पत्स्वामीति तं के चनाभ्यसूसवन्॥ १२४॥

१२४. केपि भृत्याः क्ष्मामभिसुसूषवो दाहोपशमाय शीताम्भोभिः सेक्तुमिच्छवो दूष्याणि पटकुटीरभ्यष्टोभन्तावध्नन्। दूष्यबन्धाभावे हि क्ष्मा सिक्ताप्यातपेन शुष्येत्। तथा के चन भृत्याः स्वाम्यभ्यसुसूप- त्स्नातुमैच्छदिति हेतोस्तं स्वामिनमभ्यसूसवन् स्नपितवन्तः॥

शाखामभिसिसासन्तमभिसोसूय्य सिन्धुरम्।
महामात्रोभितुस्ताव ततः स्तम्भेभितुस्तुभे॥ १२५॥

१२५. शाखामभिसिसासन्तं विनाशयितुमिच्छन्तं सिन्धुरमभि- सोसूय्य शाखाभञ्जनायात्यर्थं प्रेर्य महामात्रो हस्तिपकोभितुस्ताव। अहो सिन्धुरस्य कीदृक्सामर्थ्यमिति प्रशशंस। ततः स्तम्भे वृक्षप्रका- ण्डेभितुस्तुभे बबन्ध। मदोत्कटतया बन्द्धुमशक्यं सिन्धुरमेवं स्तवनेन सान्त्वयित्वा स्तम्भे बद्धवानित्यर्थः। योपि महामात्रः प्रधानं महामा- त्यादिः सोपि सिन्धुरतुल्यं दर्पिष्ठं बलिष्ठं रौद्रं च नृपादिमन्याये प्रव- र्तमानं प्रेर्य स्तवनेन च विश्वास्य बध्नाति॥

१ बी 'ऽभ्यष्ट्वन्'. २ बी प्रभस्य°. ३ ए सी डी °न्वन्°. ४ सी डी 'ब्दुम'. ५ बी 'भ्रम'.

(सु।) अनभिषुण्वन्तः । अभ्यषुण्वन् ॥ सुव । अभिषूयमाणान् । अभ्यषुवन् । सो । अभिष्यति । अभ्यष्यन् ॥ स्तु । अभिष्टुत्य । अभ्यष्टुवन् ॥ स्तुभ् । अनभिष्टोभान् । अभ्यष्टोभन्त । इत्यत्र "उपसर्गात्०" [३९] इत्यादिना षः ॥ अद्वित्व इति किम् । अभिसुसूषवः । अभ्यसुसूषत् । अत्र पूर्वसकारस्य षत्वं न भवति । मूलधातोस्तु यथाप्राप्तं षत्वं भवत्येव ॥ केचित्तूपसर्गपूर्वाणां सुनोत्यादीनां पञ्चानामपि सन्नन्तस्तौतिवर्जितानां द्वित्वे सति मूलप्रकृतेरपि षत्वं नेच्छन्ति । अभ्यसूसवन् ॥ सुव । अभिसोसूय्य ॥ सो । अभिसिसासन्तम् ॥ स्तु । अभितुस्ताव ॥ स्तुभ । अभितुस्तुभे ॥

अभिषेणयद्भिरनभिषिषेणयिषुश्रिता ।
क्ष्माधितष्ठे सप्रतिष्ठैर्या प्रत्यष्ठायि वेत्रिभिः ॥ १२६ ॥

१२६. अनभिषिषेणयिषुश्रितापि । अपिरत्रावसेयः । अनभिषिषेणयिषवो वणिगादयस्तैरधिष्ठितापि सा क्ष्माभिषेणयद्भिः सेनयाभियाद्भिर्नृपादिभिरधितष्ठे । या वेत्रिभिः प्रत्यष्ठायि वासाय निर्णीतादिष्टा वा । न तु हठान्निःसत्वान्वणिगादीन्निराकृत्य स्वयमेव वासभूः परिगृहीतेत्यर्थः । यतः किंभूतैरुभयैरपि । सप्रतिष्ठैः प्रतिष्ठा गौरवस्थित्योः । राजमान्यत्वाद्गौरवार्हैर्वेत्रिभिर्नृपैश्च समर्यादैः ॥

यान्नाभ्यषेणयत्कोप्यभ्यपिषेणयिषन्न च ।
निषिषेधानिषिद्धाज्ञो द्वास्थस्तानसमञ्जसात् ॥ १२७ ॥

१२७. बलादतिप्रचण्डत्वेन यान्नृपान्कोपि नाभ्यषेणयन्नाभ्यषिषेणयिषच्च सेनयाभियातुमपि नैच्छत्तान्नृपाननिषिद्धाज्ञो मूलराजव्यापारि-

---

१ ए सी डी °क्ष्माभित°.

---

१ ए सी °ण्वत । अ°. २ ए सी डी °भ्यस्यन्°. ३ बी °सुवः । अ°. ४ डी °याद्भि°.

त्वेनाप्रतिहतादेशो द्वास्थः प्रतीहारोसमञ्जसादन्यायान्निषिषेध । एतेन मूलराजस्यात्यन्तमाज्ञैश्वर्यमुक्तम् ॥

भुवि द्विपान्यपेधन्ये दिग्गजान्यपिषेधिषन् ।
तरून्मूर्धाभिषिक्तेभास्ते न्यषिञ्चन्मदाम्भसा ॥ १२८ ॥

१२८. ते मूर्धाभिषिक्तेभाः पट्टहस्तिनस्तरून्मदाम्भसा न्यषिञ्चन्नस्नपयन । ये भुवि द्विपान्यपेधन् । मदोल्वणतया सर्वगजजैत्रत्वाद्भुवि प्रतिद्विपप्रचारं ररक्षुरित्यर्थः । तथा दिग्गजान्यपिषेधिषन्न्यकर्तुमैच्छन् । एतेन स्वर्गेपि येषां प्रतिमल्ला द्विपा न सन्तीत्युक्तम् ॥

पादौ निपिपिचुस्तोयैर्न्यपिपिक्षंश्च सर्पिषा ।
श्रमाभिषङ्गान्मृद्वङ्ग्योभ्यषिषङ्क्षन् जलार्द्रया ॥ १२९ ॥

१२९. मृद्वङ्ग्य. स्त्रियः श्रमाभिषङ्गान्मार्गजखेदसंबन्धाद्धेतोः पादौ जलैर्निपिपिचुः क्षालितवत्यः । सर्पिषा घृतेन न्यषिपिक्षंश्च सेक्तुमैच्छंश्च । अभ्यङ्क्तुमैच्छन्नित्यर्थः । तथा जलार्द्रया जलक्लृतवस्त्रेणाभ्यषिषङ्क्षन्संबन्धयितुमैच्छंश्च । स्नानघृताभ्यङ्गजलार्द्रावन्धनैर्हि शीतक्रियाभिः श्रम उपशाम्यति ॥

वणिजोभ्यपजन्सौस्थ्यं परिष्टाप्यापणान्पथि ।
अनतिस्थितयस्तत्राभिषिषङ्गुः क्रयार्थिनः ॥ १३० ॥

१३०. स्थितिं नातिक्रान्ता अनतिस्थितयो यथोचितस्थानस्थाः समर्यादा वा वणिजः पथि आपणान् हट्टान्परिष्टाप्य संस्थाप्य विस्तार्य सौस्थ्यमभ्यपजन्नाश्रिताः । व्यवहारप्रवर्तनेन सुखिता बभूवुरित्यर्थः ।

१ बी °दी न्यषि°. २ ए सी डी °न्मूर्धाभि°. ३ बी °निषेध°.

१ ए सी डी °मृद्वङ्ग्य°. २ सी °जखेद°. ३ सी डी °च लक्तु°.

तथा क्रयार्थिनः क्रायकास्तत्र तेष्वापणेष्वभिपषञ्जुः क्रयार्थं संयुयुजुः । एतेन सैन्येपि नगर इव सर्वोपि क्रयविक्रयव्यवहारोभूदित्युक्तम् ॥

स्था । सम्प्रतिष्ठेः । अधितष्ठे । प्रत्यष्ठायि ॥ सेनि । अभिषेणयद्भिः । अनभिषिषेणयिषु । अभ्यषेणयत् । अभ्यषिषेणयिषत् ॥ सेध । निषिद्ध । निषिषेध । न्यषेधन् । न्यषिषेधिषन् ॥ सिच[3] । अभिषिक्त[4] । निषिषिचुः । न्यषिञ्चन्[5] । अषिषिक्षन्[6] ॥ सञ्ज[7] । अभिषङ्गात् । अभिषषञ्जुः । अभ्यषजन् । अभ्यषिषङ्क्षन् । अत्र "स्थासेना°" [४०] इत्यादिना षः ॥ ण्यन्तानामपि भवति । परिष्ठाप्य ॥ उपसर्गादित्येव । सौस्थ्यम् । पूजार्थत्वान्न सुरुपसर्गः ॥ तथा येन धातुना युक्ताः प्रादयस्तमेव प्रत्युपसर्गसंज्ञा इति अनतिस्थितय इत्यत्र षत्वं न ॥

विष्टब्धदंष्ट्रान्निस्तब्धा व्यतस्तम्भन् श्वभिः किरीन् ।
व्यष्टम्भन्केप्यथ प्रासैर्वितष्टम्भुः शरैः परे ॥ १३१ ॥

१३१. निस्तब्धा ऊर्जस्वलाः केचिद्भटा विष्टब्धदंष्ट्रान् दृढदाढान्किरीन् शूकरान् श्वभिः कर्तृभिर्व्यतस्तम्भन्स्तम्भयामासुः । अथ श्वभिः स्तम्भनानन्तरं केपि भटाः प्रासैः कुन्तैर्व्यष्टम्भन् कीलन्ति स्म । परेन्ये च भटाः शरैर्वितष्टम्भुः ॥

प्रतिस्तब्धा अवाष्टम्भन्नेकेवष्टब्धशाखिनः[1] ।
अवष्टम्भमवष्टभ्यावतष्टम्भुस्तटीः परे ॥ १३२ ॥

१३२. एके भटा अवष्टब्धशाखिनो नद्याः समीपवर्तितरूनवाष्टम्भमाश्रिताः । यतः प्रतिस्तब्धा वलिष्ठाः । वलिष्ठत्वेनान्यान् जना-

---

१ सी °ष्टब्ध°.

---

१ बी °थानतिस्थितः क्र°. २ सी °यार्थे म°. ३ बी सिच्. सी सिञ्च. ४ डी °षिक्तम् । नि°. ५ डी °न् । स°. ६ ए °षिङ्क्षन् ।. ७ बी सी सञ्ज । अ°

नपाकृत्य नदीनिकटद्रुमानाश्रिता इत्यर्थः । तथा परेवष्टम्भं चित्तस्थैर्यमवष्टभ्याश्रित्य तटीरवतष्टम्भुश्छायाद्युपभोगायाश्रिताः । अपायबहुले हि नदीतटे चित्तावष्टम्भेनैवावस्थीयते ॥

सादिवर्ग उपष्टब्ध उपस्तब्धांस्तुरङ्गमान् ।
अवातस्तम्भदावासपार्श्वेवस्तब्धकन्धरान् ॥ १३३ ॥

१३३. उपष्टब्ध ऊर्जस्वी सादिवर्गोश्ववारौघस्तुरङ्गमानावासपार्श्वे स्वाश्रयसमीपेवातस्तम्भदाश्रयं ग्राहितवान् । कीदृशान् । उपस्तब्धान्बलिष्ठांस्तथावस्तब्धकन्धरानुन्नतग्रीवान् ॥

विष्टब्ध । वितष्टम्भु. । व्यष्टम्भन् । इत्यत्र "अटप्रति°" [४१] इत्यादिना ष. ॥ अटप्रतिस्तब्धनिस्तब्ध इति किम् । व्यतस्तम्भन् । प्रतिस्तब्धाः । निस्तब्धा. ॥

आश्रये । अवष्टभ्य । अवतष्टम्भु । अवाष्टम्भन् ॥ ऊर्जे(र्जे?) । अवष्टम्भम् ॥ अविदूरे । अवष्टब्ध । इत्यत्र "अवाचा°" [४२] इत्यादिना षः ॥ चकारोट इत्यस्यानुकर्षणार्थेनुक्तसमुच्चयार्थश्च । तेनोपष्टब्ध इत्यत्रोपादपि । उपवादित्यकृत्वा चकारेण सूचनमनित्यार्थम् । तेनोपस्तब्धानित्यपि ॥ आश्रयादिष्विति किम् । अवस्तब्ध ॥ अट इत्येव । अवातस्तम्भत ॥

अवपिष्वणिषुः कोपि विषष्वाण करम्भकम् ।
त्वं विष्वणावष्वण त्वं चेत्यवापिष्वणत्परान् ॥ १३४ ॥

१३४. अवपिष्वणिषुर्भोक्तुमिच्छुः सशब्दं बुभुक्षुर्वा भुञ्जानः कंचिच्छब्दं चिकीर्षुर्वा कोपि भटः करम्भकं दधिसक्तून्विषष्वाण बुभुजे सशब्दं भुक्तवान्वा भुञ्जानः कंचिच्छब्दं चक्रे वा । एवमन्यत्राप्यर्था आविर्भावनीयाः । श्रमतप्ताङ्गा हि बुभुक्षवः शीतत्वात्करम्भं भुञ्जते । तथा त्वं विष्वण भुङ्क्ष्व त्वं चावष्वण भुङ्क्ष्वेत्येवंप्रकारेण

---

१ प सी. आविभा°. २ बी °न. विभि°. ३ सी भुक्ष त्व

परानन्यानपि करम्भमवाषिष्वणदभोजयत् । एतेनास्यातमंभरित्वमपास्तम् ॥

योऽद्रौ न्यषिष्वणज्जायां स्वयं चैलामवाष्वणत् ।
सोऽवस्वनन्करी बद्धो न्यष्वणच्छष्पपूलिकाः ॥ १३५ ॥

१३५. यः करी अद्रौ विन्ध्यशैले जायां करेणुकामेलां सुगन्धितरुविशेषं न्यषिष्वणद्भोजितवान् । स्वयं च य एलामवाष्वणदभुङ्क्त । स्वभार्यान्वितो य एलां भुक्तवानित्यर्थः । एतेनास्यातिसुखितत्वमुक्तम् । स करी बद्ध आलानस्तम्भे निगडितोऽवस्वनन्नवबद्धत्वेन बन्धासहत्वादाक्रन्दन्सन् शष्पपूलिका नवतृणपूलान् न्यष्वणदभुङ्क्त । एतेन सुखदुःखावस्थे महतामपि भवत इत्युक्तम् ॥

उष्ट्रान्विस्वनतो भाराद्विषण्णानौष्ट्रिको जनः ।
न्यषीषदन्निषिषत्सून्निषसाद न तु स्वयम् ॥ १३६ ॥

१३६. औष्ट्रिको जन उष्ट्रान्न्यषीषददुपावेशयत् । किंभूतान्सतः । भाराद्धेतोर्विषण्णान् श्रान्तानत एव निषिषत्सूनुपवेष्टुमिच्छून् । तथा विस्वनत आरटतः । न तु स्वयं विषसादोष्ट्रसंबन्धिभिर्भारावतारणचार्यानयनादिभिरनेकव्यापारैर्व्यापृतत्वान्न पुनरात्मना भूम्यामुपाविशन् । एतेनौष्ट्रिकाणामुष्ट्रेष्वतिहितत्वोक्तिः ॥

न्यषीदत्प्रतिसन्नोऽर्भोऽम्बामपि प्रत्यसीषदत् ।
साप्यप्रतिसिषत्सुं तत्पितरं प्रत्यसीसदत् ॥ १३७ ॥

१३७. प्रतिसन्नः श्रान्तोऽर्भो बालको न्यषीददुपाविशत् । अम्बा-

१ बी °दन् ।

१ सी °मुक्त । स्व°.

मपि मातरमपि प्रत्यसीषदद्वुपवेशितवान् । साप्यम्बाप्यप्रतिसिषत्सुमनुपविविक्षुं तत्पितरमर्भजनकं प्रत्यसीषदत् ॥

श्रमान्प्रतिसिसत्सन्तीः परिष्वक्ताब्जिनीदलाः ।
योषितोभ्यष्वजन्तेशाः प्रतिषिष्वङ्क्षवोम्भसि ॥ १३८ ॥

१३८. श्रमात्प्रतिसिसत्सन्तीरुपविविक्षूरतिश्रमातुरा इत्यर्थः । अत एव परिष्वक्ताब्जिनीदलाः श्रमसन्तापोपशमायाश्लिष्टपद्मिनीपत्रा योषित ईशा भर्तारोभ्यष्वजन्तालिङ्गन्ति स्म यतोम्भसि जले प्रतिषिष्वङ्क्षवो योषितः सम्बद्धाः कर्तुमिच्छवः । सन्तप्तत्वादात्मना सह सिक्तपयिषव इत्यर्थः ॥

येभिषस्वजिरे दूर्वां पर्यषेवन्त चान्तिकम् ।
मुदाश्वांस्तेभ्यषस्वञ्जन्मन्दुरापरिषेवकान् ॥ १३९ ॥

१३९. ये स्थानपाला दूर्वामभिषस्वजिरे भक्षणायाश्वैः सहाभिसंबध्नन्ति स्म । ये चान्तिकमश्वानां समीपं मक्षिकाभक्षणाद्युपद्रवोपनयनस्थानशुचीकरणादिशुश्रूषया पर्यषेवन्त शिश्रियुस्ते मन्दुरापरिषेवकानश्वशालासंश्रयिणाश्वान्मुदा कक्ष्याभ्यषष्वञ्जन्समयोजयन् हृष्टी प्रकृतिरित्यर्थः । ये हि येषां कृते भोज्यं मीलयन्ति भक्तत्वेनान्तिकं सेवन्ते च ते भृत्यास्तांस्वामिनो विनीतत्वेन हर्षयन्ति ॥

कश्चिन्न्यषेवनधांसि चुल्लीं परिषिषेविषुः ।
पिष्टं निषेवते स्मान्यो मण्डकानिषिषेविषुः ॥ १४० ॥

१४०. कश्चित्कान्दविकश्चुल्लीमान्तिकां परिषिषेविषुः संधुक्षणेन

१ बी °भी ष°.

१ बी °समया°. २ सी °ष्वक्षवो°. ३ बी °वान°. ४ डी °कान् ता°. ५ ए °अन्. ६ सी °स्थादि°. ७ ए °धुली--प°. बी °धुल्ली प°. सी °धुल्लि--न°.

सेवितुमिच्छुरेधांसीन्धनानि न्यषेवत मेलनभङ्गादिना सेवते स्म । तथान्यो मण्डकान्पोलिका निषिषेविषुश्चिकीर्षुरित्यर्थः । पिष्टं गोधूमादिचूर्णं छेदनमर्दनादिना निषेवते स्म ॥

न्यषेवत पयः कश्चित्किलाटं विषिषेविषुः ।
माषान्प्रतिसिषेवेन्यो वटकानि विषेवितुम् ॥ १४१ ॥

१४१. कश्चित्किलाटं क्षीरविकारविशेषं विषिषेविषुश्चिकीर्षुरित्यर्थः । पयो दुग्धं न्यषेवत संस्कारविधानादिना सेवते स्म । अन्यश्च वटकानि विषेवितुं कर्तुं माषान्प्रतिसिषेवे मर्दनसंस्कारादिनासेवत ॥

देवं प्रतिसिसेवे च कश्चित्परिषिताञ्जलिः ।
निषितो भक्तिनिषयैर्विषयाविषितोद्यमः ॥ १४२ ॥

१४२. कश्चिच्च धार्मिको देवमर्हदाद्यभीष्टदेवतां प्रतिसिसेवे पूजादिना पर्युपासांचक्रे । कीदृक्सन् । भक्तिः श्रद्धा सैवान्यव्यापारनिवर्तकत्वान्निसीयत एभ्य इत्यपादानेल्लि निषया बन्धनानि तैर्निषितोबद्धोत एव विसिन्वन्ति यूनां मनांस्येष्विति "पुंनाम्नि घ." [५.३.१३१] इति घे विषयाः शब्दरूपरसगन्धस्पर्शास्तेष्वविषितोबद्धोकृत उद्यमो व्यापारो येन स एकाग्रचित्त इत्यर्थः । अत एव च परिषिताञ्जलिर्बद्धकरकुड्मलः ॥

बद्धा भृतिपरिषयैः केचिन्निःसितपक्तयः ।
विषीव्यन्ति[2] स्म निष्यूतं[3] परिष्यूत[4]दृशः पुटान् ॥ १४३ ॥

१४३. निःसितपक्तयः समर्थितपाकाः केचित्कान्दविकाः सुभटादिभोजनार्थं पुटान्वटादिपत्रमयान्भाजनभेदान्घृतादिद्रवद्रव्यागलनाय

१ सी °त्किटला वि°. २ बी व्यषी°. ३ बी निष्ठ्यूत. ४ बी °रिष्ठ्यूत°.

१ ए सी °पपर°. २ ए °स्पर्शास्ते°.

निरन्तरं स्यूतं सेवनं यत्र तन्निष्यूतं यथा स्यादेवं विषीव्यन्ति स्म तृणैः प्रोयन्ते स्म । किंभूताः सन्तः । परिष्यूता इव परिष्यूता दृशो येषां ते पुटेष्वत्यन्तं न्यस्तदृशः । यतो भृतिर्मूल्यं सैव वशीकारकत्वात्परिषया बन्धनानि तैर्बद्धा वशीकृताः । वशीकृता हि दुष्करमपि कुर्वन्ति ॥

वृक्षा विषेहिरे भारं प्रहारं परिषेहिरे ।

निषेहुश्चानिसोढव्यं विष्किरैरपरिष्कृताः ॥ १४४ ॥

१४४. विष्किरैः पक्षिभिरपरिष्कृता अपरिवारिताः । सैनिकभयेन मुक्ता इत्यर्थः । वृक्षा भारं वर्मपल्ययनादिसंबन्धिनं विषेहिरे । तथा प्रहारमिन्धनाद्यर्थं कुठारादिघातं परिषेहिरे । तथानिसोढव्यं सोढुमशक्यं शाखाभङ्गादि च निषेहुः । यौजादिकस्य विकल्पेन ण्यन्तस्य सहो रूपमिदम् । येप्यपरिष्कृता एकाकिनो रङ्काः स्युस्तेपीन्धनादीनां भारं चपेटादिप्रहारं चानिसोढव्यं दुर्वाक्यादि च सहन्त इत्युक्तिः ॥

विसोढं परिसोढव्यं कष्टं मातो विसीषहः ।

निसीषिवोर्करुग्भिर्मेति व्युत्त्या कोप्यदात्स्थुलम् ॥१४५॥

१४५. कोपि स्त्रीवश आतपकष्टनिवारणाय स्थुलं पटकुटीमदादर्पयामास । कया । इत्येवंविधया व्युत्त्या भार्यावचनेन । यथा परिसोढव्यं कष्टं मार्गश्रमादि सोढमतोस्मात्परं कष्टं मा विसीषहः । कष्टं सहमानां मां मा प्रयुङ्क्थाः । कष्टमेव स्पष्टयति । अर्करुग्भिः सूर्यातपैः कर्त्रीभिर्मा निसीषिवोर्करुचः कर्त्र्यो निषीव्यन्ति संबध्नन्ति मामात्मना तास्त्वं मा प्रयुङ्क्थाः ॥ यद्वा । अर्करुचो निषीव्यन्ति संबध्नन्ति मया सह कष्टं तास्त्वं मा प्रयुङ्क्थाः । आतपकष्टं निवारयेत्यर्थ इति ॥

---

१ बी °रिष्कृता°. २ सी °सीषि°. ३ ए विसी°.

---

१ बी °निष्ष्यूतं. २ बी °रिष्यूता°. ३ बी °रिष्यूता°. ४ बी °ता से°. ५ सी °सोढव्यादि°. ६ ए बी सी °न्त°. ७ बी °रिष्कृता. ८ ए सी डी मां विसी°

विष्वण । अवष्वण । विषष्वाण । अवषिष्वणिषुः । व्यष्वणत् । अवाष्वणत् । व्यपिष्वणत् । अवापिष्वणत् । इत्यत्र "व्यवात्°" [४३] इत्यादिना षः ॥ अशन इति किम् । विस्वनितः । अवस्वनत् ॥

विषण्णान् । निषिषत्सून् । न्यषीदत् । न्यषीषदत् । इत्यत्र "सदोऽप्रते.°" [४४] इत्यादिना षः ॥ परोक्षायां त्वादेरेव । निषसाद ॥ अप्रतेरिति किम् । प्रतिसन्न. । प्रत्यसीषदत् । अप्रतिसिषत्सुम् । अत्र प्रतेः परस्याद्यसकारस्य षो न स्यात् । प्रकृतिसस्य नामिनः परस्य "नाम्यन्तस्था°" [२.३ १५] आदिसूत्रेण स्यादेव ॥ अस्यापि नेच्छन्त्येके । प्रत्यसीसदत् । प्रतिसिसत्सन्ती. ॥

परिष्वक्त । प्रतिपिष्वङ्कवः । अभ्यष्वजन्त । अभ्यषष्वञ्जन् । इत्यत्र "स्वञ्जश्च" [४५] इति षः ॥ योगविभागादप्रतेरिति नानुवर्तते । तेन प्रतिपिष्वङ्कवः ॥ चकारः परोक्षायां त्वादेरित्यस्यानुकर्षणार्थः । अभिषस्वजिरे । ततश्चोत्तरत्राननुवृत्तिः ॥

परिषेवकान् । परिषिषेविषुः । पर्यषेवत । निषेवते । निषिषेविषुः । न्यषेवत । विषेवितुम् । विषिषेविषुः । व्यषेवत । इत्यत्र "परिनिवेः सेवः" [४६] इति षः ॥ परिनिवेरिति किम् । प्रतिसिषेवे । अत्रोपसर्गाश्रितं षत्वं न स्यात् । धातोस्तु द्वित्वाश्रितं भवत्येव । उभयत्र नेच्छन्त्येके । प्रतिसिसेवे ॥

परिषयैः । निषयैः । विषय । परिषिर्त । निषितः । अविषित । इत्यत्र "सयसितस्य" [४७] इति षः ॥ परिनिवेरिति नियमादन्योपसर्गपूर्वास्यतेः "उपसर्गात्सुग्°" [२.३.३९] इत्यादिनापि षत्वं न स्यात् । तेन निःसित ॥

परिष्यूत । निष्यूतम् । विषीव्यन्ति । परिषेहिरे । निषेहुः । परिषेहिरे । अपरि-

---

[1] डी °पु· । न्यष्व°. [2] प सी डी °नत् । अ°. [3] बी °सन्न । प्र°. [4] बी °षत्सुः । अ° [5] प सी डी °ष्वक्त· । प्र° [6] प डी °षितः । नि°. [7] बी वेरेवेति. [8] बी रिष्ट्युत । निष्ट्यूत°. [9] प सी डी °र । अ°. [10] बी °रि-स्कन्ना..

स्कृताः । विष्किरः । इत्यत्र "असोड०" [४८] इत्यादिना षः ॥ असोढेति किम् परिसोढव्यम् । अनिसोढव्यम् । विसोढम् । मा निसीषिवः । मा विसीषहः ॥

क्ष्मां पर्यष्टात्तृणैरद्भिर्न्यष्टाव्यष्टात्तथेन्धनैः ।
विभुर्यां तां च पर्यस्तौन्व्यस्तौव्यस्तौत्परिच्छदः ॥ १४६ ॥

१४६. विभुर्या प्रशस्यतृणजलेन्धनामवोचत्तां क्ष्मां पृथ्वीं परिच्छदोपीत्यर्थः । एतेन परिच्छदस्य च्छन्दोनुवर्तित्वेन स्वामिन्यात्यन्तिकी भक्तिरुक्ता ॥

ओजो व्यष्वङ्ग मुत्पर्यष्वङ्ग न्यष्वङ्ग विक्रमः ।
व्यस्वङ्ग धीर्न्यस्वङ्ग श्रीर्नृन्पर्यस्वङ्ग न श्रमः ॥ १४७ ॥

१४७. प्रस्तावात्सैन्यावासने सति नृन्सैनिकान् श्रमो न पर्यष्व(स्व?)ङ्ग नालिङ्गन्नदीस्नानादिना व्यपगत इत्यर्थः । अत एव बलहर्षोत्साहबुद्धिशोभा नृनालिङ्गन्नित्यर्थः ॥

क्ष्मां व्यपीव्यन्व्यपीव्यद्वाः पर्यपीव्यद्दरी रजः ।
व्यसीव्यद्व्यसीव्यत्खं पर्यसीव्यद्दिशश्च यत् ॥ १४८ ॥

१४८. यद्रजोत्यन्तं निबिडत्वेन द्यून् व्यसीव्यत्प्रोतवानिव व्याप्नोदित्यर्थः । तथा खं न्यसीव्यद्दिशश्च पर्यसीव्यत्तद्रजः क्ष्मा व्यपीव्यन् । तथा वाः जातावेकवचनम् । जलानि न्यपीव्यत्तथा दरीर्गर्ताः पर्यपीव्यन् । सैन्ये चलति तुरगादिखुरोत्खातं यद्रज ऊर्ध्वमुच्छालितमासीत्सैन्य उपितय पपातेत्यर्थः । योप्युच्चैस्तमपदारूढः स्यात्सोपि उच्चैश्चटितस्यावश्य पातः इति लोकोक्तेरधः पततीति ॥

---

१ सी [illegible] ।

---

१ प सी विष्किर° डी विष्किर° २ सी °षोड मि° ३ सी ख न्यसी°

न्यषहिष्ट तटीपातं पङ्कं पर्यषहिष्ट च ।
न्यषहिष्ट पयःशोषं न्यसहिष्ट न किं नदी ॥ १४९ ॥

१४९. नदी जम्बूमाली तटीपातं सैन्यसंमर्दजन्यं तीरभ्रंशं न्यषहिष्ट । तथा वस्त्रादिधावनविगाहनादेः पङ्कं पर्यषहिष्ट । तथा पानादेः पयःशोषं न्यषहिष्ट । अतश्च तटीपातादिसहनात्किं न न्यसहिष्ट ॥

न न्यसाह्यातपः कैश्चित्पर्यसाहि तृषा न च ।
पर्यष्कारि तरुच्छाया पर्यस्कारि सरिच्च यत् ॥ १५० ॥

१५०. स्पष्टः । किं तु पर्यस्कारि समाश्रयणेनालंकृता ॥

पर्यष्टौत् पर्यस्तौत् । न्यष्टौत् न्यस्तौत् । व्यष्टौत् व्यस्तौत् । पर्यष्वङ्क्त पर्यस्वङ्क्त । न्यष्वङ्क्त न्यस्वङ्क्त । व्यष्वङ्क्त व्यस्वङ्क्त । पर्यषीव्यत् पर्यसीव्यत् । न्यषीव्यत् न्यसीव्यत् । व्यषीव्यत् व्यसीव्यत् । पर्यषहिष्ट पर्यसाहि । न्यषहिष्ट न्यसाहि । व्यषहिष्ट व्यसहिष्ट । पर्यष्कारि पर्यस्कारि । इत्यत्र "स्तुस्वञ्जश्चाटि न वा" [४९] इति वा षः ॥

विष्यन्दिमदनिःष्यन्दैः कराभिष्यन्दिशीकरैः ।
सल्लक्या रसनिष्यन्दः स्म परिष्यन्द्यते गजैः ॥ १५१ ॥

१५१. गजैः सल्लक्या गजप्रियतरुविशेषाद्रसनिष्यन्दो रसप्रवाहः परिष्यन्द्यते स्म चर्वणेन स्राव्यते स्म । कीदृशैः । विष्यन्दी प्रसृमरो मदनिःष्यन्दो मदप्रवाहो येषां तैस्तथा करेभ्यः शुण्डाभ्योभिष्यन्दिर्भिः स्रवणशीलाः शीकरा वमथवो येषां तैः ॥

---

१ बी न्यस्याह्या°. २ डी °रि स°

---

१ बी °र्दज ती°. २ सी °ङ्क । व्यष्व°. ३ सी °ष्ट । प°. ४ ए सी डी °षाणां रस°. ५ डी °न्दो मद°. ६ ए सी °न श्राव्य°. ७ बी °निःस्यन्दो ८ ए सी डी °नः श्रव°. ९ ए सी °थतो ये°. डी °थतौ ये°.

निःस्यन्दिस्वेदनिस्यन्दात्फेनाभिस्यन्दतो हयैः ।
विस्यन्दिभिरिवाम्भोदैः परिस्यन्दिन्यभून्मही ॥ १५२ ॥

१५२. विस्यन्दिभिर्वर्षुकैरम्भोदैरिव हयैः कृत्वा मही परिस्यन्दिन्यार्द्राभून् । कुत. । निःस्यन्दी श्रमवशात्स्रवणशीलो यः स्वेदनिस्यन्दो घर्मप्रवाहस्तस्मात् । फेनाभिस्यन्दतः श्रमेणैव मुखफेनस्रवणाच्च ॥

क्षुब्धसिन्ध्यां बलैः स्मानुष्यन्देते झषकाम्भसी ।
यादोर्णसी इव स्मानुस्यन्देते मन्दराद्रिणा ॥ १५३ ॥

१५३. बलैः सैन्यैः क्षुब्धसिन्ध्यां विलोडितायां जम्बुमालीनद्यां झषकाम्भसी ह्रस्वमत्स्यजातिजले अनुष्यन्देते स्म प्रसरतः स्म तटान्यातचक्रमतुरित्यर्थः । यथा मन्दराद्रिणा मेरुणा क्षुब्धसिन्धौ विलोडितेऽब्धौ यादोर्णसी जलजन्तुजातिजले अनुस्यन्देते स्म प्रसृते ॥

विस्यन्दिदन्त्यविष्कन्तृमर्दैर्विस्कन्तृभिर्भुवः ।
विस्कन्नः सर्वतो रेणुर्नैव विस्कन्नवान् दृशः ॥ १५४ ॥

१५४. रेणुरुपशान्तत्वाद्दृशो नैव विस्कन्नवान्न व्याप्नोद्यतो विस्यन्दिनो मदक्षरणशीला ये दन्तिनस्तेषामविष्कन्तारोऽशुष्यन्तो ये मदास्तै र्कर्तृभिः सर्वतो विस्कन्न आर्द्रीकरणेन व्याप्तः । किंभूतैर्भुवो विस्कन्तृभिर्व्यापकैः ॥

निष्यन्दः निःस्यन्दि । अभिष्यन्दि अभिस्यन्दत. । अनुष्यन्देते अनुस्यन्देते परिष्यन्दिनी परिस्यन्दिनी । निष्यन्द निस्यन्दात् । विष्यन्दि विस्यन्दिभि इत्यत्र "निरभ्यनोश्च" [५०] इत्यादिना वा षः ॥ अप्राणिनीति किम्

[illegible]

विस्यन्दिदन्ति । पर्युदासोयं न प्रसज्यप्रतिषेधस्तेन यत्र प्राणी चाप्राणी च कर्ता स्यात्तत्राप्राण्याश्रयो विकल्पो भवति न तु प्राण्याश्रयः प्रतिषेधः । अनुष्यन्देते झषकाम्भसी अनुस्यन्देते यादोर्णसी ॥

विष्कन्तृ विस्कन्तृभिः । इत्यत्र "वेः°" [५१] इत्यादिना षो वा ॥ अक्तयोरिति किम् । विस्कन्नः । विस्कन्नवान् ॥

परिष्कणणापरिस्कन्नान्तृषान्निःष्फुलनिःष्फुरान् ।
निःस्फुला निःस्फुरा[1] गोपा निन्युः क्ष्मां निष्फुरत्तृणाम् १५५

१५५. निःस्फुलाः संहता[3] निःस्फुराः स्फुरणान्विता गोपा गोपाला वृषान्निष्फुर[4]त्तृणामुल्लसच्छष्पां क्ष्मां चारणार्थं निन्युः । किंभूतान् । परिष्कण्णं श्रमोद्भवः समन्ताच्छोषः पातो वा तेनापरिस्कन्नान[5]परिगतान्बलिष्टत्वेन भूरिमार्गगमनेनाप्यश्रान्तानत एव निःष्फुलनिःष्फुरान्[6] विशेषणकर्मधारये संहतान्सतेजस्कांश्च ॥

निष्फुलन्निस्फुरद्वातैर्निस्फुलद्विष्फुरद्ध्वजाः ।
विस्फुरद्विष्फुलच्छायाः पङ्क्त्या विस्फोलिता रथाः ॥१५६॥

१५६. रथाः पङ्क्त्या श्रेण्या विस्फोलिताः संचायिताः संस्थापिता इत्यर्थः । किंभूताः । निष्फुलन्तः संहतीभवन्तो निस्फुरन्तो विचरन्तश्च[7] ये वातास्तैः कृत्वा निस्फुलन्तोन्योन्यं संहतीभवन्तो विस्फुरन्तश्च[8]लन्तो ध्वजा येषु ते । अत एव विस्फुरन्त्यश्चलन्त्यो विस्फुलन्त्यः संहतीभवन्त्यश्छाया ध्वजसंबन्धिन्यो येषां ते ॥

---

१ ए निःस्फरा°. २ सी °ष्फुर°.

---

१ बी °णी यत्र चा°. २ डी °स्कन्नवा°. ३ ए सी डी सहिता° ४ ए °न्निष्पुर°. ५ ए सी डी °रिष्कन्ना°. ६ बी °निष्फुरा°. ७ ए सी डी °स्फुरन्तो°. ८ डी °श्च चल°.

परिष्कण्णापरिस्कन्नात् । इत्यत्र "परेः" [५२] इति वा षः ॥

निःष्फुरान् निःस्फुराः । निष्फुरत् निस्फुरत् । निःष्फुल निःस्फुलाः । निष्फु-लत् निस्फुलत । इत्यत्र "निर्नेः" [५३] इत्यादिना वा षः ॥

विष्फुरन् विस्फुरत । विष्फुलत् विस्फोलिताः । इत्यत्र "वेः" [५४] इति वा षः ॥

रिपुविष्कम्भि विष्कभ्नत्सैन्यं पादपदुःषमाः ।

क्ष्माः स्थलीनिःषमा गर्तविषमाः सुषमा व्यधात् ॥१५७॥

१५७. सैन्यं क्ष्माः सुषमा वृक्षोच्छेदस्थल्युत्खननगर्तापूरणैः सम-त्वापादनात्सुषमाः व्यधात् । कीदृक्सत् । पराक्रमित्वेन रिपून्विष्कभ्ना-त्यवष्टभ्नातीत्येवंशील रिपुविष्कम्भि । तथा विष्कभ्नत्सर्वत्रावासनेन प्रस-रत् । कीदृशीः क्ष्माः । पादपदुःषमा वृक्षैर्दुष्टसमत्वाः । तथा स्थलीनिः-षमाः स्थलैः समत्वान्निष्क्रान्ताः । तथा गर्तविषमा दरीभिर्विगतसम-त्वाः । पादपादिभिर्दुर्गमा इत्यर्थः । एवं नाम सैन्यं बाहुल्येन प्रासरद्यावता भग्नवृक्षैः कृत्वा तत्स्थलीभिश्च गर्ताः पूरयित्वा भुवः समा-श्चक्र इत्यर्थः । यदपि सैन्यं विष्कभ्नत्प्रसरद्रिपुविष्कम्भि युद्धाय शत्रु-घट्टम्भकं स्यात्तदपि रणविघ्नभूतवृक्षस्थलीगर्तैर्विषमा रणभुवो वृक्षादि-भञ्जनादिभिः सुषमाः करोतीत्युक्तिः ॥

छायाविपृतिफलनिःपृतिपुष्पसुपूतयः ।

वनदुःपृतिवृक्षाणां कृताध्यन्ते स्म सैनिकैः ॥ १५८ ॥

१५८. वनेऽरण्ये नैष्फल्याद्दुष्टा सूतिरुत्पत्तिर्येषां ते ये वृक्षास्तेषां

१ बी [illegible]

१ ए [illegible] २ सी [illegible] ३ सी [illegible] ४ डी [illegible] ५ बी [illegible] ६ सी [illegible]

छायाविपूतिफलनिःपूतिपुष्पसुपूतयः । विशिष्टा सूतिरुत्पत्तिर्वृक्षकर्तृकोत्पादना वा । एवं निश्चिता सूतिर्निःपूतिः । शोभना सूतिः सुपूतिः । ततः षष्ठीतत्पुरुषगर्भो द्वन्द्वः । छायाफलपुष्पाणामुत्पत्तयः सैनिकैः सैन्यैः कृतार्थ्यन्ते स्वोपभोगेन सफलीकृताः ॥

रत्यानिःसमितोरुनिःषमितदृग्निःसूतलीलाङ्गना-
निःषृतश्च्यविषुप्तकामुकमनिःषुप्तस्मरं तत्क्षणात् ।
तद्दुःषुप्तसुषुप्तवर्जितभटं प्रादुःषदद्ट्टं विष-
न्सुस्वप्नो नु मुदं दिदेश शिविरं गंधर्वपुर्याः समम् ॥१५९॥

१५९. यथा विषन्विशेषेण भवन्सुस्वप्नः परिपूर्णचन्द्रपानादिः शोभनः स्वप्नो मम कोपि महाभ्युदयो भावीत्यभिप्रायेण सुस्वप्नालोकिनः पुंसो मुदं करोति । तथा वत्पूर्वव्यावर्णितं शिविरं सैन्यसन्निवेशो द्रष्टॄणां मुदं हर्षं दिदेश चक्रे । यतो गन्धर्वपुर्या ऐन्द्रजालिकपुर्याः समं तुल्यम । एतदपि कुत इत्याह । यतस्तत्क्षणाद्यदैव जम्बूमाल्यां सैन्यमवसत्तमेव कालमाश्रित्यानिःषुप्तस्मरं तत्कालोत्पन्नानेकशीतोपचारैः श्रमोपशान्त्या महर्द्धिकत्वात्तिसुखितत्वादिना च सैन्यजनस्योज्जृम्भितस्मरत्वाज्जागरितकन्दर्पमत एवाविषुप्तकामुकमनवरतं सुरतक्रियया जागरितकामिजनमत एव च रत्या निधुवनेन कृत्वा षम ष्टम वैक्लव्ये इति सम्धातो क्ते आनिःसमितौ समन्तान्निश्चितं विक्लवीभूतावूरू सक्थी यासां तास्तथा । तथा रत्यैव निःषमिते विक्लवीभूते निद्राभङ्गेन गहरिते दृशौ यासां तास्तथा । तथा रत्यैव निःसूता षू धातुः सकर्मकोपि । उत्पादिता लीला शृङ्गारचेष्टाविशेषो यासां तास्तथा । विशेषणकर्मधारये

---

१ बी °म्नि. नु मु°. २ सी °दुःसुप्त°.

---

१ ए सी °तयोर्विशि°. २ बी °न्यमाव°. ३ बी तपन्नोने°. ४ डी °म पे°. ५ बी °धा र°. ६ बी °समते. ७ सी °था र°.

[illegible]दायिषा या [illegible]नालाभिर्निःषृषोत्पादिता श्रीः शोभा यत्र तत् । यथा लक्षणादेव प्रादुःषदट्ट व्यवहारार्थं प्रकटीभवदापणमत एव [illegible]ामानत्तानामर्थासक्तानां च जनानां रक्षार्थं दुःषुमसुषुमवर्जिता दुष्ट-[illegible]पशो[illegible]नत्वापाभ्यां रहिताः सर्वथा जागरूका भटा योधा यत्र तत् । [illegible]पि तात्कालिकानि पुरस्सरत्वादिविशेषणविशिष्टा सती द्रष्टॄ-णामाश्चर्याद्भुतं करोति । शार्दूलविक्रीडितं छन्दः ॥

प्रादुःष्युरप्सरस आजिमहः स विष्या-
न्संसिच्यमान इषुभिर्भटपिस्स्यमानः ।
तत्राभिसंधितुमना अभिसोष्यते यो
गङ्गामुमूः स इति सैन्यभटाः प्रदध्युः ॥ १६० ॥

१६०. सैन्यभटाः प्रदध्युरचिन्तयन् । किमित्याह । भटपिस्स्यमानो युद्धार्थं योधैर्गम्यमानः । अत एवेषुभिः संसिच्यमानोत्यर्थं व्याप्यमानः । स प्रसिद्ध आजिमहो रणोत्सवो विष्याद्विशेषेण संपद्यताम् । तथाप्सरसः प्रादुःष्युराजिकौतुकदिदृक्षया भटवुवूर्षया च प्रकटीभवन्तु । "विधिनिमन्त्रणा-" [५.४.२८.] इत्यादिनात्र प्रार्थने सप्तमी । एतेन भटानां रणविषयोभिलाषातिरेक उक्तः । तथा तत्राजिमहेभिसंधितुमना गन्तुकामो यो भटोभिसोष्यते धारातीर्थे स्नास्यति शत्रुभटैर्हिंसिष्यते वा स भटो गङ्गामुमूः सुरापगायां स्नातुमिच्छुर्देवीभवितुमिच्छुर्वेत्यर्थः । रणे हि मृताः स्वर्गं यान्तीति स्मृतिरिति ॥

विष्वाक्[illegible] । विष्वाक्[illegible] । इत्यत्र "स्कभ्न." [५५] इति षः ॥

निःषमाः । दुःषमाः । सुषमाः । विषमाः । निःषूति । दुःषूति । सुषूतयः ।

[illegible] ३ सी डी "[illegible]". ४ सी "[illegible]" ५ डी "[illegible]" ६ ए [illegible] बी विष्वा[illegible] । सी डी विष्वगू[illegible] ।

विपूति । इत्यत्र "निर्दुःसु°" [५६] इत्यादिना षः ॥ समसू[1]तीतिनामग्रहणा-द्धातोर्वैरूप्ये च न स्यात् । निःस[2]मि[3]त । निःसू[4]त ॥ अन्ये तु समसूत्योर्धात्वोरेवे-च्छन्ति । तन्मते नि[5]ःषमित निःपूतेत्यादावेव स्यात् ॥

निःषुप्त । दुःषुप्त । सुषुप्त । विषुप्त । इत्यत्र "अवः स्वपः" [५७] इति षः ॥ अव इति किम् । सुस्वप्नः ॥

प्रादुःष्युः । विष्यात् । प्रादुःषत् । विषन् । इत्यत्र "प्रादुः°" [५८] इत्या-दिना षः ॥

पिस्स्यमानः । इत्यत्र "न स्सः" [५९] इति न षः ॥

सेसिष्यमानः । इत्यत्र "सिचो यङि" [६०] इति न षः ॥

[6]अभिसेधितुमनाः । इत्यत्र "गतौ सेधः" [६१] इति न षः ॥

अभिसोप्[7]यते । गङ्गासुसूः । इत्यत्र "सुगः स्यसनि" [६२] इति न षः । वसन्ततिलका छन्दः ॥

॥ इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्रा-भिधानशब्दानुशासनद्व्याश्रयवृत्तौ तृतीयः सर्गः समर्थितः ॥

॥ ग्रन्थ ११५८ ॥ अं २२ ॥

---

१ ए सी डी °सूति°. २ डी निःसू°. ३ ए सी °मितः । निः°. ४ ए सी डी सृतः । म°. ५ ए सी डी निःषू°. ६ ए सी डी अतिसे°. ७ बी °ष्यन्ते । ग°. ८ ए सी °ष्यपले°. ९ बी अं २७ ॥.

# द्व्याश्रयमहाकाव्ये

## चतुर्थः सर्गः ।



अवतीर्णमथापगावनान्तर्नरनाथं कृपणक्षमं रिपूणाम् ।
इति नीतिमवृक्णवागपुष्णन्नगृणाद्ग्राहरिपोरुपेत्य दूतः ॥ १ ॥

१. अथ सैन्यावासनानन्तरं रिपूणां कृपणक्षमं विनाशनसमर्थमत एवापगतेनापगावनान्तर्जम्बूमालीवनमध्येऽवतीर्णमावासितं नरनाथं मूलराजमुपेत्य ग्राहारिदूत इति वक्ष्यमाणमगृणादवदत् । कीदृक्सन् । नीतिं न्यायं अपुष्णन्वर्धयन्नीतिशास्त्रोक्तानुसारेणेत्यर्थः । तथावृक्णाविच्छिन्नाप्रतिहता वाग् यस्य सः । सर्गेऽत्रौपच्छन्दसिकं छन्दः ॥

तदेवाष्टादशभिर्वृत्तैर्विवक्षुर्दूतः स्वामिनः स्वस्य च नामसंकीर्तनपूर्वं स्वव्यापारणकारणमाह ।

तव शौर्यकिरीटिनो रसेनाविरलेनागमकारणं बुभुत्सुः ।
नयवर्जनकर्शनादिशन्मां द्रुणसं ग्राहरिपुर्विकर्तनाभः ॥ २ ॥

२. नयं न्यायं वर्जयन्ति । "रम्यादिभ्यः कर्तरि" [५. ३. १२७] इत्यने नयवर्जनान्कर्शयति तनूकरोति यस्तस्य संबोधनं हे नयवर्जनकर्शनान्यायिनिग्राहिन्नविरलेन सान्द्रेण रसेनानुरागेण तवागमकारणमागमनहेतुं बुभुत्सुर्ज्ञातुकामो ग्राहरिपुर्द्रुणसं द्रुणसाभिधं मामादिशत् प्रेषितवानित्यर्थः । यतः शौर्यकिरीटिनः शौर्येणोपलक्षितत्वात्प्रतापादिना च कि-

---

१ सी °३. ८.९°.

---

१ बी 'वसात्' २ ए सी '°ल्पुल. ३ ए सी 'दवि । र'. ४ ए सी '°र. ८°' ५ ए सी °कन°. ६ बी 'कृम्बा°'.

रीटिनोर्जुनतुल्यस्य सोपि च विकर्तनाभः शौर्यप्रतापादिगुणैरादित्यसमः । भवति ह्युत्तमानामुत्तमेष्वनुरागः ॥

तदेवं मूलराजागमकारणजिज्ञासया स्वव्यापारेण उक्तेपि राज्ञि स्वागमकारणमवदति स्वयमेव वितर्क्यागमकारणानि पृच्छन्सामोक्त्या परिहरंश्च वृत्तदशकमाह ।

ऋगयनपठनेन दुर्णसैस्तैः प्रवणान्तर्वणनिर्वणोषितैः किम् ।
चलितोसि मृषा द्विजैर्ब्रुवाणैराम्रवणेक्षुवणानि नः खनद्भिः ॥ ३ ॥

३. तैर्ग्राहार्युपद्रुतैर्मृषा ब्रुवाणैर्निरपराधा वयं ग्राहारिणोपद्रुता इत्यलीकवादिभिः सद्भिर्द्विजैः किं चलितोसि चलन्प्रयुक्तस्त्वं तेन तत्रागम इत्यर्थः । इदं चागमकारणं मृषा ब्रुवाणैरिति विशेषणेनैवायुक्तमिति परिहृतम् । नन्वमी कमपराधं चक्रुर्यन्मृषा ब्रुवाणा उच्यन्त इत्याह । प्रवणान्तर्वणनिर्वणनामानि यानि वनानि । यद्वा । प्रकृष्टानि वनानि प्रवणानि । अन्तर्मध्ये वनान्यन्तर्वणानि । निश्चितानि वनानि निर्वणानि । द्वन्द्वे तेषूषितैः स्थितैः सद्भिर्नोस्माकमाम्रवणेक्षुवणानि खनद्भिः । यत ऋगयनपठनेन ऋचः सामिधेन्यः । यकाभिः समिधोग्नावाधीयन्ते । तासामयनमृगयनं वैदिको ग्रन्थस्तत्पाठेन दुर्णसैर्विकृतनासिकैः । अनेन द्विजानामग्नौ समिदाधानं सूचितम् । तत्रावश्यमृगयनपाठात् । ऋगयनपाठेन पलाशाश्वत्थप्रायस्यैव समिधोग्नावाधीयन्त इति श्रुतिरित्येते पलाशप्रायस्यैव समिध ऋगयनपठनेनाग्नौ जुह्वति । परं तत्प्रसङ्गेनास्मदाम्रवणेक्षुवणानि खनन्तीत्येतेपराधिन इत्यर्थः ॥

---

१ सी ऋमन॰.

---

१ ए सी डी ॰नस्य. २ बी ॰पारेण उ॰. ३ बी व वितर्क्य वि॰. ४ ए सी डी ॰र्वर्णोनि. ५ बी ॰मिवाधा॰ ६ ए ॰स्यैव स॰.

खदिरवणाम्रवणस्यपीयुक्षावणकार्श्यवणस्थितैर्नृपैनैः ।
प्रसवणगैतश्च विद्रवः किं शरवणशिग्रुवणेष्वरेश्च चक्रे ॥ ४ ॥

४. त्वद्वम । कि तु पीयुक्षा द्राक्षा । कार्श्याः शालाख्या वृक्षाः । खदिरवणं चाम्रवणं च तत्स्थाश्च ते पीयुक्षावणकार्श्यवणस्थिताश्च तैर्नोऽस्माकं नृपैर्विद्रवः उपद्रवः । शिग्रुः शोभाञ्जनः ॥

बदरीवणवन्न कण्टकास्ते शिग्रुवने बदरीवने च नोत्र ।
माषवणान्वेषको न नीवारवणे माषवनं लभेत जातु ॥ ५ ॥

५. यथा बदरीवणे कण्टकास्तीक्ष्णाग्रा बदर्यवयवा भवन्ति तथाऽस्मिन्नोऽस्माकं शिग्रुवने बदरीवने चोपलक्षणत्वात्खदिरवनादिषु च ते तव कण्टकाः शत्रवो न भवन्ति । दृष्टान्तमाह । माषवणान्वेषकः पुमान्नीवारवणे वनव्रीहिवनमध्ये जातु कदाचिदपि न माषवनं लभेत । एवमस्माकं युष्मन्मित्राणां वनेषु युष्मच्छत्रवो न सन्त्यतः खदिरवणादिवनस्थास्मन्नृपकृतोपद्रवस्याभावादयमागमने न हेतुरित्यर्थः ॥

नीवारवनोल्लसद्विदारीवनसुरदारुवनेरिकावनेषु ।
गिरिणद्यतिरंहसा मृगव्ये गिरिनद्यां नु सुनीरपाणमागाः ॥ ६ ॥

६. उल्लसद्विदारीवनमुल्लसच्छालपर्णीलताविशेषवनम् । सुरदारुवनं देवदारुवनम् । इरिकावनमोषधिविशेषवनम् । द्वन्द्वे तदाधारेषु मृगव्ये आखेटार्थम् । न्विति पृच्छायाम् । आगा आगतोसि । केन कृत्वा । गिरिणद्यतिरंहसा पर्वतोद्भूतापगावदतिवेगेन । कथम् । गिरिनद्यां अस्मन्नाम्न्यां शोभनं नीरपाणं जलपानं यत्रागमने तद्यथा स्यादेवम् ।

१ सी सां °वे°. २ ए सी °वण°.

१ बी °ऽऽ° °. २ बी न °. ३ ए सी °°. ४ बी °°.

अस्य चागमकारणस्य परिहाराभणनान्मृगयार्थं चेत्तवात्रागमस्तदा युक्तमित्यनुमतिर्व्यज्यते ॥

यदुभिर्मधुनीरपानगोष्ठ्यामुत दुरभापि कषायपाणहस्तैः ।
वचने हि कषायपानपाणेर्न सुरापाणसुराष्ट्रकेषु दोषः ॥ ७ ॥

७. मधु मद्यं तदेव प्राचुर्यात्प्रसन्नत्वाच्च नीरं जलं तस्य या पानगोष्ठ्यापानं तस्यां पीयतेनेन पानं पात्रं कषायस्य सुरभिरसस्य प्रस्तावान्मद्यस्य पानं चषको हस्ते येषां तैर्मद्यं पिबद्भिः सद्भिरित्यर्थः । यदुभिर्यादवैः । उतेति प्रश्ने । दुरभापि किं दुष्टं किंचिदुक्तम् । अर्थात्तव । तेन तवात्रागमः । एतदपि परिहरति । सुराया मद्यस्य पानं येषु ते सुरापाणा ये सुराष्ट्रका मद्यपत्वादेव कुत्सिताः सुराष्ट्रदेशस्था जनास्तेषु कषायपानपाणेः सुरापात्रकरस्य मद्यपस्येत्यर्थः । वचने दुर्वाक्ये हि स्फुटं न दोषः । मद्यपवाक्ये हि विदुषामनास्थैवेत्येतद्धेतुकं त्वदागमनं तदानुचितमित्यर्थः ॥

अवतीर्णम् । प्रपुष्णन् । अगृणात् ॥ व्यवधानेपि । कारणम् । रिपूणाम् । कपण । अवृक्ण । इत्यत्र "रपृवर्णात्°" [६३] इत्यादिना णः ॥ रपृवर्णादिति किम् । वन ॥ एकपद इति किम् । अन्तर्नर ॥ पद इत्येतावतैवैकपदे लब्ध एकग्रहणं नियमार्थम् । एकमेव यन्नित्यं तत्र यथा स्यात् । यदेकं चानेकं च तत्र मा भूत् । नरनाथम् ॥ अनन्त्यस्येति किम् । पुष्णन् ॥ लादिवर्जनं किम् । अविरलेन । वर्जन । किरीटिनः । विकर्तन । कर्शन । रसेन ॥

द्रुणसम् । इत्यत्र "पूर्वपद°" [६४] इत्यादिना णः ॥ अग इति किम् । ऋगयन ॥

दुर्णसैः । इत्यत्र "नसस्य" [६५] इति णः ॥

---

१ सी गोष्ठ्या त° डी °गोष्ठी त°. २ ए सी डी किंचि°. ३ बी वा इ°. ४ बी °क चेदा°. ५ ए सी डी °र्ण । प्र°.

स्यादयमतिबलिष्ठोस्मदाश्रितश्चेत्यस्मत्पार्श्वादात्मना सह लक्ष्यं मित्रं[2] कारयितुमिहागत इति । अस्याप्यागमकारणस्य परिहारानुक्तेर्ययेतदर्थमिहागास्तदा युक्तमित्यनुमतिर्व्यज्यते ॥

क्षपयितुमरिविग्रहं न आगा नु चतुर्हायनकं त्रिहायनं वा ।

सोरिदुरह्णो द्विपां न योग्यः सुचतुर्हायणकत्रिहायणाश्वः ॥ ९ ॥

९. चतुर्हायनकं चतुर्वार्षिकं वा त्रिहायनं वा नोस्माकमरिविग्रहं शत्रुभिः सह विरोधं क्षपयितुं सख्येन शत्रूच्छेदाद्विनाशयितुम् । न्विति प्रश्ने । आगाः । परिहरति । स ग्राहारिर्द्विपां न योग्यो[1] जेतुमशक्य इत्यर्थः । यतः शुभलक्षणाद्युपेतत्वेन शोभनाश्चतुर्हायणका अज्ञाताश्चतुर्वार्षिकास्त्रिहायणाश्च[3] तरुणा इत्यर्थः । अश्वा यस्य सः । एतेन सैन्यसंपदुक्ता । तथारीणां विनाशकत्वाद्दुष्टमहररिदुरहः । अतिविक्रान्तश्चेत्यर्थः । तस्मादस्माकमरिविग्रहनिवृत्तये तवागमनं न युक्तमित्यर्थः ॥

ग्रामणी । अग्रणि । इत्यत्र "ग्राम०" [७१] इत्यादिना णः ॥

इषुवाहण । वीरवाहण । इत्यत्र "वाह्याद्वाहनस्य" [७२] इति णः ॥ वाह्यादिति किम् । करि[4]वाहन ॥

अपराह्णः । इत्यत्र "अतोह्नस्य" [७३] इति णः ॥ अत इति किम् । दुरह्नः ॥ अह्न इत्यकारान्तनिर्देशादिह न स्यात् । दीर्घाह्नया ॥

चतुर्हायणक । त्रिहायण । इत्यत्र "चतुस्त्रे.०" [७४] इत्यादिना णः ॥ वयसीति किम् । चतुर्हायनक त्रिहायनं वारिविग्रहम् ॥

---

१ डी योग्यो जेतु°.

---

१ ए °नः श्रे°. २ सी मित्रका°. ३ सी डी °श्च तुरणा°. ४ सी °रिकाह° ५ बी °यणाश्वः । इ°.

अथ सागरवाहिणं जिगीषुर्नृपतिं कंचन गर्ववाहिनं त्वम् ।
क्षतरिपुवापेण तं स जिष्णुः शरवापेन न किं दिशः परीण्वन् ॥१०॥

१०. अथेति प्रश्ने । सागरशब्देनात्र लक्षणया सागरकूलमुच्यते । त वहति स्वामितया प्राप्नोतीत्येवंशीलो यस्तं वेलाकूलाधिपं गर्ववाहिनमहंकारिणं कंचन नृपतिं जिगीषुस्त्वमागाः । आगमकारणप्रश्नप्रस्तावान्पूर्वश्लोकादागा इति क्रियात्र संबध्यते । एवमग्रेतनवृत्तत्रयेपि । एतदपि परिहरति । स माहारिस्तं नृपतिं किं न जिष्णुरपि तु साधु जयत्येव । कीदृक्सन् । क्षता विदारिता ये रिपवस्तान्भूमौ पातनेन वपतीव अग्नि क्षतरिपुवापस्तेन । यद्वा । क्षतो रिपुवापो लक्षणया शत्रुसन्तानो येन तेन शरवापेन बाणसन्तानेन दिशः परीण्वन् व्याप्नुवन् । अथ कथनेन माहारिरेव निकटस्थः सुखेनैव तव शत्रुं जयेत्तस्मादेतज्जयाय तवागमनं न युक्तमित्यर्थः ॥

क्षत्रिययूनः परीन्वतः क्ष्मां दीर्घाहृयां शरदि त्वमस्य वोत्कः ।
परिपक्वेनाथ नः शुभेनाः परिपक्वानि फलानि तत्कृतानि ॥ ११ ॥

११. दीर्घाहृयां बहुदिनायां शरदि शरत्काले क्षत्रिययूनो किंपलकसंभारं क्षत्रियतरुणस्य क्ष्मां परीन्वतः स्वामित्वेन व्याप्नुवतोस्य माहारेः । वेति प्रश्नान्तरे । किमुत्कः सोद्वेगोत्कण्ठितः सन्नागाः । दीर्घाहृया शरदि निर्व्यापारस्य दिनेगच्छति माहारेर्मित्रस्य मिलनायोन्मना. खिन्नागत इत्यर्थः । यद्येवं तर्हि । आ विस्मये । नोस्माकं परिपक्वेन परिपूर्णं निष्पन्नेन शुभेन पुण्यकर्मणा कृत्वा तत्कृतानि शुभनिष्पादितानि फलानि कार्याण्यद्य परिपक्वानि परिपूर्णं निष्पन्नानि । यदि मिलनाय मद्रागमन तदातिश्रेयस्तमामित्यर्थ. ॥

---

१ सी ...१८ डी ...१८

---

१ डी ... २ ए सी डी 'वन क.'. ३ डी 'वन केव'.

उत्तरपदान्त । सागरवाहिणम् गर्ववाहिनम् ॥ नागम । परीण्वन् परीन्वत ॥ स्यादि । रिपुवापेण शरवापेन । इत्यत्र "वोत्तर°" [७५] इत्यादिना वा णः ॥ अयुवपक्वाह्न इति किम् । क्षत्रिययूनः । परिपक्कानि । परिपक्केन । दीर्घाह्नयाम् ॥

[1]द्रष्टा वृषगामिणं नु बिभ्रद्गुरुकामाणि बलानि सन्नृपाणि ।
तं वृत्रहणं सुराष्ट्रपाणां सन्नृमुखेण न हि व्यबोधयः किम् ॥१२॥

१२. वृषगामिणं वृषभवाहनं सोमनाथं सन्नृपाणि विद्यमानराजकानि बलानि सैन्यानि बिभ्रद्धारयन्सन्नु[2] किं द्रष्टा आगाः[3] । नन्वहं चेत्सोमनाथदर्शनायागां तत्किमिति सन्नृपाणि बलान्यैबिभरमित्याशङ्‌क्याह । यतो गुरुर्महान्कामो वृषगामिदर्शनाभिलाषो येषां तानि । सुराष्ट्रदेशे हि सोमनाथोस्ति । यद्येव तर्हि सुराष्ट्रपाणां सुराष्ट्रदेशरक्षिणा नृपाणां वृत्रहणमिन्द्रं तं प्राहार्रिं सन्नृमुखेण प्रधानपुरुषमुखेन हि स्फुटं किं न व्यबोधयः किमिति नाज्ञापयः । येनायं सौहार्दातिशयात्तवाभिगमनादिप्रतिपत्तिं कुर्यादित्यर्थः ॥

वरपक्केनेक्षुणा समं किं शङ्खोद्धारान्तर्णिनीषुरम्भः ।
प्रणमामि तव प्रयाणि तत्किं प्रहिणोमि स्म वनानि मा प्रमीणाः १३

१३. वरपक्केन वरेण सुस्वादुना पक्केन परिपूर्णं निष्पन्नेनेक्षुणेक्षुरसेन समं माधुर्यादिभिस्तुल्यं किं शङ्खोद्धारान्तः शङ्खोद्धाराख्यतीर्थमध्यादम्भो जलं निनीषुर्नेतुमिच्छुस्त्वमागाः । सुराष्ट्रेषु हि शङ्खोद्धाराख्यं तीर्थमस्ति । प्रश्नयन्नेवोत्तरमाह । किं तव प्रणमामि तथा किं प्रयाणि शङ्खोद्धारजलानयनार्थं गच्छामि । तथा तदम्भः किं प्रहिणोमि प्रेषयामि । वनानि काननानि मा स्म प्रमीणा मा विनाशय ॥

---

१ ए सी द्रष्टा डी द्रष्टा वृ°.

---

१ बी °षवा°. २ ए सी डी किं द्रष्टा. ३ ए सी डी °गा. । अन्व°. ४ ए सी डी °न्यवितर°.

तदेवं मैत्रीगर्भेषु बहुष्वप्यागमकारणेषूक्तेष्वमन्यमान इव राज्ञि किंचिदप्रतिवदत्यन्यकारणाभावान्निरर्थकं बलभ्रमणं न युक्तमिति वदति।

**प्रहयानि बलान्यदुर्नयस्त्वं न मुधैव भ्रमयेः प्रनायकानि।**
**परिणश्यति जीवितेपि मैत्री नान्तर्णश्यति नोप्रनष्टपूर्वा ॥ १४ ॥**

१४. हे राजन् प्रहयानि प्रकृष्टाश्वानि प्रनायकानि प्रकृष्टस्वामिकानि च बलानि मुधैव पूर्वोक्तनीत्या कारणाभावेन निरर्थकं न भ्रमयेः। नो मार्थे। नार्चीचलः। यतस्त्वमदुर्नयो न्यायीत्यर्थः। न चास्माञ्शत्रुतयाशङ्क्यैवं सैन्यसंरम्भेणागमनं सार्थकं यतोप्रनष्टपूर्वा पूर्वमनपगता नो युष्माकमस्माकं च। "त्यदादिः" [ ३. १. १२० ] इत्यसच्छेषः। मैत्री जीविते परिणश्यत्यपि नान्तर्मध्ये हृदये नश्यति। येयन्ति दिनानि न गता साद्यापि मैत्री कथंचन नापयातीत्यर्थः ॥

कवर्ग। वृषगामिणम्। गुरुकामाणि। नृमुखेण ॥ एकस्वर। वृत्रहणम्। सनृपाणि। सुराष्ट्रपाणाम्। इत्यत्र "कवर्ग°" [७६] इत्यादिना नित्यं णः ॥ अपक्कस्येत्येव। वरपक्केन ॥

ण। प्रणमामि ॥ अन्तर्। अन्तर्णिनीषुः ॥ हिनु। प्रहिणोमि ॥ मीना। भा प्रमीणा। ॥ भानि। प्रयाणि। इत्यत्र "अदुरुपसर्ग°" [७७] इत्यादिना णः ॥ आर्नार्त्यर्थवत एव ग्रहणादनर्थकस्य न भवति। प्रहयानि। अदुरिति किम्। अदुर्नयः ॥ येन धातुना युक्ताः प्रादयस्तमेव प्रत्युपसर्गसंज्ञा भवन्तीतीह न भवति। प्रनायकानि ॥

परिणश्यति। अन्तर्णश्यति। अत्र "नशः शः" [७८] इति णः ॥ श इति किम्। अप्रनष्टे ॥

---

१ बी °र्थे। माची°. २ सी °शक्येव ३ बी पः। मेत्री. ४ बी °र्थं ए°. ५ बी °का. प्रदाय°. ६ ए सी डी °तिनंश. ७ बी °नष्टः ॥

तदेवं सामोक्त्यात्यन्तसौहार्दे ख्यापितेपि राज्ञः किमप्यप्रतिवदतो दौहार्दं प्रकटयन्नेवमागमनकारणं पृच्छति ॥

**परिणिमिमीते दिशः स सैन्यैः प्रणिमयते प्रणिदायकेथ भीतान् ।**
**प्रणिदयतेरीन्प्रणिद्यतीति प्रणिधिगिरा प्रणिपद्यसे किमीर्ष्याम् १५**

१५. स आहारिः सैन्यैर्दिशः परिणिमिमीते परिमात्यतिबाहुल्याद्व्याप्नोतीत्यर्थः । तथा प्रणिदायके मैत्र्यादिना गजाश्वधनादिढौकनं स्थापनिकां वा ददति पुंसि प्रणिमयते प्रतिददाति न्यायित्वान्नगृहीत्वा तिष्ठतीत्यर्थः । अथ तथा भीतान् शरणागतान्प्रणिदयते रक्षति । तथारीन्प्रणिद्यति खण्डयतीत्येवंविधया प्रणिधिगिरा चरवाचा किमीर्ष्यामाहारेः सैन्यादिसंपत्तौ न्यायादिगुणसंपत्तौ च चेतसो व्यारोषं प्रणिपद्यसे आश्रयसि । परसंपत्त्यसहा हि प्रायः क्षत्रियास्तेनैत विग्रहीतुं त्ववेत्थमत्रागमनमित्यर्थः ॥

अथ कालप्राप्तया सामदण्डगर्भोक्त्येदमप्ययुक्तमित्याह ।

**प्रणिधयति यशो द्विषां प्रणिघ्नन्प्रणिवपति प्रणिपातिषु श्रियं यः ।**
**प्रणिगदति नयं तदत्र मैत्रीं प्रणिनादीभघटे स्म मा प्रणिश्यः १६**

१६. यो आहारिर्द्विषां प्रणिघ्नन् शत्रून् हिंसन्सन् द्विषामेव यशः प्रणिधयति पिबत्यपहरति । तथा प्रणिपातिषु नम्रेषु श्रियं राज्यादिसंपदं यः प्रणिवपति निवेशयति । एतेन निग्रहानुग्रहसामर्थ्यमुक्तम् । तथा यो नयं न्यायं च प्रणिगदति प्रकर्षेण वक्ति । तदत्र सँ चासावेष च तदेष तस्मिन्नेतस्मिन् आहारौ प्रणिनादिनी गर्जन्तीभघटा यस्य तस्मिन्मैत्रीं

१ सी श्रिय ।

१ बी °मका°. २ डी °सि म°. ३ डी °सौ वा चे°. ४ बी सचैष.

मास्म प्रणिष्यो मा स्म विनीनशः । ईर्ष्यां मा कृथा इत्यर्थः । एतेन ग्राहारिसंबन्धिपूक्तेषु गुणेष्वेकगुणोपेतमपि मित्रं दुर्लभं किं पुनरुक्तसर्वगुणोपेतम् । यदुक्तम् ।

पराक्रमगुणैनैकं सदा चाश्रितपोषकम् ।

सन्नयायं संपदोपेतं मित्रं पुण्यैरवाप्यते ॥ इति ।

एवंविधेन चानेन चेद्विग्रहं करिष्यामि तदा त्वमेव विनङ्क्ष्यसीत्यपि च व्यञ्जितम् ॥

अथेर्ष्याजन्यभूम्युपद्रवमपि सामदण्डगर्भोक्त्याविधेयं वदन्मैत्रीमेव विधेयतया सूचयन्नाह ।

प्रणिशान्तरिपाविहाप्रणिद्रे प्रणिवहति प्रणिचायि सख्यमुच्चैः ।
प्रणिवातप्रणिदिग्धसैन्यरेणुः प्रणियास्यस्य किमुर्वरां प्रणिप्सान् १७

१७. इह ग्राहारौ प्रणिचीयते स्वयमेवेत्येवंशीलं प्रणिचाय्युपचितं सख्यं प्रस्तावात्त्वद्विषयमुच्चैरत्यर्थं प्रणिवहति धारयाति सत्यस्य ग्राहारेरुर्वरां सर्वसस्याढ्यभूमिं किं किमिति प्रणियासि गच्छसि । कीदृक्सन् । प्रणिप्सान्भक्षयन् । तथा प्रणिवातानुड्डीयमान. प्रणिदिग्ध उपचितः सैन्यरेणुर्यस्य सः । प्रभूतसैन्यैर्विनाशयन्नित्यर्थः । कीदृशीह । अप्रणिद्रे सोद्यमेत एव प्रणिशान्तरिपौ वशीभूतशत्रौ । शक्तस्य स्निग्धस्य च मित्रस्योर्वरोपद्रोतुं नोचितेत्यर्थः । अथ च । इह ग्राहारौ प्रणिशान्ते पराभूत्या गतदर्पे रिपौ विषये न तु त्वत्सदृशे दर्पोद्धुरे प्रणिचायि सख्यं प्रणिवहति सत्यस्योर्वरां त्वं प्रणिप्सान्सन्किं प्रणियासि

१ बी डी °वान्प्रणि°. २ प सी °यारिव कि°.

१ प सी °दा वा ध्रि° २ डी °श्रित पो°. ३ डी °दोपन्नं मि°. ४ सी °नेव वि°. ५ सी °धरित्त°. ६ सी °ये तनुत्व°.

पश्चाद्गमिष्यसि । अत्रैव त्वं विनङ्क्ष्यसीत्यर्थः । तस्मादुर्वराया अविनाशनेन मैत्रीं कुर्वित्यर्थः ॥

अथैवं भक्तिशक्त्युपदर्शनेन[1] मैत्र्यां विधेयतयोक्तायामपि राज्ञि किमप्यवदत्यवाच्यं छलं संभाव्य पृच्छंस्तदुचितदण्डोक्त्योत्तरयंश्चाह ।

**अथ दुर्निगदं छलं त्वमन्तर्ण्यदधास्तत्प्रणिजल्पितेन किं नः ।**
**मा प्रनिजल्पाधुना कृतान्तः प्रनिकुर्वन्[1]प्रनिखेलतु प्रनिद्विट् ॥१८॥**

१८. अथेति प्रश्ने । दुर्निगदं पापत्वाद्दुःखेन वाच्यं छलमतिप्रच्छन्नास्कन्दनादिकूटप्रयोगं त्वमन्तश्चित्ते न्यदधा निहितवांस्तत्तदा नोऽस्माकं प्रणिजल्पितेन पूर्वोक्तेन किम् । निरर्थकत्वान्न किंचिदित्यर्थः । तथा मा प्रनिजल्प त्वमपि मा वादीस्त्वत्प्रतिवचनेनापि स्तृतमित्यर्थः । केवलं हे प्रनिद्विट्[3] प्रकृष्टनिश्चितशत्रोऽधुना प्रनिकुर्वन् रणेन मृत्युरूपं शाठ्यं कुर्वन्कृतान्तो यमः प्रनिखेलतु[4] प्रक्रीडत्वथोत्त्वया सह । आशिषि पञ्चमी । त्वं प्राहारिणा व्यापाद्यस्वेत्यर्थः ॥

तदेवं दण्डमुक्त्वा राज्ञश्छलं प्राहारेणोपयितुं स्वयानमाह ।

**प्रनिचिखनिषता त्वयास्मदाख्यां प्रनिचक्रे[2] प्रणिपापचत्प्रकोपम् ।**
**तदलं प्रनिपापचन्मनास्त्वत्प्रणिदिष्टं[3] प्रनिदेष्टुमेष यामि ॥१९॥**

१९. यस्मादस्मदाख्यामस्मत्कीर्तिं प्रनिचिखनिषतैवमास्कन्दनेन[6] खनितुमिच्छता त्वया प्रणिपापचदत्यर्थसंतापकः प्रकोपः प्रबलक्रोधो यत्र तद्यथा स्यादेवं प्रनिचक्रे पराभूतम् । अस्माकं पराभवः कृत

१ ए सी डी °न्प्रतिखे°. २ डी प्रतिच°. ३ ए सी डी °त्प्रतिदि°. ४ सी डी प्रतिदे°.

१ सी °र्शमेन. २ बी °परूपत्वा°. ३ सी प्रतिदि°. ४ बी प्रतिखे°. ५ ए सी डी °श्रस्थल°. ६ ए सी °नेख°. ७ डी °प्रतिच°.

इत्यर्थः । तत्तस्मादलमत्यर्थं त्वत्प्रणिदिष्टं प्रत्युत्तरादानात्त्वया ज्ञापितमन्तश्छलप्रकरणं प्रनिदेष्टुं ग्राहारेर्ज्ञापयितुमेषोहं यामि । "सत्सामीप्ये सद्वद्वा" [ ५. ४. १. ] इति वर्तमाना । अधुनैवाहं यास्यामीत्यर्थः । कीदृक्सन् । अभीक्ष्णं प्रणिपच्चसि त्वं मदीयं मनः स त्वमेवं विवक्षसे नाहं प्रणिपापच्ये किं तु स्वयमेव प्राणिपापचत् । अत्र यङ्लुबन्तस्य धात्वन्तरत्वाद् "एकधातौ°" [ ३. ४. १७. ] इत्यादिना कर्मकर्तर्यात्मनेपदाद्यभावः । स्वयमभीक्ष्णं सन्ताप्यमानं मनो यस्य सः ॥

इकारोपलक्षितो माङ् मा । तेन मोङ्मेङोर्ग्रहणम् । परिणिमिमीते । प्रणिमयते । दामश । प्रणिदायके । ददातेर्यच्छतेर्वा रूपम् ॥ प्रणिदयते । प्रणिधति । प्रणिधि । प्रणिधयति ॥ पतादि । प्रणिपातिपु । प्रणिपद्यसे । प्रणिनादि । प्रणिगदति । प्रणिवपति । प्रणिवहति । प्रणिशान्त । प्रणिचायि । प्रणियासि । प्रणिवात । अप्रणिद्रे । प्रणिप्सान् । मा स्म प्रणिप्यः । प्रणिघ्नन् । प्रणिदिग्ध । अन्तरः खल्वपि । अन्तर्ण्यदधाः । इत्यत्र "नेर्ङ्मादा°" [७९] इत्यादिना नेर्णः ॥ अडागमस्य धात्ववयवत्वेन व्यवधायकत्वाभावादन्तर्ण्यदधा इत्यादावपि स्यात् ॥ अदुरित्येव । दुर्निगदम् ॥

प्रणिजल्पितेन प्रनिजल्प । प्रणिपापचत् प्रनिपापचन् । इत्यत्र "अकखादि" [८०] इत्यादिना वा णः ॥ अकखादीति किम् । प्रनिकुर्वन् । प्रनिखेलतु ॥ अपान्त इति किम् । प्रनिद्विट् ॥ पाठ इति किम् । इह च प्रतिषेधो यथा स्यात् । प्रनिचक्रे । प्रनिचिखनिपता ॥ इह च मा भूत् । प्रणिदिष्टम् प्रनिदेष्टुम् ॥ यद्यपि नेच्छन्त्येके । तन्मते प्रनिपापचदित्याद्येव स्यात् ॥

---

१ ए सी डी °न्तस्पर°. २ बी °ल्क°. ३ डी प्रतिदे°. ४ सी माध्येर्म°. ५ डी °णिपि°. ६ सी °णिया°. ७ बी डी °मान् । अ°. ८ ए बी °त्र "नेर्मा°. ९ सी डी प्रतिकु°. १० सी डी प्रतिखे°. ११ सी प्रणिदे°. डी प्रनिदे°.

अथैवं दूतस्य निर्भीकतया[1] स्वभर्तृपक्षपोषिकया सप्राणयोक्त्या चित्ते रञ्जितो राजा दूतं प्रशंसन्नाह ।

अप्राणिणिषाविहेतिवादिन्युत्प्राणं पर्यण्पराणु पर्यन् ।
पर्यणतां पर्यनन्नसीत्थं तं पर्याणिणदित्युवाच चेशः[1] ॥ २० ॥

२०. इह दूतेप्राणिणिषौ जीवितुमनिच्छौ शूरत्वान्मृत्युभयरहित इत्यर्थ. । अत एवोत्प्राणमुद्गतबलं यथा स्यादेवमिति वादिनि पूर्वोक्तवदनशीले सतीशो मूलराजस्तं दूतं पर्याणिणदुदजीजिवत् । जीवत्सु जीवन्तमुवाचेत्यर्थः । कथमित्याह । उ हे पर्यन् पूर्वोक्तवादित्वेन[2] हे समन्ताज्जीवंस्तथा हे पर्यण्पराण्[3] पर्यणतां समन्ताज्जीवतामपि मध्ये पराणतिशयेन जीवन्दूत पर्यणतां[4] समन्ताज्जीवतां मध्ये पर्यनन्नसि त्वमेव जीवन्भवासि । ममाप्यग्र एवं वदतस्तवैव जीवनं सफलमित्यर्थः । इत्थम् । तथेति वक्ष्यमाणमुवाच । इह च पर्यन्नित्यनेन[5] सामान्यतो जीवद्गुणविशिष्टं पर्यण्पराणित्यनेन च विशिष्टजीवद्गुणविशिष्टं दूतं संबोध्य पर्यणतां[6] पर्यनन्नसीत्यनेन जीवद्गुणविशिष्टेषु त्वमेव जीवद्गुणविशिष्ट इति विधेयतयोक्तः ॥

इत्युवाचेत्युक्तं तदेव वृत्तविंशत्या विवक्षुः पूर्वं त्रिवृत्त्या दूतस्य निर्भयवादित्वं प्रशंसन्नाह ।

प्राणिणिनिष आत्मभर्तृपक्षं त्वं पर्यानिन आत्मनो नियोगम् ।
भूपरिहणनैर्ब्रुवन्निहाशङ्कितान्तर्हणनं[2] हि दुर्हनोपि[3] ॥ २१ ॥

२१. इह मत्सभायां भूपरिहणनैर्भूम्यास्फालनैर्ब्रुवन् निःशङ्कं मु-

---

1 प बी सी च वेश. ॥ २ डी °हान्तर्हणन आशङ्केत दु°. ३ डी °पि ॥ भूप°.

---

१ प सी °भीतकया. बी °भींकया. २ सी °क्तवादि°. ३ बी °ण् पर्यन् प°. ४ °ता जीव°. ५ सी °यन्न°. ६ सी °र्यनता.

वाण' सन्नित्यर्थः । त्वमात्मभर्तृपक्षं प्राणिणिनिप उदजीवयः सातिशयं चकर्थेत्यर्थः । तथात्मनो नियोगं दूतकर्म पर्योनिन उज्जीवितवान् । ननु यद्यहं भूपरिहृणनैरुक्तवानेतावता कः स्वामिपक्षः को वात्मनो नियोगो मयोज्जीवित इति हेतुमाह । हि यस्मादिह सभायां भूपरिहृणनैर्भुवन्दुःखेन हन्यते दुर्हनोप्यास्तां त्वादृशो दूतादिः । समर्थो महाभटादिरप्यन्तर्हणनं स्वचित्ते विनाशमाशङ्कते संभावयेत् । भूपरिहृणनैर्भुवन्निहंत्युभयत्रापि योज्यम् ॥

द्वित्वे । अप्राणिणिपौ ॥ अद्वित्वे । उत्प्राणम् ॥ अन्ते । पराण् ॥ परेस्तु वा द्वित्वे । पर्याणिणत् पर्योनिनः ॥ अद्वित्वे । पर्यणताम् पर्यनन् ॥ अन्ते । पर्यण् पर्यन् । इत्यत्र "द्वित्वेपि" [८१] इत्यादिना णः । परिपूर्वस्य तु वा ॥ ये तु द्वित्वे कृते पुनर्द्वित्वमिच्छन्ति तन्मतेपि द्वित्व इति वचनाद्द्वयोरेवाद्ययोर्णत्वं न तृतीयस्य । प्राणिणिषयतेर्के प्राणिणिनिपः ॥

परिहृणनैः । अन्तर्हणनम् । इत्यत्र "हनः" [८२] इति णः ॥ अदुरित्येव । दुर्हनः ॥

प्रहण्मितरां प्रहन्मि चान्तर्हण्मोन्तर्हन्मो भृशं प्रहण्वः[1] ।
परिहन्व इति क्रुधा जिघांसौ नृपचक्रेत्र वदन्सुसौष्ठवोसि ॥ २२ ॥

२२. अत्र मत्सभायां वदन्संस्त्वं शोभनं सौष्ठवं प्रौढिमा यस्य स सुसौष्ठवोतिप्रगल्भोसि । क । सति नृपचक्रे । किंभूते । क्रुधा त्वां जिघांसौ । कथमित्याह । अहं[2] प्रहन्मि[3] प्रहिनस्मि अर्थादेतं[4] दूतम्[5] । तथा प्रहण्मितरामतिशयेनाहं प्रहिनस्मि । तथान्तर्हण्मो मध्ये हिंस्मः ।

१ ए सी °हन्मोन्त°.

१ सी ए स°. २ बी °ह परिहण्मि प्र°. ३ ए सी °हण्मि प्र°. ४ बी °देन दू°. ५ बी °त तथा.

तथा वयं भृशं शीघ्रमन्तर्हन्मः । तथावां प्रहण्वस्तथावां परिहन्वः सामस्त्येन हिंस्व इति ॥

प्रहण्वः परिहन्वः । प्रहण्मितरां प्रहन्मि । अन्तर्हण्मः अन्तर्हन्मः । इत्यत्र "वमि वा" [८२] इति वा णः ॥

प्रभुकार्यमिति स्फुटं प्रणिक्षंस्त्वमिव भयापरिनिक्षितो वदेत्कः ।
मदिरापरिणिंसनप्रणिन्द्येष्वपरानिंसितपूर्वमप्रनिन्द्यम् ॥ २३ ॥

२३. भयापरिनिक्षितो भयेनं नाश्लिष्टः प्रभुकार्यं प्रणिक्षंश्चुम्बन्निव सपक्षपातं स्थापयन्सन्नित्यर्थः। त्वमिव को दूत इत्युक्तप्रकारेण प्रभुकार्यं स्फुटं प्रकटं वदेत्त्वां मुक्त्वा न कोप्येवं वक्तुं शक्त इत्यर्थः । नन्वेवंभाषिणः सुराष्ट्रेष्वनेके दूताः सन्ति तत्किमेवं राज्ञोच्यत इत्याशङ्क्याह । मदिराया यत्प्रणिसनमास्वादनं तेन प्रणिन्द्येषु गर्हणीयेष्वर्थात्सौराष्ट्रेषु मध्येप्रनिन्द्यं स्फुटत्वेन श्लाघ्य वचनमपरानिसितपूर्वं न चुम्बितमनुक्तपूर्वमित्यर्थः । मद्यपेषु सौराष्ट्रेष्वित्थं स्फुटं त्वयैवोक्तमित्यर्थः ॥

परिणिंसन परानिंसित । प्रणिक्षन् परिनिक्षितः । प्रणिन्द्येषु प्रनिन्द्यम् । इत्यत्र "निंसनिक्ष°" [८४] इत्यादिना वा णः ॥

परिहीणमतिः प्रहीणवान्स्वं परियाणीयमिनः प्रयायमाणः ।
न स वेत्ति तव प्रयायिणां नः परियाणे परिवर्क्ति चाप्रयाणिम् ॥

२४. अहो दूत स तवेनः स्वामी ग्राहारिः परिहीणमतिः प्रनष्टज्ञानोत एव स्वमात्मानं प्रहीणवांस्त्यक्तवाननेककुकर्मकरणेन त्यक्तस्वमर्याद इत्यर्थः । अत एव च प्रयायमाणोस्माभिरास्कन्द्यमानः सन् स्वमा-

---

१ प सी °रि आणी°. २ सी °क्ति चाप्र°.

---

१ बी डी °येनाना°. २ सी °कार्ये प्र°. ३ प सी मुक्त्वा न. ४ प सी प्रनिन्द्ये°. ५ बी °रानिसि°. ६ बी °त्र निस°.

त्मानं परियाणीयमस्माभिरास्कन्दनीयं न वेत्ति न जानात्यपि तु स्वकृतै-र्महापन्यायैर्हेतुभिः स स्वं परियाणीयं जानात्येवेति काक्वा व्याख्या । अथ च प्रयायिणां प्रयाणं कुर्वतां नोस्माकम् । कर्तरि षष्ठी । परियाणे प्रयाणे विषयेप्रयाणि परिवक्ति च प्रयाणं मा भूदिति शापं ब्रूते च । एवमने-कान्महापन्यायान् ग्राहारिश्चक्रेन्यच्चास्मानभिषेणयतो निषेधतीत्यर्थः । एतेन रसेनाविरलेनागमकारणं बुभुत्सुरिति यद्दूतेनोक्तं तन्निरस्तम् ॥

अथ सामोक्तिगर्भं सामदण्डोक्तिगर्भं च यद्दूतेर्न मैत्र्येव कार्ये-तयोक्ता तामेकादशभिर्वृत्तैरनेकापन्यायरूपापराधप्रकाशनेन निराकु-र्वन् ग्राहारेर्निग्रहणीयतामेव समर्थयति ।

परिभुग्नप्रेङ्खमाणचापो यत्तीर्थाभिप्रेङ्खिणां स पापः ।
प्रेङ्खणमरुणत्प्रमङ्खनैस्तच्छासितुमेष प्रेङ्खणीय एव ॥ २५ ॥

२५. स ग्राहारिस्तीर्थाभिप्रेङ्खिणां तीर्थयायिनां यात्रिकाणां प्रेङ्खणं तीर्थेषु गमनं यद्यस्माद्धेतोररुणन्निरुरोध । कीदृक्सन् । पापः पापात्मा । तथा परिभुग्नप्रेङ्खमाणचापः कुटिलोल्लसद्धन्वा तत्तस्मात्प्रमङ्खनैः प्रयाणैः कृत्वा शासितुं शिक्षयितुमेव ग्राहारिः प्रेङ्खणीय एवास्कन्दनीय एव न तु मित्रीकार्य इत्यर्थः । प्रेङ्खमाणेत्यत्र शीले शानः ॥

परिहीणं । प्रहीणवान् । परियाणे । प्रयायमाणः । प्रयायिणाम् । अप्रयाणिम् । परियाणीयम् । इत्यत्र "स्वरात्" [८५] इति णः ॥ स्वरादिति किम् । परिभुग्नं ॥

प्रेङ्खणम् । प्रेङ्खमाण । प्रेङ्खिणाम् । प्रेङ्खणीयः । इत्यत्र "नाम्यादेरेव ने" [८६] इति णः । नाम्यादेरित्येव । प्रमङ्खनैः ॥

१ सी °भिः सस्व. २ ए सी डी °क्का वाख्या ।. ३ ए सी °रि आणे. ४ बी सी एवम°. ५ डी °भयती°. ६ सी न मित्र स°. ७ ए निराकु°. ८ सी °ह्निगा शी°. ९ डी °णवा°. १० ए सी °रिआणी°. ११ ए सी डी °ग्नः । प्रे°. १२ ए सी °भापे । प्रे°.

परिकोपणमप्रकोपनोर्थांहःप्रवपणदुष्प्रेहणं सहे चेत् ।
अवनिरवश्यं प्रगोपणीया कथमिव तर्हि मया प्रगोपनीया ॥२६॥

२६. अथेति दूतप्रश्ने[1] । दूत पृच्छामि त्वां चेद्यद्यहमप्रकोपनः क्षमाशीलः संस्तं ग्राहारि सहे न निगृह्णामीत्यर्थः । कीदृशं सन्तम् । परिकोपणं धार्मिकमप्यसहिष्णुं[3] तथांहसः पापस्य वञ्चनादेः प्रवपति नन्दाद्यने[4] प्रोप्यतेनेनेति करणेनटि वा प्रवपण उत्पादक इत्यर्थः । यो दुष्प्रेहणो दुष्टचेष्टो दुष्टाभिप्रायो[5] वा तम् । तर्हि तदावश्यं प्रगोपणीया पृथ्वीपत्वेन रक्षणीयावनिः पृथ्वी कथमिव । इवशब्दो वाक्यालंकारे । केन प्रकारेण मया प्रगोपनीया रक्षणीया । न कथमपि । तस्मान्न सह इत्यर्थः । अत्र च प्रगोपणीयेत्यस्यानुवाद्यत्वेन प्रयोगः । प्रगोपनीयेत्यस्य तु विधेयत्वेन ॥

परिकोपणम् अप्रकोपनः । प्रगोपणीया[6] प्रगोपनीया । इत्यत्र "व्यञ्जनादेः०" [८७] इत्यादिना वा णः ॥ व्यञ्जनादेरिति किम् । दुष्प्रेहणम् । नास्युपान्त्यादिति किम्[7] । प्रवपण ॥

परिमापणमाः प्रयापणीयः परिमापनपरियापनीयविप्रः ।
सत्पथपरिमापिणा नृपेणानिर्विण्णं परिमापिना हि भाव्यम् ॥२७॥

२७. मींग्श हिंसायामिति मींग्शो हिंसार्थत्वाद्धन्त्यर्थाश्चेति चुरादिपाठात् "चुरादिभ्यो णिच्" [३.४.८५.] इति णिचि "मिग्मीगोखलचलि"[8] [४.२.८] इत्यात्वे पावनटि च परिमापनं हिंसां परियापनीयाः प्रापणीया विप्रा येन स ग्राहारिः । आ इति कोपे । परिमापणं हिंसां प्रयापणीयः प्रापणीयो मया न[9] तु मित्रीकार्य[10] इत्यर्थः । हि यस्माद्धेतोर्नृपेण राज्ञा

---

१ प सी °नोथाहप्र°.

---

१ बी °श्ने । हे दू°. २ प बी सी °पन. ३ बी °र्मिकानप्य°. ४ डी नन्याद्य°. ५ सी °भियो°. ६ प सी डी °णीया· प्र°. ७ प सी किम् ॥ परि°. ८ प सी °लवलि". ९ प सी °पणार्हे°. १० प ननु मि०.

सत्पथपरिमापिणां धर्मोच्छेदकानामन्यायिनाम् । कर्मणि षष्ठी। अनिर्विण्णमनिर्वेदं यथा स्यादेवं परिमापिना[1] हिंसनशीलेन भाव्यम् । गजरक्षितानि हि तपोवनानि स्युः ॥

निर्विण्णवदाप्रवेपमानाप्रप्यानाप्रख्यानमप्रभानम् ।
अमुना परिभूयमानमुच्चैः कतमद्ब्रह्मपुरं दुनोति नास्मान् ॥ २८ ॥

२८. कतमद्ब्रह्मपुरं ब्राह्मणस्थानमस्माननुच्चैर्न दुनोति न पीडयति[2] । कीदृक्सत् । अमुना आहारिणा परिभूयमानमत एवाप्रवेपमानं भयेन समन्तात्कम्पमानम् । तथाप्रप्यानमनुपचितं क्षीणमित्यर्थः । अत एवाविद्यमानं प्रख्यानं प्रसिद्धिर्यस्य तन्निर्नामकमित्यर्थः । ततो विशेषणकर्मधारयः । अत एव निर्विण्णवद्धर्मकर्मसु निर्विण्णमत एव चाविद्यमानं प्रभा[3]नं प्रभा यस्य तन्निस्तेजस्कम् । तस्मात्काननैर्न[4] सह मैत्री[5]ति भावः । यदपि ब्रह्मपुरं ज्ञानाधारः शरीरं तदपि पापै रोगादिना वा परिभूयमानमत एवाप्रवेपमानाप्रप्यानाप्रख्यानं निर्विण्णवदप्रभानं च सत्कतमन्न दुनोति किं तु सर्वमपि ज्ञानोच्छेदशङ्कया दुःखयतीत्युक्तिः ॥

अप्रपवनमस्य चान्यदारप्रगमनदुष्परिकामिनः कुकर्म ।
प्रभवति परिभाव्यमानम[1]प्रख्यापनमप्रप्यायनं भृशं नः ॥ २९ ॥

२९. कुकर्म परस्त्रीगमनादि । अस्य आहारेरन्यदारप्रगमनदुष्परिकामिनः परस्त्रीसेवनविषयदुष्टाभिलाषशीलस्य सतः[6] प्रभवतीष्टे । कीदृशम् । अप्रपवनमिहलोकपरलोकविरुद्धत्वेनापवित्रमत एव भृशमत्यर्थं परिभाव्यमानमस्माभिश्चिन्त्यमानं सन्नः । कर्तरि षष्ठी । अस्माभिरप्रख्यापनमप्रप्यायनं[7] च । चो भिन्नक्रमोऽत्र योज्यः । प्रख्यातेः प्रप्या-

१ ए सी डी °भव प्र°.

१ ए बी सी डी °पिना हिं°. २ बी °ति । अ°. ३ सी °भा य°. ४ बी °न मै°. ५ ए सी °त्र्यारिति. ६ ए सी डी °त ईष्टे प्रभवति । की°. ७ सी डी °यन न चो°.

येश्च णिगि भावेनटि नञा बहुव्रीहिः । लोकमध्ये प्रकाश्यमेतत्कारकानिग्रहेणावर्धनीयं चेत्यर्थः । कुकर्मायत्तोयं तदनेन सह का मे मैत्रीत्यर्थः ॥

अमुना परिवेपनेन भग्नः परिपावनपरिभापनः प्रभासः ।
दुष्प्रख्याणप्रकामनेनान्तर्हननत्वं सुप्रगम्यमानः ॥ ३० ॥

३०. परिपावनः पापमलापनेतृत्वात्पावित्र्यहेतुर्यः परिभापनो लक्ष्म्यादिसंपादनेन शोभापादनहेतुः स प्रभासस्तीर्थममुना ग्राहारिणा भग्नः । यतोन्तर्हननत्वमन्तर्हन्यतेस्मिन्नित्यन्तर्हननो देशो यत्र मध्यभागे लोको हन्यते तद्भावं मध्यभागे लोकघातमित्यर्थः । सुप्रगम्यमानः प्राप्यमाणः । कीदृशेन सता । दुष्प्रख्याणे दुष्टख्यातौ प्रकामनमभिलाषो यस्य तेनात एव परिवेप्यते जगद्येन तेन[2] परिवेपनेन प्रच्छन्नधाटीप्रदानादिनाखिललोककम्पकेन । मध्येलोकं घ्नता प्रभासदेशोमुनोपद्रुतोतोमुना सहालं[3] मैत्र्येत्यर्थः ॥

अन्तरयनतां जहौ सुराष्ट्रा येनान्तरयणवारिणा जनानाम् ।
सोन्तर्हणनात्कथं ह्युपेक्ष्यः सर्पिष्पानप्रावनद्धपिण्डः ॥ ३१ ॥

३१. जनानामन्तरयणं मध्ये गमनं प्रच्छन्नधाटीप्रदानादिना वारयतीत्येवंशीलो यस्तेनान्तर्यणवारिणा[4] सता येन कृत्वा सुराष्ट्रादेशोन्तरयनतामन्तर्मध्ये[5] सुस्थत्वेनाय्यते गम्यते यस्यां[6] सान्तरयनी तद्भावं जहौ तत्याज । येन कृत्वा दुर्गमाभूदित्यर्थः । स ग्राहारिः सर्पिष्पानेन प्रावनद्धं पीनं पिण्डमङ्गं यस्य सोतिवलिष्ठ इत्यर्थः । हि स्फुटमन्तर्हणनात्सुराष्ट्रामध्ये वधात्सकाशात्कथमुपेक्ष्यो मोच्यः सुराष्ट्रामध्ये वध्य एवेत्यर्थः ॥

---

१ बी °द्भावम°. २ डी °न प्र°. ३ ए सी मैत्रेत्य°. ४ ए सी डी °यनवा°. ५ बी °ध्ये स्वस्थ°. ६ ए सी °स्यां सांरतय°.

प्राणद्धान्शुष्कगोमयेण प्रघ्नन्यो नरिनर्ति यायजूकान् ।
तस्य नरीनृत्यमानखड्गस्याक्षुभ्नन्मनसः किमन्यदागः ॥ ३२ ॥

३२. यायजूकानृत्विजः प्रणिघ्नन्सन्यो ग्राहारिर्नरिनर्ति[1] संतोषेणाभीक्ष्णं नृत्यति । कीदृशान्सतः । शुष्कगोमयेणाग्नौ हवनार्थं[2] गृहीतेन करीषेण प्राणद्धान् । एतेन साक्षाद्यागकारितोक्तिः । क्रियमाणे हि यागे वैवस्वतं कालमुद्दिश्य कारीषहोमः क्रियते । तस्य ग्राहारेरक्षुभ्नन्मनसो निर्भीकस्यात एव नरीनृत्यमानखड्गस्य यायजूकवधाय पोस्फूर्यमाणासेः किमन्यदागोपराधः । इदमेव महदाग इत्यर्थः ॥

परिमार्पणम्[3] परिमार्पन[4] । परिमापिणाम् परिमापिना । प्रयापणीयः परियापनीये[5] । इत्यत्र "णेर्वा"[6] [८८] इति वा णः ॥

निर्विण्णम् । अत्र "निर्विण्णः" [८९] इति णत्वं निपात्यते ॥ कश्चित्तु निर्विण्णवदिति चेच्छति ॥

अप्रख्यानम् । अप्रपवनम् । परिभूयमानम् । अप्रभानम् । दुष्परिकामिनः । प्रगमन । अप्रप्यानि । अप्रवेपमान ॥ ण्यन्तेभ्योपि । अप्रख्यापनम् । परिपावन[7] । परिभाव्यमानम् । परिभापनः । प्रकामनेन । सुप्रगम्यमानः । अप्रप्यायनम् । परिवेपनेन । इत्यत्र "न ख्यापूग्भूभा°" [९०] इत्यादिना न णः ॥ ख्यातेर्णत्वमिति कश्चित् । दुष्प्रख्याण[8] ॥

अन्तरयनताम् । अन्तर्हननत्वम् । इत्यत्र "देशे°" [९१] इत्यादिना न णः ॥ देश इति किम् । अन्तरयण । अन्तर्हणनात् ॥

सर्पिष्पान । इत्यत्र "पात्पदे" [९२] इति न णः ॥

---

१ सी °र्नविन°. २ बी °र्थं अही°. ३ बी °पण प°. ४ ए बी सी डी °पनम् । प°. ५ ए सी डी °नीयः । परियापनीय । इ°. ६ बी "णे वा" इ°. ७ बी °पावम् । क°. ८ सी °न । आप्र°. ९ सी °वनम् । प°. १० बी °ख्याणः ॥ अ°.

प्रावनद्ध । इत्यत्र "पदेन्तरे०" [९३] इत्यादिना न णः । अनाङीति किम् । प्राणद्धाम् ॥ अतद्धित इति किम् । शुष्कगोमयेण ॥

प्रघ्नन् । इत्यत्र "हनो घि"[1] [९४] इति न णः ॥

नरीनृत्यमान । नरिनर्ति । इत्यत्र "नृतेर्यङि" [९५] इति न णः ॥

अक्षुभ्नत् । इत्यत्र "क्षुभ्नादीनाम्" [९६] इति न णः ॥

गर्भनमत्ष्वष्कणासहैणीष्ठ्यूतास्रैः ष्ट्यायंस्तमुज्जयन्तम् ।
यो विस्रमकल्पयत्स नः किं मित्रं स्यान्म्लेच्छीकृपीटक्लृप्तः ॥३३॥

३३. यो ग्राहारिस्तं महातीर्थराजतया प्रसिद्धमुज्जयन्तं विस्रं दुर्गन्धमकल्पयच्चक्रे । यतो गर्भेण नमन्त्यः प्रह्वीभवन्त्योत एव ष्वष्कणासहा गमनाक्षमा या एण्यो मृग्यस्ताभिः ष्ठ्यूतानि प्रहारवशान्निरस्तानि यान्यस्राणि रक्तानि तैः कृत्वा तं ष्ट्यायन्संबन्धयन्स ग्राहारिर्म्लेच्छ्याः कृपीटमुदरं तस्मात्क्लृप्तो जात इवोत्करीत्यातिनिकृष्टाखेटककारित्वात्किरातादिनीचजातितुल्यो नोस्माकं क्षत्रियाणां मित्रं किं स्यान्नैवेत्यर्थः ॥

नमत् । इत्यत्र "पाठे धातु०" [९७] इत्यादिना णस्य नः ॥

सहा । इत्यत्र "षः०"[3] [९८] इत्यादिना षस्य सः ॥ ष्ट्यादिवर्जनं किम् । ष्ट्यायन् । ष्ठ्यूत । ष्वष्कण ॥

क्लृप्तः[4] । अकल्पयत् । इत्यत्र "ऋर लृलम्०" [९९] इत्यादिना ऋरयोर्लृलौ ॥ अकृपीटादिष्विति किम् । कृपीट[5] ॥

प्लत्ययमानान्पलायमानान्यो गिलति निजेगिल्यते परस्तम् ।
गिरति तमन्योस्य मात्स्यनीतौ भुजपलिघः परिघत्वभाक्कथं नः ॥ ३४

३४. नोस्माकं भुजपलिघो भुजार्गला कथं परिघत्वभाक् स्यात् ।

---

१ सी °थ न ॥

---

१ सी °नो घि" इ°. २ बी °टका°. ३ बी "ष स°" इ°. ४ बी क्लृप्त । अ°. ५ ए डी °पीटः ॥

कस्यां सत्याम्। अस्य आहारेर्मात्स्यनीतौ स्वजातावन्योन्यं गिलनरूपे मात्स्ये न्याये[1]। कथमित्याह। प्लत्ययमानान्भयेन व्यावर्तमानान्पलायमानांश्च नश्यतो वणिगादीन्यो गिलति संहरति तं परोन्यो निजेगिल्यते[2] गर्हितं गिलति तं च निजेगिलकमन्यो गिरतीति[3]। एतन्मात्स्यनीतिनिवारणाभावान्मद्भुजार्गला कर्मकारी न स्यादेवेत्यर्थः। तस्मात्कानेन मैत्रीति॥

पलियोगविदां गुरुं धरित्रीपल्यङ्कं परियोगिणं य आर्दीत्।
ऌफिडमृफिडजांस्तथर्फिलस्त्रीरघपर्यङ्कममुं सहे जवाक्षम्॥ ३५॥

३५. यो आहारिः परियोगिणं[4] महाध्यानिनमृफिडमृषिभेदमार्दीदपीडयत्। कीदृशम्। परि समन्ताद्योगं ध्यानं विदन्ति ये तेषां योगिनां गुरुं शिक्षकत्वादाचार्यम्। एतेनातिज्ञानितोक्ता। तथा धरित्र्येव पल्यङ्कः खट्वा यस्य तं भूमिशायिनमित्यर्थः। एतेन क्रियावत्तोक्तिः। तथा ऋफिडजानृफिडपुत्रांस्तथा ऋफिलस्त्रीर्[5]ऋफिलभार्याश्च य आर्दीत्। तममुं आहारिं सहे क्षमे न सह इति काका व्याख्या। कीदृशम्। अघस्य[6] महर्षिस्त्रीभ्रूणघातादिपापस्य पर्यङ्कमिवाघपर्यङ्कं पापविश्रामस्थानमित्यर्थः। तथा कोपात्सदा मद्यपानाद्वा जपापुष्पवदक्षिणी यस्य तं रक्ताक्षम्॥

तदेवमस्य सर्वथा मैत्र्ययोग्यत्वमुक्त्वा[7] मैत्र्यकरणेधुना कृतान्तः[8] प्रनिकुर्वन्[9]प्रनिखेलतु[10] प्रनिद्विडित्यनेन[11] यद्दूतो राज्ञो मृत्युरूपं दण्डमुक्तवांस्तं स्वासियष्टेः सामर्थ्योपवर्णनद्वारेण आहारेरेवाह।

१ डी °डजा°.

१ ए सी मासे न्या°. डी मात्स्यना°. २ ए सी °गिल्ये ग°. ३ बी डी गिलत्री°. ४ ए सी °गिणः म°. बी °गिन म°. ५ ए बी सी °स्त्री ऋफि°. ६ डी °स्यर्षि°. ७ ए सी° मर्षि°. ८ ए सी डी °मुक्त्वा। मै°. ९ बी सी डी प्रतिकु°. १० ए बी सी डी °प्रतिखे°. ११ बी प्रतिद्वि°.

रिपुरक्तजपार्चितासियष्टिर्विजयिन्यष्ट दिशः प्रकाशयित्री ।
प्रजिघत्सति तं स्वसेव मृत्योर्ज्यायस्यद्य सुहिन्नसौ लसन्ती ॥३६॥

३६. असौ प्रत्यक्षा करतलस्था लसन्ती स्फुरन्त्यसियष्टिरद्य तं ग्राहारिं[1] प्रजिघत्सति भक्षयितुमिच्छति । कीदृक्सती । विजयिनी विजयहेतुरत एव सुहिन् सुष्ठु हिंसिकार्थोदरीणामत एव रिपुरक्तजपार्चिता शत्रुरुधिरमेवारक्तत्वाज्जपापुष्पं तेनार्चितात एव चाष्ट दिशः प्रकाशयित्री तदावरणरूपशत्रूच्छेदेन प्रकटयित्री[2] । अतश्च यमादपि पूर्वं ग्राहारौ मरणरूपस्य यमकार्यस्य चिकीर्षुत्वादतिकृष्णरौद्रत्वाच्चो-त्प्रेक्ष्यते । मृत्योर्यमस्य ज्यायसी बृहती स्वसेव भगिनीव । अनेन चासि-यष्टेर्मृत्युस्वसृत्वारोपेण[3] मृत्योरपि स्वादेशकारित्वं व्यञ्जितम् । तेन चाधुना कृतान्त इत्यादि यद्वृत्तेनोक्तं तदपास्तम् ॥

पलायमानाम् । प्लयमानान्[4] । इत्यत्र "उपसर्गस्यायौ" [१००] इति लः ॥

निजेगिल्यते । इत्यत्र "ग्रो यङि" [१०१] इति लः ॥

गिलति । गिरति[5] । इत्यत्र "न वा स्वरे" [१०२] इति वा लः ॥

पलिघः[6] परिघं[7] । पल्यङ्कम् पर्यङ्कम् । पलियोग परियोगिणम् । इत्यत्र "परे-र्घाङ्कयोगे" [१०३] इति वा लः ॥

लृफिडम् ऋफिडजान् । ऋफिल ऋफिडजान्[8] । इत्यत्र "ऋफिड°" [१०४] इत्यादिना ऋत लृत् डस्य च लो वा ॥

जवा जपा । इत्यत्र "जपादीनां पो वः" [१०५] इति वा पस्य वः ॥

सप्तमः पादः समर्थितः ॥

---

१ ए बी सी °जयन्य°.

---

१ ए सी °रिं जि° २ ए सी °कयि°. ३ ए सी °सृत्वारो°. ४ ए सी° मान् ।. ५ बी गिरीत्य°. ६ ए सी डी° लिघ । प°. ७ बी रिघः । प° ८ ए सी° त्सप°

विजयिनी । प्रकाशयित्री । इत्यत्र "स्त्रियां नृतः°" [१] इत्यादिना ङीः ॥ स्त्रियामिति किम् । अष्ट दिशः ॥ नान्तायाः संख्याया युष्मदस्मदोरिवालिङ्गत्वादत एव नलोपे "आत्" [१८] इत्यावपि न स्यात् ॥ अस्वस्रादेरिति किम् । स्वसा ॥

उदित् । ज्यायसी ॥ ऋदित् । लसन्ती । इत्यत्र "अधातु°" [२] इत्यादिना ङीः ॥ अधात्विति किम् । सुहिन् ॥

तदेवं ग्राहारिविषयं वधाभिलाषमुक्त्वा वधे कृते यद्भावि फलं तदाशीर्वादपूर्वं वृत्तद्वयेनाह ।

प्राची तमसामवावरी भास्करधीवर्यतिशर्वरी यथा हि ।
अत्र तथा तेन बहवावा मद्दृश्वर्यनवावरी प्रजास्तु ॥ ३७ ॥

३७. यथा प्राची पूर्वदिग् हि स्फुटं तमसां तिमिराणामवावरी ओणतेर्वनि "वन्याङ् पञ्चमस्य" [ ४.२. ६५. ] इत्यात्वे च अपनायिका स्यान । कीदृक्सती । अतिशर्वरी रात्रिमतिक्रान्तात एव भास्करधीवरी रविं बिभ्रती तथा तेन ग्राहारिणा कृत्वा बहवोवावानोपनायकाः क्षयकारका यस्याः सा प्रजाद्य सांप्रतं मद्दृश्वरी मां दृष्टवती मत्स्वामिका सत्यस्तु । कीदृशी । न विद्यन्तेवावानो यस्यां सानवावरी क्षयकारकरहिता ॥

अचिरेण भवत्वसौ सुराष्ट्रा धृतधीवर्यथवा विनष्टधीवा ।
गायान्द्विपदश्चतुष्पदीर्वा कुण्डोध्नीरिह पातु चारणौघः ॥ ३८ ॥

३८. असौ सुराष्ट्राचिरेण शीघ्रं भवतु । कीदृक् । ध्यायति कुकर्मेति

---

१ सी पा चा°.

---

१ सी °सती । इ°. २ ए सी °मत्यात्वे. ३ ए °वावो य°. सी °वाचो य°.

"ध्याप्योर्धीपी वा" इति औणादिके क्वनिपि धीवा चण्डालो धीवेव कुकर्मकारित्वाद्धीवा ग्राहारिर्धृतो गृहीतो बन्दौ क्षिप्तो धीवा यस्यां सा धृतधीवरी। अथवा विनष्टो मृतो धीवा यस्यां सा च । तथेह सुराष्ट्रायां चारणौघो मङ्गलपाठकभेदसमूहो द्वौ पादौ यासां ता द्विपद एवं चतुष्पदीर्वा राजादिवर्णनोपेतांश्छन्दोभेदान् गोवधकस्य ग्राहारेर्वधेन निर्भयत्वाद्गायन्सन् कुण्डमिवोधो यासां ताः कुण्डोध्नी राजादिभ्यो लब्धा धेनूः पातु दुग्धपानाय रक्षतु ॥

तदेवमस्य वधे फलान्युक्त्वा वधहेतौ रणकरणे ग्राहारिमनुमन्यमानो दूतमाह ।

**शतकुण्डोध्न रथोऽस्त्वशिश्वीर्योक्तास्याश्वतरीस्त्रिहाणीस्ताः।**
**मुक्त्वा मदिरां त्रिहायनां सोश्वाः सन्नाहयतु क्षणाद्द्विदाम्नीः ॥३९॥**

३९. अस्य ग्राहारे रथैस्ताः पराक्रमित्वादिगुणैः सर्वत्र प्रसिद्धा अश्वतरीर्वेसरीर्योक्ता रणायात्मना सह संबन्धयितास्तु । कीदृक् । शतेन कुण्डोध्नीभिः क्रीतः शतकुण्डोध्न । एतेन महार्घत्वोक्तिः। कीदृशीरश्वतरीः । त्रयो हायना वर्षाणि यासां ता यौवनस्था इत्यर्थः । एवंभूता अपि सापत्या अबला एव स्युरित्याह । अविद्यमानाः शिशवो बालका यासां ता अशिश्वीः । तथा द्वे दाम्नी कण्ठाभरणमाले यासां ता अश्वाः क्षणात्सन्नाहयतु। किं कृत्वा त्रिहायनां त्रिवार्षिकीम् । एतेन परिपक्वत्वोक्तिः । मदिरां मुक्त्वात्यन्तं रणोत्कण्ठया त्यक्त्वा। एवं च स्वयं ग्राहारेः सैन्यस्य च रणोद्यमेनुमतिरुक्ता । अनया चानुमत्याथ दुर्निगदं छलं त्वमन्तर्णयदर्घा इति यद्दूतेनोक्तं तन्निरस्तम् ॥

१ ए सी °योक्तस्या°.

१ सी ध्यापो धी पी. २ ए °प्यो धी पी. ३ ए सी °थस्ता प°. ४ सी डी क्रीता श°. ५ बी °हार्घत्वो°. ६ बी °शिश्वी । त°. ७ ए सी डी क्रिमोक्तिः ।. ८ ए बी सी डी °धादिति.

प्राची । इत्यत्र "अञ्चः" [३] इति ङीः ॥

ण । ओणृ । अवावरी ॥ स्वर । धा । धीवरी ॥ अघोष । मद्दृश्वरी । इत्यत्र[१] "णस्वर°" [४] इत्यादिना ङीर्वनोन्तस्य[२] रश्च ॥ विहितविशेषणं किम् । शृणातीति[३] शर्वरी । स्वराद्विहितत्वाद्गुणे कृते घोषवतो यथा स्यात् ॥

अनवावरी बह्ववावा । धृतधीवरी विनष्टधीवा । इत्यत्र "वा बहुव्रीहेः"[४] [५] इति वा ङीर्वनोन्तस्य रश्च ॥ बहुमेरुदृश्वरी बहुमेरुदृश्वेति स्वयमभ्यूह्यम् ॥

चतुष्पदीः द्विपदः । इत्यत्र "वा पादः" [६] इति वा ङीः ॥

कुण्डोध्नीः । इत्यत्र "ऊध्नः" [७] इति ङीः ॥ समासान्तविधावूध्नित्यादेशे नान्तत्वादेव ङीः सिध्यति किं तु शतेन कुण्डोध्नीभिः क्रीत इतीकणि तल्लुपि च शतकुण्डोध्निति प्रकृतेः सौ शतकुण्डोदिति स्यात् शतकुण्डोधेति[६] चेष्यते ।

अशिश्वीः । इत्यत्र "अशिशोः" [८] इति ङीः ॥

त्रिहायणीः । इत्यत्र "संख्यादेः°" [९] इत्यादिना ङीः ॥ अत्र "चतुस्त्रेः°" [२.३.७४.] इत्यादिना णः ॥ वयसीति[७] किम् । त्रिहायनां मदिराम् ॥

द्विदाम्नीः । इत्यत्र "दाम्नः" [१०] इति ङीः ॥

अथ त्वत्प्रणिदिष्टं प्रनिदेष्टुमेष यामीति यद्दूतेन स्वयानमुक्तं तद्रणार्थं[८] ससैन्यस्य सन्नद्धस्य ग्राहारेः स्वदेशसीमन्यागमनं चानुमन्यमान आह ।

व्रज शतराज्ञः सहस्रराज्ञीरधिराज्ञीबहुसाम्र्यधीश्वरीाद्यैः[१] ।

पृतनाः कृतवर्मणोतिसाम्नो व्युह्य युधे सीमानमेत्विनस्ते ॥ ४० ॥

४०. हे दूत व्रज ग्राहारिसमीपम् । तथा ते तवेनः स्वामी ग्राहा-

१ ए सी °राद्यैः ।.

१ सी °त्र स्व°. २ ए सी ङीर्वानो°. ३ वी शृणोती°. ४ वी °व्रीहि." इ°. ५ ए सी °ति ङी ॥. ६ ए सी °ण्डोधिति. ७ ए सी ङी ति । त्रि°. ८ ङी प्रतिदे°.

रियुधे युद्धार्थं सीमानं स्वदेशमर्यादाभूमिमेत्वागच्छतु । किं कृत्वा । पृतनाश्वमूर्न्युह्य । किंभूताः । अधिका राजानो यस्यां साधिराज्ञी नाम ग्रामो बहूनि सामानि यस्यां सा बहुसाम्नी नाम पुरी । द्वन्द्वे तयोरधीश्वरास्तदाद्यैर्नृपैः कृत्वा । शतं राजानो यासु सहस्रं राजानो यासु वा ताः । अत एवातिसाम्नः सामोपायमतिक्रान्ता युद्धायैव सदोद्यता इत्यर्थः । अत एव च कृतवर्मणः संनद्धाः ॥

इति स विसृष्टो वनान्तसीमास्वतिपर्वासु वृकोन्वजाः शताज्याम् ।
द्विपदस्त्रिपदा ऋचो महर्षीन्पठतो गोपजुषो जगाम पश्यन् ॥ ४१ ॥

४१. इत्येवंप्रकारेण विसृष्टो राज्ञा मुत्कलितः स दूतो जगाम ग्राहारिं प्राप । कीदृक्सन् । अतिपर्वासु मूलराजागमनानन्देनातिशयितोत्सवासु वनान्तसीमासु काननपर्यन्तसमिभूमिषु वर्तमानान्महर्षीन्मारणेच्छया क्रूरं पश्यन् । वृको नु यथारण्यश्वा शताज्यां शतस्याजानां समाहारे वर्तमाना अजाश्छागीर्मारणेच्छया पश्यति । कीदृशान् । गोपजुषो गोकुलस्थांस्तथा द्वौ पादौ यासां ता द्विपद एवं त्रिपदाश्च ऋचो मन्त्रविशेषान्पठतः ॥

सहस्रराज्ञीः शतराज्ञः । इत्यत्र "अनो वा" [११] इति वा ङीः ॥

अधिराज्ञी । बहुसाम्नी । इत्यत्र "नाम्नि" [१२] इति ङीः ॥

कृतवर्मणः । इत्यत्र "नोपान्त्यवतः" [१३] इति न ङीः ॥

सीमानम् । इत्यत्र "मनः" [१४] इति न ङीः ॥ अन्निन्नसन्ग्रहणान्यर्थवतानर्थकेन च तदन्तविधिं प्रयोजयन्ति । तेन सामातिक्रान्ता अतिसाम्न इत्यादावपि ङीप्रतिषेधः स्यात् ॥

---

१ ए सी डी °दास्त्रो°.

---

१ ए सी °नृपौ कृ°. २ ए सी °हश्र रा°. ३ ए सी इर्थः ।. ४ ए सी डी °श्च रचो°. ५ ए सी °हश्रा°. ६ डी अनिनस्म°.

सीमासु । अतिपर्वासु । इत्यत्र "ताभ्यां वाप्[1] डित्" [१५] इति वा डिदाप् ॥ पक्षे पूर्वाभ्यां प्रतिषेधाद्ङीर्न भवति । सीमानम् । कृतवर्मणः ॥ उपान्त्यलोपिनस्तु बहुव्रीहेर्ङीरपि स्यात्[2] । शतराज्ञः । सह[3]स्रराज्ञीः ॥

अजा । इत्यत्र "अजादेः" [१६] इत्याप् ॥ अजादेरित्यावृत्त्या षष्ठीसंबन्धः[4] किम् । अजादिसंबन्धिन्यामेव स्त्रियामभिधेयायां यथा स्यात् । तेनेह न स्यात् । शताज्याम् । अत्र समाहारः समासार्थः स्त्री । नासावजशब्दसंबन्धिनी ॥

द्विपदः । त्रिपदा[5] ऋचः । इत्यत्र[6] "ऋचि[7]" [१७] इत्यादिना पाच्छन्दसाबन्तस्य पात्पदे निपात्येते ॥

**अशृणोदथ ताः कथाः प्रभापा[1] भीमा भूरिनदा नदीर्नु तस्मात् ।**
**ग्राहरिपुः प्रकोपतः स[2] वन्दीगौरीरौत्सीस्तापसीः प्रपश्यन् ॥४२॥**

४२. अथ दूतप्राप्त्यनन्तरं स ग्राहारिस्तस्माद्दूतात्ता मूलराजोक्ताः कथा उक्तीरशृणोत् । कीदृक्सन् । औत्सीरुत्सस्यर्षेरपत्यानि स्त्रीः प्रकोपत एताः पापिष्ठा अस्य विग्रहस्य हेतव इति रुषा प्रपश्यन् । कीदृशीः । वन्दीर्[8]हठापहृतास्तथा गौरीः स्वर्णवर्णास्तथा तपोस्त्यासां "ज्योत्स्नादिभ्योण्" [ ७.२. ३४. ] इत्यणि तापसीस्तपस्विनीः[9] । कीदृशीः[10] कथाः । भीमा दण्डोपायार्थत्वाद्रौद्रा अत एव भूरिः प्रभूतो नद आहविप्रत्याहतिरूपः शब्दो यासु ताः । अत एव च प्रभां माहात्म्यं पिबन्ति परिभावुको[11]क्त्या ग्रसन्ते यास्ताः नदीर्न्विति । यथा ग्राहरिपुर्ग्राहाणां जलचरजन्तूनां रिपुर्धीवरो भूरिनदाः प्रभूतवहाः प्रभूतशब्दा

१ ए बी सी °भापो भी°. २ डी स बन्दी°.

१ बी डी °वा टि°. २ बी °व् । शित°. ३ ए सी हस्रा°. ४ ए सी °न्ध कि°. ५ ए सी डी °दा ऋच् । इ°. ६ ए सी डी °त्र ऋचि°. ७ बी °स्य ऋचेर°. ८ ए सी °न्दीं हठा°. ९ ए सी °प्रस्विनी°. १० ए सी डी °शीः तथा. ११ बी °भावको°.

वात एव भीमा नदीः शृणोति मत्स्यग्रहणाभिलाषेण तासु जिगमिषुत्वाल्लोकादाकर्णयति ॥

उत्क्षिप्तुः सोरिकम्पकारीं शैलेय्या भुजया गदां शिलेयीम्।
सौपर्णेयीसहोदरौजाः शाक्तीकीः पौंस्नीर्दिदेश सेनाः ॥ ४३ ॥

४३. स आहारिः शाक्तीकीः शक्तिप्रहरणाः पौंस्नीः पुंसां पौरुषगुणोपेतानां नराणामिमाः सेना आदिदेश रणारम्भायाज्ञापयत्। कीदृक्। सुपर्ण्याः। केचित्त्वेनमजादिषु पठन्ति। तन्मते सुपर्णाया वापत्यं स्त्री सौपर्णेयी सुमतिनाम्नी सगरपत्नी तस्याः सहोदरो गरुडस्तद्वदोजो बलं यस्य सः। अत एव शिलायास्तुल्या "शिलाया एयच्च" [७.१. ११२] इति चकारादेयञि शैलेयी तया शिलादृढया भुजया कृत्वा गदां मुद्गरविशेषमुत्क्षिप्तुरुल्लालयन्। कीदृशीम्। शिलेयीं शिलाभिस्तुल्याम्। अन्ने[1]यच्च। अत एवारिकम्पकारीम् ॥

आहारेरादेशे सेना यथामिलंस्तथादशभिर्वृत्तैराह।

सेनान्योस्याज्ञया तदैयुस्त्यक्त्वा स्त्रैणीराक्षिकीः सलीलाः।
औशनसाश्चाथ पाणिनीयाः सहसा चारुवलित्रया वधूटीः ॥४४॥

४४. तदास्य आहारे[3]राज्ञया सेनान्यो दण्डनायकाः सेनायुक्ता नृपा ऐयुराहारिसमीप आगताः। किं कृत्वा। वधूटी[4]र्नवोढाः पत्नीराक्षिकीरक्षैर्दीव्यन्तीः सतीः सहसाकस्मात्त्यक्त्वा। कीदृशीः। चारु मनोज्ञं वलित्रयमुदरमध्यवर्ति रेखात्रयमुपलक्षणत्वाच्छेषाङ्गोपाङ्गानि च यासां ताः। अथ तथा पाणिनीयाः पाणिनिप्रोक्तमहाशब्दानुशासनज्ञाः। एतेन विद्वत्तोक्तिः। तथौशनसाश्च शुक्रप्रोक्तनीतिशास्त्रज्ञाश्च। एतेन

---

१ बी °सा पुरु°. २ बी °यच। अ°. ३ बी °राज्ञया. ४ सी °टीवो°.

लोकव्यवहारक्षतोक्ता। तथा लीला शृङ्गारचेष्टाविशेषः। सह तया। उपलक्षणत्वाद्विलासादिभिश्च स्वाभाविकालंकारैर्वर्तन्ते यास्ताः। तथा स्त्रीभिः संस्कृताः सखीभिर्मण्डनालंकारादिभिः शोभिताः। "प्राग्वतः०" [६.१.२५] इत्यादिना नञि स्त्रैणीश्च। तदेवं विशेषणसूचितैरालम्बनविभावोद्दीपनविभावैः शृङ्गारस्य प्रकर्षप्राप्तत्वाद्वधूनामत्यन्तं दुस्त्यजानामपि दण्डनायकैः सहसा त्यागेन स्वस्वामिनि आहारावुत्कृष्टा भक्तिः सेनायुक्तनृपैस्तु आहारैः प्रचण्डाज्ञता सूचिता। सेनान्य इत्यनेनाभिधेयाः सेनायुक्ता नृपास्तु त एवात्र ज्ञेया येमित्रा आहारिणा निर्जित्य स्वसेवकीकृतास्तेषामेव ह्यादेशाकरणेतिभीरुत्वादेवमागमनसंभवः। एवं चात्रामित्रबलागमनमुक्तम्॥

वृद्धाकृतमङ्गलास्त्रिशल्यीभूत ईयुः सुभटाः श्रितास्तुरङ्गीः।
द्विद्रोणीः षड्डुषास्त्रिपण्याः शतकम्बल्या द्याचितास्त्रिविस्ताः॥४५॥

४५. सुभटा ईयुरागताः। किंभूताः सन्तः। वृद्धाभिः स्थविरस्त्रीभिः कृतं मङ्गलं चन्दनवर्धनादि येषां ते। तथातिबलिष्ठत्वात्त्रिशल्यीभूतत्रीणि शल्यास्त्राणि धारयन्तः। तथा तुरङ्गीः श्रिता आरूढाः। कीदृशीः। द्रोणश्चतुराढकी धान्यमानभेदः। अत्र चोपचाराद्द्रोणस्थं धान्यमुच्यते। द्वाभ्यां द्रोणाभ्यां क्रीता द्विद्रोणीः। षड्भिर्वृषैर्वृषभैः क्रीताः षड्डुषाः। त्रिभिः पणैः कार्षापणैरनेकस्वर्णमाषसमुदायरूपैर्मानभेदैः क्रीताः "पणपाद०" [६.४.१४७] इत्यादिना ये त्रिपण्यास्तथा कम्बलोस्य स्यात् "कम्बलान्नाम्नि" [७.१.३४] इति ये कम्बल्यमूर्णापलशतम्। शतेन कम्बल्येन क्रीताः। तथाचिताः कर्पासादिक्रिया-

१ ए बी सी °भटाश्रि°. २ ए सी °पण्या श°.

१ ए सी डी °वियोग.। स°. २ ए सी °ण्टलाल°. ३ बी °णि शिल्पास्त्रा°. ४ सी °यत.। त°. ५ सी °द्रोणी प°.

णकानां दश भाराः । द्वाभ्यामाचिताभ्यां क्रीता द्व्याचिताः । तथा विस्तः स्वर्णस्य षोडश माषाः । त्रिभिर्विस्तैः क्रीताः । एषु पञ्चस्वपि "मूल्यैः क्रीतः" [६.४.१९.] इतीकणो "अनाम्न्यद्विःप्लुप्"[६.४.१४०] इति लुप्। एषु च विशेषणेषु तत्तद्धान्यादिक्रीतानेकभेदतुरङ्गयपेक्षया समुच्चयार्थाश्चा अध्याहार्याः। यत्रैतानि धान्यादीनि दुर्लभानि तत्तद्देशोद्भवत्वस्य विवक्षितत्वेन तत्तद्देशापेक्षया द्विद्रोण्यादिना वहुमूल्येन क्रीतत्वादतिश्रेष्ठा इत्यर्थः। पूर्ववृत्ते मित्रवलमुक्तमग्रेतनवृत्तेषु चाटविकादीनि चत्वारि वलानि वक्ष्यन्त इत्युद्धरितन्यायादनेन भृतकवलागमनमुक्तम् ॥

कथाः। भीमाः। ताः। इत्यत्र "आत्" [१८] इत्याप् ॥

गौरीः। वन्दीः। नदीः । इत्यत्र "गौरादिभ्यो मुख्याद्ङीः" [१९] इति ङीः ॥ मुख्यादिति किम् । भूरिनदाः ॥

अण् । तापसी. । कुम्भकारीम् ॥ अञ् । औत्सीः ॥ एयण् । सौपर्णेयी ॥ एयञ् । शिलेयीम् ॥ ण्यञ् । शैलूष्या । निरनुबन्धनिर्देशः सामान्यग्रहणार्थः ॥ इकण् । आक्षिकीः ॥ नञ् । स्त्रैणीः ॥ स्नञ् । पौंस्नीः ॥ टित् । शाक्तीकीः । इत्यत्र "अणञेये°" [२०] इत्यादिना ङीः ॥ अणादीनां षष्ठीनिर्देशेनाकारस्य विशेषणं किम् । पाणिनिना प्रोक्तं पाणिनीयम् । तदधीयत इत्यण् । तस्य "प्रोक्तात्" [६ २.१२९.] इति लोपे पाणिनीया वधूटीरिति ङीर्यथा मा भूत् ॥ प्रत्यासत्त्या तैरेवाणादिभिः स्त्रिया विशेषणं किम् । उशनसा प्रोक्ता नीतिरौशनसी तामधीयत इत्यण् । तस्य "प्रोक्तात्" [६ २.१२९] इति लोपे "ङ्यादेः°" [२.४.९५] इत्यादिना ङीलोपे ङीर्यथा न स्यादौशनसा वधूटीः । अस्त्यत्राणोकारो न तु तदभिधेया नीतिलक्षणा स्त्री प्रत्ययार्हा । यदभिधेया तु वधूटीलक्षणा स्त्री प्रत्ययार्हा न तस्याकारोस्तीति । तथा चारुवलिन्नया वधूटीः ॥

---

१ वी °द्विः प्लु°. २ वी वक्षन्त°. ३ सी °पसी । क°. ४ प सी अञ् । अञ् । औ°. ५ वी पौंस्नीम् । टि°. ६ प सी °क्तं प्राणि°. ७ वी °शसना व°. ८ प सी डी °णो अका°.

४२

वधूटीः। इत्यत्र "वयसि°" [२१] इत्यादिना ङीः॥ अनन्त्य इति किम्। वृद्धा॥

त्रिशल्यी। इत्यत्र "द्विगोः°" [२२] इत्यादिना ङीः॥

द्विद्रोणीः। इत्यत्र "परिमाणात्°" [२३] इत्यादिना ङीः॥ परिमाणादिति किम्। पञ्चपाः॥ तद्धितलुकीति किम्। त्रिपण्याः॥ अवि(बि)स्ताचितकम्बल्यादिति किम्। त्रिवि(वि)स्ताः। द्व्याचिताः। शतकम्बल्याः॥

मेदा वद्धोत्कचास्त्रिकाण्ड्या नवकाण्ड्या दशकाण्डया च रज्ज्वा।
क्षेत्रभुवः फालया द्विकाण्डाः षट्पुरुषीः परिखा विलङ्घ्य चेयुः॥४६

४६. मेदा भिल्ला एयुः। किं कृत्वा। द्विकाण्डा द्विशरप्रमाणाः क्षेत्रभुवः क्षेत्रभूमीः षट्पुरुषीः षट्पुरुषप्रमाणाः परिखाश्च फालया विलङ्घ्योत्प्लुत्य। कीदृशाः सन्तः। नवकाण्ड्या दशकाण्डया च नवभिर्दशभिर्वा काण्डैः शरैः क्रीतया रज्ज्वा कृत्वा बद्धा उदूर्ध्वं कचा यैस्ते। कीदृश्या। त्रीणि काण्डानि शराः प्रमाणं यस्याः। "प्रमाणान्मात्रट्" [७.१.१३९] इति मात्रट्। "द्विगोः संशये च" [७.१.१४३] इति लुप्। तया त्रिकाण्ड्या। अनेनाटविकबलागमनमुक्तम्। जातिरलंकारः॥

द्विपुरुषया भान्स कुन्तयष्ट्या रेवत्यामतिरोहिणीशशत्रुः।
नीलयार्वन्त्याथ नीलयोच्चैः पत्त्या नील्याद्रिर्नु लक्ष आगात्॥४७॥

४७. स प्रसिद्धो लक्षो नाम राजागात्। कीदृशः। द्विपुरु-

१ बी °द्धोत्कचा°. २ सी डी °र्वन्त्याथ°. ३ प सी पत्यानी°. ४ प सी °द्रि नु ल°.

१ सी °णादि°. २ बी °लुगीति. ३ बी °चिता। श°. ४ प सी °काण्ड्या च. ५ प सी डी °भिर्वा. ६ प सी मात्रट्।. ७ प सी लक्ष्यो ना°.

षया द्विपुरुषप्रमाणया कुन्तयष्ट्या कृत्वा भान् शोभमानः। तथा यथा-द्रिर्नील्यौषधिविशेषेणोपलक्षितः स्यादेवं नीलया नीलवर्णयोच्चैरतिशयितया पत्न्या वस्त्रेणाथ तथा नील्या हरितयार्वन्त्याश्वयोपलक्षितोत एवातिरोहिणीशशत्रू राहुमतिक्रान्तः। कागादित्याह। रेवत्यां रेवत्या चन्द्रयुक्तया युक्ते काले द्वादशे चन्द्र इत्यर्थः। लक्षो हि नाम राशिनाश्विनीजातत्वान्मेषराशिजातो रेवत्यां च चन्द्रो मीनराशौ स्यादनेन चास्यावेश्यंभावी मृत्युः सूचितः। एतेन मित्रबलागमोक्तिः॥

त्रिकाण्ड्या। इत्यत्र "काण्डात्°" [२४] इत्यादिना ङीः॥ प्रमाणादिति किम्। दशकाण्डया॥ अप्रमाणादपीच्छन्त्यन्ये। नवकाण्ड्या॥ अक्षेत्र इति किम्। द्विकाण्डाः क्षेत्रभुवः॥

षट्पुरुषीः। द्विपुरुषया। इत्यत्र "पुरुषाद्वा" [२५] इति वा ङीः॥

रेवत्याम्। रोहिणी। इत्यत्र "रेवत°" [२६] इत्यादिना ङीः॥

नील्यार्वन्त्या। नीलया। इत्यत्र "नीलात्°" [२७] इत्यादिना ङीः॥ प्राण्योषध्योरिति किम्। नीलया पत्न्या॥

नीलीनीलाप्रबद्धलूनीबद्धविलूनामामकीषु जाताः।
एयुस्तस्यात्मजाः स्वभूभ्यो ज्ञात्वा समयं केवलीविदो नु॥४८॥

४८. प्रबद्धा चासौ लूना च प्रबद्धलूनी। बद्धा चासौ विलूना च बद्धविलूना। नील्यादिनामका ग्राहारेर्भार्यास्तासु जातास्तस्य ग्राहारेरात्मजाः पुत्राः केवलीविदो नु केवल्यो ज्ञानशास्त्राणि तज्ज्ञा इव समयं रणकालं ज्ञात्वा स्वभूभ्यः स्वदेशेभ्य एयुः। एतेन मौलबलागमनोक्तिः॥

---

१ ए सी °दो नुः॥

---

१ बी सी °द्रिनील्यौ°. २ ए सी °वस्य भा°. ३ ए सी डी °काण्डा। इ°. ४ ए बी सी डी° वेत्या। नी°. ५ ए सी डी °लादि°. ६ सी °मय र°.

आर्यकृती भेषजीसुमङ्गल्यपरीपापीभागधेय्य आयुः ।
सैंकोच्चरतः समं समान्या भक्त्या केवलयास्य पीठदेव्यः ॥ ४९ ॥

४९. समान्या समानीसंज्ञया पीठदेव्या समं सहार्यकृत्यादिनाम्न्यः पीठदेव्यो योगिन्योस्य मूलराजस्य भेषज्यादिभिराहारैः संबन्धिन्या केवलयैकया भक्त्या हेतुना सैंकोच्चरत एवंनाम्नोब्धिस्थादद्रिविशेषादायुः । अनेनापि मौलवलाग- मनोक्तिः । यतो वेलाकूलाधिपतित्वात्तस्य क्रमागतास्ताः सांनिध्यका- रिण्यो देव्यः ॥

नीली नीला । प्रवद्धलूनी बद्धविलूना । इत्यत्र "कौच नाम्नि वा" [२८] इति वा ङीः ॥

केवली । मामकीषु । भागधेय्यः । पापी । अपरी । समान्या । आर्यकृती । सुमङ्गली । भेषजी । इत्यत्र "केवल°" [२९] इत्यादिना ङीः ॥ नाम्नीति किम् । केवलया भक्त्या ॥

भाजीकालीं कुशीरदाग्र्यां नागीभिः कुम्भस्थलीभिरुच्चाम् ।
अधिकटिकवरीजुषोध्यरोहन् गुणगोणीं गजतां निषादिनोपि ॥ ५० ॥

५०. अधिकटिकवरीजुषः श्रोणीं यावत्प्रलम्बमानवेणीका निषादि- नोपि मौलवलसंवन्धिनो हस्त्यारोहा गजतां गजौघमध्यारोहन् । कीदृशीम् । भाजी पक्वशाकस्तद्वत्काली कृष्णां तथा कुश्ययोविकारस्त- द्वन्निविडास्तीक्ष्णाः प्रलम्बाश्च ये रदा दन्तास्तैरग्र्यामुत्कृष्टां तथा नागीभिः स्थूलाभिः कुम्भस्थलीभिरुच्चामुन्नतां तथा गुणानां शौर्यादीनां गो- णीमिव गुणगोणीं गुणस्थानमित्यर्थः । अस्य च वृत्तस्य पूर्वार्धे नागी

१ ए सी °णी जगतां.

१ ए सी °प्यकरि°. २ ए सी काना°. ३ ए सी °श्च जगता. ४ बी पक्वः श्या°. ५ सी °गोणी गु°. ६ बी डी नागीका°. सी नागीकाली कु°.

कालीं कुशीरदाम्रामालिमदभाजीभृत्कटस्थलीकामिति पाठान्तरं प्रायो गतार्थम् । केवलमालिप्रधानो यो मदः स एव भाजी तद्भृत्कटस्थली यस्यास्ताम् ॥

कामुकि भाजाभ्रु कान्तिकुण्डे गोणे लावण्याम्बुकुण्डि नागे ।
काले कामस्थले त्वरन्तामित्यूचुर्गृहिणीर्भटाः प्रयातुम् ॥ ५१ ॥

५१. प्रयातुं प्रयाणाय भटा मौलबलसत्कयोधा गृहिणीः प्रोचुः । कथमित्याह । हे कामुकि रिरंसो तथा भाजा नाम काचिद्देवी तस्या इव भ्रुर्भ्रूर्यस्याः । भ्रुशब्द उकारान्तोत्र भ्रूवाचकः । अत "उतो प्राणिनश्च" [२.४.७३] इत्यादिनोङ् । हे भाजाभ्रु भाजाभ्रूसंज्ञे स्त्रि । तथा कुण्डते दहति सपत्नीम् । अच् । कुण्डा । कान्त्या तेजसा कुण्डा हे कान्तिकुण्डे । तथा हे गोणे गोणाख्ये स्त्रि । तथा हे लावण्याम्बुकुण्डि लवणिमजलपात्रि । तथा हे नागे नागाख्ये स्त्रि । तथा हे कामस्थले स्मरास्थानि । तथा हे काले कालाख्ये स्त्रि भवत्यस्त्वरन्तां शीघ्रीभवन्त्विति ॥

जानपदीं वृत्तिमास्थिता सा पात्री जानपदा सुरां प्रजापि ।
सकुशा रणकामुकाक्षिभासा शोण्या कवरा माप रोषशोणा ॥ ५२ ॥

५२. जानपदीं जनपदे देशे भवाम् "उत्सादेरञ्" [६.१.१९] इत्यञ् । वृत्तिं पाशुपाल्यकर्षणरूपामास्थिता सा सुराष्ट्रदेशवास्तव्या प्रजापि । आस्तां राजसेवावृत्ती राजलोकः । आभीरजातिकर्षकादिलोकोपि प्रा-

१ प °ले कलक्कामि°. २ प सी डी °पदीं सु°.

१ प डी °त्कटिस्थ°. २ बी °कृतकट°. ३ प सी भ्रुभ्रूर्य°. ४ बी °न्तो उ°. ५ प सी अतो°. ६ डी °था हे ना°. ७ सी हे कामकाला°. ८ डी काले. ९ प °मकाला°. १० बी °ता भिता सा.

हारिसमीपं प्राप । कीदृक्सती । जानपदां सुराष्ट्रदेशोद्भवां सुरां मद्यं पात्रीं पिबन्त्यत एवं शोण्या रक्तयाक्षिभासा नेत्रज्योतिषा कैवरा कर्बुरा । तथा रणकामुका युद्धेच्छुरत एव रोषशोणा क्रोधादारक्ता एव च कुशायोमिश्रं काष्ठमयं शस्त्रं सह तया वर्तते या सा । एतेन श्रेणिवलागमनोक्तिः । श्रेणिबलं तन्त्रादिकम् ॥

भाजी । गोणीम् । नागीभिः । स्थलीभिः । कुण्डि । कालीम् । कुशी । कामुकि । अधिकटि । कबरी । इत्यत्र "भाजगोण०" [३०] इत्यादिना ङीः ॥ अन्यत्र । भाजा । गोणे । नागे । स्थले । कुण्डे । काले । सकुशा । कामुका । कवरा ॥ कटा । इति स्वयं ज्ञेयम् ॥ जनपदशब्दादपि वृत्ताविच्छत्यन्यः । जानपदीं वृत्तिम् । वृत्तेरन्यत्रे जानपदां सुराम् ॥

शोण्या शोणा । इत्यत्र "न वा शोणादेः" [३१] इति वा ङीः ॥

हयखुरहतिजन्मधूलिरुच्चैरथधूलीनिचिता मदाम्बुवृष्ट्या ।
ज्यानिं गजपद्धतेः सुगन्ध्या परितः प्राप समस्तपद्धतीषु ॥ ५३ ॥

५३. पड्विधेपि ग्राहारिसैन्ये मिलति रथधूलीनिचिता स्यन्दनरेणुभिः सान्द्रीकृतोच्चैरतिशयिता हयखुरहतिजन्मधूलिरश्वशफघातोत्था रेणुः समस्तपद्धतीषु सर्वमार्गेषु परितो ज्यानिं क्षयं प्राप । कया कृत्वा गजपद्धतेर्हस्तिपङ्क्तेः सक्तया सुगन्ध्या नवोद्भेदात्सुरभ्या मदाम्बुवृष्ट्या । अम्बुवृष्ट्या हि धूलिः शाम्यति ॥

१ सी °निचिता न°. २ ए सी ज्यानं ग°.

१ ए सी हारीस°. २ सी °व शोण्या. ३ बी कर्बु°. ४ ए °त्र जन°. ५ सी शोण्या । इ°. ६ बी मिलिते र°. ७ सी °तोत्थो रे°. ८ ए सी डी नमोद्भे°.

धूली धूलिः । इत्यत्र "इतोक्त्यर्थात्" [३२] इति वा ङीः ॥ अक्त्यर्थादिति किम् । हृति । वृष्टया । ज्यानिम् ॥ अन्ये त्वञ्चति-अङ्कति-अंहति-शकटि-शाखि-शारि-तारि-अहि-कपि-मुनि-रात्रि-यष्टिभ्यः कटिश्रोण्यादिप्राण्यङ्गवाचिभ्यः क्तिवर्जितकृदन्तेभ्यश्चेकारान्तेभ्य इच्छन्ति नान्येभ्यस्तन्मते सुगन्ध्येत्यादिषु ङीर्न स्यात् । क्तिमात्रवर्जनाच्च ज्यानिप्रभृतिषु न निषेधः ॥

पद्धतीषु पद्धते. । इत्यत्र "पद्धतेः" [३३] इति वा ङीः ॥

तदेवं षड्विधबलमीलनमुक्त्वा ग्राहारेः स्वयं प्रस्थानं वृत्तपञ्चकेनाह ।

**ग्राहरिपुः शक्तिमान्स पट्व्या शक्त्या शक्तीभृन्निभः प्रतस्थे ।**
**पटुभिः प्रपिपासुभिर्नु वायुं खरुभिः पाण्डुभिरश्वधोरणीभिः ॥ ५४॥**

५४. स ग्राहरिपुरश्वधोरणीभिः कृत्वा प्रतस्थे रणाय प्राचालीत् । कीदृक्सन् । शक्तिमान् । शक्तयः प्रभुमन्त्रोत्साहपूर्वास्तिस्रः । शक्तिः सामर्थ्यं वा । तद्वान् । तथा पट्व्या तीक्ष्णया शक्त्यास्त्रभेदेन कृत्वा शक्तीभृन्निभः कार्तिकेयतुल्यः । किंभूताभिः । खरुभिः

खरुः स्यादश्वहरयोर्दर्पदन्तसितेषु च ।

इति वचनात्खरुर्दर्पस्तद्युक्तोप्युपचारादुच्यते । ततो दर्पवतीभिरत एव पटुभिर्दक्षाभिरत एव चातिवेगवत्त्वेनोत्प्रेक्ष्यते । वायुं वातं प्रपिपासुभिर्नु वेगाद्वातानुव्रजनेन वातं पातुमिच्छन्तीभिरिव वातवद्वेगेन गच्छन्तीभिरित्यर्थः । तथा पाण्डुभिः श्वेताभिः ॥

शक्ती शक्त्या । इत्यत्र "शक्तेः शस्त्रे" [३४] इति वा ङीः ॥ शस्त्र इति किम् । शक्तिमान् ॥

---

१ प सी °क्त्या सक्ती°. २ प सी वायु ख°.

---

१ सी धूलि°. २ बी °टि शखि. सी °टि-शाकटि-शा°. ३ प सी °गन्धेला°. ४ बी सी °देव ष°. ५ प बी सी शक्ति सा°. ६ बी °क्त्या अमे°. ७ प खरुः श्वा°. सी डी खरु श्वा°. ८ डी °द्वातोनु°. ९ बी °तद्वे°. १० प सी डी °म् । भक्ति°.

पट्व्या पटुभिः । इत्यत्र "स्वराद्°" [३५] इत्यादिना वा ङीः । स्वरादिति किम् । पाण्डुभिः ॥ गुणादिति किम् । प्रपिपासुभिः ॥ अखरोरिति किम् । खरुभिः ॥

श्येनीरेनीर्हयीरुपेयुर्भरणीर्हरिणी रोहिणीश्च योधाः ।
श्येतामेतां तनौ दधाना भरतां हरितां रोहितां च माठिम् ॥५५॥

५५. श्येतां श्वेतामेतां कर्बुरां भरतां धूसरां पाटलां वा हरितां शुकाभां रोहितां चारक्तां च माठिं कवचं तनौ दधाना योधा हयी-खुरङ्गीरुपेयुरगरोहंन्नित्यर्थः । कीदृशीः । श्येतामेतां भरतां हरितां रोहितां च माठिं दधाना धारयन्तीः । तथा श्येनीरेनीर्भरणीर्हरिणी रोहिणीश्च ॥

श्येनीः श्येताम् । एनीः एताम् । हरिणीः हरिताम् । भरणीः भरताम् । रोहिणीः रोहिताम् । इत्यत्र "श्येतैत°" [३६] इत्यादिना वा ङीस्तस्य नश्च ॥

असिताप्यनसिक्न्यभान्नभःश्रीरपलिक्न्यः पलिताश्चमूसुकेश्यः ।
खचरसुकेशानिमेषकृद्भिः सैन्योत्खातरजोभिरुच्छलद्भिः ॥ ५६ ॥

५६. असितापि कृष्णापि नभःश्रीरनसिक्नी श्वेताभात् । तथा चमूसंबन्धिन्यः शोभनकेशा नायिका अपलिक्न्योपि । पूर्वोपिरत्रापि योज्यः । अपलिता अपि पलिता इव पलिता अभुः । कैः कृत्वा । सैन्योत्खातरजोभिः । किंभूतैः । उच्छलद्भिरत एव युद्धदर्शनायागतानां खचरसुकेशानां विद्याधरस्त्रीणां निमेषकृद्भिराक्षिषु पाताद्दक्षिनिमीलनाकारिभिः ॥

१ ए सी °णीरो°. २ ए सी डी °ताक्ष्यमू°. ३ डी °न्योत्खोत°

१ डी ततो द°. २ ए सी अपि°. ३ वी °हयन्नि°. ४ वी °शीः । श्वेता°. ५ ए सी °ता लोहि°. ६ ए सी डी भरिणीः ।. ७ डी भरिता°. ८ ए सी °नस्यन्य°. ९ ए सी जोपि । किं°. १० सी °स्त्रीणा नि°.

सहकेशाः सर्वतोप्यकेशा अपशोफा विकफा मयाः सुवेगाः।
आरुरुहुर्विद्यमानकेशास्तोयदृतिक्रोडाः स्त्रियो भटानाम्॥ ५७॥

५७. विद्यमानकेशाः स्त्रियो रणे भटानां जलपानाय तोयदृतिर्जलभृतखल्लः क्रोडेङ्के यासां तास्तथा सत्यो मयाः सण्ढीर्वेसरीर्वारुरुहुः। कीदृशीः। सर्वत्तः सहकेशा अलूनवालास्तथा सर्वतोकेशा अपि लूनकेशाश्च। तथापशोफा विगतश्वयथूस्तथा विकफा विगतश्लेष्मकाः। एतेन[2] नीरोगतोक्तिः। अत एव सुवेगाः॥

दीर्घमुखायां गजाः पदव्यां छायामूर्ध्वमुखीमधोमुखां वा।
स्वामप्यसहिष्णवो वृता दृक्ष्वविकेश्यापट्यक्षेकेशया च ॥ ५८॥

५८. दीर्घं मुखं प्रारम्भो यस्यां तस्यां पदव्यां बहुगम्यत्वात्प्रलम्बे मार्गे इत्यर्थः। गजा दृक्षु नेत्रेष्वावृता[3] आच्छादिताः। कया। पट्या वस्त्रेणापट्या वा जवन्या। कीदृश्या। अवेर्मेषस्य केशा यस्यां तयोर्णामय्येत्यर्थः। यद्वा। अविगतकेशया सकेशयेत्यर्थः। तथा ऋक्षाणां भाल्लूकानां केशा यस्यां तया च ऋक्षवालनिर्मितया च। यतः स्वामपि च्छायां प्रतिबिम्बमसहिष्णवो मदान्धत्वात्प्रतिद्विपोयमित्याशङ्कयाक्षमणशीलाः। कीदृशीम्। ऊर्ध्वमुखीं नद्यादिजल ऊर्ध्ववक्त्रामधोमुखां वा आतपे[7] चाधोवक्त्रां वा॥

अथैवं प्रस्थितस्य प्राहारेः पराजयसूचकान्यरिष्टानि वृत्तद्वादशकेनाह॥

नाभिमुखास्तुङ्गनासिका कानासिक्यो लम्बोष्ठ्य उन्नतोष्ठाः।
लम्बोदर्यः कृशोदराः काजङ्घाः पृथुजङ्घ्योन्वयुः पिशाच्यः॥५९॥

५९. स्पष्टम्। किं तु। नाभिरिव मुखं यासां वा नाभिमुखा अति-

१ ए बी सी डी °मूर्द्धमु°. २ ए बी सी °जङ्घोन्व°.

१ ए सी °ह्नः। क्रोडे°. २ ए सी °ते नी°. ३ ए सी नेत्र्येष्वा°. ४ बी °र्णा भल्लू°. ५ ए बी सी डी ऊर्द्धमु°. ६ ए बी सी डी ऊर्द्धव°. ७ सी °पे बाधो°.

लघुमुखा इत्यर्थः । कानासिक्यः कुत्सितनासाः । पिशाच्यो दुष्टव्यन्तरीभेदाः । अन्वयुर्ग्राहारिमनुजग्मुः । पिशाच्यो हि नृमांसप्रियत्वादनुयान्त्यो महारिष्टाय स्युरिति ग्राहारेरिदं महारिष्टमभूदित्यर्थः । एवमग्रेप्यरिष्टभावना स्वयं ज्ञेया ॥

चेल्लुर्हलदन्त्य ओतुदन्ताः करिकर्णाः कपिकर्ण्य उक्षशृङ्ग्यः ।
मृगशृङ्गा रासभाङ्ग्य उष्ट्राङ्गा राक्षस्योऽस्त्वपिपासयाजौ ॥ ६० ॥

६०. स्पष्टम् । किं तु । चेल्लुर्ग्राहारिसैन्येन सह चलिताः ॥

अहिगात्र्यगगात्र्ये ऋश्यकण्ठोत्कण्ठीहलचिबुकातिदीर्घजिह्वी[1] ।
कृशगण्डादीर्घजिह्वऋक्षीमुख्योतुमुखाः प्रेत्य आविरासन् ॥ ६१ ॥

६१. स्पष्टम् । किं तु । अगगात्रा गिरिमहाकाया । अत्र "ऋत्यवि ह्रस्वो वा" [१.२२] इति ह्रस्वः । कृशगण्डा चुटितगल्ला[2] प्रेत्यो दुष्टव्यन्तरीभेदाः ॥

सूर्पनखा दात्रनख्यभात्कालमुखा वज्रणखा सुताश्च तत्र ।
ऋजुपुच्छा दीर्घपुच्छ्यथान्या मणिपुच्छी विषपुच्छ्यपि त्वराभाक् ॥ ६२ ॥

६२. तत्र तासु पूर्वोक्तासु[3] प्रेतीषु मध्ये[4] सूर्पनखा दात्रनखी च प्रेती नृपलरक्तेच्छया त्वराभाक्सत्यभात् । तथा कालमुखावज्रणखाख्ये[5] प्रेत्यौ तत्सुताश्च ऋजुपुच्छादयः प्रेत्यस्त्वराभाजः सत्योभान् । अथापी समुच्चये । मणिः पुच्छेस्या मणिपुच्छी । विषं पुच्छेस्या विषपुच्छी ॥

१ बी °नऋश्य°. २ ए सी डी°. जिह्वीः । कृ°.

१ ए बी सी डी °नासाः । पि°. २ ए सी डी °गल्लाः । प्रे°. ३ ए सी °र्वोक्ता प्रे°. डी °र्वोक्तप्रे°. ४ ए सी °ध्ये सूर्प°. ५ डी °खाख्यौ प्रे°.

नभसि कबरपुच्छ्य आशु चिल्ल्यः शरपुच्छ्यो न्वहिभिः सुपर्णपक्ष्यः
गोपुच्छीं तां चमूं शशंसुः समरक्रीतीं[1] राजिनन्दनेन[2] ॥ ६३ ॥

६३. नभसि व्योम्नि वर्तमानाश्चिल्ल्यः शम्बलीति प्रसिद्धाः शकुनयो गोरिव पुच्छं यस्यास्तां गोपुच्छीं[1] गोपुच्छाकृतिपृष्ठानीकां[2] तां ग्राहारिसत्कां चमूं शशंसुः । कीदृशीम् । राजिनन्दनेन मूलराजेन कर्त्राशु शीघ्रं समरेण क्रीयते स्म या ताम् । एतां चमूं मूलराजो रणेन हनिष्यतीति[3] रक्तपिशितेच्छासूचकेन नभोवस्थानेन सूचयामासुरित्यर्थः । किंभूताः[4] । कबरं कर्बुरं कुटिलं वा पुच्छं यासां तास्तथाहिभिर्भक्षणार्थं गृहीतैः सर्पैः कृत्वा शरः पुच्छे यासां[5] ताः शरपुच्छ्यो नु । तथा सुपर्णो गरुडस्तत्पक्षाविव स्वर्णवर्णौ पक्षौ यासां ताः ॥

अपलिक्न्यः[6] पलिताः । अनसिक्न्यः[क्री] असिता । इत्यत्र "क्तः०" [३७] इत्यादिना वा[7] ङीस्तस्य क्नादेशश्च ॥

सुकेश्यः[8] सुकेशा । इत्यत्र "असहनञ्०"[३८] इत्यादिना वा ङीः ॥ असहनञ्विद्यमानपूर्वपदादिति किम् । सहकेशाः । अकेशाः । विद्यमानकेशाः ॥ अक्रोडादिभ्य इति किम् । तोयदतिक्रोडाः[9] ॥

अविकारोद्रवं मूर्तं प्राणिस्थं स्वाङ्गमुच्यते ।
च्युतं[10] च प्राणिनस्तत्तन्निभं च प्रतिमादिषु ॥

इति च स्वाङ्गम् ॥ अविकार इति किम् । अपशोफाः ॥ अद्रवमिति किम् विकफाः ॥ मूर्तमिति किम् । सुवेगाः ॥ प्राणिस्थमिति किम् । दीर्घमुखायां

१ ए बी सी डी क्रीन्तीं रा°. २ ए सी °नन्दिने ॥.

१ ए सी गोच्छीं. २ सी डी °तिपुच्छानी° ३ डी हरिष्य°. ४ ए सी डी °भूता क°. ५ ए सी डी °सा ता श°. ६ बी °क्नयः । अप°. ७ ए सी डी वा ङीः । सु°. ८ सी °केश्यत्व°. ९ सी °क्रोडा ॥. १० ए सी च्युच त प्रा°.

पदव्याम् ॥ च्युतं च प्राणिनस्थदिति किमर्थम् । अप्राणिस्थादपि पूर्वोक्ता[1]यथा स्यात् । अविकेश्या । ऋक्षकेशयापव्या ॥ तन्निभं च प्रतिमादिष्विति किमर्थम् । प्राणिस्थसदृशादपि पूर्वोक्तायथा स्यात् । ऊर्ध्वमुखीम् । अधोमुखां छायाम् ॥ अस्वाङ्गपूर्वपदादेवेच्छन्त्येके । नाभिमुखा [ः] ॥

कानासिक्यः तुङ्गनासिकाः । लम्बोदर्यः[3] कृशोदराः । लम्बोष्ठ्यः उन्नतोष्ठाः । पृथुजङ्घ्य काजङ्घाः । हलदन्त्यः ओतुदन्ताः । कपिकर्ण्यः करिकर्णाः । उक्षश्रृङ्ग्यः मृगशृङ्गाः । रासभाङ्ग्यः उष्ट्राङ्गाः । अहिगात्री[4] अगगात्रा । उत्कण्ठी । ऋश्यकण्ठा[5] । इत्यत्र "नासिकोदर°" [३९] इत्यादिना वा ङीः ॥ पूर्वेण सिद्धे नियमार्थमिदम् । तेन नासिकोदराभ्यामेव बहुस्वराभ्यामोष्ठादिभ्य एव संयोगोपान्तेभ्यः[6] स्यान्नान्येभ्यस्तेन हलचिबुकेत्यादौ बहुस्वरात्[7]कृशगण्डेत्यादौ च संयोगोपान्त्याच्च स्यात् ॥ केचित्तु दीर्घजिह्वशब्दादपीच्छन्ति । दीर्घजिह्वी[8] दीर्घजिह्वा ॥

दात्रनखी सूर्पनखा । ऋक्षीमुखी ओतुमुखा । अत्र "नख°" [४०] इत्यादिना वा ङीः[9]। अनाम्नीति किम् । वज्रणखा । कालमुखा ॥

दीर्घपुच्छी ऋजुपुच्छा । इत्यत्र "पुच्छात्" [४१] इति वा ङीः ॥

कबरपुच्छ्यः[10] । मणिपुच्छी[11] । विषपुच्छी । शरपुच्छ्यः[12] । इत्यत्र "कबर°" [४२] इत्यादिना ङीः ॥

सुपर्णपक्ष्यः । गोपुच्छीम् । इत्यत्र "पक्षाच्च°" [४३] इत्यादिना ङीः ॥

समरक्रीतीम् । इत्यत्र "क्रीतात्°" [४४] इत्यादिना ङीः ॥

---

१ प सी डी °क्ता यथा°. २ प वी सी ऊर्ध्वमु. ३ वी °दराः । ४ वी °गात्रीः अ°. ५ प सी डी ऋश्यक. ६ डी °पान्तेभ्यः°. ७ प सी °त्कृशग°. ८ सी °ह्वी । दी°. ९ डी °ङीः । सुप°. १० वी च्छ्य । म°. ११ प सी °च्छी । श°. १२ प सी °पुच्छ. । इ°.

रुधिरैर्विलिप्ती रजोविलिप्ताभूद्द्यौर्दन्तकृताथ दन्तजाता ।
दन्तमिता गण्डशुष्क्यकाण्डे दन्तप्रतिपन्ना च दन्तिपङ्क्तिः ॥ ६४ ॥

६४. अथ तथा रजोविलिप्तानल्पेन रेणुना लिप्ता द्यौर्व्योमाल्पेन रुधिरेण विलिप्यते स्म रुधिरविलिप्तीव रुधिरविलिप्त्या रक्ताभूत् । तथा दन्तिपङ्क्तिश्चाकाण्डे प्रस्तावे गण्डौ शुष्कौ यस्याः सा गण्डशुष्की निर्मदाभूत् । कीदृक् । दन्तौ जातौ निष्पन्नौ यस्याः सा । अनेन मत्कुणत्वनिरासः । तथा दन्तौ मितौ परिमाणोपेतौ न ह्रस्वौ नातिदीर्घौ यस्याः सा । तथा दन्तप्रतिपन्ना दन्तशब्देनात्र दन्तगुणविशिष्टौ दन्तौ गृह्येते न सामान्येन । ततो दन्तौ दन्तगुणोपेतौ दन्तौ प्रतिपन्नौ परीक्षकैरङ्गीकृतौ यस्याः सा सर्वसल्लक्षणोपेतदन्तेत्यर्थः । अत एव दन्तौ कृतौ स्वर्णपट्टमठनतीक्ष्णीकरणादिना संस्कृतौ यस्याः सा । अनेन मूर्धाभिषिक्तत्वोक्तिः । पट्टहस्तिनां ह्यकाण्डे मदशोषो महारिष्टसूचकः ॥

रुधिरैर्विलिप्ती । इत्यत्र "क्तादल्पे" [४५] इति ङीः ॥ अल्प इति किम् । रजोविलिप्ता ॥

गण्डशुष्की । इत्यत्र "स्वाङ्गादेः०" [४६] इत्यादिना ङी. ॥ कृतादिवर्जनं किम् । दन्तकृता दन्तमिता । दन्तजाता । दन्तप्रतिपन्ना ॥

मांसेष्ट्या शोणितेष्ट्योच्चैर्गृध्राल्या बहुयातयोपरिष्टात् ।
अजिनच्छन्नेव वाहिनी सा तिष्ठत्पतिरपि नष्टपत्न्यलक्षि ॥ ६५ ॥

६५. सा ग्राहारिसत्का वाहिनी चमूस्तिष्ठत्पतिरपि विद्यमानग्राहारिलक्षणस्वामिकापि नष्टपत्नीव व्यपगतस्वामिकेवालक्षि लोकैर्ज्ञाता ।

---

१ ए सी °रवलि°.

---

१ बी °प्ती रु°. २ ए सी डी मूर्धाभि°. ३ ए सी °क्त्वाक्तिः । ४ ए सी °रवलि°. ५ सी °कृताः । द°. ६ सी °मिताः । द°. ७ ए सी डी °त्नी व्यवप°.

यतो गृध्राल्या दूरदृक्पक्षिश्रेण्या कर्त्र्या गृध्रालेर्बाहुल्येनान्योन्यं सान्द्रत्वादजिनं चर्म च्छन्नं परिहितं येया सेव । यस्याः पतिर्न स्यात्सैव ह्यजिनं परिधत्ते । कीदृश्या गृध्राल्या । उच्चैरत्यर्थं मांसमिष्टं यस्यास्तया । तथा शोणितमिष्टं यस्यास्तया । अत एवोपरिष्टात्सैन्यस्योपरि बहु यातं भ्रमणं यस्यास्तया ॥

मांसेष्टया शोणितेष्टया । इत्यत्र "अनाच्छाद०" [४७] इत्यादिना वा ङीः ॥ अनाच्छादग्रहणं किम् । अजिनच्छन्ना ॥ जात्यादेरिति किम् । बहुयातया ॥

नष्टपत्नी विष्टपतिः । इत्यत्र "पत्युर्नः" [४८] इति वा ङीरन्तस्य नश्च ॥

परिधिमती देवतोस्रपत्नी द्युपतिरभूद्भवभालदृक्सपत्नी ।
अतिपतयो या न जातु पूर्वं ता राज्ञां पत्न्योतिपत्न्य आसन् ६६

६६. उस्रपत्युस्राणां किरणानां पतिः स्वामिनी द्युपतिर्व्योमस्वामिनी देवतार्कलक्षणाभूत् । कीदृक् । परिधिमती परिवेषान्विता । तथा समानः पतिरस्याः समानस्य पतिरिति वा सपत्नी भवभालदृशो रुद्रललाटाक्ष्णः सपत्नी लक्षणया सदृशी पिङ्गातिसंतापिका च । रविर्हि परिधिमान्पिङ्गोतिसन्तापकश्चारिष्टाय स्यात् । तथा या राज्ञां पत्न्यो भार्या जातु कदाचिदप्यतिपतयो भर्तारमतिक्रान्ता नासन्कुलाङ्गनात्वेन याः पतिच्छन्दोनुवर्तिन्य आसन्नित्यर्थः । ता अतिपत्न्यो भर्तारमतिक्रान्ता दुर्विनीता आसन् । एतदप्यरिष्टम् ॥

उस्रपत्नी द्युपतिः । इत्यत्र "सादेः" [४९] इति वा ङीर्नश्चान्तादेशः ॥ गुरुत्यादिरेव । अतिपतयः ॥ गौणादपि केचित् । अतिपत्न्यः ॥

सपत्नी । इत्यत्र "सपत्न्यादौ" [५०] इति ङीर्नश्चान्तादेशः ॥

पत्न्यः । इत्यत्र "ऊढायाम्" [५१] इति ङीर्नश्चान्तादेशः ॥

---

१ प सी डी °र्थ्यां गृध्रा°. २ प सी डी यथा से°. ३ सी डी °व्योमस्वा°. ४ सी °दृशा रु°. ५ सी °का च । र°. ६ सी °था रा°. ७ प सी °पतयो.

पाणिगृहीतीस्ततर्जुरन्तर्वत्नीः पतिवत्नीष्वयोग्यमेके।
केपि कराग्रीर्धृताञ्चलास्तु प्लवगीवद्वृषलीरिव प्रजघ्नुः॥ ६७॥

६७. एके भटा अन्तर्मध्ये गर्भोस्त्यासां ता अन्तर्वत्नीर्गुर्विणीः पाणिगृहीतीरूढास्ततर्जुर्निर्भर्त्सयामासुः। कथम्। पतिरस्त्यासां तासु पतिवत्नीषु जीवत्पतिकास्वयोग्यं हे रण्डे किमित्यधुना रोदिषीत्यादि पतिविनाशसूचकोक्त्यानुचितं यथा स्यादेवम्। एतदपि महारिष्टम्। तुः पुनरर्थे। केपि भटाः पुनः कराग्रीरूढा वृषलीरिव दासीरिव प्रजघ्नुर्युद्धविघ्नभूता इति कोपाच्चपेटादिना निर्दयमताडयन्। यतः प्लवगीवद्वानरीरिव धृताञ्चला युद्धगमननिषेधायात्तष्टब्धपटप्रान्ताः। अञ्चलधरणेन स्खलनं भार्याहननं च द्वयमप्यरिष्टम्॥

शूद्राश्च क्षत्रियाश्च विभ्युर्यद्यूकाः पत्यंशुकेषु यच्च।
जयदा क्षणपाक्यथाखुकर्णी गोवाली नष्टाथ शालपर्णी॥६८॥

६८. यद्यस्माद्धेतोर्यूकाः पत्यंशुकेष्वभवन् यच्च यस्माद्धेतोश्च। जयदेति सर्वपदेषु योज्यम्। जयदा विजयकारिणी क्षणपाक्यथ तथाखुकर्णी तथा गोवाल्यथ तथा शालपर्णी च नष्टा। एवंनाम्य ओषध्यो गतास्तस्माद्धेतोः शूद्राश्च मिश्रजातिस्त्रियश्च क्षत्रियाश्च क्षत्रियजातिस्त्रियश्च विभ्युर्महारिष्टान्येतानीति मनसि चुक्षुभुः॥

पाणिगृहीतीः। कराग्रीः। इत्येतौ "पाणिगृहीती" [५२] इति ङ्यन्तौ निपात्यौ॥

पतिवत्नीषु। अन्तर्वत्नीः। इत्येतौ "पतिवत्नी०" [५३] इत्यादिना निपात्यौ॥

---

१ सी °भ्युकाः. २ बी शालिप°.

---

१ सी °म्। तु पु°. २ बी शालिप°. ३ ए सी ङ्यन्तौ नि°. ४ ए सी °ना निपा°.

प्लवगी । वृषली: । इत्यत्र "जाते.°" [५४] इत्यादिना ङीः ॥ जातेरिति किम् । घृताञ्चलाः । अयान्तेति किम् । क्षत्रियाः ॥ नित्यस्त्रीवर्जनं किम् । यूकाः ॥ शूद्रवर्जनं किम् । शूद्राः ॥

क्षणपाकी । आखुकर्णी । शालपर्णी । गोवाली । इत्यत्र पाककर्ण°" [५५] इत्यादिना ङीः ॥

शतपुष्पां जिष्णुशङ्खपुष्पीं प्राक्पुष्पां जयदां च काण्डपुष्पाम् ।
सत्पुष्पां प्रान्तपुष्पयामा वासीफल्या सार्धमेकपुष्पाम् ॥ ६९ ॥
भस्त्राफलया समं जयिन्या पिण्डफलैकफले च संफलां च ।
अजिनफलादर्भमूल्यमूलाः सशणफला अदहन्पतन्त्य उल्काः ७०

६९. ७०. स्पष्टे । किं तु । शतपुष्पादीनां निरुक्तिः स्वयं ज्ञेया । जिष्णुर्जयनशीला या शङ्खपुष्पी ताम् । जयदामिति सर्वेषु द्वितीयान्तेषु पदेषु योज्यम् । प्रान्तपुष्पयामा सह । जयिन्या विजयवत्या भस्त्राफलया । सह शणफलया वर्तन्ते यास्ताः । अजिनफलादर्भमूल्यमूला इत्यत्र द्वन्द्वः । शतपुष्पाद्याः शणफलान्ताः सर्वा एता जयकारिण्य ओषध्योत एव जिष्णु जयदां जयिन्येति विशेषणानि कासांचिदुक्तानि । यासु चैवं विशेषणं नास्ति तासु स्वयमभ्यूह्यम् । उल्कापातो जयदौषधिदाहश्च द्वावप्यरिष्टे ॥

शङ्खपुष्पीम् । इत्यत्र "असत्काण्ड°" [५६] इत्यादिना ङीः ॥ सदादिप्रतिषेधः किम् । सत्पुष्पाम् । काण्डपुष्पाम् । प्रान्तपुष्पया । शतपुष्पाम् । एकपुष्पाम् । प्राक्पुष्पाम् ॥

---

१ ए °यदा च. सी यदा चं का°. २ ए सी °पुष्पा । म°.

---

१ ए सी °ताञ्जला°. २ सी °यांतेति°. ३ सी शालिप°. ४ ए सी यासु चै°. ५ सी °ष्ठ व°.

बासीफल्या । इत्यत्र "असंभस्त्रा°" [५७] इत्यादिना ङीः ॥ समादिप्रतिषेधः किम् । संफलाम् । भस्त्राफलया । अजिनफला । एकफले ॥ एकान्नेच्छन्त्येके । शाणफलाः । पिण्डफला ॥

दर्भमूली । इत्यत्र "अनञो मूलात्" [५८] इति ङीः । अनञ इति किम् । अमूलाः ॥

प्रष्ठीगोपालिकाकुसीदायीकुसितायीहृद्वृषाकपायीम् ।
गृध्नुर्मेने न तान्यरिष्टान्यग्नायीपूतक्रताय्यरिः सः ॥ ७१ ॥

७१. स ग्राहारिर्दोर्मदात्तानि पूर्वोक्तान्यरिष्टान्यशुभसूचकानुत्पातान्न मेनेवज्ञातवान् । कीदृक् । प्रष्ठोग्रग ऋषिर्वा तस्य भार्या प्रष्ठी । गोपालको वल्लव ऋषिर्वा तस्य भार्या गोपालिका । कुसीदकुसितौ ऋषी तयोर्भार्ये कुसीदायी कुसितायी च द्वन्द्वे ता हरति शीलंभ्रंशार्थमपहरति यः सः । तथा वृषाकपायीं वृषाकपेर्विष्णोर्भार्यां लक्ष्मीं गृध्नुरिच्छुः । तथाग्नेर्भार्याग्नायी स्वाहा पूतक्रतोर्ऋत्विजो भार्या पूतक्रतायी द्वन्द्वे तयोररिः ॥

प्रष्ठी । इत्यत्र "धवाद्°" [५९] इत्यादिना ङीः ॥ अपालकान्तादिति किम् । गोपालिका ॥

पूतक्रतायी । वृषाकपायीम् । अग्नायी । कुसितायी । कुसीदायी । इत्यत्र "पूतक्रतु°" [६०] इत्यादिना ङीरैकारान्तादेशः ॥

---

१ बी पृष्ठी°.

---

१ ए सी डी °फला । इ°. २ ए सी °फले । ए°. ३ ए सी °दात्तानि. ४ ए सी मेदेव. ५ ए सी °क् । पृष्ठो°. ६ ए सी °र्या पृष्ठी ।. ७ ए सी °कमृशा°. ८ बी अंसार्थ°. ९ ए सी °हति. १० ए सी °ष्णो भार्या. ११ ए सी °यी । अ°. १२ बी अग्नयी ।.

मनुरिन्द्राण्यां मुदा मनाव्यां वरुणानी च मृडान्यथो मनाय्याम्।
शर्वाणीशस्तदा भवान्यां रुद्राणीशे चास्य रिष्टमाख्यत् ॥ ७२ ॥

७२. तदा ग्रिष्टभवनकालस्य ग्राहारे रिष्टं जातावेकवचनम्। अशुभसूचकोत्पातान्मनुर्मन्तृपेर्भार्या मुदा दानववधसंभावनोद्भूतेन हर्षेण हेतुनेन्द्राण्यामिन्द्रभार्यायामाख्यदवदत्। तथा मनाव्यां मनुभार्यायां वरुणानी च वरुणभार्या च मुदाख्यत्। अथो तथा मृडानी मृडभार्या गौरी मनाय्यां मुदाख्यत्। तथा शर्वाणीशः शंभुर्भवान्यां गौर्यां मुदाख्यत्। रुद्राणी च गौरी चेशे शंभौ मुदाख्यत्। स्त्रियो हि जातिप्रत्ययेन दंपती च स्नेहानुबन्धेन हर्षवार्ता मिथः प्रायेणाख्यान्ति। अनया च देवताभिर्ग्रिष्टोक्त्यारिष्टानां सत्यभावित्वोक्तिः ॥

धृतवणिजानीयुताहिताग्न्यान्याचार्यानीश्वासवत्प्रचण्डैः।
पवनैर्मुमुदे स मातुलानीदुहितृपतिर्हरिमातुलीशतुल्यः ॥ ७३ ॥

७३. मातुलस्य भार्या मातुलानी तस्या दुहिता पुत्री तस्याः पतिर्भर्ता। यदि भवति तदा सौराष्ट्रैरवश्यं मातुलानीपुत्र्येव परिणीयत इति देशाचारः। स ग्राहारिः पवनैर्वातैः कृत्वा मुमुदे। किंभूतैः। धृता मार्गे देशपुरादिभङ्गेन वन्दीकृता वणिजानीयुता वणिग्भार्यासहिता या आहिताग्न्यान्याचार्यान्योऽग्निहोतृभार्या आचार्यभार्याश्च तासां ये श्वासा दुःखाद्दीर्घसंतप्ता निश्वासास्तद्वत्प्रचण्डैरत्यन्तमुष्णत्वाद्दीर्घत्वाच्च रौद्रैरपि। यतः कीदृक्। हरेर्विष्णोर्मातुलः कंसो देवकीभ्रातृत्वात्तस्य भार्या हरिमातुली जीवयशा लौकिकमतेऽस्तिरवस्त्याख्ये द्वे भार्ये तयोर्वेशो भर्ता कंस एव दैत्यत्वात्तत्तुल्यः। ग्राहारिर्यथा दैत्यत्वात्तदा बन्दी-

१ बी सी °ताभ्यान्या°. २ ए सी °वप्रचण्डै। ३ ए सी °हेतृप°.

१ बी °दा ग्रारि°. २ ए सी डी °नी व°. ३ सी °था सर्वा°. ४ ए °ताः पु°. ५ सी °बदवे मा°. ६ ए सी °पुत्रेव. ७ डी °चार्या°. ८ सी °मतेऽस्ति°.

कृतानां वणिजान्यादीनां प्रचण्डैर्निःश्वासैरहृष्यत्तथारिष्टसंसूचकत्वात्तदा प्रचण्डीभूतैरपि वातैरहृष्यदित्यर्थः ॥

**रामाचार्य्याः स याज्ञवल्क्योपाध्याय्या अभिमन्युमातुलायाः।**
**आयतनान्याबभञ्ज पार्थोपाध्यायानीपुत्ररोषणो यान् ॥ ७४ ॥**

७४. स ग्राह्यारिर्यान्सन्नायतनानि प्रासादान्बभञ्ज पातितवान्। कासाम्। रामस्य परशुरामस्याचार्यः शंभुस्तस्य भार्या रामाचार्यी गौरी तस्याः। तथा यज्ञवल्कस्यापत्य वृद्धं गर्गादित्वाद् [६. १. ४२] यञि याज्ञवल्क्यः स्मृतिकारस्तस्योपाध्यायो रविस्तस्य भार्या याज्ञवल्क्योपाध्यायी राज्ञीदेवी तस्याः। तथाभिमन्युरर्जुनसुतस्तस्य मातुला लक्ष्मीर्बलाच्युतयोर्भगिन्या अर्जुनपत्न्याः सुभद्राया अपत्यत्वेन हरेर्भागिनेयत्वात्तस्याश्च। यतः पार्थोर्जुनस्तस्योपाध्यायो द्रोणाचार्यस्तस्य भार्या पार्थोपाध्यायानी कृपी तस्याः पुत्रोश्वत्थामा तद्वद्रोषणोतिकोपनः॥

**प्रासादान्पातयन्स नोपाध्यायाचार्ये मन्यते स्म दृप्तः।**
**सूरीतनयौजसोस्य किं वा सूर्याणीसूनोश्च मान्यमस्ति ॥ ७५ ॥**

७५. दृप्तत्वात्स ग्राह्यारिः प्रासादान्देवगृहाणि पातयन्सन्नुपाध्यायाचार्ये देवायतनभङ्गो दुरन्त इत्युपदेशिके स्वस्य पाठकव्याख्यातृभार्ये न मन्यते स्म तदुपदेशावगणनेनावगणितवान्। वा यद्वा। अस्य ग्राह्यारेः सूर्यस्य भार्या सूर्याणी राज्ञीदेवी तस्याः सूनोश्च यमस्य च किं मान्यं गणनीयमस्ति। यतः सूर्यस्य भार्या मानुषी कुन्ती सूरी तस्यास्तनयः कर्णस्तस्येवौजो बलं यस्य तस्य कर्णस्येव दुर्नयत्वाल्लोकप्रमाथिबलस्येत्यर्थः॥

---

१ प सी °वल्कोपा°.

---

१ बी पातित°. २ बी °र्या यज्ञ°. ३ प बी सी °क्ष्मी बला° ४ प सी °देवीः त°. ५ सी °स्ति यरं सू°. डी °स्ति याः सू°. ६ प सी °वदुर्णस्येव दु°. ७ प सी त्वालोक°.

सूर्यातनयातटे हिमानीशीतयवानीतृप्तदन्तिदानैः ।
यवनान्या लेखयन्प्रशस्ति न्वेषोरण्यानीः क्षणाल्लङ्घे ॥ ७६ ॥

७६. एष ग्राहारिररण्यानीर्महारण्यानि क्षणाल्लङ्घे । कीदृक्सन् । महद्धिमं हिमानी तया यच्छीतं शीतस्पर्शस्तेन दग्धत्वाद्या यवानी दुष्टो यवस्तेन तृप्ता ये दन्तिनस्तेषां यानि दानानि मदास्तैः कर्तृभिर्यवनानामियं लिपिर्यवनानी । उक्तार्थत्वात् "तस्येदम्" [६.३. १६०.] इत्यण्न । तया देशभेदलिप्या कृत्वा प्रशस्तिं वर्णनाकाव्यमर्थात्स्वस्य लेखयन्नु । क्त । सूर्यस्य भार्या सूर्या राज्ञीदेवी तस्यास्तनया सुराष्ट्रेषु प्रसिद्धा भद्राख्या नदी तत्तटे । मषीमेचकानां करिमदानां लिप्यनुकारेण भद्रातटे पातेनाहो ग्राहारेर्दिग्गजानुकारिणो गजा अहो ग्राहारेः सैन्यसामग्रीत्यादिप्रशंसाहेतुत्वादेवमुत्प्रेक्षा ॥

मनाय्याम् मनाय्याम् मनुः । इत्यत्र "मनोरौ च वा" [६१] इति ङ्या डीरौदैचान्तादेशौ ॥

वरुणानी । इन्द्राण्याम् । रुद्राणी । भवान्याम् । शर्वाणी । मृडानी । इत्यत्र "वरुणेन्द्र°" [६२] इत्यादिना डीरान्चान्तादेशः ॥ कश्चित्त्वाहिताग्न्यानी यणिजानीत्यादावपीच्छति ॥

मातुलानी । मातुली ॥ क्षुभ्नादित्वाणत्वाभावे । आचार्यानी । रामाचार्य्याः । पार्थोपाध्यायानी । उपाध्याय्या । इत्यत्र "मातुला°" [६३] इत्यादिना डीरान्चान्तः ॥ अन्ये तु मातुलायाः ॥ आचार्ये । उपाध्याया । इत्यपीच्छन्ति तदर्थे टाराप विकल्पनीयः ॥

१ ए सी °ण्यानी क्ष°.

१ ए सी यथच्छी°. २ ए सी °स्तै क°. ३ बी °र्यवानान्या यव°. ४ ए सी शीस्तरया°. ५ बी °रेणोक्त्वतं म°. ६ बी °रे दिग्ग°. ७ बी म् । सर्वा°. ८ सी डी °प्यादा: । ह°. ९ सी डी °चादादे । उ°.

सूर्याणी सूर्या । इत्यत्र "सूर्याद्°" [६४] इत्यादिना वा ङीरान् चान्तः ॥ देवतायामिति किम् । सूरी ॥

यवानी । यवनान्या । अरण्यानीः । हिमानी । इत्यत्र "यव°" [६५] इत्यादिना ङीरान् चान्तः ॥

आर्याणी क्षत्रियाण्यभीः किं शुभचातुर्यात्क्षत्रिया किमार्या ।
इत्यूहांचक्र आत्मसैन्ये धृतवात्सीवात्स्यायनीपतिः सः ॥ ७७ ॥

७७. वत्सस्यर्षेरपत्यं वृद्धं स्त्री वात्सी । एवं वात्स्यायनी तस्याः पतिर्भर्ता वात्स्यायनीपतिः । द्वन्द्वे धृतौ वन्दीकृतौ वात्सीवात्स्यायनीपती येन स तथा स ग्राहारिरात्मसैन्य इत्यूहांचक्रे वितर्कितवान् । किमित्याह । अभीर्निर्भया[1] पराक्रमिण्यार्याणी प्रेक्षापूर्वकारिणी[2] वणिगादिजातिः स्त्री किं क्षत्रियाणी क्षत्रियजातिः स्त्री वर्तते भीरुत्वादेवमा[3]शङ्का । क्षत्रियाणी ह्यभीः स्यात् । तथा क्षत्रिया क्षत्रियजातिः स्त्री शुभचातुर्याच्छुभं परिणामे हितं यच्चातुर्यं पर्यालोचितकारित्वं तस्माद्धेतोः किमार्या वणिगादिजातिः स्त्रीति । ग्राहारिः स्वसैन्य आर्या अपि पराक्रमिणीः[4] क्षत्रिया अपि प्रेक्षापूर्वकारिणीः पश्यन्मत्सैन्ये स्त्रियोऽपि बुद्धिपराक्रमपात्राण्यतः केनाप्यहं न जेय्य[5] इति स्वचित्ते परिभावितवानित्यर्थः ॥

आर्याणी आर्या । क्षत्रियाणी क्षत्रिया । इत्यत्र "आर्यक्षत्रियाद्वा" [६६] इति वा ङीरान् चान्तः ॥ अधवयोगेयं विधिः ॥

वात्सी वात्स्यायनी । इत्यत्र "यञ°" [६७] इत्यादिना ङीर्डायन् चान्तो वा ॥

१ ए सी °त्स्यानी°.

१ बी °भीनिर्भ°. २ सी णीक्षा°. ३ बी °भीकत्वा°. ४ बी °मिणी क्ष°. ५ ए सी जज्य इ°. ६ सी °र्याक्षणीः । आ°. ७ सी वात्साय°.

लौहित्यायन्यपेहि सांशित्यायनि कात्यायिन्ययि त्वरस्व ।
शाकल्यायन्ययस्व गौकक्ष्यायणि गौकक्ष्यासुतेपसर्प ॥ ७८ ॥
आवट्यापुत्रि तूर्णमावट्यायनि कौरव्यायणि व्रजेति ।
अनुवनमिह यात्युवाच भीता माण्डूकायन्यासुरायणी च ॥ ७९॥

७८,७९. कण्ठ्ये । किं तु । लोहित-संशित-कत-शकल-गोकक्ष-अवटा ऋषिभेदास्तेषामपत्यानि वृद्धानि स्त्रियो गर्गादित्वाद् [६.१. ४२] यञि लौहित्यायन्यादय ऋषिपुत्र्यो गौकक्ष्यायाः सुतौ एवमावट्या-पुत्री तासां संबोधनानि । अयस्व गच्छ । अपसर्पापसर । कौरव्यायणि कुरोः क्षत्रियस्यापत्यं स्त्रि "कुर्वादेर्ञ्यः" [६.१. १९] इति "दुनादे°" [६.१.११७] इत्यादिना वा ञ्यः । अनुवनं वनस्य समीप इह याति सति भीता सती माण्डूकायनी मण्डूकस्य द्विजस्यापत्यं स्त्री "पील°" [६.१. ६८.] इत्यादिनाण् । आसुरायणी चासुरस्यर्षेरपत्यं स्त्री च बाह्वादित्वाद् [६.१ ३२] इञ् । इति पूर्वोक्तमुवाच ॥

लौहित्यायनि । सांशित्यायनि । कात्यायनि । शाकल्यायनि । अत्र "लोहि-तादि°" [६८] इत्यादिना डीडायन् चान्तः ॥

गौकक्ष्यायणि गौकक्ष्या । आवट्यायनि आवट्या । अत्र "वावटाद्वा" [६९] इति वा डीडायन् चान्तः ॥

कौरव्यायणि । माण्डूकायनी । आसुरायणी । इत्यत्र "कौरव्य°" [७०] इ-त्यादिना डीडायन् चान्तः ॥

---

१ ए सी डी यहि लौ°. २ ए बी सी डी °त्यान्या°. ३ ए सी डी °या सु°. ४ बी °या गौकक्ष्यासुता ए°. ५ बी डी °पत्य स्त्रि. ६ ए सी वा ञ्यः ।. ७ बी °ञ् । अद्य°. ८ ए सी °दित्वादि°. ९ डी लोहि°. १० ए सी डी °त्यादिनि ।. ११ ए सी °क्ष्या । आ°. १२ डी °न्तः ॥ सोप°.

सौतंगम्या हृता नगर्या वाराह्या दाक्षीश्च विप्रबन्धूः ।
तित्तिरिवन्न्यङ्कुवच्च बध्नन्कर्कन्धूवनमत्यगात्स लुब्धः ॥ ८० ॥

८०. स ग्राहारिः कर्कन्धूवनं बदरीवणमत्यगादत्यक्रामत् । कीदृक्सन् । लुब्धः स्त्रीलम्पटोऽत एव वाराह्या वराहस्यर्षेरपत्यानि स्त्रीः । बाह्वादित्वाद् [६.१.३२] इञ् । दाक्षीर्दक्षर्षिपुत्रीर्विप्रो बन्धुर्जातिरेवासां ता विप्रबन्धूश्च जात्यापि या ब्राह्मण्यस्ताश्चेत्यर्थः । बध्नन्भार्यीकर्तुं बन्दौ क्षिपन् । कीदृशीः । सौतङ्गम्याः सुतंगमेनर्षिणा निर्वृत्तायाः सुतंगमादेरिञ् [६.२.८५] । नगर्याः पुराद्धृता अपहृताः । तित्तिरिवद्यथा तित्तिरीः पक्षिणीभेदान् न्यङ्कुवच्च यथा न्यङ्कूंश्च मृगीभेदांश्च बध्नन् लुब्धो व्याधः कर्कन्धूवनमत्येति ॥

पट्टुरज्जुयतामिव स्खलन्तीं पश्यन्सोऽध्वर्युं कमण्डलूं च ।
कोमलबाहुं च मद्रबाहूं कद्रूजसमः प्राप जम्बुमाल्याम् ॥ ८१ ॥

८१. स ग्राहारिर्जम्बुमाल्यां नद्यां प्राप । कीदृक्सन् । कद्रूजसमः कद्र्वा जातः कद्रूजः सर्पस्तेन क्रूरत्वादिधर्मैः सदृशोऽत एवाध्वर्युं यजुर्वित्स्त्रियं कमण्डलूं चैवंनाम्नीं स्त्रियं च कोमलबाहुं मृदुभुजां मद्रबाहूं चैवंनाम्नीं स्त्रियं च पश्यन् । कीदृशीम् । पट्टुरज्जुयतामिव यथा गाढशृङ्खलाबद्धा स्खलत्येवं तद्भयात्पदेपदे स्खलन्तीम् । सर्पादपि स्त्रियो गच्छन्त्योऽतिभयेन स्खलन्ति ॥

सौतंगम्या । अत्र "इञ इतः" [७१] इति ङीः ॥ इञ इति किम् । इमादेशात्प्यान्मा भूत् । वाराह्याः ॥

दाक्षीः । इत्यत्र "नुर्जातेः" [७२] इति ङीः ॥ नुरिति किम् । तित्तिरि ॥

---

१ ए सी °हारिक°. २ बी °दत्यक्रा°. ३ ए सी लुब्धस्त्री°. ४ ए सी डी निवृत्ता°. ५ बी न्यङ्कूश्च. ६ डी °ङ्कूर्मेश्च°. ७ ए सी °धर्मैः स°. ८ सी °रज्जूय°. ९ ए सी °ति ङीः ॥ नु°. १० ए सी डी °रि । मद्रब°.

विप्रयन्धूः । अप्राणिनश्च । कर्कन्धूः । इत्यत्र "उतोप्राणिनश्च°" [७३] इत्यादिनोङ् ॥ अप्राणिनश्चेति किम् । न्यङ्कु ॥ जातेरित्येव । पटु ॥ अयुरज्वादिभ्य इति किम् । अध्वर्युम् । रज्जु ॥

मद्रबाहूम् । कद्रू । कमण्डलूम् । इत्यत्र "बाह्वन्त°" [७४] इत्यादिनोङ् । माद्रीति किम् । कोमलबाहुम् ॥

करभोरु सहोरु संहितोरुवामोर्वावशफोरु लक्ष्मणोरु ।
सहितोरु मुखं वरोरुनारीश्वश्रूसख्यभ्यर्णगा इहाध्वम् ॥ ८२ ॥

युवते पङ्गु दैवदत्त्ये वाराह्यै वाराहि दाक्षि यूनि ।
वासिष्ठी कापटव्युपान्ते माध्वं पश्यत वाहुविक्रमं नः ॥ ८३ ॥

पौणिक्ये क्रौड्य एहि लाड्ये मूल्ये भोज्ये तिष्ठ मुञ्च भोजे ।
भज सूते दैवयज्ञि काण्ठेविद्ध्ये काण्ठेविद्ध्यनुप्रपन्ने ॥ ८४ ॥

धीरा भव सात्यमुग्रि दैवयज्ञ्यासखि मास्स्वातिसात्यमुग्र्या ।
शौचेर्वृक्ष्येथ शौचिवृक्ष्यालीत्यूचुः प्रयुयुत्सवः स्वकान्ताः ॥ ८५ ॥

८२–८५. प्रयुयुत्सवो योद्धुमिच्छवो भटाः स्वकान्ता इत्यूचुः । यथा हे करभोरु करभः कनिष्ठाङ्गुलेर्मणिबन्धस्य चान्तरं स इव मृदू निर्मलौ वोरू सक्थी यस्याः । तथा हे सहोरु

सहः संबन्धसादृश्ययौगपद्यसमृद्धिषु ।
साकल्ये विद्यमाने च

इति वचनात्सह सदृशावेकादृशौ समृद्धौ वोरू यस्याः । तथा हे सं-

१ प सी 'हाद्धू°. टी हाद्धू°. २ प सी क्रौट ए°. ३ प सी डी इक्षाली°.

१ प सी डी 'बाहूम् ।. २ प सी डी प्रायु°. ३ सी सक्थनीर°. ४ प सी डी °स्याः । यथा. ५ प सी डी °ह च°. ६ सी °ति वाच°.

हितोरूत्वाभोर्वौ संहितौ जानुकटीभ्यां सह सुसंधानावूरू यस्याः सा च वामोरूश्च चारुसक्थिका च। तथा हे अशफोरु अनिन्द्यसक्थिके हे [1]लक्ष्मणोरु लक्ष्मीरस्त्यनयोः "लक्ष्म्या अनः" [७.२. ३२] इत्यनेन लक्ष्मणौ श्रीमन्तावूरू यस्याः। तथा हे संहितोरु सुघटितोरु सुखं यथा स्यादेवमिह प्रदेशे [2]वरोरुनारीश्वश्रूसख्यभ्यर्णगाः प्रशस्योरूणां वनिताश्वश्रूवयस्यानां निकटस्था यूयमाध्वं तिष्ठत। तथा [3]हे युवते तरुणि हे दैवदत्त्ये देवदत्तस्य पौत्रि हे वाराह्ये वराहस्य पौत्रि हे वाराहि वराहपुत्रि हे यूनि तरुणि दाक्षि [4]दैक्षपौत्रि वसिष्ठस्यापत्यं पौत्रादि स्त्री "ऋषिवृष्णि०" [६.१. ६०] इत्यादिनाणि वासिष्ठी कपटोरपत्यं वृद्धं स्त्री कापटवी। द्वन्द्वे [5]तयोः समीपे पङ्गूनु पादरहितेव माध्वं मा तिष्ठत। तर्हि किं कुर्म इत्याहुः। नोस्माकं बाहुविक्रमं पश्यत। तथा हे पौणिक्ये पुणिकस्य पौत्रि "अत इञ्" [६.१. ३०] एवं हे [6]कौड्ये च क्रोडस्य पुत्रि त्वं चेह्यागच्छार्थाद्रणभुवम्। तथा हे लाड्ये लाडपुत्रि हे सूते प्राप्तयौवने स्त्रि [7]यद्वा सूतसंबन्धिनि स्त्रि भोज्ये च भोजवंशजे क्षत्रिये त्वं च तिष्ठात्रैवास्स्व। तथा हे भोजे भोजाख्ये स्त्रि मुञ्च त्यज प्रस्तावाद्रणे यियासुं माम्। तथा हे सूते प्रसूते कान्ते हे दैवयाज्ञि हे काण्ठेविद्ध्ये देवयज्ञस्य कण्ठेविद्धस्य च पुत्रि पौत्रि वा काण्ठेविद्ध्यनुप्रपन्ने च काण्ठेविद्धीमाश्रिते स्त्रि त्वं च व्रज गच्छार्थाद्रणाङ्गणम्। तथा हे सात्यमुग्रि सत्यमुग्रस्य पुत्रि पौत्रि वा धीरा निर्भया भव। हे [8]दैवयज्ञ्यासखि दैवयज्ञ्याया वयस्ये त्वमतिसात्यमुग्र्या धैर्यात्सात्यमुग्र्यामतिक्रान्ता सती मास्स्व मा तिष्ठ धीरत्वाद्रणदर्शनाय प्रचलेत्यर्थः। शौचेर्वृक्ष्ये इति [9]शौचेरिति गम्यपरत इत्यपेक्षया "प्रभृत्यन्यार्थे०" [२.२.७४.] इत्यादिना पञ्चमी। अत्र च शब्दार्थयोरभेदाच्छौचिवृक्ष्य इति शब्देन वाच्यो योर्थः शुचिवृक्षापत्यस्त्रीरूपः

१ प सी लक्षणो°. २ प सी रोरुना°. ३ प सी हे वरा°. ४ वी दक्षिपौ°. ५ प सी तयो स°. ६ प सी कौढि च. ७ प सी °द्वास्तत्तव°. डी °द्वा तत्संब°. ८ प सी °यज्ञास°. ९ सी शौचरि°.

स शौचिवृक्ष्य इति शब्देनाभिन्नस्तेन शौचेरिति परपञ्चम्यन्ताविशेषणं वृक्ष्ये इति शब्दसंबन्ध्यप्यर्थस्य स्याद्यथा समस्तवस्तुविस्तरं इत्यत्र विस्तरशब्दस्य वचनप्रथावाचकत्वेपि शब्दार्थयोरभेदादर्थप्रथायामुपन्यास इति । एवमग्रेप्येवंविधे प्रयोगे सर्वत्र ज्ञेयम् । ततः शौचेर्वृक्ष्ये इति कोर्थो हे शौचिवृक्ष्ये शुचिवृक्षस्य पुत्रि पौत्रि वाथ तथा हे शौचिवृक्ष्यालि शौचिवृक्ष्याः सखि त्वमप्यातिसात्यमुग्र्या सती मास्स्वेति ॥

करभोरु । सहितोरु । सहितोरू । सहोरु । अशफोरु । वामोरु । लक्ष्मणोरु । इत्यत्र "उपमान°" [७५] इत्यादिनोङ् ॥ उपमाद्यादेरिति किम् । वरोरुनारीत्यादि ॥

नारी । सखी । पङ्गूः । श्वश्रूः । इत्येते "नारीसखी°" [७६] इत्यादिना ङयूङन्ता निपात्या ॥

युवते । इत्यत्र "यूनस्तिः" [७७] इति तिः ॥ यूनीत्यपि कश्चित् ॥

दैवदत्त्ये । वाराह्ये । इत्यत्र "अनार्षे°" [७८] इत्यादिनान्तस्य ष्यः ॥ अनार्ष इति किम् । वासिष्ठी ॥ वृद्ध इति किम् । वाराहि ॥ बहुस्वरेति किम् । दाक्षि ॥ गुरूपान्त्यस्येति किम् । कापटवी ॥

पौणिक्ये । इत्यत्र "कुलाख्यानाम्" [७९] इति ष्यः ॥

क्रौड्ये । लाड्ये । इत्यत्र "क्रौड्यादीनाम्" [८०] इति ष्यः ॥

भोज्ये । सूत्ये । अत्र "भोज°" [८१] इत्यादिना ष्यः ॥ क्षत्रियायुवत्योरिति किम् । भोजे सूते ॥

दैवयज्ञ्या दैवयज्ञि । शौचिवृ(चिवृ ?)क्ष्ये शौचिवृक्षी । सात्यमुग्र्या सात्यमुग्रि । काण्ठेविद्ध्ये काण्ठेविद्धी । इत्यत्र "दैवयज्ञि°" [८२] इत्यादिना वा ष्यः ॥ पक्षे सर्वत्र "इतोक्तेः" [२.४.७२] इति ङीः ॥

१ ए सी डी °रु°. २ ए सी डी °मुग्यास°. ३ डी °रु । स°. ४ सी °रोरु । स°. ५ ए सी °नार्ष इ°. ६ ए सी डी °रे इति. ७ डी °क्ये इ°. ८ डी °इ्ये । ९ ए सी °विद्धे क°. १० सी °ऽ देव°.

कौमुदगन्धीपतिः पुरोभूत्[1]कौमुदगन्धीपुत्र आददेतः ।
कौमुदगन्ध्यापतिध्वजिन्यां कौमुदगन्धीबन्धुभिश्च वर्म ॥ ८६ ॥

८६. कौमुदगन्ध्या कुमुदगन्धेः कुमुदगन्धस्य वापत्यं स्त्री राज्ञी पतिः स्वामिनी यस्याः[1] सा या ध्वजिनी चमूस्तस्यां कौमुदगन्धीपतिः कौमुदगन्ध्याया राज्या भर्ता पुरो ग्राहारिसैन्यस्याग्रतो यतोभूदतोस्माद्धेतोः कौमुदगन्धीपुत्रः[2] कौमुदगन्ध्याङ्गजो वर्मादर्दे जग्राह । तथा कौमुदगन्ध्या राज्ञी बन्धुर्येषां तैश्च कर्तृभिर्वर्माददे गृहीतम् । आदद इत्यत्र कर्तरि कर्मणि चात्मनेपदम् । अत्र च ध्वजिन्या राज्ञश्च स्त्रीपतित्वोक्त्या पुत्रस्य मातृपुत्रत्वोक्त्या च स्त्रिया इवाग्रसैन्यस्य भावी पराजयो[3] व्याञ्जि ॥

कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । इत्यत्र "ष्या पुत्र०" [८३] इत्यादिनावन्तष्य ईच् ॥ तत्पुरुष इति किम् । कौमुदगन्ध्यापतिध्वजिन्याम् ॥ कौमुदगन्धीबन्धुभिः । इत्यत्र "बन्धौ०" [८४] इत्यादिनावन्तष्य ईच् ॥

सौगन्धीमात आत्तधन्वा पाङ्कजगन्धीमातृभिः सहाभूत् ।
सौगन्ध्यामातदर्शनाद्यत्पाङ्कजगन्ध्यामातरोत्यहृष्यन्[2] ॥ ८७ ॥

८७. सौगन्ध्यामातदर्शनात्सौगन्ध्या माता येषां भटानां तद्दर्शनात्पाङ्कजगन्ध्या माता येषां ते पाङ्कजगन्ध्यामातरो भटा यद्यस्माद्धेतोरैत्यहृष्यन्सहायिलाभात्तुष्टाः । अतो हेतोः सौगन्धीमातः सौगन्ध्याजननीको भट आत्तधन्वा सन्पाङ्कजगन्धीमातृभिः पाङ्कजगन्ध्याजननी-

---

१ ए सी °भूकौमु°. बी °भूत्कोमु°. २ डी °रोभ्यत्ह°.

---

१ बी यस्या सा. २ ए सी °न्धीपुः कौ°. ३ डी °यो व्यजि. ४ डी °रभ्यह°.

कैर्भटैः सह संयुक्तोभूत् । अत्र च भटाना मातृपुत्रत्वोक्त्या साहाय्यापेक्षोक्त्या च पराजेष्यमाणता व्यञ्जिता ॥

औद्गन्धीमातृकः पदे स्वे लघुमौद्गन्ध्यामातृकं निवेश्य ।
अद्रिचरीं व्यौहत द्विपालीं चलमत्सीनयनाप्सरोरिरंसुः ॥८८॥

८८. औद्गन्धीमातृको राजा स्व आत्मीये पदे स्थाने राज्ये लघुमौद्गन्ध्यामातृकं स्वानुजं निवेश्य संस्थाप्य द्विपालीं गजघटां व्यौहत युद्धाय व्यूहवतीं चक्रे । कीदृशीम् । अद्रौ चरत्यद्रिचरी तां विन्ध्याद्रेभवाम् । यतश्चलमत्सीवच्चञ्चलशफरीवल्लोलानि नयनानि यासां ता या अप्सरसस्ता रिरंसुः अन्तर्भूतण्यर्थत्वात्सकर्मकत्वे रमयितुमिच्छुः । "श्रिताद्भिः" [३.१.६२] इति स. । रणे मरणाद्देवीभुभूषुरित्यर्थः ॥

सौगन्धीमातः सौगन्ध्यामात । पाङ्कजगन्धीमातृभिः पाङ्कजगन्ध्यामातरः । औद्गन्धीमातृकः औद्गन्ध्यामातृकम् । इत्यत्र "मात°" [८५] इत्यादिना-न्तस्यो वेप् ॥

अद्रिचरीम् । इत्यत्र "अस्यं ड्यां लुक्" [८६] इत्यस्य लुक् ॥ अस्येति किम् । द्विपालीम् ॥

मत्सी । इत्यत्र "मत्स्यस्य यः" [८७] इति यस्य लुक् ॥

जलमनुपीकाद्रवेय्युदीक्ष्यः सौरीं सौरीयो नु भां दधानः ।
आगस्तीयो नु सिन्धुराजः संनह्यागस्त्यां दिशि स्थितो भात् ॥८९॥

८९. मनुष्यो नार्यः कद्रवा अपत्यानि स्त्रियः शुभ्रादित्वाद् [६.१.

१ प सी °चरी औ°. २ प सी °री यरी°. ३ प °राजस° सी °राज्य पंच°. ४ प सी °नस्यादिदि°.

१ बी °क्या सहा°. २ बी °ह्निोक्या. ३ प सी व्यक्ता. ४ बी °त्नीवप°. ५ बी °ती एमाड. ।. ६ प सी डी °मात: । पा°. ७ सी °स्य लुक् ॥ म°.

७३.] एयणि काद्रवेय्यो नाग्यः । द्वन्द्वे । जलस्य या मनुषीकाद्रवेय्य-स्ताभिरुदीक्ष्योस्[1]मत्स्वाम्ययमिति नुद्ध्योर्ध्वं विलोक्य: सिन्धुराजः समुद्राधिपत्वाद्यथार्थनामा सिन्धुराजाख्यो नृपः संनह्याभात् । कीदृक्सन् । सौरीं[2] सौरीयो नु भां दधा[3]नः । यथा सूर्यो देवतास्य देवताणि सौर्यः । सौर्याय हितः "तस्मै हितः" [७.१.३५] इतीये सौरीयोर्क. । सौरीं सूर्यसत्कां भां तेजो धत्ते तथा[4]रिभिरसह्यत्वात्सौरीमिव सौरीं भां प्रतापं दधानः । तथागस्तीयो नु । अगस्त्यो देवता[5]स्यागस्त्यस्तस्मै हितोगस्त्यर्षिः स इवागस्त्यामगस्तिर्स[6]त्कायां दिशि दक्षिणस्यां सैन्यरच[7]नाविशेषेण स्थितः । यमदिक्श्रयणोक्त्या चास्यावश्यंभावी पराजयः सूचितः । योपि सिन्धुराजो नदीपतिरब्धिः सोपि जलमानुषीकाद्रवेय्युदीक्ष्यः सौरीं [8]सुरासंबन्धिनी भां श्रियं सुरानुकारिनीरत्वात्सुराजनकत्वाद्वा दधान आगस्त्यां दिशि स्थितो भातीत्युक्तिः ॥

मनुषी । इत्यत्र "व्यञ्जनात्तद्धितस्य" [८८] इति यस्य लुक् ॥ व्यञ्जनादिति किम् । काद्रवेयी ॥

सौरीम् । सौरीयः । आगस्त्याम् । आगस्तीयः । अत्र "सूर्या°" [८९] इत्यादिना यलुक् ॥

ननु सैधमसै[1]ध्यमप्यदोहः पौषातैषाणां नृणां हि सिद्ध्यै ।
जल्पन् गा[2]र्गीयतां यदूनामिति गार्गीभूतः ससज्ज लक्षः ॥९०॥

९०. लक्षः ससज्ज युद्धाय प्रगुण्यभूत् । कीदृक्सन् । जल्पन् । किमित्याह । नन्विति संबोधने । हे यदुभटा अदो रणसंबन्ध्यहर्दिनं

१ बी °सैधम°. २ ए सी गार्गीय°.

१ ए सी °स्मत्साम्य°. २ ए डी °रीं सोरी°. ३ ए सी °धानो सूर्योय°. डी °धान. सूर्योय°. ४ ए सी °थाभिरि°. ५ ए सी °स्यागस्त्य°. ६ ए सी डी °सत्काया. ७ बी °चना वि°. ८ ए सी सुराः स°.

सैधं सिध्यः पुष्यस्तेन चन्द्रयुक्तेन युक्तमसैध्यमपि पुष्येण चन्द्रयुक्तेनायुक्तमपि पौषातैषाणां पुष्ये जाता "भतुंसंध्यादेरण्" [६.३.८९] इत्यणि पौषा एवं तिष्ये पुष्ये जातास्तैषा न तथातैषा द्वन्द्वे तेषां पुष्यजातानामपुष्यजातानां च नृणां सिद्ध्यै रणे मृता वै स्वर्गं यान्तीति स्मृतेः स्वर्गप्राप्तिरूपकार्यसिद्धये हि स्फुटं भवति। सैधं हि दिनं किल।

अपि द्वादशमे चन्द्रे पुष्यः सर्वार्थसाधकः।

इतिवचनात्पौषाणामपौषाणां च नृणां सिद्ध्यै स्यादिदं त्वसैधमपीत्यर्थ इति। केषाम्। यदूनां यादवभटानां पुरतः। सवो गार्गीयतां गर्गो गोत्रादिभूतो ब्राह्मणस्तस्यापत्यं वृद्धं गार्ग्यस्तमिच्छन्ति। क्यन्। तेषाम्। जयसिद्धिहेतुदिनपृच्छार्थं गार्ग्यब्राह्मणमिच्छतां यथा तथेदमहः सर्वकार्यसिद्धिकरमिति किं ब्राह्मणपृच्छयेति यदूनामग्रे वदन्नित्यर्थः। अत एवं चागार्ग्यो गार्ग्यो भूतो गार्गीभूतो गार्ग्यब्राह्मणवत्पृच्छकानां यदूनां कार्यसिद्धिकरं दिनं वदन्नित्यर्थः। अमुना च जल्पेन लक्षस्य रणे भावी मृत्युः सूचितः॥

पौषातैषाणाम्। इत्यत्र "तिष्य०" [९०] इत्यादिना यलुक्॥ तिष्यपुष्ययोरिति किम्। असैध्यम्॥ अन्ये तु तिष्यपुष्ययोर्नक्षत्रे वर्तमानयोः सामान्येणि नित्यं तिष्यशब्दस्य तु विकल्पेन यलोपमिच्छन्ति। तन्मते तिष्यो देवतास्य तैष्य(षः?)इत्यत्रापि प्राप्नोति। तथा सैधमसैध्यमित्यपि॥

गार्गीयताम्। गार्गीभूतः। अत्र "आपत्यस्य "क्यच्व्योः" [९१] यस्य लुक्॥

वात्स्यवात्सीयवात्स्यायनैर्बैल्वकैर्वैणुकैरागतं दैत्यराजन्यकम्।
शास्त्रिमानुष्यकं वत्सपश्चाग्निभिर्मूलराजस्य विप्रैः शशंसे तदा॥९१॥

९१. तदा शस्त्रि प्रहरणान्वितं मानुष्यकं भटौघो यत्र तत्तया दै-

१ सी °स्त्रैस्य°. २ ए बी सी डी °र्वैणु°.

१ डी °मि दो°. २ ए सी °आह°. ३ डी °दृष्टे च°. ४ ए सी °जक्षिवि°. ५ बी °च ण°. ६ ए सी °णम्।. ७ सी °न लभ्य°. ८ डी °मूता:। क्°.

त्यराजन्यकं दानवराजन्यौघ आगतमस्य मूलराजस्याग्रे विप्रैः[1] शशंसे कथितम्। किंभूतैः। बिल्वाः सन्त्यस्यां[2] "नडादेः कीयः" [६.२.९२] इति कीये बिल्वकीया नाम नदी तत्र भवैस्ततो वागतैर्बिल्वकैरेवं[3] वैणु-[4] कैश्च। तथा स पञ्चाग्निभिः पञ्चाग्नाय्यो दक्षिणाहवनीयगार्हपत्यस-भ्यावसथ्याख्यानां[5] पञ्चानामग्नीनां भार्या देवता येषां देवताणो लुपि पञ्चाग्नय[6] आहिताग्नयः सह तैर्ये तैस्तथा वत्सो गोत्रादिभूतो ब्राह्मणर्षि-स्तस्यापत्यं वृद्धं वात्स्यस्तत्र साधवो वात्स्यास्तथा वात्स्यस्येमे शिष्या वात्सीयास्तथा वात्स्यस्यापत्यानि युवानो वात्स्यायना विशेषणत्रयद्वन्द्वे तैः। स्रग्विणी छन्दः॥

**पञ्चरामत्रिरम्भोरुषड्गोणिषट्सूचिषट्सप्तयूनां द्विषद्वाजिनाम्।**
**हेषितं चाशृणोत्सोसिदण्डं[1] दधत्षट्कुमारीं रिपुक्लीतवदोथोत्थितः ॥ ९२ ॥**

९२. द्विषद्वाजिनां शत्रवश्वानां हेषितं स मूलराजोशृणोच्च। चस्तु-ल्ययोगितार्थः। यदैव दैत्यराजन्यकमागतं विप्रैः शशंसे तदैव स हे-षितमशृणोदित्यर्थः[7]। किंभूतानाम्। पञ्चभी रामाभिर्नारीभेदैरर्थाद्बन्दीभिः[8] क्रीता इकणो "अनाप्यद्विः लुप्" [६.४.१४१] इति लुपि पञ्चरामाः[9]। एवं तिसृभी रम्भोरूभिः[10] कदलीस्तम्भनिभोरुभिर्बन्दीभिः षड्भिर्गोणीभिरर्था-न्मञ्जिष्ठादिक्रयाणकभृतैरावपनैः षड्भिः सूचीभिः पिशुनभार्याभिर्बन्दीभी रत्नसूचीभिर्वा षड्वा सप्त वा षट्सप्तास्ताभिर्युवतिभिस्तरुणीभिश्च बन्दीभिः क्रीतास्त्रिरम्भोरवः षड्गोण्यः[11] षट्सूचयः षट्सप्तयुवानः। विशेषणद्वन्द्वे। तेषाम्। अथ हेषितश्रवणानन्तरमुत्थितः। कीदृक्सन्। असिदण्डं खड्ग

१ प सी डी चासृणो°.

१ प सी विप्रैश°. २ प सी डी न्त्यस्या न°. ३ प बी सी °तैर्बिल्व° ४ प बी सी °व वेणु°. ५ सी डी °सत्याख्या°. ६ प सी° भाग्नय°. ७ प सी डी °मसृणो°. ८ प °द्वन्दैभिः. सी डी °द्वन्दिभिः. ९ सी °द्विलुपि प°. १० प सी °रूभिक°. ११ प सी °यष°.

दयत । द्विभूवम् । षट्कुमारीं वसिष्ठादन्यैः षड्भिर्मुनिभिर्भर्तृभिः परित्यक्तत्वेन महाब्रह्मचारिणीत्वात्कुमारीव कन्येवाचरन्ति क्विप् तल्लुपि च कुमार्यः कृत्तिकास्तवः षण्णां कुमारीणामयं षट्कुमार्यो देवता अस्येति वा कृत्तिकानक्षत्रकत्वात् "द्विगोः" [ ७.१.१४४] इत्यादिनाणो लुपि षट्कुमारी वम् । स्कन्दस्य हि कृत्तिकानक्षत्रम् । यत्पुराणम् ।

असिर्विशसनः खड्गस्तीक्ष्णधर्मा दुरासदः ।
श्रीगर्भो विजयश्चैव धर्माधारस्तथैव च ॥
इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ।
नक्षत्रं कृत्तिका चैव स्वयं देवो महेश्वरः ॥ इति ।

अत एवारीणां स्त्रीत्वं ददात्यरिस्त्रीत्वदः । असिग्रहणेनातिभयंकरत्वादरीन्स्त्रीरिवातिभीतान्कुर्वन्नित्यर्थः ॥

वात्स्य । वात्सीय । इत्यत्र "तद्धित" [९२] इत्यादिना यलुक् ॥ भनातीति किम् । वात्स्यायन ॥

पैल्वके । पैणुके । इत्यत्र "पिल्वकीयादेरीयस्य" [९३] इति यस्य लुक् ॥ राजन्यकम् । मानुष्यकम् । इत्यत्र "न राजन्य" [९४] इत्यादिना न यस्य लुक् ॥ पञ्चाग्निभिः । पञ्चराज । द्विरम्भोरु । पञ्चसयूनाम् । इत्यत्र "द्व्यादेः" [९५] इत्यादिना द्व्यादेर्लुक् ॥ अचि इति किम् । षट्कुमारीन् ॥ तद्धितलुकीति किम् । स्त्रीत्व ॥ अगोणीसूच्योरिति किम् । पञ्चगोणि । पट्सूचि ॥ सप्तिष्ठ्याश्छन्दः ॥

१ प सी डी पष्ठिष्ठा°. २ श्री °नैष°. ३ प सी 'सद्म: स°. ४ प सी श्री 'स्वस्थ'. ५ डी °स्सादद. । ६ प सी 'सादनर्ज'. ७ श्री °गै: । मेत्व'. सी °गै:। मेत्व' ८ श्री 'ष: । वेत्त°. ९ प सी डी 'रु । अस्मि°. १० श्री 'जन १°. ११ सी श्री 'रा । ८°. १२ प सी 'पि स्तर°.

निस्तिरस्कैरिणिरादंदेनतिब्रह्मबन्धुरयमुष्णगुप्रभः ।
वर्म पेष्टुमरिमर्द्धपिप्पलीवन्नृपः सहमहीयसी भुवा ॥ ९३ ॥

९३. अयं नृपो मूलराजोर्धपिप्पलीवत् खण्डपिप्पलीमिवारिं आहारिं पेष्टुं हिंसितुं[2] वर्मादंदे । कीदृक् । निस्तिरस्कैरिणिस्तिरस्करोतीत्येवंशीला णिनि बाहुलकाद्दृस्वयभावे तिरस्कारिण्या जवन्या[4] निष्क्रान्तः[5] । तथानतिब्रह्मबन्धुर्ब्रह्मबन्ध्वो जातिमात्रेण ब्राह्मण्योतिधार्मिकत्वात्ता अपि नातिक्रान्तः । तथोष्णगुप्रभः प्रतापेनार्कसमोत एव भुवा भूम्या कृत्वा सह महीयस्यातिमहत्या वर्तते यः स सहमहीयसी । अतिमहाप्रमाणोर्वीक इत्यर्थः ॥

उष्णगुप्रभः । निस्तिरस्कैरिणिः । अनतिब्रह्मबन्धुः । इत्यत्र "गोश्चान्ते" [९६]इत्यादिना ह्रस्वः ॥ अनंशिसमासे यो बहुव्रीहाविति किम् । अर्धपिप्पली । सहमहीयसी । रथोद्धता छन्दः ॥

स्फूर्जत्सारथि विप्रबन्धुसुहृदा तद्ब्रह्मबन्धूप्रियं
लक्ष्मीवल्लभलक्ष्मिपुत्रसदृशा तेनाशु सज्जीकृतम् ।
गार्गीपुत्रमहेन्द्रहूस्तुतयुतैः कारीषगन्धीपति-
मायैः श्रीसदनैर्नृपैः[2] सह बलं भ्रूभङ्गभीमाननैः ॥ ९४ ॥

९४. तेन मूलराजेन तत्स्वकीयं बलमाशु सज्जीकृतं सन्नाहितमित्यर्थः । किंभूतेन । लक्ष्मीवल्लभो विष्णुः लक्ष्मिपुत्रः कामः । ताभ्यां

१ प सी °स्करणि°. २ प सी नैर्नृपैः.

१ प सी डी °बतिपिप्प°. २ सी °सिव°. ३ प सी °स्करणि°. ४ प सी °वन्या नि°. ५ डी निःक्रान्तः. ६ प सी °स्करणिः।. ७ प सी "गोस्वान्ते°. ८ प सी रतोद्ध°. डी रतो च्छन्दः. ९ प सी डी °पुत्रका°.

सदृशा । पराक्रमित्वप्रजापालकत्वरूपवत्त्वादिना तुल्येन । अत एव विप्रबन्धो जातिमात्रेण ब्राह्मण्यस्तासामपि सुहृदा पालनया मित्रेण । क्रीडद्वलम् । स्फूर्जन्ती स्फुरन्ती सारा स्थिरोत्कृष्टा वा धीर्युद्धविधिविषयं परिज्ञानं यस्य तत् । अत एव निश्चितदैत्यवलविनाशनेन ब्रह्मबन्धूप्रियं जातिमात्रब्राह्मणीनामपि वल्लभम् । तथा कारीपगन्धीपतिप्रायैः कारीपगन्ध्याख्यराज्ञीभर्तृप्रमुखैर्नृपैः सह सहितम् । किंभूतैः । गार्गीपुत्रा द्विजा. । प्रस्तावाचेन्न मन्त्रिणः । तथा महेन्द्रं ह्वयति महेन्द्रहूर्नाम राजा । तस्य सुता महेन्द्रहूसुताः । द्वन्द्वे । तद्युतैः । तथा श्रीसद्मैश्चतुरङ्गवलादिलक्ष्मीनिवासैः । तथा भ्रूभङ्गभीमाननैः कोपवशाद्भ्रुकुटीविधानरौद्रवक्त्रैः ॥

सारेधि । इत्यत्र "क्लीबे" [९७] इति ह्रस्वः ॥

लक्ष्मिपुत्र लक्ष्मीवर्धन । विप्रबन्धुसुहृदा ब्रह्मबन्धूप्रियम् । इत्यत्र "येदूत" [९८] इत्यादिना वा ह्रस्वः ॥ अव्ययादिवर्जनं किम् । अव्ययं । सर्वाहृतम् ॥ ऊत । महेन्द्रहूसुत ॥ ईच् । कारीपगन्धीपति ॥ ङी । गार्गीपुत्र ॥ इयुव् । श्रीसद्मै. । भ्रूभङ्ग ॥ शार्दूलविक्रीडितं छन्दः ॥

॥ इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तौ चतुर्थः सर्गः सपूर्ण. ॥

---

१ ए सी 'तैस्तौ'. २ ए सी "नवे यो". ३ ए सी "रवेत". ४ बी सी "ह्वनः । वि" ५ ए सी "द । मन्त्री". ६ सी "द्वे हू".

# द्व्याश्रयमहाकाव्ये

## पञ्चमः सर्गः ।

शैलप्रस्थमहित्रातरेवतीमित्रभूभुजाम् ।
सैन्येभूत्तस्य पुंनाट्यनान्दीतूर्यं ध्वनद्धनुः ॥ १ ॥

१. तस्य मूलराजस्य सैन्ये । शिलानां प्रस्थमिव शिलप्रस्थं नाम पुरं तत्र भवः शैलप्रस्थः । मह्यीं त्रासीष्टासौ "तिकृतौ नाम्नि" [५.१.७१] इति के महित्रातो नाम । रेवती मित्रमस्य रेवतीमित्रो नाम । पदत्रयद्वन्द्वे ते ये भूभुजो मूलराजनृपास्तेषां ध्वनेज्याकर्षवशाच्छब्दायमानं धनुरभूत् । कीदृक् । नान्दी पूर्वरङ्गाङ्गं द्वादशतूर्याणां निर्घोषः । तानि चेमानि ।

भम्भा-मुकुन्द-मद्दल-कडम्ब-झल्लरि-हुडुक्क-कंसाला ।
काहल-तिलिमा सङ्खो वंसो पणवो य बारसमो ॥

तूर्यं तूरम् । नान्दी च तत्तूर्यं च नान्दीतूर्यम् । पुंसां पौरुषोपेतानां महावीराणां नाट्याय नृत्ताय नान्दीतूर्यमिव । महाभटा हि धनुर्ध्वनिश्रवणैर्नृत्यन्तीव ॥

मित्रे रेवतिमित्रस्य रणायोत्तस्थतुस्तदा ।
गङ्गाद्वारपती गङ्गमहगङ्गामहानुजौ ॥ २ ॥

२. तदा गङ्गमहगङ्गामहानुजौ गङ्गमहाख्यस्तल्लघुभ्राता च मूलराजनृपौ रणायोत्तस्थतुः । किंभूतौ । गङ्गाद्वारपती गङ्गाया द्वारं यत्र तद्गङ्गा-

---

१ बी °त्रस्य°. २ प सी °नर्ज्याक°. ३ बी °हुडक्क°. ४ प पणयो य वा सम्मे । सी पणेमा य वा सम्मे ।. ५ डी °वो दुवालस°. ६ प सी नादीतू°. ७ प सी नादीतू°. ८ सी °भ्राम.

विजयः सूचितः शुभनिमित्तत्वात् । कीदृशी । युद्धे[1] रणकर्मणि शिक्षिका-ज्ञातपण्डिता तथा यते निषादिनां पादकर्मणि ज्ञका तथौजो बलं तेजो[2] वा जदेव स्वं धनं यस्याः सात एव जय एव स्वं धनं यस्याः सात एवं[3] सुरेभस्यैरावणस्य स्वकाज्ञातज्योतिरिव तथानेकजन्तुसंहारित्वाद्रौद्राकीरत्वाच्च मृत्योर्यमस्य स्विका ॥

अजिकाचर्मपर्याणारिं हन्तुमजकामिव ।
तत्वरेश्वचमूः सेषुभस्त्रिका साम्बुभस्त्रका ॥ १० ॥

१०. अश्वचमूर्मूलराजीयाश्वसेनारिमजकामिव कुत्सितां छागीमिव हन्तुं तत्वरे रयेणाचलन् । कीदृशी । अज्ञाता छाग्यजिका तस्याश्चर्मणा पर्याणं पल्ययनं यस्याः सा । तथा सेषवो बाणभृता भस्त्रा-स्तूणा यस्यां सा । तथा सहाम्बुभस्त्रया जलदृतिना वर्तते या सा । तथाज्ञाता साम्बुभस्त्रा साम्बुभस्त्रका ॥

क्षत्रियिकाः क्षत्रियकापुत्रांश्चटकिकाश्चटौ ।
द्विषच्चटककाश्येनानूचुः सुनयिका युधि ॥ ११ ॥

११. क्षात्रियिका अज्ञातक्षात्रियस्त्रियो द्विषच्चटककाश्येनान् शत्रुकुत्सितचटकासु श्येनतुल्यान् क्षत्रियकापुत्रान्क्षत्रियान्युधि युद्धार्थमूचुः युद्धं क्रियतामित्यूचुरित्यर्थः । कीदृश्यः सत्यः । अज्ञाताः सुनयाः सुनयिकाः शोभननीतिज्ञा अत एव चटौ चाटुवचने विषये चटकिका अज्ञातचटकातुल्याश्चाटुकारिण्यः । एतेन मूलराजीयक्षत्रियस्त्रीणामपि युद्धविषय उत्साह उक्तः ॥

१ बी °रुका: ॥ २ ए सी युधि: ॥

१ सी युधेर°. २ ए सी तेजे वा. ३ बी °व च सु°. ४ ए सी °ज्ञारितिव. ५ ए सी °न्तुसहा°. ६ ए सी °कारित्वा°. ७ ए बी सी डी °मजिका°. ८ ए सी डी पल्य°. ९ डी °टका°. १० बी युद्धार्थ°. ११ बी °ज्ञात°.

निःशङ्किकैक्षिष्ट रणामात्यिका पत्तिसंहतिः।
द्विके युत्सूतिके तूणे द्वके श्रीसूतके भुजे ॥ १२ ॥

१२. पत्तिसंहतिर्मूलराजपदातिपङ्क्तिर्युत्सूतिके युधो युद्धस्य सूतिके अज्ञाते सूते जननीतुल्ये जनितयुद्धे इत्यर्थः। द्विके अमेयशरभृतत्वेनाज्ञाते द्वे तूणे तूणीरौ। तथा श्रीसूतके विजयलक्ष्मीजनन्यौ द्वके अमेयबलत्वेनाज्ञाते द्वे भुजे बाहू चैक्षिष्ट। यतो निःशङ्किकाज्ञाता निर्भया शूरेत्यर्थः। तथा रणामात्यिका युद्धविषयेऽज्ञाता मन्त्रिणी। यथा राजादिरमात्यिकाभिप्रायेण प्रवर्तत एवं रणकर्मप्रवीणत्वाद्यदभिप्रायेण रणं प्रवर्तत इत्यर्थः॥

एषिका पुत्रिका मृत्योरेषका नासिपुत्रका।
वृन्दारिका वृन्दारकापतिदेत्याददे भटैः॥ १३ ॥

१३. भटैराददे गृहीतासिपुत्रकैव। हेतुमाह। एषका प्रत्यक्षा। कृत्रिमः पुत्रः सूनुः "°पुत्राणु°" [७.१.२३] इति के पुत्रकः। स्त्री चेत्पुत्रका। असेः पुत्रकेवासिपुत्रका क्षुरिका। नासिपुत्रका न क्षुरिका। असिपुत्रकाशब्दः पुनरावर्त्यते। किं तर्हि। एषिका मृत्योर्यमस्य पुत्रिका। यतो वृन्दारकापतीन्देवीनाथान्देवानपि द्यति खण्डयति। यद्वा। वृन्दारकाभ्यो देवीभ्यः पतिं ददाति या। अनया हि हताः सन्तोऽप्सरोभिर्व्रियन्त इति। सा मृत्युहेतुरित्यर्थः। ईदृश्यपि कुत इत्याह। यतो वृन्दारिकातितैक्ष्ण्यचन्द्रिकाधिष्ठितत्वादिना प्रशस्येति॥

स्विका स्वका। जयस्विका ओजःस्वका। ज्ञिका ज्ञका। अजिका अजकाम्। सेतुमस्त्रिका सामुभस्त्रका॥ यकार। क्षत्रियिकाः क्षत्रियका॥ ककार।

---

१ प °त्रकाः। वृ°.

---

१ सी °रभूत°. २ प सी डी °पुत्रिकै°. ३ प बी सी डी °न्दारिका°. ४ प बी सी डी °न्दारिका°. ५ प सी °रोभि व्रिय°. ६ बी °चण्डिका. ७ प सी डी °यिका। क्ष°.

चटकिका: चटकका । इत्यत्र "स्वज्ञाज°"[2] [१०८] इत्यादिना वेकारः ॥ धातुत्यवर्जनं किम् । सुनयिका:[3] । निःशङ्किका । अमात्यिका ॥ द्विके द्वके । एषिका एषका । सूतिके सूतके । पुत्रिका[4] पुत्रका । वृन्दारिका वृन्दारका । इत्यत्र[5] "ष्वेप°" [१०९] इत्यादिना वेकारः ॥

द्विड्भ्यो हर्तुं श्रियं श्येनी वर्तकाभ्यो नु वार्तिकाम् ।
युद्धार्तिका जटिलिको[1]त्तस्थौ[2] मर्वीशबन्धुता ॥ १४ ॥

१४. युद्धार्तिका रणकृत्सती मर्वीशबन्धुता मूलराजसेवकमरुदेशाधिपबन्धुसमूहो द्विड्भ्यः सकाशाच्छ्रियं जयलक्ष्मीं हर्तुमुत्तस्थावुद्यताभूत् । कीदृशी । जटा[7]: संश्लिष्टकेशाः क्षेप्याः सन्त्यस्या जटिला[8] ज्ञाता जटिला जटिलिका लोमशा । स्वरूपविशेषणमिदम् । यथा श्येनी पत्रिणी वर्तकाभ्य[9]श्चटकाभ्यः सकाशाद्वार्तिकां चटकां हर्तुमुत्तिष्ठति ॥

नन्दका वः सकास्तु द्विक्षिपका[3] ध्रुवका यका ।
भुजेति नरिकामूचुर्मामिकासीत्यहंयवः ॥ १५ ॥

१५. नरानर्थाद्भटान्कायति वर्णयति नरिका तां वृद्धस्त्रियं[10] भट्टिनीं वा मामिकासि मदीया त्वामित्यहंयवोऽहंकृता मूलराजयोधा ऊचुस्तव योगक्षेमौ वयं करिष्याम इति बहु मेनिर इत्यर्थः । कथं नरान्कायतीत्याह । सकाज्ञाता सा वो युष्माकं भुजानन्दकारिजयौ[11]द्धाद्धिहेतुरस्त्वर्थाल्लोकानाम् । यकाज्ञाता या ध्रुवका दृढा सती द्विक्षु शत्रुषु क्षिपके-

१ ए सी डी जटलि°. २ ए सी °स्थौ मुर्वी°. ३ ए सी °का द्रुव°.

२ ए सी डी °किका । च°. २ ए सी डी स्वजाज°. ३ ए डी °यिका । नि°. सी यिका । अ°. ४ ए सी °का । वृन्दिका । वृ°. ५ बी स्तत्र. ६ ए सी °स्यात्वष°. ७ ए सी जटास°. ८ ए सी डी °ला जटिलि°. ९ ए सी डी वर्तिका°. १० बी वृद्धिस्त्रि°. ११ ए सी °या वृद्धि°.

वास्त्रभेद इव द्विट्टिपका। यद्वा। द्विडर्थं या क्षिपका तस्या ध्रुवकेवावपनभेद इव द्विट्टिपका ध्रुवकारिवधार्थं क्षिपकास्त्रभृदस्तीत्यर्थं इति॥

वर्तिकाम् वर्तकाभ्यः। इत्यत्र "वौ वर्तिका" [११०] इतीत्व वा निपात्यम्॥ वाविति किम्। युद्वर्तिका॥

जटिलिका[1]। इत्यत्र "अस्यायत°" [१११] इत्यादिनेकारः॥ अनिस्कीत्येव[2]। नन्दका। आशिष्यकन्॥ यत्तत्क्षिपकादिवर्जन[3] किम्। यका। सका। क्षिपका। ध्रुवका॥

नरिकाम्। मामिका[4]। इत्यत्र "नरिका मामिका"[5] [११२] इतीत्वं निपात्यम्॥

तारकातारिकास्त्रत्विड्वर्णकावर्णिका दिवः।
जयेष्टकाप्रतिज्ञानां कीर्तेः खार्यष्टिका न्वभात्॥ १६॥

१६. तारकातारिका नक्षत्रवद्दीप्रा मत्यस्त्रत्विर्ट्[6] शस्त्रप्रभाभात्। कीदृशी। दिवो व्योम्नः कर्मणो वर्णकावर्णिका। वर्णयति वर्णका तान्तवः पटविशेषस्तयेव कृत्वा वर्णिका श्येतवर्णीकारिकातिसान्द्रत्वाद्वर्णका पटयेव द्यां श्वेतयन्तीत्यर्थः। यद्वा। दिवः सबन्धित्वेन वर्णकानां पटभेदानां वर्णिकेव लेश इव। तथा जयेरिविजये सत्यष्टकायाः पितृदैवत्यकर्मणः प्रतिज्ञाभ्युपगमो येषां तेषां मूलराजसैनिकानां संबन्धिन्याः कीर्तेः सत्काष्टिकाष्टद्रोणप्रमाणा खारी नु। अस्त्रत्विट् सितत्वाद्बहुलत्वाच्चैवमाशङ्किता। अष्टद्रोणामपि खारीं केचिदिच्छन्ति॥

तारका। वर्णका। अष्टका। इत्येते "तारका°" [११३] इत्यादिना निपात्याः॥ अन्यत्र। तारिका। वर्णिका। अष्टिका खारी॥

अष्टमः पादः समर्थितः॥

---

१ ए सी डी जटलि°. २ ए बी सी °निस्कीत्ये°. ३ बी °न य° ४ सी °काम्। मा°. ५ बी मामकेति इति नि°. ६ बी °ट शास्त्र°. ७ सी °पा। तथा मू°.

मूर्धाभिषिक्ता ग्राहारेः प्रणिघ्नन्तोथ ताश्चमूः ।
आगुर[1]ध्युपलम्भाय जयस्येषुसुसिक्तखाः ॥ १७ ॥

१७. अथ मूलराजसैन्यस्य युद्धोपक्रमानन्तरं ग्राहारे[1]र्मूर्धाभिषिक्ता नृपा जयस्[2]याध्युपलम्भाय प्राप्त्यायागुः । किंभू[3]ताः सन्तः । इषुसुसि[4]क्तखाः शरैः सुष्ठु व्याप्[5]ताकाशा अत एव ता मूलराजीया युद्धायोद्यताश्चमूः प्रणिघ्नन्तः प्रहरन्तः ॥

शरौघैरतिसिश्वन्तः पर्यानिन्युर्दिशोन्धताम् ।
अति[2] स्थित्वोररीकृत्योरीकृत्यानि धनूंषि ते ॥ १८ ॥

१८. शरौघैः कृत्वा दिशोतिसिश्वन्तोतिव्याप्नुवन्तस्ते मूर्धाभिषिक्ता दिश एवान्धतां विलो[6]काभावाद्वि[7]च्छायत्वाच्चान्धा इवान्धास्तद्भावं पर्यानिन्युः प्रापयन् । किं कृत्वा । अति स्थित्वातिक्रमार्थोत्रातिः । शत्र्वतिक्रमेणाली[8]ढादिस्थानं कृत्वा तथोरीकृत्यान्यङ्गीकर्तुं योग्यानि धनूंष्युररीकृत्याङ्गीकृत्य ॥

दैत्यैः पटपटाकृत्य घुट्कृत्य स्वीकृतासिभिः ।
प्रसृत्य कारिकाकृत्य पत्तीन्सत्कृत्य दध्वने ॥ १९ ॥

१९. स्वीकृतासिभिर्गृहीतखड्गैर्दैत्यैर्दानवनृपैः कर्तृभिर्दध्वने सिंहनादः कृतः । किं कृत्वा । पटपटाकृत्य त्वरया पादन्यासैः पटत्पटच्छब्दं कृत्[9]वा घुट्कृत्य च शत्रुष्ववज्ञया घुडिति शब्दं कृत्वा च । तथा

१ सी °रध्याप°. २ ए सी °ति स्थत्वो°.

१ ए सी °रेमूर्धा°. २ सी °स्याध्याप°. ३ ए सी °भू । स°. ४ बी °सिक्ताखा°. ५ सी °प्तावराशा. ६ डी °लोकमा°. ७ बी °च्छायित्वा°. ८ सी °लीतादि°. ९ डी °त्वा × × च । त°.

प्रसृत्य रणाङ्गणे विस्तीर्य । तथा कारिकाकृत्य रणे स्थिति यत्नं क्रियां वा कृत्वेत्यर्थः । तथा पत्तीन्सत्कृत्याधुना युष्माकं हस्तैर्जेष्यत इति वचनैर्वस्त्रद्रव्यदानादिना च बहु मानयित्वा ॥

भग्नं कुन्तमसत्कृत्यालंकृत्यासिं च पाणिना ।
अदःकृत्यान्तर्हत्यैकः कणेहत्य पयः पपौ ॥ २० ॥

२०. एकः कश्चिद्दैत्यभटः कणेहत्य पयः पपौ । शत्रुवधेनातिसंतुष्टत्वाद्यावत्तृप्तस्तावज्जलं पीतवानित्यर्थः । किं कृत्वा । भग्नं शत्रुप्रहारेण कुंटितं कुन्तमसत्कृत्यानादृत्य । तथासिं च पाणिनालंकृत्य गाढं मुष्टिग्रहणेन भूषयित्वा गृहीत्वेत्यर्थः । तथादःकृत्यावश्यं मया शत्रुर्घात्य इति चिन्तयित्वा तथान्तर्हत्यारिं मध्ये हिंसित्वा च ॥

यशः पिबन्मनोहत्यारेः पुरस्कृत्य विक्रमम् ।
अस्तंनीयारिमच्छेत्याच्छोद्य कोप्यनमत्प्रभुम् ॥ २१ ॥

२१. कोपि दैत्यभटः प्रभुमनमत् । यतोरेर्यशो मनोहत्य पिबन्यावत्तृप्तस्तावत्पिबन्नत्यन्तं स्वीकुर्वन्नित्यर्थः । किं कृत्वा । विक्रमं शौर्यं पुरस्कृत्याग्रेकृत्वा । ततोच्छेत्य । अच्छेत्यभ्यर्थे दृढार्थे वा । अभिमुखं दृढं वा गत्वा । तथाच्छोद्याभिमुखं दृढं वोक्त्वा । एतेन च्छलपरिहार उक्तः । ततोरिमस्तंनीय क्षयं नीत्वा । जित्वा हि भटाः संतोषोत्पादनाय प्रभुं प्रणमन्ति ॥

मणिग्रन्तः । अभिषिक्ताः । उपलम्भाय । इत्यत्र "धातोः पूजार्थ°" [१]

---

१ डी °पौ × × × शत्रु°.

---

१ सी डी यत्नक्रि°. २ ए °र्थः था. ३ ए सी °तुष्टात्वा°. ४ बी °ण त्रुटि°. ५ डी कुण्ठित ६ सी °त्वान्याद्द°. ७ सी गाढमु°. ८ बी °त्नम्य°. ९ डी °ढ वो°. १० सी क्षयनी°.

इत्यादिना प्रादिरुपसर्गसञ्ज्ञः प्राक् धातोः ॥ एषूपसर्गसंज्ञायां णत्वषत्वनागमाः सिद्धाः ॥ पूजार्थस्वत्यादिवर्जनं किम् । पूजार्थौ स्वती । सुसिक्तं । अतिसिक्तन्तः । अत्रोपसर्गसंज्ञाया अभावे षत्वं न ॥ गतार्थाविधिपरी । अध्युपलम्भाय[1] । पर्यानिन्युः । अधिकभावः सर्वतोभावश्च प्रकरणादेः प्रतीयत इति गतार्थत्वम् ॥ अत्र प्राक्त्वनियमाभावः । ततश्चोपलम्भायाधिनिन्युः । परीत्यपि स्वयमभ्यूह्यम् । पर्यानिन्युरित्यत्रानुपसर्गत्वाण्णश्च न स्यात् ॥ अतिक्रमार्थोऽतिः[3] । अति स्थित्वा । अत्र षत्वं न स्यात् ॥

ऊर्यादि । ऊरीकृत्यानि । उररीकृत्य ॥ अनुकरण । खुटत्कृत्य ॥ च्व्यन्त । स्वीकृत ॥ डाजन्त । पटपटाकृत्य ॥ चकारादुपसर्ग । प्रसृत्य । इत्यत्र "ऊर्यादि°" [२] इत्यादिना गतिसंज्ञा धातोः प्राक्त्वं च ॥ गतित्वाद् "गतिः" [१.१.३६] इत्यव्ययत्वम् । "गतिकु°" [३.१.४२] इत्यादिना समासश्च फलम् । एवमग्रेपि ज्ञेयम् ॥

कारिकाकृत्य । इत्यत्र "कारिका°" [३] इत्यादिना गतिः प्राक्[5] ॥

अलंकृत्य । सत्कृत्य । असत्कृत्य । इत्यत्र "भूषादर°" [४] इत्यादिना गतिः[6] प्राक् ॥

अन्तर्हत्य । अदःकृत्य । इत्यत्र "अग्रह°" [५] इत्यादिना गतिः प्राक् ॥

कणेहत्य । मनोहत्य । इत्यत्र "कणे°" [६] इत्यादिना गतिः प्राक् ॥

पुरस्कृत्य । अस्तंनीय । इत्यत्र[7] "पुर°" [७] इत्यादिना गतिः प्राक् ॥

अच्छेत्य[8] । अच्छोद्य । इत्यत्र "गत्यर्थ°" [८] इत्यादिना[9] गतिः प्राक् ॥

---

१ सी अध्याप°. २ सी °णादे प्र°. ३ सी °र्थोतिः ।. ४ सी °णम् । घु°. ५ ए सी डी प्राक्तः । अ°. ६ ए सी डी गति प्रा°. ७ सी °त्य "पु°. ८ सी डी अच्छो°. ९ सी डी °नातिः.

वल्गन्कोप्यतिरोभूयाङ्गं तिरस्कृत्य वर्मणा ।
चर्मणांसं तिरःकृत्वा मध्येकृत्येभमप्यहन् ॥ २२ ॥

२२. कोपि दैत्यभटो वल्गन्नृत्यन्सन्निभमपि । आस्तां पत्त्यश्वादि । महाबलं गजमप्यहन् । किं कृत्वा । अतिरोभूयाभयेनानिलीय रणाङ्गणे प्रकटीभूयेत्यर्थः । तथा वर्मणाङ्गं तिरस्कृत्याच्छाद्य तथांसं स्कन्धं चर्मणा स्फरकेण तिरःकृत्वापिधाय तथा मध्येकृत्य चिन्तयित्वार्थात्प्रहारप्रस्तावम् ॥

मध्ये कृत्वा नृपांस्तर्जन्पदेकृत्यापरो हयम् ।
पदे कृत्वा निवचनेकृत्य वाचाजयत्परान् ॥ २३ ॥

२३. अपरोन्यदैत्यभटो नृपान्मध्ये कृत्वान्तर्भाव्य नृपैः सहेत्यर्थः । परान् शत्रुभटांस्तर्जन्निर्भर्त्सयन्सन् वाचैव न तु प्रहारेणाजयत् । किं कृत्वा । हयमश्वं पदेकृत्याहो अश्वरत्नमित्यादिकेस्त्याद्यन्तके पदे कृत्वा श्लाघित्वेत्यर्थः । ततः पदे कृत्वा पादयोः कृत्वा युद्धार्थं चालयित्वेत्यर्थः । ततः परान्वाचा साक्षेपगिरा निवर्चनेकृत्य संक्षोभोत्पादनेन निर्वचनान्कृत्वा ॥

कश्चिन्निवचने कृत्वेशाज्ञां मनसिकृत्य च ।
यशो मनसि कृत्वोरसिकृत्य जयमुत्थितः ॥ २४ ॥

२४. कश्चिद्दैत्यो रणायोत्थितः किं कृत्वा । निवचने कृत्वा मौनं कृत्वा । ईशाज्ञां युद्धविधिविषयं स्वाम्यादेशं मनसिकृत्य च चित्ते धृत्वा

---

१ सी °शाज्ञाम°.

---

१ ए सी डी °त्यश्व्यादि°. २ बी सी °भूय भ°. ३ सी °र्था प्रहा°. ४ बी °रोन्यो दै°. ५ एसी पदेः कृ°. ६ सी °चक्र°. ७ सी °क्षोभ्योत्पा°.

च । यशो रिपुजयोत्थकीर्तिं[1] मनसि कृत्वा च । जयमुरासिकृत्य च चित्ते कृत्वा च । चः सर्वत्र[2] क्त्वान्तेषु योज्य ॥

खकानुरसि कृत्वान्य उपाजेकृत्य सादिनः ।
पत्तीनुपाजकृत्वान्वाजे कृत्वेभानयुध्यत ॥ २५ ॥

२५. अन्यो दैत्यनृपोयुध्यत । किं कृत्वा । स्वकाञ्ज्ञातीनुरसि कृत्वा स्वहृदयाग्रे कृत्वा । तथा सादिन उपाजेकृत्य । पत्तीनुपाजे कृत्वा । इभानन्वाजे कृत्वा[3] । दुर्बलानां भग्नानां वाश्वारोहपदातिहस्तिनां[4] बलाधानं कृत्वा ॥

अन्वाजेकृत्य पुत्रं स्वे पदे कोप्यधिकृत्य च ।
सैन्ये स्वमधि कृत्वाभात्साक्षात्कृत्यास्त्रदेवताः ॥ २६ ॥

१६. कोपि दैत्यनृपोभाद्दिदीपे । किं कृत्वा । पुत्रमन्वाजेकृत्य दुर्बलस्य भग्नस्य वा बलाधानं कृत्वा । तथा[5] स्व आत्मीये पदे राज्येधिकृत्य च स्वामिनं कृत्वा च । तथा सैन्ये स्वमात्मानमधि कृत्वा स्वामीकृत्य । तथास्त्रदेवताः शस्त्राधिष्ठायिका दुर्गाद्याः साक्षात्कृत्य च पूजाबलिमन्त्रस्मरणादिना प्रत्यक्षीकृत्य ॥

साक्षात्कृत्वासिकृत्यां स्वममिथ्याकृत्य दोर्बलम् ।
मिथ्या कृत्वा खलान्कीर्तिं हस्तेकृत्यापरोनदत् ॥ २७ ॥

२७. अपरो दैत्योनदज्जगर्ज । किं कृत्वा । असिरेवारिमृत्युहेतुत्वात्कृत्या मारिदेवता तां साक्षात्कृत्वा प्रत्यक्षीकृत्य । तथा स्वमात्मीयं

---

१ ए बी सी डी °कृत्येभा°.

---

१ ए सी °कीर्ति म°. २ बी सर्वः क्त्वा°. ३ ए बी सी डी °कृत्व । दु°. ४ ए सी डी °रोपप°. ५ ए सी °था स्वे आ°.

दोर्बलममिथ्याकृत्य शत्रुवधेन सत्यीकृत्यात एव खलान् गेहेशूरेणामुना रणे न किंचिन्निष्पाद्यत इत्यसत्यभाषिणः पिशुनान्मिथ्या कृत्वा । तथा कीर्ति जयोत्थं यशो हस्तेकृत्य भार्यां कृत्वा ॥

पाणौकृत्य रिपोर्लक्ष्मीं प्राध्वंकृत्यापरः परम् ।
स्वाम्याज्ञां जीविकाकृत्योपनिषत्कृत्य चाययौ ॥ २८ ॥

२८. अपरो दैत्य आययौ स्वामिसमीपमागतः । किं कृत्वा । परं शत्रुं प्राध्वंकृत्य बन्धनेनानुकूलं कृत्वा बद्ध्वा वा । तथा रिपोर्लक्ष्मीं हस्त्यश्वादिकां पाणौकृत्य भार्यां कृत्वा गृहीत्वेत्यर्थः । तथा स्वाम्याज्ञां जीविकाकृत्य जीविकामिव कृत्वा यथा जीवनोपायः सर्वादरेण क्रियते तथा कृत्वेत्यर्थः । उपनिषत्कृत्य चोपनिषदमिव कृत्वा च । यथा रहस्यं सर्वादरेण पाल्यते तथा पालयित्वेत्यर्थः ॥

अतिरोभूय । इत्यत्र "तिरोन्तर्धौ" [९] इति गतिः प्राक् ॥

तिरस्कृत्य तिरः कृत्वा । इत्यत्र "कृगो न वा" [१०] इति वा गतिः प्राक् ॥

मध्येकृत्य मध्ये कृत्वा । पदेकृत्य पदे कृत्वा । निवचनेकृत्य निवचने कृत्वा । मनसिकृत्य मनसि कृत्वा । उरसिकृत्य उरसि कृत्वा । इत्यत्र "मध्ये पदे°" [११] इत्यादिना वा गतिः प्राक् ॥

उपाजेकृत्य उपाजे कृत्वा । अन्वाजेकृत्य अन्वाजे कृत्वा । इत्यत्र "उपाजेऽन्वाजे" [१२] इति वा गतिः प्राक् ॥

अधिकृत्य अधि कृत्वा । इत्यत्र "स्वाम्येधि." [१३] इति वा गतिः प्राक् ॥

साक्षात्कृत्य साक्षात्कृत्वा । अमिथ्याकृत्य मिथ्या कृत्वा । इत्यत्र "साक्षाद्°" [१४] इत्यादिना वा गतिः प्राक् ॥

---

१ बी र्बल म°. २ डी °कृत्या°. ३ बी डी °न्निष्पद्य°. ४ ए सी °णः. पशु°. डी णः पशुमान्मि°. ५ ए सी डी° क्षादिना.

हस्तेकृत्य । पाणौकृत्य । इत्यत्र "नित्यं°" [१५] इत्यादिना गतिः प्राक् ॥

प्राध्वंकृत्य । इत्यत्र "प्राध्वं बन्धे" [१६] इति गतिः प्राक् ॥

जीविकाकृत्य । उपनिषत्कृत्य । इत्यत्र "जीविका°" [१७] इत्यादिना गतिः प्राक् ॥

समासे नाम नाम्नेव शस्त्रं शस्त्रेण युध्यथ ।
ऐकार्थ्येयोजि विस्पष्टपटुभिर्गूर्जरैर्भटैः ॥ २९ ॥

२. अथैवं दैत्यैर्युद्धस्य प्रारम्भानन्तरं युधि रणे समासे मिथः संबन्धे सत्यैकार्थ्ये । निमित्तसप्तम्यत्र । विजयलक्षणैककार्येण हेतुना विस्पष्टपटुभिः प्रकटं शस्त्रविद्यानिपुणैर्गूर्जरैर्भटैः शस्त्रं खड्गादि शस्त्रेणारिप्रहरणेन सहायोजि मीलितम् । यथैकार्थ्ये सामानाधिकरण्ये सति यः समास ऐकपद्यं तस्मिन्नाम नाम्ना सह विस्पष्टपटुभिः प्रकटं शब्दविद्याचतुरैर्योज्यते ॥

समासे नाम नाम्नैकार्थ्ये इत्युपमया "नाम नाम्ना°" [१८] इत्यादि समाससंज्ञासूत्रं ज्ञापितम् । लक्षणं चेदमधिकारश्च । तेन बहुव्रीह्यादिविशेषसंज्ञाभावे यत्रैकार्थता दृश्यते तत्रानेनैव समाससंज्ञा स्यात् । यथा विस्पष्टपटुभिरित्यत्र गुणविशेषणस्य गुणवचनेन समासः ॥

त्रिदशारिषु ते द्वित्रानासन्नत्रानदूरपान् ।
अधिकाष्टानध्यर्धषान्युगपद्दृष्टषुः शरान् ॥ ३० ॥

३०. ते गूर्जरभटास्त्रिदशारिषु त्रिर्दश त्रिदशा देवाः "प्रमाणीसंख्याड्डः" [७.३.१२८.] इति डः । त्रिंशदेता देवतास्त्रयस्त्रिंशदेता देवतास्त्रि-

१ सी हतत्र. २ बी °कृत्त । इ°. ३ ए सी °कात्र उ°. ४ बी °त्कृत । इ°, ५ ए सी °त्यैक्यार्थे । नि°. ६ डी यत्सप्त°. ७ सी डी °मासे पे°. ८ ए सी डी °सस्त्रं सं°. ९ बी विशिष्ट°. १० ए सी त्रिदश त्रिर्दशा.

शदक्षरा विराडिति श्रुतेः । तेषामरिषु दैत्येषु शरान्युगपदेककालं वबृषुर्मुमुचुः । कतिसंख्यान् । आसन्नास्त्रयो येषां तांश्चतुरः । तथादूरे षड् येषां तान्पञ्च सप्त वा । तथाधिका अष्टौ येभ्यो येषु वा तान्दशादीन् । अधिकत्वं चाष्टानामेकाद्यपेक्षम् । अवयवेन विग्रहः । समुदायः समासार्थः । तथाधिकमर्धं येषु तेऽध्यर्धाः षड् येषां तानध्यर्धषान्नव च ॥

अर्धपञ्चमविंशान्केप्यश्वानुपदशा अपि ।
आरूढसुभटाञ्जघ्नुर्द्विट्सैन्ये मत्तबह्विभे ॥ २१ ॥

२१. मत्तबह्विभे मदोत्कटानेकहस्तिके द्विट्सैन्ये वर्तमानान्केपि गूर्जरभटा अश्वाञ्जघ्नुः । कीदृशान् । आरूढाः सुभटा यांस्तान् । तथार्धं पञ्चमी विंशतिर्यासु ता अर्धपञ्चमा विंशतयो येषां तान्नवतिमित्यर्थः । कीदृशाः । उप समीपे दश येषां तेपि नवाप्येकादशापि वा स्तोका अपीत्यर्थः ॥

उच्चैर्मुखानुष्ट्रमुखान्वृषस्कन्धान्सनन्दनान् ।
सौजा दक्षिणपूर्वास्थोदहत्कोप्यग्निवत्परान् ॥ २२ ॥

२२. दक्षिणपूर्वास्थो दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वाग्नेयी दिक्तत्रस्थः सौजा विद्यमानप्रतापः कोपि गूर्जरभटोग्निवद्वह्निदेवतेव परानदहत्तीव्रप्रहारैः संतापितवान् । किंभूतान् । उच्चैःस्थाने मुखं येषां तान् । तथोष्ट्रमुखानुष्ट्रमुखवद्बीभत्सवक्त्रान् । तथा वृषस्कन्धान्वृषभस्कन्धवत्पीनस्कन्धान्बलिष्ठानित्यर्थः । तथा सनन्दनान्पुत्रोपेतान् । अग्निरपि दक्षिणपूर्वदिगधिपत्वात्तत्रस्थः सतेजस्कश्च स्यात् ॥

---

१ सी मन्यव°.

---

१ सी °ध्न उ°. २ सी °बरमीन°.

त्रिदश । द्वित्रान् । इत्यत्र "सुज्वार्थे°"[1] [१९] इत्यादिना बहुव्रीहिः ॥

आसन्नत्रान् । अदूरपान् । अधिकाष्टान् । अध्यर्धषान् । अर्धपञ्चमविंशान् । इत्यत्र "आसन्नादूर°" [२०] इत्यादिना बहुव्रीहिः ॥

उपदशाः । इत्यत्र "अव्ययम्" [२१] इति बहुव्रीहिः ॥

आरूढसुभटान् ॥ अनेकं च । मस्तबहिर्भे ॥ अव्ययम् । उच्चैर्मुखान् । इत्यत्र "एकार्थं च°" [२२] इत्यादिना बहुव्रीहिः ॥

उष्ट्रमुखान् । वृषस्कन्धान् । इत्येतौ "उष्ट्रमुखादयः" [२३] इति बहुकं निपात्यौ ॥

तुल्ययोगे । सनन्दनान् ॥ विद्यमानार्थे । सौजाः । इत्यत्र "सहस्तेन" [२४] इति बहुव्रीहिः ॥

दक्षिणपूर्वा । इत्यत्र "दिशो रूढ्या°" [२५] इत्यादिना बहुव्रीहिः ॥

केषुचिद्विदधानेषु कुन्ताकुन्ति[1] कचाकचि ।
भूमिर्लोहितगङ्गं नु रक्तैः पञ्चनदं न्वभूत् ॥ ३३ ॥

३३. केषुचिद्भटेषु कुन्ताकुन्ति कुन्तैश्च कुन्तैश्च मिथः प्रहृत्य[3] कृतं युद्धं केषुचिच्च कचाकचि कचेषु[4] च कचेषु[5] च मिथो गृहीत्वा कृतं युद्धं विदधानेषु सत्सु भूमी रणाङ्गणमभूत् । कीदृशम् । रक्तैर्लोहितैः कृत्वा[6] लौहित्याल्लोहितगङ्गं नु लोहिता गङ्गा यत्र देशे स इव । तथा रक्तातिबाहुल्यात्पञ्चनदं नु पञ्चानां नदीनां समाहार इव ॥

द्विगोदावरि मेनेन्योथ त्रिगोदावरं रणम् ।
एकमुनि धनुर्वेदं द्विमुन्यस्य च दर्शयन् ॥ ३४ ॥

३४. अन्यो गूर्जरो रणं द्विगोदावरि द्वयोर्गोदावर्योः[7] समाहारमेवं

१ ए सी डी °कुतिक°.

१ सी °त्रीहे । आ°. २ वीरूढ्योत्ता°. ३ बी °त्यकुन्तायु°. ४ बी °पु क°. ५ बी °पु मि°. ६ बी °त्वाल्लौहि°. ७ ए डी सी °र्योः स°.

त्रिगोदावरं च मेने । प्राणत्यागेन स्वर्गफलत्वाद्विगोदावरित्रिगोदावर- तीर्थयोस्तुल्यं मेन इत्यर्थः । लोके हि द्विगोदावरि त्रिगोदावरं च तत्र प्राणत्यागिनां स्वर्गहेतू महातीर्थे प्रसिद्धे । कीदृक्सन् । एको मुनिर्वंश्य आद्यः कारणपुरुषोस्य तदेकमुनि धनुर्वेदं धनुर्विद्याशास्त्रं दर्शयन्सद- भ्यस्तधनुर्विद्यत्वेनालीढादिस्थानानि सम्यक्सत्यापयन् । तथास्य धनु- र्वेदस्य द्विमुनि च द्वौ मुनी वंश्यौ च[3] दर्शयन् द्विमुनिकृतधनुर्वेदोक्त- धनुःकलानां सम्यक्सत्यापनेन द्वौ मुनी साक्षादिव दर्शयन् ॥

सप्तकाशि स्वराज्यस्य गङ्गापारपतिः स्मरन् ।
पारेरिचमु मध्येश्वमिभमध्येर्दयन्ययौ ॥ ३५ ॥

३५. गङ्गापारपतिर्गङ्गातीराधिपो मूलराजसेवकः काशिदेशराजः पारेरिचमु शत्रुसेनापारं ययौ । कीदृक्सन् । स्वराज्यस्य सप्तकाशि स- प्तकाशीन्काशिदेशाधिपान्स्ववंश्यान्स्मरन् सप्तापि स्वानि कुलानि रण- पारगतादिगुणोपेतानि परिभावयन्नित्यर्थः । अत एव मध्येश्वं तुरङ्ग- चमूमध्य इभमध्ये हस्तिचमूमध्येर्दयन्नरिचमूं घ्नन् ॥

कोप्यन्तर्धनुराज्यन्तः कराग्रेग्रेधिपं शरान् ।
यावद्रिपु परिक्लीबमपार्तं चाजयं न्यधात् ॥ ३६ ॥

३६. कोपि गूर्जर आज्यन्ता रणमध्येग्रेधिपं स्वस्वाम्यग्रे वर्तमा- नोन्तर्धनुश्चापमध्यभागे कराग्र आकर्णान्तमाकृष्टत्वाद्धस्तयोरग्रभागे च वर्तमानान् शरान्न्यधाच्छत्रुष्वक्षिपत् । कथम् । परिक्लीबं निःसत्वा-

१ ए सी °कासि स°. २ ए सी °पति स्म°.

१ बी °वरीती°. २ ए सी °शास्त्रद°. ३ बी च तु द°. ४ ए सी °मु सित्रु°. ५ डी °मध्ये इ°.

न्वर्जयित्वापार्तं चं प्रहारादिना पीडितांश्च वर्जयित्वा । तथा यावद्रिपु यावन्तो रिपवस्तावंत इत्यर्थः । तथा आजयं विजयं मर्यादीकृत्य ॥

सेना प्रागर्बुदं राज्ञां बहिर्व्यूहं[1] प्रतिद्विपम् ।
अभ्यश्वं च प्रसृत्यानुजम्बुमालि स्थिता बभौ ॥ ३७ ॥

३७. प्रागर्बुदमर्बुदाद्रेः प्राक्पूर्वदिग्वासिनां राज्ञां मूलराजनृपाणां सेना बभौ । कीदृक्सती । बहिर्व्यूहं मूलराजीयाच्चक्रगरुडादेर्व्यूहाद्बहिर्भूता । तथा प्रतिद्विपमभ्यश्वं च प्रसृत्य रिपूणां द्विपानश्वांश्च लक्ष्यीकृत्याभिमुखं विस्तीर्यानुजम्बुमालि स्थितातिबहुत्वाज्जम्बूमाल्या लक्ष्णभूताया आयामेनावस्थिता । अर्बुदसेनातिशूरत्वाव्द्यूहान्निर्गत्य युद्धार्थं शत्रूनभि प्रसृतेत्यर्थः ॥

कचाकचि । कुन्ताकुन्ति । इत्यत्र "तत्रादाय°" [२६] इत्यादिनाव्ययीभावः ॥

लोहितगङ्गम् । इत्यत्र "नदीभिर्नाम्नि" [२७] इत्यव्ययीभावः ॥

पञ्चनदम् । त्रिगोदावरम् । इत्यत्र "संख्या°" [२८] इत्यादिनाव्ययीभावः ॥ अन्ये तु पूर्वपदप्राधान्येऽव्ययीभावो गोदावरीणां त्रित्वं त्रिगोदावरम् । समाहारे तु द्विगुरेवेत्याहुः । द्वयोर्गोदावर्योः समाहारो द्विगोदावरि ॥

द्विमुन्यस्य । सप्तकाशि स्वराज्यस्य । इत्यत्र "वंश्येन°" [२९] इत्यादिनाव्ययीभावः ॥ यदा तु विद्यातद्वतामभेदविवक्षा तदैकमुनि धनुर्वेदमित्यादि सामानाधिकरण्यं स्यात् ॥

---

१ सी °हं मूलराजी°.

---

१ ए सी च प्राहा°. २ ए सी डी °वन्त इ°. ३ ए सी डी लक्षीकृ°. ४ सी डी °क्षणाभू°.

पारेरिधमु गङ्गापार । मध्येईवम् इभमध्ये । अग्रेधिपम् कराग्रे । अन्तर्धेनुः[2] आज्यन्तः । इत्यत्र "पारे॰" [३०] इत्यादिना वाव्ययीभावः ॥

यावद्दिपु । इत्यत्र "यावदियत्त्वे" [३१] इत्यव्ययीभावः ॥

परिक्लीबम् । अपार्तम् । आजयम् । बहिर्व्यूहम् । प्रागर्बुदम् । इत्यत्र "पर्य-[3] पाङ्॰" [३२] इत्यादिनाव्ययीभावः ॥

अभ्यश्वम् । प्रतिद्विपं प्रसृत्य । इत्यत्र "लक्षणेन॰" [३३] इत्यादिना-व्ययीभावः ॥

अनुजम्बुमालि स्थिता । इत्यत्र "दैर्घ्येनुः" [३४] इत्यव्ययीभावः ॥

अनुस्वाम्यनु नद्यास्ते तिष्ठद्गुपि वहद्गवि ।
युध्यमाना अमन्यन्त[1] धारयन्तः श्रमप्रति ॥ ३८ ॥

३८. युध्यमानाः शत्रुषु प्रहरन्तस्तेर्बुदात्प्राच्या नृपास्तिष्ठन्ति गावो यस्मिन्काले दोहाय वत्सेभ्यो निवासाय जलपानार्थं वा तत्ति-ष्ठद्गुपि संध्याकालमप्यमन्यन्ताज्ञासिषुः । कीदृशम्[4] । वहन्ति गावो यत्र चरणाय जलपानाय वा तद्वहद्गवि[5] प्रभातमिव संजातघटिकाद्वयप्रमाण-दिनमिव । यतः श्रमप्रति खेदाल्पत्वं धारयन्तः । कुत एतदित्याह । यतोनुस्वामि[6] स्वामिनः समीपे नद्या जम्बूमाल्या अनु समीपे च वर्त-मानाः । समीपस्थे स्वामिनि श्लाघादि कुर्वाणे नादेयशीतलजललवो-न्मिश्रवायुसंपर्के च श्रमो ह्यल्पीयान्स्यात् । एतेनैषामत्यन्तं[7] युद्धर-सिकत्वमुक्तम् ॥

अनुस्वामि । अत्र "समीपे" [३५] इत्यव्ययीभावः ॥ अनोरव्ययत्वाद्

---

१ ए सी ॰न्यन्त धा॰.

---

१ सी ॰श्वम् अ॰. २ बी ॰धेनु आ॰. ३ ए सी "पर्युपा॰. ४ सी ॰दृशे । व॰. ५ ए सी ॰द्गविव. ६ सी ॰मिनः स॰. ७ सी ॰तेनेषा॰.

"विभक्तिसमीप°" [२९] इत्यादिनैव समासे सिद्धे विकल्पार्थं वचनम् । तेन वाक्यमपि । अनु नद्याः[1] ॥

तिष्ठद्गु । वहद्गु । इत्यत्र "तिष्ठद्गु°"[2] [२६] इत्यादिनाव्ययीभावः ॥

अमप्रति । इत्यत्र "नित्यं°" [२७] इत्यादिनाव्ययीभावः ॥

शलाकापर्यक्षपरि[3] द्विपरीवाजयैः परैः ।
तेध्याज्युपनदि क्षुण्णैः सुभिक्षं रक्षसां व्यधुः ॥ ३९ ॥

३९. परैः शत्रुभिः कृत्वा तेर्बुदात्प्राच्या नृपा रक्षसां सुभिक्षं भिक्षाणां समृद्धिं व्यधुरनेके शत्रवो हता इत्यर्थः । किंभूतैः । अजयैर्निःप(ष्प)राक्रमित्वाज्जयरहितैः । शलाकापर्यक्षपरि द्विपरीवेति । एकया शलाकया द्विधाकृतमल्लकवंशादिमय्या तथैकेनाक्षेण पाशकेन तथा द्वाभ्यामक्षाभ्यां शलाकाभ्यां वा न तथा वृत्तं यथा पूर्वजय[4] इति विग्रहः । सर्वत्र सप्तम्या लुक् । इवशब्दः प्रत्येकं संबध्यते । पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा स्यात् । तत्र यदा सर्वे उत्ताना अवाञ्चो वा पतन्ति तदा पातयितुर्जयोन्यथा[5] पाते[6] पराजयस्ततोयमर्थः । यथा पञ्चिकाद्यूत एकया शलाकयैकेनाक्षेण वा द्वाभ्यां शलाकाभ्यामक्षाभ्यां वान्यथापाते द्यूतकारा अजया जयरहिताः स्युः । अत एवाध्याजि[7] रण उपनदि जम्बुमालीसमीपे क्षुण्णैर्विदारितैः ॥

दुःसुराष्ट्रं निःसुराष्ट्रमतिम्लेच्छं विधायिषु ।
तेष्वत्यस्त्रं ब्रुवन्तोनुद्विपं जग्मुर्द्विषद्भटाः ॥ ४० ॥

४०. अनुद्विपं हस्तिनां पश्चाद् द्विषद्भटा दैत्या जग्मुः । प्राणरक्षार्थं

---

१ बी नद्या ॥. २ ए सी डी °ष्ठगु°" इ°. ३ ए सी °र्यक्षिप°. ४ बी पूर्वं ज°. ५ सी °भाते. ६ ए सी °ते जप°. ७ ए सी °ध्यारिजि.

निलीना इत्यर्थः । किंभूताः सन्तः । अत्यस्त्रं शस्त्राणां ग्रहणे प्रस्तावाभावं ब्रुवन्तः । केषु सत्सु । तेष्वर्बुदात्प्राच्येषु नृपेषु । कीदृक्षु । दुःसुराष्ट्रं[1] सुराष्ट्राणां सुराष्ट्रदेशस्थभटानां छत्रपातनादिना ऋद्धेर्विगमं निःसुराष्ट्रं[2] सुराष्ट्रभटानामभावमतिम्लेच्छं म्लेच्छानां[3] भिल्लादीनामतीतत्वं सतामेवातिक्रमं च विधायिषु ॥

नानुज्येष्ठमयुध्यन्तेतिमूलराजमिच्छवः ।
सचक्रं धेहि[1] सकुलं कुर्वित्यन्योन्यवादिनः ॥ ४१ ॥

४१. अर्बुदात्प्राच्या नृपा अनुज्येष्ठं ज्येष्ठानुक्रमेण नायुध्यन्त क्रमं मुक्त्वाहमहमिकया युयुधिर इत्यर्थः । कीदृशाः सन्तः । इतिमूलराजं मूलराजशब्दस्य लोके जयोत्थां ख्यातिमिच्छवोत एव सचक्रं धेहि सकुलं कुर्वित्यन्योन्यवादिनश्चक्रास्त्रेण सहैककालं खङ्गादिकं धारय चक्राणि वा युगपद्धारय । तथोत्कृष्टयुद्धेन कुलस्य सदृशं कुर्विति मिथो भाषिणः ॥

सकीर्ति सार्णवं भर्तुर्भूयादित्यर्बुदेश्वरः ।
सनामारीनहन्प्रत्यर्यनुरूपं[2] कृतायुधः ॥ ४२ ॥

४२. भर्तुर्मूलराजस्य सकीर्ति कीर्तेः[4] संपत्सार्णवमर्णवसाकल्येन सकलेष्वर्णवेष्वित्यर्थः । यद्वार्णवपर्यन्तं यथा स्यादेवं भूयादिति हेतोरर्बुदेश्वरोरीनहन् । कीदृक्सन् । प्रत्यर्यरिमरि प्रत्यनुरूपं रूपस्य[6] स्वाकृतेर्योग्यं यथा स्यादेवं कृतायुधो व्यापारितास्त्रः । कथमहन् । सनाम

---

१ सी °हि सकु°. २ सी °रूपक°.

---

१ डी °राष्ट्रा°. २ ए सी नि.पुरा°. ३ ए सी °च्छाभि°. ४ सी कीर्तिः सं°. ५ बी °वसा°. ६ सी °पस्या स्वा°.

नाम्ना सह यशःपर्यन्तं नामधेयपर्यन्तं वा यशःसाकल्येन नामधेयसाकल्येन वा यशो नामधेयं वा यथा पश्चान्न स्थितमेवमित्यर्थः ॥

प्रहरन्स यथाधर्मं सद्रोणं धनुषा वहन् ।
त्रायमाणो यथात्रस्तं तथा रेजे यथार्जुनः[1] ॥ ४३ ॥

४३. यथार्जुनो रेजे तथा सोर्बुदेश्वरो रेजे यतो यथाधर्मं क्षात्रधर्मस्यानतिक्रमेण प्रहरंस्तथा धनुषा धनुःकर्मणा कृत्वा सद्रोणं द्रोणाचार्यसादृश्यं वहंस्तथा यथात्रस्तं येये भीतास्तांस्त्रायमाणो रक्षन् ॥

द्विपरि । अक्षपरि । शलाकापरि । इत्यत्र "संख्याक्ष°" [३८] इत्यादिनाव्ययीभावः ॥

अध्याजि[1] । उपनदि । सुभिक्षम् । दुःसुराष्ट्रम् । निःसुराष्ट्रम् । अतिम्लेच्छम् । अत्यभ्रम् । अनुद्विपम् । अनुज्येष्ठम् । इतिमूलराजम् । सचक्रम् । सकुलम् । सकीर्ति ॥ साकल्येन्ते च । सार्णवम् । सनाम । इत्यत्र "विभक्ति°" [३९] इत्यादिनाव्ययीभावः ॥

अनुरूपम् । प्रत्यरि । यथाधर्मम् । सद्रोणम् । इत्यत्र "योग्यता°" [४०] इत्यादिनाव्ययीभावः ॥

यथात्रस्तम् । इत्यत्र "यथाथा" [४१] इत्यव्ययीभावः ॥ अथा इति किम् । यथार्जुनः ॥

स्वीकृत्याकुज्यकं धन्वोत्क्षेप्तुं कुतृणवत्परान् ।
सोदुष्कृतजयश्चक्रे सुराजा शरदुर्दिनम् ॥ ४४ ॥

४४. सुराजा न्यायित्वात्पूजितो नृपोर्बुदेश्वरः परान्कुतृणवदसार-

१ सी °र्जुनो रे°.

१ प सी अज्याजि ।.

तृणानीवोत्क्षेप्[1]मुत्पाटयितुं शरदुर्दिनं शरैः कृत्वा प्रकाशाभावेन निन्दितं दिवसं चक्रे । किं कृत्वा । असती कुत्सिता ज्या यत्र तदकुज्यकं श्रेष्ठप्रत्यञ्चं धन्व धनुः स्वीकृत्य । य[2]तः कीदृक् । अदुष्कृतो महाशूरत्वादकृच्छ्रेण विहितो जयोनेकारिपराभवो येन सः । अनेकरणेषु लब्धजयपताक इत्यर्थः ॥

स्वीकृत्य । कुतृणवत् । इत्यत्र "गतिकु°" [४२] इत्यादिना तत्पुरुषः ॥ अन्य इति किम् । अकुज्यकम् । अत्र बहुव्रीहित्वात्कच् स्यात् ॥

दुर्दिनम् । दुष्कृत । इत्यत्र "दुर्°" [४३] इत्यादिना तत्पुरुषः ॥

सुराजा । इत्यत्र "सुः पूजायाम्" [४४] इति तत्पुरुषः ॥

श्रीमालस्यातिराजातिसिश्चन्नाताम्रदृक् शरैः ।
विपक्षप्रभटान्व्याप्नोदतिवेल इवार्णवः ॥ ४५ ॥

४५. श्रीमालस्य भिल्लमालापरनाम्नः पुरस्यातिराजा न्यायपालनेन पूजितोधिपोर्बुदेश्वरो विरुद्धाः पक्षा विप[3]क्षाः शत्रवो ये प्रभ[4]टाः प्रकृष्टा भटास्तान् शरैर्व्याप्नोदाच्छादयत् । कीदृक्सन् । आताम्रदृक्कोपेनार[5]क्ताक्षोत एव श[6]रैरतिसिञ्चन् रणाङ्गणमतिक्रमेण व्याप्नुवन्नत एव चोत्प्रेक्ष्यते । अतिवेलो निर्मर्यादोर्णव इव ॥

प्रतिलोमान्यवेभानि संवर्माणि बलानि सः ।
उद्रणः परियुद्धानि निर्युद्धान्यपभीर्व्य[1]धात् ॥ ४६ ॥

४६. सोर्बुदेश्वरोपभीरपगतो भियोत एवोद्रणो रणायोद्युक्तः सन्व-

१ ए सी डी °भीन्यधा°.

१ सी °नीवाक्षेतु°. २ ए सी डी यतो की°. ३ ए सी °पक्षाश°. ४ बी °भटाप्र°. ५ डी °रक्षाक्षो°. ६ बी °रैरिति.

लानि शत्रुसैन्यानि परियुद्धानि युद्धाय[1] परिग्लानानि[2] निर्युद्धानि युद्धान्निष्क्रान्तानि च व्यधात् । कीदृंशि सन्ति । प्रतिलोमानि[3] लोमानि प्रतिगतानि प्रतिकूलं गतानीति व्युत्पत्तिमात्रं लक्षणया द्विषन्ति । तथावेभानीभैरवक्रुष्टानि गजबृंहितोपेतानीत्यर्थः । तथा संवर्माणि वर्मणा संनद्धानि[4] ॥

अतिक्रमे । अतिसिञ्चन् ॥ पूजायाम् । अतिराजा । इत्यत्र "अतिर्°" [४५] इत्यादिना तत्पुरुषः[5] ॥

आतान्त्र । इत्यत्र "आङल्पे" [४६] इति तत्पुरुषः ॥

प्रादयः । प्रभटान् । विपक्ष ॥ अत्यादयः[6] । अतिवेलः । प्रतिलोमानि ॥ अवादयः । अवेभानि । संवर्माणि ॥ पर्यादयः । परियुद्धानि । उद्व्रणः ॥ निरादयः । निर्युद्धानि । अपभीः । इत्यत्र "प्रात्यव°" [४७] इत्यादिना तत्पुरुषः ॥

पुनःप्रवृद्धरोमाञ्चपुनरुत्स्यूतकञ्चुकः ।
परमारः सोसिघातं शल्याघातं द्विषोक्षिपत् ॥ ४७ ॥

४७. परान् शत्रून्मारयति "कर्मणोण्" [५.१.७२] इत्यणि परमारः । परमारः[7] क्षत्रियविशेषजातिः । सोर्बुदेश्वरोसिघातं खड्गेन हत्वा शल्याघातं क्षुरिकया हत्वा च द्विषोक्षिपन्निराकरोत् । कीदृक्सन् । पुनः[8] प्रवृद्धा वीररसोत्कर्षाद्भूयः स्फीतीभूता ये रोमाञ्चास्तैः पुनरुत्स्यूतो भूयस्त्रुटितः कञ्चुको वर्म यस्य स तथा ॥

पुनःप्रवृद्ध[9] । पुनरुत्स्यूत । इत्यत्र "अव्ययम्°" [४८] इत्यादिना तत्पुरुषः ॥

परमारः । इत्यत्र "ङस्युक्तं कृता" [४९] इति तत्पुरुषः ॥

---

१ ए सी युधाय. २ ए सी °निर्यु°. डी °नि यु°. ३ सी °नि प्रति प्र°. ४ वी सवद्धा°. ५ ए सी डी °ष. ॥ अता°. ६ ए सी °दय । अ°. ७ ए वी सी °मारक्ष°. ८ सी पुप्र°. ९ वी °वृद्धः । पु°.

असिघातम् । शल्याघातम् । इत्यत्र "तृतीयोक्तं वा" [५०] इति वा तत्पुरुषः ॥

अहितानकृतासूर्यपश्यान्स शरवृष्टिभिः ।
अपुनर्गेयवाक् क्रुद्धोश्राद्धभोजी द्विजो यथा ॥ ४८ ॥

४८. सोर्बुदेश्वरोहितानरीन् शरवृष्टिभिः कृत्वा व्याप्तव्योमत्वात्सूर्यमपि न पश्यन्त्यसूर्यपश्यास्तानकृत चक्रे । कीदृक्सन् । क्रुद्धोत एव पुनर्न गेया न वक्तुं शक्या वाग्यस्मिन्स तथातिरौद्र इत्यर्थः । श्लेषोपमामाह । यथाश्राद्धभोजी श्राद्धं न भुङ्क्ते इतिव्रतोतिनैष्ठिक इत्यर्थः । द्विजः क्रुद्धोत एवापुनर्गेयवाक्सन् शरवृष्टितुल्यैः शापवचनैरहितानपराद्धृनसूर्यपश्यानन्धान्करोति । अतिनैष्ठिकद्विजो हि कुपितः सत्यशाप एव स्यात् ॥

स्वक्षोलवणभोजीवाकार्णवेष्टकिकान्स तान् ।
अवत्सीयानवध्यघ्नोभि नासान्तापिकोभवत् ॥ ४९ ॥

४९. अवध्यान्वधानर्हान् द्विजगोवत्सादीन्दैत्यत्वेन घ्नन्ति ये तानवध्यघ्नोत एवावत्सीयान्न वत्सेभ्यो हितांस्तान्दैत्यानभि इत्थंभूतेत्राभिः । सोर्बुदेश्वरः सांतापिकः "तस्मै योगादेः शक्ते" [६.४.९४] इतीकण्। संतापाय न शक्तो नाभूत् । द्वौ नञौ सातिशयमर्थं गमयत इत्यत्यन्तं संतापाय शक्तत्वप्रकारमापन्नोभवत् । यतोकार्णवेष्टकिकान्कर्णवेष्टकाभ्यां न शोभमानान्कर्णाद्यङ्गावयवच्छेदेन कुण्डलशोभारहितान् । स च कीदृक् । स्वक्षो जितैकाशित्वेन प्रमुदितत्वात्पटुविकसितनेत्रोलवणभोजीव । यथा लवणमभुञ्जानो रक्ताद्युद्रेकोत्थरोगाभावेन स्वक्षः स्यात् । अर्बुदेश्वरं हसिताक्षं वीक्ष्य प्रहारजर्जरिताङ्गाः शत्रवः संतेपुरित्यर्थः ॥

---

१ सी °श्राद्ध. २ घ सी °ण् । साता°. ३ बी °तकासित्वे°.

अहितान् । इत्यत्र "नञ्" [५१] इति तत्पुरुषः ॥ निवृत्यमानतद्भावश्चो-त्तरपदार्थः । पर्युदासे नञ्समासार्थः । प्रसज्यप्रतिषेधे तु नञ्पदान्तरेण सवध्यत इत्युत्तरपदं वाक्यवत्स्वार्थ एव प्रवर्तते तत्रासामर्थ्येपि यथाभिधानं बाहुलकात्समासः । असूर्यंपश्यान् । अपुनर्गेय । अश्राद्धभोजी । अलवणभोजी । अकार्णवेष्टकिकान् । अवत्सीयान् । अवध्य । असांतापिकः ॥

पूर्वकायेपरकायेधरकायोत्तराङ्गयोः ।
स्वान्क्षुण्णान्वीक्ष्य सायाह्नाभिवद्राहारिरज्वलत् ॥ ५० ॥

५०. सायाह्ने संध्यायां योग्निस्तद्वद्राहारिरज्वलत्कोपाज्जाज्वल्यमानोभून । किं कृत्वा । स्वानात्मीयान्भटाञ् ज्ञातीन्वा वीक्ष्य । किंभूतान् । कायस्य पूर्वभागे हृदयादौ कायस्यापरभाग ऊर्वादौ कायस्याधरभागे पादादावङ्गस्योत्तरभागे मूर्धादौ क्षुण्णान्प्रहतान् ॥

मध्याह्नार्कनिभः सोर्धदृष्ट्यैक्षिष्ट द्विषां बलम् ।
दृष्ट्यर्धेन च बाहू स्वौ दंष्ट्रिकार्धं परामृशन् ॥ ५१ ॥

५१. स ग्राहारिर्मध्याह्नार्कनिभः कोपाटोपार्चिर्भिः प्रहरद्वयसत्करविवज्जाज्वल्यमानः सन्नर्धदृष्ट्या बलावलेपादवज्ञया नेत्रार्धभागेन द्विषां बलं सैन्यमैक्षिष्ट । तथा दंष्ट्रिकार्धं परामृशन्स्वपौरुषावलेपोत्कर्षाद्दाढिकाकेशार्धभागं पाणिना गृह्णन्सन् पौरुषमदेन वक्रीकृताक्षत्वाद्दृष्ट्यर्धेन स्वौ बाहू चैक्षिष्ट ॥

पूर्वकाये । अपरकाये । अधरकाय । उत्तराङ्गयोः । इत्यत्र "पूर्वा°" [५२] इत्यादिना तत्पुरुषः ॥

---

१ ए सी °न्वीक्ष सा°. २ सी °भः सोर्ध°.

---

१ ए सी °त्वादृष्ट्य°. २ ए सी मध°.

सायाह्नमध्याह्नौ "सायाह्नादयः" [५३] इति साधू ॥

अर्धदृष्ट्या । दृष्ट्यर्धेन । इत्यत्र "समेंशेर्धं न वा" [५४] इति वा तत्पुरुषः ॥ समेंश इति किम् । दंष्ट्रिकार्धम् ॥

धिगर्धजरतीयं वः प्राग्जरत्यर्धहासिनाम् ।
भग्ना द्वितीयसेना नो यत्तृतीयारिसेनया ॥ ५२ ॥

भूर्द्वितीयं श्रीतृतीयं तुर्यकुप्यं मुधैव वः ।
प्रदत्तं माषतुर्याल्पा इत्युक्त्वा सोग्रहीद्धनुः ॥ ५३ ॥

५२,५३. स ग्राहारिर्धनुरग्रहीत् । किं कृत्वा । उक्त्वा । किमित्याह । हे माषस्य मदनधान्यस्य तुर्यश्चतुर्थो भागस्तद्वदल्पास्तुच्छा अल्पसत्त्वाः प्राक्पूर्वं जरत्या अर्धं जरत्यर्धं किंचिद्यौवनं किंचिद्वार्धक्यम्[1] । अनेन च शुभाशुभरूप[2]मर्धनिष्पन्नं कार्यं[3] व्यज्यते । तद्धासिनां महाशूरंमन्यतयान्यदीयजयाजयरूपार्धनिष्पन्नकार्योपहासिनां वो युष्माकमर्धं जरत्या अर्धजरती किंचिद्यौवनं किंचिद्वार्धक्यं तस्यास्तुल्यं "काकतालीयादयः" [७.१.११७] इतीये अर्धजरतीयं जयाजयरूपमर्धनिष्पन्नं कार्यं धिग्गर्हामहे । यद्यस्माद्धेतोर्नोस्माकं द्वितीयसेना सेनाया द्वितीयो भागस्तृतीयारिसेनया शत्रुसेनायास्तृतीयेन भागेन भग्ना नाशिता तथात एव वो युष्मभ्यं भूर्द्वितीयं[4] भूमेर्द्वितीयो भागः श्रीतृतीयं लक्ष्म्यास्तृ[5]तीयो भागस्तुर्यकुप्यं कुप्यस्य हेमरूप्याभ्यामन्यस्य ताम्रादेश्चतुर्थो भागो मुधैव निरर्थकमेव प्रदत्तमिति ॥

---

१ बी °द्वार्धिक्य°. २ डी °रूप द्वयम°. ३ ए सी °र्यं विज्य°. ४ ए भूर्द्विती° सी भूर्द्वि°. ५ ए लक्ष्मात्तृ°. सी लक्ष्मीतृ°. डी लक्ष्मास्तृ°.

सोध्यास्तोच्चलपादोग्रहस्तोपात्तवरत्रया[1] ।
गजं पादतलन्यश्चद्भुवं हस्ताग्रमुद्गरम् ॥ ५४ ॥

५४. स ग्राहारिरारोहवशादुदूर्ध्वस्तलपादः पादतलं यस्य स तथा सन्नग्रहस्तेन हस्ताग्रेणोपात्ता गृहीता या वरत्रा कक्षा[1] तया गजमध्यास्तारुरोह । किंभूतं सन्तम् । हस्ताग्रे[2] शुण्डाग्रे मुद्गरो यस्य तम् । तथा पादतलेन न्यञ्चन्ती भारातिरेकान्नमन्ती भूर्यस्य तम् ॥

अर्धजरतीयम् जरत्यर्ध[3] । इत्यत्र "जरत्यादिभिः" [५५] इति वा तत्पुरुषः ॥

द्वितीयसेना । तृतीयारिसेनया । तुर्यकुप्यम् । अग्रहस्त । उत्तलपादः । इत्यत्र "द्वित्रि°" [५६] इत्यादिना वा तत्पुरुषः । पक्षे । भूद्वितीयम् । श्रीतृतीयम् । मापतुर्य । हस्ताग्र । पादतल ॥

वर्षजाताहिभीमभ्रूस्त्र्यब्दजातहरेः समः ।
सैन्यं स स्वयमुद्युक्तोस्थापयत्सामिविद्रुतम् ॥ ५५ ॥

५५. स ग्राहारिः सामिविद्रुतमर्धोपप्लुतं सैन्यमस्थापयत्समधीरयत् । कीदृक्सन् । वर्षं जातस्य वर्षजातो योहिः सर्पस्तद्वद्भीमे कोपाटोपाद्रौद्रे भ्रुवौ यस्य सः । वर्षप्रमाणोहिः[4] प्रौढत्वादतिभीमः स्यात् । तथा त्रयोब्दा वर्षाणि जातस्य त्र्यब्दजातो यो हरिः सिंहस्तस्य समः[5] शौर्येण तुल्योत एव स्वयमुद्युक्तो रणायोद्यतः[6] ॥

---

१ सी सौध्या°.

---

१ बी कक्ष्या त°. २ ए °ग्रे शुण्डा°. सी °ग्रे मु°. ३ सी °रत्या°. ४ बी °णो हि अहिः. ५ बी मः सौर्ये°. ६ सी °द्यत व°.

वर्षजात। त्र्यब्दजात। इत्यत्र "कालः°" [५७] इत्यादिना तत्पुरुषः॥

स्वयमुद्युक्तः। सामिविद्रुतम्। इत्यत्र "स्वयं°" [५८] इत्यादिना तत्पुरुषः॥

अखट्वारूढभूपालाः षण्मुहूर्ता न्वहःसृताः[1]।
तस्थुस्तद्वृद्धये पार्श्वेहोरात्रस्नेहशालिनः॥ ५६॥

५६. अखट्वारूढा अनिन्द्या ये भूपाला नृपास्ते तद्वृद्धये तस्य आहारैर्विजयोत्थस्फीत्यर्थं आहारैः पार्श्वे तस्थुः। यतोहोरात्रं सदा यः स्नेहोनुरागस्तेन शालन्ते शोभन्ते तं शलन्ति वा गच्छन्तीत्येवंशीलाः षण्मुहूर्ता न्वहःसृता इति। यथा षड् मुहूर्ता घटिकाद्वयमानकालविशेषा अहोरात्रस्नेहशालिनो दक्षिणायने रात्रिचारित्वादुत्तरायणेहश्चारित्वाच्चाहोरात्रेषु[1] यः स्नेहः सदा सहचारित्वेनानुराग इव तच्छालिनोत एवाहर्दिनं सृताः संक्रान्ताः सन्तस्तद्वृद्धयेहर्वृद्धये पार्श्वे दिनमध्ये तिष्ठन्ति। मध्यदेशे हि सूर्योदयास्तविशेषेण दिनं नक्तं च परमबृहदष्टादशमुहूर्तमानं परमलघु च द्वादशमुहूर्तमानम्। तत्र यदा दक्षिणायनं स्यात्तदा कर्कसंक्रान्त्यादिदिनादारभ्य धनुःसंक्रान्त्यन्त्यदिनं यावत्प्रतिसंक्रान्ति दिनेभ्यो रात्रिष्वेकैकं मुहूर्तं संचरति। यावद्धनुःसंक्रान्त्यन्त्यादिने[2] षडपि मुहूर्ता रात्रिषु दिनेभ्यः संक्रामन्ति। यदा चोत्तरायणं स्यात्तदा मकरसंक्रान्त्यादिदिनादारभ्य मिथुनसंक्रान्त्यन्त्यदिनं यावत्प्रतिसंक्रान्ति रात्रिभ्यो दिनेष्वेकैकं मुहूर्तं संचरति। यावन्मिथुनसंक्रान्त्यन्त्यादिनं[4] रात्रिभ्यो दिनेषु षण्मुहूर्ताः संक्रामन्ति। अत एव वृत्तावुक्तं षण्मुहूर्ताश्चराचरास्ते रात्रौ गच्छन्ति दक्षिणायन उत्तरायणे त्वहरिति। तथा चोक्तं भगवति श्रीजैनागमे।

---

१ ए सी डी °हः स्मृताः।.

---

१ डी °रात्रं स्ने°. २ सी °होसनेषु. ३ सी °न्त्यदि°. ४ सी °दिनरा°. ५ सी °वुक्तष°.

कक्कड-संकन्ति-दिणे छत्तीसं नाडियाउ दिण-माणं ।
चउवीसं घडिआओ[1] रयणि-पमाणं विणिद्दिट्ठं ॥ १ ॥
तीय दिणा चउ-गुणिआ[2] सट्ठि-विहत्ता[3] हवन्ति घडियाओ ।
एया सिहाणि वुड्ढी दिण-रयणीसुं[4] तओ पुरओ[5] ॥ २ ॥

किंचिदूनत्वाविवक्षया चतुर्भिर्गुणनम् ॥

मयरे पुण दिण-माणं चउवीसं नाडियाउ पढम-दिणे ।
छत्तीसं घडिआओ[6] रयणि-पमाणं मुणेयव्वं ॥ ३ ॥
परओ दिणस्स वुड्ढी रयणी-हाणी य पुव्व-निद्दिट्ठा ।
ता नायव्वा जावउ उत्तर-अयणस्स चरम-दिणं ॥ ४ ॥

एवं च

पडइ चडइव घडिया पक्खेण दुन्नि मासेण ।
दिण-रयणि-पमाणाओ भणिय-पमाणेण अयण-दुगे ॥ इति ।

खट्वारूढ । इत्यत्र "द्वितीया०" [५९] इत्यादिना तत्पुरुषः ॥

अहःसृताः । इत्यत्र "कालः" [६०] इति तत्पुरुषः ॥

अहोरात्रस्नेह । इत्यत्र "व्याप्तौ" [६१] इति तत्पुरुषः ॥

सोस्त्रश्रितः सुरातीतो योद्धुं प्रववृते वृतः ।
प्राप्तजीविकया चम्वा नृपैश्चापन्नजीविकैः ॥ ५७ ॥

५७. सुरातीतः सुरारित्वाद्देवानतिक्रान्तः स ग्राहारिर्योद्धुं प्रववृते । कीदृक्सन् । अस्त्रश्रितः शस्त्राण्याश्रितः । तथा प्राप्तजीविकया जीविकां[7] वृत्तिं फलितं प्राप्तया चम्वापन्नजीविकैर्जीविकां प्राप्तैर्नृपैश्च वृतः ॥

---

१ बी °डियाओ. २ वी °णिया स°. ३ बी विहित्ता. ४ सी °रणीसु त°. ५ बी ओ पर°. ६ बी °डियाओ. ७ सी अहस°. ८ सी °विकावृत्तिफ°.

अभ्रश्रितः । सुरातीतः । इत्यत्र "श्रितादिभिः" [६२] इति तत्पुरुषः ॥

प्राप्तजीविकया[१] । आपन्नजीविकैः । इत्यत्र "प्राप्त°" [६३] इत्यादिना तत्पुरुषोनयोरन्तस्य[२] चाकारः ॥

ईषत्ताम्रः क्रुधा तस्याभ्रमन्मदपटुर्द्विपः ।
स्मारयन् शष्कुलाखण्डान्[१]द्विषो भ्रमितमुद्गरः ॥ ५८ ॥

५८. तस्य ग्राहारेर्मदपटुर्मत्ततया[३] प्रचण्डो द्विपो रणेभ्रमत्। कीदृक्सन्। क्रुधा कोपेनेषन्मनाक्ताम्र[४] आरक्तोत एव भ्रमितमुद्गरोत एव च द्विषः शत्रून् शष्कुलाखण्डान् शष्कुलया कृतान्खोडान्नरान् । यद्वा । शष्कुलया कृताः खण्डाः खण्डत्वानि खण्डीकरणानि पादाद्यङ्गभङ्गा इत्यर्थः । तान्स्मारयन् ज्ञापयन् शष्कुलयेव भ्रमितमुद्गरेण कुण्ठीकुर्वन्नित्यर्थः ॥

ईषत्ताम्रः । इत्यत्र "ईषद्°" [६४] इत्यादिना तत्पुरुषः ॥

शष्कुलाखण्डान् । मदपटुः । इत्यत्र "तृतीया°" [६५] इत्यादिना तत्पुरुषः ॥ अन्ये तु गुणवचनैर्गुणमात्रवृत्तिभिरपि समासमिच्छन्ति । तन्मतेन द्वितीयव्याख्याने[६] शष्कुलाखण्डान् इति ज्ञेयम् ॥

म्लेच्छैरनुसृतैरर्धचतस्रोक्षौहिणीस्तले ।
अवीर्योनाः स कृत्वा भीविकलोलोलयत्परान् ॥ ५९ ॥

५९. स ग्राहारिर्भीविकलो[७] भयेन रहितः सन्परानलोलयदभ्रमयत् । किं कृत्वा । अक्षौहिणीस्तलेधोभागे कृत्वा । किंभूताः । अवीर्योना न वीर्येणोनास्तथानुसृतैराश्रितैर्म्लेच्छैस्तुरुष्कभिल्लाद्यैः[८] कृत्वार्धचतस्रो-

---

१ प डी °खन्दान्द्वि°.

---

१ सी °विकाया । . २ सी °रतस्य. ३ सी °मत्त°. ४ सी °न्मनोक्ता°. ५ प सी डी खण्डा ख°. ६ डी °तीये व्या°. ७ वी °भीविक°. ८ प सी डी °नुश्रुतै°. ९ प सी °चतुस्रो°.

र्धेन कृतांश्चतस्रोप्यर्धतिस्रः । अक्षौहिणीशब्दो हस्ति २१८७० रथ २१८७० अश्व ६५६१० पदाति १०९३५० एवंप्रमाणचतुरङ्गबलवाचकोप्यत्र म्लेच्छैरित्युक्तेरेकदेशे १०९३५० इतिमानेषु पत्तिष्वेव वर्तते । ततस्त्रिलक्षी त्र्यशीतिसहस्री पञ्चविंशत्यधिकसप्तशतीप्रमाणास्तात्पर्येणातिभूयिष्ठम्लेच्छपत्तिमयीरित्यर्थः ॥

तस्मान्मासावरैर्मासपूर्वैर्वा योधिभिर्नृपैः ।
अस्त्रभिन्नारिवान्तासृक्पङ्कोभूत्पादहारकः ॥ ६० ॥

६०. अस्त्रैः करणैर्भिन्ना विदारिता येरयस्तैः कर्तृभिर्वान्तानि व्युत्सृष्टानि यान्यसृञ्जि रक्तानि तेषां पङ्कः कर्दमोभूत् । कीदृक् । नृपैः कर्तृभिः पादैर्ह्रियते "बहुलम्" [५.१.२] इति कर्मणि णके पादहारकश्चरणापसार्यः । किंभूतैः । अस्माद्ग्राहारेः सकाशान्मासावरैर्मासेन लघुभिर्मासपूर्वैर्वा । वा समुच्चये । मासेन प्रथमैश्च । तथा योधिभिः सुभटान्वितैरवश्यं युध्यमानैर्वा । आवश्यके णिनिः ॥

घनघात्यान्परान्वाष्पच्छेद्यवद्घ्नन्नसृग्नदीः ।
काकपेयाः स एकान्नविंशं भूतं नु निर्ममे ॥ ६१ ॥

६१. स ग्राहारिरसृग्नदी रक्तसिन्धूः काकपेया निर्ममे पूर्णाश्चकारेत्यर्थः । कीदृक्सन् । घनघात्यानत्यन्तं दृढाङ्गत्वाद्घनैर्लोहमुद्गरैर्हन्तुं शक्यानत्यन्तायासेन घात्यानित्यर्थः । परान् शत्रून् वाष्पच्छेद्यवद्वाष्पैः श्वासैश्छेद्यांस्तृणादीनिव घ्नन्नत्यन्तमनायासेन हिंसन्नित्यर्थः । उत्प्रेक्ष्यते । एकान्नविंशमेकेन न विंशतिरेकान्नविंशतिस्तस्याः पूरणं भूतं नु किल । सुरं १ असुर २ यक्ष ३ राक्षस ४ कश्मल ५ भस्मक ६ पितृ ७

१ प सी °श्चतुस्रो°. २ प सी °लक्षी ग्य°. डी °लक्षी ग्याशीति°. ३ सी °णाति भू°. ४ प सी °कासान्मा°. ५ प सी डी °र्वास°. ६ वी सी णिनि ॥. ७ बी °सुद्गरै°. ८ सी °प्पैः स्वासै°. ९ प सी °त्प्रेक्षते ।. १० प सी सुरा १ असुरा २ य°.

विनायक ८ प्रलाप ९ पिशाच १० अन्त्यज ११ योनिज १२ भूत १३ अपस्मार १४ ब्रह्मराक्षस १५ क्षत्रराक्षस १६ वैश्यराक्षस १७ शूद्रराक्षसाख्या १८ नारायणीसंहितायामुक्ता अष्टादशैव भूतजातयः प्रसिद्धाः। अयं त्वेकोनविंशतितमं भूतमिव। भूत एव हीदृशः स्यात्। भूतशब्दः पुंक्लीबः॥

तेनात्येकान्नपञ्चाशन्मरुता कुन्त उद्धृतः।
यूपदार्विव युद्धयज्ञेभाच्छ्रीसुखयशोहितः॥ ६२॥

६२. युद्धयज्ञे रणयागे यूपदार्विव यूपाय यज्ञकीलकाय काष्ठमिव यज्ञस्तम्भ इव तेन ग्राहारिणोद्धृतः कुन्तोभात्। यतः श्रियै जयलक्ष्म्यै सुखः सुखकारी यो यशोहितो जयोत्थकीर्त्यैनुकूलः स तथा। यूपदार्वपि यागकारयितुः श्रीसुखं यशोहितं च स्यात्। कीदृशा तेन। अत्येकान्नपञ्चाशन्मरुता। एकान्नपञ्चाशन्मरुतो भौमप्रवहादीनेकोनपञ्चाशद्वायून् गणदेवता अतिक्रान्तेनैकोनपञ्चाशद्वायुभ्योप्यधिकबलेनेत्यर्थः॥

अर्धचतस्रः। इत्यत्र "चतस्रार्धम्" [६६] इति तत्पुरुषः॥

[ऊनार्थ।] वीर्योनाः। भीविकलः॥ पूर्वाद्य। मासपूर्वैः। मासावरैः। इत्यत्र "ऊनार्थ°" [६७] इत्यादिना तत्पुरुषः॥

कर्तृ। अरिवान्त॥ करण। अस्त्रभिन्न। पादहारकः। इत्यत्र "कारकं कृता" [६८] इति तत्पुरुष.॥ बहुलाधिकारात्स्तुतिनिन्दार्थतायां प्रायेण कृत्यैः समासः। कर्तृ। काकपेया असृग्नदीः। एवं नाम पूर्णा इत्यर्थः॥ करण। बाष्पच्छेद्यवत्। एवं नाम मृदूनीत्यर्थः॥ अन्यत्रापि। घनघात्यान्॥

---

१ डी °सुय°.

---

१ बी °न्त्यजः ११ यो°. २ प डी °क्षसा १८ ना°. सी °क्षस १८ ना°. ३ बी °४ इव. ४ प सी डी कुम्भोमा°. ५ प सी डी सुखका°. ६ सी °सुखय°. ७ प सी °कात्स्तु°. ८ बी °रास्तुति°. ९ बी °त्याम्॥ प°.

एकान्नविंशम् । एकान्नपञ्चाशत् । इत्यत्र "नविंशति°" [६९] इत्यादिना तत्पुरुष एकशब्दस्य चादन्तः ॥

यूपदारु । इत्यत्र "चतुर्थी प्रकृत्या" [७०] इति तत्पुरुषः ॥

पशोहितः । श्रीसुख । इत्यत्र "हितादिभिः" [७१] इति तत्पुरुषः ॥

जयार्थमस्त्रं तन्वानेस्मिन्न मृत्युभयेपतन् ।
सिंहभीता इवैणाः केप्यल्पान्मुक्ताः परःशताः ॥ ६३ ॥

६३. सिंहाद्भीता एणा इव । केपीत्यत्रापिर्भिन्नक्रमे । परःशता अपि शतात्परेपि बह्वोपीत्यर्थः । के भटा मृत्युभये मरणाद्भीतौ नापतन् । यतोल्पान्मुक्ताः स्तोकाच्छुटिताः[3] । क सति । अस्मिन् ग्राहारौ । कीदृशे । जयार्थमस्त्रं शस्त्राणि तन्वाने ॥

असौ परःसहस्रारिनृणामुज्जासितं दिशन् ।
उद्यच्छिरोभी राहूणां ज्ञानं भानोरजीजनत् ॥ ६४ ॥

६४. असौ ग्राहारी राहूणां ज्ञानं सादृश्याद्राहुभिः करणैः प्रवर्तनम् । यद्वा । अरित्वेन राहावत्यन्तं विरक्तत्वाच्चित्तभ्रान्त्यानेकराहुरूपेण प्रतिपत्तिं भानो रवेरजीजनद्ग्रसनार्थमागच्छतामनेकेषां राहूणां शङ्कां भानोरुत्पादितवानित्यर्थः । कैः कृत्वा । उद्यच्छिरोभिः प्रहारवशोर्ध्वोच्छलन्मस्तकैः । यतः कीदृक् । सहस्रात्परे परःसहस्रा बह्वो येरीणां नरः पुरुषास्तेषां[5] कर्मणामुज्जासितं[6] हिंसां दिशन् कुर्वन् ॥

जयार्थम् । इत्यत्र "तदर्थार्थेन" [७२] इति तत्पुरुषः ॥

मृत्युभये । सिंहभीताः । इत्यत्र "पञ्चमी भयाद्यैः" [७३] इति तत्पुरुषः ॥

---

१ ए सी डी °श्चात् । २ सी एना इ° । ३ ए सी डी °टिता क । ४ बी सी यद्वा भा° । ५ सी डी °स्तेषा क° । ६ सी °सित हिं° ।

अल्पान्मुक्ताः । इत्यत्र "केनासत्त्वे" [७४] इति तत्पुरुषः ॥ "असत्त्वे ङसेः" [३.२.१०] इत्यलुप् ॥

परःशताः[1] । परःसहस्त्र । इत्येतौ "परःशतादि" [७५] इति साधू ॥

अरिनॄणाम् । इत्यत्र "षष्ठी°" [७६] इत्यादिना तत्पुरुषः ॥ अयतादिति किम् । नृणामुज्जासितम् ॥ शेष इति किम् । राज्ञूणां ज्ञानम् ॥

द्विड्गतिव्रश्चनो देवयाजकद्वेषिपूजकः ।
घ्नन्नाभूद्रथगणको न पत्तिगणकोपि सः ॥ ६५ ॥

६५. स आहारिर्घ्नन्नरीन्हिंसन्सन् रथगणको नाभूत्पत्तिगणकोपि नाभूत् । असंख्यान्रथान्पत्तींश्च व्यनाशयदित्यर्थः । कीदृक् । द्विड्गतिव्रश्चनो द्विषां कर्तॄणां गतिः संग्रामे विचरणं तस्याः कर्मणः सर्वथा प्राणहारित्वाद्व्रश्चनश्छेदको[2] रम्यादित्वादनट् [५.३.१२६] । तथा देवानां याजका ऋषिद्विजादयस्तेषां द्वेषिणो दैत्यास्तेषां पूजकः ॥

द्विड्गतिव्रश्चनः[3] । इत्यत्र "कृति" [७७] इति तत्पुरुषः ॥

देवयाजक । द्वेषिपूजकः । इत्यत्र "याजकादिभिः"[4] [७८] इति तत्पुरुषः ॥

पत्तिगणकः । रथगणकः । इत्यत्र "पत्ति°" [७९] इत्यादिना तत्पुरुषः ॥

सर्वपश्चाद्भटांस्तर्जन्स घ्नन्सर्वचिरं परान् ।
युद्धूतभञ्जिकां चक्रेरीभानां दन्तलेखकः ॥ ६६ ॥

६६. स आहारिर्युद्धेव[5] रणमेव हर्षेण कार्यत्वाच्चूतभञ्जिकाम्राणां भञ्जयित्री काचित्क्रीडा तां चक्रे क्रीडामिव युद्धं हर्षाच्चकारेत्यर्थः । कीदृक्सन् । सर्वपश्चात्सर्वेषां मध्ये पश्चात्पश्चाद्भागे स्थितान्भटांस्तर्जन्साक्षेपवाक्यैर्निर्भर्त्सयन्[6] । तथा सर्वचिरं सर्वेषां मध्ये चिरं चिरकालं

१ बी °शता । प°. २ बी °नच्छेद°. ३ बी °ति । गतिव्र°. ४ डी °कादेरिति. ५ बी युद्ध इ°. ६ सी °निर्त्स°.

यावन्तं कालं न कोपि हन्ति तावन्तं कालमित्यर्थः। परान्घ्नन्। तथारीभानां शत्रुहस्तिनां दन्तानां लेखको दन्तलेखको दन्तविलेखनाजीवः स इव यथा दन्तलेखको दन्तकर्म कुर्वन्दन्तान्भिनत्ति तथारिगजदन्तान्भिन्दंश्च ॥

सर्वपश्चात्। सर्वचिरम्। इत्येतौ "सर्व°" [८०] इत्यादिना साधू ॥

चूतभञ्जिकाम्। दन्तलेखकः। इत्यत्र "अकेन°" [८१] इत्यादिना तत्पुरुषः ॥

गजानामासिकां कुम्भेष्वस्त्राणां क्षेपकोतनोत्।
क्रुद्धः सुराष्ट्रभूभर्ता पुरां भेत्तेव दुस्सहः ॥ ६७ ॥

६७. सुराष्ट्रभूभर्ता ग्राहारिर्गजानां कर्तॄणामासिकामवस्थानमतनोचक्रे। तीव्रप्रहारैर्गजान् रणेपातयदित्यर्थः। कीदृक्सन्। पुरां भेत्तेव तिसृणां दानवपुरीणां कर्मणां विदारको रुद्रः स इव क्रुद्धः सन् दुस्सहो दुर्धर्षोत एव कुम्भेषु कुम्भस्थलेष्वस्त्राणां कर्मणां क्षेपकः ॥

गजानामासिकाम्। इत्यत्र "न कर्तरि" [८२] इति न तत्पुरुषः ॥

अस्त्राणां क्षेपकः। पुरां भेत्ता। इत्यत्र "कर्मजा तृचा च" [८३] इति न तत्पुरुषः ॥ कथं भूभर्ता। भर्तृशब्दो यः पतिपर्यायस्तेन संबन्धषष्ठ्या याजकादिपाठात्कर्मषष्ठ्या वायं समासः ॥

गवां दोह इवागोपै राज्ञां भृत्यानुशासनम्।
नश्यतां दुष्करमभूत्तस्योग्रायां युधः कृतौ ॥ ६८ ॥

६८. उग्रायां तस्य ग्राहारेः कर्तुर्युधः कर्मणः कृतौ करणे सत्यां नश्यतां राज्ञां कर्तॄणां भृत्यानुशासनं प्रेष्याणां कर्मणां भो मा पलायिध्व-

१ सी गवा दो°.

१ डी °न्तवि°. २ डी °पु स्थ°. ३ सी पुरा भे°. ४ सी °ब्दो ×× पतिप°. ५ बी डी °वायप्य°.

मित्यादि शिक्षणं दुष्करमभूत् । यथा गोपैरगोधुग्भिः कर्तृभिर्गवां कर्मणां दोहो दोहाज्ञत्वेन दुष्करः स्यात् । यद्वा । यथागोपैरभूपै राजगुणविकलैर्गवां भुवां दोहो रत्नादिक्षारणं दुष्करः स्यात् ॥

गवां दोह इवागोपैः । इत्यत्र "तृतीयायाम्" [८४] इति कर्मजा षष्ठी न समस्यते ॥ तृतीयायामिति किम् । दुष्करं राज्ञां भृत्यानुशासनम् ॥ कर्तरि षष्ठ्यामपि न समास इति कश्चित् । तस्य युधः कृतौ ॥

मांसस्य तृप्तान्सोस्रस्य सुहितान् राक्षसान्व्यधात् ।
लङ्कापतेर्द्वितीयो नु राज्ञां साक्षाद्धरेर्द्विषन् ॥ ६९ ॥

६९. हरेर्द्विषन्दैत्यत्वादिन्द्रस्य शत्रुः स आहारी राज्ञां साक्षात्समक्षं राक्षसान्व्यधान् । किंभूतान् । अनेकारिवधेन मांसस्य तृप्तानोघ्राणानस्रस्य रक्तस्य च सुहितान् । अतश्च राक्षसानां तृप्त्यापादनलक्षणतुल्यकार्यविधानाल्लङ्कापते रावणस्य द्वितीयो नु द्वितीय इव रावण इत्यर्थः ॥

विक्रान्तानां स्तुवानोसौ त्रस्तानां विब्रुवन्नहन् ।
राज्ञां ज्ञातान्सतां बुद्धान्यमस्येष्टः कलेर्मतः ॥ ७० ॥

७०. असौ आहारिर्भटानहन् । कीदृक्सन् । विक्रान्तानां शूराणां स्तुवानस्तथा त्रस्तानाम् । पूर्वत्रात्र च संबन्धे षष्ठी । विब्रुवन्निन्दन् । तथानेकारीणां वधकत्वेन यमस्य मृत्योरिष्टः । कले रणस्य मतः संमतः । यद्वा । पापिष्ठत्वात्कलेः कलिकालस्य मतः । कीदृशान् । राज्ञां ज्ञातान् शौर्यादिगुणैः प्रसिद्धान् । तथा सतां शिष्टानां बुद्धान् न्याययोधित्वादिशिष्टोचितक्षात्रधर्मैः प्रसिद्धान् ॥

---

१ सी °क्षण दु°. २ ए सी °नाम्रणा°. ३ ए सी °स्त्र°. ४ ए सी तृप्तापा°. ५ डी नुर्द्विती°. ६ ए सी मत स°.

दैत्यानां पूजितो जज्ञे रक्षसामर्चितस्तदा ।
विक्रमस्यासितः सोरिकीर्तेः शौक्ल्यं कदर्थयन् ॥ ७१ ॥

७१. दैत्यानां पूजितः स ग्राहारिस्तदा युद्धकाले मांसासृक्सुभिक्षकरणाद्रक्षसामर्चितो जज्ञे । कीदृक्सन् । विक्रमस्य । आस्यते स्मात्रेति "अयर्थाच्चाधारे" [५.१.१२] इति क्ते आसितः स्थानम् । अत एवारिकीर्तेः शौक्ल्यं श्वेततां कदर्थयन्परामूत्योत्प्लुवमानः ॥

हस्तलाघवतोस्येषुरूपं नालक्षि कैरपि ।
रणशौण्डस्याक्षधूर्तस्येव कैतवपाशकः ॥ ७२ ॥

७२. रणे प्रसक्तः शौण्ड इव रणशौण्डस्तस्यास्य ग्राहारेर्हस्तलाघवतो हस्तदार्ढ्यादिपुरूपं शराकारः कीदृगयं शर इति कैरपि नालक्षि न ज्ञातं यथाक्षेपु पाशकेपु धूर्तो वञ्चकोक्षधूर्तस्तस्य प्रवीणद्यूतकारस्य हस्तलाघवतः कैतवाय दम्भाय पाशको देवनः कैतवपाशकः कूटपाशकः कैरपि न लक्ष्यते कूटोयं पाशक इति न ज्ञायते ॥

तृप्तांश । मांसस्य तृप्तान् । अस्रस्य सुहितान् ॥ पूरण । लङ्कापतेर्द्वितीयः ॥ अव्यय । राज्ञां साक्षात् ॥ अतृश् । हरेर्द्विषन् ॥ शतृ । त्रस्तानां विमुञ्चन् ॥ भावक । विक्रान्तानां स्तुवानः । अत्र "तृप्तार्थ°" [८५] इत्यादिना न तत्पुरुषः ॥

राज्ञां ज्ञातान् । सतां बुद्धान् । यमस्येष्टः । कलेर्मतः । रक्षसामर्चितः । दैत्यानां पूजितः । विक्रमस्यासितः । इत्यत्र "ज्ञानेच्छा°" [८६] इत्यादिना न समासः ॥

---

१ बी मांसास°. २ डी °तस्मिन्निति. ३ बी °त्योपप्लव°. ४ बी प्रशकः. ५ प सी °स्त्यादिषु. ६ प सी °नः कैत°. ७ प सी °शक कू°. ८ प सी डी °नि श°. ९ प कृत्यय. सी कृत्यय पा°. १० प °तार्थः । मा°. बी °तार्थम् । मा°. ११ बी दय । इ°.

कीर्तेः शौक्ल्यम्[1]। इत्यत्र "अस्वस्थगुणैः"[2] [८७] इति न तत्पुरुषः॥ अत्र च शुक्लादेर्गुणस्य शुक्लादिकीर्तिरित्यादौ[3] द्रव्येपि वृत्तिदर्शनादस्वास्थ्यमस्त्येव। गुणशब्देन[4] चेह लोकप्रसिद्धा रूपरसगन्धस्पर्शा गुणा अभिप्रेतास्ततस्तद्विक्षेपैरेवायं प्रतिषेधस्तेन हस्तलाघववत इत्यत्र प्रतिषेधो न स्यात्॥ अस्वस्थगुणैरिति किम्। इषुरूपम्॥

रणशौण्डस्य। अक्षधूर्तस्य। इत्यत्र "सप्तमी०" [८८] इत्यादिना तत्पुरुषः॥

रणसिंहेन तेनाजिव्याघ्रा अपि कृताः परे।
तीर्थकाकास्तीर्थवकाः[1] प्रहारैर्युधि विह्वलाः॥ ७३॥

७३. रणे सिंह इवातिशूरत्वाद्रणसिंहस्तेन तेन प्राहारिणा परे शत्रव आजिव्याघ्रा अपि शूरत्वाद्रणव्याघ्रतुल्या[5] अपि प्रहारैर्विह्वला विधुराः[2] सन्तः कृताः। कीदृशाः। युधि[6] तीर्थकाकास्तीर्थे काका इव तीर्थवकास्तीर्थे[7] वका इव यथा तीर्थे काका वकाश्चानवस्थिताः स्युरेवं रणे क्षणदृष्टनष्टाः कृता इत्यर्थः॥

रणसिंहेन। आजिव्याघ्राः। इत्यत्र "सिंहाद्यैः पूजायाम्" [८९] इति तत्पुरुषः॥

तीर्थकाकाः। तीर्थवकाः। इत्यत्र[8] "काकाद्यैः क्षेपे" [९०] इति तत्पुरुषः॥ काकाद्यैरिति किम्। युधि विह्वलाः[9]॥

ते पात्रेसमिताः पात्रेबहुलाश्चाभवन्परे।
यद्भस्मनिहुतं[3] तत्रप्रहुतं तैरजायत॥ ७४॥

७४. ते पूर्वश्लोकोक्ताः परे पात्रेसमिताः पात्रे भोजनवेलायामेव

१ सी °कास्ती°. २ सी °ह्वला......विधु°. ३ सी °निहुन्तं.

१ ए सी कीर्ते शौ°. २ बी °स्वच्छगु°. ३ सी डी °क्लादिकी°. ४ ए सी °न लो चे°. ५ बी °द्रणे व्या°. ६ सी °धि का°. ७ बी तीर्थे. ८ ए सी डी इति का°. ९ सी °ह्वला॥ ते°.

समिता मिलिताः । अकिंचित्करा इत्यर्थः । अभवन् । चः समुच्चये । परे चान्ये च शत्रवः पात्रेबहुलाः पात्र एव बहुला बहवोकिंचित्करा अभवन् । यद्यस्माद्धेतोस्तैरुभयैरपि तत्रप्रहृतं ग्राहारौ प्रहरणं भस्मनिर्हुतमाहुतिरिवाजायत निष्फलमभूदित्यर्थः ॥

यत्पूर्वाह्णप्रतिज्ञातं पूर्वरात्रप्रतिश्रुतम् ।
तदरण्येतिलक्षुद्रैर्विस्मृतं तत्र निघ्नति ॥ ७५ ॥

७५. यत्प्रस्तावाद्युद्धं पूर्वाह्णप्रतिज्ञातमपराह्ण एवमेवं योत्स्यत इति पूर्वदिनेङ्गीकृतं तथा यत्पूर्वरात्रप्रतिश्रुतं प्रातरेवमेवं योत्स्यत इति पूर्वरात्रेङ्गीकृतं तदरण्येतिलक्षुद्रैररण्ये तिलास्तिलभेदास्तद्वत्क्षुद्रैर्निःसत्त्वैर्भटैस्तत्र ग्राहारौ [नि?]घ्नति प्रहरति सति विस्मृतम् ॥

पात्रेसमिताः । पात्रेबहुलाः । एतौ "पात्रेसमितेत्यादयः" [९१] इति साधू ॥

भस्मनिर्हुतम् । इत्यत्र "क्तेन" [९२] इति तत्पुरुषः ॥

तत्रप्रहृतम् । पूर्वाह्णप्रतिज्ञातम् । पूर्वरात्रप्रतिश्रुतम् । इत्यत्र "तत्र°" [९३] इत्यादिना तत्पुरुषः ॥

अरण्येतिल । इत्यत्र "नाम्नि" [९४] इति तत्पुरुषः ॥

रणदेयां न्वदात्पूजां मौलिनीलोत्पलैर्द्विषाम् ।
लोहितस्तक्षकः सर्पो नूग्रतीव्रोस्य युध्यसिः ॥ ७६ ॥

७६. अस्य ग्राहारेरसिर्द्विषां मौलिनीलोत्पलैर्मस्तकैरेव नीलत्वान्नीलाब्जैः कृत्वा रणदेयां रणेवश्यं देयां पूजामिव युधि युद्धार्थमदाद्दौ । ग्राहारीयासिच्छिन्नानेकारिमौलीनां रणाङ्गणे लुठितत्वादेवमाशङ्का । कीदृक् । उग्रो यमजिह्वाकरालो यस्तीव्रस्तीक्ष्णः स उग्रतीव्रोव

१ प सी °त्पलद्विषा°. २ सी °ध्यसि ॥.

१ सी °ता अ°. २ सी हुन्तमा°. ३ प डी सी हुरिति मा°. ४ प सी °इभन् ।. ५ सी °रुष ॥ त°. ६ सी °रुष । अ°. ७ सी °रुष ॥

एव तक्षकः शत्रूणां वधकोत एव च लोहितस्तक्षकः सर्पो नु । नुरिवार्थे । लोहितो रक्तवर्णस्तक्षकनामा यः सर्पस्तत्तुल्यः ॥

तीव्रोग्रः सोर्जुनः कार्तवीर्यो नु कृष्णसर्पभः ।
दृष्टनष्टान्व्यधात्सर्वभटानेकधनुर्धरः ॥ ७७ ॥

७७. स ग्राहारिरेकधनुर्धरः सन्सर्वभटोन्दृष्टनष्टान्पूर्वं दृष्टान्पश्चान्नष्टानयुँध्वैव नष्टानित्यर्थः । व्यधात् । कीदृक् । कृष्णवर्णत्वात्क्रूरत्वाच्च कृष्णसर्पभः कालाहितुल्योत एव तीव्रोग्रः कटुरौद्रोत एव च कार्तवीर्योर्जुनो नु कृतवीर्यस्यापत्यं योर्जुनः सहस्राजुनस्तत्तुल्यः ॥

जरत्क्रोडः पुराणाहिः केवलोर्जा नवेन्द्रजित् ।
स क्ष्वेडां विदधे जित्वा सेनां सोत्तरकोशलाम् ॥ ७८ ॥

७८. स ग्राहारिरुत्तराश्च ते कोशला देशास्तेषां राजानोप्युत्तरकोशलाः सह वैर्या तां सेनां गूर्जरचमूं जित्वा क्ष्वेडां जयसूचकं सिंहनादं विदधे । यतः कीदृक् । केवलोर्जो द्वितीयबलेन कृत्वा जरत्क्रोडो जीर्णवराहरूपधारी हरिरिव तथा पुराणाहिश्चिरंतनसर्पः शेष इव तथा नवेन्द्रजिदभिनवरावणिरिव ॥

आपरार्णवमादध्मौ शङ्खं चाधिकषाष्टिकम् ।
प्रत्यगवधनान्प्रीणन्नॄन्सोधिकगवप्रियः ॥ ७९ ॥

७९. अधिका गावः प्रिया यस्य सः । सौराष्ट्रा हि स्वभावेनाधिकं

---

१ सी °र्डा वद°. २ ए सी अप°.

---

१ सी °तुल्य ॥. २ ए सी °यान्दृष्ट°. ३ ए सी डी °युध्वैव. ४ ए बी सी °वीरस्या°. ५ सी °तुल्य ॥. ६ बी °लाश्चोत्तरकोशलादेशास्ते°. ७ सी °तीयाब°. ८ ए सी °त्वा रजक्रो°. ९ ए सी डी °रीरिव. १० ए सी °जितभि°.

धेनुप्रियाः स्युः । स प्राहारिः शङ्खमादध्मौ च न केवलं क्ष्वेडां विदधे विजयशङ्खमवादयच्च । कीदृक्सन् । प्रतीच्यः पश्चिमाः कविरूढिमाश्रित्य मध्यदेशापेक्षया वैयाकरणमतं चाश्रित्येशानतो नैर्ऋतिं गच्छन्त्याः शरावतीनद्या अपेक्षया सुराष्ट्राणां पश्चिमत्वात्सुराष्ट्रदेशोद्भवा गावो धेनवो धनं येषां तान्प्रत्यग्गवधनान्सौराष्ट्रान्प्रीणन् शत्रुजयेनाह्लादयन् । कीदृशं शङ्खम् । आपरार्णव पश्चिमाब्धौ जातम् । तथाधिकषाष्टिकमधिकया षष्ट्यार्थाद्द्रम्मादीनां क्रीतं श्रेष्ठत्वेन महामूल्यमित्यर्थः ॥

मूलराजोथ दाशार्हषाण्मातुरगुरूपमः ।
व्यह्नजाताहवे सास्त्रां द्वितूर्णीं दधदुत्थितः ॥ ८० ॥

८०. अथ शङ्खध्मानानन्तरं द्वे अहनी जातस्य "सर्वांश°" [७.३.११८] इत्यादिनाव्यह्नादेशे च व्यह्नजातो य आहवो रणस्तत्र मूलराजो रणायोत्थितः । कीदृक्सन् । दशार्हस्य वसुदेवस्यायं दाशार्हो विष्णुः षण्णां मातॄणां कृत्तिकानामपत्यं "संख्यासम्°" [६.१.६६] इत्यादिनाणि मातुरादेशे च षाण्मातुरः स्कन्दस्तस्य गुरुः पिता शिवो द्वन्द्वे ताभ्यामुपमा शूरत्वादिगुणैः साम्यं यस्य सः । अत एव सास्त्रां बाणपूर्णां द्वितूर्णीं तूणीरौ दधत् ॥

रणदेयाम् । इत्यत्र "कृत्येन°" [९५] इत्यादिना तत्पुरुषः ॥

नीलोत्पलैः । इत्यत्र "विशेषणं°" [९६] इत्यादिना कर्मधारयः ॥ विशेषणविशेष्ययोः संबन्धिवचनत्वादेकतरोपादानेनैव द्वये लब्धे द्वयोरुपादानं परस्परमुभयोर्व्यवच्छेद्यव्यवच्छेदकत्वे समासो यथा स्यादित्येवमर्थम् । तेनेह न तक्षकः सर्पः । लोहितस्तक्षकः । नह्यसर्पोन्यवर्णो वा तक्षकोस्ति ॥ यत्तु गुणादिशब्दानामेव समासस्तत्रोभयोरपि पदयोरप्रधानत्वात्कामचारेण पूर्व-

१ सी °हारिश्च° २ ए सी डी नैरतिं. ३ ए °त्यग्ग. ४ सी °मुपप°.

निपातः । उग्रतीव्रः । तीव्रोग्रः ॥ बहुलाधिकारात्कचित्समासो न स्यात् । अर्जुनः[1] कार्तवीर्यः ॥ कचिन्नित्यः । कृष्णसर्प ॥

पूर्वकाल । दृष्टनष्टान् ॥ एकादि । एकधनुर्धरः । सर्वभटान् । जरत्क्रोडः । पुराणाहिः[2] । नवेन्द्रजित् । केवलौजा[3] । इत्यत्र "पूर्वकाल°" [९७] इत्यादिना कर्मधारयः ॥

[संज्ञायाम् ।] सोत्तरकोशलाम् । तद्धिते । आपराणवम् ॥ उत्तरपद(दे) । प्रत्यग्गवधनान् । अधिकं तद्धिते । आधिकपाष्टिकम् ॥ उत्तरपदे । अधिकगवप्रियः । इत्यत्र "दिगधिकं°" [९८] इत्यादिना कर्मधारयः ॥

संज्ञायाम् । दाशार्ह ॥ तद्धिते । षाण्मातुरः(र)॥ उत्तरपदे । ब्यह्नजात ॥ समाहारे । द्वितृणीम् । इत्यत्र "संख्या°" [९९] इत्यादिना तत्पुरुषः ॥ कर्मधारयोयमेवं[4] चानाम्नि द्विगुः ॥ अनाम्नीति किम् । दाशार्ह[5] । अत्र द्विगुत्वेनपत्यप्रत्ययस्य लुप् स्यात् ॥

क्षत्रखेटः पापदैत्यः स वृत्तोणकयोद्धृभिः ।
शस्त्रीश्यामः केति जल्पन्नृव्याघ्रो ज्यामवीवदत् ॥ ८१ ॥

८१. नृव्याघ्रो मूलराजो[6] ज्यामवीवदत् । कीदृक्सन् । जल्पन् । किमित्याह । स आहारिः[7] कास्ते । कीदृक् । क्षत्रखेटः[8] क्षत्रियाधमस्तथा पापदैत्यो निन्द्यदानवस्तथाणकयोद्धृभिर्निन्द्यभटैर्वृतस्तथा शस्त्रीश्यामः[9] क्षुरिकेव कालः ॥

---

१ ए सी डी °र्जुन का°. २ सी °णाहि । ज°. ३ ए सी °बलौजा ।. ४ ए सी डी °व मा ना°. ५ सी °शार्हम् । अ°. ६ सी °राज्यो ज्या°. ७ ए सी °हारि का°. ८ ए सी क्षत्रः खे°. ९ ए सी °श्याम क्षु°.

नृसिंहः पूर्वपुरुषो न्वपरार्कः स तेजसा ।
हन्तुं प्रथमदैत्यं नु डुढौके चरमासुरम् ॥ ८२ ॥

८२. स मूलराजश्चरमासुरं ग्राहारिं हन्तुं डुढौके । कीदृक्सन् । नृसिंहो नरश्रेष्ठोत एव तेजसा प्रतापेनापरार्को द्वितीयादित्यः । पूर्वपुरुषो नु यथा प्रथमपुरुषो विष्णुर्नृसिंहो नरसिंहरूपधारी सन् प्रथमदैत्यं नु हिरण्यकशिपुमिव हन्तुं डुढौके ॥

मध्यलोकपतिर्वीरपुमान्मध्यमपार्थवत् ।
अजघन्यौजसारेभे सोसमानरणोत्सवम् ॥ ८३ ॥

८३. मध्यलोकपतिर्मर्त्यलोकस्वामी स मूलराजोसमानरणोत्सवं निरुपमं युद्धमारेभे । यतो वीरपुमान् शूरनरस्तथाजघन्यौजसोत्कृष्टबलेन कृत्वा मध्यमपार्थवन्मध्यमस्तृतीयो यः पार्थः पाण्डवोर्जुनस्तत्तुल्यः ॥

वीरपूर्वाः श्रेणिकृतास्तेन पूगकृताः परे ।
श्रेणिमतः पूगमतो न्वेकोप्यैक्षि स तैर्भयात् ॥ ८४ ॥

८४. तेन मूलराजेन पूर्वे च ते वीराश्च वीरपूर्वाः प्रथमशूराः परेपूर्गाः पूगाः कृताः पूगकृताः समूहीकृता मृत्युभयेनान्योन्याश्रयणात्संयुक्तीकृता इत्यर्थः । कीदृशाः सन्तः । अश्रेणयः श्रेणयः कृताः श्रेणिकृता युद्धार्थं ग्राहारिणा पङ्क्तीकृताः । स मूलराज एकोपि तैः परैर्भयादैक्षि । कीदृशः । अश्रेणिः श्रेणिर्मतः संमतः श्रेणिमतो नु । नुरत्रापि योज्यः । पङ्क्तीभूत इवेत्यर्थः । एवं पूगमतो नु समूहीभूत इवेत्यर्थः ॥

१ सी °परां क स. २ प सी °णिगतः.

१ प बी सी °कशिपु°. २ प सी पार्थपोढवो°. ३ प सी °गाः इ°. ४ प सी °जय कै°. ५ प सी °ख्यर्थं मा°. ६ प सी बी क्त्वा स°. ७ बी °णिमतः. ८ बी इत्°.

क्षत्रखेटः । इत्यत्र "निन्द्यं°" [१००] इत्यादिना कर्मधारयः ॥ अपापार्थै-रिति किम् । पापदैत्यः । अणकयोद्धृभिः ॥

शस्त्रीश्यामः । इत्यत्र "उपमानं सामान्यैः" [१०१] इति कर्मधारयः ॥

नृव्याघ्रः । नृसिंहः । इत्यत्र "उपमेय°" [१०२] इत्यादिना कर्मधारयः ॥

पूर्वपुरुषः । अपरार्कः । प्रथमदैत्यम् । चरमासुरम् । अजघन्यौजसा । असमानरण । मध्यलोक । मध्यमपार्थ । वीरपुमान् । इत्यत्र "पूर्वापर°"[१०३] इत्यादिना कर्मधारयः । "विशेषणं विशेष्येण°" [९६] इत्यादिनैव सिद्धे "स्पर्द्धे" [७.४.११९] परम् इति पूर्वनिपातस्य विषयप्रदर्शनार्थमद्रव्यवाचिनोरनियमेन पूर्वापरभावप्रसक्तौ पूर्वनिपातनियमार्थं च वचनम् । तेन वीरपूर्वाः ॥

श्रेणिकृताः । पूगकृताः । श्रेणिमताः । पूगमताः । इत्यत्र "श्रेण्यादि°" [१०४] इत्यादिना कर्मधारयः ॥

कृताकृतरणेप्यस्मिन्क्लिष्टाक्लिशितमूर्तयः ।
इषुपीतावपीतास्रा भ्रेमुश्छाताच्छिताः परे ॥ ८५ ॥

८५. अस्मिन्मूलराजे किंचित्कृतं किंचिदकृतं च रणं येन तस्मिन्सति परे भ्रेमुर्घातविह्वलतया भ्रमिं प्राप्ता इत्यर्थः । किंभूताः सन्तः । छाताच्छिताः शरैः किंचिच्छिन्नाश्च किंचिदच्छिन्नाश्चात एवावहीनं पीतमवपीतमपीतप्रायमित्यर्थः । इषुभिः शरैः किंचित्पीतं च किंचिदवपीतं चास्रं रक्तं येषां तेत एव च क्लिष्टाक्लिशितमूर्तयः किंचित्पीडितकिंचिदपीडिताङ्गाः ॥

१ ए सी °ता चा भ्रेमु°.

१ ए सामन्यैः २ सी °रुषाः । अ°. ३ ए सी ममध्य°. ४ ए सी डी °शेषेण°. ५ बी °र्थे व°. ६ ए सी डी °मत । पू°. ७ ए सी °चिक्कृत. ८ ए सी भ्रमि प्रा°. ९ ए सी °पीडता°.

कृताकृत । इत्यत्र "कृं०" [१०५] इत्यादिना कर्मधारयः ॥ इह: कावमवस्यादि-कारस्य चैकदेशविकृतानन्यत्वान्न नेदकत्वम् । तेन क्लिष्टाक्लिशित । छाताच्छिताः ॥ आदिग्रहणात् पीतावपीत[1] ॥

चक्रे क्लिशितमक्लिष्टं पुनः परमविह्वलम् ।
उत्तमास्त्रैर्महेभस्थः सन्नृपः स द्विषां बलम् ॥ ८६ ॥

८६. सन्नृपः श्रेष्ठभूपः स मूलराजो महेभस्थः सन् द्विषां बलं सैन्यमक्लिष्टं पूर्वमपीडितं सदुत्तमास्त्रैर्दिव्यप्रभावादिनोत्कृष्टैः प्रहरणैः कृत्वा पुनर्भूयोपि क्लिशितं[2] पीडितं चक्रे । कीदृशम् । परमविह्वलं भयेनातिकातरम् ॥

उत्कृष्टास्त्राण्ययो वर्षन्दैत्यवृन्दारकः क्रुधा ।
पुंनागैरावृतं राजकुञ्जरं भत्यधावत ॥ ८७ ॥

८७. अयो[3] दैत्यवृन्दारको दानवश्रेष्ठो ग्राहारिरुत्कृष्टास्त्राणि वर्षन्मुञ्चन्सन् राजकुञ्जरं नृपश्रेष्ठं मूलराजं प्रति क्रुधाधावत । कीदृशम् । पुमांसो नागा इव गजा इव तैः पुंनागैर्नरश्रेष्ठैरावृतम् ॥

क्लिशितमक्लिष्टम् । इत्यत्र "सेट्क्तानिटा" [१०६] इति न कर्मधारयः ॥

सन्नृपः । महेभ । परमविह्वलम् । उत्तमास्त्रैः । उत्कृष्टास्त्राणि । इत्यत्र "सन्म-हत्[4]" [१०७] इत्यादिना कर्मधारय. ॥

दैत्यवृन्दारकः । पुंनागैः । राजकुञ्जरम् । इत्यत्र "वृन्दारक[5]" [१०८] इत्यादिना कर्मधारयः ॥

---

१ ए पीतावं°. २ सी °शित पी°. ३ बी अथ दै°. ४ सी °हत ब°. ५ बी °न्दारिक°.

कतरकठः कतमौत्सस्ते[1] ज्ञातोस्मि किंनृप[2] ।
इत्याक्षिपन्तावन्योन्यमयुध्येतामुभौ नृपौ ॥ ८८ ॥

८८. उभौ नृपावन्योन्यमयुध्येताम्[1] । किंभूतौ सन्तौ । अन्योन्यमाक्षिपन्तौ तर्जयन्तौ । कथमित्याह । हे किंनृप कुत्सितभूप कतरकठः कतमौत्सश्च[2] द्वयोः कठयोर्मध्ये[3] को नाम कठः कठप्रोक्तवेदाध्यायी द्विजभेदो वहूनामुत्सानां मध्ये को नामौत्सश्चोत्सस्यापत्यं[4] मुनिभेदश्च । भीरुत्वादिधर्मैरस्म्यहं ते त्वया ज्ञातो ज्ञायमानोस्मि । "ज्ञानेच्छा°" [५.२.९२] इत्यादिनासति क्तोत एवं त इत्यत्र कर्तरि षष्ठी । "क्तयोरसदाधारे" [२.२.९१] इत्यत्र कर्तृषष्ठ्या अनिषिद्धत्वादिति ॥

कतरकठः । कतमौत्सः । इत्यत्र "कतर°" [१०९] इत्यादिना कर्मधारयः ॥

किंनृप । इत्यत्र "किं क्षेपे" [११०] इति कर्मधारयः ॥

इभ्यपोटेभ्ययुवतिवत्तस्थुर्दूरतस्तयोः[1] ।
वृता हयकतिपयैर्गजस्तोकैश्च भूभुजः ॥ ८९ ॥

८९. हया ये कतिपयास्तैर्हयकतिपयैरल्पाश्वैर्गजस्तोकैश्चाल्पगजैश्च[5][6][7] वृता भूभुजस्तदा रणकर्मानुपयोगित्वात्तयोर्दूरतस्तस्थुः । इभ्यपोटेभ्ययुवतिवदिभ्या हस्तिन्यः स्त्रीजातिभेदः[8] । कामशास्त्रे हि पीनस्तनत्वसूक्ष्माक्षत्वादिहस्तिनीधर्मोपेता[9][10] स्त्री हस्तिनीत्युच्यते । पुरुषवेषधारिण्यः स्त्रियः पोटाः । गर्भ एव दास्यं प्राप्ता[11] वोभयव्यञ्जना वा भुजिष्यदास्यो वा । तथेभ्या हस्तिन्यः स्त्रीजातिभेदः करेणव एव वा ।

---

१ सी °स्मि क नृ°. २ प °नृप. ।. १ डी °स्तदा ।.

---

१ प सी °ध्येता किं°. २ बी °तमोत्स°. ३ प सी कण्ठयो°. ४ प सी नासौत्स°. ५ सी °व म इ°. ६ प सी डी °कयै°. ७ प सी °श्वैगज°. ८ प सी °भेदा का°. बी °भेदाः का°. ९ प सी °क्ष्माक्षत्वा° १० बी पेता स्त्री. ११ सी प्रावाम°.

युवतयस्तरुण्यः । कर्मधारयगर्भो द्वन्द्वः । यथेभ्यपोटा इभ्ययुवतयश्च तयोर्दूरे[2] तस्थु. । हस्तिन्योपि ह्यशूरत्वाद्युद्धे तथा नोपयुज्यन्त इति रणादूरे तिष्ठन्ति ॥

गोगृष्टिगोवष्कयिणीगोवेहद्गोवशा इव ।
तौ भूगोधेनुगोपालावयोद्धून्न प्रजघ्नतुः ॥ ९० ॥

९०. तौ मूलराजग्राहारी अयोद्धृन्रणकौतुकालोक्यादिलोकांश्च प्रजघ्नतुः । गोगृष्टिगोवष्कयिणीगोवेहद्गोवशा इव । गृष्टिः सकृत्प्रसूता । वष्कयिणी या वष्कयेण[3] वृद्धवत्सेन दुह्यते । वेहद्गर्भघातिनी । वशा[4] वन्ध्या । कर्मधारयगर्भे द्वन्द्वे ता इव । सर्वा हि गावोवध्याः । यतः किंभूतौ । धेनुर्नवप्रसूता गौश्चासौ धेनुश्च[5] गोधेनुर्भूरेव पालयत्वाद्गोधेनुस्तस्यां गोपालौ पालकत्वाद्गल्लवतुल्यौ । गोपालौ हि गाः पालयतो न तु हिंस्त इति ॥

कठश्रोत्रियकालापाध्यायकौत्सप्रवक्तृवत् ।
कठधूर्तो नु सौराष्ट्रश्चौलुक्यास्त्राण्यवञ्चयत् ॥ ९१ ॥

९१. सौराष्ट्रो ग्राहारिश्चौलुक्यास्त्राण्यवञ्चयद्भ्यस्तास्त्रविद्यत्वात्स्वतोटालयत् । यथा कठधूर्तो वञ्चकः कठः कठश्रोत्रियकालापाध्यायकौत्सप्रवक्तृवत् । श्रोत्रियश्छन्दोध्यायी । कालापः कलापिप्रोक्तग्रन्थाध्यायी । प्रवक्तोपाध्यायः । कर्मधारयगर्भे पदत्रयद्वन्द्वे । एतान्वञ्चयति ॥

---

१ सी °गर्भे द्व°. डी °गर्भद्व°. २ बी °रे तस्थु. ।. ३ ए सी °ण गृद्ध°. ४ सी वा वन्ध्या । क°. ५ बी °श्च गोधे°. ६ डी सदान्य°. ७ ए सी °पदान्द्व°. ८ ए सी °स्त्रास्त्रवि°. ९ बी °त्रिय का°. १२ ए सी °लापाः क°. ११ ए सी °द्वय°.

गदामतल्लिकां सोथ दैत्यतल्लजकोमुचत् ।
भ्रष्टाश्वगर्भिणीगर्भं गर्जन् गूर्जरभूपतौ ॥ ९२ ॥

९२. अथ स दैत्यतल्लजको दानवश्रेष्ठो आहारि[1]र्गदामतल्लिकां श्रेष्ठं गदाख्यमायुधभेदं गूर्जरभूपता[2]वमुचदक्षिपत् । कीदृक्सन् । अश्वाश्च ता गर्भिण्यश्चाश्वगर्भिण्यो भ्रष्टाः साध्वसातिरेकादधःपतिता अश्वगर्भिणीनां गर्भा यत्र तद्यथा स्यादेवं गर्जन्महासिंहनादं मुञ्चन् । स्वभावान्मतल्लिकादयः प्रशंसायां रूढा आविष्टलिङ्गाश्च ॥

इ[3]भ्यपोटा । इभ्ययुवति । गजस्तोकैः । हयकतिपयैः । गोगृष्टि । गोधेनु । गो[4]वशाः । गोवेहत् । गोबष्कयिणी । औत्समवक्तृवत् । कठश्रोत्रिय । कालापाध्या[5]यक । कठधूर्तः । गदामतल्लिकाम् । दैत्यतल्लजकः । इत्यत्र "पोटायुवति°" [१११] इत्यादिना कर्मधारयः ॥

अश्वगर्भिणी । इत्यत्र "च[6]तुष्पाद्गर्भिण्या" [११२] इति कर्मधारयः ॥

शिरस्का[1]द्युवखलति[2]र्बुद्धैर्युवजरन्नथ ।
स्मिताद्युवपलितस्तां शक्त्या चिच्छेद राजि[3]भूः ॥ ९३ ॥

९३. अथ राजि[7]भूर्मूलराजस्तां गदां शक्त्याखभेदेन चिच्छेद । कीदृक्सन् । शिरस्काच्छिरस्त्राणाद्युवखलति[8]स्तरुणः सन्खल्वाटस्तथा बुद्धै[10]र्युवजरंस्तरु[11]णः सन्वृद्धस्तथा स्मिताद्दाक्षेपोत्थहासाद्युवपलितस्तरुणः सन्सितकचः ॥

१ सी °स्काद्यव°. २ डी °तिर्युद्धे युव°. ३ डी° जिस्रः.

१ प सी °रिगदा°. २ प सी °तावद° डी °तावुद°. ३ प सी भ्य°. ४ प सी डी वशा । गो°. ५ प सी °यकः । क°. ६ बी °तुष्पाद्ग°. ७ डी °जिसूर्मू°. ८ प सी °स्तरुणः. ९ डी °याद्युन्व°. १० प सी बुद्धेर्यु°. ११ प सी °रुण म°.

ग्राहारिर्युववलिनोभूद्भालवलिभिः क्षुधा ।
भोज्यतिक्तं नु भुञ्जानस्तुल्यसास्रे दृशौ दधत् ॥ ९४ ॥

९४. ग्राहारिः[1] क्षुधा ये भालवलयो ललाटरेखास्तैः[2] कृत्वा युववलिनो[3] युवा सन्वलियुक्तो वृद्धोभूत् । कीदृक् । सास्रे क्षुधाश्रुयुते तुल्ये च ते सास्रे च तुल्यसास्रे दृशौ दधत् । भोज्यतिक्तं[4] भुञ्जानो नु तिक्तं कटु तीक्ष्णरसमपि कटुत्वात्तिक्तशब्देनोच्यते । भोज्यं च तत्तिक्तं च भोज्यतिक्तं तीक्ष्णं त्रिकटुकादि तद्भुञ्जान इव । त्रिकटुकादि भुञ्जानस्याक्षिणी सास्रे भवतः[5] ॥

दोर्भ्यां सदृशपीनाभ्यां भोज्यमन्नं नु लीलया ।
स गृहीत्वायसौ शङ्कू तुल्यौ सर्पाविवाक्षिपत् ॥ ९५ ॥

९५. स ग्राहारिरायसौ लोहमयौ[6] शङ्कू शर्वले मूलराजाभिमुखमक्षिपत् । किं कृत्वा । सदृशपीनाभ्यां तुल्यपीवराभ्यां दोर्भ्यां कृत्वा भोज्यमन्नं नु कवलमिव लीलयातिबलिष्ठत्वादनायासेन गृहीत्वा । किंभूतौ । तुल्यौ मिथः सदृशौ सर्पाविव कृष्णत्वाद्दीप्मत्वाच्च भुजङ्गाविव ॥

युवखलतिः । युवपलितः[7] । युवजरन्[8] । युववलिनः । इत्यत्र "युवाखलति°" [११३] इत्यादिना कर्मधारयः ॥

भोज्यतिक्तम् । तुल्यसास्रे । सदृशपीनाभ्याम् । इत्यत्र "कृत्य°" [११४] इत्यादिना कर्मधारयः ॥ अजात्येति किम् । भोज्यमन्नम् । तुल्यौ सर्पौ ॥

---

१ ए सी °हारि क्षु°. २ ए सी डी °रेखास्तैः. ३ बी °वलि°. ४ ए सी °क्तं नु भु°. डी °क्त नु भु°. ५ सी भवेत् ॥. ६ सी लोमयौ. ७ सी °पलित° । युवजरवलि°. ८ ए सी युवज°.

तौ चौलुक्यः कुमारप्रव्रजिताशापदुःसहैः ॥
कुमारश्रमणाशीलतीक्ष्णैर्बाणैः स्म कृन्तति ॥ ९६ ॥

९६. चौलुक्यो मूलराजस्तौ शङ्कू बाणैः कृन्तति स्माच्छिनत्। किंभूतैः। कुमारश्रमणाशीलतीक्ष्णैरपरिणीतभिक्षुकीव्रतवन्निशितैः। कुमारश्रमणाया ह्याजन्मब्रह्मचारिणीत्वेन सर्वदाप्यक्षतत्वाच्छीलमत्यन्तं तीक्ष्णं स्यात्। अत एव कुमारप्रव्रजिताशापदुःसहैः कुमारप्रव्रजिताक्रोशवद्दुःसहैः। कुमारप्रव्रजिताया ह्याबालकालाद्व्रतस्थत्वेन महाप्रभावत्वाच्छापोतिदुःसहः स्यात्॥

कुमारश्रमणा। कुमारप्रव्रजिता। इत्यत्र "कुमारः°" [११५] इत्यादिना कर्मधारयः॥

मयूरव्यंसकच्छात्रव्यंसकौ नु धियाथ तौ।
पतत्त्री रेजतुः प्लक्षन्यग्रोधाविव पत्रिभिः ॥ ९७ ॥

९७. अथ तौ नृपौ पतत्त्रिः पत्रिभिः शरैः कृत्वा रेजतुर्यथा प्लक्षन्यग्रोधौ पतत्त्रिः पत्रिभिः पक्षिभी राजतः। प्लक्षो वृक्षभेदः। किंभूतौ तौ। धिया कृत्वा मयूरव्यंसकच्छात्रव्यंसकौ नु बाह्यविकारादर्शनेन रम्याकारदेहनेपथ्यत्वान्मयूर इव मयूरः। व्यंसयति छलयति चेतसा व्यंसकः। एवं विनयादिदर्शनेनच्छात्र इवच्छात्रः। व्यंसकः पूर्ववत्। कर्मधारयगर्भे द्वन्द्वे। ताविव। अन्योन्यं पराभवार्थमत्यन्तं छलकबुद्धी इत्यर्थः॥

---

१ ए सी कृतन्तस्मा°. २ सी °श्रणा°. ३ ए सी °दशवैः। ४ ए सी °सह स्या°. ५ ए सी °त्रिभि प°. ६ सी °तौ धि° ७ सी °ति चे°. ८ ए सी °ने तच्छा°.

तौ स्निग्धं वाक्त्वचं पीठच्छत्रोपानहमुद्वहन् ।
धवखदिरपलाशान्प्रविश्यैक्षिष्ट नारदः ॥ ९८ ॥

९८. नारदः कलिकारकोऽपि शस्त्रापातभयाद्धवखदिरपलाशांस्तरुभेदान्प्रविश्य तौ नृपावैक्षिष्ट । कीदृक् । स्निग्धमरूक्षं वाक्त्वचं वचनमङ्गच्छविं च पीठच्छत्रोपानहं मुनित्वाद्बृसीछत्रिकापादुकाश्चोद्वहन्धारयन् ॥

मयूरव्यंसकच्छात्रव्यंसकौ "मयूर०" [११६] इत्यादिना निपात्यौ ॥

प्लक्षन्यग्रोधौ । वाक्त्वचम् । धवखदिरपलाशान् । पीठच्छत्रोपानहम् । इत्यत्र "चार्थे०" [११७] इत्यादिना द्वन्द्वः ॥

अथोत्क्षिप्य भ्रुवौ[1] वक्रे कुटिले दंष्ट्रिके रुषा ।
पृथुभीमे दृशौ दैत्यो महाभीमे भुजे दधत् ॥ ९९ ॥
तुल्यो हरीणामुत्पत्याध्यास्त चौलुक्यदन्तिनम् ।
शस्त्रीखड्गौ वहन्मातृमातारौ कीर्तियुद्धयोः ॥ १०० ॥

९९,१००. अथानन्तरं दैत्यो ग्राहारिरुत्पत्योत्प्लुत्य चौलुक्यदन्तिनमध्यास्त मूलराजवधायारोहत् । किं कृत्वा । रुषा कोपेन कुटिला च वक्रा च वक्रे भ्रूश्च भ्रूश्च भ्रुवौ नयनोर्ध्वरोमपद्धती उत्क्षिप्योत्पाट्य । तथा कीदृक्सन् । दधद्धारयन् । के के इत्याह । रुषा वक्रा च कुटिला च कुटिले । दंष्ट्रिका च दंष्ट्रिका च दंष्ट्रिके श्मश्रुणी ।

१ ए सी °वौ चक्रे.

१ ए सी °र्यपि०°. २ बी दारुपा°. ३ ए सी शमत्व च । भ°. ४ ए सी °श भ्रु°. ५ सी °भी स°.

रुषा हि श्मश्रुणी संस्फुरन्ती वक्रीस्याताम् । नासिकाग्रस्थसीमन्तकल्पश्मश्रुमध्यभूतप्रदेशविशेषेण द्विधाकृतत्वात् श्मश्रुणो द्वित्वम् । तथा रुषा पृथुभीमा च महाभीमा च पृथुभीमे दृक्क दृक्क दृशौ । रुषा हि दृशौ विस्तरतो रौद्रीस्यातां च । तथा रुषा चिकीर्षितोत्प्लवनवशेन वा पृथुभीमा च महाभीमा च महाभीमे भुजा च भुजा च भुजे च । तथा कीर्तियुद्धयोर्यथासंख्यं मातृमातारौ जननीपरिच्छेदकौ कीर्त्युत्पादिकारणसमापकावित्यर्थः । शस्त्रीखड्गौ क्षुरिकासी वहन् । तथा हरिश्च सिंहो हरिश्च मर्कटो हरिश्च दर्दुरस्तेषां हरीणां तुल्य उत्प्लवनेन सदृशश्च ॥

वक्रे । कुटिले । पृथुभीमे । महाभीमे । इत्यत्र "समानाम्°" [११८] इत्यादिनैकशेष. ॥ अर्थेन समानामिति किम् । शस्त्रीखड्गौ । कीर्तियुद्धयोः ॥

हरीणाम् । भ्रुवौ । दंष्ट्रिके । दृशौ । भुजे । इत्यत्र "स्यादौ°" [११९] इत्यादिनैकशेषः ॥ स्यादाविति किम् । माता च जननी माता च परिच्छेत्ता मातृमातारौ । अत्र ह्येकत्र मातरावन्यत्र मातारावित्यौकारे रूपं भिद्यते ॥

तौ भ्रात्रोः सुतयोर्न्वर्थे यमपुत्रौ नु शल्यसी ।
स्वसोदर्यौ नु बिभ्राणावेकेभस्थौ प्रजह्रतुः ॥ १०१ ॥

१०१. स च ग्राहारिश्च मूलराजश्च तौ । भ्रात्रोर्भ्रातुश्च स्वसुश्च सुतयोर्वा । वाशब्दो ज्ञेयः । सुतस्य दुहितुश्च वार्थे नु कार्य इव प्रजह्रतुर्मिथो जघ्नतुः । किंभूतौ सन्तौ । एकेभस्थावेकगजे वर्तमानौ । तथा

१ ए सी °यो न्वर्थे.

१ ए °घाणि न्म°. २ ए सी डी °स्थसम°. ३ बी °कीर्षतो°. ४ ए सी भुजे. ५ ए सी डी °कादित्य°. ६ ए सी डी °णा तेन उ°. ७ ए सी °त्रो भ्रातु°. ८ ए सी °तयोर्वा ।. ९ बी °तश्च दुहितश्च.

शल्यसी क्षुरिकाखड्गौ स्वसोदर्यौ नु स्वकीयौ भगिनीमिव सोदर्यमिव चादरादित्यर्थः । बिभ्राणौ । कीदृशौ शल्यसी । यमपुत्रौ नु यमस्य सुता च पुत्रश्च पुत्राविव मृत्युहेतुत्वकृष्णत्वादिना यमपुत्रिकापुत्रतुल्यौ ॥

तौ । इत्यत्र "त्यदादिः" [१२०] इति त्यदादेः शेषः ॥

भ्रात्रोः । सोदर्यौ । पुत्रौ । सुतयोः । इत्यत्र "भ्रातृ°" [१२१] इत्यादिना भ्रात्रर्थपुत्रार्थयोः शेषः ॥

कुमारमातापितरौ प्रद्युम्नपितरौ च ते ।
क्रुद्धाववधेति चौलुक्यो ब्रुवन्दैत्यमपातयत् ॥ १०२ ॥

१०२. चौलुक्यो दैत्यमपातयद्गजाद्भूमावभ्रंशयत् । कीदृक्सन् । ब्रुवन् । किमित्याह । कुमारमातापितरौ गौरीश्वरौ प्रद्युम्नपितरौ च लक्ष्मीविष्णू च ते तवाद्य क्रुद्धाविति ॥

पितरौ । इत्यत्र "पिता मात्रा वा" [१२२] इति पितुर्वा शेषः ॥ पक्षे । मातापितरौ । मातुरर्च्यत्वात्पूर्वनिपातः ॥

स तं शिवश्वशुरयोः पुत्रो नूत्पत्य दुर्धरः ।
आक्रन्दिश्वश्रूश्वशुरं ववन्धेभवरत्रया ॥ १०३ ॥

१०३. स मूलराजस्तं ग्राहारिमिभवरत्रया ववन्ध । किं कृत्वा । दुर्धरो महाबलत्वात्केनापि धर्तुमशक्यः सन् श्वशुरश्च श्वश्रूश्च श्वशुरौ शिवस्य शम्भोः श्वशुरौ शिवश्वशुरौ तयोर्हिमाद्रिमेनयोः पुत्रो नु मैनाका-

---

१ ए सी °वेदति. २ बी ववन्धुर°.

---

१ सी °दारे. वे°. २ ए सी °दयो । पु°. ३ सी °ममाव्र°. ४ ए सी °र्णाविष्ण. ५ ए सी श्वशुर°. ६ बी डी श्वशुरो. ७ ए सी °नयो पु°.

द्रिरिवोत्पत्योत्प्लुत्य यथा मैनाकः सपक्षत्वेनोत्पतत्येवं दुर्धरत्वाद्गजाद्भूमौ निपत्येत्यर्थः । कथं भवन्ध । आक्रन्दिनौ रुदन्तौ भ्राहारेः श्वश्रूश्वशुरौ यत्र तद्यथा स्यात् ॥

श्वशुरयोः श्वश्रूश्वशुरम् । इत्यत्र "श्वशुरः श्वश्र्वां वा" [१२३] इति वा श्वशुरस्य शेषः ॥

गार्ग्यौ वात्स्यौ तुष्टुवतुरिन्द्रौ च ब्राह्मणाविव ।
इन्द्रेन्द्राण्यो रिपौ बद्धे तमुपेन्द्रं बलाविव ॥ १०४ ॥

१०४. इन्द्रेन्द्राण्यो रिपौ भ्राहारौ बलाविव बलिदैत्य इव बद्धे तं मूलराजमुपेन्द्रमिव विष्णुमिव तुष्टुवतुः । कौ काविताह । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ वात्सी च वात्स्यायनश्च वात्स्यौ । तथेन्द्रौ चेन्द्रेन्द्राण्यौ । किंवत् । ब्राह्मणश्च ब्राह्मणी च ब्राह्मणाविव भट्टभट्टिन्याविवेत्यर्थः ॥

गार्ग्यौ । इत्यत्र "वृद्धो यूना°" [१२४] इत्यादिना वृद्धशेषः ॥

वात्स्यौ । इत्यत्र "स्त्री पुंवच्च" [१२५] इति वृद्धस्त्रियाः शेषः । पुंवच्चेयं स्यात् ॥

ब्राह्मणौ । इत्यत्र "पुरुषः स्त्रिया" [१२६] इति पुरुषशेषः ॥ तन्मात्रभेद इत्येव । इन्द्रेन्द्राण्योः । अत्र भवयोगलक्षणोर्थभेदः । अन्ये तु तन्मात्रभेदादधिके प्रकृतिभेद एवैकशेषं नेच्छन्ति । अर्थभेदे त्विच्छन्त्येव । इन्द्रौ ॥

---

१ ए सी °नाकस°. २ ए सी डी °श्वशुरौ. ३ बी श्वसुर°. ४ ए सी °श्वसुर°. ५ बी श्वसुरः. ६ बी श्वसुर°. ७ ए सी मूल रा°. ८ ए सी किंव ब्रा°. डी किंच ब्रा°. ९ ए सी °शेष पु°. १० ए सी °त्र पुंव°. ११ डी °दाधि°.

इमा गाव इमे वत्सा इमेश्वा रुरवो रयात् ।
यान्त्वित्यस्य प्रेहे जल्पल्लक्षोथाधावत क्रुधा ॥ १०५ ॥

१०५. अथ लक्ष. क्रुधा मूलराजं प्रत्यधावत । कीदृक्सन् । स्नेहातिरेकाज्जल्पन । किमित्याह । अस्य प्राहारेर्गेहे बन्धे सति रयाच्छीघ्रं यान्त्वपगच्छन्तु । के क इत्याह । गावश्च स्त्रियो गावश्च पुरुषा इमा गावो धेनुवृषाश्चर्यो वत्साश्चेमे वत्साश्चेमा इमे वत्सास्तथाश्वाश्चेम अश्वाश्चेमा इमेश्वास्तथा रुरवश्च मृगभेदाश्चेमे रुरवश्च मृगीभेदाश्चेमा इमे रुरवश्च । प्राहारिगृहे गवादिभिर्मे न किंचित्प्रयोजनमित्यर्थ इति ॥

इमा गाव. । इत्यत्र "ग्राम्या" [१२७] इत्यादिना स्त्रीशेषः ॥ ग्राम्येति किम् । आरण्याना मा भूत् । इमे रुरव ॥ अशिशुग्रहणं किम् । इमे वत्साः । द्विशफेति किम् । इमेश्वा. ॥

वासोङ्गरागं माल्यं च बिभ्रत्सितानि तन्सिनम् ।
कुर्वानो दन्तकान्त्यैन्य चौलुक्यमिनि सोभ्यधात् ॥ १०६ ॥

१०६. स लक्षश्चौलुक्यमेन्यागत्येति वक्ष्यमाणमभ्यधादवोचत् । कीदृक्सन । सित च सितश्च सिता च सितानि श्वेतानि वासो वस्त्रमङ्गरागमङ्गविलेपन माल्यं च पुष्पस्रज च बिभ्रन् । तथा दन्तकान्त्या शुभ्रा सितं श्वेतानि वस्त्रानि वासोङ्गरागं माल्यं च कुर्वानः श्वेतत्वाधिक्यादाच्छादयन ॥

---

१ प सी 'क्षोथाधा', डी 'क्षोथाधत क्रुधा ।. २ प सी 'कान्त्येन.

---

१ प सी 'हि पर', २ डी [illegible] ३ प सी [illegible] ४ प सी [illegible] ५ डी [illegible] ६ प सी [illegible] ७ प सी [illegible] ८ डी [illegible] ९ सी ४ [illegible] १० प डी [illegible] ११ प सी [illegible] १२ प सी [illegible]

तत्सितम् सितानि । इत्यत्र "क्लीबम्°" [१२८] इत्यादिना क्लीबं शिष्यते तथैकमेकार्थं वा ॥

मूल पुष्यपुनर्वस्वोश्चन्द्रस्तेद्योद्रणे मयि ।
यन्मे ग्राहारेश्च तिष्यपुनर्वस्वोर्नु नान्तरम् ॥ १०७ ॥

१०७. हे मूल मूलराज "ते लुग्वा" [३.२.१०८] इत्युत्तरपदलोपः । अनेन च संबोधनेनास्य मूलनक्षत्रजातत्वमुक्तम् । मूलजातानामेव हि प्रायेण नामादौ मूलशब्दः स्यात् । मय्युद्रणे रणायोद्यतेद्य ते तव चन्द्रो वर्तते । क । पुष्यपुनर्वस्वोः । अत्र पुनर्वस्वन्त्यैकपादे पुनर्वसुशब्दः । पुष्यश्च पुनर्वसू च पुष्यपुनर्वसू तयोः । उपश्लेषसप्तमीयम् । पुष्यपुनर्वसुभ्यां संयुक्त इत्यर्थः । अष्टमश्चन्द्र इत्यर्थः । मूलपूर्वाषाढोत्तराषाढापाद एको धनुरिति वचनान्मूलजातस्य राज्ञो धनू राशिः । पुनर्वसुपाद एकः पुष्याश्लेषाश्च कर्क इत्युक्तेः पुनर्वस्वन्त्यैकपादपुष्याश्लेषायुक्तश्चन्द्रः कर्कराशिस्थो धनूराशेश्च कर्कोष्टम इति तत्स्थश्चन्द्रोप्यष्टमः । अष्टमे प्राणसंदेह इत्युक्तेश्च तवाद्य प्राणसंदेह इति तात्पर्यम् । स्वस्योद्रणत्वे हेतुमाह । यदित्यादि । यद्यस्माद्धेतोर्मे ग्राहारेश्च नान्तरं न विशेषो मिथोन्तरङ्गमैत्र्यावयोरेक एवात्मेत्यर्थः । अत्रैव शब्दश्लेषोपमामाह । तिष्यपुनर्वस्वोर्नु यथा पुष्यपुनर्वसुनक्षत्रयोर्व्यवधायकान्यनक्षत्राभावेनान्तरं व्यवधानं न स्यात् ॥

पुष्यपुनर्वस्वो° । तिष्यपुनर्वस्वोः । इत्यत्र "पुष्या°" [१२९] इत्यादिना पुनर्वसुर्व्यर्थ एकार्थः स्यात् ॥

---

१ए सी डी °स्वोश्चन्द्र°.

---

१ ए सी °रू च पुष्यपुनर्वसू त°. २ बी °र्थ. । मू°. ३ ए सी डी एकपु°. ४ सी °श्च कार्को°. ५ सी °यममादे°. ६ ए सी °षो मिथोन्तरं न विशेषो मि°. ७ बी °सुव्यर्थ°.

मुञ्चामुं क्रोधमानौ च लाभालाभं स्मरात्मनः ।
सुखदुःखौ भजेद्भावौ लाभालाभौ हि चिन्तयन् ॥१०८॥

१०८. हे राजन्नमुं ग्राहारिं क्रोधमानौ च कोपाहंकारौ च मुञ्च तथात्मनो लाभालाभं स्मर । एवं कुर्वतो मम लाभोलाभो वेति परिभावय । हि यस्माल्लाभालाभौ चिन्तयन्परिभावयन्सुखदुःखौ सुखदुःखहेतू भावौ[1] पदार्थौ भजेत् । लाभार्थमलाभपरिहाराय[2] च सुखहेत्वर्थवद्दुःखहेतुमप्यर्थमङ्गीकरोतीत्यर्थः । तस्माद्ग्राहारेर्मोचनं स्वस्य ससैन्यस्यानेकसंपत्तिहेतुत्वाल्लाभकारणममोचनं तु क्षयहेतुत्वादलाभकारणं परिभाव्य दुष्करमपि ग्राहारिमोचनं कुर्विति तात्पर्यार्थः ॥

लाभालाभम् लाभालाभौ । अत्र "विरोधिनाम्°" [१३०] इत्यादिना द्वन्द्वो वैकार्थः ॥ विरोधिनामिति किम् । क्रोधमानौ । अद्रव्याणामिति किम् । सुखदुःखौ भावौ ॥

अथाश्ववडवाविच्छेर्बद्धाश्ववडवं न्विमम् ।
तत्स्वे पूर्वापरे ब्रूहि ब्रूमः पूर्वापरं युधि ॥ १०९ ॥

१०९. अश्ववडवं नु तुरंगतुरङ्गयाविवामुं ग्राहारिं बद्धाथ यद्यश्ववडवौ तुरगतुरङ्गयौ । उपलक्षणत्वाद्धस्तिरत्नस्वर्णादिदण्डं चेच्छेर्वाञ्छसि तत्तदा स्वे आत्मीये पूर्वापरे आद्यन्ते पूर्वजान् भ्रातृपुत्रपौत्रादिं[6] पाश्चात्यं स्वसंतानं च कथय त्वद्वंशे[7] यः[8] ग्राहारेर्दण्डं जग्राह यो ग्रहीष्यति च तौ प्रकटयेत्यर्थः । इदमुक्तं भवति । मयि सति तव वंशे स कोपि नाभून्न भविष्यति च यो ग्राहारेर्दण्डं गृहीतवान्[9] ग्रहीष्यति वा ।

---

१ सी °वौ पादा°. २ सी °हाय. ३ बी °वद्दुख°. ४ डी °त्वाल्लोभ°. ५ सी °रक्षतु°. ६ बी °दिं पश्चा°. ७ डी °द्वशो यो°. ८ ए सी योर्ग्राहा°. ९ ए °न् गृही°.

तस्मात्त्वमपि दण्डग्रहणविषयासद्ग्राहं मा कृथा इति । ननु त्वमपि[1] तं स्ववंश्यं कंचन प्रकटय येन मया बद्धः शत्रुर्मोचितो मोचयिष्यते वेत्याशङ्क्याह । ब्रूमः[2] पूर्वापरं युधि । वयं तु स्वं पूर्वापरमाद्यन्ते युधि रणे ब्रूमः स्वदो[3]र्बलप्रकटनेनाधुनैव प्रकटयामः ॥

माधरोत्तरमीक्षस्व कोधरोत्तरयोस्तव ।
गोमहिषेणेव गोमहिषौ युध्यस्व भो मया ॥ ११० ॥

११०. अधरोत्तरं मेक्षस्व भयाकुलतयाधरदेशमूर्ध्वदेशं[4] च मा विलोकय । यतोधरोत्तरयोरधरो[5]र्ध्वप्रदेशयोस्तव संबन्धी कोस्ति । न न कोपीत्यर्थः । तर्हि किं कार्यमित्याह । यथा गोमहिषौ शण्डलुलायौ गोमहिषेण शण्डमहिषाभ्यां सह युध्येते तथा भो मूलराज त्वं मया सह युध्यस्व ॥

चौलुक्योथाह कोपेपि क्षरन्दधिघृतं गिरा ।
असौ मोच्यः कथं यस्य गावो दधिघृते सदा ॥ १११ ॥

१११. अथ चौलुक्यः कोपेपि क्रोधे सत्यपि महापुरुषत्वाद्गिरा कृत्वा दधिघृतं मधुरत्वाद्दधिसर्पिषी इव क्षरन्सन्नाह । किमित्याह । यस्य ग्राहारेः सदा गावो दधिघृते दधिघृततुल्या महापापिष्ठत्वाद्धे[7]नवो यस्य भोज्या इत्यर्थः । असौ ग्राहारिः कथं मोच्यस्त्याज्यो न कथमपीत्यर्थः ॥

---

१ बी °पि त्व स्व°. सी °पित. स्व व°. २ ए सी ब्रूम पू°. ३ ए सी °दोर्बप्र°. ४ ए सी °मूर्द्धदे°. ५ ए सी °रोर्द्धप्र°. ६ ए सी डी °ला......६°. ७ ए सी डी °पिष्ठाद्धे°. ८ ए सी °हारिक°.

अश्ववडवम् अश्ववडवौ । पूर्वापरं पूर्वापरे । अधरोत्तरम् अधरोत्तरयोः । इत्यत्र "अश्ववडव°" [१३१] इत्यादिना वैकार्थता ॥ अश्ववडवेति निर्देशादेवेतरेतरयोगे ह्रस्वत्वं निपात्यते ॥

पशु । गोमहिषेण गोमहिषौ ॥ व्यञ्जन । दधिघृतम् दधिघृते । अत्र "पशु°" [१३२] इत्यादिना द्वन्द्व एकार्थो वा ॥

कुशकाशमसौ पापः कुशकाशा इमे नृपाः ।
सारो धवाश्वकर्णं नु त्वं मुमोचयिषन्नमुम् ॥ ११२ ॥

११२. पापोसौ ग्राहारिः । कुशकाशं कुशा दर्भाः काशा इषीकाख्यास्तृणभेदा द्वन्द्वे । कुशकाशमिवासार इत्यर्थः । तथेमे ग्राहारिसत्का नृपाः कुशकाशाः । ग्राहारिमोचनेशक्तत्वादसारा इत्यर्थः । एवं च यदि परममुं ग्राहारिं मुमोचयिषन्मोचयितुमिच्छंस्त्वमेव धवाश्वकर्णं नु । धवाश्वकर्णाख्यवृक्षभेदा इव सारो बलिष्ठः । काकुव्याख्योपहासगर्भवाक्यार्थत्वादयमत्र तात्पर्यार्थः । न हि ग्राहारिस्तन्नृपाश्चासमर्था आसन्परं ग्राहारिः सर्वेषु नृपेषु पश्यत्सु मया बद्धोतस्त्वमेकोमुं मुमोचयिषुः कियन्मात्र इति ॥

युध्यसे चेदसौ दोस्त्वां तिलमाषान्नु पेक्ष्यति ।
भङ्क्ता धवाश्वकर्णान्किं तिलमाषेनिलः स्खलेत् ॥ ११३ ॥

११३. चेद्यदि युध्यसे त्वं तदासौ मामकीनो दोस्तिलमाषान्नु तिलमाषानिवासारत्वाल्लीलया त्वां पेक्ष्यति संचूर्णयिष्यति । दृष्टान्त-

१ सी °शम°. २ ए सी °मसो पा°.

१ ए सी डी °त । गो°. २ ए सी °शनिवा°. ३ ए सी °ममुग्रा°. ४ सी हि गृग्रा°.

माह । धवाश्वकर्णान्भङ्क्त्वानिलः किं तिलमाषे स्खलेत् । तदिदमत्राकूतम् । यो धवाश्वकर्णवत्सारान् आहार्यादीन्भङ्क्त्वा सोनिलेमहाबलो महोर्दण्डस्तिलमाषतुच्छे त्वयि किं कदाचित्स्खलेत् ॥

ऋश्यैणानां समैरश्वैर्यद्यृश्यैणं नु नङ्क्ष्यसि ।
याहीदानीं मा तित्तिरिकपिञ्जलमिवारट ॥ ११४ ॥

११४. ऋश्यैणानां भाल्लूकानां मृगभेदानां च समैः शीघ्रत्वादिना तुल्यैरश्वैः कृत्वा ऋश्यैणं नु ऋश्यैणा इव यदि त्वं नंक्ष्यसि तदेदानीमेव याहि । यदि पश्चादपि रणे नङ्क्ष्यसि तदा प्रथममेव नश्येत्यर्थः । तित्तिरिकपिञ्जलमिव । तित्तिरिः प्रसिद्धः । कपिञ्जलो गौरतित्तिरिः । बहुवचनसमाहारे । तदिव मारट स्वविकत्थनेन मा पूत्कुरु ॥

इत्युक्तः सोग्रहीच्चापं मन्वानोश्वरथं श्रितान् ।
द्विपो न दंशमशकं न तित्तिरिकपिञ्जलान् ॥ ११५ ॥

११५. इत्येवंप्रकारेणोक्तः स लक्ष्श्चापमग्रहीत् । कीदृक्सन् । अश्वरथं श्रितानश्वान्रथांश्चारूढान्द्विपो दंशमशकं दंशा मशकाश्च क्षुद्रजन्तुभेदाः प्रसिद्धा असारत्वात्तत्तुल्यानपि न मन्वानो न मन्यमानस्तथा तित्तिरिकपिञ्जलांस्तित्तिरिकपिञ्जलतुल्यानपि न मन्वानश्च ॥

तरु । धवाश्वकर्णम् धवाश्वकर्णान् ॥ तृण । कुशकाशम् कुशकाशाः ॥ धान्य । तिलमाषे तिलमाषान् ॥ मृग । ऋश्यैणम् ऋश्यैणानाम् ॥ पक्षिन् । तित्तिरिकपिञ्जलम् तित्तिरिकपिञ्जलान् । अत्र "तरुतृण°" [१३३] इत्यादिना द्वन्द्व एकार्थो वा ॥

---

१ ए °रय ॥. २ बी °त्तिरक°.

---

१ ए सी °लवद्दा°. डी °लवन्मद्दा° २ सी °तु त्व°. ३ बी °चित्खले°. ४ बी °ना भङ्लू°. ५ ए सी डी नङ्क्षसि. ६ सी °रुते ॥. ७ ए सी °रत्वोच्च°. ८ सी °तुल्योन°. ९ बी °त्तिरक°. १० सी °श्यैणा°. ११ बी °त्तिरक°.

सेनाङ्ग । अश्वरथम् ॥ क्षुद्रजन्तु । दंशमशकम् । अत्र "सेनाङ्ग°" [१३४] इत्यादिना द्वन्द्व एकार्थः ॥

बदरामलकं धानाशष्कुलीर्वाशितुं परान् ।
वर्षतीषून्द्विजक्षत्रविट्शूद्रास्तत्र तत्रसुः ॥ ११६ ॥

११६. द्विजक्षत्रविट्शूद्रास्तत्रसुः । विभ्युः । क्व सति । तत्र लक्षे । कीदृशि । इषून्वर्षति । किं कर्तुम् । परान्बदरामलकमिव । ईवोत्रापि योज्यः । बदरीफलामलकीफलानीव । तथा धानाशष्कुलीव । धाना भृष्टा यवाः । शष्कुली प्रसिद्धा । खाद्यभेदः । द्वन्द्वे तदिव चाशितुं भक्षयितुमनायासेन विनाशयितुमिति यावत् ॥

द्विजक्षत्रियविट्शूद्रं त्रातापध्वनयद्धनुः ।
जयाय भेरीशङ्खं च सद्यो भैरिकशाङ्खिकम् ॥ ११७ ॥

११७. द्विजक्षत्रियविट्शूद्रं त्रातापि रक्षितापि मूलराजोपि सद्यस्तत्क्षणादेव जयाय धनुरध्वनयज्ज्याकर्षणेनावादयत् । तथा मूलराजसत्कभैरिकशाङ्खिकं भेरीवादनशिल्पाः शङ्खवादनशिल्पाश्च जयाय विजयसूचकं भेरीशङ्खमध्वनयत् ॥

ज्यानादैर्धनुरस्योच्चैः शिरोग्रीवमधुन्वतः ।
मत्यष्ठात्कठकालापमुदगाच्चेत्युवाच नु ॥ ११८ ॥

११८. अस्य मूलराजस्य धनुर्धरोत्तमत्वेन लक्षबद्धदृष्टित्वाच्छिरो-

१ ए सी °वासितु. २ ए °च नुः ॥

१ बी इतोत्रा°. १ ए सी °फलम°. ३ बी °ना भ्रष्टा°. ४ ए °व चाशतु भक्ष°. सी °व वाशक्ष°. ५ ए सी रक्षता°. ६ ए सी °लसज°. डी °लसत्क°.

ग्रीवमधुन्वतोकम्पयतः सतो धनुः कर्तृ । उच्चैरुदात्तैर्ज्यानादैः कृत्वोवाच नु कठकालापारिदैत्यानां निर्णीतवधत्वेन बभाष इव । किं तदित्याह । कठाः कालापाश्च शाखाध्ययननिमित्तव्यपदेशभाजो द्विजाश्चरणाख्या द्वन्द्वे । तत्प्रत्यष्ठादुदगाच्च प्रतिष्ठामभ्युन्नतिं च प्राप्तमिति ॥

बदरामलकम् । इत्यत्र "फलस्य जातौ" [१३५] इति द्वन्द्व एकार्थः ॥

धानाशष्कुलि । इत्यत्र "अप्राणि°" [१३६] इत्यादिना द्वन्द्व एकार्थः ॥ प्राणिपश्वादिवर्जनं किम् । द्विजक्षत्रियविट्शूद्राः द्विजक्षत्रियविट्शूद्रम् । गोमहिषौ गोमहिषम् । इत्यादीनि पूर्वोक्तान्येव ज्ञेयानि ॥

प्राण्यङ्ग । शिरोग्रीवम् ॥ तूर्याङ्गम् । भेरीशङ्खम् । भैरिकशाङ्खिकम् । अत्र "प्राणि°" [१३७] इत्यादिना द्वन्द्व एकार्थः ॥

प्रत्यष्टात्कठकालापम् । उदगात्कठकालापम् । अत्र "चरणस्य°" [१३८] इत्यादिना द्वन्द्व एकार्थः ॥

वाजपेयचयनयोरिषुवज्रयोर्नु तौ ।
अर्काश्वमेधे नु रणे चक्रतुः शरमण्डपम् ॥ ११९ ॥

११९. यथा वाजपेय-चयन-इषु-वज्र-अर्क-अश्वमेधाख्येषु यागभेदेषु च्छायाद्यर्थं शरमण्डपं कौचित्कुरुतस्तथा रणे तौ मूलराजलक्षौ निरन्तरमोक्षैः शरमण्डपं बाणमण्डपं चक्रतुः ॥

अर्काश्वमेधे । इत्यत्र "अक्लीबे°" [१३९] इत्यादिना द्वन्द्व एकार्थः ॥ अक्लीब इति प्रसज्यप्रतिषेधः किम् । वाजपेयं च चयनं च तयोर्वाजपेयचयनयोः । इमौ

१ ए सी °चन°.

१ बी °ठा. कला°. २ बी °निनिमि°. ३ ए सी °गाश्च प्र°. ४ ए सी डी °र्थः । + + + प्रत्य°. ५ सी °काप°. ६ सी °ठला°. ७ ए सी °दिनो ए° ८ डी °ना ए°.

क्रतू पुंलिङ्गावपि स्त इति पर्युदासाश्रयणेत्रापि स्यात् ॥ अध्वर्युग्रहणं किम् । इषुवज्रयोः । अध्वर्यवो यजुर्वेदविदस्तेषां वेदोप्यध्वर्युस्तत्र विहिताः क्रतवोश्वमेधादयोध्वर्युक्रतवः । इषुवज्रौ तु सामवेदविहिताविति ॥

युत्संहिताया विस्तारात्पदकक्रमकं नु तौ ।
स्तुतौ देवासुरैः सर्पनकुलं नु विरोधतः ॥ १२० ॥

१२०. तौ देवासुरैः स्तुतौ देवैर्मूलराजः प्रशंसितोसुरैस्तु लक्ष इत्यर्थः । किंभूतौ सन्तौ । विरोधतो वैराद्धेतोः सर्पनकुलं नु सर्पनकुलतुल्यावत एव युद्रणं सैव स्वर्गफलत्वात्संहिता वैदिको ग्रन्थस्तस्या विस्ताराद्विस्तारणाद्धेतोः पदकक्रमकं नु पदानन्तरं क्रमस्य पाठात्पदक्रमौ निकटपाठौ पाठविशेषावधीयाते "पदक्रम°" [६.२.१२६] इत्यादिनाके पदकश्च क्रमकश्च तदिव । यथा पदाध्यायकक्रमाध्यायकौ यथोक्तेन संहितास्थपदक्रमपठनेन संहिताया विस्तारकावेवं युधो विस्तारकावित्यर्थः ॥

पदकक्रमकम् । इत्यत्र "निकटपाठस्य" [१४०] इति द्वन्द्व एकार्थः ॥
सर्पनकुलम् । इत्यत्र "नित्यवैरस्य" [१४१] इति द्वन्द्व एकार्थः ॥

तौ गूर्जरत्राकच्छस्य द्वारकाकुण्डिनस्य नु ।
नाथौ शरोर्मिमालाभिर्गङ्गाशोणं प्रचक्रतुः ॥ १२१ ॥

१२१. तौ मूलराजलक्षौ गूर्जरत्राकच्छस्य गूर्जरत्राकच्छदेशयो-

---

१ ए वी सी डी °तू पुंलिङ्गा°. २ सी °र्येवा य°. ३ ए सी ध्वयस्त°. ४ ए सी °र्युक्रवत°. ५ वी °रैः सुरैर्देव° ६ ए सी डी °कुल°. ७ ए सी °दक्र°. ८ ए सी डी °ठात्पाद°. ९ ए सी °शपव°. १० ए सी धीयते. डी °धीयत. ११ वी °क्रमध्या°. १२ सी °तास्थाप°

नाथौ शरा एव संततोच्छलितत्वादूर्मयः कल्लोलास्तेपां या मालाः श्रेणयस्ताभिः कृत्वा गङ्गाशोणं[2] प्रचक्रतुः जाह्नवीनदमिव प्रचक्रतुः । नुरुपमायाम् । यथा द्वारकाकुण्डिनस्य नाथौ । द्वारकापुरीनाथो विष्णुः । कुण्डिनपुरनाथश्च विष्णुश्यालो रुक्मी । रुक्मिण्यपहारकाले महायुद्धविधानाच्छ[3]रोर्मिमालाभिर्गङ्गाशोणं प्रचक्रतुः ॥

वाराणसीकुरुक्षेत्रं[1] प्राप्याजिं तावहृप्यताम् ।

शौर्यकेतवतस्येशौ शौर्यकेतवते इव ॥ १२२ ॥

१२२. स्पष्टः । किं तु[4] । वाराणसी च पूः । कुरुक्षेत्रं च देशः । द्वयमपि लोके महातीर्थत्वेन प्रसिद्धम् । इवोत्र ज्ञेयः । स्वर्गहेतुत्वेन[5] वाराणसीकुरुक्षेत्रतीर्थतुल्या[6]मित्यर्थः । शौर्यं[7] पुरम् । केतवता च ग्रामः ॥

दार्ढ्येन गौरीकैलासौ[2] तदा तावनुचक्रतुः ।

अस्त्रैरस्त्राणि[8] तक्षन्तौ तक्षायस्कारमक्षतौ ॥ १२३ ॥

१२३. तदा दार्ढ्येन बलिष्ठत्वेन स्थैर्येण वा गौरीकैलासौ गिरिभेदाविव तौ मूलराजलक्षौ तक्षायस्कारं काष्ठतड्लोहकारमनुचक्रतुः । यतोस्त्रैरस्त्राणि तंक्षन्तौ[9][10] छिन्दन्तौ । तथाक्षतौ स्वयं प्रहाररहितौ । तक्षायस्कारमपि हि स्वयमक्षतं सदस्त्रैर्वासीघनादिभिरस्त्राणि चापखड्गादीनि तक्षति ॥

नदी । गङ्गाशोणम् ॥ देश । गूर्जरत्राकच्छस्य ॥ पुर[11] । द्वारका[12]कुण्डिनस्य[13] ।

१ बी वाणारसी°. २ ए सी डी °लासो त°.

१ बी माला श्रे°. २ बी °ण जा°. ३ बी नाच्छिरो°. ४ बी तु । वाणारसी. ५ बी °न वाणारसी°. ६ ए सी °ल्यानित्य°. ७ ए सी डी शौर्यपु°. ८ ए सी °रत्राणि. ९ ए सी तक्षिन्तौ. १० सी °न्तौ ··स्व°. ११ बी सी डी पुर । द्वा°. १२ बी द्वारिका°. १३ ए सी डी °कुण्डन°.

इत्यत्र "नदीदेश°" [१४२] इत्यादिना द्वन्द्व एकार्थः॥ स्वैरित्येव। शौर्यकेतवते॥ पुरग्रामसंभेदेपीच्छत्यन्यः। शौर्यकेतवतस्य॥ पूर्देशसंभेदेपीत्यपरे[1]। वाराणसी-कुरुक्षेत्रम्॥ देशग्रहणेन चेह[2] जनपदानां ग्रहणं पृथग्नदीपूर्ग्रहणात्। तेनेह न स्यात्। गौरीकैलासौ॥

तक्षायस्कारम्। इत्यत्र "पाग्र्यशूद्रस्य[3]" [१४३] इति द्वन्द्व एकार्थः॥

आनीयेषून् गवाश्वेनोष्ट्रखरेणार्पयन्भटाः।
सध्रीचीं दधिपयसोः कीर्तिमाकाङ्क्षतोस्तयोः॥ १२४॥

१२४. तयोर्मूलेराजे[4]लक्षयो[5]र्गवाश्वेनोष्ट्रखरेण च कृत्वेषूनानीय भटा आर्पयन्। एतेन बाणक्षेपस्यातिबाहुल्यमुक्तम्। कीदृशोः सतोः। दधि-पयसोर्दधिदुग्धयोः सध्रीचीं निर्मलां जयोत्थां कीर्तिमाकाङ्क्षतोः॥

षड्भिर्गोमहिषैर्वाह्यं[1] सदृग्दृग्मधुसार्पिषोः।
तुल्योर्गुपदशैर्नागाश्वैर्लक्षः कुन्तमुद्दधे॥ १२५॥

१२५. षड्भिर्गोमहिषैर्वाह्यं[6] वोढुं शक्यं महाभारमित्यर्थः। लक्षः कुन्तमुद्दधे[7] मूलराजे क्षेपार्थमुत्पाटितवान्। कीदृक्। मधुसार्पिषोः सदृग्दृक्कोपारक्तत्वात्तुल्याक्षः। तथोपगताः समीपगता दश दशत्वं येषां तैर्नवभिरेकादशभिर्वा नागाश्वैर्हस्तिहयैस्तुल्योर्क्[10] समानबलः॥

---

१ बी °पैर्वाह्य.

---

१ बी °रे। बाणारसी°. २ ए सी चेय ज°. ३ ए सी डी "पाग्रशू°. ४ बी °लल°. ५ सी °जक्ष°. ६ बी °पैर्वाक्ष ७ बी °धेमूल°. ८ ए सी °शभि द°. ९ ए सी डी °त्व वै°. १० ए बी सी डी °ल्योर्ग् म°.

नागाश्वं घ्नन्नुपदशं घ्नन्नासन्नदशान् रथान् ।
राजदन्तैर्दशन्नोष्ठं प्रासमुल्लास्य सोक्षिपत् ॥ १२६ ॥

१२६. स लक्षः प्रासं कुन्तमुल्लास्य स्फोरयित्वाक्षिपन्मूलराजाभिमुखं प्रेरितवान् । कीदृक्सन् । उपदशं नवसंख्यमेकादशसंख्यं वा नागाश्वं घ्नन्महाबलत्वात्खण्डयंस्तथासन्नदशान्नवैकादश वा रथान् घ्नंस्तथा राजदन्तैर्दन्तानां राजभिरुपर्यधश्च मध्यदन्तैरोष्ठं कोपाद्दशन् ॥

लिप्तवासितदिक्कीर्त्याथोष्णगुश्रीः षडुन्नतः ।
कुन्तेन सर्वसारेणावधील्लक्षं चुलुक्यराट् ॥ १२७ ॥

१२७. अथ चुलुक्यराड् मूलराजः सर्वः सारः प्रधानलोहभेदो यत्र तेन सर्वसारलोहमयेन कुन्तेन लक्षमवधीत् । कीदृशः । महापुरुषत्वेन सल्लक्षणलक्षितत्वात्षट् शिरो हृत्स्कन्धौ पादौ चोन्नता उच्चा यस्य सः । तथोष्णगुश्री रवितुल्यतेजा अत एव कीर्त्या लिप्तवासिताः पूर्वं वासिता आमोदिताः पश्चाल्लिप्ता व्याप्ता दिशो येन सः ॥

द्व्यन्यास्त्र्यन्याः सुराः स्त्रीभिः पुष्पवृष्टिमथ व्यधुः ।
कृतप्रिये क्षणाचस्मिन्कृतोग्ररिपुनिग्रहे ॥ १२८ ॥

१२८. अथ सुरास्तस्मिन्मूलराजे क्षणात्पुष्पवृष्टिं व्यधुः । कीदृशाः सन्तः । स्त्रीभिः स्वभार्याभिर्देवीभिः कृत्वा द्वे अन्ये येषां ते द्व्यन्यास्तिस्रोन्या येषां ते त्र्यन्याः । केचिद्देवीद्वयोपेताः केचिच्च देवीत्रयंयुक्ता इत्यर्थः । यतः कीदृशे । कृतप्रिये विहितसुराभीष्टे । एतदपि कुत

१ प सी °न्यास्त्र्यन्याः. २ प सी सुरा स्त्री°.

१ प सी प्रासकु°. २ सी °ण्डयस्त°. ३ सी °थ चूलु°. ४ सी सर्वसा°. ५ प सी डी सलक्ष°. ६ वी °थोष्णगु°. ७ प सी °ता आमो°. ८ सी °राजे. ९ प °र्यादिदे°. सी °र्यादिदेवी°. १० प सी °त्रयं यु°.

इत्याह । यतः कृत उग्रो मारणात्मको रिपोर्लक्षस्य निग्रहो येन तस्मिन् ॥

ग्राहारिं सोमुचत्कृत्ताङ्गुलीकं भिक्षितः पतिम् ।
तस्य पाणिगृहीतीभिर्बालैर्गृहीतपाणिभिः ॥ १२९ ॥

१२९. स मूलराजो ग्राहारिममुचत् । कीदृशं सन्तम् । कृत्ता छिन्नाङ्गुल्यर्थात्कनिष्ठा येन यद्वाङ्गुल्यां कृत्तं येन तं स्ववेलायत्तं कृत्वेत्यर्थः । यतो बालैः कर्तृभिर्गृहीतपाणिभिरात्तहस्ताभिः सतीभिर्मूलराजस्य कृपातिरेकोत्पादनाय बालकान्हस्तेषु गृहीत्वेत्यर्थः । तस्य ग्राहारेः पाणिगृहीतीभिर्भार्याभिः पतिं भर्तारं भिक्षितोस्मभ्यं पतिभिक्षां देहीति याचितः ॥

ततः प्रभृति सौराष्ट्रैः स्त्रीवेषो जातजन्मभिः ।
अजन्मजातैश्चोपात्तः प्राह राजिभुवो यशः ॥ १३० ॥

१३०. ततः प्रभृति तस्मान्मोक्षदिनादारभ्य स्त्रीवेष आप्रपदीनशाटिकापरिधानकच्छादानाभावलक्षणो नारीवेषो राजिभुवो मूलराजस्य यशः सौराष्ट्रजयोत्थां कीर्तिं प्राह । संप्रत्यपि ज्ञापयतीत्यर्थः । कीदृक् । सौराष्ट्रैः सुराष्ट्रादेशोद्भवैर्लोकैरुपात्तो वयं मूलराजस्य पुरः स्त्रीकल्पा इति ज्ञापनाय गृहीतः । कीदृशैः । जातजन्मभिः । जन्मशब्दोत्र जन्मप्रभृतिजीवितकालवाची । जातं बाल्ययौवनवार्धक्यावस्थात्रयोपभोगेन कृतकृत्यत्वान्निष्पन्नं परिपूर्णीभूतं जन्म जन्मवारो येषां तैरतिवृद्धैरित्यर्थः । तथा न जातं वार्धक्यानुपभोगेनाकृतार्थत्वादपरिपूर्णीभूतं जन्म येषां तैश्च बालैस्तरुणैश्चेत्यर्थः ॥

१ ए सी कृत्वा छि°. २ सी °तृही°. ३ सी °तिरोको°. ४ बी °णिगृंही°. ५ ए सी डी °हीभि.° ६ बी °श. नुरा°. ७ ए सी °वैलोकै°. ८ सी °जम्मश°. ९ डी °न्मवा°.

सुखयातान्यतीन्यातसुखान्विप्रांश्च भूपतिः ।
दुःखहीनो[1] हीनदुःखान्यथावत्संस्थया व्यधात् ॥ १३१ ॥

१३१. भूपतिर्मूलराजो हीनमपगतं दुःखं यस्मात्स तथा सन्संस्थया व्यवस्थया व्यधात् । कांस्कानित्याह । यातं प्राप्तं सुखं दैत्यवधोत्थं शर्म यैस्तान्[1]सुखयातान्यतींस्तथा यातसुखान्विप्रांश्चो[2]भयानेपि यातसुखत्वेन हीनदुःखान् । कथं व्यधात् । यथा[3]वद्यः प्रकारो यथा[4] यथास्यास्ति "तदस्य°" [७.२.१.] इत्यादिना मतुः । यद्वा यथेत्येतस्यार्हे "तस्यार्हे°" [७.१.५१] इत्यादिना वत् । क्रियाविशेषणं यथाविधीत्यर्थः ॥

गवाश्वेन । उष्ट्रखरेण । इत्यत्र "गवाश्वादिः" [१४४] इति द्वन्द्व एकार्थः ॥

दधिपयसोः । मधुसर्पिषोः । अत्र "न दधि°" [१४५] इत्यादिना न द्वन्द्वैकत्वम्[5] ॥

पङ्क्तिर्गोमहिषैः । इत्यत्र "संख्याने" [१४६] इति न द्वन्द्वैकत्वम् ॥

उपदशम् नागाश्वम् । उपदशैः नागाश्वैः । अत्र "वान्तिके" [१४७] इति वा द्वन्द्वैकत्वम् ॥

भासवदशान् । इत्यत्र "प्रथमोक्तं प्राक्" [१४८] इति प्रथमान्तेन यन्निर्दिष्टं तत्पूर्वं निपतति ॥

राजदन्तैः । लिप्तवासित । इत्यत्र "राजदन्तादिषु" [१४९] इत्यप्राप्तपूर्वनिपातं प्राङ्निपतति[6] ॥

विशेषण । उष्णगुंश्रीः[7] ॥ सर्वादि । सर्वसारेण ॥ संख्या । पट्वुन्नतः । इत्यत्र "विशेषण°" [१५०] इत्यादिना विशेषणादेः पूर्वनिपातः ॥ शर्वदस्य[8] स्पर्धे पर-

---

१ ए डी °नो दीन°.

---

१ बी °स्तान्य°. २ ए सी डी °नभिया°. ३ डी °थावः. ४ सी डी °भास्या°. ५ सी °त्वम्···उप°. ६ डी °पति।. ७ ए सी डी °गुश्रीस°. ८ सी °ब्दस्प°.

स्वात्सर्वादिसंख्ययोः संख्याया एव पूर्वनिपातः। द्व्यन्याः ॥ उभयोस्तु सर्वादित्वे स्पर्धे परस्य पूर्वनिपातः। द्व्यन्याः ॥

कृत्ताङ्गुलीकम्। इत्यत्र "क्ताः" [१५१] इति क्तान्तस्य प्राग्निपातः ॥ क्तान्तस्य विशेषणत्वात्पूर्वेण[2] सिध्यति विशेष्यार्थं तु वचनम्। अङ्गुल्यां कृत्तमनेन कृत्ताङ्गुलीकम्। स्पर्धे परत्वार्थं च। कृतोग्ररिपुनिग्रहे ॥ बहुवचनं व्याप्त्यर्थम्। तेन कृतप्रिये। इत्यत्र परेणापि स्पर्धे क्तान्तस्यैव प्राग्निपातः ॥

जाति। पाणिगृहीतीभिः गृहीतपाणिभिः ॥ काल[3]। अजन्मजातैः जातजन्मभिः ॥ सुखादि। सुखयातान् यातसुखान्। दुःखहीनः हीनदुःखान् इत्यत्र "जाति°" [१५२] इत्यादिना जात्यादेर्वा प्राग्निपातः ॥

प्रजया पुत्रजातो नु तेजोम्यभ्याहितोथ सः।
प्रभासं जातपुत्रैर्न्वगात्प्रीतैराहिताग्निभिः ॥ १३२ ॥

१३२. अथ स मूलराजो जातपुत्रैर्नूत्पन्नतनयैरिव[4] प्रीतैर्दैत्यवधात्तुष्टैराहिताग्निभिरग्निहोत्रिभिर्द्विजैः सह प्रभासं तीर्थमगात्। कीदृक्। प्रजया कृत्वा जातः पुत्रो येन(यस्य?) स पुत्रजातो नु प्रजां पुत्रामिव पश्यन्नित्यर्थः। तथा तेजोग्निना प्रतापवह्निना कृत्वाहितः प्रज्वालितोग्निर्येन सोग्न्याहितोग्निचि[5]त्तुल्यो जाज्वलत्प्रताप इत्यर्थः ॥

आहिताग्निभि[6]ः[7] अग्न्याहितः। जातपुत्रैः पुत्रजातः। इत्यत्र "आहिताग्न्यादिषु" [१५३] इति क्तान्तस्य वा प्राग्निपातः ॥

---

१ डी °त्र क्तान्त°. २ बी °र्वेणापि सि°. ३ बी °ल। आज°. ४ ए °र्नैरुत्प°. सी °र्नैरुर्कुत्प°. ५ ए सी डी °ग्निचत्तु°. ६ ए प्राहि°. ७ ए सी डी °भिः माग्न्या°.

सोस्युद्यंतः[1] पद्मनाभो नूद्यतासिभिरावृतः ।
इन्दुमौलिं शूलपाणिं स्पृष्ट्वा नत्वेति तुष्टुवे ॥ १३३ ॥

१३३. स्पष्टः । किंतु । उद्यत ऊर्ध्वीकृतोसिर्येन सोस्युद्यतः[2] । प्रजापालकत्वात्पद्मनाभो[3] नु विष्णुरिव । इन्दुमौलिं सोमनाथलिङ्गं स्पृष्ट्वा हस्तेन संस्पृश्य ॥

उद्यतासिभिः अस्युद्यतः । अत्र "प्रहरणात्" [१५४] इति क्तान्तं वा प्राग्निपतेत् ॥

इन्दुमौलिम् । पद्मनाभः[4] ॥ प्रहरणात् । शूलपाणिम् । अत्र "न सप्तमी°" [१५५] इत्यादिना सप्तम्यन्तस्य न प्राग्निपातः ॥

यस्त्वां श्रीकण्ठ नौत्यार्तः कण्ठेगड्डुररुःशिराः ।
भवत्यगड्डुकण्ठः सोशिरस्यरुरपि क्षणात् ॥ १३४ ॥

१३४. श्रीकण्ठ हे शंभो गड्डुर्व्रणं कण्ठे[5] यस्य स कण्ठेगड्डुर्गण्डमालामहारोगान्वितस्तथारुर्व्रणं शिरस्यस्य सोरुःशिराश्च । उपलक्षणत्वादन्यैरपि रोगैर्युक्तश्च सन्नार्तो रोगपीडितो नरो यस्त्वां नौति स्तौति स क्षणादगड्डुकण्ठोशिरस्यरुरपि । अपिः समुच्चये । उपलक्षणत्वादन्यरोगविमुक्तश्च भवति ॥

कण्ठेगड्डुः गड्डुकण्ठः । शिरस्यरुः अरुःशिराः[6] । अत्र "गड्डादिभ्यः" [१५६] इति सप्तम्यन्तं वा प्राग्निपतेत् ॥

---

१ सी °द्यता.

---

१ ए बी सी डी ऊर्द्धीकृ°. २ सी °द्यवः । प्र°. ३ डी °भो वि°. ४ ए सी डी °नाभम् । प्र°. ५ सी कन्ते य°. ६ बी °शिरोः । अ°.

विश्वप्रिय प्रियमृषावादस्य त्वन्निरासतः ।
स्याज्जैमिनिकडारस्य तुल्यः कडारजैमिनिः ॥ १३५ ॥

१३५. हे विश्वप्रिय प्रिया विष्णुमूर्त्या पालनीयत्वाद्भवकष्टाब्धेर्निस्तार्यत्वाच्चाभीष्टा विश्वे समस्तजना यस्य । अनेन शंभोः सर्वमान्यतोक्ता । त्वन्निरासतो नास्ति सर्वज्ञः प्रमाणपञ्चकातीतत्वात्खरविषाणवदित्यादिकुवादैस्त्वदभावमननात्प्रियमृषावादस्य जैमिनिकडारस्य कडारः पिङ्गलो दासो वा सर्वज्ञाभावमननेन सर्वजनानां क्षेप्यत्वात्कडार इव कडारो यो जैमिनिर्मीमांसकस्तस्य तुल्यः कडारजैमिनिः कडारमीमांसक एव स्यान्नान्यः । त्वन्निरासं दुरात्मा मीमांसक एवाह नान्य इत्यर्थः । तथा च मीमांसकमताभिप्रायेणोक्तम् ॥

अपौरुषेयो वेदश्च प्रामाण्यं षट्प्रमाणतः ।
सर्वज्ञाभाव इत्येव मीमांसकमतं मतम् ॥ १ ॥

वृद्धमन्वादिभिस्तुल्यं त्वां स्तुयान्मनुवृद्धगीः ।
योर्थधर्मप्रियः स स्याद्धर्मार्थाभ्यां न वञ्चितः ॥ १३६ ॥

१३६. वृद्धश्चिरन्तनो यो मनुराद्यर्षिस्तद्वद्भक्तिसारतार्थसारतादिगुणोपेता गीर्वाणी यस्य स तथा सन्यः पुमांस्त्वां स्तुयान् । यतोर्थधर्मौ प्रियावभिलषणीयौ यस्य सः । अर्थधर्माभिलाषेणेत्यर्थः । किंभूतं त्वाम् । वृद्धमन्वादिभिश्चिरन्तनमनुऋष्याद्यैर्गार्गादिपदाद्व्यासाद्यैस्तुत्यम् । स धर्मार्थाभ्यां वञ्चितो वियुक्त इत्यर्थः । न स्यात्तस्य धर्मार्थौ भवत एवेत्यर्थः ॥

---

१ ए सी डी तुल्य क°. २ ए सी डी °स्तुल्य त्वा.

---

१ सी °त्त्वाभी°. २ बी °मस्ता ज°. ३ ए सी डी °डारः. ४ सी दास्यो वा. ५ ए °त्वाकडा°. सी डी °त्वाकमार°. ६ ए सी °टारः मी°. ७ सी °णोक्तान् ।. ८ ए सी °नुरुष्या°. ९ ए सी डी °स्तुन्यम् ।.

ब्रह्मादीनां[1] त्वमन्तादी तवाद्यन्तौ न कश्चन ।
अग्नीषोमौ वायुतोयाद्याश्च ते तिलमाषवत् ॥ १३७ ॥

१३७. ब्रह्मादीनामादिपदाद्विष्णवादीनामन्तादी संहारात्सर्जनाच्च निधनोत्पत्तिकारणं त्वम् । यदुक्तम् ।

ब्रह्मादीनपि भगवंस्त्वमेव संसृजसि संहरसि चैव । इति ।

तव त्वाद्यन्तावुत्पत्तिविनाशहेतुरनादिनिधनत्वान्न कश्चन । उक्तं च ।

अनादिनिधनं देवं जगत्कारणमीश्वरम् । इति ॥

अतश्चाग्नीषोमौ वह्निदेवतासोमदेवते वायुतोयाद्याश्च वायुदेवता-जलदेवताद्याश्चाद्यपदाद्भूदेवतादयश्च ते तव तिलमाषवत्तिलमाषा इवाल्पास्त्वदंशमात्रमित्यर्थः ॥

स्कन्दश्रीदसुतसखे[2] त्यक्त्वा सखिसुतादिकम् ।
यस्त्वां ध्यायेत्त्रिलोक्यां स्यादस्त्रशस्त्रैः स दुर्जयः ॥१३८॥

१३८. स्कन्दश्रीदौ कार्तिकेयधनदौ सुतसखायौ यस्य हे स्कन्द-श्रीदसुतसखे हे शंभो सखिसुतादिकमादिपदाद्भार्यादिकं संसार-बन्धनं त्यक्त्वा यस्त्वां ध्यायेत्स नरस्त्रिलोक्यामस्त्राण्याग्नेयादीनि दि-व्यायुधानि शस्त्राणि खड्गादीनि द्वन्द्वे तैर्दुर्जयः स्यात् । केनाप्यसौ न जीयेतेत्यर्थः ॥

---

१ सी °ना दी त°. २ ए सी डी °तसुखे.

---

१ ए सी °रात्सर्ज°. २ ए सी डी °ताद्या°. ३ बी याद्य°. ४ ए सी डी °द्भूतदे°. ५ बी °तसुखा°. ६ सी °न्धने त्य°. ७ सी °नाप्यासौ.

श्रद्धातपोभ्यां संपन्ना अर्चित्वा विल्वगुग्गुलैः ।
शङ्खदुन्दुभिवीणाभिर्धन्यास्त्वां पर्युपासते ॥ १३९ ॥

१३९. सुगमः । किं तु । श्रद्धातपोभ्यां संपन्ना इत्यनेन विल्वगुग्गुलैरित्यनेन च शिवरात्रिपर्व ज्ञापितम् । तत्रैव हि विशेषतो विल्वपत्रैर्गुग्गुलैश्च शंभोः श्रद्धोपवासतपःसंपन्नैर्जनैरर्चा क्रियते ॥

वीणादुन्दुभिशङ्खास्ते प्रिया इति पुरस्तव ।
गृह्णन्ति नारदप्रख्यास्ते वीणाशङ्खदुन्दुभीन् ॥ १४० ॥

१४०. सुगमः । नवरम् । ते गन्धर्वविद्याकौशल्यादिना प्रसिद्धा नारदप्रख्या नारदो देवब्रह्मा तन्मुख्यास्तत्सदृशा वा गन्धर्वविद्याधराद्याः ॥

प्रियमृषावादस्य विश्वप्रिय । इत्यत्र "प्रियः" [१५७] इति वा प्रियः प्राग्निपतेत् ॥

कडारजैमिनिः जैमिनिकडारस्य । वृद्धमनु मनुवृद्ध । इत्यत्र "कडार°" [१५८] इत्यादिना कडारादेर्वा प्राग्निपातः ॥

धर्मार्थाभ्याम् अर्थधर्म । आद्यन्तौ अन्तादी । इत्यत्र "धर्मार्थ°" [१५९] इत्यादिनाप्राप्तपूर्वनिपातं वा पूर्वं निपतेत् ॥

लघ्वक्षर । तिलमाष ॥ असखीदुत् । अग्नीषोमौ वायुतोय ॥ स्वराद्यत । अश्वशस्त्रैः ॥ अल्पस्वर । विल्वगुग्गुलैः ॥ अर्च्य । स्कन्दश्रीद । इत्यत्र "लघ्वक्षर°" [१६०] इत्यादिना लघ्वक्षरादि प्राग्निपतेत् ॥ स्पर्धे परमेव । श्रद्धातपोभ्याम् ॥

१ प सी °र्धन्यास्त्वा.

१ प सी °लै इत्य°. २ बी °ल्वपात्रै°. ३ प सी °त्रैगुग्गु°. ४ प सी °मिनिजै°. ५ प सी °र्थमर्थ । आ°.

सखिवर्जनं किम् । सुतसखे । सखिसुत ॥ एकमिति किम् । युगपदनेकस्य पूर्वनिपाते प्राप्त एकस्यैव यथा पूर्वं निपातः शेषाणां तु कामचार इति प्रदर्शनार्थम् । शङ्खदुन्दुभिवीणाभिः । वीणादुन्दुभिशङ्खाः । वीणाशङ्खदुन्दुभीन् ॥

विनायकस्कन्दगुरो पुण्यैः फाल्गुनचैत्रयोः ।
ब्राह्मणक्षत्रविट्शूद्रैः प्रेक्ष्यसे ग्रीष्मदोलयोः ॥ १४१ ॥

१४१.[3] विनायकस्कन्दगुरो हे गणेशकार्तिकेययोः पितः फाल्गुनचैत्रयोर्ये ग्रीष्मदोले ग्रीष्मपर्वदोलापर्वणी[4] तयोर्ब्राह्मणक्षत्रविट्शूद्रैः कर्तृभिः पुण्यैः कृत्वा त्वं प्रेक्ष्यसे । फाल्गुने पौर्णमासी ग्रीष्मपर्वोच्यते । यतोत्र काष्ठखड्गव्यग्रकरैर्बालकैः शिशूनां महासन्तापकत्वेन ग्रीष्मतुल्यत्वाद्ग्रीष्मा ढुण्ढाराक्षसीकृतोपद्रवा उत्तार्यन्ते । यदुक्तं भविष्योत्तरे । पुरा रघुर्नाम राजासीत् । तस्य राज्ये वर्तमाने ढुण्ढा नाम राक्षसी बभूव । सा बालानामुपद्रवं कुरुते । ततो विरागयुक्ताः सदुःखाः सर्वेपि पौरा नृपमूचुः । देव तव राज्येस्मद्बालानां महानुपद्रवो भवति । तत्त्रायस्व । ततो राजा गुरुं वशिष्ठं सप्रश्रयमुवाच । कोसावदृष्टो बालानामुपद्रवकारी । तच्छ्रुत्वा वशिष्ठ ऊचे । देव ढुण्ढेति नाम राक्षसी तपःप्रभावाल्लब्धवरा बालेभ्योन्यैरवध्या । अतः सा बालान्पीडयति । तदद्य फाल्गुने पूर्णिमायाः ।

अस्या निशागमे पार्थ संरक्ष्याः शिशवो[10] गृहे ।
गोमयेनोपसंलिप्ते सचतुष्के गृहाङ्गणे ।
आकारयेच्छिशून्प्रायः खड्गव्यग्रकरान्नरान् ॥ १ ॥

१ ए सी डी एवमि°. २ ए सी °न्दुभिरीन् ॥. ३ बी १४१ हे वि°. ४ ए सी डी °र्वणी. ५ ए सी °क्षत्रवि°. ६ ए सी °ल्गुने पौ°. ७ सी °व्यग्रम°. ८ सी °र्यन्ते । य°. ९ सी रघूनाम. डी रघुनामा रा°. १० बी वसिष्ठ°. ११ ए सी शिशवो°.

ते काष्ठखड्गैः संस्पृश्य गीतैर्हास्यकरै[1]ः शिशून् ।
रक्षन्ति तेषां दातव्यं गुडं पक्वान्नमेव च ॥ २ ॥
एवं ढौ[2]ण्ढितमात्रस्य स दो[3]षः प्रशमं व्रजेत् ।
बालानां रक्षणं कार्यं तस्मात्तस्मिन्निशागमे ॥ ३ ॥

अस्मिंश्च पर्वणि सोमनाथस्यापि लो[4]काचार इति कृत्वा ग्रीष्मोत्तारणं विशेषपूजा च[5] चतुर्वर्णलोकैः क्रियते ॥

दोलापर्व च चैत्रशुक्लचतुर्द[6]श्युच्यते । यतोत्र शंभुर्गौरीसहितो महोत्सवेन दोलामारुरोह । यदुक्तं भविष्योत्तरे । गौरी शंकरमाह ।

कौतुकं मे समुत्पन्नं पन्नगाभरण प्रभो ।
अन्दोलकं मम कृते कारयस्व स्वलंकृतम् ॥ १ ॥
त्वया सहान्दोलयेयं यथा चैत्रे त्रिलोचन ।
तद्गौरीवचनं चारु श्रुत्वा गोवृषभध्वजः ॥ २ ॥
स[7] दोलं कारयामास आहूय सुरवर्धकिम् ।
स्तम्भद्वयं रोपयित्वा इष्टापूर्तमयं दृढम् ॥ ३ ॥
सत्यं चैवोपरितनं श्रेष्ठं काष्ठमकल्पयत् ।
वासुकिं दण्डिकास्थाने बद्ध्वा ध्वान्तायसप्रभम् ॥ ४ ॥
तत्[8]फणासंचयं पी[9]ठं कृतवान्मणिमण्डितम् ।
तत्रारूढस्तु भगवान्सोमः सोमविभूष[10]णः ॥ ५ ॥
[11]नन्दिरं दोलयामास पार्श्वस्थैः पार्षदैः सह । इति ॥

---

१ ए सी °रै. रिशू°. २ बी सी ढौढित°. ३ ए सी दोषप्र°. ४ ए सी लोकांचा°. ५ सी चतु°. ६ ए सी °दंच्य°. डी °दश्यामुच्य°. ७ सी सा दोल. डी स दोला का°. ८ सी °त्फण स°. ९ ए पीढ कृ°. १० ए सी °षण ॥. ११ ए सी डी नन्दि°.

फलमाह ।

प्राप्ते वसन्तसमये सुरसत्तमाना-
मान्दोलनं नरवरा ननु कुर्वते ये ।
ते प्राप्नुवन्ति भुवि जन्मतरोः फलानि
दुःखार्णवोत्कुलशतान्यपि तारयन्ति ॥

अस्मिंश्च पर्वणि सोमनाथस्य चतुर्वर्णैर्महाविस्तरेण दोलामहोत्सवः क्रियते ॥

फाल्गुनचैत्रयोः । ब्राह्मणक्षत्रविट्शूद्रैः । विनायकस्कन्द । इत्यत्र "मास-वर्ण°" [१६१] इत्यादिना मासाद्यनुपूर्वं पूर्वं निपतेत् ॥

स प्रावृड्डुरदभ्रविभ्रममिभत्वग्भस्मतः कृत्तिका-
रोहिण्यात्मजसंनिभः क्षितिपतिः स्तुत्वेति देवं ततः ।
उत्को ग्रीष्मवसन्तयोरतिमघाश्लेषे विधौ द्वादशा-
र्कश्रीः पञ्चषवासरैर्निजपुरं नागाष्टशत्या ययौ ॥ १४२ ॥

१४२. ततः स्तवनानन्तरं स क्षितिपतिर्मूलराजो द्वादशार्कश्रीविजयादतिप्रतापी सन्नागाष्टशत्या हस्तिनां शताष्टकेन सह पञ्चषवासरैः पञ्चभिः षड्भिर्वा दिनैः । शीघ्रमित्यर्थः । स्वपुरं ययौ । यतो ग्रीष्मवसन्तयोरुपचाराद्वसन्तर्तुग्रीष्मर्तुसहचरितासु पुष्पोच्चयजलक्रीडादिक्रियासु विषय उत्क उत्कण्ठितः । किं कृत्वा ययौ । देवं शंभुमित्युक्तरीत्या स्तुत्वा । कीदृक्सन् । कृत्तिकारोहिण्यात्मजौ स्कन्दबुधौ तयोः संनिभः शंभुविषयान्तरभक्तिपाण्डित्याभ्यां तुल्यः । किंभूतं देवम् । इभत्वग्भस्मतो गजचर्माच्छादनभस्माङ्गरागाभ्यां सकाशात्प्रावृड्डुरदभ्रविभ्रमं

१ प सी भ्रम.

१ प सी डी ननु व°. २ प सी °थाकुल°. ३ बी °र्णैमहा°. ४ प सी °शूद्रै। वि°. ५ डी °र क्षि°. ६ सी °प्राट°. ७ सी °हिणीत्म°. ८ बी °भमम°. ९ सी °तो जचर्म°.

वर्षाशरन्मेघतुल्यम् । क्व सति ययौ । विधौ चन्द्रे । कीदृशे । अतिमघाश्लेषे[1]श्लेषामघानक्षत्रातिक्रान्ते । अस्य च विशेषणस्याप्रावेशिकनक्षत्रातिक्रमस्योपलक्षणत्वात्पूर्व[2]फल्गुन्या अप्यप्रावेशिकत्वात्तामप्यतिक्रान्ते । उत्तर[3]फल्गुनीस्थ इत्यर्थः । उत्तर[4]फल्गुनी हि स्थिरस्वभावत्वात्प्रावेशिकनक्षत्रम् । अश्लेषा क्रूरस्वभावत्वेन मघापूर्व[5]फल्गुन्यौ चोग्रस्वभावत्वेनानिष्टफलत्वादप्रावेशिक्यः । यदुक्तं रत्नमालायाम् ।

> शुभः प्रवेशो मृदुभिर्ध्रुवर्क्षैः[6] क्षिप्रैश्चरैः स्यात्पुनरेव यात्रा ।
> उग्रैर्नृपो दारुणभैः कुमारो राज्ञी विशाखासु विनाशमेति ॥

उग्रादिभि[7]र्भैः प्रवेशे नृपादिर्विनाशमेतीति संबन्धः । अश्लेषामघापूर्व[8]फल्गुनीरतिक्रान्ते चन्द्रौ मूलराजस्याष्टमो नवमश्चेन्दुरशुभोपयातीति हेतोश्चातिमघाश्लेष इति विशेषणं विधोः ॥

भ । कृत्तिकारोहिणी ॥ ऋतु । प्रावृट्शरत् । अत्र "भर्तु°" [१६२] इत्यादिना भर्तुश्चानुपूर्वं[9] प्राग्निपतेत् ॥ तुल्यस्वरमिति किम् । मघाश्लेषे । ग्रीष्मवसन्तयोः ॥

बहुव्रीहौ । पञ्चप ॥ द्विगौ । अष्टशत्या ॥ द्वन्द्वे । द्वौ च दश च द्वादश । इत्यत्र "संख्या समासे" [१६३] इति संख्यानां[10]मनुपूर्वं पूर्वं निपतेद् ॥ शार्दूलविक्रीडितं छन्दः ॥

नवमः पादः समर्थितः ॥

इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तौ पञ्चमः सर्गः समर्थितः ॥

---

१ बी °तिमेघा°. २ बी °र्वफाल्गु°. ३ बी रफाल्गु°. ४ बी °रफाल्गु°. ५ बी °र्वफाल्गु°. ६ ए सी डी °वर्क्षे. क्षि°. ७ बी °दि विना°. ८ बी °र्वफाल्गु°. ९ बी °नुपू°. १० बी °नामानु°.

# द्व्याश्रयमहाकाव्ये

## षष्ठः सर्गः ।

अर्हम् ॥

यथावदाराधयतस्त्रिवर्गं चामुण्डराजोस्य सुतोथ जज्ञे ।
परस्परां वाक्कमला च तेजःसौम्ये च नूनं मिषती श्रिते यम् ॥१॥

१. अथानन्तरमस्य मूलराजस्य यथावद्यथौचित्येन परस्परानाबाधया । स्ववेलायामित्यर्थः । त्रिवर्गं धर्मार्थकामानाराधयत आसेवमानस्य सतश्चामुण्डराजः सुतो जज्ञ उत्पेदे । यं चामुण्डराजं वाक् सरस्वती[1] च कमला च लक्ष्मीस्तेजः प्रतापः सोम इवाह्लादकत्वात्सोमः कान्तस्तद्भावः सौम्यं कान्तत्वम् । द्वन्द्वे । ते च श्रिते । नूनं शङ्के । परस्पराम् । स्पर्धमानः[2] स कृष्णम् ।

मेरुं स्पार्धिष्णुनेवान्यो धृतो नाको हिमाद्रिणा ।

इत्यादाविव प्राप्येत्यध्याहारेण परस्परस्य व्याप्यत्[3]वात्परस्परं[4] कर्म परस्परेण सह वा परस्परार्थं वा परस्परसात्सकाशाद् गम्ययवपेक्षया "गम्ययपः" [२.२.७४] इति पञ्चम्यां परस्परमाश्रित्य वा परस्परस्य संबन्धिनो वा परस्परस्मिन्वा मिषती स्पर्धमाने । ये हि मिथो मिषतस्ते मिथोभिभवेच्छयोत्कृष्टस्वामिनं श्रयेते । वाक्कमले[5] तेजःसौम्ये च मिथो विरुद्धे अमुं चाश्रिते इत्येवमाशङ्का । सर्गेस्मिन्नुपजातिच्छन्दः ॥

---

१ बी °ती क°. २ ए सी डी °मानस. ३ ए सी डी °स्वापर°. ४ डी °मेंद्धप°. ५ बी °मलते°.

द्वेषं परित्यज्य परस्परेण परस्परं[1] चाप्रतिबाधनेन।
अन्योन्यमुत्कर्षितया च मित्राणीवात्र विद्याश्च गुणाश्च तस्थुः॥२॥

२. मिथो विरुद्धा अपि धर्मशास्त्रकामशास्त्रादिविद्या दानाविकत्थनत्वादयो गुणाश्च मित्राणीवात्र कुमारे तस्थुः । कथमित्याह । परस्परेण सह द्वेषमेकत्रानवस्थानरूपं विरोधं परित्यज्य । तथा परस्परं परस्परेण कृत्वा परस्परार्थं वा परस्परस्मात्सकाशात्परस्परमाश्रित्य वा परस्य कर्मणो वा परस्परस्मिन्वा प्रतिबाधनेनोचिते स्वस्वकाले द्वयानामप्यासेव्यमानत्वादपीडनेन । तथान्योन्यं यथार्थसंबन्धम् । सर्वविभक्त्यर्थः पूर्ववद्भावनीयः । एवमग्रेपि । उत्कर्षितया च मिथो विशेषकत्वेन च हेतुना। तथाहि । धर्मशास्त्रविद्यानुसारेण धर्मप्रवृत्तिर्भोगफलत्वेन विशिष्टकामहेतुरिति कार्यद्वारेण धर्मशास्त्रविद्या[3] कामशास्त्रविद्योत्कर्षिणी । कामशास्त्रविद्यानुसारेण च कामप्रवृत्तिः संततिवृद्धिफलत्वाद्धर्मवृद्धिहेतुरिति कार्यद्वारेण कामशास्त्रविद्यापि धर्मशास्त्रविद्योत्कर्षिणी । तथा दानेनाश्लाघा विशिष्यतेश्लाघया तु त्याग इति । मित्राण्यपि मिथो द्वेषं त्यजन्ति मिथः कलहादिना न बाधन्ते च मिथो गुणोत्कीर्तनादिनोत्कर्षयन्ति च ॥

शक्तिक्षमे यौवनसंयमित्वे युते न दृष्टे इतरेतरां हि।
तथापि ते तादृशनीतिभाज्य[2]न्योन्यां चिरं चक्रतुरत्र योगम् ॥३॥

३. यद्यपि शक्तिक्षमे यौवनसंयमित्वे तारुण्येन्द्रियजयौ च हि स्फुटमितरेतरामन्योन्यं युते संबद्धे मिथो विरुद्धत्वान्न दृष्टे । यद्वा ।

---

१ सी °र चाप्र°. २ ए सी °विराज्य°.

---

१ ए सी डी °रस्य. २ ए सी डी °बले°. ३ डी °विद्यो का°. ४ बी °द्यापि का°. ५ ए सी °यजियौ.

इतरेतरस्माद्युतेन पार्थक्येन दृष्टे तथापि ते शक्तिक्षमे यौवनसंयमित्वे चात्र कुमारेन्योन्यां[1] चिरं योगं संबन्धं चक्रतुः[2]। यतस्तादृशनीतिभाज्यनन्यसदृशन्यायनिष्ठे शक्तिक्षमाद्यनुरूपाचरिते वा। यो हि तादृशनीतिभागपूर्वन्यायनिष्ठो विरुद्धभृत्यानुरूपाचरणभाग्वा स्वामी स्यात्तत्र मिथो विरुद्धोपि भृत्यजनः स्वाम्यावर्जनाविशेषेण विरोधं विहायान्योन्यं चिरं योगं करोति ॥

संकेतयोगादितरेतरं नु कलाश्च शास्त्राणि च धीगुणाश्च।
चक्रुर्विशेषानितरेतरस्यान्योन्यस्य भूषां च वितेनिरेस्मिन् ॥ ४ ॥

४. इतरेतरं संकेतयोगान्नु संकेतो वयमत्र कुमारेन्योन्यं विशेषान्[3]भूषां[4] च विधास्याम इति मिथो[5]भ्युपगमस्तल्लक्षणो यो योगः संबन्धस्तस्मादिवास्मिन्कुमारे कलाश्च धनुःकलाद्याश्च शास्त्राणि च धनुर्वेदादीनि च धीगुणाश्च शुश्रूषाद्या अष्टौ बुद्धिगुणाश्चेतरेतरस्य विशेषान् गुणोत्कर्षाश्चक्रुराधारस्यास्य विशिष्टत्वात्[6]कलादयोन्योन्यं विशेषितवन्त इत्यर्थः। अत एवान्योन्यस्य भूषां च शोभां च वितेनिरे। कृतसंकेता हि संकेतिते स्थाने मिलिताः संकेतितमर्थं कुर्वन्ति ॥

वाक्कमला च तेजःसौम्ये च परस्परां मिषती। शक्तिक्षमे यौवनसंयमित्वे अन्योन्यां योगं चक्रतुः। शक्तिक्षमे यौवनसंयमित्वे इतरेतरां युते। अत्र "परस्पर°" [१] इत्यादिनापुंसि स्यादेरामादेशो वा ॥

परस्परमप्रतिबाधनेन मित्रैरिव विद्याभिः[7]। अन्योन्यमुत्कर्षितया मित्रैरिव

---

१ सी नु काला°.

---

१ डी °न्योन्यं चि°. २ डी °ते च। यो. ३ सी °षा भूषांश्च वि°. ४ ए °न्भूषांश्च वि°. डी °न्भूषाश्च वि°. ५ ए सी °थोत्युप°. ६ सी °शिषत्वा°. ७ बी °द्यादिभिः.

विद्याभिः। इतरेतरं संकेतयोगात्कलाभिः शास्त्रैः। इत्यत्र "परस्पर°" [१] इत्यादिनाऽपुंस्त्वमादेशो वा ॥

परस्परमप्रतिबाधनेन गुणैः। अन्योन्यमुत्कर्षितया गुणैः। इतरेतरं संकेतयोगाद्धीगुणैः। इत्यत्र "परस्पर°" [१] इत्यादिना पुंसि स्यादेरम्वा ॥ पक्षे। द्वेपं परस्परेण। अन्योन्यस्य भूपाम्। इतरेतरस्य विशेषान् ॥ शेषविभक्त्यन्तानि[४] विकल्पोदाहरणानि ज्ञेयानि। एवं[५] च स्त्रीनपुंसकयोरमामौ द्वावादेशौ वा भवतः॥

**यत्सेवमानः स्पृहयंश्च भक्तस्तथोपवृद्धं विरमन्नुपाक्षात्।**
**असावधिस्त्र्यव्यसनी तदस्योपप्राच्यसंस्कारमलं निमित्तम्॥ ५॥**

५. यदिति क्रियाविशेषणम्। यदसौ कुमारोभूत्। कीदृक्। उपवृद्धं वृद्धा ज्ञानादिवृद्धास्तेषां समीपाय स्पृहयंश्च ज्ञानाद्यर्थमभिलषन्वृद्धानां समीपस्य भक्तस्तथा बहुमानवांश्चात एव वृद्धानां समीपमासेवमानोत एव चोपाक्षात्। अक्षशब्देनात्र पाशकोपलक्षितं[६] द्यूतमुच्यते। तत्समीपाद्विरमन् द्यूतव्यसनान्निवृत्त इत्यर्थः। यद्वा। विषयविषयिणोरभेदोपचारादक्षशब्देनेन्द्रियविषयाः शब्दरूपरसगन्धस्पर्शा उच्यन्ते। तत्समीपाद्विरमन् जितेन्द्रियं इत्यर्थः। अत एव चाधिस्त्रि स्त्रीष्वव्यसन्यत्यासक्तिरहितः। तज्ज्ञायतेस्य कुमारस्योपप्राच्यसंस्कारं प्राच्याः पूर्वजन्मभवा ये संस्कारा वृद्धसेवादिनिरन्तराभ्यासजनिता वासनास्तेषामनन्तरपूर्वभवापेक्षया सामीप्यं कर्तुं अलं समर्थं निमित्तं कारणम्। यदयं स्वभावेनैव गुरुसेवापरायणत्वादिगुणोपेतस्तत्रानन्तरपूर्वभवाभ्यास एव हेतुरित्यर्थः॥

१ सी °शेशा। प°. २ ए °तयोः गा°. ३ धी °न्यभू°. ४ ए °नि वक°. ५ बी °वली°. ६ सी °त श्वप°. ७ वी °यऽत्र ए°. ८ ए सी °सनी सत्वा°. ९ °स्कारां श्व°

प्रियोपवृद्धः स निशम्य पार्थवृत्तान्युपव्यासमुपेशगेहे ।
किमूपतूणेन किमूपचापं गुरो रणाज्ञां हि विनेति दध्यौ ॥ ६ ॥

६. स कुमारः प्रियमुपवृद्धं ज्ञानवृद्धादिसमीपं यस्य स तथा सन्नुपेशगेहे रुद्रप्रासादसमीपे कथामण्डपादावुपव्यासं व्याससमीपे पार्थवृत्तानि शत्रुजयादिविषयाण्यर्जुनचरितानि निशम्याकर्ण्य दध्याव-चिन्तयत् । किमित्याह । गुरोः पितू रणाज्ञां युद्धविषयादेशं विना हि स्फुटमुपतूणेन निषङ्गयोः सामीप्येन किमु तथोपचापं धनुःसामीप्येन च किमु । यावत्पितू रणाज्ञा न स्यात्तावन्निरर्थकत्वाद्धनुर्विद्याभ्यास-सूचकेन रणार्थे पार्श्वस्थेन तूणद्वयेन चापेन च मम न किंचिदिति पूर्व-महापुरुषावदाताकर्णनोद्भूतातिरिक्तरणोत्साहादचिन्तयदित्यर्थः ॥

उपप्राच्यसंस्कारम् । उपवृद्धं सेवमानः । उपवृद्धं स्पृहयन् । उपवृद्धं भक्तः । इत्यत्र "अम्" [२] इत्यादिना स्यादेरम् ॥ अव्ययीभावस्येति किम् । पार्थवृत्तानि ॥ तत्संबन्धिनः स्यादेरिति किम् । प्रियोपवृद्धः ॥ अत इति किम् । अधिस्त्रि ॥ अपञ्चम्या इति किम् । उपाक्षात् ॥

किमूपचापम् किमूपतूणेन । इत्यत्र "वा तृतीयायाः" [३] इति वाम् ॥

उपव्यासम् उपेशगेहे । अत्र "सप्तम्या वा" [४] इति वाम् ॥

सुगूर्जरं हेतुरनेकभारद्वाजं वरो गीतगुणस्त्रिगङ्गम् ।
स्थितोधिसद्धत्त्युपगूर्जरेन्द्रे स्वरीशितुः पुत्र इवैष रेजे ॥ ७ ॥

७. एष कुमारः स्वः स्वर्गस्येशितुः स्वामिनः शक्रस्य पुत्र इव

---

१ ए सी निसम्य. २ सी °चाप गु°. ३ ए सी सगू ।

---

१ ए सी °ङ्क्यो सा°. २ ए सी ज्ञान स्या°. ३ सी °णार्थे पा°. ४ डी किम् । ........ पार्थ°. ५ बी °दानाक°. ६ ए सी °रन् ॥ अ°. ७ ए सी डी स्वः सर्ग°.

जयन्त इव रेजे । यतः कीदृक् । सुगूर्जरं गूर्जराणां गूर्जरदेशोद्भवनृणां शोभनायामृद्धौ न्यायपालकत्वाद्धेतुः । तथानेकभारद्वाजं भरद्वाजस्यर्षेरिमेपत्यत्वेन भारद्वाजा अनेकोविद्यमान एको येष्विति कृत्वानेका वा भारद्वाजा वंश्या अर्थात्स्वस्य । भारद्वाजा हि चौलुक्यानामाद्याः प्रवर्तयितारो धर्मगुरवश्चेति श्रुतिः । तेषु धर्मगुरुषु विषये वरो धार्मिकत्वाद्भक्तिपूजादिकरणेन श्रेष्ठः । तथोपगूर्जरेन्द्रे मूलराजसमीपेधिसद्भक्ति प्रधानभक्तौ विनीतत्वात्स्थितोत एव त्रिगङ्गं तिस्रो भूर्भुवःस्वस्त्रयस्था गङ्गाः समाहृतास्तत्र । लोकत्रयेपीत्यर्थः । गीतगुणः । जयन्तोप्यनेकभारद्वाजं वर इन्द्रसमीपेधिसद्भक्ति स्थितोत एव त्रिगङ्गं गीतगुणश्च ॥

ऋद्ध । सुगूर्जरम् ॥ नदी । त्रिगङ्गम् ॥ वंश्य । अनेकभारद्वाजम् । इत्यत्र "ऋद्ध°" [५] इत्यादिना सप्तम्या अम् ॥

अधिसद्भक्ति । इत्यत्र "अनतो लुप्" [६] इति स्यादेर्लुप् ॥ अनत इति किम् । उपगूर्जरेन्द्रे ।

स्वः । इव । अत्र "अव्ययस्य" [७] इति स्यादेर्लुप् ॥

यशस्यति क्ष्मानयसूत्रधारे सदा परस्त्रैणमनङ्गरूपे ।
यत्प्रागभूच्छ्रियंमन्यमिहाश्रियंमन्यं स्त्रींमन्यतामप्यभितोमुचत्तत् ॥ ८ ॥

८. यत्परस्त्रैणमन्येषां स्त्रीसमूहः प्राक्पूर्वं सौभाग्यादिगुणश्रीगर्वेण सदा श्रियंमन्यं हरिप्रियातुल्यमात्मानं मन्यमानमासीत्तदिह कुमारे सत्यश्रियंमन्यं लक्ष्मीतुल्यमात्मानममन्यमानं सत्स्त्रींमन्यतामप्यास्तामश्रियंमन्यतां

---

१ ए सी °रप्राविप्रय°.

---

१ ए सी °गुरव°. २ ए सी डी °स्य वि°. ३ सी °कवये°. ४ ए सी °न १°. ५ सी °श्रियम°.

नारिंमन्यतामप्यभितः सामै[2]स्त्येनामुचत् । यतः किंभूते । अनङ्गरूपेपि । अपिरत्र ज्ञेयः । एतेन स्त्रीप्रार्थनीय[3]त्वो[4]क्तिः । परम् । [5]यशस्यति [6]परनारीसहोदरोयमित्यादियशोभिलाषिणि । अत एव क्ष्मायाः पृथ्वीस्थलोकस्यापि नये परस्त्रीसेवननिवृत्त्यादिन्यायविषये सूत्रधा[7]रे सूत्रधारवत्प्रवर्तके । लोकस्यापि नये प्रवर्तकत्वात्स्वयमत्यन्तं न्यायनिष्ठ इत्यर्थः । यदासौ रूपप्रकर्षेण स्त्रीप्रार्थनीयोपि यशोर्थित्वेनातिसदाचारत्वाद्रूपसौभाग्यादि[8]निधीनामपि साभिलाषाणामपि परस्त्रीणां संमुखमपि नालोकत तदा ता आत्मानं रूपादिगुणहीनं सामान्यस्त्रियो[9]पि [10]निकृष्टं च मेनिर इत्यर्थः ॥

अनङ्गरूपे । क्ष्मानयसूत्रधारे । यशस्यति । सूत्रधारे । स्त्रैणम् । इत्यत्र अनङ्ग अस् । रूप स् ॥ क्ष्मा अस् । नय ङ् । सूत्रधा[11]र स् ॥ यशस् अम् य ॥ सूत्र अम् धार ॥ स्त्री आम् नञ् ॥ इति स्थिते[12] "ऐकार्थ्ये" [८] इति[13] स्यादेर्लुप्[14] ॥ ऐकार्थ्य इति निमित्तसप्तमीविज्ञानादैकार्थ्योत्तरकालस्य न स्यात् । अनङ्गरूपे ॥

स्त्रीं[15]मन्यताम् । श्रियंमन्यम् । अत्र "न नामि°" [९] इत्यादिनामो न लुप् ॥ अन्ये त्वाहुर्यथा प्रेक्षाद[16]यः शब्दा भवयोगात्स्त्रियां वर्तमाना[17]ः स्वं लिङ्गं विहाय स्त्रीलिङ्गमुपाददते तथा[18] श्रीशब्दः स्त्रैणे वर्तमानः स्वलिङ्गत्यागेन वर्तते । ततो नपुंसकलक्षणं ह्रस्वत्वममो लुप्च स्यात् । अश्रिमन्यम् ॥

---

१ ए सी नारिम°. २ बी °मस्तेना°. ३ बी °नीयोक्तिः ।. ४ ए सी °त्वोक्ति । प°. ५ ए सी यसस°. ६ बी परं ना°. ७ ए सी डी °धार°. ८ ए सी °दिधी°. ९ डी °पि कनिष्ठं च. १० ए सी निष्ट. ११ ए सी °र यस् ।. १२ ए सी °ते "एकार्थे" इ. १३ बी °ति सपदे°. १४ ए सी °प् । ऐक्यार्थ इति स्यादेर्लुप् । ऐ°. १५ सी °न्यता । श्रि°. १६ ए सी डी °दयाः श°. १७ ए सी °नाः स्वेलि. डी °नाः स्वलि°. १८ बी °था स्त्रीश°.

स ब्राह्मणाच्छंसिजनेन्तिकादागते हिमाद्रेस्तपसाकृतोर्जे[1] ।
त्यक्तान्यकर्मा सहसाकृतोत्थोम्भसाकृतार्घोभिमतान्यदत्त ॥९॥

९. ब्राह्मणाच्छंसिजने[1] ऋत्विग्विशेषलोकविषये स[2] कुमारोभिमतानि धनादीन्यदत्त । तदिच्छानुसारेणादादित्यर्थः । यतस्तपसा कृतास्तपश्चरणेन विहिता ऊर्जो व्योमगमनादयः शक्तयो यस्य तस्मिंस्तथा हिमाद्रेरन्तिकादागते[3] । औदार्योत्थकीर्तिश्रवणाद्दूरदेशान्तरेभ्योपि चामुण्डराजसमीपमायात इत्यर्थः । कीदृक्सन् । सहसाकृतोत्थः संभ्रमेण झटिति विहिताभ्युत्थानः । तथा त्यक्तान्यकर्मा मुक्तव्यापारान्तरः । तथाम्भसाकृतार्घो जलेन विहितपादशौचाद्युपचारः ॥

न[2] तेन किं चित्तमसाकृतं वौजसाकृतं वा विकृतं प्रजायाम् ।
पुंसानुजायां नु यदञ्जसात्तो दोपावलोके जनुषान्धभावः ॥१०॥

१०. तेन कुमारेण प्रजायां लोकविषये पुंसानुजायां नु पुंसा करणेन पश्चाज्जातायामिव लघुभगिन्यामिवेत्यर्थः । किंचित्स्तोकमपि विकृतं विकारो न वा तमसाकृतमज्ञानेन कोपेन वा कृतं न वौजसाकृतं बलात्कारेण कृतम् । यद्यस्मात्तेन प्रजायां विषये पुंसानुजायामिव दोषावलोके जनुषान्धभाव आजन्मान्धत्वमञ्जसात्तः स्नेहेनाङ्गीकृतः । अथ च या प्रजापत्यं तस्यां स्नेहाद्दोषावलोकनाभावेन न केनचित्किंचिद्विकृतं तमसा वौजसा वा क्रियत इत्युक्तिः[7] ॥

अन्तिकादागते । अत्र "असत्त्वे ङसेः" [१०] इति ङसेर्न लुप् ॥

१ ए सी °तोजे ।. २ सी न केचि°.

१ ए सी °ने रत्वि°. २ सी स सकु°. ३ सी °दाते ।. ४ सी °यान्व ए°. ५ ए सी डी जनेन. ६ सी °कृता अ°. ७ सी °त्युक्ति ॥. ८ बी °से न मु°.

ब्राह्मणाच्छंसि। इति "ब्राह्मणाच्छंसी" [११] इत्यनेन निपात्यम्॥

ओजसाकृतम्। अञ्जसात्तः। सहसाकृत। अम्भसाकृत। तमसाकृतम्। तपसाकृत। इत्यत्र "ओजः०" [१२] इत्यादिना टो न लुप्॥

पुंसानुजायाम्। जनुषान्ध। इत्यत्र "पुंजनुष०" [१३] इत्यादिना टो न लुप्॥

**स मानसाज्ञायिक आत्मनाज्ञाय्यासात्मनाविंश इवाङ्गभाभिः।**
**प्रसन्नयापन्मनसाद्यदेव्यात्मनेपदं पुंस्विह ङिन्नु धातुः॥११॥**

११. स कुमारः प्रसन्नया संतुष्टया मनसेत्याद्यं यस्याः सा या देवी तया मनसादेव्या सरस्वत्या कृत्वेह जगति पुंस्सु(सु?) मध्य आत्मन आत्मार्थं पदं बुद्ध्यादिगुणोन्नतिरूपां पदवीमापत्प्राप। प्रतिभादिगुणैः सर्वनरेषूत्कृष्टोभूदित्यर्थः। शब्दश्लेषोपमामाह। ङिन्नु धातुर्यथा ङानुबन्धो धातुर्गोङादिरात्मनेपदं सर्वविभक्तीनां पराणि नव नव वचनानि कानानशौ चाप्नोति। अत एव सोङ्गभाभिः सर्वशास्त्रपरिज्ञानप्रकर्षोद्भूताङ्गतेजोभिः कृत्वात्मनाविंश इव स्वेन कृत्वा विंशतेः पूरण इव विंशतिगुण इवेत्यर्थः। आस बभूव। कीदृक्सन्। मनसा ज्ञातुं शीलमस्य मनसाज्ञायी विद्वांस्तेन संस्कृतः सर्वविद्याध्यापनेन कृतसंस्कारः। यद्वा। मनसाज्ञायिभिर्जयति दीव्यति चरति वा इकणि मानसाज्ञायिकोत एव चात्मना ज्ञातुं शीलमस्यात्मनाज्ञायी विषमशास्त्राद्यपि स्वयं सामस्त्येन जानन्। धातूनामनेकार्थत्वात्सत्तावृत्तेरसतेरासेत्ययं प्रयोग ईक्षामासेत्यादौ णवन्तानुप्रयोगप्रतिरूपकनिपातस्य वा॥

---

१ बी °च्छसी". २ सी डी °कृतम्। अ°. ३ डी °तप°. ४ सी °नुष्यन्ध।. ५ सी °त्मार्थप°. ६ बी °वच°. ७ प सी °व साङ्ग°. ८ बी °श इव स्वेन कृत्वा विंश इ°. ९ सी °न च कृ°. १० प सी °स्यामनो ज्ञा°. ११ सी °वृत्तरा°. १२ प सी ईक्षांमा°. १३ प सी °पकानि°. १४ प सी डी °स्य च॥.

धातुर्नु[1] शेषः स सहः परस्मैपदाय राज्ञातियुधिष्ठिरेण ।
अज्ञाय्यरण्येतिलवत्तदन्यस्त्वक्सारवच्चान्तरसार एव ॥ १२ ॥

१२. अतियुधिष्ठिरेण सत्यभाषित्वादिगुणैर्युधिष्ठिरमतिक्रान्तेन राज्ञा मूलराजेन स कुमारः परस्मायन्यस्मै शत्रुसंबन्धिने[1] पदाय राज्यरूपाय स्थानाय सहः समर्थोज्ञायि । पूर्वोक्तसर्वनृपगुणोपेतत्वाच्छत्रुलक्ष्मीग्रहणसमर्थो ज्ञात इत्यर्थः । यथा शेष आत्मनेपदोपयुक्तादन्यो[2] भूर्वादिर्धातुः परस्मैपदाय सर्वविभक्त्याद्यवचननवकशतृक्वसुप्रत्ययेभ्यः सहो ज्ञायते । तदन्यश्चामुण्डराजादपरस्त्वरण्येतिलवदरण्येतिलाख्यवनधान्यभेदवत्त्वक्सारवच्च वंशवच्चान्तर्मध्येसार एवाज्ञायि ॥

स कीर्तिमुक्तात्वचिसारकः[1] स्तूपेशाणैर्द्[2]र्षदिमाषिकैश्च ।
स गीयते यूथपशुप्रदैश्च स्तम्बेरमौजाः खचराधिपश्रीः ॥ १३ ॥

१३. स कुमारः । स्तूपो गवादिराशिः । शाणः स्वर्णमाषचतुष्टयम् । स्तूपे स्तूपे शाणो देयः । वृत्तौ वीप्साया दानस्य चान्तर्भावः । स्तूपेशाणः करभेदस्तं ददति ये तैर्दार्षदिमाषिकैश्च । दृषदि दृषदि माषः पञ्चगुञ्जो देयो दृषदिमाषः करभेदस्तत्र नियुक्तैश्च । यूथं तिरश्चां जातम् । यूथे यूथे पशुर्देयो यूथपशुः करभेदस्तं प्रददति ये तैश्च करपीडाद्यभावेन हर्षाद्गीयते स्म । कीदृशः । स्तम्बेरमौजा गजबलः । तथा खचराधिपश्रीरिन्द्रतुल्यलक्ष्मीकः । तथा कीर्तिमुक्तात्वचिसारको यशोमुक्ताफलेष्वज्ञातवंशतुल्यः । वंशो हि मुक्तायोनिर्वर्ण्यते । यदुक्तम् ।

हस्तिमस्तकदन्तौ तु दंष्ट्रा शुनवराहयोः ।
मेघो भुजङ्गमो वेणुर्मत्स्यो मौक्तिकयोनयः । इति ॥

---

१ ए बी सी °रवस्तु°. २ ए सी °दैर्दार्ष°.

---

१ ए सी डी °ने रा°. २ बी °न्यो भ्वादि°.

किं खेचरो गोपुचरो नु विष्णुः शल्योथवा मद्रचरो हृदिस्पृक्। सोतर्क्यताभस्मनिमीढकर्मा मध्येगुरूनन्तगुरूंश्च धिन्वन् ॥ १४ ॥

१४. स कुमारोतर्क्यत। कथमित्याह। किमसौ खेचरो विद्याधरो देवो वा। नु किं वा गोपालावस्थायां गोषु चरति गोषुचरो विष्णुरथवा मद्रेषु चरति मद्रचरो मद्रदेशस्वामी शल्य इति। यतः कीदृक्। हृदयं स्पृशति हृदिस्पृग्हृदयज्ञ इत्यर्थः। तथा मध्येगुरून् मध्ये मध्यवयसि वर्तमानान् गुरून् पूज्यानन्तगुरूंश्चान्त्यवयसि वर्तमानान् गुरूंश्च धिन्वन्विनयपूजादिना प्रीणयन्। तथा भस्मनि मीढं सेचनं भस्मनिमीढं तदिव कर्म क्रिया यस्य स भस्मनिमीढकर्मा न तथा सफलकर्मा। खेचरादयो हि हृदिस्पृक्त्वादिगुणान्विताः ॥

नृणामनन्तेगुरुरेकदाथ सिंहो नु सोमध्यगुरुः सभायाम्। नृपं प्रणम्योरसिलोमकण्ठेकालोपमं मूर्धशिखो न्यषीदत् ॥ १५ ॥

१५. अथैकदा सिंहो नु मृगेन्द्र इवामध्यगुरुः कृशोदरो नृणामनन्तेगुरुः प्रथमपूज्यो मूर्धनि शिखा शिखण्डिका यस्य स मूर्धशिखः कुमारः सभायां न्यषीदत्। किं कृत्वा। नृपं प्रणम्य। किंभूतम्। महापुरुषत्वादुरसि लोमानि यस्य स तथा यः कण्ठेकालोपम आश्रितानां सर्वकामपूरकत्वात्सोमनाथतुल्यस्तम् ॥

अत्रान्तरे मस्तकमाल्य ऊचे वेत्र्यर्थशौण्डोञ्जलिहस्तबन्धः। स्वशीर्षकामेण रथः सुचक्रेबन्धोद्य ते प्रैष्ययमङ्गभर्त्रा ॥ १६ ॥

---

१ ए सी °ष्णुः शिल्यो°. २ बी °श्च धेन्व°. ३ ए सी °हो न सो°.

---

१ ए सी १४ कुमा°. २ बी °कर्माः खे°. ३ बी °स्पृक्त्वादि°. ४ बी °था सन् यः°.

१६. अत्रान्तरेस्मिन्प्रस्तावे । वेत्री । नाट्ये तु

पताकाभ्यां तु हस्ताभ्यां संश्लेषादञ्जलिः स्मृतः ।[1]

विनीतत्वात्तद्रूपो हस्ते वन्धो यस्य स तथा सन् । करौ योजयित्वेत्यर्थः । नृपमूचे । कीदृक् । भोगित्वान्मस्तके माल्यं पुष्पमाला यस्य सः । तथा सदा विज्ञापककार्यनिवेदने[3] व्यापृतत्वादर्थे विज्ञापककार्ये प्रसक्तः शौण्ड इव मद्यप इवार्थान्मद्यपानेर्थशौण्डः[4] । यदूचे तदाह । राजन् स्वशीर्षे कामो यस्य तेन जीवितुमिच्छता सताङ्गभर्त्राङ्गदेशस्वामिनाद्यायं[5] प्रत्यक्षं प्राभृतीकृतो रथस्ते त्वदर्थं प्रैपि । कीदृक् । शोभनश्चक्रे[6] वन्धो रत्नखचितस्वर्णपट्टादिना रथाङ्गे बन्धनं यस्य सः । उपलक्षणत्वादशेषरथगुणोपेत इत्यर्थः ॥

त्वयेभवन्धो नृपतिः सहस्तेवन्धः कृतो यः कृतचक्रवन्धः ।
तस्यातिपूर्वाह्णतनांशुमन्पूर्वाह्णतनाब्जाग्रकरो गजोयम् ॥ १७ ॥

१७. हे[7] अतिपूर्वाह्णतनांशुमन्[8]महाप्रतापितया पूर्वाह्णेभवं सूर्यमतिक्रान्त य इभवन्धो बध्नाति अचि बन्ध इभानां वन्धो वन्धको विन्ध्याद्रिस्वामी नृपतिर्बलिष्ठत्वात्कृतश्चक्रे त्वदीयसैन्ये वन्धो वन्धनं येन । यद्वा । कृतश्चक्रे सैन्ये वन्धो यस्य स तथा सन्सह[9] हस्ते वन्धेन सहस्तेवन्धस्त्वया कृतः । जित्वा हस्तयोर्बद्ध इत्यर्थः । तस्यायं प्रत्यक्षो गजस्त्वदर्थं प्राभृतमस्ति । कीदृक् । पूर्वाह्णेतनाब्जाग्रकरः प्रशस्यलक्षणत्वात्प्राभातिकपद्मवद्विकसितरक्तहस्ताग्रः । उपलक्षणत्वाच्छुभलक्षणोपेतसर्वाङ्गः ॥

---

१ बी संश्लेपा°. २ सी °र्थे...प्र°. ३ प °कार्यप्र°. ४ बी °नेर्थे शौ°. ५ सी °य प्रा°. ६ प सी डी °दि र°. ७ प सी हे इति°. ८ प बी सी डी °तमांशु°. ९ सी °न्सह स्ते.

संध्यां नु पूर्वाह्णतरे नतो पूर्वाह्णेतरां योर्चति पादुके ते ।
ज्योत्स्नाश्रियं पाण्डुपतेरमी पूर्वाह्णेतमां बिभ्रति तस्य हाराः ॥१८॥

१८. यः पूर्वाह्णतरे प्रभाते पूर्वाह्णेतरां प्रदोषे च यथा संध्यां प्रातःसंध्यां प्रदोषसंध्यां च नतः सन्नर्चत्येवं ते पादुके अर्चति तस्य पाण्डुपतेः पाण्डुदेशाधिपस्यामी प्रत्यक्षं प्राभृतीकृता हाराः पूर्वाह्णेतमां प्रभातेप्यतिकान्तिमत्त्वाज्ज्योत्स्नाश्रियं चन्द्रिकालक्ष्मीं बिभ्रति । एतेन चन्द्रादप्येषां कान्तिमत्तोक्ता । चन्द्रो हि प्रातर्न चन्द्रिकाश्रियं बिभर्ति ॥

रत्नानि पूर्वाह्णतमार्कभांसि स सिन्धुराड् प्रेषितवानमूनि ।
पूर्वाह्णकालेत्ति न नाप्यपूर्वाह्णेकाल आत्ताङ्गुलिकस्त्वया यः ॥१९॥

१९. हे राजन्स सिन्धुराडब्धिस्वामी राजामूनि प्रत्यक्षाणि रत्नानि प्राभृतं प्रेषितवान् । कीदृंशि । पूर्वाह्णतमे । प्राभातिक इत्यर्थः । योर्कस्तस्येवातिरक्ताः प्रवर्धमानाश्च भासो येषां तानि । यस्त्वयात्ताङ्गुलिको वेलायत्तीकृतः सन्न पूर्वाह्णकाले दिनस्य प्रथमप्रहरद्वयेत्ति नाप्यपूर्वाह्णकाले दिनस्य पश्चिमप्रहरद्वयेत्ति । निशायां भुङ्क्त इत्यर्थः । वेलायत्तो हि स्वामिन्यदृष्टे निशायामेवात्तीति स्थितिः ॥

आत्मनाविंशः । इत्यत्र "आत्मनः पूरणे" [ १४ ] इति टोलुप् ॥

मानसाज्ञायिकः । आत्मनाज्ञायी । इत्यत्र "मनसश्च" [ १५ ] इत्यादिनालुप् ॥

मनसादेव्या । इत्यत्र "नाम्नि" [ १६ ] इत्यलुप् ॥

---

१ सी °के ज्यो°. २ ए सी सिन्धरा°.

---

१ बी अर्चिति. २ ए बी सी डी हारा पू°. ३ ए सी डी °क्षानि र°. ४ बी °मप्रथमप्र°. ५ ए सी डी °येति नि°. ६ ए सी °ज्ञातीयात्ल°.

परस्मैपदाय । आत्मनेपदम् । अत्र "पर°" [ १७ ] इत्यादिनालुप् ॥

अदन्त । अरण्येतिलवत् ॥ व्यञ्जन । युधिष्ठिरेण[1] ॥ इत्यत्र "अद्व्यञ्जनात्°" [१८] इत्यादिना सप्तम्या न लुप् ॥ बहुलवचनात्कचिद्विकल्पः । त्वचिसार त्वक्सार ॥ नाम्नीत्येव । अन्तरसारः ॥

अदन्त । स्तूपेशाण ॥ व्यञ्जन । दार्षदिमापिकैः[2] ॥ अत्र "प्राक्कारस्य°" [१९] इत्यादिनालुप् ॥ प्रागिति किम् । यूथपशु । उदीचां देशे कारोयं न प्राचाम् ॥

अदन्त । स्तम्बेरम ॥ व्यञ्जन । भस्मनिमीढ ॥ इत्यत्र "तत्पुरुषे कृति"[२०] इत्यलुप् ॥ बहुलाधिकारात्कचिदन्यतोपि । गोपुचरः ॥ कचिन्निषेधो न स्याद्[3] । मद्रचरः ॥ कचिद्विकल्पः । खेचरः खचरः[4] ॥ कचिदन्यदेव । हृदयं स्पृशति हृदिस्पृक् । द्वितीयार्थेत्र सप्तमी ॥

मध्येगुरून् । अनन्तेगुरुः । अत्र "मध्य°" [ २१ ] इत्यादिनालुप्[5] ॥ मध्यगुरुः । अन्तगुरून् । इत्यप्यन्ये ॥

कण्ठेकाल[6] । उरसिलोम । इत्यत्र "अमूर्ध°" [२२] इत्यादिनालुप् ॥ अमूर्धमस्तकादिति किम् । मूर्धशिखः । मस्तकमाल्यः ॥ स्वाङ्गादिति किम् । अर्थशौण्डः[7] ॥ अकाम इति किम् । स्वशीर्षकामेण ॥

हस्तेबन्धः[8] हस्तबन्धः । चक्रेबन्धः चक्रबन्धः । अत्र "बन्धे घञि न वा" [२३] इत्यलुब्वा ॥ घञीति किम् । अजन्ते मा भूत् । इभबन्धः ॥

पूर्वाह्णेतन पूर्वाह्णतन । पूर्वाह्णेतराम् पूर्वाह्णतरे । पूर्वाह्णेतमाम् पूर्वाह्णतम । पूर्वाह्णेकाले पूर्वाह्णकाले[9][10] । अत्र "कालात्तन°" [२४] इत्यादिना वालुप् ॥

---

१ प सी °ष्ठिरण ।. २ सी °पिकेः । अ°. ३ प सी °द् । इमच°. ४ बी °चरः । क°. ५ प सी °गुरुः । नित्य°. ६ बी °ण्ठेकल ।. ७ प सी °शौढः । अ°. ८ प सी डी °न्धः । च°. ९ प सी डी °काल । अ°. १० बी °ले । "का°.

तोयेशयं तोयशयाग्र्यमीशान्तेवासिनं वा विनयान्तवासी ।
त्वां मन्यते यो वनवासभर्ता स्वर्णं वनेवासकरोत्र तस्य ॥ २० ॥

२०. हे राजन् यो वनवासभर्ता वासयति अचि वासो वने वासो वनवासो देशभेदस्तस्य भर्ता विनयान्तवासी विनयेन प्रणामादिना शिष्य इव संस्त्वां मन्यते । कमिव तोयेशयं विष्णुमिव तोयशयाग्र्यं वासुदेवाग्रजं बलभद्रमिवेशान्तेवासिनं वा परशुराममिव वा । तस्य राज्ञः संबन्ध्यत्र प्रत्यक्षदेशे स्वर्णं वनेवासेकरो वनवासदेशस्योपभोगदण्डोस्ति । वनवासदेशे हि स्वर्णं बहु स्यात् ॥

अब्जान्यसायाह्नशयानि वर्षेजसेवयाप्तानि शरेजदेवात् ।
स वर्षजे दण्ड इमान्यदात्तेप्सुजाक्ष राजा शरजाचलस्य ॥ २१ ॥

२१. हे अप्सुजाक्ष कमललोचन स प्रसिद्धः शरजाचलस्य शरे जातः शरजः स्कन्दस्तस्य योचलो देवगिरिस्तस्य राजेमानि प्रत्यक्षं प्राभृतीकृतान्यब्जानि वर्षजे सांवत्सरिके दण्डे ते तुभ्यमदात् । किंभूतानि । वर्षेजसेवया वर्षे जाता या सेवा तया शरेजदेवात्स्कन्दादाप्तान्यत एव न सायाह्ने प्रदोषे शेरते संकुचन्त्यसायाह्नशयानि निश्यपि विकस्वराणि ॥

सरोजवासावरजो महाकालिकावरेजश्च स पद्मरागान् ।
प्रैषीद्वनं सारसिजं-नु कोल्हापुरेश्वरस्तेरिमनोजशंभोः ॥ २२ ॥

२२. सरोजे वासो यस्याः सा सरोजवासा लक्ष्मीस्तस्या वरः प्र-

---

१ प सी °ते यो व°. २ प °माजदा° सी °मादाकदा°.

---

१ सी °न्यमे । क°. २ डी °व मा तो°. ३ बी °मिवे°. ४ डी °स...दे°. ५ सी °रेजादे°. ६ प सी °कस्करा°.

सादस्तत्र जातो महाकालिकावरेजश्च गौरीप्रसादे जातश्च स प्रसिद्धः कोल्लापुरेश्वर. कोल्लापुराख्यमहापुराधिपः पद्मरागाँल्लोहितकमणीन्प्रैषीत्। कीदृशान्। सारसिजं वनं नु रक्तत्वादिगुणै रक्तोत्पलसत्कवनतुल्यान्। कोल्लापुरे ह्यतिश्रेष्ठाः पद्मरागाः स्युः। यतः किंभूतस्य ते। अरय एव मनोजः कामस्तत्र शंभोर्विनाशकस्येत्यर्थः। शंभोर्हि पूजार्थं शंभुभक्तः[2] सारसिजं वनमिव पद्मरागान्प्रेषयति ॥

अस्त्रं नवं मानसिजं वरैणक्षरेजपङ्कं क्षरजाग्नितेजः।
इन्द्राण्युरोजोचितमद्रिजोरसिजोचितं ढौकयति स्म कीरः ॥ २३ ॥

२३. क्षरो मेघो जलं वा तत्र जातो योग्निर्विद्युद्वडवानलो वा तद्वत्तेजो यस्य हे क्षरजाग्नितेजो वराः सुजात्या य एणास्तेषां यः क्षरो मूत्रं तत्र जातो यः पङ्कस्तं जात्यकस्तूरिकामित्यर्थः। कीरः कश्मीराधिपो ढौकयति स्म त्वदर्थं प्रेषितवान्। कीदृशम्। नवमग्रेतनो[3]भ्यः पुष्पेभ्यो[4] गन्धोत्कृष्टत्वेनात्यन्तं कामिनां वशीकारकत्वाद[5]भिनवं मानसिजं कान्दर्पमस्त्रं शस्त्रमिव। अत एवेन्द्राण्युरोजोचितमद्रिजोरसिजोचितं च[6]। शचीगौरीस्तनयोर्मण्डनाय योग्यम्। कश्मीरेषु हि मृगविशेषमूत्रात्प्रकृष्टकस्तूरिका स्यात् ॥

तोयेशयम् तोयशयं[7]। अन्तेवासिनम् अन्तवासी। वनेवास वनवास। इत्यत्र "शय°" [२५] इत्यादिना वा सप्तम्यलुप्[8] ॥ अकालादिति किम्। सायाह्नशयानि ॥

वर्षेज वर्षज। क्षरेज क्षरज। वरेजः वरजः[9]। अप्सुज अब्जानि। सारसिजम् सरोज। शरेज शरज। उरसिज उरोज। मानसिजम् मनोज। इत्यत्र "वर्ष°" [२६] इत्यादिना[10] वालुप् ॥

---

१ बी डी °रागाल्लो°. २ ए सी °भक्त सा°. ३ ए सी °नाख्येभ्यः. ४ बी पुष्पेभ्यो°. ५ ए सी °त्वा°. ६ ए बी सी च। सची°. ७ सी डी °शय.। अ°. ८ सी सम्य°. ९ बी °रज.। व° १० बी °नाल्लु°.

वर्षासुजं तद्दिविजेशधन्व रत्नैर्दधत्प्रावृषिजो नु मेघः ।
नीलं कुरोश्छत्रमिदं[1] निरस्यत्कालेजमप्यातपशारदिज्यम् ॥ २४ ॥

२४. इदं प्रत्यक्षं कुरोः कुरुदेशराजस्यच्छत्रं वर्तते । कीदृशम् । प्रावृषिजो मेघो नु यथा वार्षिको घनो वर्षासुजमिन्द्रधनुर्दधत्स्यादेवं वर्षासुजं वर्षाकालजातं तत्पञ्चवर्णत्वेन प्रसिद्धं दिविजेशधन्व दिविजानां देवानामीशः शक्रस्तस्य चापमिव रत्नैश्छत्रानुलोम्याद्वक्राकारेणानुस्यूतैः पञ्चवर्णमणिभिः कृत्वा दधत्तथा नीलं हरितवर्णं तथा कालेजं शरत्काले जातमातपशारदिज्यमपि शरदि जातः[1] शरदिजस्तस्य कर्म शारदिज्यमातपस्य यच्छारदिज्यं संतापकत्वं तदप्यत्युग्रं शरत्कालातपमपीत्यर्थः । निरस्यत् सान्द्रच्छायाकारित्वात्[2] ॥

दिविज[3] । प्रावृषिजः । वर्षासुजम्[4] । शारदिज्यम् । कालेजम् । अत्र "द्युप्रावृड्°" [२७] इत्यादिना सप्तम्यलुप् ॥

अप्सव्यदिव्याश्वसमास्तुरङ्गास्तेजस्य नावो नु रयेप्सुचर्यः ।
एतेप्सुयोनिच्छवयो जनो यैः पिपासितोप्यप्सुमतिर्न हि स्यात्
॥ २५ ॥

२५. यैः कृत्वा जनः पिपासितोप्यप्सु जलेषु मतिर्मनो[5] यस्य सोप्सुमतिर्न हि स्याद्रूपकान्त्यादिलक्ष्म्याक्षिप्तचित्तत्वाद्यान्पश्यँल्लोकस्तृषमपि न जानातीत्यर्थः । त एते प्रत्यक्षास्तेजस्य तेजदेशराजस्य तुरङ्गाः । किंभूताः[6] । अप्सुयोनिच्छवयो विद्युद्दीप्तयस्तथा रये वेगविषयेप्सुचर्यो नावो नु जलचारिवेडातुल्या[7] अत एवाप्सव्यो-[8]

---

१ प सी °रोच्छत्र°.

---

१ प सी ज़ात श°. २ प सी °द्रचाया°. ३ प सी °विजः । व°. डी °विजः । प्रा°. ४ प सी °र । अ°. ५ प सी डी °तिर्नमो य°. ६ प सी °भूत म°. ७ बी °द्विवेडा°. ८ बी °वाप्साव्यो°.

ब्धेर्जातत्वेनाप्सु जलेषु भवो दिव्यः स्वर्गस्थत्वाद्दिवि स्वर्गे भवश्च योश्व उच्चैःश्रवास्तत्समाः ॥

अप्सव्य । अप्सुयोनि । अप्सुमतिः । अप्सुचर्यः । इत्यत्र "अपो य°" [२८] इत्यादिना सप्तम्यलुप् ॥

काम्पील्यसिद्धः खधुनीतटस्थोध्ववर्ति चौरस्यकुलं दधानान् ।
त्वदाज्ञयोच्छिद्य खसान्स दास्याःपुत्रानमूं तच्छ्रियमार्पयत्ते॥२६॥

२६. स प्रसिद्धः काम्पील्यसिद्धः काम्पील्यं पञ्चालदेशस्थं पुरं[२] तत्राधिपत्वात्सिद्धो विख्यातः पञ्चालराजः खधुनीतटस्थः खसजयार्थं काम्पील्यपुरपरिसरवर्तिगङ्गातटे कृतावासः सन्खसान्क्षत्रियभेदांस्त्वदाज्ञयोच्छिद्योत्पाट्यामूं प्रत्यक्षां तच्छ्रियं खसर्द्धिं ते तुभ्यमार्पयत् । किंभूतान्खसान् । अध्ववर्ति पान्थलुण्टनाय मार्गसमीपस्थं चौरस्यकुलं निन्दितचौरवर्गं दधानांस्तथा दास्या.पुत्रान्दासीपुत्रत्वेन निन्द्यान् ॥

शैलोन्नतः प्रेषित एष दासीपुत्रद्विपो[१] द्वारपलाटभर्त्रा ।
हृत्पाश्यतोहर्यधरोतिवाचोयुक्तिर्दिशोदण्डपदे महेभः ॥ २७ ॥

२७. दासीपुत्रन्तोकिंचित्करत्वाद्दासपुत्रवदाचरन्तो रिपवो यस्य हे दासीपुत्रद्विपो एष प्रत्यक्षं प्राभृतीकृतो महेभो द्वारपलाटभर्त्रा द्वारपाख्येन लाटदेशाधिपेन दिशोदण्डपदे दक्षिणाशाभुक्तिपदे प्रेषितः । कीदृक् । शैलोन्नतोत एव पश्यन्तमनादृत्य हरति लिहाद्यचि [५.१.५०.] पश्यतोहरो यः पश्यतो हरेदर्थं तस्य भावः पाश्यतोहर्यं हृदां जनचित्तानां पाश्य-

१ ए सी °त्रद्विपो.

१ ए सी डी °म्पील्य° २ ए सी डी °र्थं ..ग°. ३ ए सी °त्सर्व्यां त°. ४ ए सी °सर्द्धिं ते. ५ बी °त्रनोकिं°. ६ सी °त्रद्विपो. ७ ए सी °वः पश्य°.

तोहर्यं धरति यः सः। अत्यौन्नत्यगुणेन पश्यत एव लोकस्य चित्तानि हरन्नित्यर्थः। अत एवातिवाचोयुक्तिर्वाचोयुक्तिमतिक्रान्तो वर्णयितुमशक्य इत्यर्थः॥ अथ चैष शैलोन्नतो महेभः कुलक्षणत्वादमहायानुत्सवाया-माङ्गलिक्यायेभोमहेभः प्रेषितः। कीदृक्। कुलक्षणत्वेन सर्वस्वविना-शकत्वाद्भूदः स्वामिचित्तस्य शून्यत्वापादनेन पाश्यतोहर्यंधरोत एवाति-वाचोयुक्तिरवर्णनीय इत्यर्थः। अयमप्यर्थो गजलक्षणज्ञत्वाद्वेत्रिणा श्लेषोक्त्योक्तः॥

अध्ववर्ति। काम्पीलयसिद्धः। तटस्थः। अत्र "नेन्°" [२९] इत्यादिना सप्तम्या [न ?] लुन्निषेधः॥

चौरस्यकुलम्। अत्र "षष्ठ्याः क्षेपे" [३०] इति षष्ठ्यलुप्॥ क्षेप इति किम्। त्वदाज्ञया॥

दास्याःपुत्रान् दासीपुत्रव। इत्यत्र "पुत्रे वा" [३१] इति वा षष्ठ्यलुप्॥

पाश्यतोहर्यं। वाचोयुक्तिः। दिशोदण्ड। अत्र "पश्यद्°" [३२] इत्यादिना षष्ठ्यलुप्॥

तदेवाह।

दिशन्दशाथ द्विरदं तमामुष्यपुत्रिकां भूमिपतिर्बुभुत्सुः।
कुमारमालोकत सोपि नत्वामुष्यायणः माञ्जलिरेवमूचे॥ २८॥

२८. अथ वेत्रिणा स्तुतिनिन्दारूपश्लेषोक्त्या गजस्य दुर्लक्षणतासू-चनानन्तरं भूमिपतिः कुमारमालोकत। कीदृक्सन्। आमुष्यपुत्रिका-ममुष्यपुत्रस्य भावं "चोरादेः" [७.१ ७३.] इत्यकञ्। अमुष्य भद्रस्य म-

१ ए सी डी स्वादिचि°. २ ए सी कापील्य°. ३ ए सी डी °षः॥ चोर°. ४ बी "षष्ठ्या क्षे°. ५ सी दा...सी°. ६ बी °पु। पश्य°. ७ ए बी सी डी °दण्डे। अ°. ८ बी पु॥ २७॥ दि°. ९ ए सी डी °श्रमा°.

न्दस्य मृगस्य मिश्रस्य वा हस्तिनोयं पुत्र इत्यर्थं बुभुत्सुर्जिज्ञासुरत एव तं द्विरदं दृशा दिशन्कीदृग्गजोयमिति कुमारं ज्ञापयन्। ततोमुष्य प्रख्यातस्य मूलराजस्य पितुरपत्यं नडाद्यायनणि [६.१.५३.] आमुष्यायणः सोपि कुमारोपि प्राञ्जलिः सन्नत्वैवं वक्ष्यमाणमूचे ॥

आमुष्यपुत्रिकाम् । आमुष्यायणः । अत्र "अदसः°" [३३] इत्यादिना षष्ठयलुप् ॥

तदेवाह ।

यथा शुनःपूर्वकशेपपुच्छलाङ्गूलमुख्यैर्गजलक्ष्म बुद्ध्वा ।
वाचस्पतीयं जगदे ममादेवानांप्रियैर्नैषगजस्तथार्हः ॥ २९ ॥

२९. अदेवानांप्रियैः पण्डितैः शुन इति पूर्वं येषां ते शुनःपूर्वका अभिधानाभिधेययोरभेदोपचारादभिधेयाविशेषणत्वे ये शेपपुच्छलाङ्गूलास्ते। तथा शुनः शेपमिव शेपमस्येत्यादिविग्रहे शुनःशेपशुनःपुच्छशुनोलाङ्गूलाख्या मुनयस्तदाद्यैर्मुनिभिर्वाचस्पतीयं बृहस्पतेरिदं गजलक्ष्म गजलक्षणप्रतिपादकं शास्त्रं बुद्ध्वा गुरूपदेशेन ज्ञात्वा यथा ममाग्रतो जगदे व्याख्यातं तथा ज्ञायत एष गजो नार्हो न पूज्यो वाचस्पतीयगजलक्ष्मशास्त्रोक्तलक्षणानुसारेण न प्रशस्य इत्यर्थः ॥

अथास्यानर्हतामेवाष्टवृत्त्याह ।

ईदृग्दिवोदासनुतस्य वास्तोष्पतेरपीभो हि दिवस्पतित्वम्।
हरेत होतुःसुतहोतुरन्तेवास्युद्यताशीःष्वपि दीर्घहस्तः ॥ ३० ॥

३०. ईदृगिभो दिवोदासनुतस्य दिवोदासैर्देवविशेषैः स्तुतस्य वा-

१ सी दि ति°. २ बी °स्युद्यता°

१ ए सी °ष्याणः।. २ सी शुनपू°. ३ ए डी °त्वे ते ये ४ ए सी °स्पदेते°. ५ बी °क्ष्म ल°. सी °क्ष्म नज°. ६ ए सी° दासिर्देवविशैः स्तु°.

स्तोष्पतेरपीन्द्रस्यापि दिवस्पतित्वमैन्द्रं पदं हि स्फुटं हरेतापनेतुं शक्तः संभाव्यते । कासु सतीषु । होतुःसुतहोतुरन्तेवास्युद्यताशीःष्वपि ऋत्विक्पुत्रऋत्विक्शिष्याणा सप्रभावेष्वप्याशीर्वादेषु । यतो दीर्घहस्तः प्रलम्बशुण्डः । अलक्षणं ह्येतत् । योपि दीर्घहस्तः प्रलम्बपाणिः स्यात्स दिवस्पतित्वतुल्यमुन्नतं फलादि वस्तु हरतीत्युक्तिलेशः ॥

ईदृग्गजो भर्तृगृहेस्थिदन्तो हन्यात्पितुःशिष्यपितुस्तनूजान् ।
पितुःस्वसारं स्वसृपत्यपत्यं स्वसुःपतिं नाम पितृष्वसृणाम् ॥ ३१ ॥

३१. ईदृग्गजो भर्तृगृहे वर्तमानो हन्यादुच्छेत्तुं शक्तः संभाव्यते । कान् । पितुःशिष्यपितुस्तनूजान् जनकान्तेवासिनो जनकपुत्रांश्च । तथा पितुःस्वसारं जनकभगिनीं च तथा स्वसृपत्यपत्यं भगिनीभर्तृसन्ततिं च तथा स्वसुःपतिं भगिनीभर्तारं च तथा पितृष्वसृणां जनकभगिनीनां नामापि । अपिरत्र ज्ञेयः । यतोस्थिवन्निःश्रीकौ दन्तौ यस्य सः । सर्वसंबन्धिजनक्षयहेतुः । अपलक्षणं ह्येतत् ॥

ताम्यन्ति होतुःस्वसृयुक्तहोतृस्वस्रात्मजा याज्यगृहागते हि ।
मातापितृभ्यां सममेव होतापोतार ईदृग्गज ओतुनेत्रे ॥ ३२ ॥

३२. ईदृग्गज ईदृशे द्विपे याज्यस्य यजमानस्य राजादेर्गृहमायाते सति होतुःस्वसृभिर्ऋत्विग्भगिनीभिर्युक्ता होतृस्वस्रात्मजा ऋत्विग्भगिनीपुत्रा येषां ते होतापोतारो होतारः पोतारश्च ऋत्विग्विशेषा मातापितृभ्यां सममेव सहैव हि स्फुटं ताम्यन्ति याज्यस्य संपत्क्षयेण दक्षिणादिलाभाभावात्खिद्यन्ते । यत ओतुनेत्रे मार्जारपिङ्गलाक्षे । संपत्क्षयहेतुर्हीदमलक्षणम् ॥

---

१ ए सी °लक्ष्यण. २ ए °पाणि स्या°. सी °पाणि स्या°. ३ ए सी °स्तत्स°. ४ सी °पत्य ५ बी °भिऋत्वि°. ६ ए सी डी °स्वस्रात्म°. ७ ए सी °ग्भटिनी°. ८ ए बी सी डी हि स्फट ९ डी संक्षेपेण.

स्वसादुहित्रोः क्षपकं पितापुत्रयोश्च नाम्नुं शुकपिच्छपुच्छम् ।
जिघृक्षतो दक्षिणयापि होतापुत्रावतीन्द्रावरुणः किमु त्वम् ॥ ३३ ॥

३३. उ हे राजन्नमुं गं[1]जं होतापुत्रावृत्विक्तत्पुत्रश्च याचकावपि दक्षिणयापि धर्मेणापीत्यर्थः । न जिघृक्षतः । यतः स्वसादुहित्रो[2]ः क्षपकं पितापुत्रयोश्च क्षपकं विनाशकम् । एतदपि कुत इत्याह । यतः शुकपिच्छपुच्छम् । नीलपुच्छो हि गजः कुलक्षयाय स्यात् । किं पुनरतीन्द्रावरुणो महर्द्धिकत्वादिगुणैरिन्द्रं वरुणं चातिक्रान्तस्त्वं जिघृक्षसि । नै[3]वेत्यर्थः ॥

वाय्वग्निभः कर्मभिराग्निसौमाग्नावै[1]ष्णवैः कृष्णनखे गजेस्मिन् ।
मुधेभशान्तिं रचयेद्द्विजोग्नीषोमोपमोग्नीवरुणोपमो वा ॥ ३४ ॥

३४. द्वि[4]जः पुरोहितः कृष्णनखेस्मिन्गजे विषये कर्मभिः शान्तिक्रियाभिः कृत्वेभशान्तिम् । इभशब्देनेभस्थकृष्णनखत्वकुलक्षणै[5]र्जनिता राज्यराष्ट्रादेरुपद्रवा उपचारादुच्यन्ते । तेषां शान्तिमुपशमकर्म मुधा निरर्थकमेव रचयेत् । संभावनेत्र सप्तमी । नोपशमयितुं श[6]क्तः संभाव्यत इत्यर्थः । कीदृशोपि । तपोमन्त्रादिप्रभावोत्थदिव्यशक्त्या वाय्वग्निभो वायुदेवताग्नि[7]देवतातुल्यमाहिमाग्नीषोमोपमो[8]ग्नीवरुणोपमो वा । वाय्वग्नी अग्नीषोमावग्नीवरुणौ च द्वौ द्वौ सह[9]चरौ देवभेदाः । किंभूतैः कर्मभिः । आग्नि[10]सौमाग्नावैष्णवैरग्नीषोमावग्नाविष्णू च सहचरौ देवभे[11]दौ देवते येषां तैः ॥

---

१ प सी °ष्णवै कृ°.

---

१ प सी गजा हो°. २ बी °त्रोः पि°. ३ प बी सी नैवेत्य°. ४ सी द्विज पु°. ५ सी °णनि°. ६ प सी शक्त स°. ७ प सी °ग्नितु°. ८ बी °ग्नीवार°. ९ प सी °हरौ. १० बी ग्निसोमा°. ११ प सी डी °वते.

अदेवानांप्रियैः । अत्र "देवानांप्रिय." [३४] इति षष्ठ्यलुप् ॥

शुनःशेप । शुनःपुच्छ । शुनोलाङ्गूल । इत्यत्र "शेपपुच्छ°" [३५] इत्यादिना षष्ठ्यलुप् ॥

वाचस्पतीयम् । वास्तोष्पतेः । दिवस्पतित्वम् । दिवोदास । इत्येते "वाचस्पति°" [३६] इत्यादिना निपात्याः ॥

होतुःसुत । होतुरन्तेवासि । पितुस्तनूजान् । पितुःशिष्य । इत्यत्र "ऋतां°" [३७] इत्यादिना षष्ठ्यलुप् ॥ विद्यायोनिसंबन्ध इति किम् । भर्तृगृहे ॥

होतुःस्वसृ होतृस्वसृ । पितुःस्वसारम् पितृष्वसृणाम् । स्वसुःपतिम् स्वसृपति । इत्यत्र "स्वसृपत्योर्वा" [३८] इति वा षष्ठ्यलुप् ॥

होतापोतारः मातापितृभ्याम् । अत्र "आ द्वन्द्वे" [३९] इत्याकारः । केचित्स्वसादुहित्रोः इत्यत्रापीच्छन्ति ॥ इह तु मते विद्यायोनिसंबन्धः प्रत्यासत्तेः समस्यमानानामृदन्तानामेव मिथो द्रष्टव्यो न येन केन चित् । तेनेह न स्यात् । न हि स्वसा होतापुत्रयोः स्वमा भवन्ती दुहितरमपेक्षते[2] दुहिता वा स्वसारमिति ॥

होतापुत्रौ । पितापुत्रयोः । अत्र "पुत्रे" [४०] इति आत् ॥

इन्द्रावरुणः । इत्यत्र "वेदसह°" [४१] इत्यादिनात् ॥ वायुवर्जनं किम् । वाय्वग्नि ॥

अग्नीषोम । अग्नीवरुण । इत्यत्र "ईः षोम°" [४२] इत्यादिना ईः ॥

आग्निसौम । इत्यत्र "इर्वृद्धि°" [४३] इत्यादिना इः । अविष्णाविति किम् । आग्नावैष्णवैः ॥

---

१ ए सी °त्वग्नीषी°. २ ए सी °पेक्ष्यते. ३ बी °युर्वर्जे°. ४ ए सी °त्रेई°. ५ ए सी डी °आग्निवै°.

द्यावापृथिव्योर्मघवत्यदृश्ये दिवस्पृथिव्योर्नहुषेण पात्रा ।
दिवःपृथिव्युत्तरधीः स पृष्टो[1] गुरुर्निनिन्देदृशमल्पवंशम् ॥ ३५ ॥

३५. दिवःपृथिव्युत्तरधीर्द्यावापृथिव्योर्मध्ये[1] सर्वोत्कृष्टबुद्धिः स प्रसिद्धो गुरुर्बृहस्पतिरीदृशमल्पवंशं लघुपृष्ठावयवविशेषं[2] गजं निनिन्द । बार्हस्पतीय[3]गजशास्त्रे हि गजस्याल्पवंशत्वं महापलक्षणमुक्तम् । कीदृक्सन् । द्यावापृथिव्योर्मध्ये मघवतीन्द्रेदृश्ये ताभ्यां बहिर्नष्टत्वाददृश्यमाने सति दिवस्पृथिव्योः कर्मणोः[4] पात्रा रक्षकेण तयोः स्वामिनेत्यर्थः[5] । नहुपेण नहुषाख्येण नृपेणेन्द्रीभूतेन पृष्टः ॥

किल वृत्रदैत्यं रणे हन्तुमशक्नुवन् शक्रस्तं मित्रीकृत्य विश्वस्तं सुप्तमवधीत्ततश्च वृत्तकपालरूपिणी विश्वस्तामित्रहत्येन्द्रस्य पृष्ठं कथमपि यावन्न मुञ्चति तावदिन्द्रो द्यां सप्तद्वीपवर्ती पृथ्वीं चोल्लङ्घ्य क्षीराब्धिसमीपस्थाब्जनालमध्ये कृमीभूय निलीनस्ततो[6] निःस्वामिकत्वाद्व्याकुलैर्देवैस्तदा सर्वोत्कृष्टो नृपो नहुषः स्वर्गे नीत्वेन्द्रः कृतो रोदस्यौ पाति स्मेति पुराणम् ॥

द्यावापृथिव्योः । अत्र "दिवो द्यावा" [४४] इति दिव्शब्दस्य द्यावा इत्यादेशः ॥

दिवस्पृथिव्योः[7] दिवःपृथिवी । अत्र "दिवस्°" [४५] इत्यादिना दिवस् इति दिव इति चादेशौ वा ॥ पक्षे द्यावापृथिव्योः ॥

---

१ ए सी °ष्टोर्गुरु°.

---

१ ए सी डी दिवस्पृथि°. २ ए सी °सुमप्रष्ठा°. ३ सी °स्पतीय°. ४ ए सी °र्मणो पा°. ५ बी °र्थः । निहुषेण निहु°. ६ ए सी °तो निस्वा°. डी °तोस्वा°. ७ ए दिव्पृथि°. सी दिवपृथि°.

तौ मातरमाक्षिपतरावुषासानक्तस्य देवौ यदि पश्चिमायाम् ।
इहोदयेतां क्वचिदप्युषासासोमौ तदोष्ठे वलिमाञ्शुभोयम् ॥ ३६ ॥

३६. तौ प्रसिद्धावुषासानक्तस्य प्रभातरात्र्योर्मातरप्राक्षिपतरौ जनकत्वान्मातरापितरतुल्यावुषासासोमौ सूर्यश्च सोमश्च देवाविह जगति क्वचिदपि कस्मिन्नपि काले यदि पश्चिमायां दिश्युदयेतां तत्तदोष्ठे वलिमान् रेखावानयं गजः शुभः । गजस्यौष्ठे हि वलयो महादोषः ॥

मृगौ च मातापितरावमुष्य श्वासस्तथावस्करगन्धिरेषः ।
दुःखास्पदं स्यादमुना हि रम्भोरूभार्यकः शोभनभार्यको वा ३७

३७. मृगौ च मृगजाती च हस्तिनावमुष्य गजस्य मातापितरौ तथामुष्य गजस्यैष प्रत्यक्षोपलभ्यमानः श्वासो मुखवातोवस्करोन्नमलं तत्संबन्धात्तद्देशोप्यवस्करस्तस्येव गन्धो यस्य सोस्त्यत एवामुना गजेन कृत्वा रम्भोरूभार्यकः कदलीस्तम्भसुकुमारोरुभार्योपि शोभनभार्यको वा प्रेमाद्यतिशायिभार्यो वापि नृपादिः प्रकृष्टभार्योपभोगभङ्गहेतुमहाविपदाप्त्या दुःखास्पदं स्यात् ॥

उषासानक्तस्य । इत्यत्र "उषासोषसः" [४६] इत्युषस उषासादेशः ॥

केचित्तु सूर्यशब्दस्यापीच्छन्ति । उषासासोमौ ॥

मातरपितरौ । मातापितरौ । इत्यत्र "मातर°" [४७] इत्यादिना मातरपितरेति वा निपात्यते ॥

अवस्कर आस्पदशब्दौ "वर्चस्कादिषु°" [४८] इत्यादिना निपात्यौ ॥

---

१ बी डी तदौष्ठे- २ ए सी °रूतार्य°.

---

१ बी डी °त्तदौष्ठे. २ ए सी °लभ्यः मा°. ३ ए सी डी °खतो°. ४ ए सी °पि सोम°. ५ सी °स्त्यत°.

शोभनभार्यकः । अत्र "परतः स्त्री°" [४९] इत्यादिना पुंवद्भावः ॥ अनूङिति किम् । रम्भोरूभार्यकः ॥

श्येतायितायास्तददर्शनीयमानी स लाटो भवदीयकीर्तेः ।
इभापदेशादिह दर्शनीयपाशां हि कृत्यां पटयन्दिदेश ॥ ३८ ॥

३८. तत्तस्माद्धेतोः स प्रसिद्धो लाट इभापदेशाद्गजव्याजादिह त्वं[1]त्समीपे दर्शनीयपाशां[2] रौद्रत्वात्कुत्सितदर्शनां कृत्यां मारिदेवतां पटयन् पैट्वीं[3] कुर्वन् हि स्फुटं दिदेश तुभ्यं ददौ । कीदृक्सन् । श्येतायितायाः श्येनी ज्योत्स्नादिश्वेतपदार्थजातिस्तद्वदाचरन्त्याः । निर्मलाया इत्यर्थः । भवदीयकीर्तेरदर्शनीयमानी[4] त्वदीयकीर्तिं दर्शनायोग्यां मन्यमानस्त्वद्यशोसहमान इत्यर्थः ॥

नीत्वास्रलौहित्यमिषूः पटिष्ठा दारद्यमुन्मूल्य तमानयामि ।
सहास्तिकांश्चेभवरान्नियुङ्क्ष्वाग्नेयद्युते विक्रमरौहिणेय ॥ ३९ ॥

३९. हे आग्नेयद्युतेग्नायीनामग्निभार्याणां षण्णां कृत्तिकानां स्तनपायित्वादपत्यमाग्नेयः[5] स्कन्दस्तत्तुल्यतेजस्क । तथा[6] हे विक्रमरौहिणेय शौर्येण बलभद्रतुल्य मूलराज[7] । चः पुनरर्थे भिन्नक्रमो गम्येन त्वमित्यनेन सह योज्यः । त्वं पुनः सहास्तिकान् हस्तिनीसमूहान्वितानिभवरान्पट्टहस्तिन उपलक्षणत्वादश्वान्रथान्भटांश्च नियुङ्क्ष्व लाटास्कन्दनाय व्यापारय येन दारद्यं दरदो राज्ञोपत्यं स्त्री "पुरुमगध°" [६.१.११६.] इत्यादिनाणो "द्रेरञण°" [६.१.१२३.] इत्यादिना लुपि दरद् राज्ञी तत्र साधुं भर्तृत्वात्तं लाटमुन्मूल्यानयामि । किं कृत्वा । पटिष्ठा अतितीक्ष्णा इषूरस्रलौहित्यं रक्तेन लोहिनीनां भावमारक्ततां नीत्वा[8] प्राप्य ॥

---

१ ए सी दारिद्य°.

---

१ ए सी डी त्वत्समी°. २ सी °यपांशो रौ°. ३ ए सी पट्वीकु°. ४ ए सी °र्शय°. ५ ए सी °ग्नेय स्क°. ६ डी °था वि°. ७ सी °ज । च पु°. ८ सी °वनार°.

क्यङ् । श्येतायितायाः ॥ मानिन् । अदर्शनीयमानी भवदीयकीर्तेः ॥ पित्तद्धित । दर्शनीयपाशाम् । अत्र "क्यङ्मानि°" [५०] इत्यादिना पुंवत् ॥

णि । पटयन् ॥ तद्धितीय । लौहित्यम् ॥ तद्धितस्वर । पटिष्ठाः ॥ जातितद्धितय । दारद्यम् ॥ तद्धितस्वर । हास्तिकान् । अत्र "जातिश्च°" [५१] इत्यादिना पुंवत् ॥ दारद्यम् । इत्यत्र पुंवद्भावादणो लुब् निवर्तते ॥

आग्नेय । इत्यत्र "एयेऽग्नायी" [५२] इति पुंवत् ॥ पूर्वेण सिद्धे नियमार्थं वचनम् । तेन रौहिणेय इत्यत्र पूर्वेणापि पुंवद्भावो न स्यात् ॥

राजा तमूचेथ सहस्व कल्याणीपञ्चमाः पञ्च निशाः कुमार ।
लाटं रटन्तीप्रियमाशु भव्याभक्ते विधातुं यतितव्यमूर्ध्वम् ॥४०॥

४०. अथ राजा तं कुमारमूचे । तदेवाह । हे भव्याभक्ते प्रशस्यगुरुबहुमान कुमार पञ्च निशाः सहस्व । ननु पञ्च निशाः किमिति सह्यन्त इत्याह । यतः कल्याणी पञ्चमी यासु ताः प्रस्थानार्हनक्षत्रवारलग्नाद्युपेतत्वेन हि पञ्चमी रात्रिर्यात्रायां शुभास्त्यतः पञ्चमीरात्रिं यावत्प्रतीक्षस्वेत्यर्थः । ऊर्ध्वं तदनन्तरं पञ्चम्यां निशीत्यर्थः । लाटं रटन्तीप्रियं लाटवधेन रुदत्प्रेयसीकं विधातुमाशु यतितव्यम् ॥

अप् । कल्याणीपञ्चमा निशाः ॥ प्रियादि । रटन्तीप्रियम् ॥ भव्याभक्ते । इत्यत्र "नाप्प्रियादौ" [५३] इति न पुंवत् ॥

---

१ ए सी °शु रभ्या°. २ ए बी डी °मूर्द्धम् । सी °मूर्हम् ।.

---

१ सी °कीर्तिः । पि°. २ सी °न् । तयः । लौ°. ३ ए °तयः । लौ°. डी °तय । ...दार°. ४ ए सी दारिद्य°. ५ बी °र्थम् । ते°. ६ ए सी °रुवहमा°. ७ बी °द्य ता प्र°. ८ डी यु...वधे. ९ ए बी सी डी ऊर्द्ध त°. १० बी °त्यर्थाछाटं. ११ ए सी रटीतीप्रि°.

त्वं मद्रिकाम्वो नु सहोसि दत्ताभार्यं द्वितीयामतिराशु कर्तुम् ।
आक्रन्दिकाभार्यममुं तथाप्येप्यामो वयं विक्रममीक्षितुं ते ॥ ४१ ॥

४१. हे कुमार यद्यपि त्वं द्वितीया लोकेभ्योन्या सर्वोत्कृष्टेत्यर्थः । मतिर्यस्य स तथा सन् दत्ताख्या भार्या यस्य तममुं लाटमाक्रन्दिकाभार्यं लाटवधेन रुदद्भार्यमाशु कर्तुं सहोसि शक्तोसि । क इव । मद्रिकाम्वो नु । मद्रेषु भवा । वृजि°" [६.३.३८] इत्यादिना के मद्रिकाम्वा माता यस्य स नकुलः सहदेवो वा स इव । तथापि ते तव विक्रममीक्षितुं वयमेष्यामः ॥

तद्धित । मद्रिकाम्वः ॥ अंक । आक्रन्दिकाभार्यम् ॥ पूरणी । द्वितीयामतिः ॥ आख्या । दत्ताभार्यम् । इत्यत्र "तद्धिताक°" [५४] इत्यादिना न पुंवत् ॥

तं वैदिशीमातृकमेतु नैयङ्कवीमतिं कुञ्जर एष लाटम् ।
प्राप्नोतु नैयङ्कवबुद्धितायाः फलं स माञ्जिष्ठपटीक आरात् ॥४२॥

४२. एष कुञ्जरो वैदिशी विदिशापुर्यां भवा जाता वा माता यस्य स तं लाटमेतु । यतः किंभूतम् । न्यङ्कुर्मृगभेदः कृष्णत्रिकेण विपुलः कुटिलस्वभावश्च । तस्येयं नैयङ्कवी सा मतिर्यस्य तं महाकुलक्षणेभप्रेषणात्कुटिलमतिमित्यर्थः । ततश्च स लाटो नैयङ्कवबुद्धिताया अस्याः कूटमतेः फलमारादद्दूराच्छीघ्रं प्राप्नोतु । किंभूतः । माञ्जिष्ठी मञ्जिष्ठया रक्ता पटी यस्य सः । लाटदेशे हि माञ्जिष्ठी पटी भूमिजलादिगुणेनातिसुरङ्गा प्रायः स्यात् ॥

---

१ प सी लाघव°. २ प सी डी ससह°. ३ प सी ते व. ४ बी अक् । आ°. ५ प सी °व । इव । तथापि ते न विक्रममी ॥. ६ प सी डी °दिशि पु°. ७ प सी डी °ता च मा°. ८ प सी °स्य तत. बी °स्यत. ९ डी °तः । म°. १० प सी मजिष्ठ°.

न्यसर्जयद्वेत्र्यथ हैमयष्टिः सेभान्कठीमातृकलाटभट्टान्।
तेयुः सलज्जाकठमानिमातृकाः पूःसुकेशीललनैर्हसद्भिः॥ ४३॥

४३. अथ हैमयष्टिः स्वर्णमयदण्डो वेत्री सेभान् गजयुक्तान् कठ्यः शाखाध्ययननिमित्तकठ्यपदेशभाजो ब्राह्मण्यो मातरो येषां ते ये लाटभट्टा लाटाधिपस्य विशिष्टभूता द्विजास्तान्न्यसर्जयन्न्यक्कारपूर्वं प्रतिप्रेषितवान्। ततस्ते लाटभट्टा अयुर्लाटपार्श्वे गताः। किंभूताः सन्तः। हसद्भिः पूःसुकेश्यः पुरस्य प्रवरचिकुरस्त्रियो ललनाः कान्ता येषां तैरुपलक्षिताः। न्यकृतत्वात्पौरतरुणैरुपहस्यमाना इत्यर्थः। अत एव सलज्जा अकठमानिन्योकठीरात्मनो मन्यमाना मातरो येषां ते॥

वैदिशीमातृकम्। अत्र "तद्धितः स्वर°" [५५] इत्यादिना न पुंवत्॥ स्वरेति किम्। नैयङ्कववुद्धितायाः॥ अन्ये तु वृद्धिमात्रहेतोर्ण्णितस्तद्धितस्य पुंवत्प्रतिषेधमिच्छन्ति तन्मते नैयङ्कवीमतिम्॥ अरक्तविकार इति किम्। माञ्जिष्ठपटीकः। हैमयष्टिः॥

सुकेशीललनैः॥ जाति। कठीमातृक। इत्यत्र "स्वाङ्गात्°" [५६] इत्यादिना न पुंवत्॥ स्वाङ्गादिति किम्। अकठमानिमातृकाः॥ अमानिनीति किम्। अकठमानि॥

भव्यप्रियां रौचनिकोत्पटीं नु तन्वंस्त्विषं द्रावकवीक्षणीयाम्।
हरेरिवैकादशमूर्तिरेषोन्येद्युः कुमारानुगतः प्रतस्थे॥ ४४॥

४४. अन्येद्युरेष मूलराजः कुमारानुगतः प्रतस्थे लाटास्कन्दनाय

१ प सी डी °न् काठ्यः. २ प सी °स्तान्विस°. ३ डी °श्यः प्र°. ४ बी °रक्तः। म°. ५ प सी °तोर्ण्णित°. ६ प सी °नापु°. ७ सी °राजकु°.

प्राचालीत् । किंभूतः । द्राविकाङ्गान्निर्गच्छन्ती या वीक्षणीया स्वर्णवर्णत्वाद्दर्शनीया तां त्विषं तन्वन् । उत्प्रेक्ष्यते । भव्या श्लक्ष्णत्वादिगुणैः प्रशस्यात एव या प्रिया सर्वजनवल्लभा तां रौचनिकी[1] रोचनया रक्ता योत्पटयुपरितनवस्त्रं तां नु तामिव तन्वन् । यद्वा । नुरुपमायाम् । यथा रौचनिकोत्पटीं परिधानेन तनोत्येवं त्विषं तन्वन्नत एव हरेर्विष्णोरेकादशमूर्तिरिव । एकादश्येकादशानां पूरणी या मूर्तिः सेव। हरेर्हि मत्स्य १ कूर्म[2] २ वराह ३ नारसिंह ४ वामन ५ राम ६ राम ७ कृष्ण ८ बुद्ध[4] ९ कल्क्या[१०]ख्या दशैवावताराः प्रसिद्धाः । अयं त्वेकादशोवतार इवेत्यर्थः । हरेरपि हि मूर्तिः पीताम्बरत्वाद्रौचनिकोत्पटीं तनोति ॥

समुत्सुको दारददत्तभार्यापतिं स तं वैदिशनार्यपत्यम् ।
हन्तुं कठस्त्रीजुषि दीर्घकेशपौरीप्रिये श्वभ्रवतीतटेगात् ॥ ४५ ॥

४५. स मूलराजः श्वभ्रवतीतटे श्वभ्रवत्याख्यनदीतीरे स्वसीमसन्धावगात् । कीदृक्सन् । तं लाटं हन्तुं[5] समुत्सुकः । कीदृशम् । दत्ता चासौ भार्या च दत्तभार्या दरद्दरदो राज्ञोपत्यं स्त्री या दत्तभार्या तस्याः पतिम् । तथा वैदिशी विदिशानगरीजाता या नारी स्त्री तस्या अपत्यम् । किंभूते तटे । कठ्यो याः स्त्रियस्तदाश्रये । तथा दीर्घकेश्यो[6] याः पौर्यः पुराङ्गनास्तासां पुष्पोच्चयक्रीडादिहेतुत्वात्प्रिये ॥

---

१ ए सी डी °दिसना°.

---

१ ए सी डी °की च°. २ ए सी नुरूप°. ३ ए सी डी °र्मवारा°. ४ ए सी डी °बुधक°. ५ ए सी डी हन्तुमु°. ६ बी °श्यो या पौ°.

"नाप्प्रियादौ" [५३] इत्युक्तम् । तत्रापि भव्यप्रियाम् । "तद्धिताककोपान्त्यपूरणाख्याः" [५४] इत्युक्तम् । तत्रापि रौचनिकोत्पटीम् । द्रावकवीक्षणीयाम् । एकादशमूर्तिः । दत्तभार्या । "तद्धितः स्वरवृद्धिहेतुररक्तविकारे" [५५] इत्युक्तम् । तत्रापि वैदिशनारी । "स्वाङ्गाद् ङीर्जातिश्चामानिनि" [५६] इत्युक्तम् । तत्रापि दीर्घकेशपौरी । कठस्त्री । दारददत्तभार्या । अत्र "पुंवत्कर्मधारये" [५७] इति पुंवत् ॥

**नद्यां वसत्स्नायकमद्रकाद्यजातीयनारीभिरभिद्रुताभिः ।**
**पुरी द्विषोभूदथ भग्नदेशीया व्याकुलत्वापटुते प्रपन्ना ॥ ४६ ॥**

४६. अथ द्विषो लाटस्य पुरी भग्नदेशीयोपप्लुतप्रायाभूद्यतो व्याकुलत्वापटुते भीतिं किंकर्तव्यतामूढतां च प्रपन्नाश्रिता । काभिर्हेतुभिः । नद्यां श्वभ्रवत्यां वसत्स्नायकमद्रकाद्यजातीयनारीभिर्वसत्स्नायकमद्रकेति शब्दा आद्या यस्य स तथा जातीयेति शब्दो यासां तास्तथा या नार्यस्ताभिर्वसज्जातीयस्नायकजातीयमद्रकजातीयनारीभिर्वैमन्त्यः स्नायिका मद्रिकाश्च प्रकार आसां ताभिर्वा स्तव्याभिर्मुनिपत्नीभिः स्नायिकाभिर्मद्रिकाभिर्मद्रदेशोद्भवाभिश्च नारीभिः । कीदृशीभिः । अभिद्रुताभिः । परसैन्यदर्शनोत्थातिभयेन पुराभिमुखं पलायिताभिः । नश्यदायान्तीदृष्ट्वेत्यर्थः ॥

**पलायकत्वं जगृहुर्विहाय परस्त्रियः पाचकतामकाण्डे ।**
**म्लेच्छीत्वमज्ञायि न नो कठीता तासां महद्भूतभियैक्यभाजाम्**
**॥ ४७ ॥**

४७. परस्त्रियः शत्रूणां नार्यो भयभीतत्वादकाण्डेप्रस्तावे पाचकतां

१ सी पाठक°.

१ ए सी °नाप्रिया°. २ ए सी °ताकाको°. ३ ए सी °ज्ञानीर्जा°. ४ ए सी डी प्रपप°. बी प्रतिप°. ५ ए सी °भिविसज्जाती°. ६ ए सी डी °सत्य· स्ना°. ७ बी °श्च आ°. ८ बी °मंद्रका°. सी °मंद्रदे°. ९ बी °अतिद्रु°. १० ए सी °लायता°. डी °लायन्तीभिः । ११ ए सी डी °दृष्ट्वेत्य°.

पक्षीणां भावं विहाय पलायकत्वं पलायिकानां भावं जगृहुः। तत-स्तासां परस्त्रीणाममहती महतीभूता महद्भूता या भीस्तयैक्यभाजां मिथोभिन्नानां सतीनां न म्लेच्छीत्वमन्त्यजातित्वं नो वा कठीताज्ञायि॥

या गोमतीभूय चिराय पट्वीभूताः प्रजास्ता अपटूभवन्त्यः।
तथाद्रवंस्तत्र यथा निपेतुः सर्वासु रथ्यास्वपि सर्वबालाः॥४८॥

४८. या[१]: प्रजा गोमतीभूय गावः सन्त्यासां ता गोमत्योगोमत्यो गोमत्यो भूत्वोपलक्षणत्वान्महर्द्धिकीभूयेत्यर्थः। चिराय चिरकालं पट्वीभूता महर्द्धिकत्वाद्याश्चिरं सौजस्का[३] आसन्नित्यर्थः। ताः प्रजा[२] ऋद्धिविगमाशङ्कयापटूभवन्त्यः[५] सत्यस्तत्र पुर्यां तथा तया प्रकृत्याद्रव-न्परचक्रागमनभयेन नष्टा यथा यया प्रकृत्या[६] सर्वास्वपि रथ्यासु सर्व-बालाः सर्वासां प्रजानां बालका बालिकाश्च निपेतुरत्यौत्सुक्ययानेन मिथः संमर्देन च कटीभ्यो निपतिताः॥

वत्सजातीय। मद्रकजातीय। स्नायकजातीय। भग्नदेशीया। इत्यत्र "रिति" [५८] इति पुंवत्॥

व्याकुलत्वापटुते। अत्र "त्वते गुणः" [५९] इति पुंवत्॥ गुण इति किम्। म्लेच्छीत्वम्। कठीता॥ केचित्तु जातिसंज्ञावर्जितस्य विशेषणमात्रस्य पुंवद्भावमि-च्छन्ति। पलायकत्वम्। पाचकताम्॥

महद्भूतभिया। इत्यत्र "च्वौ क्वचित्" [६०] इति पुंवत्॥ क्वचिद्ग्रहणा-द्गोमतीभूयेत्यादौ न स्यादेव॥ पट्वीभूताः। अपटूभवन्त्यः। इत्यादौ विकल्पः॥

---

१ ए सी डी °त्र सथा.

---

१ बी °लायका°. २ सी या प्र°. ३ ए सी °जसक आ°. ४ ए सी डी °जारुद्धवि°. ५ ए सी °वन्त्य स°. ६ ए सी डी °कृत्या स°. ७ ए डी °तीयः। म°.

सर्वबालाः । यथा । तथा । तत्र । इत्यत्र "सर्वादयोस्यादौ" [६१] इति पुंवत् ॥ अस्यादाविति किम् । सर्वासु ॥

प्रियं मृगक्षीरमभून्न ते माक्पेयं मृगीक्षीरमतः परेण ।
पचत्तरेत्थं मृगशावमुक्त्वा नष्टा मृगीशावविलोचनाभिः ॥४९॥

४९. पचत्तरा प्रकृष्टा पाचिका राजादिसूपकारी मृगीशावविलोचनाभिर्मृगीबालवद्भयचटुलविशालाक्षीभिः स्त्रीभिः[1] सह नष्टा । किं कृत्वा । मृगशावं हे[2]रिणीपो[3]तमुक्त्वा । कथमित्याह । हे मृगशाव मृगीपोतक[4] प्राक्पूर्वं ते तव सुस्वादुदुग्धाद्यास्वादनेन मृगक्षीरं हरिणीदुग्धं निरास्वादत्वेन प्रियं[5] नाभू[6]दतः परे[7]णातोनन्तरं मृगीक्षीरं हरिणीदुग्धं पेयमित्थम् । राजादिसूपकार्यो हि मांसपाकस्यातिसुस्वादुतार्थं मृगशावादीन् दुग्धादिभव्याहारैः पोषयन्ति ॥

लाट्यः पचन्तीतरया प[1]चन्तितरा इवोष्णांशु[2]रुचाभितप्ताः ।
ज्यायस्तरोरोजतटीं कटीं ज्यायसीतरां त्रासजुषो निनिन्दुः ॥५०॥

५०. लाट्यो लाटदेशस्त्रियो ज्यायस्तरोरोजतटीमुपचिततरस्तनाभोगं ज्यायसीतरां कटीं च गतिविघ्नत्वान्निनिन्दुः । कीदृश्यः[8] सत्यः[9] । पचन्तितरा इव । यथा प्रकृष्टपाचिकाः सदाग्नि[10]सांनिध्यादभितप्ताः स्युरेवं प[11]चन्तीतरयातिशयेन संतापिकयोष्णांशुरुचाभितप्ताः । तथा त्रासजुषोरिचक्रागम[12][13]नेन भीताश्च ॥

---

१ प सी °चन्तरा. २ प सी °शुरचातित°.

---

१ प सी स्त्रीभि स°. २ प सी हरणी°. ३ प सी डी °पोतं मु°. ४ प सी °ततक°. ५ सी प्रियमाभूतः । प°. ६ प °भूतः । प° डी भूत् । प°. ७ प सी °रेणतो°. ८ सी °दृशाः स°. ९ प सी सत्य प°. १० प सी °ग्निसाध्या°. ११ प सी पचीत°. १२ सी °मवे भीनाश्च. १३ प °ने भी°.

सा ज्यायसिप्राक्तरपुर्यभान्तीरूपैणनेत्राभिरभान्तिरूपा ।
नद्या नदन्तीतमया नदन्तितमप्रजाभिश्च नदत्तमाभूत् ॥५१॥

५१. सा लाटेशसत्का ज्यायसिप्राक्तरपुरी ज्यायसितरपुर्यत्यन्तं प्रशस्या वृद्धा वा नगरी भृगुकच्छाख्या प्रशस्ता भान्ती भान्तिरूपा न तथाभान्तिरूपाशोभमानाभूत् । काभिः कृत्वा । अभान्तीरूपा भयव्याकुलत्वेनाशोभमाना या एणनेत्रास्ताभिः । तथा नदत्तमाव्यक्तशब्दमय्यभूत् । काभिः कृत्वा । नदन्तीतमया भयत्रस्तलोकप्रवेशेनाव्यक्तं शब्दायमानया नद्यातिसमीपस्थया नर्मदाख्यनद्या नदन्तितमप्रजाभिश्चात्यन्तं कोलाहलं कुर्वाणैर्लोकैश्च ॥

भाद्रूपताभूत्पुरि यान्तिकल्पा यात्कल्पलक्ष्म्यां स्फुरतीब्रुवायाम् ।
स्फुरद्ध्रुवाभूज्जनता प्रयान्तीकल्पस्फुरन्तिब्रुवजीवया च ॥ ५२ ॥

५२. पुरि भाद्रूपता । प्रशस्यशोभेत्यर्थः । यान्तिकल्पा नश्यत्प्रायाभूत् । कीदृश्यां सत्याम् । यात्कल्पलक्ष्म्यां वास्तव्यजननाशान्नश्यत्प्रायसमृद्धावत एव स्फुरती विलसन्ती या ब्रुवा कुत्सिता तस्याम् । निन्दितशोभायामित्यर्थः । तथा जनता जनौघश्च स्फुरद्ध्रुवा निन्दितस्फुरणाभूत् । कया कृत्वा । प्रयान्तीकल्पा भयेन नश्यन्तीप्रायात एव स्फुरन्ती ब्रुवा कुत्सितं निश्वसन्ती या जीवा प्राणा । जीवः प्राणेषु केदार इति वचनात्त्रिलिङ्गः । तया ॥

१ बी °रूपेण°.

१ प सी °न्त अश°. २ प सी °न्ती रू°. ३ बी °नातिरू°. ४ प सी डी °पा य°. ५ प सी °त्वेन शो°. ६ प सी °मज्यमू°. ७ बी °न्दामा°. ८ सी °त्यन्तको°. ९ प सी °रि साद्रू°. १० प सी निश्विस°.

नैनच्चलेच्चेलि दिनं चलन्तीचेल्या भैवोच्चैरचलन्तिचेली ।
याद्गोत्रया यास्यनयाथ यान्तीगोत्रे नु गा मा तदयान्तिगोत्राम्
॥ ५३ ॥
समं लपन्तीमतया लपन्तिमता स्म मा भूरलपन्मते त्वम् ।
काञ्च्या रसन्तीहतया रसन्तिहते कृथा मा स्म रसद्धतां द्याम् ॥५४॥
गार्गिब्रुवे वात्सितरे कुमारिकल्पौत्सिरूपे कठिचेलि यात ।
प्रतीक्ष्यते चण्डितमा क्विमाङ्गिहतेयमात्रेयिमतौर्विगोत्रा ॥ ५५ ॥
पङ्गुब्रुवा भोगवतिब्रुवेयं पङ्गूब्रुवा गौरिमतिब्रुवासौ ।
अस्त्रीतराश्च स्त्रितरास्तथोचुः सविड्वरायामिति लाटपुर्याम् ॥५६॥

५३–५६. सविड्वरायां सोपद्रवायां लाटपुर्यामस्त्रीतराश्चाप्रकृष्टाः स्त्रियश्च तथा स्त्रितराः प्रकृष्टस्त्रियश्चेतदिमूचुः । तदेवाह । हे चलच्चेलि मन्दगतित्वान्निन्द्यगमने चलन्तीचेल्या मन्दगतिकाया नैतद्दिनं भयेन नश्यमानत्वाच्छीघ्रगतेरेवायमवसर इत्यर्थः । तस्मादुच्चैरतिशयेनाचलन्तिचेली शीघ्रगमना भव । अथ यदि हे यान्तीगोत्रे निन्द्यगमनेनया प्रत्यक्षया याद्गोत्रया निन्द्ययानया सह यासि तत्तदायान्तिगोत्रामनिन्द्यगमनाम् । मामित्यर्थः । मानुयासीर्मत्पृष्ठे मा स्म लग इत्यर्थः । तथा हे-लपन्मतेवाचाले लपन्तीमतया वाचाटया समं सह त्वं लपान्तिमता वाचाटा मा स्म भूः । भयेन निभृतं नश्यमानत्वेन शब्दस्यानवसरात् । तथा रसन्तीहतया शब्दस्यानवसरेण निन्द्यशब्दया काञ्च्या कृत्वा हे रसन्तिहते

१ ए सी नैतिच्च°. २ ए सी °लच्चेलि° ३ ए सी भवैच्चै° ४ बी °या प्रया°. ५ ए सी °द्धता द्या°. ६ ए सी °तौविगो°. ७ ए सी डी पङ्गुब्रु°. ८ ए सी °थोचु स°.

१ ए सी °या पत्य°. २ ए सी डी निन्द्यासन°. ३ डी सह ल°. ४ बी °सरणे नि°.

निन्द्यं शब्दायमाने रसन्तीहतया काञ्च्यैव कृत्वा यां व्योम रसद्धतां निन्द्यशब्दान्वितां मा स्म कृथाः । तथा हे गार्गिब्रुवे गर्गपै[1]र्निन्द्ये पौत्रि हे[2] वात्सितरे वत्सपैः प्रकृष्टे पौत्रि हे कुमारिकल्पौत्सिरूपे कुमारिकल्पा सतीत्वादिगुणैर्गौरीतुल्या[3] यौत्सिरूपोत्सस्यापत्यं स्त्री प्रशस्ता तस्याः[4] संबोधनम् । तथा हे कठिचेलि निन्द्ये कठि यूयं यात नश्यत[5] । तथेयं चण्डितमा[6]तिकोपनेयमाङ्गिहताङ्गस्यापत्यं स्त्री निन्द्येयमात्रेयिमतात्रेर्निन्द्या पुत्रीयमौर्विगोत्रौ[7]र्वपैर्निन्द्या पौत्रीयं पङ्गुब्रुवा निन्द्या पङ्गूर्भोगवतिब्रुवा निन्द्या भोगवत्याख्या स्त्र्यसौ पङ्गूब्रुवा गौरिमतिब्रुवा च निन्द्या गौरिमत्याख्यस्त्री च । चोत्र ज्ञेयः । किं किमिति युष्माभिः प्रतीक्ष्यते परिपाल्यते । विपक्षाणां निकटागमनेन चण्डितमादिप्रतीक्षणे नावसर इत्यर्थ इति ॥

मृगक्षीरम् मृगीक्षीरम् । मृगशावम् मृगीशाव । इत्यत्र "मृग°" [६२] इत्यादिना वा पुंवत् ॥

[तर । ?] पचन्तितराः[8] पचत्तरा पचन्तीतरया । ज्यायसितर ज्यायस्तर ज्यायसीतराम्[9] ॥ तम । नदन्तितम नदत्तमा नदन्ती[10]तमया ॥ रूप । अभान्तिरूपा भाद्रूपता अभान्तीरूप ॥ कल्प । यान्तिकल्पा यात्कल्प प्रयान्तीकल्प ॥ ब्रुव । स्फुरन्तिब्रुव स्फुरद्ब्रुवा स्फुर[11]न्तीब्रुवायाम् ॥ चेलट् । अचलन्तिचेली चलच्चेलि चलन्तीचेल्याः ॥ गोत्र । अयान्तिगोत्राम् याद्गोत्रया यान्तीगोत्रे ॥ मत । लपन्तिमता अलपन्मते लपन्तीमतया ॥ हत । रसन्तिहते रसद्धताम् रसन्तीहतया । इत्यत्र "ऋदुद्°" [६३] इत्यादिना ह्रस्वः पुंवच्च वा ॥ ब्रुवा[12]दयः कुत्साशब्दाः । "निन्द्यं कुत्सनैः" [३. १. १००] इति समासः ॥ ऋदुदिति किम् । कुमारिकल्पौत्सिरूपे ॥

---

१ प सी °पैर्निन्द्ये पौ°. २ डी हे...कु°. ३ बी तुल्यया. ४ बी तस्या स°. ५ प सी डी नस्यत. ६ डी माङ्कि°. ७ प सी त्रोवर्पैनिन्द्या. ८ प सी डी °तरा प°. ९ प सी डी °तरा । त°. १० प सी °न्तीते°म°. ११ बी °रन्तीभ्रु°. १२ प सी दय कु°.

वास्तितरे। चण्डितमा। औत्तिरूपे। कुमारिकल्प। गार्गिब्रुवे। कठिचेलि। और्विगोत्रा॥ आत्रेयिमता। आङ्गिहता। इत्यत्र "ङ्यः" [६४] इति ह्रस्वः॥ आङ्गि। इत्यत्राङ्गस्य प्राच्यत्वाद् "द्रेरञ्°" [६. १. १२३] इत्यादिना नाणो लुप्॥

भोगवतिब्रुवा। गौरिमतिब्रुवा। इत्यत्र "भोगवद्°" [६५] इत्यादिना ह्रस्वः॥

स्वितराः स्त्रीतराः। अत्र "नवैक°" [६६] इत्यादिना वा ह्रस्वः॥

पङ्गुब्रुवा पङ्गूब्रुवा। इत्यत्र "ऊङः" [६७] इति वा ह्रस्वः॥

महाकरज्ञान्स्वमहाविशिष्टान्धूत्वा महाघासमिवाथ लाटः।
युधे महद्घाससमैः ससज्जामहत्करज्ञैरमहद्विशिष्टैः॥ ५७॥

५७. अथ लाटो युधे ससज्ज। किं कृत्वा। स्वमहाविशिष्टान्स्वान्स्वकीयान्महतां पितृपितामहादीनां वृद्धनृपाणां विशिष्टान्प्रधानानि महाघासमिव महतोरण्यादेस्तृणमिव धूत्वा युद्धान्निषेधतो निराकृत्येत्यर्थः। किंभूतान्। महतां राज्यलक्ष्म्यादिना वृहतां राज्ञां करो दण्डो महाकरस्तं जानन्ति ये तान्महाकरज्ञान्महाराजानां यो यस्य करो दीयते तद्वेदिनः। कैः सह ससज्ज। अमहद्विशिष्टैः पार्श्वस्थैः प्रधानैः। किंभूतैः। महद्घाससमैर्निःसत्त्वान्महारण्यादिसत्कघासतुल्यैः। तथामहत्करज्ञैराधुनिकत्वान्महतां राज्ञां दण्डमविद्वद्भिः। महाविशिष्टतिरस्कारोक्त्या महाविशिष्टकृतं महारिष्टसूचकं स्खलनरूपमनिमित्तमस्य ध्वनितम्॥

महाकर महत्कर। महाघासम् महद्घास। महाविशिष्टान् महद्विशिष्टैः। अत्र "महतः कर°" [६८] इत्यादिना वा डा अन्तादेशः॥

---

१ प सी °द्या भू°. २ प सी समै स°.

---

१ प सी °त्तिरेत°. २ प सी डी °यिमाता।. ३ बी °ङ्गिहिता।. ४ प सी डी °नानणो ५ प सी डी °स्वः॥...म°. ६ सी °तृमपि°. ७ सी °श्वात्यै प्र°. ८ बी °मैनिःस°. ९ बी °द्याविशिष्ट°. १० प सी °हामक°. ११ प सी वा क्वा म°.

महाविशिष्टं च महाकरं च क्षिप्त्वा महाघासभुगुक्षमत्तः ।
महाबलान्यत्वरयन्महाजातीयावलेपेन[1] महाभुजः सः ॥ ५८ ॥

५८. स लाटो महान्प्रकारोस्य महाजातीयो[1] महान्योवलेपो बलादिकृताहंकारस्तेन कृत्वा महाबलान्यत्वरयद्युद्धाय प्रेरितवान् । किं कृत्वा । महाविशिष्टं च महत्या राज्यादेः प्रधानं महाकरं च महत्या राज्यादेर्हस्तं च क्षिप्त्वा तिरस्कृत्य । अनेनापि स्खलनरूपमनिमित्तमस्योक्तम् । यतो महत्या अरण्यान्या यो घासस्तं भुङ्क्ते[2] य उक्षा वृषस्तद्वन्मत्तः । एतदपि कुत इत्याह । यतो महाभुजः ॥

श्रुत्वा महद्भूतबलं तु यष्टायष्ट्युत्सुकं क्ष्मामहतीप्रियं तम् ।
चामुण्डराजोपि चचाल यष्टीयष्ट्यस्यसिक्रीडनकौतुकेन ॥५९॥

५९. चामुण्डराजोपि चचाल । किं कृत्वा । क्ष्मया पृथ्व्या कृत्वा महती प्रिया भार्या यस्य तं विशालभूवधूकं तं तु लाटं पुनः श्रुत्वा । किंभूतम् । यष्टायष्टि[3] यष्टिभिश्च[4] यष्टिभिश्च[5] मिथः प्रहृत्य कृते युद्ध उत्सुकमत एव युयुत्सयानेकस्थानकेभ्यो[6] मिलितत्वादमहन्महद्भूतं संपन्नं बलं सैन्यं यस्य तम् । युधि[7] प्रगुणीभूतमित्यर्थः । केन हेतुना चचाल । यष्टीयष्टि यष्टिप्रहरणोपाधिके युद्धेस्यस्यासिप्रहरणोपाधिके युद्धे च विषये क्रीडनकौतुकेनातिशूरत्वेनास्य[8] युद्धस्य सुखसाध्यमानित्वादत्यन्ताभिलाषुकत्वाच्च क्रीडाकुतूहलेन ॥

महाकरम् । महाघास । महाविशिष्टम् । इत्यत्र "स्त्रियाम्" [६९] इति डाः॥

---

१ डी °तीयोव°.

---

१ ए सी महोजा°. २ ए सी डी भुक्ते य°. ३ डी °यष्ट्युत्सुक य°. ४ ए सी °ष्टिभिश्च. ५ ए सी °श्च मथः. ६ ए सी °स्थानेके°. ७ बी युधे प्र°. ८ सी क्रीडान°.

महाजातीय । महावलानि । महाभुज । अत्र "जातीय°" [७०] इत्यादिना डाः ॥ अच्वेरिति किम् । महद्भूत ॥

क्ष्मामहतीप्रियम् । अत्र "न पुंवन्निषेधे" [७१] इति न डाः ॥

यष्टीयष्टि । यष्टायष्टि । इत्यत्र "इच्य°" [७२] इत्यादिना पूर्वपदस्य दीर्घं भावान्तादेशः ॥ अस्वर इति किम् । अस्यसि ॥

अष्टाकपालं नु हविर्द्विषो युन्मखे[1] जुहूषौ नृपतिः कुमारे ।
आदिक्षदष्टापदबाणयुग्यैरष्टागवैर्द्राक्[2] पुरगावणेशम्[3] ॥ ६० ॥

६०. कुमारेष्टसु[1] कपालेषु संस्कृतमष्टाकपालं हविर्नु द्विषो युन्मखे रणयागे जुहूषौ भस्मसाच्चिकीर्षौ सति नृपतिर्मूलराजः पुरगावणेशं पुरगा वृक्षभेदास्तेषां वनं[2] पुरगावणं नाम वनं तस्य य ईशस्तं द्रागादिक्षद्[3] द्रणायाज्ञप्तवान्[4] । कैः सह । अष्टापदस्य स्वर्णस्य ये बाणास्तेषां युग्यानि वाहनानि शकटास्तैः[5] । किंभूतैः । अष्टागवैरष्टौ गावो वृषा युक्ता येषु तैः । यद्वा । समाहारे द्विगौ[6] साहचर्यादुपचारादष्टगवेन युक्तान्यप्यष्टागवानि तैर्महाभारान्वितत्वादष्टभिर्गोभिर्वाह्यैरित्यर्थः ॥

स कोटराग्वणनाथसारिकामिश्रकापूर्ववणेश्वरांश्च ।
सौक्षिसिध्रकापूर्ववणेशसाल्वागिर्यञ्जनागिर्यधिपान्यदिक्षत् ॥ ६१ ॥

६१. स्पष्टम् । किं तु । स मूलराजः[7] । कोटरावणसारिकावणमिश्रकावणसिध्रकावणाख्यानि कोटरादितरुसत्कानि वनानि । साल्वा देशास्तेषां

१ सी °न्मखेखे. २ प सी °ष्टावगैर्द्रा°. ३ डी द्राक्सि°. ४ प सी डी °सिसधृका°.

१ प बी सी डी रुम्बेला°. २ प ६० पुरगा वृक्षभेदास्तेषा कु°. ३ बी वर्ण पु°. ४ डी °क्षदाश°. ५ प सी शकास्तैः । ६ प सी डी °रे गौ. ७ प सी °लजः । ८ प सी °टरव°. ९ प बी सी देशस्ते°.

गिरिः साल्वागिरिः। अञ्जना वृक्षभेदास्तेषां गिरिरञ्जनस्य कज्जलस्य वाश्रयो गिरिरञ्जनागिरिरेवंनामकौ गिरिभेदौ ॥

अष्टाकपालं हविः। अत्र "हविषि°" [७३] इत्यादिना दीर्घः ॥

अष्टागवैर्युग्यैः। अत्र "गवि°" [७४] इत्यादिना दीर्घः ॥

अष्टापद। इत्यत्र "नाम्नि" [७५] इति दीर्घः ॥

कोटरावण। मिश्रकावण। सिध्रकावण। पुरगावण। सारिकावण। इत्यत्र "कोटर°" [७६] इत्यादिना दीर्घः ॥

अञ्जनागिरि। साल्वागिरि। इत्यत्र "अञ्जन°" [७७] इत्यादिना दीर्घः ॥

ज्ञातापि राजात्यमरावतीशभोगावतीशं सुतमुत्सुकोयम्।
शरावतीशाजिरवत्यलंकारवत्यधीशांश्च युधे दिदेश ॥ ६२ ॥

६२. अयं राजा मूलराजः शरावत्यजिरवत्यलंकारवत्याख्यपुरीनृपांश्च। चः पूर्वादिष्टनृपापेक्षया समुच्चये। युधे दिदेशाज्ञापयत्। सुतं बलेनामरावतीशभोगावतीशौ शक्रशेषाही अतिक्रान्तं ज्ञाताप्युत्सुक उत्कण्ठितः प्रेमातिरेकात्पुत्रपरिभवाशङ्काकुलचित्तः सन्नित्यर्थः ॥

बहुस्वर। अमरावती ॥ शरादि। शरावती। इत्यत्र "अनजिरादि°" [७८] इत्यादिना दीर्घः ॥ बहुवचनमाकृतिगणार्थम्। तेन भोगावती ॥ बहुस्वरस्यानजिरादिविशेषणं किम्। अजिरवती। अलंकारवती ॥

वैश्वानरो नु प्रभयातिविश्वामित्रः स विश्वावसुगीतकीर्तिः।
दन्तावलान्प्रेरयति स्म विश्वाराड्विश्वराजोपि च वत्सलत्वात् ॥ ६३ ॥

६३. स नृपो वत्सलत्वात्पुत्रवात्सल्याद्धेतोर्दन्तावलान् गजान्

१ ए सी °मुत्सको°.

१ ए सी हवि। अ°. २ ए सी इत्यात्र. ३ बी °काव°. ४ ए सी डी °श्च पू°. ५ बी °ण्ठित प्रे°. ६ सी दीर्घ। ब°.

विश्वस्मिन् राजन्ते ये तान्विश्वराजोपि च नृपांश्च प्रेरयति स्म। कीदृक् प्रभयाङ्गकान्त्या कृत्वा वैश्वानरो नु विश्वानरस्यर्षेरपत्यमिव बिदादित्वादञ् [६.१.४१]। वह्नितुल्यस्तथा प्रभया क्षात्रतेजसातिविश्वामित्रो विश्वामित्रं गाधिनन्दनमतिक्रान्तोत एव विश्वावसुना देवविशेषेण गीता कीर्तिर्यस्य सोत एव च विश्वस्मिन्सर्वत्र राजते विश्वाराट्॥

**न पैतृवल्यं न च मातृवल्यं सूनो रणे सप्तचितीकवद्यत्।**
**एकाक्यगादित्यनुचिन्त्य दात्राकर्णैर्द्विपैः स स्वयमप्यचालीत्॥ ६४॥**

६४. दात्रमिव दात्रं चिह्नं कर्णयोर्येषां तैर्द्विपैः स मूलराजः स्वयमप्यचालीत्। किं कृत्वा। अनुचिन्त्य। किमित्याह। यद्यस्माद्धेतोः सूनोश्चामुण्डराजस्य पितास्यास्ति पितृवलस्तस्य भावः पैतृवल्यं पितृयुक्तता नास्ति मातृवल्य मातृयुक्तता च नास्ति तस्मात्परमार्थतः सूनुरेकाक्यसहाय एव सप्तचितीकवत्। सप्त चितयोस्मिंस्तस्मिन्निवातिरौद्रत्वात्सप्तचितिश्मशानतुल्ये रणेगादिति॥

**दृष्ट्वाष्टकर्णाश्वसमैः पुरोश्वैरच्छिन्नकर्णैर्वलितान्नृपांस्तान्।**
**स विष्टकर्णैः सह भिन्नकर्णैर्दध्याविति स्वस्तिककर्णकैश्च॥ ६५॥**

६५. स मूलराज इति वक्ष्यमाणं दध्यौ। किं कृत्वा। अश्वैः सह तान्युद्धार्थं प्राक्प्रेरितान्पुरगावणेशादिनृपान्वलितान्पुरो दृष्ट्वा। किंभूतैरश्वैः। अष्टकर्णाश्वसमैः स्वामिचिह्नार्थमष्टप्रकारौ कर्णौ यस्य स योश्व उच्चैःश्रवास्तेन समैः। तथा न च्छिन्नौ स्वामिचिह्नार्थं छेदा-

१ बी डी °तृवल्यं.

१ प सी डी °रस्यार्षे°. २ प सी गाधन°. ३ सी °द्धेतो सू°. ४ डी °ल्य...मा°. ५ डी योस्मिन्नि°. ६ बी °पान्वलि°. ७ प सी °मिनि चि°.

न्वितौ कर्णौ येषां तैः । तथा स्वामिचिह्नार्थत्वाद्दिष्टौ मध्यलीनौ प्रमाणानुगतौ वा कर्णौ येषां तैः । तथा भिन्नौ स्वामिचिह्नार्थत्वेन भेदान्वितौ कर्णौ येषां तैः स्वस्तिककर्णकैश्च स्वस्तिकाकारस्वामिचिह्नाङ्कितकर्णैश्च ॥

**किं छिद्रकर्णस्रुवकर्णपञ्चकर्णान्तकृत्किंकरकर्मघोरात् ।**
**रणादमी नीवृत एव मर्माविल्कण्टकेभ्यो निरुपानहो नु ॥६६॥**

६६. छिद्रं चिह्नं कर्णयोर्येषां ते तथा स्रुवो यज्ञोपकरणभेदाकारं चिह्नं कर्णयोर्येषां ते तथा पञ्च पञ्चसंख्यालिप्याकारं चिह्नं कर्णयोर्येषां स्वामिचिह्नार्थत्वात्पञ्चप्रकारौ कर्णौ येषां वा ते तथा । त्रिपदे द्वन्द्वे । ते येन्तकृत्किंकरा यमकिंकरास्तेषां यत्कर्म मारणं तेन घोराद्रणात्सकाशादमी नृपाः किं नीवृत एव किमिति निवर्तन्त एव मर्माविल्कण्टकेभ्योरुंतुदकण्टकेभ्यः सकाशान्निरुपानहो नु यथा पादुकारहिता निवर्तन्ते ॥

**युत्प्रावृषोमी अनृतीषहो भीपरीततः कुत्र नु राजहंसाः ।**
**यास्यन्ति नीरुग्निरुगस्त्रभाजो नीक्लेदवन्तो रहिताः प्रहारैः ॥६७॥**

६७. अमी प्रत्यक्षा राजहंसाः प्रशस्यवंशोद्भवत्वेन नृपश्रेष्ठा युदेव शरवृष्टिमत्त्वात्प्रावृड्वर्षास्तस्या न ऋतिं पीडां सहन्तेनृतीषहोत एव भियं परितन्वन्ति भीपरीततो रणाद्बिभ्यतः सन्तः क्व नु यास्यन्ति । राजहंसा हि प्रावृषो बिभ्यतः सन्तो मानसे यान्ति । एषां तु त्रिभुवनेपि स्थानं न जान इत्यर्थः । कीदृशाः । निरोचन्ते क्विपि नीरुश्चि परेषु

१ प सी वन्दो र°.

१ सी °था मि°. २ डी° °षा ते स्वा°. ३ बी °षां ते. ४ प सी °विल्कण्ट°. ५ बी °भ्योरतु°. ६ सी असमी. ७ प सी न ऋतिं.

प्रहाराकरणेन रुधिराद्यालेपाभावान्नितरां दीप्तानि निरुञ्जि निर्भङ्गानि[1] यान्यस्त्राणि तानि भजन्ति ये ते । तथा नीक्लेदवन्तो रणत्वरितपलायनेनोत्थश्रमातिरेकात्स्वेदवन्तस्तथा प्रहारै रहिताः[3] ॥

स नः प्रसादोप्रतिहाररोधं प्रासादकक्षासु यतां मुधैषाम्[1] ।
यन्नारकान्धातमसं प्रवेष्टुमपप्रतीहारमिदं प्रनष्टम्[3] ॥ ६८ ॥

६८. अविमान्यत्वान्नास्ति प्रतिहारैर्वेत्रिभी रोधो निवारणं यत्र तद्यथा स्यादेवं प्रासादकक्षासु सौधप्रकोष्ठेषु यतां गच्छतामेषां नृपाणां स महत्त्वेन प्रसिद्धो नोस्माकं[4] प्रसादो देशदानाद्यनुग्रहो मुधा निष्फलम् । यद्यस्माद्धेतोरेषामेतत्कर्तृकमिदं प्रत्यक्षं प्रनष्टं[6] पलायनमपप्रतीहारमपगतकाष्ठिकं यथा स्यादेवं[7] नारकान्धातमसं नरकस्य महान्धकारं प्रवेष्टुमभूत् । रणे हि नष्टा नरकं यान्तीति[8] स्मृतिः ॥

एषोनिकाशो नरकोथ वान्धतमस्यनीकाशभयं पराद्यत् ।
एतैरधीकण्ठ इव द्विषन्दक्षिणापथेज्ञाय्यधिकण्ठजीवैः ॥ ६९ ॥

६९. अथ वेति[9] राज्ञां नरकान्तरोपदर्शनगर्भे[10] पक्षान्तरे । अथ वा यत्पराच्छत्रोरन्धतमसं महामूढतात्रास्तीत्यन्धतमसि । अनीकाशभयमतिप्रकर्षप्राप्तत्वेन निरुपमं भयम्[11] । एष एवानिकाशो निरुपमो नरकः । प्रस्तुतार्थेन योजनायैषां राज्ञां भङ्ग्या भयमाह । एतैर्नृपैरधि-[12]कण्ठा महाभयेन कण्ठमधिगता जीवाः प्राणा येषां तैस्तथा सद्भिर्द्विषन्[13]

१ प सी यताम्॰. २ प सी ॰न्धापत॰. ३ प सी डी ॰नत्यम् ॥.

१ प सी डी निभङ्गा॰. २ डी ॰यनश्र॰. ३ प सी ॰नोश्र॰. ४ बी ॰कं प्रासा॰. ५ प सी ॰नाद्यनु॰. ६ प सी डी ॰नत्य प॰. ७ सी ॰देव ना॰. ८ प सी यातीति. ९ प सी ॰वेदिति. १० सी ॰गर्भप॰. ११ प सी ॰य ए॰. १२ प सी ॰तैनृपै॰. १३ प सी ॰द्भिद्विष॰

लाटो दक्षिणः पन्था दक्षिणापथस्तस्मिन्वर्तमानोधिकाः कण्ठा यस्य सोधीकण्ठो दशकन्धर इवाज्ञायि रावण इवाजय्यो ज्ञात इत्यर्थः। तस्मात्पराद्यद्भयमेष एवैषामिह लोकेपि निरुपमो नरकः संपन्न इति परलोकभाविनरकचिन्तया किमिति तात्पर्यार्थः॥

विश्वामित्रः। अत्र "ऋषौ" [७९] इत्यादिना दीर्घः॥

वैश्वानरः। अत्र "नरे" [८०] इति दीर्घः॥

विश्वावसु। विश्वाराड्। इत्यत्र "वसुराटोः" [८१] इति दीर्घः॥ राडिति विकृतिनिर्देशादिह न स्यात्। विश्वराज(जः)॥

दन्तावलान्। इत्यत्र "वलचि°" [८२] इत्यादिना दीर्घः॥ अपित्रादेरिति किम्। पैतृवल्यम्। मातृवल्यम्॥

सप्तचितीकवत्। इत्यत्र "चितेः कचि" [८३] इति दीर्घः॥

दात्राकर्णैः। अत्र "स्वामिचिह्नस्य°" [८४] इत्यादिना दीर्घः॥ विष्टादिवर्जनं किम्। विष्टकर्णैः। अष्टकर्ण। पञ्चकर्ण। भिन्नकर्णैः। छिन्नकर्णैः। छिद्रकर्ण। स्रुवकर्ण। स्वस्तिककर्णकः॥

[नह्।?] निरुपानहः॥ वृत्। नीवृतः॥ वृष्। प्रावृषः॥ व्यध्। मर्माविद्॥ रुच्। नीरुग्॥ सह्। अनृतीषहः॥ तन्। परीततः। अत्र "गतिकारकस्य°" [८५] इत्यादिना दीर्घ.॥ केचित्तु रुजाविच्छन्ति न रुचौ। तन्मते नीरुगिति रूपं रुजेर्निरुगिति तु रुचेरेवं च रुजिरुच्योर्मतभेदेन विकल्पः सिद्धः॥

नीक्लेद। इत्यत्र "घञि°" [८६] इत्यादिना दीर्घः॥ क्वचिन्न स्यात्। प्रहारैः॥ क्वचिद्विकल्पः। प्रतीहारम् प्रतिहार॥ क्वचिद्विषयभेदेन। प्रासाद गृह। प्रसादोनुग्रहः॥ बहुलवचनादनुपसर्गस्याप्यघञ्यपि च स्यात्।

१ बी °णः पथा द°. २ सी °मित्र। अ°. ३ प सी राडिरिति. ४ सी °म्। स°. ५ प सी °र्णे। भि°. ६ प सी °षहे:। त°. ७ प सी डी °गृहः। प्र°. ८ प सी °स्याघप्य°.

दक्षिणापथे ॥ कचिद्विकल्पः। अन्धन्तमोन्धातमसम् अन्धतमसि ॥ कचिद्विषयभेदेन । अधीकण्ठः। अयमाधिक्ये। अन्यत्राधिकण्ठ॥ कचिदनुत्तरपदेपि विकल्पः। नारक[1] नरकः ॥ काशशब्दे च घञन्ते विकल्पः। नीकाश निकाशः ॥ अजन्ते तूत्तरविधिः ॥

वीकाशमेते रिपुनीत्तपृष्ठा मुनीवहं[1] पीलुवहं च यान्तु ।
श्वाकूर्दकैः श्वापदमन्दधीभिः श्वापुच्छवक्रैः[2] श्वमुखैः[3] किमेभिः ७०

७०. विकाशते विकाश्यते वा अचि वीकाशं प्रकटं यथा स्यादेवं रिपूणां नीत्तं नष्टत्वान्निदातुमारब्धं पृष्ठं यैस्त एते नृपा मुनीवहं पीलुवहं च पुरं यान्तु मुनीनां पीलूनां च वहं धारकमित्यन्वर्थेनाम्नैव[3][4] मुनीवहपीलुवहपुरयोररण्यप्रायत्वं सूचितम् । ततश्च रिपुदत्तपृष्ठत्वेन महेशेन्यराजदेशे[5] च स्थानाभावादरण्यतुल्ये मुनीवहे पीलुवहे च मुनिवृत्त्यां[6] पीलुवृत्त्या चैते[7] वर्तन्तामित्यर्थः[8] । यत एभिर्नृपैः[9] किं न किंचिदित्यर्थः । यतः शुन इव कूर्दो निष्फलं वल्गनं येषां तैस्तथा[10] श्वापदं व्याघ्रादि तद्वन्मन्दा मूढा धीर्बुद्धिर्येषां[11] तैस्तथा[12] श्वापुच्छवक्रैः[13] कुटिलाशयैस्तथा श्वमुखैर्भषणवक्त्रैः ॥

षोढढृषामाः श्वपदापवित्राः षोढा बलेनापि युता न शक्ताः ।
षड्ढा तथैकादश षोडशार्थ[4] वाराञ्श्वपुच्छं नमितं न चर्जु[5] ॥७१॥

७१. श्वपदापवित्रा रणे भग्नत्वात्कुकुराङ्घ्रिवदस्पृश्या एते नृपा स्नि-

---

१ सी °हं च. २ प सी °वक्रै श्व°. ३ प सी डी °मुखे कि°. ४ प सी °थ रोजान्. ५ प सी चर्जुः ।.

---

१ प बी सी °रकः न°. डी °रकः । का°. २ प सी षडन्ते. ३ बी °त्यर्थः । ना°. ४ प सी डी °नाम्नैव. ५ प सी °देश्येन्य°. ६ डी °त्त्या चै°. ७ प सी चैते व°. ८ बी °र्तेतामि°. ९ प सी °भिनृपैः. १० प सी तै तथा. ११ बी धीबुद्धि°. १२ प सी तै तथा. १३ प सी °वक्रैः कु°.

पुविजये न शक्ताः[1] किंभूताः[2] । षोडद्वृषाभा अपि । अपिरत्रापि योज्यः । षड्दन्ता यस्य स षोडन् युवेत्यर्थः[3] । यो वृषो वृषभो बलयौवनादिना तत्समा अपि । तथा षोढा मौलबल[4] १ भृतकबल २ श्रेणिबल ३ अरिबल ४ सुहृद्बल ५ आटविकबल ६ भेदैः षड्विधेन बलेन सैन्येन[5] युता अपि । युक्तं चैतद्यतः षड्वा[8] षड्भिः प्रकारैस्तथैकादश वारानथ तथा षोडश वारांश्च श्वपुच्छं नामितमृजूकृतं न चर्जु न च सरलं स्यात्तथास्वभावत्वात् ॥

<u>वीकाशम्</u> । अत्र "नामिनः काशे" [८७] इति दीर्घः ॥

<u>नीत्त</u> । इत्यत्र "दस्ति" [८८] इति दीर्घः ॥

<u>मुनीवहम्</u> । अत्र "अपील्वादेर्वहे" [८९] इति दीर्घः ॥ अपील्वादेरिति किम् । <u>पीलुवहम्</u> ॥

<u>श्वाकूर्दकैः</u> । अत्र "शुनः" [९०] इति दीर्घः ॥ बहुलाधिकारात्क्वचिद्विकल्पः । <u>श्वापुच्छ</u> <u>श्वपुच्छम्</u> ॥ क्वचिद्विषयान्तरे[6] । व्याघ्रादौ <u>श्वापद</u> । शुनः[7] पदे <u>श्वपद</u> ॥ क्वचिन्न स्यात् <u>श्वमुखैः</u> ॥

<u>एकादश</u> । <u>षोडश</u> । <u>षोडत्</u> । <u>षोढा</u> । <u>षड्वा</u>[8] । इत्येते "एकादश°" [९१] इत्यादिना निपात्याः ॥

<u>द्वित्रा</u> अथ <u>द्वादश</u> वा <u>त्रयोदशाष्टादशाथ</u> <u>द्विशतं</u> <u>द्व्यशीत्या</u> ।
लाटेश्वराः सन्तु स तांस्त्रिचत्वारिंशद्रजोर्ज्जेतुमलं कुमारः ॥७२॥

७२. द्वित्रा द्वौ वा त्रयो वाथाथ वा द्वादश त्रयोदश वाथाथ वाष्टादशाथ वा द्व्यशीत्या सह द्विशतं लाटेश्वराः सन्तु तथापि स कुमारस्ता-

---

१ सी शक्ता षो°. २ ए भूता षो°. ३ ए सी डी °र्थः । इ°. ४ ए सी डी °ल भृ°. ५ ए सी °न्येतयु°. ६ ए सी °पर्यातरे. ७ ए सी शुन प°. ८ ए सी षड्वा । इ°. डी षड्वा । इ°.

ल्लाटेश्वरान् जेतुमलं समर्थः । यतंस्त्रिचत्वारिंशतो गजानामिवोर्ग्वेलं[2] यस्य स तथा ॥

एवं विचिन्त्य यच्चक्रे तदाह ।

द्वाषष्टिमष्टानवतिं त्रयश्चत्वारिंशतं साष्टनवत्यशीतिम् ।
शतं द्विषष्ट्यग्र्यमिषून्क्षिपन्तं स तं सुतं वीक्षितुमत्वरिष्ट ॥७३॥

७३. स्पष्टम् । किं तु । साष्टनवत्यशीतिमष्टनवतिसहितामशीतिम् । द्विषष्ट्यग्र्यं द्विषष्ट्याधिकं शतम् । स मूलराजः ॥

द्वादश । त्रयोदश । अष्टादश । इत्यत्र "द्विन्यष्टानां" [९२] इत्यादिना द्वा-त्रयस्-अष्टादेशाः[3] ॥ प्राकृतादिति[4] किम् । द्विशतम् ॥ अनशीतिबहुव्रीहाविति किम् । द्व्यशीत्या । द्वित्राः ॥

द्वाषष्टिम् द्विषष्टि । त्रयश्चत्वारिंशतम् त्रिचत्वारिंशत् । अष्टानवति[म्] अष्टनवति । इत्यत्र "चत्वारिंशदादौ वा" [९३] इति वा द्वा-त्रयस्-अष्टाः ॥

ऊचुः प्रणम्येत्यथ हृद्यहार्दहृल्लासहृल्लेखजुषो नृपास्ते ।
दिष्ट्या जयी द्विहृदयाम तुक्ते द्विषां हृदामो न ऋते पदातीन् ॥७४॥

७४. अथ राज्ञः सुतवीक्षात्वरानन्तरं ते नृपा राजानं[7] प्रणम्येत्यूचुः । किंभूताः सन्तः । हृदयस्य प्रियं "हृद्यपद्य°" [७.१.११] इत्यादिना ये हृदये भवं "दिगादि°" [६.३.१२४] इत्यादिना ये हृदयार्य हितं युगादित्वाद्ये [७.१.३०] वा हृद्यं यद्धार्दं हृदयस्य भावः कर्म वा "युवादेः" [७.१.६७] अण् । स्नेहस्तेन यो हृल्लासो हृदयोत्साहस्तेन[10] यो

१ प सी °यद्यार्हह°. २ प सी न रुते.

१ प सी डी °तश्चत्वा°. २ प सी °वोर्गल. ३ प सी °देशः ॥ प्रा°. ४ बी °दि कि°. ५ प सी डी °हादिति. ६ बी °षष्टि द्वि°. ७ प सी °न तरं ते नृपा राजान. ८ डी °य सहि°. ९ बी °यभा°. १० प सी डी °न हृ°.

हृल्लेख उत्कण्ठा तं जुषन्ते सेवन्ते ये ते । किमूचुरित्याह । हे द्विहृदयाम दुःखत्वाच्छत्रुहृदयेषु रोगतुल्य[2] ते तव तुक्पुत्रो द्विषां[3] हृदामो हृदयरोगतुल्यो नोस्मान्पदातीन्विना दिष्ट्या क्षेमेण जयी वर्तते । योपि हृर्दोमः क्षयव्याधिः सोपि द्विषां द्वेषं कुर्वतां नृणां जयी द्वेषेण प्रवर्ध्यमानत्वादतिपरिभावुकः स्यादित्युक्तिलेशः ॥

**पदाजयस्ते पदगैः पदोपहतक्षमैर्यावदमी न यामः ।**
**तावच्च दृष्टस्त्रसतामरीणां पत्काषिणां पद्धतिपद्यपांशुः ॥ ७५ ॥**

७५. हे राजंस्ते[6] तवामी अस्मल्लक्षणाः पदाजयः पत्तयः पादाभ्यामुपहता क्षमा भूर्यैस्तैः पदगैः पत्तिभिः सह यावन्न यामस्तावच्चारीणां पद्धतेर्मार्गस्य पद्यः पादोत्थो यः पांशुः स दृष्टः । कीदृशां सताम् । त्रसतां कुमाराद्बिभ्यतामत एव पत्काषिणां पादावभीक्ष्णं[8] मार्गेण सह कषतां नश्यतामित्यर्थः ॥

**पद्राः[1] शरैः पादुपहत्यभाजोयुः पद्धिमार्ता[2] इव विप्रवेषाः ।**
**पच्छः प्रगायन्त[3] ऋचोपपादशब्दाः[4] सपच्छब्दरथान्विनैके ॥ ७६ ॥**

७६. एके भटाः सपच्छब्दरथान् गमनहेतुत्वात्पादा इव पादाश्चक्राणि तेषां शब्दश्चीत्कृतिः सह तेन ये ते ये रथास्तान्विना । सपच्छब्दत्वेन भयहेतुत्वाद्रथान्मुक्त्वेत्यर्थः । पद्राः पादचारिणोयुर्गताः । किंभूताः सन्तः । पद्धिमार्ता[10] इव पादयोर्हिममवश्याय[11]: पद्धिमं तेन

---

१ बी पद्रा श°. २ ए डी °द्धिमर्ता°. सी °द्धिमता इ°. ३ ए सी °न्तप°. ४ ए सी °शब्दा स°.

---

१ बी °खकत्वा° २ ए सी रोमतु°. ३ बी द्विषान् हृ°. ४ ए सी डी °दामोक्षव्या° ५ बी °त्वादिति ६ ए सी °स्ते तात्रा°. ७ ए सी °य पदा°. ८ ए सी डी °भीक्ष्णमा°. ९ ए सी °मुक्तेत्य°. १० डी °द्धिमर्ता°. ११ ए सी °श्याय प°.

ऋताः पीडिता यथा पादुपहत्यभाजः स्युस्तथा शरैः कृत्वा पादयोरुपहताः पदुपहतास्तेषां भावः पादुपहत्यं तद्भजन्ति ये ते। तथा पादव्यथान्विता अत एवापपादशब्दाः शनैर्गमनेन पादोत्थघोषरहिताः । अत एव च विप्रवेषा मन्दगतीनस्मान्मा कोपि शीघ्रमन्वागत्य परिज्ञाय च वधीदिति स्वाकारापह्नवाय ब्राह्मणवेषधारिणः । अत एव च ऋचो मन्त्रभेदान्पच्छः प्रगायन्ते ऋचां पादं पादं वेदध्वनिभेदेनोच्चारयन्तः ॥

**पद्घोषि पन्मिश्रमपादमिश्रं प्रोज्झ्याश्वमुष्ट्रैरपपादघोषैः ।**
**त्यक्तात्मपन्निष्ककलत्रपादनिष्काश्च नस्तोसुषु जग्मुरन्ये ॥७७॥**

७७. अन्ये भटा नस्तः आद्यादित्वात्तस् [७.२.८४]। नासिकायां सत्स्वसुषु । मरणमहाभयेन नासिकागतेषु प्राणेष्वित्यर्थः । उष्ट्रैर्जग्मुर्नष्टाः । यतोपपादघोषैरपगतांह्रिशब्दैः । उष्ट्राणां हि गच्छतां पादघोषो न स्यात् । किंभूताः सन्तः । त्यक्ता मरणभयेनैव व्युत्सृष्टा आत्मनः स्वस्य पन्निष्काः पादयोर्निष्का वीरकटकाद्यलंकारीकृतानि स्वर्णानि कलत्राणां पादनिष्काश्च पादयोर्नूपुराद्यलंकारीकृतानि स्वर्णानि च यैस्ते तथा । किं कृत्वा जग्मुः । पन्मिश्रं बहीयैस्त्वेन मिथः पादसंकरात्पादेषु मिश्रं संकीर्णं तथापादमिश्रं सुलक्षणत्वान्न पादेषु स्वकीयांह्रिषु मिश्रं मिलितमुपलक्षणत्वादन्यैरप्यपलक्षणै रहितमाश्वमश्वौघं प्रोज्झ्य त्यक्त्वा । यतः पद्घोषि पादशब्दान्वितम् । आश्वस्य हि यातः पादघोषः स्यात्तेन च नश्यन्तो लक्ष्यन्ते ॥

**नःक्षुद्रकाः के चन नस्यघातैर्वक्तुं न नासिक्यमलं बभूवुः ।**
**शीर्षण्यघातैश्च लुलच्छिरस्याः शीर्षण्यपाशान्न नियन्तुमीशाः॥७८॥**

७८. के चन भटा नस्यघातैर्नासिकायां भवैः प्रहारैर्नःक्षुद्रका-

१ ए नक्षुद्र°. सी नक्षुद्र°.

१ ए सी च रुचो°. २ ए सी °न रुचा. ३ सी °ककका°. ४ डी °श्रं बही°. ५ ए सी °यस्तेन. ६ ए सी °यांशिषु.

श्छिन्ननासिकत्वात्स्वल्पनासिकाः सन्तो नासिक्यं नासिकास्थानं वर्णं वक्तुमुच्चारयितुं नालं न समर्था बभूवुः । के चन च शीर्षण्यघातैः शिरसि भवैः प्रहारैः कृत्वा लुलन्तो विसंस्थुलाः शिरस्याः[1] शिरसि भवाः केशा येषां ते तथा सन्तः शीर्षण्यपाशान्केशकलापान्नि-यन्तुं[2] संवरीतुं नेशा न समर्था बभूवुः । यद्वा । शिरसा तुल्यानि शाखादित्वाद्ये [७.१.११४] शीर्षण्यानि शिरस्त्राणानि तेषु घातैः कृत्वा लुलै[3]च्छिरस्या[4] भ्रंसमानाशिरस्त्राणाः सन्तः शीर्षण्यपाशान् शिरस्त्राण-बन्धान्नियन्तुं नेशा बभूवुः ॥

हृल्लास । हृल्लेख । हार्द । हृद्य । इत्यत्र "हृदयस्य°" [९४] इत्यादिना हृदादेशः ॥ हृदयशब्दसमानार्थेन हृच्छब्देनैव सिद्धे हृदादेशविधानं लासा-दिषु हृदयशब्दप्रयोगनिवृत्त्यर्थम् । अन्यत्र तूभयं प्रयुज्यते ॥ हृ[5]र्दा[6]मः हृदया[7]म ॥

पदाजयः । पदातीन् । पदगैः । पदोपहत । इत्यत्र "पदः°" [९५] इत्या-दिर्ना[8] पदः ॥

प[9]द्धिम । पद्धति । पत्काषिणाम् । पद्य । इत्यत्र "हिमहति°" [९६] इत्यादिना पत् ॥ अन्ये तु गोपहतयोरपीच्छन्ति । प[10]द्गाः । पादुपहत्य ॥

प[11]च्छ[12] ऋचः प्रगायन्तः । अत्र "ऋ[13]चइशसि" [९७] इति पत् ॥

प[14]च्छब्द पादशब्दाः । पन्निष्क पादनिष्काः । प[15]द्घोषि पादघोषैः । पन्मिश्रम् पादमिश्रम् । अत्र "शब्दनिष्क°" [९८] इत्यादिना [वा] पत् ॥

न[16]स्तः । नःक्षुद्रकाः । अत्र "नस्°" [९९] इत्यादिना नस् ॥

---

१ ए सी °रस्या शि° २ ए सी °यन्तु स°. ३ बी °लच्छर°. ४ बी भ्रगमा°. ५ डी हृद°. ६ ए सी °दाम हृ°. ७ ए बी सी डी °याम. । प°. ८. डी °ना पादशब्दस्य प°. ९ ए सी डी °द्धिमः । प°. १० ए सी पद्गा पा°. ११ बी डी पच्छ ऋ° १२ ए सी °च्छ रुच·. १३ ए बी डी ऋच· श्श°. १४ ए सी डी °च्छब्दः पा°. १५ ए सी °द्घोषिः पा°. १६ सी °स्त । नक्षु°.

नस्यं[1]। इत्यत्र "येवर्णे" [१००] इति नस् ॥ अवर्णे इति किम् । नासिक्यम् ॥

शीर्षण्यघातैः । अत्र "शिरसः शीर्षन्" [१०१] इति शीर्षन् ॥

शीर्षण्यपाशान् शिरस्याः । अत्र "केशे वा"[१०२] इति वा शीर्षन् ॥ केचित्तु

इत्वला मृगशीर्षस्य शिरस्यास्तारकाः स्मृताः ।

इति प्रयोगदर्शनात्केशादन्यत्रापि विकल्पमिच्छन्ति । शाखादियप्रत्यये च शीर्षन्निति नेच्छन्त्येव । तन्मतमाश्रित्य शिरस्या इत्यत्र द्वितीयव्याख्याने शिरसः शीर्षन्नभावः ॥

**द्राक्[1]शैर्षिकाः केप्युदपेषमे[2]णमदेन पिष्टेन सुगन्धयोयुः ।**

**प्रिया विहायोदधिकुम्भचारूदवाहना[3] अध्युदवासजस्त्रि ॥ ७९ ॥**

७९. उदपेषं पिष्टेनोदकेन घृष्टेनैणमदेन कस्तूरिकया सुगन्धयो विलेपनात्सौरभाढ्याः केपि भटा अध्युदवासजस्त्रि । उदके वास उदवासस्तस्माज्जाता याः स्त्रियोप्सरसस्तासु द्रागयुर्देवीभूता इत्यर्थः । यतः शैर्षिकाः शिरसा दीव्यन्तो जयन्तो वा । इकण्[3] । महाशूरत्वाद्रणे शिरःपणीकारकाः । किं कृत्वा । प्रियाः स्वभार्या विहाय । किंभूताः[4] । उदकं धीयत एष्वित्युदधयो रणश्रान्तकान्तानां पानाय जलभृता ये कुम्भास्तैश्चा[5]रू[6]ण्युदवाहनानि जलवाहनानि शकटानि यासां ताः । एतेन प्रिये[7]ष्वत्यनुरागोक्तिः ॥

---

१ ए सी द्राकौर्षि°. २ सी °मेदे°. ३. ए सी डी °नादध्यु°.

---

१ ए सी नस । इ° २ ए सी °रस्ता°. ३ ए सी °कण । म°. डी °कगिम°. ४ ए सी °भूपाः । उ°. ५ ए सी °श्चारुण्यउद°. डी °श्चारुण्यद°. ६ बी °रूण्यद°. ७ बी °येष्विल°.

शीर्षिका[१]: । अत्र "शीर्षः" [१०३] इत्यादिना शीर्षः ॥

उदपेषम् । उदधिकुम्भ । उदवास । उदवाहनाः । अत्र "उदकस्य°" [१०४] इत्यादिनोदः ॥

भिन्नोन्य आशूदककुम्भभेत्त्रोदकुम्भवत्स्वप्रिययोदहार्या ।
साश्रूदबिन्दूदकबिन्दुपङ्क्त्योक्ष्यमाण आपोदकहारभूषाम् ॥८०॥

८०. अन्यो भट उदकहारभूषामुदकबिन्दूनां हाराकारेण पाताद्दुदकस्य यो हारस्तस्य भूषां शोभामाप । कीदृक्सन् । उदकुम्भवद्यथा जल[२]घट उदककुम्भभेत्त्रा जलघटभेदकेन नरेण भिद्यत एवमाशु भिन्नः कुमारभटेन केनचिद्विदारितः । अत एवोदहार्या पत्युर्जलपाना[३]द्यर्थं[४] जलमानेत्र्या स्वप्रिययोक्ष्यमाणः सिच्यमानः । कया कृत्वा । अश्रूणि पतिदु[५]:खोद्भूतकष्टोत्थानि नेत्रजलानि तान्येवोदबिन्दवो जलकणाः सह तैर्या सा तथा योदकबिन्दुपङ्क्तिर्मूर्छापनोदाय प्रक्षिप्ता जलकणश्रेणिस्तया ॥

सिन्धूद[१]मन्थोद[२]कमन्थजेभोदवज्ञनादोर्युदकौदनादी ।
उदौदनं नूदकवज्रभीमासिना निपिष्टोपि ननर्त कश्चित् ॥ ८१ ॥

८१. कश्चिद्भटो ननर्त महाशूरत्वाद्रणचिकीर्षया ववल्ग । कीदृशः । अरय एवोदकमिश्र[६] ओदनोर्युदकौदनस्तमत्तीत्येवंशीलः । महाबलत्वादनायासेनारिविनाशक इत्यर्थः । अत एव सिन्धोरब्धेर्य उदकं मथ्यतेनेन "पुंनाम्नि" [५.३.१३०] घे उदमन्थो मन्दरस्तेन य उदकमन्थो जलविलो-

१ ए सी °दमिन्थो°. २ ए सी °कमिन्थ°.

१ ए सी शीर्पि°. २ बी °लकुम्भ उ°. ३ बी °नार्थं. ४ डी °र्थं कुम्भमा°. ५ ए सी °तिदुपोद्भू°. ६ ए सी °श्र उद°.

डनं तस्माज्जातौ याविभोदवज्रावैरावणविद्युतौ तयोरिव नादोरिजयसूचकः सिंहनादो यस्य स तथा सन्कुमारभटेन केनाप्युदकवज्रभीमासिना विद्युद्रौद्रखड्गेन कृत्वोदौदनं नूदकमिश्रौदनमिवं निपिष्टोपि छिन्नमूर्धापि ॥

रणोदगाहाद्रुधिरोदभाराः केपि क्षणेनोदकगाहमीयुः ।
प्रियोदसक्तूदकभारजन्तुव्यग्रा व्रणाग्रोदकसक्तुशुभ्राः ॥ ८२ ॥

८२. केपि भटाः क्षणेनोदकगाहं नद्यादिजलमध्यविलोडनमीयू रुधिरप्रक्षालनार्थं प्रापुः । किंभूताः सन्तः । रणमेव दुष्करत्वादुदगाहो जलविलोडनं तस्मादनेकप्रहारव्याप्ताङ्गत्वाद्धेतोरित्यर्थः । रुधिरमेवातिबाहुल्यादुदभारो जलप्रवाहो येषां तेत एव रुधिरप्रवाहोपशमाय व्रणाग्रेषु प्रहारक्षतमुखेषु य उदकसक्तवो जलमिश्रसक्तुपिण्डिकाः । प्रहारेषु हि पथ्यत्वात्सक्तुपिण्डिका बध्यन्ते । तैः शुभ्राः श्वेता अत एव च प्रिया उदसक्तवं उदकमिश्राः सक्तवो येषां ते य उदकभारजन्तवो जलप्रवाहजन्तवो यादांसि तैर्व्यग्रा नद्यादिजलप्रदेशे व्यापृताः ॥

क्षीरोदविस्फार्युदवीवधाभैर्मङ्क्षूदपानोदकवीवधाभाः ।
देवेति दत्तेत्यथ देवदत्तेत्यूचुर्मिथः केपि हतास्त्वदीयैः ॥८३॥

८३. केपि भटाः पीडार्तत्वेन तुच्छत्वेन च शरणार्थित्वान्मिथोन्योन्यमूचुः । किमित्याह । देवेति हे देव मां रक्षेति । मां रक्षेत्याद्यध्याहार्यम् । तथा दत्तेति हे दत्त मां रक्षेति । अथ देवदत्तेति हे देवदत्त मां रक्षेति च । किंभूताः सन्तः । उदकं पीयतेस्मिन्नुदपानं कूपाहावादि निपानं तस्योदवीवधो जलमार्गोल्पत्वेन स्वाक्रम्यत्वात्तेनाभा साम्यं येषां ते तथा-

१ सी °यच°. २ ए सी °व नपि°. ३ ए सी °कग्राह. ४ ए सी °नमयू°. ५ ए सी तस्मेद°. ६ ए सी °पु पिथ्य°. ७ डी °दक°. ८ ए सी °व द°. ९ ए सी डी भटा पी° १० ए सी °वीविधे ज°.

त एव क्षीरमेवोदकं यत्र स क्षीरोदः क्षीराब्धिस्तस्य विस्फारी प्रसृमरो य उदवीवध उदकमार्गो महत्त्वेनानाक्रम्यत्वात्तेनाभा येषां तैस्त्वदीयैर्भटैर्मङ्क्षु हताः प्रहृताः ॥

उदकुम्भ उदककुम्भ । इत्यत्र "वैक°" [१०५] इत्यादिना वोदः ॥

उदमन्थ उदकमन्थ । उदौदनम् उदकौदन । उदसक्तु उदकसक्तु । उदबिन्दु उदकबिन्दु । उदवज्र उदकवज्र । उदभाराः उदकभार । उदहार्या उदकहार । उदवीवध उदकवीवध । उदगाहात् उदकगाहम् । अत्र "मन्थौदन°" [१०६] इत्यादिना वोदः ॥

उदपान ॥ उत्तरपदस्य । क्षीरोद । इत्यत्र "नाम्नि°" [१०७] इत्यादिनोदः ॥

देव दत्त देवदत्त । इत्यत्र "ते लुग्वा" [१०८] इति पूर्वोत्तरपदयोर्लुग्वा ॥

**द्वीपान्तरीपप्रभवः परापानूपेश्वरा लाटसखाय एयुः ।**
**सूनोस्तवाग्रेङ्गुलिमप्रतीपंमन्यावलंमन्यतयाच्छिदंस्ते ॥ ८४ ॥**

८४. द्विधा गता आपो यत्र तद्द्वीपम् । अन्तर्गता आपो यत्र तदन्तरीपम् । यद्यप्यनयोर्नाममालास्वेकार्थता तथापि जलमध्यस्थं वेटकमिति प्रसिद्धं द्वीपं जलसमीपस्थं चान्तरीपमिति भेदो ज्ञेयः । तयोः प्रभवः । परावृत्ता आपोस्मिन्परापं पुरभेदः । अनुगता आपोस्मिन्ननूपो जलबहुलो देशस्तयोरीश्वराश्च लाटसखायो लाटेशसाहाय्यकारिणः सन्तो यत्तदोर्नित्याभिसंबन्धाद्य एयुरागतास्ते तव सूनोरग्रेङ्गुलिं कनिष्ठामच्छिदन् वेलायत्तीबभूवुरित्यर्थः । कया हेतुना ।

१ डी परीपा°. २ ए सी लाखस°.

१ ए सी °नाभ ये°. २ ए सी °कवि°. ३ सी °दव°. ४ ए सी डी °भार । उ° बी °भारम् । उ°. ५ ए सी °त्र मथौद°. ६ ए सी डी त××द°. ७ ए सी °लाध्वेका°. ८ डी द्वीपस्थ. ९ डी °न्परीपः १० ए सी °कारणः.

अप्रतीपंमन्याघलंमन्यतया । अप्रतीपानप्रतिकूलानात्मनो मन्यन्ते॰ प्रतीपंमन्या येवलंमन्या निःसत्त्वादबलाः स्त्रिय आत्मनो मन्यमानास्तेषां भावेन ॥

अरुंतुदास्त्रैः सृजतीह दोषामन्यं दिनं त्वत्तनयेर्प्यते स्म ।
गीर्मन्यकैः कैरपि दण्डसत्यंकारोगदंकारनिभे स्वपुत्राः ॥ ८५ ॥

८५. अगदंकारनिभे वैद्य इव सकलजगद्धित इत्यर्थः । इह त्वत्तनयेरुंतुदास्त्रैर्मर्माविच्छस्त्रैः कृत्वा दिनं[2] दोषामन्यं रवेराच्छादित[3]त्वेनान्धकारितत्वाद्रात्रिमात्मानं मन्यमानं सृजति कुर्वति सति कैरपि नृपैः स्वपुत्रा दण्डसत्यंकारो दण्डे करविषये सत्यंकारोर्प्यते स्म । यतः सुप्रतिष्ठवाक्तया गिरं वाग्देवीमात्मानं मन्यन्ते गीर्मन्याः कुत्सिता गीर्मन्या गीर्मन्यकास्तैर्लोकमध्ये कुत्सितवाक्प्रतिष्ठमात्मानं मन्यमानैः[6] । ते हि लोके कुत्सितवाक्प्रतिष्ठमात्मानं मन्यन्त इति तव दण्डं दास्याम इति स्ववाक्प्रतीत्यर्थं त्वत्पुत्रे स्वपुत्रानेव सत्यंकारं ददुरित्यर्थः ॥

नष्टप्रनष्टप्रहतेषु सोस्तुंकारोतिमध्यंदिनसूर्यतेजाः ।
लाटोथ लोकंपृणमप्यनभ्याशमित्यमेत्याह्वयतात्मजं ते ॥ ८६ ॥

८६. अथातिमध्यंदिनसूर्यतेजा अतितेजस्वित्वात्प्रहरद्वयस्थसूर्यमतिक्रान्तः स लाटस्त आत्मजमेत्यागत्याह्वयत सस्पर्धमाकारयत् । कीदृक्सन् । नष्टप्रनष्टप्रहतेषु स्वभटेष्वस्तुंकारः । अस्त्विति निपातोभ्युपगमे । अस्तु करोति कर्मण्यण् । नष्टप्रनष्टप्रहताश्चेन्नष्टप्रनष्टप्रहताः

१ प सी डी °कंप्रण°. २ प सी °भ्यासमि°. ३ डी °त्यमित्या°.

१ डी °ला श्रिय° २ प सी दिन्य दो°. ३ प सी °वेनाच्छा°. ४ प सी वाग्देवीमा° ५ प सी °न्या गैर्म°. ६ प सी °त्सिकवा°. बी °त्सित वा°. ७ प सी डी °क्प्रसिद्धमा°. ८ प सी °टस्तेन आ°. डी °टस्ते तव आ°. ९ सी °र्मणाण् ।॰

सन्त्विति[1] स्वभटानां नष्टप्रनष्टप्रहतत्वं स्वभुजबलावलेपेना[2]ङ्गीकुर्वन्नित्यर्थः[3]। कीदृशम्। लोकंपृणमपि कान्ततादिगुणै[4]र्जगदाह्लादकमपि। अपि-विरोधे। अनभ्यांशमित्यमनभ्यांशं दूरमित्यं गन्तव्यं यस्मात्तम्। अनभ्याशेनेत्यं दूरेण प्राप्यमिति वा। तद्वातिरौद्रत्वाद्दूरात्परिहर्तव्य-मित्यर्थः॥

तमात्मलोकंप्रिणमात्मलोकंप्रीणः कुमारोपि रुचाग्निमिन्धः।
मत्स्यंगिलो मत्स्यमिवा[1]रिधानौघभ्राष्ट्रमिन्ध[2]स्तरसाभ्यधावत्॥८७॥

८७. कुमारोप्यात्मलोकंप्रिणं स्वप्रजाह्लादकं तं लाटं तरसा वेगे-नाभ्यधावत्संमुखं धावितः। कीदृक्सन्। रुचा तेजसाग्निमिन्धोग्नि-रिवेन्धो दीप्यमानोत एवारय एव धाना उपचारा[1]द्रर्जनार्थो[10] यवास्ते-षामोघे भ्राष्ट्रमिन्धे प्रज्वलयति[11] भ्राष्ट्रमिन्धो भ्राष्ट्राजीवी यथा भ्राष्ट्रा[12]-जीवी धाना अग्निना पचत्येवमरींस्तेजसा पचन्नत एवात्मलोकंप्रीणः। यथा मत्स्यंगिलो मत्स्यं गिलनेच्छयाभिधावति॥

रणाब्धितैमिंगिलगिल्यभाजौ स्वपक्षभद्रंक[3]रणावभूताम्।
अन्योन्यमुष्णंक[4]रणाय रात्रिचरारिरात्रिंचरराड्बलौ तौ॥८८॥

८८. स्वपक्षभद्रंकरणौ स्वकीयवर्गस्य रक्षया क्षेमंकरौ तौ कुमारला-टावन्योन्यमुष्णंक[13]रणायोष्णस्य संतापस्योत्पादनायाभूताम्। किंभूतौ सन्तौ। रात्रिचरारिरात्रिंचरराड्बलौ रामरावणतुल्यशक्ती। अत एव

१ सी डी °त्स्यरिवा°. २ प सी डी °भ्राष्टमि°. ३ प सी °करुणा°. ४ प सी °करुणा°.

१ वी °ति सुभ° २ सी °पक्षेना°. ३ प °लेना°. ४ प सी डी °दिगुणै°. ५ बी °भ्यासमि°. ६ प सी डी °भ्यासि दू°. बी °भ्यासदू°. ७ प सी डी °शम्। अभ्या°. ८ बी °व प्रधा°. ९ प सी डी °परा १० प सी यथास्ते°. ११ डी भ्राष्ट्रा°. १२ प सी डी भ्राष्टाजी°. १३ प सी °करुणा°.

गिलस्य गिलो गिलगिलस्तिमीनां गिलगिलस्तिमिंगिलं गिलति वा तिमिंगिलगिलस्तस्य भावस्तैमिंगिलगिल्यं महत्तमतिमिनिगलनं तेन चात्र रणस्याब्धित्वेन रूप्यमाणत्वाद्भटनिगलनशक्तमहाभटनिगलनमाक्षिप्यते। रणाब्धौ तैमिंगिलगिल्यं भजतो यौ तौ। तथा रात्रिचरारिरात्रिचरराजावप्युक्तविशेषणोपेतौ मिथ उष्णंकरणायाभूताम्। यावप्याब्धितैमिंगिलगिल्यभाजौ तिमिंगिलगिलौ महामत्स्यौ स्यातां तावपि मिथ उष्णंकरणाय भवतः॥

तैर्थंकरे तैर्थकरान्तरे वा कथानकेप्यश्रुतपूर्वयुद्धे।
भूधेनुभव्यावृषराज रात्रिमन्यं दिनं चक्रतुरायुधैस्तौ॥ ८९॥

८९. हे धेनुश्चासौ भव्या च धेनुभव्या भूरेव रत्नपयोदोहहेतुत्वाद्धेनुभव्या तत्र वृषराज वल्लभत्वाद्वृषभश्रेष्ठ तौ कुमारलाटावायुधैः कृत्वा दिनं रात्रिमन्यं चक्रतुः। क। अश्रुतपूर्वयुद्धेभूतपूर्वत्वेनाश्रुतपूर्वं यद्युद्धं तस्मिन्निरुपमे युद्धे। काश्रुतपूर्वमित्याह। कथानकेपि। आस्तां सांप्रतमित्यपेरर्थः। किंभूते कथानके। तैर्थंकरे। तीर्थंकरो भगवानर्हंस्तदुपलक्षितः कालोप्युपचारात्तीर्थंकरस्तत्र भवे विद्यमानतीर्थंकरकालभवे भरतबाहुबलिकथादौ। तैर्थंकरान्तरे वा। तीर्थंकरान्तरालकालभवे वा रामायणादिकथायाम्। कचित् 'अश्रुतपूर्वबुद्धे' इति पाठस्तदा तैर्थंकरे तैर्थकरान्तरे वा कथानकेपि सर्वोत्तमत्वेन न श्रुतपूर्वा बुद्धिर्यस्य तस्य राज्ञः संबोधनम्॥

---

१ सी °रात्रि°.

---

१ बी °निगिल°. २ ए सी °हाप्यम°. ३ ए सी मिव उ°. ४ ए सी °त्वेमाश्रु°. ५ डी °त्यर्थः।. ६ ए सी °स्तदुप° ७ सी °तीर्थक°. ८ ए सी °मायिणा°.

**रसादनन्यार्थपरैश्च धेनुंभव्यासुतौ न्वस्पृहितान्यदर्थौ ।**
**दृष्टौ सुरैः स्वैस्त्वकृतान्यदास्थान्यद्रागमेतौ युदनन्यदूती ॥ ९० ॥**

९०. एतौ कुमारलाटावनन्यार्थपरैरनन्यप्रयोजननिष्ठैरद्भुतरणकारित्वात्तद्दर्शन एवात्यन्तासक्तैरित्यर्थः । सुरैर्देवै रसात्कौतुकात् स्वैस्तु स्वकीयसैन्यैः पुनरकृतावन्यदास्थान्यस्मिन्स्वप्रभोरितरस्मिन्नास्थालम्बनमन्यद्रागोन्यस्मिन्स्वप्रभोरितरस्मिन् रागः स्नेहश्च यत्र तद्यथा स्यादेवं दृष्टौ च । चः पूर्ववाक्यार्थापेक्षया समुच्चये । किंभूतौ सन्तौ । अस्पृहितोन्यः प्रस्तावाद्रणादपरोर्थः कार्यं यकाभ्यां तौ तथात एव युधः सकाशादविद्यमानान्यत्रोतिः संबन्ध आसक्तिर्ययोस्तौ तथात्यन्तं रणासक्तौ । धेनुंभव्यासुतौ न्विति । यथा प्रधानगोपुत्रौ महाशण्डावस्पृहितान्यदर्थौ युदनन्यदूती सन्तावनन्यार्थपरैर्लोकै रसाद्दृश्येते ॥

**किमन्यदाशीर्वचनान्यदाशान्यदास्थितरवैरिति न व्यधत्ताम् ।**
**तदान्यदुत्सुक्यमिमौ जयस्यान्यत्कारके स्याद्धि यशोन्यदीयम्**
**॥ ९१ ॥**

९१. इमौ कुमारलाटौ तदान्यस्मिन्मित्रभृत्यादावुत्सुकावुत्कण्ठितावन्यदुत्सुकौ तयोर्भाव आन्यदुत्सुक्यं तन्न व्यधत्तां विजये कस्यापि साहाय्यं नापेक्षितवन्तावित्यर्थः । कुत इति हेतोस्तमेवाह । हि यस्माद्धेतोर्जयस्य कर्मणोन्यो यः कारकस्तस्मिन्नन्यत्कारके स्वस्मादितरस्मिन्विधातरि सति यशोन्यदीयमन्यसंबन्धि स्यात्तस्मादन्यस्मिन्स्वस्मादितरस्मिन्मित्रभृत्यादौ साहाय्यकर आशीर्वचनानि त्वं मद्विषो जीया इत्यादिमङ्गलशंसनान्यन्यदाशीर्वचनानि तथा स्यादन्यस्मिन्मि-

१ सी °कृदा°. २ ए सी पुनन°. ३ बी °दासीर्व°. ४ ए सी °त्कारेके.

१ ए सी °सक्तैरि°. २ ए सी डी °न्यदग्या°. ३ डी °त्यन्तर°. ४ ए सी °साद्दृश्यते ।. ५ ए सी °त्कारेके. ६ ए सी डी °न्यदा°. ७ ए सी तरमान्यस्मि°. बी तथा अस्मि°.

त्रभृत्यादावाशा जयमनोरथोन्यदाशा तथान्यदास्थितत्वमन्यस्मिन्मित्रादौ शत्रुविजयार्थमाश्रयणम्। द्वन्द्वे। तैः किम्। न किंचिदित्यर्थ इति॥

द्वीप। अन्तरीप। प्रतीप। इत्यत्र "द्व्यन्तर्°" [१०९] इत्यादिनाप ईप्॥ अनवर्णादिति किम्। परीप॥

अनूप। इत्यत्र "अनोर्देशे उप्" [११०] इत्यप[3] उप्॥

अप्रतीपंमन्य। अबलंमन्य॥ अरुस्। अरुंतुद। इत्यत्र "खिति°" [१११] इत्यादिना मोन्तो यथासंभवं ह्रस्वश्च॥ अनव्ययेति किम्। दोषामन्यम्॥ अरुःशब्दोपादानादनव्ययस्य व्यञ्जनान्तस्य मो न स्यात्। गीर्मन्यकैः॥

सत्यंकारः। अगदंकार। अस्तुंकारः। इत्यत्र "सत्यागद[3]°" [११२] इत्यादिना मोन्तः॥

लोकंपृणम्। मध्यंदिन। अनभ्याशमित्यम्[4]। इत्येते "लोकंपृण°" [११३] इत्यादिना निपात्याः॥ अन्ये तु प्रीणातेर्णिगन्तस्याचि ह्रस्वत्वं निपात्य लोकंप्रिणमित्युदाहरन्ति॥ कश्चित्स्वकृतह्रस्वत्वमेव मन्यते। लोकंप्रीण.॥

भ्राष्ट्रमिन्धः[5]। अग्निमिन्धः[6]। इत्यत्र "भ्राष्ट्र°" [११४] इत्यादिना मोन्तः॥

मत्स्यंगिलः। तैमिंगिलगिलय। इत्यत्र "अगिलाद्°" [११५] इत्यादिना मोन्तः॥ अगिलादिति किम्। तैमिंगिलगिल्य[7]॥

भद्रंकरणौ। उष्णंकरणाय। इत्यत्र "भद्रोष्णात्करणे" [११६] इति मोन्तः॥

रात्रिंचर रात्रिचर[8]। इत्यत्र "न वाखिद्°" [११७] इत्यादिना मोन्तो[9] वा। खिद्वर्जनं किम्। रात्रिमन्यम्॥ केचित्तीर्थंकरे[10]। तैर्थंकर। इत्यत्रापि विकल्पमिच्छन्ति। तदर्थं न वाखित्कृदन्त इति रात्रेरिति च योगो विभजनीयः॥

---

१ ए सी डी °राप्। अ°. २ ए °त्यप् उ°. ३ ए सी °गन इ°. ४ ए सी °भ्यासमि°. ५ ए सी °मिधः। अ°. ६ ए सी °मिन्द्रः। इ°. ७ ए सी °गिल्यः।. ८ ए सी रात्रिंच°. ९ बी मोन्तो खि°. १० ए सी °रे। तीर्थं°.

धेनुंभव्या धेनुभव्या। इत्यत्र "धेनोर्भव्यायाम्" [११८] इति वा मोन्तः॥

अन्यदर्थौ। अनन्यार्थे। इत्यत्र "अषष्ठी°" [११९] इत्यादिना[1] वा दोन्तः॥

अन्यदाशीः। अन्यदाशा। अन्यदास्थितत्वैः। अन्यदास्था[2]। आन्यदुत्सुक्यम्।
अनन्यदृती। अन्यद्रागम्। अत्र "आशीराशा°" [१२०] इत्यादिना[3] दोन्तः॥

अन्यदीयम्। अन्यत्कारके। अत्र "ईयकारके" [१२१] इति दोन्तः॥

लाटोथ तम्यङ्ङ्जहार[1] सर्वद्र्यग्भिः शरैः सम्यगहीन्द्रसध्र्यङ्।
विष्वद्र्यगोजा[2][3] रथमस्य तिर्यक्चक्रे[4] च देवद्र्यगिषुः कुमारः॥ ९२॥

९२. अथ लाटः सर्वद्र्यग्भिः सर्वगैः शरैः कृत्वास्य कुमारस्य रथं सम्यक्सुप्रयुक्तशरं यथा स्यादेवं प्रजहार। कीदृक्सन्। विषुवति[4] विषूः समर्थस्तमञ्चति विष्वक्तमप्यञ्चति[6] गच्छति विष्वद्र्यक्। अतिवलिष्ठेप्य-स्खलितमित्यर्थः। यद्वा। विष्वगित्यव्ययं सर्वतोर्थे। विष्वगञ्चति विष्वद्र्यक् सर्वविषयमोजो बलं यस्य सोत एवाहीन्द्रसध्र्यङ् शेषाहि-सदृशोत एव च तं कुमारमञ्चति प्रहरणाय गच्छति[7] तद्र्यङ्। तथा देवद्र्यञ्चः[8] सर्वत्राप्यस्खलितगतित्वाद्देवानप्यञ्चन्त इषवो वाणा[9] यस्य[10] स कुमारश्चामुण्डराजोपि रथं तिर्यक्प्रहारवञ्चनाय तिरोगामि यथा स्यादेवं चक्रे मण्डलाकारेण भ्रमयति स्मेत्यर्थः॥

मा गास्तिरश्चीनमजीवसि[5] त्वमवीर दुर्बाहुनगेत्युदित्वा।
लाटोगतुङ्गः स नखायुधो नु नभ्राट् कुमारं निजघान मुष्ट्या॥ ९३॥

९३. हे अवीराशूरात एव दुष्टौ रणकर्मकरणाक्षमत्वेन[11] निन्द्यौ

---

१ ए सी °रपूर्वे°. २ ए सी °ध्वद्र्यगो°. ३ डी °गोजो र°. ४ °र्यंङ्चक्रे. ५ ए सी °जीरसि.

---

१ बी °ना दो°. २ ए सी °न्यदस्था।. ३ ए सी °ना वोन्तः। ४ ए बी सी °पुविति. ५ बी °ध्वपम°. ६ ए सी °ति विष्वक्तमप्यञ्चति ग°. ७ डी °विजय° ८ ए सी °ग्रञ्च। स°. ९ ए सी °वो माणा. १० ए सी °स्य कु°. ११ ए सी °कणा°.

बाहू एवातिस्थूलत्वान्नगौ गिरी यस्य हे दुर्बाहुनग[1] त्वमजीवसि[2] कुत्सितं प्राणिषि तस्मात्तिरश्चीनं तिर्यग्मा गा मृत्युभयेन रथं तिर्यग्मा स्म भ्रमयेत्यर्थः । इत्युदित्वोक्त्वा कुमारं मुष्ट्या निजघान । कीदृक्सन् । अगतुङ्ग उच्चत्वेनाभ्रंलिहत्वाद्[3]रिव[4]दुन्नतोत एव न भ्राजते स्वकालादन्यत्र नभ्राड्नु । नुरत्रापि योज्यः । मेघतुल्यः । तथा नैषां खमस्तीति नखा नखरास्त एवायुधानि यस्य स नखायुधो नु सिंहतुल्यश्च । नखायुध इति नामोपन्यासेनैव नखानामायुधत्वान्यथानुपपत्त्या सिंहः[5] कृतक्रमोसूचि[6] । अतश्चागतुङ्गत्वादिधर्मैर्लोटस्य तुल्यत्वान्नखायुध उपमानमिति ॥

सर्वद्र्यग्भिः । तद्र्यङ् । विष्वद्र्यग् । देवद्र्यग् । इत्यत्र "सर्वादि°" [१२२] इत्यादिना डद्रिः ॥

सध्र्यङ् । सम्यग् । इत्यत्र "सह°" [१२३] इत्यादिना सध्रिसम्यादेशौ ॥

तिर्यङ् । इत्यत्र "तिरसस्तिर्यति" [१२४] इति तिरिः ॥ अतीति किम् । तिरश्चीनम् ॥

अवीर । इत्यत्र "नञत्" [१२५] इति नञ अत्स्यात् ॥

अजीवस्यवीर । इत्यत्र "त्यादौ क्षेपे" [१२६] इति नञत् ॥

नग अग । इत्यत्र "नगोऽप्राणिनि वा"[8] [१२७] इति वा नञोऽन्निपात्यः ॥

नख । नभ्राट् । इत्यत्र "नखादयः" [१२८] इत्यदभावो निपात्यः ॥ कथं न नखमस्त्यस्य नखो न न भ्राजते किं तु भ्राजत एवेति नभ्राट् । पृषोदरादित्वाद् [३.२.१५५] एकस्य नञो लोपे भविष्यति ॥

---

१ ए सी °र्बाहन°. २ ए सी °मजव°. ३ बी °लिहित्वा°. ४ ए सी °रिवुन्न°. ५ ए सी डी सिंहक°. ६ बी °क्रमः सूचितः । अ°. ७ ए सी डी न...भ्र अ°. ८ ए °गोप्रीणि°.

अनायुधाज्यै कुवदं कदश्वदृप्तं ददानं कुरथं प्रहारान् ।
अकद्रथोकद्वद आत्मजस्ते तं मुष्टिभिः कत्तृणवत्पिपेष ॥ ९४ ॥

९४. कदश्वदृप्तं कुत्सिताः कुलक्षणादिना निन्दिता येश्वास्तैरपि दृप्त-[1]मज्ञत्वाद्गर्विष्ठं कुरथं कुलक्षणनिन्दितरथं तं लाटं ते तवात्मजो मुष्टिभिः कृत्वा कत्तृणवत्कुत्सितं तृणं कत्तृणं रोहिषाख्या तृणजातिस्तादिव सुखेन पिपेष परासुं चकारेत्यर्थः। किंभूतम् । अनायुधाज्यै । अनायुधास्त्ररहिता याजिर्युद्धं तस्यै । मल्लविद्यार्थं कुत्सिता वदा वक्तारो यस्याज्ञत्वात्तं मूर्ख-मपि । अपिरत्र ज्ञेयः । बाहुयुद्धेकुशलमपीत्यर्थः । प्रहारान्मुष्टिघाता-न्ददानम् । कीदृगात्मजः । नास्ति कद्रथः कुत्सितो रथो यस्य सोक-द्रथः । यद्वा । कुत्सितो रथो यस्य स कद्रथो न तथाकद्रथस्तथाना-युधाज्यै कुत्सितो [2]वेदः कद्वदो न तथा । यद्वा । कुत्सिता वदा वक्तारो यस्य स कद्वदो न तथा बाहुयुद्धे कुशलः सन् ॥

अनायुध । इत्यत्र "अन्स्वरे" [१२९] इति नञोन् ॥

कदश्व । इत्यत्र "कोः°" [१३०] इत्यादिना कत् ॥

कद्रथः । कद्वदः । इत्यत्र "रथवदे" [१३१] इति कत् ॥ तत्पुरुष एवेच्छ न्त्येके । अन्यत्र कुरथम् । कुवदम् ॥

कत्तृण । इत्यत्र "तृणे जातौ" [१३२] इति कत् ॥

कत्त्रीणि यत्कापथकौपुरुष्यकाक्ष्याणि लाटस्य तदाभवन्न ।
किंत्रिद्विपामप्सरसां ततोभूदकापतिः कापुरुषेतरोसौ ॥ ९५ ॥

९५. यद्यस्माद्धेतोस्तदा युद्धकाले कत्त्रीणि [3]कुं कुत्सितानि कानि वा कुत्सितानि त्रीणि तस्य लाटस्य क्षत्रियोत्तमत्वान्नाभवन् । कानि [4]त्रीणी-

१ सी °मज्ञात्वा°. २ सी वद क°. ३ बी कुत्सि°. ४ प सी त्रीणित्या°.

त्याह । कुत्सितः पन्थाः कापथोक्षत्राचारेण युद्धं कुत्सितोल्पो वा पुरुषः कुपुरुषस्तस्य भावः कर्म वा कौपुरुष्यं शत्रौ रणे पृष्ठदानादि निन्द्यं पुरुषकर्म कुत्सितमक्षमिन्द्रियं कोक्षं कुत्सितमक्ष्यस्येति काक्षो वा तस्य भावः काक्ष्यं भयविह्वलेन्द्रियता । द्वन्द्वे । तानि । ततस्तस्माद्धेतोः कापुरुषेतरः कुत्सितादल्पाद्वा पुरुषादन्यः पुरुषसिंहोसौ लाटोभूत् । कीदृक् । कुत्सितानि त्रीणि कापथकौपुरुष्यकाक्ष्याणि येषां ते कित्रयस्तान्महाशूरप्रियत्वाद्विषन्ति यास्तासामप्सरसां देवीनां नाल्पः पतिरकापतिरतुच्छाशयो भर्ता ॥

कत्रीणि । इत्यत्र "कत्रि" [१३३] इति कोः किमो वा कत्रिपाठः ॥ किमो नेच्छन्त्येके । कित्रि ॥

काक्ष्याणि । कापथ । इत्यत्र "काक्षपथोः" [१३४] इति कादेशः ॥

कापुरुष कौपुरुष्य । इत्यत्र "पुरुषे वा" [१३५] इति वा कादेशः ॥ अनीषदर्थे विकल्पोयम् । ईषदर्थे तु परत्वादुत्तरेण नित्यमेव । तत्रापि विकल्प एवेति कश्चित् । कापुरुष । कौपुरुष्य ॥

अकापतिः । अत्र "अल्पे" [१३६] इति कादेशः ॥

कवाग्निनेवाहिफणाः कवोष्णाः कदग्निवत्क्रोडमुखं कदुष्णम् ।
स काग्निकोष्णं कमठेन्द्रपृष्ठं कुर्वन्बलैः पश्य कुमार एति ॥९६॥

९६. हे राजन्पश्य स पूर्वव्यावर्णितः कुमार एति । कीदृक्सन् । बलैः सैन्यैः कृत्वा कवाग्निनेवाल्पेन कुत्सितेन वा वह्निनेवाहिफणाः–

---

१ बी °रुषस्त°. २ सी काकु कु°. ३ प सी °ना माल्पः. ४ सी °तिका°. डी °तिः का°. ५ प सी कोः कथो वा. ६ सी कापक्ष°. ७ बी °षः । को°. ८ प सी °षरेति. ९ प सी °न्पस्य स. १० प सी °ति । हे राजन्पस्य स पूर्वव्यावर्णित । की°.

शेषस्फटा ईषत्कुत्सिता[1] वोष्णाः संतप्ताः । यद्वा । ईषत्कुत्सितं वोष्णं संतापो योसु[2] ताः कुर्वन् । एवं कोष्णमित्यत्रापि समासः । तथा कदग्निवदल्पेन कुत्सितेन वाग्निनेव[3] क्रोडमुखमादिवराहदंष्ट्रां कदुष्णं कुर्वंस्तथा कमठेन्द्रपृष्ठं काग्निकोष्णमल्पेन कुत्सितेन वाग्निनेव कोष्णं कुर्वन्[4] ॥

कोष्णम् कवोष्णाः । इत्यत्र "काकवौ वोष्णे" [१३७] इति वा काकवौ ॥ पक्षे यथाप्राप्तमिति तत्पुरुषे कदुष्णम् ॥ अन्यस्त्वग्नावपीच्छति । काग्नि[5] । कवाग्निना । कदग्निवत् ॥

अवश्यगम्ये सहितोर्जि राज्ञि श्रीसंहिते गन्तुमनस्यथागात्[1] ।
प्रणन्तुकामः सततं सकामः स संततौजाः समनाः कुमारः॥९७॥

९७. अथ नृपाणामेवमुक्तौ स कुमार आगात् । कीदृक्[6] । संततं निचितमोजो बलं यस्य सोत एव सततं सदा संगतः कामेन सम्यक्कामो यस्य वा स सकामः शत्रुजयेन पूर्णमनोरथोत[7] एव च संगतो मनसा सम्यग्मनो यस्य वा स समनाः समाहितचित्तोत[8] एव च राज्ञि मूलराजपादान्तिके प्रणन्तुकामः । शत्रुजयाद्यवदातकर्मणि हि कृते प्रीतिविशेषोत्पादनाय पितरं पुत्रः प्रणमति । किंभूते राज्ञि । अवश्यगम्ये पूज्यत्वादवश्यमभिगम्ये । तथा संधीयते[9] सं[10] सहिता संबद्धोर्ग्बलं[11] येन तस्मिन् । तथा श्रीसंहिते[12] विजयादिलक्ष्म्या परीते । तथा गन्तुमनसि स्वपुत्रशौर्यावलोकनाय रणं यातुकामे ॥

---

१ ए सी °स्यगाधात् ।.

---

१ ए सी °त्सितो वो°. २ ए यास्तुताः. ३ ए सी डी °व क्रोड°. ४ ए सी डी °न् ॥ कवो°. ५ सी °ग्निना ।. ६ ए सी °क् । सत°. ७ डी °ततमाचि°. ८ ए सी °त मिवित°. ९ सी शत्रुज°. १० बी स्म सहि°. ११ ए सी °द्धोर्गक. १२ बी श्रीसिंहते.

अवश्यमन्ये। अत्र "कृत्ये°" [१३८] इत्यादिना मस्य लुक्॥

सततम् संतत। सहित संहिते। इत्यत्र "सम°" [१३९] इत्यादिना वा मस्य लुक्॥

गन्तुमनस्ति। प्रगन्तुकामः। समनाः। सकामः। इत्यत्र "तुमश्च°" [१४०] इत्यादिना मस्य लुक्॥

सैन्यान्तरे मांसपचन्य आशु मांस्पाकमौज्झन्प्रियमांसपाकाः।
द्रष्टुं द्विषन्मांस्पचनप्रतापं समागतं दक्षिणतारतस्तम्॥ ९८॥

९८. सैन्यान्तरे कुमारसैन्यादन्यस्मिन्मूलराजसैन्ये वर्तमाना मांसपचन्यो मांसपाचिकाः प्रियमांसपाका अपि। अपिर्ज्ञेयः। आशु मांस्पाकं मांसपचनमौज्झन्नत्यजन्। किं कर्तुम्। दक्षिणतारतो दक्षिणस्या दिशो दक्षिणस्य देशस्य वा तीरात्समागतं तं कुमारं द्रष्टुम्। यतो द्विषतां मांस्पचनो मांसस्य संतापनः[3] प्रतापो यस्य तं शत्रुजयेनात्यद्भुतप्रतापमित्यर्थः। अथ च यो हि मांसपचनप्रतापो यस्य प्रतापोपि मांसपचनस्तं देशान्तरादागतं समानधर्मातिशयेनोत्पादितात्याश्चर्यत्वाद्द्रष्टुं प्रियमांसपाका अपि मांसपचन्यो मांस्पाकमाशूज्झन्तीत्युक्तिलेशः॥

सहाजसो दक्षिणतीरराजद्रोः[1] पातनेसौ सपिशाचवात्या।
सौजाश्रुचुम्बे सरसार्द्रदृष्ट्या वर्षात्समासान्नु नृपेण दृष्ट्वा॥ ९९॥

९९. असौ कुमारो नृपेण चुचुम्बे। किं कृत्वा। सह रसेन सरसा दूर्वा तद्वदार्द्रा स्निग्धा या दृष्टिस्तया दृष्ट्वा। उत्प्रेक्ष्यते। समासाद्वर्षान्नु गम्यपकपेक्षया[5] पञ्चमी[6]। मासाधिकं संवत्सरमतिक्रम्येव[7]॥

१ ए सी °द्रोः पितान°.

१ ए बी सी डी °हितस°. २ बी °नमो°. ३ ए सी °पनम°. ४ ए सी °मांविश°. ५ ए सी डी °पेक्षया. ६ ए सी °मी। सामाधि°. ७ ए सी °तिक्रम्ये°.

चिरात्पुत्रस्येक्षणे ह्यतिस्नेहदर्शनपूर्वं चुम्बनं स्यात् । कीदृक्कुमारः । सहौजसा यः स सौजा वलिष्ठोत एव सहौजसो वलिष्ठस्य दक्षिणतीरराजद्रोलाटेश्वरतरोः पातने सह पिशाचेन दुष्टव्यन्तरभेदेनास्ति या सा तथा या वात्या वातौघस्तत्तुल्यो लाटस्य समूलोन्मूलक इत्यर्थः ॥

मांसपचन मांसपचन्यः । मांस्पाकम् मांसपाकाः । अत्र "मांसस्य°"[१४१] इत्यादिना वातो लुक् ॥

दक्षिणतारतः दक्षिणतीर । इत्यत्र "दिक्शब्दात्°" [१४२] इत्यादिना वा तारः ॥

सौजाः सहौजसः । अत्र "सहस्य°" [१४३] इत्यादिना वा सः ॥

सरसा । इत्यत्र "नाम्नि" [१४४] इति सः ॥

अदृश्ये । सपिशाचवात्या ॥ अधिके । समासाव् । इत्यत्र "अदृश्याधिके" [१४५] इति सः ॥

**ऊचे च राजा द्विपतः समूलघातं निहत्येव सहापराद्धम् ।**
**ज्योतिः सकाष्ठं भवतेवबोद्धे भूयाच्चिरं स्वस्ति सहानुगाय ॥१००॥**

१००. राजा मूलराज ऊचे च । चश्चुम्बनापेक्षया समुच्चये । यदूचे तदाह । भवते तुभ्यं चिरं स्वस्ति भद्रं भूयात् । किंभूताय सते । सकाष्ठं काष्ठाष्टादशनिमेषप्रमितकालभेदस्तद्वाचको ग्रन्थोपि काष्ठा तया सह अन्तेव्ययीभावः । काष्ठाशास्त्रमन्ते कृत्वेत्यर्थः । ज्योतिर्ज्योतिःशास्त्रमवबोद्धे बिभ्रतेत्यन्तं ज्योतिर्विद इत्यर्थः । एतेन जयाद्यनुकूल-

१ सी °चिरस्व°.

१ ए सी °तमे स°. २ सी °क्षिण ती°. ३ ए सी `श्ये । अपि° ४ ए सी °म ए°. ५ सी डी चक्षु°. ६ ए सी डी °य तसे का°. ७ सी °मितः का°.

मूहूर्तवेदितास्योक्ता । अत एव जयहेतुमुहूर्ते रणकरणेनाद्यासिन्दिने सहापराह्णं साकल्येन्ते वाव्ययीभावः[1] । क्रियाविशेषणं सकलमपराह्णं यावदपराह्णमन्ते कृत्वा वेत्यर्थः । द्विषतो लाटस्य समूलघातं मूलेन[2] पितृपितामहामात्याद्यपुरुषौघेन[3][4] सह सैकलं[5] साकल्येऽव्ययीभावः । निहन्ने तथा सहानुगाय परिवारसहिताय ॥

स्वस्ति स्वदेशाय गवे हलाय वत्साय साद्याय यथा सदैव ।
भद्रं सहाद्याय[6] गवे हलाय वत्साय देशाय तथास्त्वमुष्मै ॥१०१॥

१०१. सशब्द आद्यो यस्य गव इत्यादिशब्दस्य तस्मै साद्याय गवे हलाय वत्साय च सगवे सहलाय सवत्सायेत्यर्थः । स्वदेशाय लाटेशद्विड्वधेन यथा सदैव स्वस्ति क्षेमोस्तु तथा सहाद्याय गवे हलाय वत्साय सहगवे सहहलाय सहवत्साय चेत्यर्थः । अमुष्मै देशाय लाटदेशाय भद्रमस्तु । आशिषि पञ्चमी ॥

समूलघातम् । अत्र "अकाले°" [१४६] इत्यादिना सः ॥ अकाल इति किम् । सहापराह्णम् ॥

सकाष्ठम् । इत्यत्र "ग्रन्थान्ते" [१४७] इति सः ॥

सहानुगाय भवते स्वस्ति भूयात् । इत्यत्र "नाशिषि°" [१४८] इत्यादिना न सः ॥ अगोवत्सहल इति किम् । स्वस्ति स्वदेशाय सगवे सवत्साय सहलाय । भद्रमस्तु देशाय सहगवे सहवत्साय सहहलाय ॥

---

१ सी डी °ह्ण्याय.

---

१ ए सी डी °ह्ण व°. २ सी °मूले°. ३ ए सी °महमहात्या°. डी °महमहामात्या°. ४ ए सी °द्यापु°. डी °द्यादिपु°. ५ ए सी डी सफलं. ६ ए सी आद्या य°.

सोगात्पुरीं श्रीदसमानधर्मालकासधर्मामसमानरूपः
अन्वक्सरूपस्तनयोप्यमुष्य सब्रह्मचारी नलकूबरस्य ॥ १०२ ॥

१०२. असमानरूपो निरुपमरूपः स राजा श्रीदसमानधर्मा महर्द्धिकत्वादिना धनदतुल्यः सन्नलकासधर्मां सर्वर्द्ध्युपेतत्वाद्धनदपुरीतुल्यां[1] पुरीमणहिलपाटकमगात्तथान्वक्[2]चोनुचरा अपि सरूपा रूपनेपथ्यावस्थादिभिः सदृशा यस्य सोमुष्य मूलराजस्य तनयोपि पुरीमगात्। कीदृक्सन्। नलकूबरस्य धनदपुत्रस्य सब्रह्मचारी शौर्यादिगुणैस्तुल्य इत्यर्थः। यथा श्रीदो नलकूबरान्वितोलकां यात्येवं मूलराजश्चामुण्डराजान्वितोणहिलपुरीमगादित्यर्थः ॥

सधर्माम्। सरूपः। अत्र "समानस्य°" [१४९] इत्यादिना सः ॥ अन्ये तु धर्मादिषु नवसु वचनान्तेषु विकल्पमिच्छन्ति। सधर्माम्। समानधर्मा[3]। सरूपः समानरूपः ॥

सब्रह्मचारी[4]। इति "सब्रह्मचारी" [१५०] इत्यनेन निपात्यते ॥

बुद्ध्या सदृक्षं सदृशं प्रतापैः सुतं नृपः शक्रसदृश्यधित्सत्।
स्वर्गादनन्यादृश आत्मराज्येन्यादृक्षमेतन्न हि तादृशानाम् ॥१०३॥

१०३. स्पष्टम्। किं तु। न्यधित्सत्स्थापयितुमैच्छत्। स्वर्गादनन्यादृशे महर्द्ध्या स्वर्गतुल्ये। युक्तं चैतत्। हि यस्माद्धेतोरेतत् स्वानुरूपे[5] पुत्रे स्वराज्यस्य निधित्सनं तादृशानां मूलराजतुल्यानां महाराजाना नान्यादृक्षं[6] नासदृशमुचितमेवेत्यर्थः ॥

---

१ ए सी °राजेन्या°.

---

१ सी °तुल्या पु°. २ ए सी डी °हिलपा°. ३ सी सरू°. ४ ए सी °रीस°. डी °री। स°. ५ ए सी स्वानरू°. ६ डी नान्यास°.

त्यादृश्यनन्यादृशि तादृशस्तांस्त्यादृक्षबुद्धिः सचिवानिहार्थे ।
स त्यादृशाञ्ज्योतिषिकान् गुरूंश्च तादृक्षमन्त्रान्नृप आजुहाव ॥१०४॥

१०४. स नृपस्त्यादृशि बृहत्तमत्वेन प्रसिद्धेनन्यादृशि सर्वोत्तमत्वेन निरुपम इहास्मिन्नर्थे पुत्रस्य राज्यन्यसनरूपे कार्ये विषये सचिवानाजुहाव । किंभूतान् । तान् महाबुद्ध्यादिभिस्त्रिगुणैः सर्वत्र प्रसिद्धानत एव तादृशस्तादृक्कार्ये प्रष्टव्यान् । तथा त्यादृशांस्त्रिकालवेत्तृत्वादिदैवज्ञगुणैः सर्वत्र प्रसिद्धान् ज्योतिषिकान् ज्योतिर्विदो राज्याभिषेकशुभलग्नपृच्छार्थमाजुहाव । तथा तादृक्षा महाप्रभावत्वादिना प्रसिद्धा मन्त्रा येषां तान् गुरूंश्च पुरोहितांश्च राज्याभिषेकमङ्गलकर्माद्यर्थमाजुहाव । यद्वा । तादृक्षमन्त्रांस्तदर्थानुसारिपर्यालोचान् गुरूंश्च पूज्यान् कुलमहत्तरांश्चाजुहाव । यतः कीदृक् । त्यादृक्षा पुत्रराज्याभिषेककरणविषया बुद्धिर्यस्य सः ॥

सदृक् । सदृक्षम् । सदृक्षम् । अत्र "दृग्दृक्षे" [१५१] इति समानस्य सः॥
अनन्यादृशि । अनन्यादृक्षे । अन्यादृक्षम् । त्यादृशि । त्यादृशान् । त्यादृक्ष । तादृशः । तादृशानाम् । तादृक्ष । इत्यत्र "अन्य°" [१५२] इत्यादिना आत् ॥

कीदृक्ष ईदृक्ष इनः शशीदृक्कीदृक्क भौमादय ईदृशाश्च ।
स्युः कीदृशाः पृष्टवतीति राज्ञि विमृश्य ते साध्ववदन्नमूढा ॥१०५॥

१०५. ते मन्त्रिज्योतिषिकगुरवो विमृश्य पर्यालोच्यामूढा मोहमगत्वा सम्यग्ज्ञात्वेत्यर्थः । साध्ववदन् । राज्यार्होयं कुमार इति म-

१ प सी डी ताह°. २ प सी डी गुरुंश्च. ३ प °मूढा ॥

१ प सी °शि बहित्त°. डी °शि मह°. २ प सी डी °मग्गु°. ३ प सी डी गुरुश्च. ४ सी °दृक्षेति. ५ प सी डी °दृक्षः । ताह°. ६ प सी डी पं म°. ७ प सी °वयसः प°.

ज्ञिणो गुरवश्चोचुरिदं च लग्नं सर्वग्रहैः श्रेष्ठमिति ज्योतिषिकाश्चोचुरित्यर्थः । क सति । राज्ञि मूलराजे पृष्टवति । किमित्याह । ईदृक्षश्चामुण्डराजलक्षण इनो राज्यस्थापनेन युष्माकं स्वामी युक्तो न वा । अन्यथापीदं व्याख्येयम् । तद्यथा । ईदृक्षो राज्याभिषेकार्हवृषादिलग्नतृतीयस्थानगतत्वादिगुणोपेत इनो रविः कीदृक्षः स्यात्तथेदृग्लग्नमूर्तिस्थत्वोच्चैःस्थत्वादिगुणोपेतः शशी च कीदृङ् स्यात् तथेदृशा लग्ननवमस्थानद्वितीयस्थानैकादशस्थानदशमस्थानषष्ठस्थानैस्थतोच्चैःस्थत्वादिगुणोपेता भौमादयश्च मङ्गलबुधगुरुशुक्रशनिराहवश्च कीदृशाः स्युरिति ॥

ईदृक् । ईदृशाः । ईदृक्षैः । कीदृक् । कीदृशाः । कीदृक्षः । अत्र "इदंकिमीत्की" [१५३] इतीकारकीकारौ ॥

विसृज्य । इत्यत्र "अनञः क्त्वो यप्" [१५४] इति यप् ॥ अनञ इति किम् । असृष्ट्वा ॥

छत्रेण मौक्तिकवतंसपृषोदरेण जीमूतडम्बरवता श्यवतंसकेन ।
राज्येभ्यपिच्यत नृपेण तदा कुमारो वर्णाश्रमाभ्यवनवक्रयपुण्य-
योग्यः ॥ १०६ ॥

१०६. तदा तस्मिन् शुभलग्ने नृपेण कुमारो राज्येभ्यपिच्यत । यतो वर्णा ब्राह्मणादय आश्रमा ब्रह्मचारिगृहस्थवानप्रस्थयतयो द्वन्द्वे तेषां यदभ्यवनं रक्षा तदेव वक्रयो मूल्यं यस्य तत्तथा वर्णाश्रमाभ्यवनेनै क्रीतमित्यर्थः । यत्पुण्यं धर्मस्तस्य । यद्वा । वर्णाश्रमाभ्यवनस्य वक्रय इव भाटकतुल्यं यत्पुण्यं तस्य योग्यो वर्णाश्रमरक्षासमर्थ इत्यर्थः। किंभूतेन सता । मौक्तिकेषु वतंसा इव मौक्तिकवतंसाः प्रकृष्टमुक्ताफलानि तैः कृत्वा पृषन्ति जलबिन्दव इवोदरे यस्य तेन वक्षःस्थले

१ प सी राज्य स्था°. २ डी °नस्मितो°. ३ प सी °क्षः । ई°. ४ बी °मोभिरि°. ५ प सी डी °वक्र°. ६ प सी °न क्रीत°. ७ प सी °स्था इन°.

ललमानजलबिन्दुस्वच्छमुक्ताकलापेन तथा श्रीयुक्तोवतंस आपीडो यस्य तेन । "शेषाद्वा" [७.३.१७५] इति कच् । यद्वा । श्रियो राज्यलक्ष्म्याः शोभाहेतुत्वादवतंसक इव यस्तेनात एव जीवनस्य जलस्य मूतः पुटबन्धो जीमूत इन्द्रस्तस्येव डम्बरो[2] लक्ष्म्याडम्बरो यस्यास्ति तेन । कीदृक्सन्[1] । छत्रेणोपलक्षितः । किंभूतेन । मौक्तिकानां वतंसैः शिरोमालाभिः कृत्वा पृषोदरेण जलबिन्दुवृन्दाध्यासितमध्येनेव तथा जीमूतडम्बरवता नीलत्वादिन्द्रचापानुकारखचितानेकवर्णमणित्वाच्छायाहेतुत्वाच्च मेघाडम्बरवतात ऐव श्यवतंसकेन राज्यलक्ष्म्याः शेखरतुल्येन । वसन्ततिलका छन्दः ॥

अथ प्राचीं गत्वा द्रुहिणतनयां श्रीस्थलपुरे
वपुः स्वं हुत्वाग्नौ सुपिहितपिनद्धापरयशाः ।
ययौ राजेः सूनुर्दिवमनपिनद्धापिहितधी-
र्ग्रहीतुं स्वर्गादप्यवनविधिनावक्रयमिव ॥ १०७ ॥

१०७. अथ पुत्रस्य राज्याभिषेकानन्तरं विजितसर्वशत्रुत्वात्सुपिहितं पत्याद्यावरणेनेवात्यन्तमाच्छादितं सुपिहितमप्यानिवारितप्रसरं कदाचित्कथमपि पिधानमतिक्रम्य प्रकटं स्यादित्याह । पिनद्धं च । लोहशृङ्खलयेव निगडितं चापरयशः शत्रुकीर्तिर्येन स राजेः सूनुर्मूलराजोवनविधिना प्रभूभूय रक्षाकरणेन स्वर्गादप्यवक्रयं भाटकं ग्रहीतुमिव दिवं स्वर्गं ययौ । किं कृत्वा । श्रीस्थलपुरे सिद्धपुरापरनाम्नि श्रीस्थलाख्ये नगरे पूर्वदिगभिमुखं प्रवहमानत्वात्प्राचीं द्रुहिणतनयां ब्रह्मपुत्रीं सरस्वतीं सर्वतीर्थोत्तमत्वेनात्मसाधनार्थं गत्वा तथाग्नौ

---

१ ए सी °न् । छात्रे°. २ ए सी °ते । मौ°. ३ ए सी डी एत श्य°. ४ ए सी अत्र पु°. ५ बी °क गृही°. ६ ए सी °लासे न°.

करीषवह्नौ स्वं वपुर्हुत्वा क्षिप्त्वा । अङ्गुष्ठे करीषाग्नेर्दानेन स्वाङ्गं भस्मसात्कृत्वेत्यर्थः । यतोपिनद्धा मोहेन नियन्त्रितापिहिता मोहेनाच्छादिता विशेषणकर्मधारयगर्भे नञ्समासेनपिनद्धापिहिता धीर्यस्य स तथा । स्वशरीरेप्यमूढ इत्यर्थः । योपि सूनुः सूर्यः सोप्यस्तसमये स्वं वपुः किरणरूपमग्नौ हुत्वा क्षिप्त्वाथानन्तरं प्रभाते प्राचीं पूर्वां दिशं गत्वा दिवमाकाशं यातीत्युक्तिः ॥

पृषोदरेण । जीमूत । इत्येतौ "पृषोदरादयः" [१५५] इति साधू ॥

वतंस अवतसकेन । वक्रय अवक्रयम् । सुपिहित अपिहित । पिनद्ध अपिनद्ध । इत्यत्र "वावाप्योः°" [१५६] इत्यादिनावाप्योर्वप्यादेशौ वा ।

शार्दूलविक्रीडितं ( शिखरिणी ) छन्दः ॥

दशमः पादः समर्थितः ॥

इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचिताया श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्याश्रयवृत्तौ षष्ठः सर्ग. समाप्तः ॥

---

१ सी °पर्ण क°. २ पी °रूप हु°. ३ प सी डी °त । पिन°.

## सप्तमः सर्गः ।



मौलराजिः सोथ पृथ्वीं पार्थो न्वैलो नु पालयन् ।
राज्ञां प्रभवति स्मोच्चैर्गुणवृद्धिमनोहरः ॥ १ ॥

१. अथ स मौलराजिश्चामुण्डराजो राज्ञां प्रभवति स्म प्रभुरभूदित्यर्थः । कीदृक्सन् । उच्चैरुदात्तानां गुणानां शौर्यादीनां या वृद्धिः स्फीतता तया । यद्वा । गुणाश्च वृद्धिश्च कोशसैन्यादिवर्धनं 'गुणमूला वृद्धिः' इति गुणानामर्च्यत्वात्प्राग्निपाते ताभिः । मनोहरः । अत एव पार्थो नु । पृथाया अपत्यम् "अदोर्नदी" [६-१.६६] इत्यादिनाण् । युधिष्ठिर इव । ऐलो नु । इलाया अपत्यम् प्राग्वदण् पुरूरवा इव पृथ्वीं पालयन् ॥

गुणवृद्धीत्यनेन "वृद्धिरारैदौत्" [१] गुणोरेदोत्" [२] इति संज्ञासूत्रे सूचिते । तयोश्च प्रयोजनम् । पालयन् । पार्थः । ऐलः । मौलराजिः । इत्यत्र– "वृद्धिः स्वरेषु°" [७.४.१] इत्यादिनारैदौतः ॥ मनोहरः । पालयन् । प्रभवति । इत्यत्र च "नामिनो गुणोक्ङिति" [४.३.१] इत्यरेदोतः ॥

प्रभवति । इत्यत्र "क्रियार्थो धातुः" [३] इति क्रियार्थो भूशब्दो धातुसंज्ञः॥

नौत्सुकायत स क्वापि कीर्त्यै सोभ्यमनायत ।
अदीयत मही तेन तेनादीयन्त च द्विपः ॥ २ ॥

२. स[२] चामुण्डराजः क्वापि कस्मिन्नपि कार्ये[३] नौत्सुकायत नोत्सुक्य-

१ सी डी °ना सौर्या°. २ सी डी स क्वा°. ३ सी डी °र्ये चामुण्डराजः नौ°.

भूत् । "च्व्यर्थे भृशादेस्तोः" [३.४.२९] इति क्यङ्[1]। विमर्शकत्वात्सर्वस्मिन्कार्ये स्थिरप्रकृतिरभूदित्यर्थः। तथा तेन चामुण्डराजेन मही पृथ्व्यदीयत देवद्विजादिभ्यो धर्मार्थं दत्त्वा[2] पालिता वा। दाम्[3]दाग्क्[4]देङां रूपमिदम्। तथा तेन द्विषोदीयन्त चाखण्ड्यन्त च । यतः स चामुण्डराजः कीर्त्यां अभ्यमनायत सस्पृहभूत्। अभिमनस[5]: क्यङ्[6] ॥

अस्यावदाता दातारेः परोक्षापि हि धीयते ।
ह्यस्तन्यद्यतनी[1] वर्तमानेवाद्यापि सत्कथा ॥ ३ ॥

३. दातारेरुच्छिन्नशत्रोरस्य चामुण्डराजस्य सत्कथा[7] शोभनचरितं हि स्फुटं परोक्षापीन्द्रियाणामविषयापि चिरकालीनापीत्यर्थः। ह्यस्तनी[8]व कल्ये भूतेवाद्यतनीवाद्य भूतेव वा । इवः प्राग्वदत्रापि योज्यः। वर्तमानेव विद्यमानेव प्रत्यक्षेवं वेत्यर्थः[9]। अद्यापि सांप्रतमपि धीयते सदोत्कीर्तनेन धार्यते। यद्वा । पीयते सदादरेण श्रूयत इत्यर्थः[10]। धांग्क् डुं इत्येतयो रूपमिदम्। यतोवदाता निष्कलङ्कानेकावदाताधिष्ठितत्वेन पवित्रा वा ॥

पञ्चमी सप्तमी मूर्तिर्वैष्णवी[2] सोरिशासनात् ।
क्रियातिपत्तिर्नाशङ्कि तस्य[3] श्वस्तन्यपि क्वचित् ॥ ४ ॥

४. स राजारिशासनाच्छत्रुशिक्षणा[11]द्धेतोर्वैष्णवी विष्णुसत्का

---

१ सी °तना व°. २ ए °वी शोरि°. ३ ए बी सी डी ई °स्य स्वस्त°.

---

१ ए बी क्यङय। वि°. २ बी दत्त्वा पा°. ३ सी डी °मृदाग्कदेङां. ई °मृदाग्कदेङां. ४ ए °ग्कूदेङा. ५ बी °नसा क्य°. ६ ए बी सी डी क्यङय ॥ ७ सी °था सौभ°. ८ बी °स्तनेव. ९ ई °व चेत्य°. १० ए °र्थः। धांग्क् डुं इ°. बी °र्थः। धाग् डुं इ°. सी °र्थः। धाक् ट्टं इ°. डी °र्थः। धाक् डुं इ°. ई °र्थः। धाक् ट्टं इ°. ११ ए °णाद्धेतो°.

पञ्चमी मूर्तिर्वामनाख्या सप्तमी मूर्ती रामचन्द्राख्याभूत्तयोस्तुल्योभूदित्यर्थः । अतश्चास्य चामुण्डराजस्य क्रियातिपत्तिः कार्यविनाशः श्वस्तन्यप्यैष्यद्दिनभाविन्यप्युपलक्षणत्वाच्चिरकालभाविन्यपीत्यर्थः । आस्तां तावदद्यभाविनीत्यपेरर्थः । कस्मिंश्चित्कस्मिन्नपि स्थाने नाशङ्कि न संभाविता । अर्थात्सर्वजनेन ॥

आशिषास्य भविष्यन्तीं जनता पितरौ सुराः ।
अस्यति स्मास्यतः स्मास्यन्ति स्म चाजस्रमापदम् ॥ ५ ॥

५. आशिषा जय जीव नन्देत्यादिमङ्गलशंसनेनास्य राज्ञो भविष्यन्तीं भाविनीमापदमजस्रं सदा जनता जनौघोस्यति स्म क्षिप्तवती। पितरौ च मातापितरौ चास्यतः स्म । सुराश्चास्यन्ति स्म । एतेन न्यायित्वविनीतत्वधार्मिकत्वादिगुणैर्जनतापितृसुरा अनेनानन्दिता इत्युक्तम् ॥

किं न पश्यसि पश्यामि पश्यावः पश्यथो नु किम् ।
पश्यामः पश्यथेत्यासन्द्वारेस्य क्ष्माभुजां गिरः ॥ ६ ॥

६. अस्य राज्ञो द्वारे सिंहद्वारे क्ष्माभुजां गिरोभवन् । कथमित्याह । किंशब्दौ नुश्चाक्षमागर्भे प्रश्नत्रये । अहो क्ष्माभुक् त्वमर्थान्ममोपरिपतनादि कुर्वन्किं न पश्यसि मां नालोकयसि । एवं पृष्टः स प्रत्याह । पश्याम्यवलोकयन्नस्मि । तथा हे क्ष्माभुजौ युवां नु किं न पश्यथः । नन्वत्रापि योज्यः । तावपि प्रत्याहतुः । पश्यावः । तथा

१ ई आसिषा°. २ सी °ष्यन्ती ज°. ३ प गि XXX रोभ°.

१ ई °श्चास्य°. २ सी °यार्थे°. ३ प सी डी °शः स्वस्त°. ४ प ई °काले भा°. ५ सी °ष्यन्ती भा°. ६ सी डी °रे क्ष्मा°. ७ सी किमश°. ८ सी डी °शब्दो नु°. ९ प °हो क्षाभु°. १० प °सि मा ना°. ११ डी °वां किं. १२ बी °श्यथ। न°.

हे क्ष्माभुजो यूयं किं न पश्यथ। तेपि प्रत्याहुः पश्याम इति। एतेन सेवार्थमहमहमिकयास्य सिंहद्वारे प्रविशतां बहूनां राज्ञां मिथोतिसंघर्ष उक्तः ॥

अन्यमनायत। इत्यत्र "न प्रादिः°" [४] इत्यादिना प्रादिं व्युदस्य ततः पर एव धातुसंज्ञः। अप्रत्यय इति किम्। औत्सुकायत ॥

अदीयत। अदीयन्त। धीयते। अत्र "अवौ दाधौ दा" [५] इति दा संज्ञा ॥ अवाविति किम्। दाव्। दात ॥ दैव्। अवदाता ॥

वर्तमाना सप्तमी पञ्चमी ह्यस्तन्यद्यतनी परोक्षा श्वस्तन्याशिषा भविष्यन्ती (न्ती) क्रियातिपत्तिरित्येते. ॥ "वर्तमाना तिव् तस् अन्ति सिव् थस् थ मिव् वस् मस् ते आते अन्ते से आथे ध्वे ए वहे महे" [६-९,११-१६] इत्यादीनि दश संज्ञासूत्राणि सूचितानि ॥

अन्यदि। जनतास्यति। पितरावस्यतः। सुरा अस्यन्ति ॥ युष्मदि। पश्यसि। पश्यथ.। पश्यथ ॥ अस्मदि। पश्यामि। पश्यावः। पश्यामः। इत्यत्र "त्रीणि°" [१७] इत्यादिना त्रीणि त्रीणि वचनान्यन्यस्मिन्नर्थे युष्मदर्थेस्मदर्थे च यथाक्रमं परिभाष्यन्ते ॥ "एकद्वि°" [१८] इत्यादिना चैकद्विबहुष्वर्थेषु परिभाष्यन्ते ॥

परस्मैपदमेतेनात्मनेपदमिव प्रियम्।
क्रियते स्मान्यकार्यार्थं कृतिभिर्भूयतेथ वा ॥ ७ ॥

७. एतेन राज्ञा परस्मायन्यार्थं प्रियं पदं नृपत्वादिमहापदवी

१ ए °वे सदा ॥

१ ए धी अदावि°. २ ई दावारे। दै°. ३ वी °स्तनीप°. ४ बी °स्या स्वक्रिय°. ५ ए °न्तीति क्रि°. ६ ए °ति प्रतिप°. ७ वी °त्येनिवर्त°. ८ ए धी सी डी °नि ॥ व°. ९ बी °स्वत। यु°. १० ए पश्यथः। अ°. ११ सी डी °णि व°. १२ ए च तथा°.

त्राण वात्मन आत्मार्थं पदमिव क्रियते स कृतम्। अथ वा कृतमस्त्येषां तैः कृतिभिर्विद्वद्भिः परमार्थज्ञैरन्यकार्यार्थं भूयते॥

दुर्द्धर्षे धीयुते श्लाघ्ये सुस्थानं यत्र च श्रिया।
जज्ञे वल्लभराजोस्य ह्नुवानोर्कं स तेजसा॥ ८॥

८. अस्य राज्ञस्तेजसार्कं ह्नुवानोपलपन्स वल्लभराजो नामार्थोत्पुत्रो जज्ञे। यत्र श्रिया राज्यादिलक्ष्म्या कर्त्र्या सुस्थानं सुखेन स्थीयते। यतः श्लाघ्ये। एतदपि कुत इत्याह। यतो दुर्द्धर्षे शत्रुभिरनभिभाव्ये। धीयुते च। यत्र चेति चो भिन्नक्रमेत्र योज्यः। नीतिशास्त्रादिविषयबुद्धियुक्ते च। 'भाविनि भूतवदुपचारः' इति न्यायेन शूरत्वान्नीतिज्ञत्वाच्च यो राज्यधुराधरणक्षम इत्यर्थः॥

परस्मैपदम् इत्यनेन "नवाद्यानि°" [१९] इत्यादिसूत्रम् आत्मनेपदम् इत्यनेन "पराणि°" [२०] इत्यादिसूत्रं चासूचि॥

कर्मणि। क्रियते। श्लाघ्ये। युते। दुर्द्धर्षे॥ भावे। भूयते। कार्यं। कृतिभिः। सुस्थानम्। इत्यत्र "तत्साप्य°" [२१] इत्यादिनात्मनेपदकृत्यक्तखलर्थाः स्युः॥

जज्ञे। ह्नुवानः। इत्यत्र "इङितः कर्तरि" [२२] इत्यात्मनेपदम्॥

क्रीडत्सु व्यतिचिक्रीडे सवयस्सु हरत्सु च।
व्यतिजह्रे क्रीडनकं घ्नत्सु व्यतिजघान सः॥ ९॥

१ सी °त्र चाश्रि°. २ प °राज्ञोस्य. ३ प °र्कं स्वते°. वी °र्कं सुते°. ४ वी °रत्सु च।.

१ सी आत्मनार्थं. २ प °स्थानसु°. ३ प °त्र व्योज्यः।. ४ डी. °त्वान्न. ५ सी °ज्यधूरा° ६ वी °रणे क्ष°. ७ सी श्लाघ्य। यु°. ८ सी डी ई कार्यम्। कृ°. ९ ई °र्तर्यात्म°.

हिंसत्सु च व्यत्यहिनद्व्यत्यूहेस्त्रं वहत्सु च ।
पठत्सु व्यत्यपाठीच्च वदत्सु व्यत्युवाद च ॥ १० ॥

९–१०. स वल्लभराजः सवयस्सु मित्रेषु बालेषु क्रीडत्सु बालक्रीडया रममाणेषु सत्सु व्यतिचिक्रीडे विनिमयेन रेमे । तथा सवयस्सु क्रीडावशात्क्रीडनकं गेन्दुकादि हरत्सु शष्कुलादिनापनयत्सु क्रीडनकं व्यतिजह्रे च । तथा सवयस्सु घ्नत्सु क्रीडावशान्मुष्ट्यादिना प्रहरत्सु व्यतिजघान च । तथा सवयस्स्वस्त्रं बालोचितं लघु चापादि वहत्सु शस्त्रविद्याभ्यासार्थं धारयत्सु व्यत्यूहे च । तथा हिंसत्सु कौतुकेनास्त्रविद्याभ्यासपरीक्षया वा पंक्ष्यादि विनाशयत्सु व्यत्यहिनच्च । तथा पठत्सु शब्दविद्याद्यधीयानेषु व्यत्यपाठीच्च । तथा वदत्सूक्तिं कुर्वत्सु व्यत्युवाद च ॥ यद्यपि क्रियाणां साध्यैकस्वभावानां व्यतिहारो न संभवति तथापीतरचिकीर्षितायां क्रियायामितरेण यद्धरणं करणं स क्रियाव्यतिहार इति यदा सवयसः क्रीडादि चक्रुस्तदा कुमारोपि चकारेत्यर्थः ॥

तं व्यतीयुर्गुणा लक्ष्म्यो व्यत्ययुस्तस्य चाभयैः ।
वृत्तैर्व्यत्यहसन्धात्र्यो व्यत्यपश्यन्परस्परम् ॥ ११ ॥

११. गुणास्तं वल्लभराजं व्यतीयुर्विनिमयेन जग्मुः । सर्वेपि गुणास्तमुपस्थिता इत्यर्थः । तथा लक्ष्म्यः सर्वसंपदस्तं व्यत्ययुः । तथा तस्य वल्लभस्याभयैर्भीरहितैर्वृत्तैर्व्यापारैर्मन्दुगास्थमर्कटकर्णग्रहणादिभिर्धात्र्य उ-

१ बी °हत्सु च. २ बी सी डी °त्सु व्युत्सु°. ३ सी डी लक्ष्योभ्य°.

१ ए °वत्सु श°. २ ए °नकंगे°. ३ सी °त्सु सकुल्यादि°. डी °त्सु सकुल-यादि°. ४ बी Gives marginally पुष्पादिना besides. ५ ई पक्षादि. ६ डी °दार्धा°. ७ बी °त्सु व्युत्सु°. ८ ए बी सी डी पदर°. ९ सी डी °मं वा स°. १० डी °ये च°. ११ बी सत्सा. ध°. १२ ए बी ई °रैमंदु°.

पमातरो व्यत्यहसन् परस्परमन्योन्यं कर्म[1] व्यत्यपश्यंश्च । स्त्रीणां जातिस्वभावोयं यदा बालकः स्वावस्थाननुरूपां[2] विशिष्टां चेष्टां करोति तदानन्दाश्चर्याभ्यां हसन्ति मिथ. पश्यन्ति च ॥

व्यतिचिक्रीडे[3]। व्यतिजह्ने । व्यत्यूहे[4]। अत्र "क्रियाव्यति°" [२३] इत्यादिनात्मनेपदम् ॥ अगतिहिंसाशब्दार्थहस इति किम् । व्यतीयुः । व्यत्ययुः । व्यत्यहिनत् । व्यतिजघान । व्यत्युवाद । व्यत्यपाठीत् । व्यत्यहसन् ॥ अनन्योन्यार्थ इति किम् । व्यत्यपश्यन्परस्परम् ॥

चित्ते न्यविशत न्यास्यन्मुदं न्यास्यत विस्मयम् ।
सोपौहत्संशयं राज्ञोपौहतारिमनोरथान्[1] ॥ १२ ॥

१२. स वल्लभोद्भुतविनयशौर्यादिगुणे राज्ञः पितुश्चित्ते न्यविशता[5]वसत् । तथा राज्ञश्चित्ते मुदं न्यास्यत्समस्थापयत् । तथा राज्ञश्चित्ते विस्मयं न्यास्यत । तथा राज्ञश्चित्ते संशयं कीदृग[6]यं पुत्रो भविष्यतीति संदेहमपौहच्चिच्छेद[7] । अत एवारिमनोरथांश्चा[8]मुण्डराजानन्तरं वयं[9] सुखं स्थास्याम इत्यहिताशा अपौहत ॥

न्य[10]विशत । इत्यत्र "निविशः[11]" [२४] इत्यात्मनेपदम् ॥

न्यास्यत न्यास्यत् । अपौहत अपौहत् । इत्यत्र "उपसर्गादस्यो[12]हो वा" [२५] इति वात्मने[13] ॥

---

१ सी °रकान् ॥.

---

१ सी °मे विल°. २ सी °स्वानपा. डी °स्वानुरू°. ३ सी °क्रीड । व्य°. ४ सी डी व्यत्युहे ।. ५ सी °शतोव°. ६ सी डी °दृग् पु°. ७ सी °हमारोह°. ८ प सी ई °रथाश्चा°. ९ ई °य स्था°. १० प न्यवश°. ११ डी निवशः. १२ प °स्यो वा. १३ ई °नेपदम् ॥.

राज्ञो दुर्लभराजोभूत्पुत्रोन्य इति तर्कभूः[1] ।
नोदयुङ्कासुरः कोपि स्वं न्ययुङ्क्तेह किं हरिः ॥ १३ ॥

१३. राज्ञो दुर्लभराजो नामान्यो द्वितीयः पुत्रोभूत् । कीदृक् । इति तर्कभूः । एवंविधस्य लोकवितर्कस्य स्थानम् । एवं लोकैर्वितर्क्यमाण इत्यर्थः । कथमित्याह । यस्मादिह दुर्लभराजे सत्युद्भूतभयातिरेकेण कोप्यसुरो नोदयुङ्क नोदयच्छन्न कोपि दैत्यो मस्तकमुत्पाटितवानित्यर्थः । तत्किमिह दुर्लभे हरिर्विष्णुः स्वमात्मानं न्ययुङ्क व्यापारितवान् । दुर्लभराजरूपी[2] किमयं हरिरभूदित्यर्थः । हरौ ह्युत्पन्नेसुरः कोपि नोद्युङ्क इति ॥

प्रयुञ्जन्यज्ञपात्राणि परिक्रेप्यत आशिषः ।
बुद्ध्या विक्रेप्यते शुक्रं सतोवक्रेप्यते गुणैः ॥ १४ ॥
शैलान्विजेष्यते स्थाम्नारीन्पराजेष्यते बलैः ।
ज्ञैः संक्ष्णविष्यते मज्ञां दैवज्ञैरित्यशंस्यसौ ॥ १५ ॥

१४,१५. असौ दुर्लभो दैवज्ञैर्ज्योतिषिकै[3]र्जन्मकुण्डलिकास्थशुभग्रहपातविचारणयेत्येवंविधोशंसि कथितः । यथा यज्ञपात्राणि यागभाजनानि प्रयुञ्जन्यज्ञे[4] व्यापारयन्यज्ञं कारयन्नित्यर्थः । असावाशिषो यैष्ट्रादिप्रयुक्ताशीर्वादान्परिक्रेप्यते संग्रहीष्यतीत्यर्थः । तथा बुद्ध्या कृत्वा शुक्रं विक्रेप्यते पराजेप्यत इत्यर्थः । तथा गुणैः कृत्वा सतः साधूनवक्रेप्यत आवर्जयिष्यतीत्यर्थः । तथा स्थाम्ना स्थैर्येण बलेन वा कृत्वा शैलान्विजेष्यते । तथा बलैः सैन्यैः कृत्वारीन्पराजेष्यते ।

१ सी °शंभू°.

१ ए °द । कस्मादि°. २ डी °रूपः कि°. ३ डी °कैर्ज्योति°. ४ डी यज्ञादि°. ५ सी °सार्वान्य°.

तथा ज्ञैः पण्डितैः सह प्रज्ञां संक्ष्णविष्यते शास्त्रविनोदेन निर्मलीकरिष्यति । सर्वगुणान्वितो महाराजाधिराजोयं भविष्यतीति सर्वविशेषणतात्पर्यार्थ इति ॥

उदयुङ्क्त । न्ययुङ्क्त । इत्यत्र "उत्स्वराद्॰" [२६] इत्यादिनात्मने ॥ अयज्ञतत्पात्र इति किम् । प्रयुङ्क्तेयज्ञपात्राणि ॥

परिक्रेष्यते । विक्रेष्यते । अवक्रेष्यते । अत्र "परिवि॰" [२७] इत्यादिनात्मने ॥

पराजेष्यते । विजेष्यते । अत्र "परावेर्जे" [२८] इत्यात्मने ॥

संक्ष्णविष्यते । अत्र "संमः क्ष्णो." [२९] इत्यात्मने ॥

जन्मास्योच्चरमाणोपस्किरमाणवृषध्वनिः ।

संचेरे तुरगैर्द्वास्थलोको वर्धयितुं नृपान् ॥ १६ ॥

१६. द्वास्थलोको नृपान्वर्धयितुं तुरगैः कृत्वा संचेरेभ्रमत् । कीदृक्सन् । अस्य दुर्लभस्य जन्मोच्चरमाणः । अन्तर्भूतणिगर्थः सकर्मकः । उच्चारयन् । अत एवात्रापस्किरमाणो हृष्टत्वात्तटादि विलिखन्यो वृषः शण्डस्तस्येव हर्षप्रकर्षेणोदात्तो गम्भीरश्च ध्वनिर्यस्य सः ॥

अपस्किरमाण । इत्यत्र "अपस्किरः" [३०] इत्यात्मने ॥

जन्मोच्चरमाणः । अत्र "उदश्चरः साप्यात्" [३१] इत्यात्मने ॥

तुरगैः संचेरे । अत्र "समस्तृतीयया" [३२] इत्यात्मने ॥

---

१ सी डी °न्वितम°. २ ए °शेषेण°. ३ बी उत्सरा°. ४ ए समक्ष्णो. ५ बी सी डी °भराजस्य. ६ डी °भूतोत्रणि° ७ ए एवोप°. ८ सी डी विलखन्या वृ° ९ सी डी °प्रहर्ष°. १० सी डी °रः सोप्या°.

संक्रीडच्छकटारूढाः समक्रीडन्त वन्दकाः ।
सद्यो मुक्ताः परिक्रीडमानैर्मिलितबन्धुभिः ॥ १७ ॥

१७. वन्दका गुप्तौ क्षिप्ता नराः परिक्रीडमानैर्हर्षाद्धास्यचर्चर्यादिकरणेन रममाणैर्मिलितबन्धुभिर्गुप्तेश्छुटिता इत्यानन्दान्मिलितैर्बान्धवैः सह समक्रीडन्तोद्यानादिषु रेमिरे । किंभूताः सन्तः । सद्यो दुर्लभजन्मकाल एव मुक्ता गुप्तेस्त्यक्ता अत एव संक्रीडन्तो नूतनत्वेनाव्यक्तं शब्दं कुर्वन्तो ये शकटाः क्रीडाप्रस्तावात्क्रीडारथास्तेषु हर्षेणारूढाः ॥

अननुक्रीडमानायाक्रीडमानाः कृतक्रुधे ।
राजन्या अशपन्तास्मै नाथन्ते स्म यतोस्य ते ॥ १८ ॥

१८. राजन्या राजपुत्राः कृतक्रुधे केनाप्यपराधेन विहितकोपायात एवाननुक्रीडमानायारममाणायास्मै दुर्लभायाशपन्त । वयं त्वयि भक्ता एवाज्ञानात्त्वेवमपराद्धमित्यादि कोपोपशमायेममबोधयन्नित्यर्थः । यद्वा । वाचा मात्रादिशरीरस्पर्शनेनेमं स्वाभिप्रायमबोधयन्नित्यर्थः । कीदृशाः सन्तः । आक्रीडमानाः कुमारत्वाद्बालोचितक्रीडाभिः क्रीडन्तः । शपने हेतुमाह । यतस्ते राजन्या अस्य दुर्लभस्य नाथन्ते स्म नाथोस्माकं भूयादित्याशंसन् । अस्येत्यत्र "नाथः" [२.२.१०] इति षष्ठी ॥

समक्रीडन्त । इत्यत्र "क्रीडोकूजने" [३३] इत्यात्मने ॥ अकूजन इति किम् । संक्रीडच्छकटं ॥

१ ए °ठ वन्द°. २ ए सी मुक्ता प°. ३ ए °माना कृ°. ४ डी नाथन्ते.

१ ए पी वन्द°. २ ए बी °हेश्छुटि°. ३ सी डी °क्ताव°. ४ डी °न्तो श°. ५ सी °त्पु°. ६ ई °पुत्राः कृ°. ७ बी °विहितापो°. ८ बी °णायस्मै. ९ सी डी °मप°. १० पी °स्पर्श°. ११ बी °नेम. १२ डी °म स्वम°. १३ ए °दृशाः । आ°. पी ई °दृशा । आ°. १४ सी डी °वता । क्र°.

अननुक्रीडमानाय । आक्रीडमानाः । परिक्रीडमानैः । अत्र "अन्वाङ्परेः" [३४] इत्यात्मने ॥

अशपन्तास्मै । अत्र "शपः°" [३५] इत्यादिनात्मने ॥

अस्य नाथन्ते । अत्र "आशिषि नाथः" [३६] इत्यात्मने ॥

सह तेनाग्रजो भुङ्क्ते स्माभुनक्सोपि तद्वचः ।
पितुस्तावनुजह्राते नयमानौ नयागमे ॥ १९ ॥

१९. तेन दुर्लभेन सहाग्रजो वल्लभो भुङ्क्ते स्मात्ति स्म । सोपि दुर्लभोपि तद्वचोग्रजवचनमभुनक् पालितवान्[1] । एतेनैतयोरत्यन्तं[2] स्नेहानुबन्ध[3] उक्तः । तथा नयागमे नीतिशास्त्रे नयमानौ नयागमे संध्यादीन्सद्गुणान्युक्तिभिः स्थिरीकृत्यान्योन्यस्य सहाध्यायिराजकुमाराणां वा बुद्धिं प्रापयन्तावित्यर्थः । तौ कुमारौ पितुरनुजह्राते पितुर्गुणविषयं क्रियाविषयं वा सादृश्यमविकलं शीलितवन्तौ पितुर्गमनमविच्छेदेन शीलितवन्तौ वा पितृवज्जग्मतुर्वा[4] पितृवच्छीलयामासतुर्वेत्यर्थः ॥

जज्ञे विनेष्यमाणोर्थान्नागराजो[5] नृपस्य तुक् ।
मातोदानयमाना यं नयते स्म सुधारसे ॥ २० ॥

२०. शुभलक्षणसूचितौदार्यधार्मिकत्वादिगुणत्वादर्थान्धनानि विनेष्यमाणो धर्माद्यर्थं तीर्थादिषु विनियोक्ष्यमाणो नागराजो नाम नृपस्य तुक् तृतीयः[6] पुत्रो जज्ञे । यं नागराजमुदानयमानोत्सङ्ग आरोपणायोत्क्षिपन्ती सती माता सुधारसे नयते स्म सुधारसविषयं प्रमेयमास्वादं निश्चिनोति स्म । अमृतपानसुखमनुबभूवेति तात्पर्यम् ॥

---

१ सी °मभून°. २ सी डी °नैव त°. ३ ए °न्ध रक्तः ।. ४ बी °ज्जग्मतु°. सी °ज्जन्मतु°. ५ डी °जो नृ°. ६ ए °तीयपु°.

उपनिन्ये गुरुस्तांस्त्रीन्भृत्यानिव महीपतिः ।
कारं विनयमानाश्च प्रजाः प्रैक्षन्त तान्मुदा ॥ २१ ॥

२१. यथा महीपतिश्चामुण्डराजो भृत्यानुपनिन्ये वेतनेनात्मसमीपं प्रापयत्तथा गुरुरुपाध्यायस्त्रींस्तान्कुमारानुपनिन्य आत्मानमाचार्यं कुर्वंस्तानध्यापनार्थमात्मसमीपं प्रापयत् । तथा कारं राजग्राह्यं भागं विनयमाना दानेन शोधयन्त्यः प्रजास्तांस्त्रीन्मुदामी नः पालयिष्यन्तीति चिन्तोत्पन्नहर्षेण प्रैक्षन्त च ॥

भुङ्क्ते । अत्र "भुनजोत्राणे" [३७] इत्यात्मने ॥ अत्राण इति किम् । अभुनक् ॥

पितुरनुजज्ञाते । अत्र "ज्ञो गत°" [३८] इत्यादिनात्मने ॥

नयमानो नयागमे । गुरुस्तानुपनिन्ये । भृत्यानिवोपनिन्ये । यमुदानयमाना । नयते सुधारसे । कारं विनयमानाः । अर्थान्विनेष्यमाणः । अत्र "पूजाचार्यक°" [३९] इत्यादिना पूजादिषु क्रमेणात्मने ॥

व्यनयन्तारिषड्वर्गं ते कफं व्यनयञ्श्रमात् ।
व्यनयञ्शीयमानस्य म्रियमाणस्य चार्तताम् ॥ २२ ॥

२२. ते कुमारा अरिषड्वर्गम् । षण्णां क्रोधादीनां वर्गः षड्वर्गोरिः शत्रुः षड्वर्गस्तम् । व्यनयन्त जितेन्द्रियत्वेनाशमयन्त । तथा श्रमाच्छस्त्राभ्यासाद्धेतोः कफं श्लेष्माणं व्यनयन् । श्रमेण हि कफः शाम्यति । तथा कारुणिकत्वाच्छीयमानस्य परपराभवादिना दुःखिनो म्रियमाणस्य महाव्याध्यादिना प्राणांस्त्यजतश्चार्ततां पीडां व्यनयन्परित्राणभेषज्यादिसंपादनेनोपाशमयन् ॥

---

१ प प्रजाः प्रे°. २ प दा मुदा ॥. ३ सी °माण°.

---

१ सी डी °ष्कोपाद्व°. २ प °रात्रुव°. ३ सी डी °मानदा°. ४ सी °न शोध° डी °न शाध°. ५ सी °मान । न°. ६ डी °नोपश°.

मा मृषीष्टेत्यनिद्रायद्गुर्वाशीःष्वपि शात्रवम् ।
ताननिद्रायमाणान्द्राक्श्रुत्वामृत नु मूर्छितम् ॥ २३ ॥

२३. अनिद्रावन्तो निद्रावन्तो भवन्ति "डाच्लोहितादिभ्यः षित्" [३.४.३०] इति[1] क्यङि[2][3] निद्रायमाणा न तथा ये तानुद्यमिनः कुमाराञ् श्रुत्वा शात्रवमरिवृन्दं द्राङ् मूर्छितं महाभयाकुलत्वेनाचेतनं सदमृत[4] नु मृतमिवाभूत् । कास्वपि सतीषु[5] । अनिद्रायन्तस्तपोध्यानादौ जागरूका[6] ये गुरवस्तेषामाशीःषु[7] । कथमित्याह । मा मृषीष्टेति कुशली भूया इत्यर्थ इति ॥

अरिषड्वर्गं[8] व्यनयन्त । इत्यत्र "कर्तृस्थ०" [४०] इत्यादिनात्मने[9] ॥ कर्तृस्थेति किम् । आर्ततां व्यनयन् । अमूर्तेति किम् । कफं व्यनयन्[10][11] ॥

शीयमानस्य । इत्यत्र "शदेः शिति" [४१] इत्यात्मने ॥

अमृत । मा मृषीष्ट । म्रियमाणस्य । इत्यत्र "म्रियतेः०" [४२] इत्यादिनात्मने ॥

अनिद्रायमाणान् । अनिद्रायत् । इत्यत्र "क्यङ्षो न वा"[12] [४३] इति वात्मने ॥

नाद्योतिष्ट तथाग्नीनां छन्दसामद्युतन्न च ।
नारोचिष्टादिपुंसां वा यथैषामरुचत्त्रयी ॥ २४ ॥

२४. स्पष्टः । किं तु । अग्नीनां दक्षिणाग्निगार्हपत्याहवनीयानाम् ।

---

१ ई °त्रयम् ॥

---

१ सी डाज्लोहि°. २ बी °तिक्यिङ्. ३ प °ङ्यनि°. ४ डी सद् मृतमि°. ५ डी °तीष्वप्यनि°. ६ सी जागुरू°. ७ प गुरुव°. ८ ई °शीष्वपि । क°. ९ सी °षड् व्य°. १० प °ने । XXX अनि°. ११ बी °न् । सीय°. १२ सी क्यङो व°.

छन्दसामृग्यजुस्साम्नाम् । आदिपुंसां ब्रह्मविष्णुहराणाम् । एषां कुमाराणाम् ॥

अद्योतिष्ट अद्युतत् । अरोचिष्ट अरुचत् । इत्यत्र "द्युद्भ्योद्यतन्याम्" [४४] इति वात्मने[2] ॥

कृते विवर्तिषमाणा न्यविवृत्सन्कलेरमी ।
काले वर्त्स्यत्यवर्तिष्यमाणे तन्नेदृशा ध्रुवम् ॥ २५ ॥

२५. यस्माद्धेतोरमी कुमाराः कृत उपचारात्कृतयुगकालोचिते दानशीलादि[3]धर्मकृत्ये । विवर्तिषमाणाः प्रवर्तितुमिच्छन्तः सन्तः कलेः कलिकालो[6]चितात्[7]परद्रोहवञ्चनादिमहापापान्य[8]विवृत्सान्निवर्तितुमैच्छन्[9] । तत्तस्माद्धेतोः । वर्त्स्यति भविष्यति । अवर्तिष्यमाणे भूते वर्तमाने च काले । ध्रुवमवश्यम् । नेदृशा नैषां सदृशाः पुण्यात्मानः केपि सन्ति[10] भविष्यन्त्यभूवन्निति च गम्यते ॥

अविवर्धिषमाणोपि नैषां वर्धिष्यते खलः ।
विवृत्सन्वर्त्स्यति सुहृन्निश्चिक्य इति कोविदैः ॥ २६ ॥

२६. स्पष्टः । किं[11] तु । कोविदैरङ्गविद्यादिनिपुणैर्निश्चिक्ये शारीरिकतादृ[12]ग्शुभलक्षणादिसम्यग्विचारणया निर्णीतम् ॥

वर्त्स्यति अवर्तिष्यमाणे । न्यविवृत्सन् विवर्तिषमाणाः ॥ वृधूङ् । वर्त्स्यति वर्धिष्यते । विवृत्सन् अविवर्धिषमाणः । अत्र "वृद्भ्यः स्यसनोः" [४५] इत्यात्मने वा ॥

१ ए भासंल°.

१ ए °ला स्वद°. २ ई °नेदम् ॥. ३ बी सी डी °दिमहाभ°. ४ ए °माना क° ५ ई °न्तः क°. ६ बी °चितात्° ७ ए °तात्प°. ८ सी °दोहवा°. ९ ए °तिमै° १० ए सन्तश्च°. ११ ए किंतु । को- १२ ई °ग्शोभा°. १३ सी °माना क° बी °माना: । क°. १४ ए °शरीरा°.

कल्प्तास्थ प्रभवोस्माकं भृत्या वः कल्पितास्महे ।
क्रामदक्रममाणानां समक्रामन्हृदीति ते ॥ २७ ॥

२७. स्पष्टः । किं तु । कल्प्तास्थ संपत्स्यध्वे । ते कुमाराः । क्रामदक्रममाणानां क्रामन्तश्च गच्छन्तस्तरुणा अक्रममाणाश्चाजङ्गमा वृद्धाः । तेषां हृदि चित्ते समक्रामन्संक्रान्ताः । प्रभुत्वोचिताखिलगुणालंकृतत्वात्सचराचरलोकस्यापि चित्ते भाविप्रभुत्वेनामी प्रतिभासिता इत्यर्थः ॥

कल्प्तास्थ कल्पितास्महे । अत्र "कृपः श्वस्तन्याम्" [४६] इति वात्मने ॥

अक्रममाणानाम् क्रामत् । इत्यत्र "क्रम." [४७] इत्यादिना वात्मने ॥

अनुपसर्गादिति किम् । संमक्रामन् ॥

विनये क्रममाणानां शास्त्राय क्रमते स्म धीः ।
क्रममाणा च सा तेषां पराक्रमत सर्वतः ॥ २८ ॥

२८. तेषां कुमाराणां विनय उपाध्यायस्य नम्रतादिक्रियायां क्रममाणानामस्खलितात्मनामात्मानं यापयतां वा विनयपराणां सतामित्यर्थः । धी शास्त्राय तर्कादिग्रन्थाय क्रमते स्मोत्सहते स्म तत्परा वानुज्ञाता वाभूत् । सा च तेषां धीः क्रममाणा शास्त्रार्थावगाहनात्स्फीतीभवन्ती संतानेन प्रवर्तमाना वामीभिरेवानुकूलाहाराद्यासेवनेन पाल्यमाना वा सती सर्वतः सर्वकार्येषु पराक्रमताप्रतिहताभूदात्मानं यापितवती वोत्सहते स्म वा तत्परा वानुज्ञाता वाभूत्स्फीत्यभूद्वा संतानेन प्रावर्तिष्ट वा ॥

---

१ डी °क भूत्या. २ ए °त्या व क°.

---

१ सी किं तु क°. २ बी °रुणा आक्र° ३ बी सी ई °पः स्वस्त° ४ बी समाक्रा°. ५ डी नमनादि°. ६ सी °र्काय ग्र°. ७ ए °ते स्म. ८ सी °सेवान°. ९ सी °र्वक्रा°. १० ए °पिभव°.

उपाक्रमत धर्मोर्थे धर्मेर्थश्चानुचक्रमे ।
अनुचक्राम कामोपि तयोस्तेषां विवेकिनाम् ॥ २९ ॥

२९. तेषां कुमाराणां धर्मोर्थे उपाक्रमत । अप्रतिहतोभूदात्मानं यापितवान्वा द्रव्यार्थमुत्सहते स्म वा तत्परोनुज्ञातो वाभूत्स्फीत्यभूद्वा संतानेन प्रावर्तिष्ट वा तैरेव पाल्यते स्म वार्थहेतुरभूदित्यर्थः । अर्थेश्च धर्मेनुचक्रमे धर्मस्थानेषु विनियोज्यमानत्वाद्धनमपि धर्मार्थमभूदित्यर्थः । तथा कामोपि तयोरनुचक्राम सन्तानवृद्धिहेतुत्वात्सन्तानवृद्ध्या राज्याद्यर्थवृद्धिहेतुत्वाच्च धर्मार्थयोर्हेतुरभूदित्यर्थः । क्रियार्थाः सर्वेप्युभयत्रापि प्राग्वद्बोध्याः । यतः कीदृशां तेषाम् । विवेकिनां युक्तायुक्तविचारकाणाम् ॥

वृत्तौ । विनये क्रममाणानाम् ॥ सर्गे । शास्त्राय क्रमते ॥ तायने । क्रममाणा। इत्यत्र "वृत्ति°" [४८] इत्यादिनात्मने ॥

पराक्रमत सर्वतः। उपाक्रमँतार्थे । अत्र "परोपात्" [४९] इत्यात्मने ॥ परोपादेवेति किम् । अनुचक्राम ॥ अन्ये तु परोपाभ्यां पराक्रमेवृत्त्याद्यर्थाभावेपीच्छन्ति । तेन पराक्रमत । उपाक्रमत । इत्यात्मनेपदमेव । वृत्त्यादिषु त्वन्योपसर्गपूर्वादपि पूर्वेण मन्यन्ते । अनुचक्रमे ॥

साधु विक्रममाणत्वं गजानां प्राक्रमन्त ते ।
उपाक्रमन्त चाश्वानां यदाक्रमत भास्करः ॥ ३० ॥

३०. यदा भास्करोर्क आक्रमतोदेति स्म तदा प्रभाते ते कुमाराः साधु सुशिक्षया चतुरं यथा स्यादेवं गजानां विक्रमंमाणत्वं गतिं प्राक्रमन्त प्रारेभिरे॥ चक्रुर्वा । तथाश्वानां च विक्रममाणत्वं धौरितादिगतिप्र-

१ ए ई °मत°. २ ए चतुर्द°. ३ सी °चक्र° ४ ई °प° । XXX [illegible]. ५ डी °[illegible]. ६ धी °[illegible]. ७ सी °[illegible] । डी °[illegible] । ८ ई °[illegible]. ९ धी °[illegible]. १० डी °[illegible]. ११ सी °[illegible].

कमुपाक्रमन्त । एतेनैषां गजाश्वशिक्षाकौशलोक्तिः । प्रातर्हि गजाश्वशिक्षाकुशला राजपुत्रा हस्तिनोश्वांश्च सुगतिं शिक्षयन्तीति स्थितिः ॥

विक्रममाणत्वम् । अत्र "वेः स्वार्थे" [५०] इत्यात्मने ॥

प्राक्रमन्त । उपाक्रमन्त । इत्यत्र "प्रोपादारम्भे" [५१] इत्यात्मने ॥

आक्रमत भास्करः । अत्र "आङः°" [५२] इत्यादिनात्मने ॥

पित्राज्ञामाददानोथ वल्लभः कण्टकच्छिदे ।
प्रतस्थेश्वैर्मुखं कूर्मो व्यादाद्व्यादाच्च भूर्यथा ॥ ३१ ॥

३१. अथ वल्लभः पित्राज्ञां चामुण्डराजादेशमाददानोङ्गीकुर्वन्स[1]न्कण्टके[2]च्छिदे माल[3]व्यदेशाधिपतेः शत्रोरुच्छित्तयेश्वैः कृत्वा तथातिवाहुल्याद्गाढसंमर्देन प्रतस्थे । यथा कूर्मः कमठो मुखं व्यादाद्गाढभारपीडया प्रसारितवान् । भूः पृथ्वी व्यादाच्च विदीर्णा ॥

चामुण्डराजः किलातिकामाद्विकलीभूतः सन्भगिन्यौ[4] वाचिणिदेव्या राज्ञ्यौ[5]त्स्फेटयित्वा तत्पुत्रो वल्लभो राज्ये प्रतिष्ठितः । चामुण्डराजेन चाभिमानवशादात्मसाधनार्थं [6]वाराणस्यां गच्छता माल[7]विकैर्विलुण्ठितच्छत्रादिराजचिह्नकेन पत्तन आगत्य वल्लभस्याज्ञा दत्ता यदि त्वं मदीयः पुत्रस्तदा मालविकेभ्यो मदीयच्छत्रादीन्मोचयेति वस्तुस्वरूपम् । एतच्च वर्ण्यत्वेनाधिकृतस्योपनिबध्यमानमनुचितमिति पित्राज्ञामाददान इत्यनेन सूचितम् ॥

आददानः । अत्र "दाग.°" [५३] इत्यादिनात्मने ॥ अस्वास्य[8]प्र[9]सारविकाश इति किम् । कूर्मो मुखं व्यादात् । भूर्व्यादात् ॥

---

१ ए बी °न्सकण्ट°. २ बी °कच्छेदे. ३ डी °लवदे°. ४ °ई एफ् °न्या चाचि°. ५ ई एफ् °ज्यात्स्फोट°. ६ ए वारणस्या. बी वाणारस्या. ७ ए सी डी °लवके°. ८ बी अभ्यास्य°. ९ बी °प्रकार°.

आपृच्छतागतान्कांश्चिदानुवानमयूरवाक् ।
कांश्चिदागमयांचक्रे स दत्त्वैकं प्रयाणकम् ॥ ३२ ॥

३२. स वल्लभ एकं प्रयाणकं दत्त्वा कांश्चिद्बन्धुमित्रामात्यादीनागतानुव्रजनायायातानापृच्छत वियुज्यमानः प्रयाणकविषयेनुज्ञापितवान् । कीदृक्सन् । आनुवान उत्कण्ठापूर्वं शब्दायमानो यो मयूरस्तस्येव स्निग्धा मधुरा च वागस्य सः । तथा कांश्चिन्नृपादीनागमयांचक्रे[1] किंचित्कालं प्रतीक्षितवान् । एतेन सर्वसैन्यमेलनमुक्तम् ॥

आनुवान । आपृच्छत । इत्यत्र "नुप्रच्छः" [५४] इत्यात्मने ॥

आगमयांचक्रे । अत्र "गमेः क्षान्तौ" [५५] इत्यात्मने ॥

तं नाह्वन्त नृपा यान्तमाह्वयन्तं जयश्रियम् ।
बन्धून्संह्वयमानास्तु न्यह्वयन्तार्थहेतवे ॥ ३३ ॥

३३. तं वल्लभं नृपा अन्तरालस्था राजानो नाह्वन्त स्पर्धमाना नाकारितवन्तः । किंभूतं सन्तम् । जयश्रियमाह्वयन्तं मालव्यराजजयेच्छुमित्यर्थः । अत एव मालवान्प्रति यान्तम् । तुर्विशेषे । किं तु बन्धून्संह्वयमाना मेलनायाकारयन्तः सन्तो नृपा अर्थहेतवे पूजार्थं तं न्यह्वयन्त[2] न्यमन्त्रयन् ॥

व्यह्वास्तारान्नतांस्तान्स तद्बन्धूनप्युपाह्वत ।
तत्प्राभृतान्युपायंस्तोपतस्थे चाध्वदेवताः ॥ ३४ ॥

३४. स वल्लभस्तान्नृपानारात्समीपे नतान्सतो व्यह्वास्ताललाप । तद्बन्धूनपि नृपाणां बान्धवांश्चोपाह्वताललाप । तथा तत्प्राभृतानि नृपढौकितान्युपायंस्त स्वीचक्रे । तथाध्वदेवता देवकुलादिस्था मार्गाधिष्ठातृदेवता निरुपद्रवायोपतस्थे च पुष्पफलादिनार्चितवान् । एतेनास्य सर्वाधिपत्यमुक्तम् ॥

१ सी डी °स्त्रि°. २ सी डी °न। स्वै°. ३ ए. °दम स्व°.

अत्रोपतिष्ठते पारा सिन्धुमध्वैष कुन्तलान् ।
ब्रुवन्त इति राजान उपातिष्ठन्त केपि तम् ॥ ३५ ॥

३५. केपि नृपास्तं वल्लभमुपातिष्ठन्त मैत्र्या हेतुना फलेन वाराधयन् । कीदृशाः सन्तः । ब्रुवन्तो वेत्रिवद्विज्ञपयन्तः । किमित्याह । अत्र देशे पारा पाराख्या नदी सिन्धुं सिन्ध्वाख्यनदीमुपतिष्ठत उपश्लिष्यति । तथैष प्रत्यक्षोध्वा मार्गः कुन्तलान्देशभेदानुपतिष्ठते गच्छतीति । एतेन वल्लभोवन्तिमध्ये प्रविष्ट इत्युक्तम् । तत्र हि पारासिन्धुमेलनादि वर्तेते ॥

उपातिष्ठन्त तं मन्त्रैस्ते मार्गाश्रमतापसाः ।
उपास्थुर्यानतिथयो ये दातॄन्नोपतस्थिरे ॥ ३६ ॥

३६. अतिथिवात्सल्यमहाधर्मनिष्ठत्वेन[1] यानतिथय उपास्थुर्लिप्सयोपाश्रितास्तथा ये महातपःपात्रत्वेन[2] शिलोञ्छवृत्तित्वाद्दातॄन्दायकॅ[3,4]न्नोपतस्थिरे न लिप्सयोपाश्रितास्ते मार्गाश्रमतापसा मार्गनिकटाश्रमवर्तिमुनयस्तं वल्लभं वर्णाश्रमगुरुत्वान्मन्त्रैराशीर्मन्त्रादिभिरुपातिष्ठन्ताराधयन् ॥

तं नाह्वन्त । इत्यत्र "ह्वः स्पर्धे" [५६] इत्यात्मने ॥ स्पर्ध इति किम् । जयश्रियमाह्वयन्तम् ॥

संह्वयमानाः । न्यह्वयन्त । व्यह्वास्त । इत्यत्र "संनिवेः" [५७] इत्यात्मने ॥

उपाह्वत[5] । इत्यत्र "उपात्" [५८] इत्यात्मने ॥

उपायंस्त । इत्यत्र "यमः स्वीकारे" [५९] इत्यात्मने ॥

अध्वदेवता उपतस्थे । तमुपातिष्ठन्त । पारा सिन्धुमुपतिष्ठते । एषोध्वा

---

१ बी °निष्ठित्वे° २ सी °पःप्रावत्वे°, डी °पःप्रभावत्वे°. ३ सी डी °य. कान्नो° ४ ई °कर्तॄन्नो° ५ बी °ह्वयत.

कुन्तलानुगतिष्ठते[1] मद्रैस्तमुपातिष्ठन्त । इत्यत्र "देवार्चा°"[2] [६०] इत्यादिना देवार्चादिषु क्रमेणात्मने ॥

दाता तेनोपतस्थिरे यानुपास्थुः । अत्र "वा लिप्सायाम्" [६१] इति वात्मने ॥

मुक्तावुत्तिष्ठमानास्ते पुरो यावद्वितस्थिरे ।
उदस्थादासनात्तावत्सोवतस्थे च साञ्जलिः ॥ ३७ ॥

३७. मुक्तौ मोक्षार्थमुत्तिष्ठमाना धर्मानुष्ठानेन चेष्टमानास्ते मार्गाश्रमतापसाः पुरो वल्लभस्याग्रतो यावद्वितस्थिरे[3] विशिष्टेन मुनिजनोचितेन संस्थानेन स्थितास्तावत्स वल्लभो विनीतत्वेनासनादुदस्थात्[4] साञ्जलिश्च योजितकरयुगश्चावतस्थेवस्थितः ॥

मा प्रतिष्ठस्व संतिष्ठस्वाद्य तिष्ठामहे हि वः ।
त्वयि नस्तिष्ठते प्रीतिः केप्यूचुरिति तं नृपाः ॥ ३८ ॥

३८. केपि भक्ता नृपास्तं वल्लभमूचुः । कथमित्याह । मा प्रतिष्ठस्व मा प्रस्थानं कार्षीरद्य संतिष्ठस्वात्रैव तिष्ठ । हि यस्मादद्य वयं वो युष्मभ्यं तिष्ठाम्हे स्वाभिप्रायप्रकाशनेनात्मान रोचयामः । ननु किमिति यूयमस्मभ्यं तिष्ठध्व इत्याशङ्कयाहुः । यस्मान्नोस्माकं प्रीतिरन्तरङ्गस्नेहस्त्वयि तिष्ठते त्वया प्रमाणभूतेन मानितास्मत्प्रीतिः प्रमाणमित्यर्थ[5] इति ॥

मुक्तावुत्तिष्ठमानाः । अत्र "उदः°" [६२] इत्यादिनात्मने ॥ अनूर्ध्वेह इति किम् । आसनादुदस्थात्[6] ॥

संतिष्ठस्व । वितस्थिरे । प्रतिष्ठस्व । अवतस्थे । अत्र "संविप्रावात्" [६३] इत्यात्मने ॥

---

१ डी °ते । इ°. २ ई. °र्चादिषु. ३ ए °रे वशि°. ४ ई °स्थात्प्राञ्ज°. ५ सी डी °र्थः ॥. ६ ए बी सी डी एफ् °दुत्तस्थौ ॥ स°.

तिष्ठामहे वः। त्वयि तिष्ठते प्रीति। अत्र "ज्ञीप्सास्थेये" [६४] इत्यात्मने॥

केष्वप्यभयमातस्थे राज्यं समगरिष्ट च।
कानप्यवागरिष्टेवापजानानः स तेजसा ॥ ३९ ॥

३९. स वल्लभ. केष्वपि भीतेषु राजस्वभयं भयाभावमातस्थे प्रतिज्ञातवान्। तथा केष्वपि निश्छद्माश्रितेषु राज्यं समगरिष्ट च प्रतिज्ञातवांश्च। प्राक्तनं केष्वपीत्यत्रापि योज्यम्। तथा कानप्यनतान्नृपांस्तेजसा प्रतापेनापजानानोपलपन्सन्नवागरिष्टेव समूलोन्मूलनेन नाम्नोप्युच्छेदाद्ग्रस्तवानिव॥

आतस्थे। अत्र "प्रतिज्ञायाम्" [६५] इत्यात्मने॥

समगरिष्ट। इत्यत्र "समो गिरः" [६६] इत्यात्मने॥

अवागरिष्ट। इत्यत्र "अवात्" [६७] इत्यात्मने॥

अपजानानः। अत्र "निह्नवे ज्ञः" [६८] इत्यात्मने॥

संजानानास्तादृशं तं संजानन्तो हरेस्तदा।
जगज्झम्पननाम्नोच्चैः प्रत्यजानत भूभुजः ॥ ४० ॥

४०. तदा यात्राकाले तं वल्लभं भूभुजो जगज्झम्पननाम्ना जगतोर्थाच्छत्रुलोकस्य झम्पनोतर्कितमुपरिपातुकस्तेन नाम्नोच्चैः प्रत्यजानताभ्युपागच्छन्। किंभूताः सन्तः। तादृशं जगज्झम्पनेति नाम्नः सदृशं शत्रुलोकं झम्पयन्तमित्यर्थः। संजानानाः पश्यन्तोत एव हरेः सिंहस्य संजानन्तः स्मरन्तोस्मिन् जगज्झम्पनतालक्षणसिंहसाधर्म्यदर्शनात्सिंहं स्मरन्त इत्यर्थः॥

तं संजानानाः। तं प्रत्यजानत। इत्यत्र "संप्रतेरस्मृतौ" [६९] इत्यात्मने॥

अस्मृताविति किम्। हरे संजानन्तः॥

---

१ बी सी निछद्मा° डी निच्छद्मा°. २ सी °स्नाग°. ३ प °मगिरि°. ४ प प्रत्युजा°. ५ सी डी °ना। प्र°

योस्य जिज्ञासते सौजोन्वजिज्ञासन्न केपि तम् ।
तमशुश्रूषमाणानां नाशुश्रूषन्वचोपि हि ॥ ४१ ॥

४१. यो नृपोस्य वल्लभस्यौजो बलं स्वबलावलेपेन रणकरणाज्जिज्ञासते स ज्ञातुमैच्छत्तं नृपं केपि स्वकीयमन्त्रिमित्रादयो नान्वजिज्ञासन्नानुमतिमप्यदित्सन्नित्यर्थः । तथा तं वल्लभमशुश्रूषमाणानां मानात्सेवितुमनिच्छूनां नृपाणां वचोपि । आस्तां मैत्रीविधानादीत्यपेरर्थः । केपि न हि नैवाशुश्रूषन्नीषदपि श्रोतुमैच्छन् । केपीति प्राक्तनमत्रापि योज्यम् ॥

जयाय प्रतिशुश्रूषत्यस्मिन्केपि महीभुजः ।
नादिदृक्षन्त दोःशक्तिमसुस्मूर्षन्त निम्बजाम् ॥ ४२ ॥

४२. अस्मिन्वल्लभे जयाय प्रतिशुश्रूषति प्रतिज्ञां चिकीर्षौ सति न केपि महीभुजो दोःशक्तिमदिदृक्षन्त युद्धेन परीक्षितुमैच्छन् । सर्वोत्कृष्टबलत्वादनेन सह न केपि युयुधिर इत्यर्थः । किं तु परित्राणाय निम्बजां निम्बजाख्यां सप्रत्ययां लोकप्रसिद्धां देवतामसुस्मूर्षन्त स्मर्तुमैच्छन् ॥

जिज्ञासते । अत्र "अननोः सन." [७०] इत्यात्मने ॥ अननोरिति किम् । अन्वजिज्ञासन् ॥

शुश्रूषमाणानाम् । अत्र "श्रुवः°" [७१] इत्यादिनात्मने ॥ अनाङ्प्रतेरिति किम् । आशुश्रूषन् । प्रतिशुश्रूषति ॥

असुस्मूर्षन्त । अदिदृक्षन्त[2] । अत्र "स्मृदृशः" [७२] इत्यात्मने ॥

---

१ सी °दिशक्ति° २ ई. °न्त । इत्यत्र.

दैवात्सोस्याथ रोगोभूच्छिक्षांचक्रे न कोपि यम् ।
यमेदिधिषमाणं च व्यजिगीषन्त नागदाः ॥ ४३ ॥

४३. अथ दैवाद्विधिवशादस्य वल्लभस्य स रोगः शीतलिकाख्योभूद्यं रोगं कोपि वैद्यादिर्न शिक्षांचक्रे । शरीरान्तर्गतत्वेन न ज्ञातुं शकुयामितीच्छति स्मेत्यर्थः । यं च रोगमेदिधिषमाणं विवर्धिषमाणमगदा औषधानि न व्यजिगीषन्त । असाध्यो व्याधिरुत्पन्न इत्यर्थः ॥

सोङ्गे चिक्रंसमानं तमीक्षांचक्राण आत्मना ।
समाधिं विभरांचक्रे विभयांचक्रुवान्न हि ॥ ४४ ॥

४४. स वल्लभो न हि विभयांचक्रुवान्नैव भीतः । कीदृक्सन् । अङ्गे चिक्रंसमानं स्फायितुकामं तं रोगमात्मनेक्षांचक्राणो बाधावृद्ध्या ज्ञातवान् । किं तर्हि समाधि चित्तैकाग्र्यं विभरांचक्रे पोषितवान् । एतेनास्य विद्वत्तोक्ता ॥

विभरांचक्रुवान्स्थैर्यमुत्कुर्वाणः कलिं तदा ।
संसारं सोवचक्रेथोपचक्रे योगिनां पदम् ॥ ४५ ॥

४५. तदा स वल्लभः कलिं कलिकालकर्म रागद्वेषादिकं कलहं वोत्कुर्वाणः परिजिहीर्षया सदोषं प्रतिपादयन्धैर्यं चित्तावष्टम्भं विभरांचक्रुवान्पोषितवान् । अथ तथा संसारं रागद्वेषादिदोषात्मकं भवप्रपञ्चमवचक्रे तिरस्कृतवानत एव योगिनां पदमुपचक्रे सिषेवे । योगिनो हि कलिमुत्कुर्वाणा धैर्यं बिभ्रति संसारं चावकुर्वते ॥

---

१ सी॰ च विजि. डी च वाजि.

---

१ ए °ति॰ । य. २ ए °क्राणा बा°. ३ सी डी °लहमुत्कु°.

नान्यदारान्नान्यवादान्ये पवित्राः प्रचक्रिरे ।
श्रियं तेषु प्रकुर्वाणः श्रेयसां स उपास्कृत ॥ ४६ ॥

४६. स वल्लभः श्रेयसां पुण्यानामुपास्कृत तेषु गुणान्तरमादधौ तानि विशिष्टतराणि चक्र इत्यर्थः[2] । कीदृक्सन् । ये पवित्रा यमनियमैः पूतात्मानो मुनयोन्यदारान्परस्त्रियो न प्रचक्रिरे न विनिपातमविभाव्य तानभिजग्मुरित्यर्थः । तथा येन्यवादान्परकथा न प्रचक्रिरे न कथयितुमारेभिरे न प्रकर्षेणाकथयन्वेत्यर्थः । तेषु श्रियं प्रकुर्वाणो धर्मार्थं विनियुञ्जानः ॥

शिक्षांचक्रे । अत्र "स्नकः°" [७३] इत्यादिनात्मने ॥

अनुबन्धेन । एदिधिषमाणम् ॥ उपपदेन । व्यजिगीषन्त ॥ अर्थविशेषेण । अङ्गे चिक्रंसमानम् । अत्र "प्राग्वत्" [७४] इत्यात्मने ॥

ईक्षांचक्राणः इत्यत्राफलवत्यपि । बिभयांचकृवान् इत्यत्र फलवत्यपि "आमः कृगः" [७५] इत्यात्मनेपदं स्यान्न स्याच्चेति विधिप्रतिषेधावतिदिश्येते । यत्र तु पूर्वस्मादुभयं तत्र फलवत्यफलवति[3] चोभयं स्यात् । बिभरांचक्रे । बिभरांचकृवान् ॥

कलिमुत्कुर्वाणः । संसारमवचक्रे । पदमुपचक्रे । अन्यदारान्न प्रचक्रिरे । श्रेयसामुपास्कृत । नान्यवादान्प्रचक्रिरे । श्रियं तेषु प्रकुर्वाणः । अत्र "गन्धन°" [७६] इत्यादिना गन्धनादिषु क्रमेणात्मने ॥

स कालमधिकुर्वाणो वदमानः सुहृज्जने ।
तत्त्वेषु वदमानश्चावदिष्ट परमात्मनि ॥ ४७ ॥

४७. स वल्लभः परमात्मनि परमः क्षीणसकलकर्मांशत्वाच्छ्रेष्ठो य

१ ई. °शिष्टानि च°. २ ई. °र्थः । श्रे°. ३ ई. °ति वोभ°.

आत्मा तस्मिन्सर्वज्ञे देवेवदिष्ट परमात्मैवाधुना मे शरणमिति तद्वि-षयमुत्साहं वाचाविष्कृतवान्[१] ध्यानेन तत्रोत्सहते स्म वेत्यर्थः । परमा-त्मानं दध्याविति तात्पर्यम् । कीदृक्सन् । कालं कृतान्त-मधिकुर्वाणः पूर्वोक्तधर्मध्यानेनाभिभवंस्तेनापराजीयमानो वा शक्तो-ऽशक्तो वा तमुपेक्षमाणो वेत्यर्थः । तथा सुहृज्जने वदमान इन्द्रियो-पघाताभावेन सम्यग्ज्ञानाच्छोकापनोदायानाकुलसंबोधनाच्च विक-सितमुखत्वाद्दीप्यमानो वदन्[२]वा वदन्दीप्यमानो वा दीप्यमान एव वेत्यर्थः । तथा तत्त्वेषु परमात्मोक्तेषु[३] पदार्थेषु वदमानश्च ज्ञात्वा वदन् वदितुं जानन्[४]वा वदन्सन् जानन्वा जानन्नेव वेत्यर्थः ॥

कार्ये विवदमानान्स उपावदत मन्त्रिणः ।
उपावदत सेनान्यमथात्मानमसाधयत् ॥ ४८ ॥

४८. कार्ये सैन्यव्याघोटनादौ राजकृत्ये विवदमानान्मिथ एकसंमत्य-भावेन विमतिपूर्वकं विचित्रं[५] भाषमाणान्विविधं मन्यमानान्वा मन्त्रिणः स वल्लभ उपावदत युष्माकं कुलक्रमागतानां मन्त्रिणामधुनैवं नाना-मतिकरणं न युक्तमित्युपसान्त्वयामास । इयन्तं कालं मया मत्पूर्वजैश्च यद्यूयं सर्वर्द्धा पोषितास्तत्किमधुना विमतिकरणेन राज्यक्षयार्थमित्यु-पालभत[६] वेत्यर्थः । तथा सेनान्यं सेनापतिमुपावदत यदि त्वं मम स्वामिन उपकारान्स्मरसि तदा त्वया मदीयमृत्युं कुत्राप्यज्ञापयतेदं सैन्यं शीघ्रमणहिलपुरे नेयमियद्गजाश्वधनादि मया तुभ्यं प्रसादाद्दत्तमिति रहस्युपालोभयत् । अथानन्तरमात्मानमसाधयत् पण्डितमरणेन दिवं गत इत्यर्थः ॥

कालमधिकुर्वाणः । अत्र "अधेः°" [७७] इत्यादिनात्मने ॥

---

१ बी सी डी ई °विस्कृत°. २ ई °दन्दी°. ३ प °पु व°. ४ ई °न्वा जानन्ने°. ५ इ. विविध भा°. ६ सी डी °भदिस°.

वदमानः सुहृज्जने । तत्त्वेषु वदमानः । परमात्मन्यवदिष्ट । कार्ये विवदमानान् । उपावदत मन्त्रिणः । उपावदत सेनान्यम् । अत्र "दीप्तिज्ञान°" [७८] इत्यादिना दीप्त्यादिषु क्रमेणात्मने ॥

सैन्यैः प्रवदमानैर्हा धिगित्याशु शुकैरिव ।
सेनानीरुल्ललङ्घेथाटवीं संप्रवदच्छुकाम् ॥ ४९ ॥

४९. अथ सैन्यैः सह सेनानीराश्वटवीमुल्ललङ्घे । किंभूतैः । शोकेन विलापित्वाद् हा धिगिति प्रवदमानैः । कैरिव शुकैरिव । सहोपमेयम् । सैन्यशोकाक्रन्दश्रवणेन शोकाक्रान्तत्वाद् हा धिगिति प्रवदमानैः शुकैः सहेत्यर्थः । अत एव किंभूतामटवीं संप्रवदच्छुकां संभूयविलपच्छुकाम् । एतेन वल्लभविरहे पक्षिणामपि शोक उक्तः ॥

सैन्यैः प्रवदमानैः । इत्यत्र "व्यक्त°" [७९] इत्यादिनात्मने ॥ व्यक्तवाचामिति किम् । संप्रवदच्छुकाम् ॥ शुकसारिकादीनामपि[3] व्यक्त[4]वाक्त्वात्सहोक्ताविच्छन्त्यन्ये । प्रवदमानैः शुकैः ॥

विप्रावदन्त नामात्या अन्ये विप्रावदन्न वा ।
मिथोनुवदमानास्तु सेनान्योन्ववदन्वचः ॥ ५० ॥

५०. वल्लभेनोपसान्त्वितत्वादुपालब्धत्वाच्चामात्या न विप्रावदन्त मिथो वचो निषेधेन युगपद्विरुद्धं नोचुरित्यर्थः । एवं न वा न चान्ये नृपसासन्तादयो विप्रावदन् । तुर्विशेषे । किं तु सेनान्यो दण्डनेतुर्वचोमात्या अन्ये चान्ववदन् सेनान्या पूर्वमुक्ते पश्चादवदन् । प्रमाणीचक्रुरित्यर्थः । किंभूताः सन्तः । मिथोनुवदमाना मिथ एकसांमत्येन यथैके वदन्ति तथापरे व[6]दन्त एकैः पूर्वमुक्तेपरे पश्चाद्वदन्तो वेत्यर्थः ॥

---

१ ए °काक्रा°. २ सी डी °व च किं°. ३ ए °दीनां व्य°. ४ ई °क्तत्वात्स°. ५ ए °वान्ये°. ६ सी डी °दन्ति । प°.

विप्रावदन्त। विप्रावदन्। इत्यत्र "विवादे वा" [८०] इति वात्मने॥ मिथोनुवदमानाः। अत्र "अनोः°" [८१] इत्यादिनात्मने॥ कर्मण्यसतीति किम्। वचोन्ववदन्॥

राजपुत्रस्य जानानोपतस्थे जनतोन्मुखी।
संगच्छमाना संपृच्छमाना संशुश्रुवे तथा॥ ५१॥

५१. जनता ग्रामादिजनौघ उन्मुखी सैन्यसंमुखोपतस्थे डुढौके। यतो राजपुत्रस्य वल्लभस्य जानाना राजपुत्रेण कृत्वा प्रवर्तमाना राजपुत्रे रक्ता सेनान्यमपि राजपुत्रतयाध्यवस्यन्तीवेत्यर्थः। ततश्च तथा संशुश्रुवे यथा वृत्तमाकर्णितवती। यतः संगच्छमाना सैन्यैः सह मिलन्ती संपृच्छमाना सैन्यान्प्रश्नयन्ती च॥

संविदानां तथा संस्वरमाणां विनिवार्य ताम्।
सैन्या धैर्ये समिथ्राणाः समृच्छन्ते स्म पत्तने॥ ५२॥

५२. तथा कुमारस्य तं मृत्युप्रकारं संविदानां जानतीमत एव संस्वरमाणां शोकेन विलपन्तीं तां जनतां विनिवार्य सैन्याः पत्तने समृच्छन्ते स्म प्राप्ताः। ऋच्छेरर्तेर्वा रूपमिदम्। किंभूताः सन्तः। धैर्ये समियाणाः संगच्छमानाः॥

राज्ञि संपश्यमानेथ शोकपूर्णा विचक्रिरे।
ते स्वरानविकुर्वाणा धैर्यात्तत्सर्वमूचिरे॥ ५३॥

५३. अथ राज्ञि चामुण्डराजे संपश्यमाने सैन्याभिमुखं पश्यति ते सैन्याः शोकपूर्णाः सन्तो विचक्रिरे। आक्रन्दनादिकचेष्टाभिर्निष्फलमचेष्टन्तेत्यर्थः। ततश्च धैर्याच्चित्तावष्टम्भमाश्रित्य स्वरानविकुर्वाणा नानाविधान् शब्दानकुर्वाणास्तद्यथावृत्तं सर्वमूचिरे॥

१ ए °था शु°.

न स्वरं व्यकरोद्राजाघ्नानयायच्छमानया ।
शुचा नायच्छते स्मांह्री नाहते स्म शिरोपि च ॥ ५४ ॥

५४. आयच्छमानया दीर्घीभवन्त्या अत एवाघ्नानया पीडयन्त्या शुचा शोकेन हेतुना राजा न स्वरं व्यकरोद्विनाशितवान्[1] । महापुरुषत्वाच्छोकेन न घर्घरस्वरोभूदित्यर्थः । तथांह्री नायच्छते स्म[2] न विसंस्थुलं प्रसारितवान्नापि च शिर आहते स्म ॥

राजपुत्रस्य जानाना । इत्यत्र "ज्ञः" [८२] इत्यात्मने । "अज्ञाने ज्ञः षष्ठी" [२ २.८०] इति षष्ठी ॥

उपतस्थे । अत्र "उपात्स्थः" [८३] इत्यात्मने ॥

समगच्छमाना । समृच्छन्ते । संपृच्छमाना । संशुश्रुवे । संविदानाम् । सस्वरमाणाम् । अर्तीति सामान्यनिर्देशाद्भ्वादिरदादिश्च गृह्यते । समृच्छन्ते । समिघ्राणा । संपश्यमाने । अत्र "समो गम्°" [८४] इत्यादिनात्मने ॥

शोकपूर्णास्ते विचक्रिरे । स्वरानविकुर्वाणाः । अत्र "वेः°" [८५] इत्यादिनात्मने ॥ अनाश इति किम् । स्वरं व्यकरोत् ॥

आयच्छमानया । आघ्नानया[3] । स्वेङ्गे च कर्मणि । आयच्छते स्मांह्री । आहते स्म शिरः । अत्र "आङो यम°" [८६] इत्यादिनात्मने ॥

शुचा वितपमानाग्नितुल्ययोत्तपमानया ।
उत्तेपेङ्गं नृपोन्ये वा के नाङ्गानि वितेपिरे ॥ ५५ ॥

५५. उत्तपमानयातितीव्रत्वेन प्रज्वलन्त्यात एव वितपमानो जा-

---

[1] सी डी °नाशत°. [2] ए स वि°. [3] सी. °या । स्वाङ्गे°.

ज्वल्यमानो योग्निस्तेन तुल्यया शुचा कृत्वा नृपश्चामुण्डराजोङ्गमुत्तेपे संतापितवान् । वा यद्वा । युक्तमेवैतत् । यतः केन्ये शुचाङ्गानि न वितेपिरेपि तु सर्वे सगरादयः पूर्वे महात्मानोपि पुत्रशोकेनाङ्गानि संतापितवन्त इत्यर्थः ॥

वितपमानाग्निः । उत्तपमानया । स्वेङ्गे कर्मणि । अङ्गानि वितेपिरे । अङ्गमुत्तेपे। अत्र "ग्युदस्तपः" [८७] इत्यात्मने ॥

राजा दर्शयते[1] स्मर्षींस्तीर्थमस्मरयच्च तम् ।
स कलिं गर्धयांचक्रे नावञ्चयत तं कलिः ॥ ५६ ॥

५६. राजा ऋषीन्धर्मोपदेशेन[3] शोकापनोदायागतान्मुनीन्दर्शयते[4] स्म पश्यन्ति स्म राजानमृषयस्तान्संमुखालोकनाभ्युत्थानधर्मशुश्रूषाद्यनुकूलाचरणेन राजैव प्रयुङ्क्ते स्म । तथा मुनिभ्यो धर्मश्रवणोद्भूतभववैराग्यतस्तं राजानं तीर्थं पुण्यक्षेत्रमस्मरयच्च तीर्थं स्मरति स्म स तं स्मरन्तं तीर्थमेवै महाप्रभावत्वाद्यनुकूलाचरणेन प्रयुङ्क्ते स्मात्मसाधनार्थं प्रत्यक्षदृश्यमानप्रभावं शुक्लतीर्थं राजा सस्मारेत्यर्थः । अत एव स राजा कलिं कलिकालं गर्धयांचक्र एवं धर्माभिलापणाव-ञ्चयत । तथा त नृपं कलिर्नावञ्चयत तदोद्भूतधर्माभिलापाच्याव-नेन न प्रतारितवान् । प्रवर्धमानधर्मपरिणामोभूदित्यर्थः ॥

राजा दर्शयते[9] स्मर्षीन् । इत्यत्र "अणिकर्मे णि" [८८] इत्यादिनात्मने ॥
अस्मृताविति किम् । तीर्थमस्मरयत्तम् ॥

कलिं गर्धयांचक्रे । तं नावञ्चयत । इत्यत्र "प्रलम्भे" [८९] इत्यादिनात्मने ॥

---

१ ए सी °ते स्मार्षी°.

---

१ ए सग°. २ ए °या । स्वाङ्गक°. सी डी °या । स्वाङ्गे. ३ बी °पनोदेन. ४ ई °देशशो°. ५ ए °व प्र°. ६ ए °ववत्वा°. ७ ए °ञ्चत°. ८ ई °लापोत्पादनेन. ९ ए सी °ते स्मार्षीन्.

द्विषोपलापयमानं स राज्ये न्यस्य दुर्लभम् ।
तपसा लापयांचक्रे नोदलापयत स्वमु ॥ ५७ ॥

५७. उ इति चामुण्डराजीयमहावदात[1]श्रवणाय लोकानामभिमुखीकरणे । अहो लोकाः स राजा द्विषोपलापयमानमभिभवन्तं दुर्लभं दुर्लभराजं राज्ये न्यस्य तपसानशनेन लापयांचक्रे परैरात्मानमपूजयत् । अत एव स्वमात्मानं नोदलापयत नावञ्चयत ॥

तेन स्मालाप्यते विस्मापयमानैस्तपोगुणैः ।
विस्मापनकृता शुक्लतीर्थे गत्वाधिनर्मदम् ॥ ५८ ॥

५८. अधिनर्मदं नर्मदानद्यां शुक्लतीर्थे तिलादिकृष्णवस्तुन इवात्मनोपि पापमलक्षालनेन नैर्मल्यहेतुत्वाच्छुक्लं यत्तीर्थं तस्मिन् गत्वा तेन चामुण्डराजेनालाप्यते स्म परैरात्मा पूज्यते स्म । यतो विस्मापयमानैरतितीव्रत्वेन लोकं विस्मयमानं प्रयुञ्जानैस्तपोगुणैर्निस्पृहतादिभिः कृत्वा विस्मापनकृताश्चर्यकारिणा । नर्मदायां शुक्लतीर्थे तपोभिरात्मानं साधितवानिति तात्पर्यार्थः ॥

तपसा लापयांचक्रे । द्विषोपलापयमानम् । स्वं नोदलापयत । इत्यत्र "लीङ्लिनोः(र्नः)°" [९०] इत्यादिनात्मन आच्चान्तस्याकर्तर्यपि ॥ अकर्तर्यपीति किम् । तपोगुणैस्तेनालाप्यते ॥

विस्मापयमानैः । अत्र "स्मिङः°" [९१] इत्यादिनात्मन आच्चान्तस्याकर्तर्यपि ॥ अकर्तर्यपीत्येव । विस्मापन ॥

अभीषयत निर्भीषानप्यरीनथ दुर्लभः ।
यद्भापनभुजः शक्रमप्यभापयतोच्चकैः ॥ ५९ ॥

---

१ ए इ °तश्राव°. २ सी डी °स्पृहिता°.

५९. अथ चामुण्डराजेस्यात्मसाधनानन्तरं दुर्लभो निर्भीषानपि निर्भयानप्यरीनभीषयत भीतवतः प्रयुक्तवान् । यद्यस्मात्स उच्चैः शक्रमप्यभापयत । यतो भाप्यत आभ्यां भापनौ भुजौ यस्य सः ॥

अभीषयत । इत्यत्र "बिभेतेर्भीष्च" [९२] इत्यात्मने । अस्य च भीषादेशः ॥ पक्षे । अभापयत । इत्यत्रान्तस्याचाकर्तर्यपि । यद्यप्यत्र परमार्थतो भापनभुजाभ्यां कृत्वा भय तथाप्यवयवावयविनोरभेदेन भुजावपि दुर्लभ एवेति प्रयोक्तुरेव स्वार्थ इत्यात्वं स्यात् ॥ अकर्तर्यपीत्येव । निर्भीषान् । भापन । अत्र न करणाद्भयं किं तु करणाद्भापनमिति प्रयोक्तुः स्वार्थ एवाकर्तर्यप्याकारः ॥

मिथ्याकारयमाणास्य कीर्तिः कृष्णं हिमोज्ज्वला ।
पर्यमोहयतात्यन्तमायासयत च श्रियम् ॥ ६० ॥

६०. अस्य दुर्लभस्य हिमोज्ज्वला कीर्तिः श्रियं कृष्णभार्यामत्यन्तं पर्यमोहयत कृष्णस्यानुपलक्ष्यत्वेन व्यपगमाद्याशङ्कया परिमुह्यन्तीं मूर्च्छन्तीं प्रायुङ्क्तात्यन्तमायासयताखेदयच्च । यतः कृष्णवर्णत्वात्कृष्णं विष्णुं मिथ्याकारयमाणा कृष्णं मिथ्या कूटं करोत्युच्चारयति लोकस्तं प्रयुञ्जाना कृष्णवर्णापह्नवाल्लोकेन कृष्णमन्वर्थाभावरूपदोषदुष्टमसकृत्पाठयन्तीत्यर्थः । अत्र च व्याख्यानेर्थाल्लोकेनेति ज्ञेयम् । यद्वा । कीर्तिः कृष्णं कृष्णवर्णापह्नवेन मिथ्या कूटं करोति विदधाति प्रयोक्तैवं विवक्षते नेयं कृष्णं मिथ्याकरोति किं तु कृष्णः स्वयमेव मिथ्याक्रियते मिथ्याभवति तं कीर्तिः प्रयुञ्जाना । एवं विवक्षायां णिगि सत्यपि मिथ्याकारयमाणासकृन्मिथ्याकुर्वतीत्यर्थः । तात्पर्येण कृष्णं श्वेतयन्ती ॥

---

१ सी डी °जस्य चात्म°. २ ए सी °र्भीष्वा" इ°. ३ सी डी °ष्णत्वस्या°. ४ बी °लक्षत्वे°. ५ ई. °यं मि°. ६ डी कुर्वन्तीत्य°.

स आयामयमानो वादयमानोर्थिनः किल।
मधून्यधापयत किं किमपाययतामृतम् ॥ ६१ ॥

६१. स दुर्लभः। किलेति सत्ये। अर्थिनो याचकान्कि मधून्यधापयत पाययामास किममृतं सुधामपाययत। कीदृक्सन्। अर्थिन आयामयमानः। पूर्ववत्कर्मकर्तृविवक्षयाकर्मकाद्धातोर्णिगि महादानेन वर्धयंस्तथा वादयमानः प्रियमालपन् ॥

कूर्मं दमयमानां गामवासयत दोष्णयसौ।
प्रतापेनादयांचक्रे द्विषः खड्गेन चादयत् ॥ ६२ ॥

६२. असौ दुर्लभः प्रतापेन कर्त्रा द्विषो दैत्याद्यन्यायिशत्रूनादयांचक्रे खड्गेन च कर्त्रा द्विष आदयत्। कानपि द्विषः प्रतापेनैव क्षयं नीतवान्कानपि युद्धेनेत्यर्थः। अत एव कूर्मं कमठरूपिणं विष्णुं दमयमानां गुरुत्वात्खेदयन्तीं गां पृथ्वीं दोष्णि भुजादण्डेवासयैत स्थापितवान्। सर्वशत्रूच्छेदेनाखिलपृथ्वीं स्ववशीचकारेत्यर्थः ॥

लोकं रोचयमानोसौ नानर्तयत कं मुदा।
चक्रे धर्मं सुरानीजे व्यधत्तायतनानि च ॥ ६३ ॥

६३. असौ दुर्लभो धर्मं दानादिकं चक्रे। तथा सुरानर्हदादिदेवानीजे पूजितवानायतनानि प्रासादान् व्यधत्त च कारितवांश्च। अत एव लोकं रोचयमानः प्रीणयन् कं मुदा हर्षेण नानर्तयत ॥

स साधूनयजत्तत्त्वं जानानस्तत्प्रजानतः।
अपावदिष्ट चैकान्तं समयच्छत शुद्धताम् ॥ ६४ ॥

---

१ बी °वक्षाया°. २ प °मेद्धा°. ३ ई °र्त्रा दै°. ४ प °य स्था°.

६४. स दुर्लभो वसतिमार्गप्रकाशकसुगृहीतनामधेयश्रीजिनेश्वरसूरिभिर्जैनधर्मे प्रतिबोधितत्वात्तत्त्वम् । जातावेकवचनम् । जीवाजीवपुण्यपापाश्रवसंवरनिर्जराबन्धमोक्षाख्यानि नव तत्त्वानि जानानो यथावस्थितान्यवबुध्यमानः संस्तत्तत्त्वं प्रजानतः साधूर्न्जैनमुनीनयजत्सत्कारसन्मानदानादिनार्चितवान् । अत एवैकान्तमेकान्तवादं बौद्धादिसिद्धान्तपावदिष्टानेकान्तवादित्वान्निराकार्षीत् । अत एव च शुद्धतां पापमलापनोदेन निर्मलतां समयच्छतात्मना सह संबद्धीचक्रे ॥

आयुरायच्छमाना उद्यच्छमानाः श्रियं नृपाः ।
अस्योदेमुः कथां स्वं हि नात्मानं पर्यमोहयन् ॥ ६५ ॥

६५. नृपा अस्य दुर्लभस्य कथामवदातवर्णनाग्रन्थमुदेमुः कथाग्रन्थ उद्यमं चक्रुरित्यर्थः । यत आयुरायच्छमाना दुर्लभावर्जनया जीवितव्य दीर्घीकुर्वन्तः । तथा श्रियमुद्यच्छमाना राज्यलक्ष्मीविषयमुद्यमं कुर्वन्तो जीवितव्यं च श्रियं च वाञ्छन्त इत्यर्थः । अत एव स्वमात्मीयमात्मानं हि स्फुटं न पर्यमोहयन्न विचेतनीचक्रुरात्मानमजानन्नित्यर्थः । यद्वा । सर्वस्वापहाराद्युत्थाधिव्याधिपीडाया अभावेन न मूर्छयामासुः ॥

परिमोहयमानः स्वान् द्विषोग्रे दोष्मतां भवन् ।
राज्ञाह्वायि महेन्द्रेण स्वसुः सोथ स्वयंवरे ॥ ६६ ॥

६६. अथ स दुर्लभः स्वसुः स्वयंवरे महेन्द्रेण राज्ञा मरुदेशेशेनाह्वाय्याकारितः । कीदृक् । दोष्मतामग्रे धुरि भवन्वर्तमानोत एव स्वान्द्विषः परिमोहयमानस्तीव्रप्रहारादिपीडया मूर्छयन् ॥

---

१ सी °शसु°. २ सी °भिर्जिन°. ३ सी °जीव°. ४ सी °न् जिन°. ५ बी सी डी ई °न्माना°. ६ सी डी °या दी°. ७ बी सी डी ई °व्य श्रि°.

कृष्णं मिथ्याकारयमाणा । इत्यत्र "मिथ्या°" [९३] इत्यादिनात्मने ॥

पर्यमोहयत श्रियम् । आयामयमानोर्थिनः । आयासयत श्रियम् । अपाययतामृतम् । अधापयत मधूनि । वादयमानोर्थिनः । अवासयत गाम् । कूर्मं दमयमानाम् । प्रतापेनादयांचक्रे । लोक[1] रोचयमानः । कं नानर्तयत । इत्यत्र "परिमुहा°" [९४] इत्यादिनात्मने ॥ अदेर्नेच्छन्त्येके । खड्गेनादयत् ॥

ईजे । चक्रे । अत्र "ईंगितः" [९५] इत्यात्मने ॥ फलवतीत्येव । साधूनयजत् । केचित्त्वीगितो धातोर्णिगर्थं एव प्रेषणाध्येषणविशेषे[2] प्रतिविधाननाम्नि वर्तमानादात्मनेपदमिच्छन्ति । व्यधत्त । व्यधापयतेत्यर्थः ॥

तत्त्वं जानानः । अत्र "ज्ञोनुपसर्गात्" [९६] इत्यात्मने[3] ॥ अनुपसर्गादिति किम् । तत्प्रजानतः ॥

एकान्तमपावदिष्ट । इत्यत्र "वदोपात्" [९७] इत्यात्मने ॥

समयच्छत शुद्धताम् । श्रियमुद्यच्छमानाः । आयुरायच्छमानाः । अत्र "समुद्°" [९८] इत्यादिनात्मने ॥ अग्रन्थ इति किम् । कथामुद्येमुः ॥

स्वान् द्विषः परिमोहयमानः । स्वमात्मानं पर्यमोहयन् । इत्यत्र "पदान्तरगम्ये वा" [९९] इति वात्मने ॥

भवन् । इत्यत्र "शेषात्परस्मै" [१००] इति परस्मैपदम् ॥

प्रास्थितेन्द्रं पराकुर्वन्ननुकुर्वन्स पूर्वजान् ।
सानुजोतिक्षिपन्सेनां तद्धूल्यार्कं प्रतिक्षिपन् ॥ ६७ ॥

६७. स दुर्लभः सानुजो नागराजसहितः प्रास्थित । कीदृक्सन् । सेनामतिक्षिपन् । गमनायात्यन्तं प्रेरयन्नत एवातिबाहुल्याच्च तद्धूल्या सेनारेणुनार्कं प्रतिक्षिपन्नाच्छादयन्नित्यर्थः । तथेन्द्रं पराकुर्वन्महर्द्ध्या न्यक्कुर्वन्नत एव पूर्वजान्मूलराजादीननुकुर्वन्[4] ॥

१ ए लोकान्तरो°. २ सी डी °विशेषणप्र°. ३ ए °नेपदम् । उप°. ४ ए °र्वतन्न°.

अभिक्षिपन्तो हस्ताग्रं गन्धेभाः प्रवहन्मदाः ।
सैन्येस्यापरिमृष्यन्तोन्योन्यं पर्यवहन्पृथक् ॥ ६८ ॥

६८. अस्य दुर्लभस्य सैन्ये गन्धेभा गन्धप्रधाना गजा हस्ताग्रं शुण्डाग्रभागमभिक्षिपन्त इतस्ततोभिमतं प्रेरयन्तः सन्तः पृथग्भिन्नाः पर्यवहन्समन्ताज्जग्मुः । यतोन्योन्यमपरिमृष्यन्तोसहमानाः। एतदपि कुत इत्याह । यतः प्रवहन्मदाः ॥

पराकुर्वन् । अनुकुर्वन् । इत्यत्र "परा°" [१०१] इत्यादिना परस्मै ॥

प्रतिक्षिपन् । अभिक्षिपन्तः । अतिक्षिपन् । इत्यत्र "प्रत्यभि°" [१०२] इत्यादिना परस्मै ॥

प्रवहत् । इत्यत्र "प्राद्वहः" [१०३] इति परस्मै ॥

परिमृष्यन्तः । पर्यवहन् । इत्यत्र "परेर्मृषश्च" [१०४] इति परस्मै ॥

ययावविरमन्पथ्यारमद्भिर्नर्मबन्धुभिः ।
समं परिरमन्नन्योदन्तादुपरमन्नयम् ॥ ६९ ॥

६९. अयं दुर्लभः पथि ययौ । कीदृक्सन् । अविरमन्ननवरतं गच्छंस्तथारमद्भिः क्रीडद्भिर्नर्मबन्धुभिर्नर्मसचिवैः समं परिरमन्परिखेलंस्तथान्योदन्तात्स्वयंवरनायिकोदन्तादन्यस्या वार्ताया उपरमन्निवर्तमानः स्वयंवरकन्यकोदन्तमेव कुर्वन् ॥

कापि सोश्वमुपारंस्तेभेनारोहयत क्वचित् ।
काप्यासयन् रथे मित्राण्यकारयत सत्कथाः ॥ ७० ॥

१ ए °न्येस्य प°.

१ ए प्राद्वह°. २ ए परिय°. ३ ई °र्मस°. ४ बी डी °नायको°.

७०. स दुर्लभः क्वापि कस्मिन्नपि स्थानेऽश्वमुपारंस्त । अत्र रमिरन्तर्भूतण्यर्थः सकर्मकः प्राह्युपसर्जनो वा सकर्मकः । आरुह्य गतिपञ्चकेनाखेलयत् । कचिच्चेभेन कर्त्रारोहयत । आरोहदिभं सः । न्यग्भवन्तं न्यगभावयत् । स एवं विवक्षितवान् । नाहमारोहं किं तु स्वयमेवारुह्यतेभः स्वयमेव न्यगभूदित्यर्थः । ततः स्वयमेवं वारूढं न्यग्भूतं स प्रायुङ्क्त णिग् । "वाकर्मणाम्°" [ २.२.४] इत्यादिना कर्तुर्वा कर्मत्वात् । इभेनेभं वा स आरोहयत्पुनः । स एवं विवक्षितवान्नाहमारोहयं किं त्विभः स्वयमेवारोहयत न्यगभूदित्यर्थ इति पश्चैम्यवस्थानन्तरं पुनरपि स्वयमेवारोहयमाणमिभं स प्रायुङ्क्त । पुनर्णिग् । न्यगभावयदित्यर्थः । क्वापि कस्मिंश्च प्रदेशे मित्राणि रथ आसयन्नुपवेशयन्सन्सत्कथाः साश्चर्याणि पूर्वपुरुषावदातवर्णनान्यकारयत ॥

स्वेदं शोषयमाणो भूचलयन्वीरुधस्तदा ।
पताकाः कम्पयन्वायुर्मुदे मध्विव भोजयन् ॥ ७१ ॥

७१. तदा दुर्लभस्य गमनकाले वायुर्मुदेऽभूत् । कीदृक्सन् । स्वेदं श्रमसंतापोत्थं घर्मं शैत्याच्छोषयमाणस्तथा वीरुधो लताश्चलयन् । एतेन सौरभोक्तिः । तथा पताका रथादिस्था वैजयन्तीर्मृदुत्वात्कम्पयन्नतश्चात्यन्तं सुखहेतुत्वान्मधु भोजयन्निव । एतेनास्य कार्यसिद्धिसूचकं शुभशकुनमुक्तम् ॥

तस्याभ्युदस्थुर्नीवारानाशयन्तो मृगार्भकान् ।
बोधयन्तोऽध्यापयन्तो बटून् ग्रन्थान्वनर्षयः ॥ ७२ ॥

७२. वनर्षयस्तापसास्तस्य दुर्लभस्याभ्युदस्थुराश्रमगुरुत्वेनाभिमु-

---

१ डी °टून्‌नर्थान्व°.

---

१ सी डी °थेः प्रा°. २ ई °यन्स ए°. ३ सी °भेवा°. ४ बी ई °व चारू°. ५ सी डी °श्चमान°.

खमुत्थिताः। किंभूताः। कारुणिकत्वान्मृगार्भकान्नीवारानाशयन्तो भक्ष-यन्तस्तथा वटून् ग्रन्थानध्यापयन्तः पाठयन्तो बोधयन्तोर्थितोवगम-यन्तश्च ॥

धुरा धुरं योधयद्भिः प्रावयद्भिरनोपथम्।
द्रावयद्भिर्द्रुमूलानि स्नावयद्भिर्लता रसम् ॥ ७३ ॥
जनयद्भिः कलकलं नाशयद्भिः सरित्स्वपः।
अविच्छायद्बलैः सोथ पुरीं गोपायतो मरुम् ॥ ७४ ॥

७३, ७४. स दुर्लभो मरुं मरुदेशं गोपायतो रक्षतो नड्डलदेशा-धिपस्येत्यर्थः। महेन्द्रस्य पुरीं बलैः कृत्वाविच्छायद्ययौ। किंभूतैः। औत्सुक्येन युगपदनेकरथानां प्रेरणाद्धुरा सह धुरं योधयद्भिरा-स्फालयद्भिरत एवानः। जातावेकवचनम्। रथान्। न पथोपथं "पथः संख्याव्ययोत्तर" इति क्लीबता। तदपथममार्गं प्रावयद्भिः प्रा-पयद्भिरत एव द्रुमूलानि रसं द्रावयद्भिर्घर्षणेन क्षारयद्भिस्तथा लता वल्ली रसं स्नावयद्भिः पीलनेन क्षारयद्भिस्तथा कलकलं जनयद्भिस्तथा-तिप्राचुर्यात्सरित्स्वपो नाशयद्भिः ॥

सो[1]तिधूपायदर्कं तं पनायन्नुचितं व्यधात्।
लक्षस्य पणमानेषु पणायन्कोटिमुद्भटः ॥ ७५ ॥

७५. स महेन्द्र उचितं दुर्लभस्य योग्यं महाविस्[1]तराभिमुखगम-नदानसन्मानादि व्यधात्। कीदृक्सन्। उद्भट उदारोत एव लक्षस्य[2] पणमानेषु हस्त्यश्वालंकारादिप्राभृतदानेन यावता द्रम्मादि लक्षं स्या-

---

१ बी सोपि धू°.

---

१ बी ई °विस्तारा°. २ बी °क्षणस्य.

स्तावद्व्यवहरत्सु मैत्र्यादिना लक्षेणोपचैरत्स्वित्यर्थः । अर्थान्नृपेषु विषये कोटिं पणायन् कोट्या प्रत्युपचरान्नित्यर्थः । तथातिधूपायदर्कं प्रतापातिशयेन संतापयन्तं सूर्यमतिक्रान्तं दुर्लभं पनायैन्स्तुवन् ॥

अविरमन् । आरमद्भिः । परिरमन् । इत्यत्र "व्याङ्°" [१०५] इत्यादिना परस्मै ॥

उपरमन् उपारंस्त । इत्यत्र "वोपात्" [१०६] इति वा परस्मै ॥

आसयन्मित्राणि । इत्यत्र "अणिगि°" [१०७] इत्यादिना परस्मै ॥ अणिगीति किम् । स्वयमेवारोहयमाणमिभं प्रायुङ्क्त । इभेनारोहयत ॥ प्राणिकर्तृकेति किम् । शुष्यति स्वेदः । शोषयमाणः स्वेदं वायुः ॥ अनाप्यादिति किम् । सत्कथाः कुर्वन्ति मित्राणि प्रायुङ्क्ताकारयत सत्कथाः ॥

चल्यर्थे । चलयन् । कम्पयन् ॥ आहारार्थे । भोजयन् । आशयन्तः ॥ इङ् । अध्यापयन्तः ॥ बुध् । बोधयन्तः ॥ युध् । योधयद्भिः ॥ प्रु । प्रावयद्भिः ॥ द्रु । द्रावयद्भिः ॥ स्रु । स्रावयद्भिः ॥ नश् । नाशयद्भिः ॥ जन् । जनयद्भिः । इत्यत्र "चल्याहारा° [१०८] इत्यादिना परस्मै ॥

एकादशः पादः समर्थितः ॥

गोपायतः । धूपायत् । अविच्छायत् । पणायन् । पनायैन् । इत्यत्र "गुपौधूप°" [१] इत्यादिनायः ॥ व्यवहारार्थात्पणो नेच्छन्त्येके । पणमानेषु ॥

कन्यां कामयमानस्तामन्येद्युः प्राविशत्पुरीम् ।
ऋतीयमानः स्वर्गोप्ता सोथ गोपायिता भुवः ॥ ७६ ॥

७६. अथान्येद्युः स भुवो गोपायिता रक्षिता दुर्लभः पुरीं प्राविशत् । कीदृक्सन् । स्वर्गोप्त्रेन्द्रेण ऋतीयमानो महद्ध्या स्पर्धमानस्तथा

१ सी °णोपाच°. २ प °चयर°. ३ डी °यन्नुव°. ४ डी उपार°. ५ बी °यम् । इ°. ६ डी इ °त्पणेर्ने°.

तां रूपाद्यतिशयेन प्रसिद्धां कन्यां महेन्द्रस्वसारं कामयमानोभिलषन् ॥

दृष्ट्वा विच्छायितारं तं पर्णायितृपथे तदा ।
अनुविच्छित्र्यभूत्काचित्पणित्री नेष्टवस्तुनः ॥ ७७ ॥

७७. तदा पुरप्रवेशकाले काचिन्नायिका तद्रूपाक्षिप्तत्वादनुविच्छित्री दुर्लभस्य पश्चाद्यान्ती सतीष्टवस्तुनः पणित्री व्यवहर्त्री नाभूत् । किं कृत्वा । पर्णायितृपथे वणिक्पथे हट्टमार्गे विच्छायितारं गच्छन्तं तं दुर्लभं दृष्ट्वा ॥

पुरधूपायितुर्जेता धूपिता नः स्मरो ह्ययम् ।
इत्थमेनं पनायित्र्यां पनित्र्यासीन्न का तदा ॥ ७८ ॥

७८. एनं दुर्लभं पनायित्र्यां स्तुवत्यां सत्यामर्थात्कस्यां चित्कामिन्यां का कामिन्येनं पनित्री स्तोत्री नासीत् । कथं पनायित्र्यामित्याह । अयं प्रत्यक्षो दुर्लभो हि स्फुटं निश्चितं पुरधूपायितुस्त्रिपुरदाहकस्य हरस्य जेता स्मरोस्ति । यतः किंभूतः । नोस्माकं धूपिता रूपातिशयेनोत्कण्ठारणरणकादिविधानात्संतापकोस्माकं सन्तापकत्वादयं नूनं स्वारिं हरं जित्वा स्वमूर्तिधारी कामो वर्तत इत्यर्थ इत्थम् ॥

शचीकामयितुस्तुल्यं कमित्री कापि तं तदा ।
अन्वर्तितारं स्वं बालमृतीयित्र्यजुगुप्सत ॥ ७९ ॥

७९. तदा प्रवेशकाले काप्यन्वर्तितारमनुयान्तं स्वं बालमजुगुप्सत

---

१ सी डी °णायतृ°. २ डी °त्य कामि°.

---

१ ए °न्द्रदुहितर. २ सी डी °श्चाद्यन्ती°. ३ सी पणयित्री. ४ सी डी °णायतृ°. ५ बी सी डी ई °स्त दु°. ६ डी °स्य जे°. ७ डी °ता स्मा°. ८ सी हरिं जि°. ९ ई °त्वा मू°. १० डी °त्यर्थः ॥.

गतिविघ्नत्वादनिन्दत् । कीदृक्सती । शचीकामयितुरिन्द्रस्य सौन्दर्यादिसंपदा तुल्यं तं दुर्लभं[1] कमित्रीच्छन्ती । अत एव तमेव ऋतीयित्री[2] दर्शनाय गच्छन्ती ॥

अतितिक्षत न स्थानं विचिकित्सुः स्वजीविते ।
अचिकित्स्ये तदा कापि शीशांसति शरान्स्मरे ॥ ८० ॥

८०. तदाचिकित्स्ये[3] दुर्लभदर्शनेन प्रकर्षप्राप्तत्वात्प्रतिकर्तुमशक्ये स्मरे शरान् शीशांसत्युत्तेजयति सति कापि कामिनी स्वजीविते विचिकित्सुः संशयाना सती स्थानं नातितिक्षत स्थातुं नाशक्नोत् । दुर्लभदर्शनायानवरतं तेन सह[4] ययावित्यर्थः ॥

मीमांसमानां दीदांसमानां च तिलकं सखीम् ।
बीभत्समानां मेने काप्यस्य दर्शनविघ्नतः ॥ ८१ ॥

८१. कापि कामिन्यस्य दुर्लभस्य दर्शनविघ्नतो हेतोः सखीं बीभत्समानां विरूपां प्रतिकूलां मेने । कीदृशीं सतीम् । तिलकं मीमांसमानां भव्यमभव्यं वेति विचारयन्तीं दीदांसमानां च वक्रत्वापनयनेन ऋजूकुर्वतीं[5] च ॥

कामयमानः । अत्र "कमेर्णिङ्" [२] इति णिङ् ॥

ऋतीयमानः । अत्र "ऋतेर्ङीयः" [३] इति ङीयः ॥

गोपायिता गोप्ता । धूपायितुः धूपिता । विच्छायितारम् अनुविच्छित्री । पर्णायितृ[6] पणित्री । पनायिष्याम् पनित्री । कामयितुः कमित्री । ऋतीयित्री[7] अन्वार्तितारम् । अत्र "अशवि ते वा" [४] इति वायादयः ॥

---

१ डी °भ कामि°. २ ए बी °तीयत्री°. ३ सी डी °त्स्ये तदा दु°. ४ डी °ह सय°. ५ बी डी ई °कुर्वन्तीं च. ६ डी °णायत्. ७ बी °तीयत्री. सी °तीयती भ°. डी °तीयन्ती अ°.

अजुगुप्सत। अतितिक्षत। इत्यत्र "गुप्तिजः°" [५] इत्यादिना सन्॥

विचिकित्सुः। अचिकित्स्ये। अत्र "कित.°" [६] इत्यादिना सन्॥

शीशांसति। दीदांसमानाम्। मीमांसमानाम्। बीभत्समानाम्। अत्र "शान्दान्°" [७] इत्यादिना सन् दीर्घश्चैषां द्विर्वचने सति पूर्वेकारस्य॥

महीयमाना नारीषु कण्डूयन्ती मुधा श्रवः।
लालस्यमाना तमनु दोर्मूलं काप्यदर्शयत्॥ ८२॥

८२. कापि कामिनी तं दुर्लभमनुलक्ष्यीकृत्य मुधा निरर्थकं श्रवः कर्णं कण्डूयन्ती सती दोर्मूलं कक्षाधस्तनप्रदेशं संक्षोभना(णा?)र्थं दुर्लभमेवादर्शयत्। कीदृक्। लालस्यमानात्यर्थं सविलासा तथा नारीषु मध्ये महीयमाना सौन्दर्योत्कर्षेण पूजार्हा॥

भृशं पुनः पुनः कापि लसन्ती भृशमैक्षत।
भृशं चकासतं जाजाग्रीयमाणस्मरा नृपम्॥ ८३॥

८३. कापि कामिनी भृशं चकासतं शोभमानं नृपं दुर्लभं भृशमैक्षत। कीदृक्सती। जाजाग्रीयमाणस्मरात्यर्थमभीक्ष्णं वा जागरूककामात एव भृशमत्यर्थं लसन्ती विलसन्ती दुर्लभक्षोभना(णा?)य गमनादिविशेषं कुर्वतीत्यर्थः। तथा पुनः पुनर्लसन्ती च॥

काचिदंसात्पतद्दादरिद्र्यमाणोदरांशुकम्।
नावाव्यताटाट्यमानारार्यमाणैस्तदार्दिता॥ ८४॥

८४. तदा प्रवेशकाले काचिद्दादरिद्र्यमाणोदरातिकृशोदरी कामिन्यंसात्स्कन्धात्पतदंशुकं नावाव्यत भृशमभीक्ष्णं वा नारक्षत्। कीदृक्सती।

---

१ बी सी डी ई °क्षास्त°. २ सी डी °वं त शो°. ३ सी डी जागुरू°. ४ ई °ले दाद°. ५ सी डी °रा इति°.

अटाट्यमाना दुर्लभदिदृक्षया भृशं पुनः पुनर्वा यान्ती तथारार्यमाणै-रहमहमिकया दुर्लभदर्शनाय भृशं पुनः पुनर्वा गच्छद्भिर्लोकैरर्दिता संमर्देन पीडिता स्वकृशोदरस्तनदर्शनेन राज्ञो रागोत्पादनायोदरस्त-नपिधायकं वस्त्रं लोकसंमर्दवशात्पतन्नारक्षदित्यर्थः ॥

अशाश्यमानं मोमूत्र्यमाणं काप्युज्झितुं शिशुम् ।
असोसूत्र्यत सोसूच्यमाने तस्यागमोत्सवे ॥ ८५ ॥

८५. तस्य दुर्लभस्यागमोत्सवे सोसूच्यमाने नान्दीतूर्यनिर्घोषा-दिनाभीक्ष्णं भृशं वा ज्ञाप्यमाने दुर्लभदर्शनेत्युत्सुकत्वात्कापि शिशुमु-ज्झितुमसोसूत्र्यत प्रायतत । यतोशाश्यमानं भृशमभीक्ष्णं वा भुञ्जानं मोमूत्र्यमाणं भृशमभीक्ष्णं वा मूत्रयन्तम् ॥

दृशौ प्रोर्णोनूयमानां नीरङ्गीं काप्युदक्षिपत् ।
चङ्क्रम्यमाणा जङ्गम्यमानां चाग्रेभ्यतर्जयत् ॥ ८६ ॥

८६. कापि कुलाङ्गना दृशौ प्रोर्णोनूयमानां भृशमभीक्ष्ण वाच्छा-दयन्तीं नीरङ्गीं मुखाच्छादकवस्त्राञ्चलमुदक्षिपद्दुर्लभावलोकनविघ्न-त्वादूर्ध्वं चिक्षेप । तथा चङ्क्रम्यमाणा कुटिलं क्रामन्त्यग्रे पुरो जङ्गम्यमानां कुटिलं गच्छन्तीं स्त्रीमभ्यतर्जयच्च ॥

कण्डूयन्ती । महीयमाना । इत्यत्र " धातोः° " [ ८ ] इत्यादिना यक् ॥ लालस्यमाना । इत्यत्र " व्यञ्जनादेः°" [ ९ ] इत्यादिना यङ् ॥ पक्षे । भृशं पुनः पुनर्वा लसन्ती ॥ व्यञ्जनादेरिति किम् । भृशमैक्षत ॥ एकस्वरादिति

---

१ डी °मूत्रमा.

---

१ सी डी °र्दनव°. २ ए वी सी ई °त प्रयेते । य°.

किम् । भृशं चकासतम् ॥ केचिज्जागर्तेरिच्छन्ति । जाजाग्रीयमाण ॥ सर्वस्माद्धातो-रायादिप्रत्ययरहितात्केचिदिच्छन्ति[1] । आवाव्यत । दाःदरिद्र्यमाण ॥

अटाट्यमाना । अरार्यमाणैः । असोसूत्र्यत । मोमूत्र्यमाणम् । सोसूत्र्यमाने । अशाश्यमानम् । प्रोर्णोनूयमानाम् । अत्र "अस्यर्ति°" [१०] इत्यादिना यङ् ॥

चङ्क्रम्यमाणा । जङ्गम्यमानाम् । अत्र "गत्यर्थात्कुटिले" [ ११ ] इति यङ् ॥

दृशा जेगिल्यमानेव तं लावण्यसुधामयम् ।
सासद्यमाना कामेन काप्यलोलुप्यत त्रपाम् ॥ ८७ ॥

८७. कापि कामिनी त्रपामतिसानुरागदृष्टिपरपुरुषालोकोत्थल-ज्जासलोलुप्यतात्यन्तं विलोपाद्गर्हितं चिच्छेद । कीदृक्सती । कामेन [3]सासद्यमाना गर्हितं सद्यमाना निर्दयं पीड्यमानेत्यर्थः । अत एव लावण्यमेवाप्यायकत्वात्सुधा सा प्रकृता यत्र तं लावण्यसुधामयं केव-लसौन्दर्यघटितं तं दुर्लभं दृशा जेगिल्यमानेव सानुरागं निरन्तरं विलोकनाद्गर्हितं गिलन्तीव । यापि कामेन[4] भोजनाभिलाषेण सास-द्यमाना सती स्थूलैकवलाहारेण निजेगिल्यमाना स्यात्सापि "आहारे व्यवहारे च त्यक्तलज्ज[5]: सदा भवेत्" इति वचनाद्बहुभक्षणोत्थां त्रपां लुम्पति ॥

काप्यचञ्चूर्यताजञ्जभ्यताजञ्जप्यतापि च ।
दन्दश्यमाना दन्दह्यमाना नु तदवीक्षणे ॥ ८८ ॥

८८. कापि कामिन्यचञ्चूर्यत तद्दर्शनौत्सुक्येन स्वाभाविकलीला-गतित्यागेन शीघ्रगत्याश्रयणाद्गर्हितमगमत्[6] । अजञ्जभ्यत च कामो-

---

१ बी सी डी °न्ति । अवा°. २ बी सी डी °माणा ॥. ३ सासद्यमानेत्यारभ्य कामेनेत्यन्तो ग्रन्थांश ई सञ्ज्ञके पुस्तके न दृश्यते. ४ डी °लकेव°. ५ ए सी डी °लज्जा स°. ६ बी °मत ।.

ह्लासवशेन मोट्टायितस्योज्जृम्भितत्वाद्गर्हितमजभेत । जभेर्ङो रूपमिदम् । अत्यर्थं गात्रं मोटितवतीत्यर्थः । अजञ्जप्यतापि हा मया मन्दभाग्ययासौ विश्वनेत्रामृतं नेक्षित इत्यादिस्वगर्हणातिचिन्तया गर्हितमचिन्तयच्च । यतस्तदवीक्षणे दुर्लभस्यानालोके सति दन्दश्यमाना नु मर्शकादिभिर्गर्हितं भक्ष्यमाणेव । दन्दह्यमाना न्वग्निना गर्ह्यं दह्यमानेवात्यन्तमरतिमनुभवन्तीत्यर्थः । यापि हि दन्दश्यमाना दन्दह्यमाना वा स्यात्सापि कष्टभयेन पलायनाच्चञ्चूर्यतेङ्गस्यातिव्यथितत्वाज्जञ्जभ्यते च जञ्जप्यते च मनसा गर्ह्यं ध्यायति चेत्युक्तिः ।

जेगिल्यमाना । अलोलुप्यत । सासद्यमाना । अचञ्चूर्यत । अजञ्जप्यत । अजञ्जभ्यत । दन्दश्यमाना । दन्दह्यमाना । इत्यत्र " गृलुप°" [ १२ ] इत्यादिना यङ् ॥

स्त्रीर्भृशं शोभमानास्ताः क्षोभयन् गृणतीर्ब्रुवम् ।
अगाद्भृशं रोचमानः स स्वयंवरमण्डपम् ॥ ८९ ॥

८९. स दुर्लभः स्वयंवरमण्डपमगात् । कीदृक्सन् । भृशमत्यर्थं रोचमानो रूपवेषादिना शोभमानोत एव भृशं रूपवेषादिना शोभमानास्ताः पूर्वोक्ताः स्त्रीः क्षोभयन् । अत एव कीदृशीः । ब्रुवं गर्ह्यं हा दुर्लभ प्राणवल्लभात्मसंगमेनास्माकं प्राणांस्त्वद्विरहे निर्गच्छतो रक्ष रक्षेत्यादिपरपुरुषाभिलाषप्रकटकवाक्यैः कुलस्त्रीणामनुचितं यथा स्यादेवं गृणतीर्वदन्तीः ॥

---

१ बी स्त्री भृश. २ ए °ती ब्रुव°. ३ सी डी आगा°.

---

१ ए °सवासन°. २ ए डी °भत।. ३ सी डी °या स वि°. ४ सी °शक्यादि°. डी °शक्यादि°. ५ सी डी °ष्टभावेन. ६ वी च म°. ७ सी डी °पमागा°. ८ ए °दिना।°. ९ बी सी डी °णन्तीर्वे°.

भुवं गृणतीः । भृशं शोभमानाः । भृशं रोचमानः । अत्र "न गृणा°" [१३] इत्यादिना न यङ् ॥

तत्र बोभूयमानश्रीर्बोभुवच्छ्रीषु राजसु ।
कुर्वन्मण्डपपोपूर्यां सोध्यास्तोचितमासनम् ॥ ९० ॥

९०. स दुर्लभस्तत्र स्वयंवरमण्डप उचितं स्वयोग्यमासनमध्यास्त । कीदृक्सन् । बोभुवत्यरुचौ नवनवभङ्गीरचनया पुनः पुनर्भवन्ती श्रीर्वेषाभरणमण्डनादिकृता शोभा येषां तेषु राजसु मध्ये बोभूयमानोत्कृष्टीभवन्ती श्रीर्वेषादिसंपद्यस्य सोत एव मण्डपपोपूर्यां स्वयंवरमण्डपपावित्र्यं कुर्वन् ॥

बोभूयमान । बोभुवत् । इत्यत्र "बहुलं लुप्" [ १४ ] इति यङो बहुलं लुप् ॥ बहुलग्रहणं प्रयोगानुसरणार्थम् । तेन क्वचिन्न स्यात् । पोपूयाम् ॥

पोपुवैस्तैः स योयूयः क्ष्मापैर्वरणमण्डपः ।
नाटयन्निखिलार्कस्याचोरयन्नभसः श्रियम् ॥ ९१ ॥

९१. पोपुवैः सश्रीकत्वेन पवित्रकैस्तैः प्रसिद्धैः क्ष्मापैर्योयूयोत्यर्थं संयुक्तीभवन्सन्स प्रसिद्धो वरणमण्डपः स्वयंवरमण्डपो नभसः श्रियमचोरयत् । किंभूतस्य । नाटयन्तो विजृम्भमाणा निखिला द्वादशार्का यत्र तस्य द्वादशार्कभासुरादपि व्योम्नोनेकराजमार्तण्डैर्वरणमण्डपोत्यन्तं सश्रीकोभूदित्यर्थः ॥

पोपुवैः । अत्र "अचि" [ १५ ] इति यङो लुप् ॥

---

१ ए पोपवै°.

---

१ डी °मानाः ।. २ डी °भुवन्त्य°. ३ ए °रण म°. ४ ए बी डी °कृतशो°. ५ सी डी °ण्डपेपो°. ६ ए °न् ॥ भू°. ७ ए °ण्डप स्व°.

योयूयः। अत्र "नोतः" [ १६ ] इति[1] न यङो लुप्॥

अचोरयत्। नाटयत्। इत्यत्र "चुरादिभ्यो णिच्" [ १७ ] इति णिच्॥

नियोजयन्त्या वेत्रिण्याः संयोजन्ती करे करम्।
नाम्ना दुर्लभदेव्यागान्महेन्द्रस्य स्वसा ततः॥ ९२॥

९२. ततोनन्तरं नाम्ना दुर्लभदेवी महेन्द्रस्य स्वसा स्वयंवरमण्डपमागात्। किंभूता सती। नियोजयन्त्या राजन्यचक्रदर्शनार्थं प्रेरयन्त्या वेत्रिण्याः प्रतीहार्याः करे करं संयोजन्ती[2] संबध्नन्ती[3] हस्तिकां ददतीत्यर्थः॥

विलम्बं नासहन्भूपा नान्योदन्तमसाहयन्।
सदो भावयमानां तां वीक्ष्य क्षोभं बभूविरे॥ ९३॥

९३. सदः सभां भावयमानां प्राप्नुवतीं तां दुर्लभदेवीं वीक्ष्य नृपाः क्षोभं[4] बभूविरे प्रापुः। अत एव विलम्बं नासहन्। तत्प्राप्त्यौत्सुक्यात्कालक्षेपं न चक्षमुः। तथा तत्रैव गतचित्तत्वादन्योदन्तं दुर्लभदेव्या अन्यस्याः कामिन्या वार्तामपि नासाहयन्न सेहिरे॥

स्त्रीषु रत्नं बभूवैषा भवन्ती तादृशीं श्रियम्।
जीवयन्ती यतोनङ्गं किंकरत्वमकारयत्॥ ९४॥

९४. एषा दुर्लभदेवी स्त्रीषु नारीजातिमध्ये रत्नमुत्कृष्टा बभूव। यतो यस्माद्धेतोरेषानङ्गं किंकरत्वं स्वादेशकारितामकारयत्। कीदृ-

---

१ ए नन्व किं°.

---

१ डी °ति य°. २ ए °योज स°. बी °योजयन्ती. ३ सी डी °भ्रती ह°.
४ ए °भ विभू°.

क्सती । तादृशीमति[1]शायित्वेनानाख्येयां श्रियं रूपलावण्यादिशोभां भवन्ती प्राप्नुवेत्यत एवानङ्गं शंभुना दग्धाङ्गत्वादशरीरिणं कामं जीवयन्ती सर्वनृपेष्वस्योल्लासितत्वाज्जनयन्ती । यच्च तादृशीं श्रियं निरुपमां प्रभावलक्ष्मीं प्राप्नुवद्रत्नं चिन्तामण्यादि स्यात्तदेव 'अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः' इत्युक्तेरनङ्गं महारोगादिना गतप्रायशरीरं[3] नरं जीवयत्किंकरत्वं स्वसेवकतां कारयति ॥

यान्भिक्षावासयद्यानागमयद्भूपतिर्द्विजान् ।
उमामुद्वाहयन्तोत्र ते स्वात्येन्दुमयोजयन् ॥ ९५ ॥

९५. यान्द्विजान्भिक्षावासयत्प्राचुर्येण्यञ्जनवत्वादिनिमित्तभावेन वसतः प्रायुङ्क्त महाव्रतस्थत्वेन भिक्षावृत्तिं य उपाजीवन्नित्यर्थः । अत एव यान्भूपतिर्महेन्द्र आगमयद्द्विजानागच्छत आख्यानेन प्रायुङ्क्तातिपूज्यत्वादहो द्विजा आगताः सन्त्येषामासनादि दीयतामित्यात्मना यदागमनमाख्यदित्यर्थः । तेत्र स्वयंवरमण्डप उमां गौरीमुद्वाहयन्त उमामुद्वहन्तीमभिनयेन प्रयुञ्जाना विवाहप्रस्तावादुमोद्वाहमभिनयन्तः सन्त इत्यर्थः । स्वात्या स्वातिनक्षत्रेण सहेन्दुमयोजयन् स्वात्येन्दुं युञ्जानं ज्ञानेन प्रायुञ्जत । उद्वाहविषये श्रेष्ठोद्य स्वात्येन्दुयोगोस्तीत्यगणयन्नित्यर्थः ॥

स्वदेशात्प्रस्थिताः सूर्यं येत्रोदगमयन्नृपाः ।
तस्या द्वास्था वुवूर्षूंस्ताञ्शशंसेत्यजुगुप्सिषा ॥ ९६ ॥

९६. तान्वुवूर्षून्वरीतुमिच्छून्नृपांस्तस्या दुर्लभदेव्या द्वास्था प्रतीहारी नास्ति जुगुप्सिषा निन्दितुमिच्छा यस्याः सा प्रशंसितुकामा सतीति वक्ष्यमाणप्रकारेण शशंसास्तावीत् । ये नृपाः स्वदेशात्प्रस्थिता अत्र

१ बी °तिशयस्वे°. २ सी डी °वन्त्युत. ३ सी डी °र जी°. ४ ए यमाचु°. बी यन्प्राचु°. ५ सी °त्वादाहो. डी °त्वादाह द्वि°. ६ डी °आना ख°. ७ बी °न्दिनुमि°. ८ डी °सास्तवी°.

७१

मण्डपे सूर्यमुदगमयन्प्राप्योद्गच्छन्तं सूर्यं प्रायुञ्जत । ये स्वयंवरे शीघ्रमागता इत्यर्थः ॥

न युयुत्सितुमिच्छन्ति द्विषो यं जीवकाम्यया ।
जीवीयज्जीवदोङ्गेयमिदंकाम्यसि सुभ्रु किम् ॥ ९७ ॥

९७. जीवीयज्जीवदो जीवितव्येषिणां जीवितव्यदातायमङ्गोङ्गदेशाधिपोस्ति । यं जीवकाम्यया जीवितव्यवाञ्छया द्विपो युयुत्सितुं प्रजिहीर्षितुमपि नेच्छन्ति । तस्माद्धे सुभ्रु किमिदंकाम्यसीममङ्गमिच्छसि ॥

स्वःकाम्या न स्वरिच्छन्ति न किमिच्छन्ति चर्षयः ।
पुत्रीयन्तो यमस्मिन्किं काशिराजे पतीयसि ॥ ९८ ॥

९८. अस्मिन्काशिराजे काशिदेशाधिपे किं पतीयसि पत्याविवाचरसि । यं पुत्रीयन्तो धार्मिकत्वेन पुत्रवत्पालकत्वाद्विनयाद्युपचारकत्वाच्च पुत्रमिवाचरन्त ऋषयः स्वःकाम्या अपि । अपिरत्राध्याहार्यः । महाकष्टानुष्ठानासेवनेन स्वर्गेषिणोपि न स्वरिच्छन्ति परिपूर्यमाणसकलसमीहितार्थत्वेन सदा सुखितत्वान्न स्वर्गमिच्छन्ति । न किमिच्छन्ति च किमप्यपवर्गादिकमपि नेच्छन्ति ॥

मियोजयन्त्याः संयोजन्ती । असाहयन् असहन् । इत्यत्र "युजादेर्न वा" [ १८ ] इति वा णिच् ॥

भावयमानाम् बभूविरे । अत्र "भूङः प्राप्तौ णिङ्" [ १९ ] इति वा णिङ् ॥ भूङ इति ङकारनिर्देशो णिङभावेप्यात्मनेपदार्थः । प्राप्तेरन्यत्र बभूव । प्राप्तावपि परस्मैपदमित्यन्ये । श्रियं भवन्ती ॥

१ सी डी °न्तो जम°. २ डी कासिरा°.

१ डी °ङ्गोः सु°. २ सी डी °न्ति च.

प्रेषणेन प्रयोक्तृव्यापारे । अनङ्गं किंकरत्वमकारयत् ॥ अध्येषणेन । अनङ्गं जीवयन्ती ॥ निमित्तभावेन । यान्भिक्षावासयत् ॥ आख्यातेन । यानागमयत् ॥ अभिनयेन । उमामुद्वाहयन्तः ॥ ज्ञानेन । स्वात्मेन्दुमयोजयन् ॥ प्राप्त्या । स्वदेशात्प्रस्थिताः सूर्यं येत्रोदगमयन् । इत्यत्र "प्रयोक्तृ°" [२०] इत्यादिना णिग् ॥

बुबूर्षून् । इत्यत्र "तुमर्हाद्°" [२१] इत्यादिना सन् ॥ अतस्सन इति किम् । युयुत्सितुमिच्छन्ति ॥ तद्ग्रहणं किम् । अजुगुप्सिषा ॥

जीवकाम्यया । इदंकाम्यसि । स्वःकाम्याः । अत्र "द्वितीयायाः काम्यः" [२२] इति काम्यः ॥

जीवीयत् । इत्यत्र "अमा°" [२३] इत्यादिना क्यन् ॥ अमाव्ययादिति किम् । किमिच्छन्ति । स्वरिच्छन्ति ॥

यं पुत्रीयन्तः । काशिराजे पतीयसि । इत्यत्र "आधाराच्च°" [२४] इत्यादिना क्यन् ॥

ऐन्द्र्यामिन्द्रति यः शास्त्रे गल्भते न तु होडते ।
अक्लीबमानेवन्तीशे किमत्र त्वं शचीयसे ॥ ९९ ॥

९९. अक्लीबमाने क्लीववदनाचरति शूरेत्रावन्तीशे मालवाधिपे किं त्वं शचीयस इन्द्राणीवाचरसि । य ऐन्द्र्यां पूर्वस्यामिन्द्रतीशत्वेनेन्द्रवदाचरति । तथा यः शास्त्रे गल्भते[3] गल्भतेचि गल्भः प्रगल्भस्तद्वदाचरति । शास्त्राणि सम्यगवबुध्यत इत्यर्थः । न तु नैं पुनर्होडते होडते के होडो मूर्खस्तद्वदाचरति ॥

---

१ बी सी °ख्यानेन. २ डी °न्तिय । यं. ३ सी °तेचि°. ४ सी न होड°.

इन्द्रति । गल्भते । अक्लीबमाने । होडते । अत्र "कर्तुः क्विप्°" [२५] इत्यादिना क्विप् । गल्भक्लीबहोडेभ्यः पुनः स एव ङित् ॥

शचीयसे । अत्र "क्यङ्" [२६] इति क्यङ् ॥

यस्य वाचः पयायन्ते लावण्यं च पयस्यते ।
चैद्येप्सरायमाणा त्वं रन्तुमोजायसेत्र किम् ॥ १०० ॥

१००. अत्र चैद्ये चेदिदेशाधिपेप्सरायमाणा त्वं किं रन्तुमोजायस ओजस्विनीवाचरस्युग्रच्छसीत्यर्थः । यस्य वाचो माधुर्यात्पयायन्ते दुग्धवदाचरन्ति । लावण्यं च सौन्दर्यं च पयस्यते ॥

ओजस्यन्ते भृशायन्ते संश्वायन्ते चतुर्दिशम् ।
कीर्तयो यस्य तत्रास्मिन्कुरौ किं सुमनायसे ॥ १०१ ॥

१०१. तत्रास्मिन्कुरौ कुरुदेशेशे किं सुमनायसेसुमनाः सुमना भवस्यनुरज्यसीत्यर्थः । यस्य कीर्तय ओजस्यन्त ओजस्विन्य इवाचरन्त्यतिप्राचुर्येण प्रबलीभवन्तीत्यर्थः । तथा चतुर्दिशं व्यञ्जनान्तादपि केचिदापमिच्छन्ति तन्मते दिक्शब्दादपि । चतस्रो दिशा यत्र तद्यथा स्यादेव भृशायन्तेभृशा भृशा भवन्ति । चतुर्दिक्षु मङ्क्षु प्रसरन्तीत्यर्थ । तथा संश्वायन्ते संश्वत्कुहको विस्मापक इत्यर्थः । असंश्वतः संश्वतो भवन्ति प्रतिदिनं नवनवावदातेभ्य उद्भवेन सदा नवत्वाच्चतसृष्वपि दिक्ष्वाश्चर्यकारिण्यः स्युरित्यर्थः ॥

पयायन्ते पयस्यते । अत्र "सो वा लुक्च" [२७] इति क्यङन्त्यसस्य च लुग्वा ॥

ओजायसे । अप्सरायमाणा । इत्यत्र "ओजोप्सरसः" [२८] इति क्यङ् सलोपश्च ॥ अन्ये त्वोजःशब्दे सलोपविकल्पमिच्छन्ति । ओजायसे ओजस्यन्ते ॥

---

१ The ms. सी omits the part of the commentary from °र्ति in देशाधिपे to the verse biginning with ओजस्यन्ते. २ बी सी °रन्तिऽति. ३ सी °न्ति दि°.

भृशायन्ते। सुमनायन्ते। सश्रायन्ते। अत्र "च्व्यर्थे" [२९] इत्यादिना क्यङ् सतयोर्यथासम्भवं लोपश्च॥

लोहितायन्मुखांश्चर्मायतः पटपटायतः।
द्विषोकष्टायमानोहन्योमुं हूणं वृणोषि किम्॥ १०२॥

१०२. अमुं हूणं हूणदेशेशं किं वृणोषि। योकष्टायमानः कष्टाय पापकर्मणेक्षत्राचारयुद्धादिकायाक्रामन् क्षत्राचारेण युध्यमानः सन्नित्यर्थः। द्विषोहन् जघान। किंभूतान्सतः। चर्मायतश्चर्मणः स्वतन्त्रार्थवृत्त्या प्रकृतिविकारभावाप्रतीतेश्च्व्यर्थो नास्तीति तद्वृत्तेः प्रत्यय इति। अचर्मवतश्चर्मवतो भवतः प्रहाररक्षार्थं सखेटकीभवतोत एव पटपटायतः पटच्छब्दोप्यत्र तद्वति वर्तते। स्फरिकास्फालनोत्थपटच्छब्देनापटत्वतः पटत्वतो भवतः। युद्धोद्यतानित्यर्थः। अत एव च लोहितायन्त्यतिकोपादलोहितानि लोहितानि भवन्ति मुखानि येषां तान्॥

न यः कक्षायते कोपाल्लोभात्कृच्छ्रायते न च।
नापि सत्रायते कामान्माथुरं किं भजस्यमुम्॥ १०३॥

१०३. अमुं माथुरं मथुरायां भवं नृपं किं भजसि। यः कोपान्न कक्षायते कक्षाय वधबन्धादिकाय पापकर्मणे न क्रामति न च लोभात्कृच्छ्रायते कृच्छ्राय प्रजातीव्रकरपीडनादिकाय पापकर्मणे न क्रामति नापि कामात्कन्दर्पात्सत्रायते सत्राय परस्त्र्युपहारादिकाय पापकर्मणे न क्रामति॥

---

१ सी °त्र "वार्थे°". २ सी °क्षार्थे स°. ३ बी सी डी °तः पटप°. ४ डी °ब्दोत्र. ५ ए स्फरका°. ६ सी डी °ति नापि. ७ ए °य प्र°. ८ ए °णे क्रा°.

गहने गह्नायन्ते न रोमन्थायितैणके ।
व्याधा अप्याज्ञया यस्य विन्ध्येशे रमसेत्र किम् ॥ १०४ ॥

१०४. अत्र विन्ध्येशे किं रमसे । यस्याज्ञया हेतुना व्याधा अपि मृगयाजीविनोपि गहने वने न गह्नायन्ते गह्नाय मृगादिवधाय पापकर्मणे न क्रामन्ति । अत एव किंभूते गहने । रोमन्थायिता मृत्युभयाभावेन सुखितत्वाद्रोमन्थमभ्यवहृतं द्रव्यमुद्गीर्य चर्वितवन्त एणा मृगा यत्र तस्मिन् । एतेन तस्यातिधार्मिकत्वोक्तिः ॥

पटपटायतः । लोहितायत् । चर्मायतः । इत्यत्र "डाच्°" [३०] इत्यादिना पित्क्यङ् ॥

कष्टायमानः । कक्षायते । कृच्छ्रायते । सत्रायते । गह्नायन्ते । अत्र "कष्ट°" [३१] इत्यादिना क्यङ् ॥

रोमन्थायित । इत्यत्र "रोमन्थाद्°" [३२] इत्यादिना क्यङ् ॥

फेनायन्ते वाष्पायन्ते चोष्मायन्ते च यद्द्विषः ।
धूमायितेग्नावुद्वोढुं किमन्ध्रेत्र सुखायसे ॥ १०५ ॥

१०५. अग्नौ विवाहाग्निकारिकावह्नौ धूमायिते यवादिक्षेपेण धूममुद्वमति सत्यन्ध्रेन्ध्रदेशाधिपे विषय उद्वोढुं किं सुखायसे सुखमनुभवसि । यद्द्विषः फेनायन्ते वाष्पायन्ते चोष्मायन्ते च युद्धादिनात्यन्तं खेदितत्वात्फेनान्मुखे फेनबुद्बुदान्वाष्पांश्च पराभवोत्थानि नेत्रवारीण्यूष्मणश्च संतप्तोच्छ्वासानुद्वमन्ति ॥

१ ए °न्थायते°.

१ सी डी यत्रास्मि°. २ बी सी डी ई °न यस्या°. ३ बी °टायितः. ४ ए बी सी डी °नायते. ५ सी डी °न्ते यु°. ६ सी डी °ण्यूष्माण°.

श्रीर्न दुःखायते यत्र वाण्या वैरायते न च ।
शब्दायितयशःशङ्खः सोयं श्रीगूर्जरेश्वरः ॥ १०६ ॥

१०६. सोयं प्रत्यक्षः शब्दायितयशःशङ्खः सशब्दीकृतकीर्तिकम्बुर्गूर्जरेश्वरोस्ति । यत्र श्री राज्यादिलक्ष्मीर्न दुःखायते न्यायोत्साहादिगुणैरस्मिन्सुखेन सदा वासित्वान्न दुःखमनुभवति । न च नापि वाण्या सह वैरायते वैरं करोति । स्वभावान्मिथो विरुद्धे अपि श्रीवाण्यौ विरोधत्यागेन यत्र तिष्ठत इत्यर्थः । अनेन च यदि त्वममुं वृणोषि तदा त्वमपि श्रीरिवात्र न दुःखायसे नापि सपत्नीभिः सह वैरायसे तस्मादमुं वृणीष्वेति दुर्लभदेवी ज्ञापिता ॥

फेनायन्ते । ऊष्मायन्ते । बाष्पायन्ते । धूमायिते । इत्यत्र "फेनोष्म°" [ ३३ ] इत्यादिना क्यङ् ॥

सुखायसे । दुःखायते । अत्र "सुखादेः" [ ३४ ] इत्यादिना क्यङ् ॥

शब्दायित । वैरायते । अत्र "शब्दादेः कृतौ वा" [ ३५ ] इति वा क्यङ् ॥

नमस्यन्वरिवस्यंश्चाचित्रीयत तपस्यताम् ।
यश्च दुर्लभराजं तं नाम्नामुं किं वुवूर्षसि ॥ १०७ ॥

१०७. अमुं नाम्ना दुर्लभराजं किं वुवूर्षसि । यश्च । चः पूर्ववाक्यार्थापेक्षया समुच्चये । नमस्यन्नमस्कुर्वन्वरिवस्यंश्च वरिवः कुर्वन्सेवमानश्च संस्तपस्यतां तपः कुर्वतां कर्मणो वृत्तावन्तर्भूतत्वादकर्मकत्वम् । तपोधनानामचित्रीयताहो राजाधिराजस्याप्यस्य कीदृग्विनय इत्याश्चर्यमकरोत् । नाम्ना दुर्लभमिति नामनिर्देशेन दुर्लभदेवीदं ज्ञापिता

---

१ सी डी श्रीगुर्ज°.

---

१ ए °सितत्वा°. २ डी °यन्ते वै°. ३ डी °वाण्योर्विरो°. ४ सी °मायते. डी° मायन्ते वै°.

यदुतैकनामत्वेनैकराशित्वादेकनक्षत्रत्वाच्च तवामुना सहातिश्रेष्ठो योग इति ॥

तपस्यताम् । अत्र "तपसः क्यन्" [ ३६ ] इति क्यन् ॥

नमस्यन् । वरिवस्यन् । अचित्रीयत । इत्यत्र "नमः°" [ ३७ ] इत्यादिना क्यन् ॥

साथ हस्तयमानास्य कण्ठे चिक्षेप च स्रजम् ।
अश्वैरुत्पुच्छयमानैर्ययौ कुप्यच्च राजकम् ॥ १०८ ॥

१०८. अथैवं द्वास्थाभणनानन्तरं सा दुर्लभदेवी हस्तयमाना हस्तमुत्क्षिपन्त्यस्य दुर्लभस्य कण्ठे स्रजं वरमालां चिक्षेप च । तथा राजकं नृपौघः कुप्यद्दुर्लभवरणेन क्रुध्यत्सदुत्पुच्छयमानैर्वेगेन प्रेरितत्वात्पुच्छान[1]ूर्ध्वमस्यद्भिरश्वैः कृत्वा[2] ययौ च स्वयंवरमण्डपान्निर्जगाम च ॥

परिपुच्छयमानेभैरश्वैः पुच्छयमानकैः ।
द्राग्विपुच्छयमानोक्षरथैरागाच्च बन्धुता ॥ १०९ ॥

१०९. बन्धुता दुर्लभस्य बान्धवौघो विवाहोत्सवविधय[3] आगात् । कैः कृत्वा । परिपुच्छयमानेभैः पुच्छान्समन्तादस्यद्भिर्गजैस्तथा पुच्छयमानकैरश्वव्रातैः पुच्छानस्यद्भिरश्वैस्तथा विपुच्छयमानाः पुच्छान्विविधं विशिष्टं वास्यन्त उक्षाणो वृषा येषु ते तथा ये रथास्तैश्च ॥

हस्तयमाना । इत्यत्र "अङ्गात्°" [३८] इत्यादिना णिङ् ॥

उत्पुच्छयमानैः । परिपुच्छयमान । विपुच्छयमान । पुच्छयमानकैः । अत्र "पुच्छाद्°" [३९] इत्यादिना णिङ् ॥

---

१ सी डी °च्छान्नूर्ध्व°. २ सी डी °द्भिरश्वैः कृ°. ३ प इ °विषये.

संभाण्डयन्ते संचीवरयमाणा मखाय ये ।
ते मन्त्रयन्तो ब्रह्माणस्तयोः पाणी अमिश्रयन् ॥ ११० ॥

११०. ते ब्रह्माणो द्विजा मन्त्रयन्तो विवाहोचितमन्त्रानाचक्षाणाः सन्तस्तयोर्वधूवरयोः पाणी अमिश्रयन् संयुक्तीचक्रुः । ये यागेषु सदोद्यतत्वान्मखाय यागार्थं संभाण्डयन्ते भाण्डानि यज्ञोपकरणानि समाचिन्वन्ति । किंभूताः । संचीवरयमाणाश्चीवरं वस्त्रं समाच्छादयन्तो यजमानेभ्यो भिक्षयोपार्जयन्तो वा ॥

संभाण्डयन्ते । अत्र "भाण्डात्°" [ ४० ] इत्यादिना णिङ् ॥

संचीवरयमाणाः । अत्र "चीवरात्°" [ ४१ ] इत्यादिना णिङ् ॥

अमिश्रयन् । मन्त्रयन्तः । अत्र "णिच्°" [ ४२ ] इत्यादिना णिच् ॥

ये पयो व्रतयन्त्यन्नं व्रतयन्ति च ये द्विजाः ।
वेदापयन्तस्ते चक्रुर्मधुपर्कादिकं तयोः ॥ १११ ॥

१११. ते द्विजा वेदापयन्तो वेदमाचक्षाणास्तयोर्मधुपर्कादिकं मधुपर्कं दध्ना संपृक्तं मधु । तेनात्रोपचाराद्वधूवराभ्यां यन्मधुपर्कस्य प्राशनं तदुच्यते । तदादिर्यस्य प्रदक्षिणादापनादेर्विवाहाचारस्य तं चक्रुः । ये पयो दुग्धं व्रतयन्त्यस्माभिः पय एव भोक्तव्यमिति व्रतं कुर्वन्ति गृह्णन्ति वा तथा येऽन्नमस्माभिर्न भोक्तव्यमिति व्रतयन्ति च ॥

चौलुक्याय महेन्द्रोथ सत्यापितमनोरथः ।
अर्थापयञ्श्वेतयन्नश्वयंस्तत्तदा ददौ ॥ ११२ ॥

११२. अर्थं तथा तदा विवाहकाले सत्यापिताः परिपूर्णीकरणेन

---

१ ए °पनोचस्ते.

---

१ बी °पकारक°. २ ई संयुक्तं. ३ सी डी °थ तदा. ४ ए °णे च सत्तीकृत्वा म°.

सत्यीकृता मनोरथा येन स महेन्द्रस्तत्तदर्थादि चौलुक्याय ददौ । कीदृक्सन् । अर्थापयञ्श्वेतयंन्नश्वयन्नहो अर्थाः श्वेताश्वा अश्वतराश्चानीयन्तामित्यर्थान्धनानि श्वेताश्वान् श्वेततुरङ्गानश्वतरान्वेसरानुपलक्षणत्वाद्धस्त्यादींश्चाचक्षाणः ॥

गालोडयितृशार्ङ्गीव सोथानाह्वरयन्नदात् ।
कनिष्ठां भगिनीमन्यां नागराजाय जिष्णवे ॥ ११३ ॥

११३. अथ स महेन्द्रो जिष्णवे जैत्राय नागराजाय दुर्लभानुजायान्यां कनिष्ठां भगिनीं लक्ष्मीनाम्नीमदात् । कीदृक् । अनाह्वरयन्नाह्वरति कुटिलीभवतीति अचि कुत्सिताद्यर्थे कपि च आह्वरकं कुटिलं वाक्यं कुटिलः पुरुषो वा । ऋजुस्वभावत्वेन कौटिल्याप्रियत्वात्तत्तं[3] वानाचक्षाणः । श्लेषोपमामाह । गालोडयितृशार्ङ्गीवेति । गोलोडितं[4] लोडनम् । गुप्तं लोडितमिति तु क्षीरस्वामिना निरुक्तिः कृता । उभयत्रापि पृषोदरादित्वाद्गादेशे गालोडितं गोदोहनं विलोडनं वेत्यर्थः । गोपावस्थायां गालोडितं करोति गालोडयिता यः शार्ङ्गी विष्णुः स यथानाह्वरयन्कनिष्ठां भगिनीं सुभद्राख्यां जिष्णवेर्जुनायादात् ॥

पयो व्रतयन्ति । अन्नं व्रतयन्ति । इत्यत्र "व्रताद्°" [४३] इत्यादिना णिच्[6] ॥

सत्यापित । अर्थापयन् । वेदापयन्तः । अत्र "सत्यार्थ°" [४४] इत्यादिना-आदन्तादेशः ॥

श्वेतयन् । अश्वयन् । गालोडयितृ । अनाह्वरयन् । इत्यत्र "श्वेताश्व°" [४५] इत्यादिनाश्व-तर-इत-कानां लुप् ॥

---

१ ए °यन्निश्वय°. २ ए वा कु°. ३ ई °त्तत्तं वा°. ४ सी डी °श्वयद°. ५ ई °त गोलो°. ६ ई णिच् ॥.

चकासांचक्रतुस्तौ[1] च चकासामासतुश्च ते ।
तेषामुद्वाहहर्षेण[2] स चकासांबभूव च ॥ ११४ ॥

११४. स्पष्ट. । किं तु तौ वरौ चकासांचक्रतुरनुरूपवधूसंयोगेन रेजतुस्ते च वध्वौ च । तेषां वधूवराणाम् । स महेन्द्रः ॥

महेन्द्रः स्वांचकारानु यथावद्विससर्ज तौ ।
स्वमुक्षांप्रचकारेवामृतैस्तत्परिरम्भणात् ॥ ११५ ॥

११५. महेन्द्रस्तौ वरौ स्वांचकार स्वमिवाचचार बाह्यभ्यातिशयेनात्मानमिवाज्ञासीदित्यर्थः । एके तु कर्तुः संबन्धिन उपमानाद्वितीयान्तात्क्विप्क्यङाविच्छन्ति तन्मतेनात्र कर्तुः संबन्धिन उपमानाद्वितीयान्तात्स्वात्क्विप् । अनु पश्चाद्यथावद्दानसन्मानादिविसर्जनविध्यनतिक्रमेण विससर्ज । तथा तत्परिरम्भणाद्वरयोराश्लेषादमृतैः स्वमात्मानमुक्षांप्रचकारेव सुखातिरेकात्सिषेचेव । अथ च यो महेन्द्रो महाशक्रः स स्वममृतैरुक्षतीत्युक्तिलेशः ॥

चकासांचक्रतु. । चकासांबभूव । चकासामासतुः । अत्र "धातोरनेक°" [ ४६ ] इत्यादिना परोक्षायाः स्थान आम् । आमन्ताच्च परे कृभ्वस्तयः परोक्षान्ता अनुप्रयुज्यन्ते ॥ कश्चित्तु प्रत्ययान्तादेकस्वरादपीच्छति । स्वांचकार ॥ अनुग्रहणं विपर्यासव्यवहितनिवृत्त्यर्थम् । तेन चकार चकासाम् । ईहा देवदत्तश्चक्रे । इत्यादि न स्यादित्यन्वित्यनेनासूचि । उपसर्गस्य तु क्रियाविशेषकत्वाद्व्यवधायकत्वं नास्ति । तेनोक्षांप्रचकार । इत्यादि स्यादेव ॥

---

१ बी °स्तौ तु चका°. २ ए °मुद्वह°.

---

१ सी डी °णाद्वयो°. २ ई °कासमा°. ३ बी °क्षिप्त°. ४ ए °षत्वा°.

स्वस्रोर्दासीर्दयांचक्रे दयामास च दासकान् ।
दयांबभूव कोशं च सोन्वयामास चाजलम् ॥ ११६ ॥

११६. स्पष्टः । परं स्वस्रोर्भगिन्योर्दयांचक्रे ददौ । स महेन्द्रः । आजलं जलमवधीकृत्यान्वयामास चानुययौ ॥

दुर्लभोयांबभूवाथान्वयांचक्रे च नागराट् ।
वाटीषु नासांचक्राते नाप्सु चासांबभूवतुः ॥ ११७ ॥

११७. स्पष्टः । किं तु । अयांबभूव ययौ । अन्वयांचक्रे चानुययौ । तथात्यौत्सुक्यगमनेन वाटीष्वमात्याद्युपवनेषु नासांचक्राते दर्शनकौतुकान्न स्थितौ ॥

आसामासुर्वरीतुं तां ये कासांचक्रिरेपि च ।
तेस्थुः क्रुधाग्रे तान्दृष्ट्वा स कासामास दुर्लभः ॥ ११८ ॥

११८. ते नृपाः क्रुधाग्रेस्थुश्छलयुद्धाय स्थितास्तांश्च दृष्ट्वा स दुर्लभ. कासामास कोपाद्विरुद्धमूचे । ये नृपास्तां दुर्लभदेवीं वरीतुमासामासु स्वयंवरमण्डपे तस्थुः कासांचक्रिरेपि च । दुर्लभवरणे रुष्टत्वाद्दुर्लभं प्रति विरुद्धानि वचांस्यूचुश्च ॥

कासांबभूवुस्ते दर्पात्समीहामासुराहवम् ।
ईहांबभूवुर्नामात्यान्नेहांचक्रिरे सखीन् ॥ ११९ ॥

११९. ते नृपा दुर्लभं प्रति कासांबभूवुस्तथा दर्पात्स्वबलौघवलेपादाहवं युद्धं समीहामासुरीषुः । अत एवामात्यान्नेहांबभूवुर्युक्तायुक्त-

१ बी आशामा°.

१ ई °ने वा°. २ ए °कान्विस्मि°. ३ ई °लाव°. ४ ई ससमी°.

विचारणया युद्धस्य विघ्नत्वान्नैपुर्ने च सखीनीहांचक्रिरे बलाद्यवलेपात्सहायानपि नापेक्षितवन्त इत्यर्थः ॥

खमानर्छोर्णुनावाशा नृपाणां तुमुलस्तथा ।
प्रजागरांचकाराशु ग्रसनाय यथान्तकः ॥ १२० ॥

१२०. नृपाणां तुमुलो व्याकुलो रवोत्युच्चैस्स्वात्तथा खमानर्छे व्याप तथाशा दिशस्तथोर्णुनाव व्याप यथान्तको ग्रसनाय नृपाणामेव निगलनायाशु शीघ्रं प्रजागरांचकार । उद्यतोभूदित्यर्थः । गाढव्याकुलस्वरेण हि सुप्तोकस्मादेव जागर्ति ॥

अलक्ष्मीर्जागरामास न जागरांबभूव धीः ।
यत्तं जजागरुर्जेतुं समिन्धांचक्रिरे[1] च ते ॥ १२१ ॥

१२१. यदिति क्रियाविशेषणम् । तं दुर्लभं जेतुं यत्ते नृपा जजागरुरुद्येमुः समिन्धांचक्रिरे[1] च तेजस्विनो बभूवुश्च । यत्तदोर्नित्याभिसंबन्धात्तत्तेषामलक्ष्मीर्जागरामास । धीर्बुद्धिर्न जागरांबभूव । तस्यातिशक्तत्वेन केनाप्यजेयत्वात् ॥

समीधेग्निर्यथा यद्वदिन्धांचक्रे च वाडवः ।
ईधे तेजस्तथा तेषां विश्वमोषांचकार नु ॥ १२२ ॥

१२२. यथाग्निः समीधे जज्वाल यद्वच्च वाडवै[3] इन्धांचक्रे तथा तेषां नृपाणां तेजः कोपाटोपोत्थप्रचण्डप्रताप ईधे । अत एव विश्वं जगदोषांचकार नु ददाहेव ॥

---

१ सी डी °मिधाच°.

---

१ बी सी डी °मिधांच°. २ डी °भुः । य°. ३ ए बी ई °व ईधांच°.

उवोषेव दिशो वह्निः क्ष्मा बिभायेव कम्पभृत् ।
न ते तथापि बिभयांबभूवुर्मेदिनीभुजः ॥ १२३ ॥

१२३. वह्निर्दिश उवोषेव । नृपपराजयसूचकोत्पातोद्भवाद्दिशोग्निना दह्यमाना इवालक्ष्यन्तेत्यर्थः । तथा कम्पभृत्क्ष्मा बिभायेव । तथाप्येवमुत्पातसद्भावेपि ते मेदिनीभुजो न बिभयांबभूवुर्बलावलेपान्न भीताः ॥

नेन्द्राद्यो[1] बिभयामास बिभयांचकृवान्स किम् ।
प्रजिह्रयांचकाराजौ तैः प्रत्युत चुलुक्यराट् ॥ १२४ ॥

१२४. स्पष्टः । किं तु तैर्नृपैः सहाजौ रणे सति प्रत्युत प्रजिह्रयांचकार किमेभिरतिहीनैः सह युद्धेनेति लज्जितः ॥

जिह्राय यद्यपि तथाप्यजगावं बभार सः ।
पुरो दिधक्षोर्बिभरांबभूवेशस्य विभ्रमम् ॥ १२५ ॥

१२५. स दुर्लभो यद्यपि जिह्राय तैः सह युद्धेन लज्जितस्तथापि तेषां वृथाबलाभिमानापनोदायाजगावं धनुर्बभाराधारयत् । अजगावशब्दः सामान्यधनुष्यपि वर्तते । अत एव पुरस्तिस्रः पुरीर्दिधक्षोर्दग्धुमिच्छोरीशस्य शंभोर्विभ्रमं बिभरांबभूव । पुरो[2] दिधक्षुरीशो ह्यजगावं पिनाकं बभार ॥

तत्राग्नाविव केपीषुसमिधो जुहुवुर्नृपाः ।
केपि स्वं[2] जुहवांचक्रुर्विदांचक्रुर्न[3] तद्बलम् ॥ १२६ ॥

१२६. केपि नृपास्तत्राजावग्नाविवेषुसमिधः शरैधान् जुहुवुश्चि-

---

१ ए नेन्द्रा°. २ बी स्व जहुवां°. ३ ए सी डी जुहुवां°.

---

१ ए °गाबःश्च° २ बी सी डी °रो दधिक्षु°.

क्षिपुः। अग्नौ क्षिप्ताः शरा रणे स्वमेव भस्मीचक्रुर्न[1] तु शत्रुवधादि[2] स्वकार्यं चक्रुरित्यर्थः। केपि च नृपाः स्वमात्मानं जुहवांचक्रुर्न[3] तद्बलं दुर्लभसैन्यं विदांचक्रुरियत्परिमाणमिति[4] परिच्छिन्नवन्तः। शत्रुविनाशनेनात्मानमेव विनाशितवन्त इत्यर्थः॥

विदांचभूवुर्नैव स्वं विदामासुश्च नापरम्।
रजोभिर्विविदुर्नार्कं[5][6] विदांकुर्वन्तु किं जनाः॥ १२७॥

१२७. जना भटलोका रजोभिः कृत्वा स्वमात्मीयं नैव विदांबभूवुर्ज्ञातवन्तो न चापरं शत्रुं विदामासुर्न चार्कं विविदुः। अतश्च रोदस्यो रजोभिरावरणेन सुज्ञेयानामप्येषामदर्शनात्किं विदांकुर्वन्तु जानन्तु। न किमपीत्यर्थः॥

अमी विदन्तु मे शक्तिमध्यासीदिति दुर्लभः।
अस्प्राक्षीत्पाणिना श्मश्रूण्यस्पृक्षदिषुधिं ततः॥ १२८॥

१२८. पूर्वार्धं स्पष्टम्। ततश्चिन्तानन्तरं स्वशक्त्यवलेपेन श्मश्रूणि दंष्ट्रिकां पाणिनास्प्राक्षीत्ततश्चेषुधिं शराकर्षायास्पृक्षत्॥

निषङ्गादिषुमक्राक्षीदकृक्षदथ कार्मुकम्।
यां लीलामर्जुनोम्राक्षीत्तामम‍ृक्षदसौ तदा॥ १२९॥

१२९. अक्राक्षीदाकृष्टवान्। यां लीलां शोभामर्जुनोम्राक्षीत्पस्पर्श तां लीलां तदा कार्मुकाकर्षणकालेसौ दुर्लभोमृक्षत्। शिष्टं स्पष्टम्॥

अद्राप्सुर्ये भुजस्थाम्ना मन्त्रास्त्रैरदृपंश्च ये।
स तैः कृतान्तमत्राप्सीदतृपद्यशसा न हि॥ १३०॥

१३०. स्पष्टः। किं तु। अद्राप्सुर्गर्वं चक्रुः। तैर्नृपैः कृत्वा स

१ डी °र्न श°. २ ई °दि का°. ३ बी सी डी जुहुवां. ४ ई °ति न प°. ५ डी °वुर्न का°. ६ ई °दरोर°.

दुर्लभः कृतान्तमत्राप्सीत्तृप्तीचक्रे । अन्तर्भूतणिगर्थोत्र तृपिः सकर्मकः। तान्तृपाञ्चघानेत्यर्थः ।

दयांचक्रे । दयांबभूव । दयामास । अन्वयांचक्रे । अयांबभूव । अन्वयामास । आसांचक्राते । आसांबभूवतु. । आसामासुः । कासांचक्रिरे । कासाबभूवुः । कासामास । इत्यत्र "दया°" [४७] इत्यादिना-आम् ॥

ईहांचक्रिरे । ईहांबभूवुः । समीहामासुः । इत्यत्र "गुरु°" [ ४८ ] इत्यादिना आम् ॥ अनृच्छ्रूर्णोरिति किम् । आनर्छ । ऊर्णुनाव ॥

प्रजागरांचकार । जागरांबभूव । जागरामास । जजागरुः ॥ ओषांचकार । उवोष ॥ समिन्धांचक्रिरे । समीधे । अत्र "जागुष°" [४९] इत्यादिना-आम्वा । सम्ग्रहणं किम्। इन्धांचक्रे ॥ समोन्यत्रापीन्धेराम्विकल्प इत्यन्ये[4] । इन्धांचक्रे । ईधे ॥

बिभयांचकृवान् । बिभयांबभूवुः । बिभयामास । बिभाय ॥ प्रजिह्रयांचकार । जिह्राय ॥ बिभरांबभूँव । बभार ॥ जुहवांचक्रुः । जुहुवुः । इत्यत्र "भीह्री°" [५०] इत्यादिना वा-आम् । स च तिब्वत् ॥

विदांचक्रुः । विदांबभूवुः । विदामासुः । विविदुः । अत्र "वेत्तेः कित्" [५१] इति वा-आम् स च कित् ॥

विदांकुर्वन्तु । विदन्तु । इत्यत्र "पञ्चम्याः कृग्" [५२] इति पञ्चम्याः स्थाने वा किदाम् तदन्ताच्च पञ्चम्यन्तः कृगनुप्रयुज्यते ॥

अभ्यासीत् । इत्यत्र "सिज्°" [५३] इत्यादिना सिच् ॥

अस्माक्षीत् अस्त्रक्षत् । अम्राक्षीत् अमृक्षत् । अक्राक्षीत् अकृक्षत् ।

---

१ सी डी ई अन्वया°. २ बी °मिधां च. ३ ई °म् । इंधाच°. ४ ई °न्ये । ईधांच°. ५ सी डी °भूवुः । ब°. ६ बी सी डी जुहवां°. ७ बी °त्र "वावेत्तेः कि°.

अत्राप्सीत् अतृपत् । अद्राप्सुः अदपन् । इत्यत्र "स्पृशमृश°" [५४] इत्यादिना वा सिच् ॥

य आविक्षंस्तमद्विक्षंस्तमद्राक्षुश्च दर्पतः ।
तान्न्यघुक्षच्छरैरेष न्यकोपीत्तदसूनपि ॥ १३१ ॥

१३१. तान्नृपानेष दुर्लभः शरैर्न्यघुक्षदाच्छादितवांस्तदसूंस्तत्प्राणान्न्यकोपीदप्याकृष्टवानपि । तानवधीच्चेत्यर्थः । ये नृपास्तं दुर्लभमद्विक्षन् द्विष्टवन्तः । अत एवाविक्षन्कोपात्तस्मिन्सरम्भं चक्रुः । तथा दर्पतो बलाद्यवलेपात्तमद्राक्षुश्च ॥

न्यघुक्षत् । आविक्षन् । अद्विक्षन् । इत्यत्र "हशिटः°" [५५] इत्यादिना सक् ॥ अदृश इति किम् । अद्राक्षुः । अनिट इति किम् । न्यकोपीत् ॥

यथाश्वोश्वमुपाश्लिक्षद्रथो रथमुपाश्लिषत् ।
नाचीकमत कोप्यस्त्रं तथौजो यमशिश्रियत् ॥ १३२ ॥

१३२. अयं दुर्लभस्तथौजो बलमशिश्रियद्यथाश्वोश्वमुपाश्लिक्षद्रथो रथमुपाश्लिषत् । भयेन युगपच्छीघ्रं संमर्देन नाशादश्वा रथाश्च मिथ आस्फलन्नित्यर्थः । तथा यथा कोपि पत्तिरस्त्रं नाचीकमत द्रुतं नाशेन नैच्छत् । एतेनाश्वरथपत्तिनाश उक्तः ॥

अथ गजानामाह ।

गजतादुद्रुवत्तस्माद्भयान्मूत्रमसुस्रुवत् ।
न चाचकमत स्थातुं पयांस्यपि नचादधत् ॥ १३३ ॥

१३३. स्पष्टः । किं तु तस्माद्दुर्लभात्सकाशाददुद्रुवद्भयाभ्रष्टा । पयांस्यपि जलानि च न चादधन्नैव पपौ ॥

१ डी अद्रा°. २ सी डी °ना सिच् वा ॥. ३ ई °दिवां°. ४ ई °लाव°. ५ ई °पास्तम°. ६ बी °क्षन् । आ°. ७ ए °स्मात्स°. ८ ई °नि चा°.

अत्योंक्रोधात्पयो नाभ्रद्धैर्यमाशा अशिश्वियत्[1] ।
गन्तुं ये चाशिषन् व्यत्यशिषताख्यच्च साधु तान् ॥१३४॥

१३४. अर्त्यो भयातिरेकोत्थमनःपीडयाङ्गोऽङ्गदेशाधिपो धैर्यं चित्तावष्टम्भं नाभ्रन्नागमदत एवाशा दिशोऽशिश्वियन्[1]नष्ट इत्यर्थः । किं बहुना पयो जलमपि नाधान्न पपौ । तथा ये भटा गन्तुं[2] नंष्टुमशिषन्नाशिक्षयन्नर्थात्तं तानङ्गो गन्तुं व्यत्यशिषत विनिमयेनाशिक्षयत्तान्साधु[3] यथा स्यादेवमाख्यच्च साधु साधूक्तं भवद्भिरिति तान्प्रशंसितवांश्चेत्यर्थः ॥

अपास्थतांस्त्वं मालव्यो न्यवोचच्च पलायितुम् ।
शंसत्सु[3] व्यत्यशासिष्ट नाभ्यसार्षीदपासरत् ॥१३५ ॥

१३५. मालव्योऽलमपास्थतै तत्याज पलायितुं न्यवोचच्च पलाय्यत इत्यवदच्चेत्यर्थः । तथा पलायितुं शंसत्सूपदिशत्सु व्यत्यशासिष्ट विनिमयेनोपादिक्षदत एव नाभ्यसार्षीन्नाभिमुखमगमत्किं त्वपासरद्रणात् ॥

त्रस्तैः समार्ष्ट नो पुत्रैः कलत्रैर्न समारत ।
हूणो निरारदन्वार्षीन्नष्टानाह्वत्तथापरान् ॥ १३६ ॥

१३६. हूणो हूणदेशाधिपस्त्रस्तैर्भीतैः पुत्रैः सह न समार्ष्ट न समगस्त । तथा कलत्रैश्च न समारत किं तु निरारद्रणान्निर्गतः । भयभीतान्पुत्रान्कलत्राणि च मुक्त्वा स्वप्राणानादाय नष्ट इत्यर्थः । अत एव नष्टानन्वार्षीदन्वगमत् । तथापरानन्यानि[1]ननष्टानाह्वदाकारयत् ॥

---

१ डी °श्विय°. २ ए °तान्न मा°. ३ ए शासत्सु.

---

१ सी डी °श्विय°. २ ए °ष्टुं नष्टु°. ३ डी °विनम°. ४ डी °च स ता°. ५ ए °त ता°. ६ ए °वित मा°. ७ ए शासत्सु°. ८ ए °त्सु मा°. ९ सी डी अशिक्षा°. १० सी डी °कलैः पु°. ११ ए सी डी ई °न्याका°.

स स्वेदेनालिपद्गात्रमसिचत्क्ष्मां च माथुरः।
य आह्वास्त तुरुष्केशान्पर्वतीयान्य आह्वत ॥ १३७ ॥

१३७. स माथुरः स्वेदेन भयोत्थप्रस्वेदेन गात्रमलिपत्। क्ष्मां चासिचदार्द्रयत्। यो महाशूरत्वेन तुरुष्केशानाह्वास्त युद्धेच्छया सस्पर्धमाकारयत्। तथा यः पर्वतीयान्पर्वतदुर्गभवान्नृपानाह्वत ॥

अलिप्तासिचतान्ध्रः क्ष्मामसृजा मूर्छितस्तदा।
असिक्तालिपतैनं वाश्चन्दनैर्बन्दिनां गणः ॥ १३८ ॥

१३८. तदा युद्धकाले मूर्छितः संक्षोभातिरेकेण वैचित्त्यं[2] गतः सन्नन्ध्रोन्ध्रदेशाधिपोसृजा मुखान्निर्गतेन रक्तेन कृत्वा क्ष्मामसिचत धाराप्रवाहेणार्द्रीचक्रे[3]। तथा क्ष्मामलिप्त धाराप्रवाहस्याविच्छेदबाहुल्याभ्यामुपचितीचक्रे। अत एव बन्दिनां भट्टानां गण एनमन्ध्रं वाश्चन्दनैरसिक्तालिपत च मूर्छापनोदाय वारिभिः सिक्तवांश्चन्दनैर्लिप्तवांश्चेत्यर्थः ॥

अश्वोश्वमुपाश्लिक्षत्। इत्यत्र "श्लिषः" [५६] इति सक् ॥

रथो रथमुपाश्लिषत्। इत्यत्र "नासत्त्वाश्लेषे" [५७] इति सम ॥

अचीकमत। अशिश्रियत्। अदुद्रुवत्। असुस्रुवत्। अचकमत। इत्यत्र "णिश्रि°" [५८] इत्यादिना ङः ॥

अदधत् अधात्। अशिश्वियत् अश्वत्। इत्यत्र "ट्धेश्वेर्वा" [५९] इति वा ङः ॥

---

१ सी डी तुरष्टेन्य°.

---

१ डी तुरश्केना°. २ डी वैवश्य ग°. ३ ए °द्रींच। त°. ४ ए °प। इ°.

अशिषन् । व्यत्यशिषत । अपास्थत ॥ वचंक् ब्रूगक् वा । न्यवोचत् ॥ ख्यांक् चक्षिक् वा । आख्यत् । इत्यत्र "शास्ति°" [६०] इत्यादिना-अङ् ॥ शास्तेरात्मनेपदे नेच्छन्त्येके । व्यत्यशासिष्ट ॥

अपासरत् अभ्यसार्षीत् ॥ ऋ अदादिर्भ्वादिर्वा । निरारत् अन्वार्षीत् । समारत समार्ष्ट । । इत्यत्र "सर्त्यर्तेर्वा" [६१] इति वा-अङ् ॥

आह्वत् । अलिपत् । असिचत् । इत्यत्र "ह्वालिप्सिचः" [६२] इत्यङ् ॥

आह्वत आह्वास्त । अलिपत अलिप्त । असिचत असिक्त । इत्यत्र "वात्मने" [६३] इति वा-अङ् ॥

नाशकन्नाश्रुतचैद्यो नारुचन्नापुषत्कुरुः ।
अशुषच्छ्वासमरुधद्द्वचोरौत्सीच्च काशिराट् ॥ १३९ ॥

१३९. चैद्यो नाशकद्भयातिरेकाद्गन्तुं न समर्थोभूत्तथा विच्छायत्वान्नाश्रुतत् । तथा कुरुर्नापुषद्भयातिरेकात्कृशोभूदत एव नारुचत् । तथा काशिराडशुषच्छुष्ककण्ठोभूच्छ्वासमरुधद्वचश्चारौत्सीत् ॥

काश्वत्प्रियाश्वयीत्पुत्रोम्रोचीन्मम्र्यम्रुचत्सखा ।
चिन्तयेत्यस्तभन्न स्वं नास्तम्भीत्कोपि वा रथम् ॥१४०॥

१४०. क कस्मिन्प्रदेशे प्रियाश्वद्गता क पुत्रोश्वयीत् । क मम्र्यम्रोचीद्गतः । सखा काम्रुचत् । इति चिन्तया कोपि नृपादिः स्वमात्मानं नास्तभन्न गतिराहितं चक्रे रथं वा नास्तम्भीत्प्रियाद्यर्थं नाधारयत् ।

---

१ डी °न्त्याव्यस्त°. २ सी °ये व्यस्त°.

---

१ ई °त ॥ न्य°. २ ई °त् ॥ आ°. ३ ई °च ॥ कश्चित्कर्तर्यपि नेच्छति । व्य°. ४ ए °दिवा । नि°. ५ ए °र्लर्तेरिति. ६ ई °न्तुं स°. ७ ए °वारिका°. ८ ए °स्वत°. ९ बी °च्छुष्काङ्गो°. १० सी °द्वचोरौ°.

मृत्युमहाभयेन प्रियादिचिन्तां मुक्त्वा स्वस्वप्राणानादाय सर्वोपि नृपादिजनो नष्ट इत्यर्थः ॥

योम्लोचीत्सोम्लुचद्भीरोनाम्रोचीत्तस्य जीवितम् ।
तेजोम्रुचद्यशोग्लोचीचौलुक्यो नाम चाग्लुचत् ॥ १४१ ॥

१४१. यो भीरुर्भयेनाम्लोचीद्रणाद्गतः स भीरुरम्लुचद्गत एव यतस्तस्य भीरोश्चौलुक्यो जीवितं नाम्रोचीन्नाहरत्[1]किं[2] तु चौलुक्यो भीरोस्तेजः प्रतापम[3]म्रुचद्यशश्चाग्लोचीदहरत् । नाम च लोकेग्राह्यनामत्वात्तस्याभिधामप्यग्लुचत् । यद्वा[4][5] । म्रुंचू[6] ग्लुचू गतावपीत्येके । ततश्चौलुक्यस्तेजोम्रुचत्प्राप्तो यशश्च सर्वदिग्गामिनीं पराक्रमकृतां वा प्रसिद्धिं चाग्लोचीन्नाम चैकदिग्गामिनीं पुण्यदानकृतां वा प्रसिद्धिं चाग्लुचत् ॥

एवं द्विषोजरदसौ मुदमप्यजारी-
दग्लुश्चदच्युततुलामिति चेष्टितेन ।
स्वामग्लुचच्च नगरीमथ पात्रताम-
ग्लुश्चीत्ससंभ्रमवधूजनलोचनानाम् ॥ १४२ ॥

१४२. असौ दुर्लभ एवमुक्तरीत्या द्विषोजरत् । अन्तर्भूतणिगर्थोत्र[7] जृष् । निःसत्वतापादनेन जीर्णीचक्रे[8][9] । तथा मुदमपि द्विषामजारीदपानैषी[10]दित्यर्थः । यद्वा । महापुरुषत्वान्मुदमपि द्विड्[11]यो[12]त्थं हर्षमप्यजारीत्स्वस्मिन्नेवा[13]जरयदुत्सेकं न चक्र इत्यर्थः । अतश्चेति चेष्टितेन द्विषज्जरणोत्सेकाकरणरूपेणाचरितेनाच्युततुलां विष्णुसाम्यमग्लुश्चत्प्राप ।

१ ए नाग्लोची°. २ सी डी °त्किं चौ°. ३ ए °मग्लुच°. ४ सी डी यद्याम्रु°. ५ ए °द्वा ग्लुचू ग°. ६ सी म्रुच म्रुच ग°. डी म्रुच ग्लुच ग° ई म्रुचू ग°. ७. बी °त्र जृषः ।. ८ ए जीर्णे च°. ९ ए सी °क्रे । यथा. १० बी °नैषादि°. ११ डी द्विषोत्थं. १२ ई °योत्थह°. १३ ए °वाजार°.

तथा स्वां नगरीं पत्तनमग्लुचत् । अथ तथा संभ्रमः कौतुकादिना चित्ता[त्तो ?]त्क्षेपात्त्वरणमादरो वा सह तेन ये वधूजनास्तेषां यानि लोचनानि तेषां पात्रतां विषयत्वमग्लुञ्चीत् प्राप च । महोत्सवेन पुर्यां प्रविशन्पौरीभिः ससंभ्रमं ददृश इत्यर्थः ॥

ऌदित् । अशकत् ॥ द्युतादि । अद्युतत् । अरुचत् ॥ पुष्यादि । अपुषत् । अक्षुधत् । अत्र "ऌदिद्°" [६४] इत्यादिना-अङ् ॥

अरुधत् अरौत्सीत् । अश्वत् अश्वयीत् । अस्तभत् अस्तम्भीत् । अम्रुचत् अम्रोचीत् । अम्लुचत् अम्लोचीत् । अम्रुचत् अम्रोचीत् । अग्लुचत् अग्लोचीत् । अग्लुचत् अग्लुञ्चीत् । अजरत् अजारीत् । इत्यत्र "ऋदिच्छ्वि°" [६५] इत्यादिना वा-अङ् । ग्लुचग्लुञ्चोरेकतरोपादानेपि रूपत्रयं सिध्यति । अर्थभेदात्तु द्वयोरुपादानम् ॥ अन्ये स्वकृद्विधानसामर्थ्याद्ग्लुञ्चेर्नलोपं नेच्छन्ति । तेनाग्लुञ्चत् ॥ वसन्ततिलका छन्दः ॥

॥ इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तौ सप्तमः सर्गः समाप्तः ॥

---

१ प सी डी ई चित्ताक्षेपा°. २ डी °विशन्पौ°. ३ सी °व । अत्र. ४ डी अम्लुच°. ५ डी अम्लोची°. ६ डी अग्लोचीत्. ७ प °दिच्छ्वीता°. ८ ई °ग्लुञ्चो°.

## अष्टमः सर्गः ।

नागाद्भीमोथोदपाद्यद्भुतश्रीर्बालोप्युच्चैरग्निवद्योत्यदीपि ।
अर्को वादीपिष्ट सोत्राजनिष्टाद्यो भीमः किं सोजनीन्द्रानुजो वा ॥१॥

१. अथानन्तरं नागान्नागराजाद्दुर्लभानुजाद्भीमो भीमाख्यः पुत्र उदपादि । यो भीम उच्चैरतिशयेन बालोपि तद्दिनजातोपीत्यर्थः । अद्भुतश्रीराश्चर्यकारितेजस्वितादिलक्ष्मीकः सन्नत्यदीप्यतिशयेन दिद्युते । अग्निवदर्को वादीपिष्टेति यथाग्निरर्को वा दिद्युते । अत एवोत्प्रेक्ष्यते । स तेजस्वितादिगुणैः सर्वत्र प्रसिद्ध आद्यः पूर्वो भीमः पाण्डवोजनिष्ट किं वा स इन्द्रानुजो विष्णुरजनि ॥ सर्गेस्मिन्विंशतिं वृत्तानि यावच्छालिनी । ततः परं स्वागता छन्दः ॥

तस्योत्पत्त्या निष्पितृणं व्यबुद्धात्मानं राजा नागराजोप्यबोधि ।
द्वारं लोकोपूर्यपूरिष्ट मध्यं हर्षं सद्योतायतायिष्ट गीतम् ॥ २ ॥

२. तस्य भीमस्योत्पत्त्या राजा दुर्लभ आत्मानं निष्पितृणं पितृणात्पूर्वजऋणान्निष्क्रान्तं व्यबुद्धामंस्त । तथा नागराजोप्यात्मानं निष्पितृणमबोधि । जायमानो हि नरो मुनिदेवतापितृणामृणबद्धः स्यात्तत्र ब्रह्मचर्यस्वाध्यायाभ्यामृषीणामनृणो भवति यागेन देवानां

---

१ बी निपितॄ°.

---

१ ए भनाम°. २ बी ई °अभिज्ञ°. ३ सी डी पूर्वभी°. ४ बी सी डी °दविद्°. ५ सी डी °विकान्तं. ६ ई °बीनाम°.

संवत्या पितृणामिति स्मृतिः । तथा लोकः सद्यो हर्षमतायि विस्तारितवानत एव द्वारं सिंहद्वारमपूरि व्यापत् । तथा मध्यं[1] प्रासादमध्यभागं चापूरिष्ट तथा गीतं चातायिष्ट ।

क्ष्माप्यायिष्टाप्यायि राजा मुदाभाज्यापाथोधेर्मङ्गलैश्च व्यजृम्भि ।
कीर्तिर्यच्चायिष्यते चेष्यते श्रीर्धर्मश्चेता चायितानेन वंशः ॥ ३ ॥

३. यद्यस्माद्धेतोरनेन भीमेन श्री राज्यादिलक्ष्मीश्चेष्यते[3] वर्धयिष्यते[4] । तथा धर्मश्चेता वर्धयिष्यते तथा संतानवर्धनाद्वंशश्चौलुक्यान्वयश्चायिता । अनेनास्य भाव्यर्थधर्मकामसंपदतिशय उक्तः । अत एव कीर्तिश्चायिष्यते । तस्माद्धेतोः क्ष्मा पृथ्वीप्यायिष्ट स्फीतोच्छ्वसितेत्यर्थः । महापुरुषोत्पत्तौ हि श्रीवृद्ध्यादिशुभसूचकाः क्ष्मोच्छ्वासादयः सदुत्पाताः स्युः । यद्वा । क्ष्मा पृथ्वीस्थो जनोऽप्यायिष्ट मुदोच्छ्वसिता । तथा राजा दुर्लभो मुदा कर्त्र्याभाज्याश्रितः । अत एवाप्यायि स्फीतीभूतः । तथा मङ्गलैश्च माङ्गलिक्यहेतुभिर्नान्दीतूर्यगीतादिभिश्चाजलधेर्जलधिमभिव्याप्य व्यजृम्भ्युल्लसितम् ॥

चेषीष्टायं नो गिरा चायिषीष्ट श्रेयोभिर्नश्चेति वाग्भिर्मुनीनाम् ।
रोदस्यावाचायिषातां तदानीमाचेषातां मन्त्रनादैश्च मन्द्रैः ॥ ४ ॥

४. अयं भीमो नोस्माकं गिरा चेषीष्ट वर्ध्यतां तथा नोस्माकं श्रेयोभिश्च पुण्यैरपि कर्तृभिश्चायिषीष्टेत्येवंविधाभिर्मुनीनां वाग्भिस्तदानीं पुत्रोत्पत्तिकाले रोदस्यावाचायिषातां व्याप्ते तथा मन्द्रैर्गम्भीरैर्मन्त्रनादैश्चाचेषाताम् ॥

---

१ बी °ध्यं प्रसा°. २ ई °ष्ट ॥ क्ष्मा°. ३ ए °श्चेष्यते. ४ ई °ते । त°. ५ डी °शयोक्तिः । अ°. ६ सी डी °ष्ट स्फीतो°. ७ ई °सिता । तथा रा°. ८ सी °नोच्छ्व°. ९ ई वर्द्धतां.

ग्राहिष्यन्ते विग्रहीष्यन्त उच्चैर्घानिष्यन्ते निर्हणिष्यन्त ईशाः ।
तेनेनासौ द्रक्ष्यते यैर्न भक्त्या यैर्दोःशक्त्याध्याजि दर्शिष्यते वा ॥५॥

एतेन क्ष्मा ग्राहिताब्धिर्ग्रहीता द्रष्टा तत्त्वं दर्शिता न्यायमार्गः ।
हन्तोत्सेको घानितांहःप्रचारः केनाप्येतौ यौ हि नाघानिषाताम् ॥ ६ ॥

यै रोदस्यावाहसातामवाग्रहीषातां न्यग्राहिषातां च दैत्यैः ।
पुण्याघे नादर्शिषातां निजान्यौ नाद्दक्षातां तेमुना घानिषीरन् ॥७॥

लक्ष्मीः साक्षादर्शिपीष्ट प्रसन्ना सा द्दक्षीष्ट ब्रह्मकन्यापि तुष्टा ।
धर्मश्चानुग्राहिषीष्ट ग्रहीषीष्टेन्द्रे मैत्री चेति खे वाक्तदाभूत् ॥ ८ ॥

५–८. तदा पुत्रजन्मकाले खे वागभूद्दैवी वाणी बभूवेत्यर्थः । कथमित्याह । असौ भीमो यैर्भक्त्या न द्रक्ष्यते वा यद्वा यैर्दोःशक्त्या बाहुबलेन हेतुनाध्याजि रणे दर्शिष्यते त ईशाः समर्था अनेन भीमेनोच्चैर्विग्रहीष्यन्ते योधयिष्यन्ते । ततः केचिद्ग्राहिष्यन्ते बद्धा लास्यन्ते । केचिच्च घानिष्यन्ते प्रहरिष्यन्ते । केचिच्च निर्हणिष्यन्ते व्यापादयिष्यन्ते । अत एव क्ष्मा ग्राहिता वशी करिष्यते । तथाब्धिर्ग्रहीता । तथा तत्त्वं परमब्रह्म द्रष्टा ज्ञास्यते । अत एव न्यायमार्गो दर्शिता । अत एव चोत्सेको गर्वो हन्तोच्छेत्स्यते । तथांहःप्रचारः पापविस्तारो घानिता । यावेतावुत्सेकांहःप्रचारौ हि स्फुटं केनापि नाघानिषातां दुर्जेयत्वान्नोच्छेदितौ । एतेन सर्वोपि भीमेन वाह्या आन्तराश्च द्विषो जेष्यन्त इत्युक्तम् । तथामुना भीमेन ते दैत्या घानिषीरन् हन्यन्तां यैर्दैत्यै रो-

---

१ डी °ण्यार्थे ना°.

---

१ ए ई °शा स°. २ सी डी °रन्न°. ३ बी °ख द्रष्ट. ४ बी ई °र्वेणापि.
५ सी डी °मेनैते. ६ बी °न्यन्त्या यै°.

दस्यावाहसातां लगुडादिप्रहारैराहते । अवाग्रहीपातां च कारागृहादौ निक्षेपेण प्रतिबद्धे च । न्यग्राहिषातां च सर्वस्वाद्य[1]पहारेण दण्डिते च । तथा नास्तिकत्वेन यैः पुण्या[2]घे धर्माधर्मौ नादर्शिषातां न ज्ञाते । तथा यैर्निजान्यावात्मपरौ नादृक्षातां बलाद्यवलेपान्धतया स्व[3]मात्रां परमात्रां च ये नाजानन्नित्यर्थः । अत एवानेन लक्ष्मीः प्रसन्नानुग्रहपरा साक्षाद्दर्शिषीष्ट दृश्यताम् । तथा सा प्रसिद्धा ब्रह्मकन्यापि सरस्वती च तुष्टा सा[4]क्षाद्दृक्षीष्ट । तथा धर्मश्चानुग्राहिषीष्टानुकूलाचरणेनानुगृह्यताम् । तथेन्द्रे शक्रविषये मैत्री च[5] ग्रहीषीष्टाङ्गीक्रियतामिति ॥

उदपादि । इत्यत्र[6] "जिच्ते°" [६६] इत्यादिना जिच्तलुक ॥

अत्यदीपि अदीपिष्ट । अजनि अजनिष्ट । अबोधि व्यबुद्ध । अपूरि अपूरिष्ट । अतायि अतायिष्ट । अप्यायि अप्यायिष्ट । इत्यत्र "दीपजन°" [६७] इत्यादिना[7] वा जिच्तर्लु[8]क ॥

व्यजृम्भि । अभाजि । इत्यत्र "भाव°" [६८] इत्यादिना जिच्तलुक ॥

चायिष्यते चेष्यते[9] । आचायिषाताम् आचेषाताम् । चायिषीष्ट चेषीष्ट । चायिता चेता । ग्राहिष्यन्ते विग्रहीष्यन्ते । न्यग्राहिषाताम् अवाग्रहीषाताम् । अनुग्राहिषीष्ट[10] ग्रहीषीष्ट । ग्राहिता ग्रहीता । दर्शिष्यते द्रक्ष्यते । अदर्शिषाताम् अदृक्षाताम् । दर्शिषीष्ट दृक्षीष्ट । दर्शिता द्रष्टा । घानिष्यन्ते नि[11]र्हणिष्य[12]न्ते । आघानिषाताम् आहसाताम् । घानिषीरन् । घानिता हन्ता । इत्यत्र "स्वरग्रह°" [६९] इत्यादिना वा जिट् ॥ हन्तेस्त्वाशिषि विकल्पोदाहरणं स्वयं ज्ञेयम् ॥

---

१ बी °घप्रहा°. २ डी °ण्यार्थे ध°. ३ डी स्वमन्य च. ४ डी साद्दृक्षी°. ५ सी डी च गृह्यं°. ६ बी °त्र "निच्ते°. ७ बी °ना जि°. ८ ई °लुक् वा ॥ व्य°. ९ सी डी °ते । अचा°. १० ए °ष्ट ग्राही°. ११ सी डी निर्हिणि°. १२ बी ई °न्ते । अघा°.

राज्ञोऽनेनाशय्यत क्रीडताङ्के दत्त्वा सार्धं दीव्यतां स्मात्ति चैषः ।
प्रासादाग्रेष्वभ्रमद्भासमानः स्प्रष्टुं सोऽग्रे भ्राम्यतो भ्रास्यमानान् ॥ ९ ॥

९ अनेन भीमेन क्रीडता राज्ञो दुर्लभस्याङ्क उत्सङ्गेऽशय्यतातिवल्लभत्वात्सुप्तम् । तथैष भीम उदारप्रकृतित्वात्सार्धं दीव्यतां राजबालकानां दत्त्वाम्रफलादि भक्षयति स्म च । तथा स भीमो भ्रासमानो रूपवेषादिना शोभमानो भ्रास्यमानानग्रे भीमाग्रे भ्राम्यतः केल्या गच्छतो राजकुमारकान्स्प्रष्टुं छोप्तुं प्रासादाग्रेष्वभ्रमत् । जातिरलंकारः ॥

कण्ठे निष्कः क्राम्यतो भ्लास्यमान-
स्यास्य क्रामन्भ्लासते स्मात्रुटच्छ्रीः ।
धन्वात्रुट्यत्कान्ति संक्षिप्य दत्तं
मन्ये सख्यं लष्यताखण्डलेन ॥ १० ॥

१०. भ्लास्यमानस्य रूपादिना शोभमानस्यास्य भीमस्य कण्ठेऽत्रुटच्छ्रीरनेकवर्णमणिखचितत्वेन संपूर्णशोभो निष्कः कण्ठालंकारो भ्लासते स्म । कीदृक्सन् । क्रामंश्चलन् । यतः किंभूतस्यास्य क्राम्यतो बालत्वेन चपलस्वभावत्वादितस्ततश्चलतः । सश्रीकत्वाद्द्वितीयेन्दुवक्रत्वाच्चोत्प्रेक्षते कविः । मन्ये सख्यमनेन सह मैत्रीं लष्यतेच्छताखण्डलेनेन्द्रेणात्रुट्यत्कान्ति अखण्डत्वेन सश्रीकं धन्व धनुः संक्षिप्य लघूकृत्य दत्तमर्थादस्मै ॥

द्राक्संयस्यत्यश्वशालाप्लवङ्गे त्रस्यद्यस्यत्क्राम्यदन्यार्भकेषु ।
नैषोऽक्लामन्नात्रसन्नायसच्च द्रष्टुं केल्यासंयसंश्चालषत्तम् ॥ ११ ॥

११. अश्वशालाप्लवङ्गेऽश्वशालायां यः प्लवङ्गोऽश्वानां चक्षुर्दोषाभावाय

१ सी डी °मद्भ्लाम°. २ ए लक्ष्यता°.

१ बी सी भ्लासमा°. २ ए बी क्रामतो. ३ ए लक्ष्यते. ४ ई °यां प्ल°.

वानरस्तस्मिन्संयस्यति बालकाभिमुखधावनार्थमुद्यच्छति सति द्राक् त्रस्यन्तो बिभ्यतोत एव यस्यन्त आत्मरक्षायै प्रयतमानास्तथा क्लाम्यन्तो दीनीभवन्तोन्ये भीमाद्व्यतिरिक्ता येर्भकास्तेषु तथा सत्स्वेष भीमो नात्रसत्। अत एव नाक्लामन्नायसच्च किं त्वसंयसन्नप्रयत्नवान्सन्केलया कौतुकेन तं प्लवङ्गं द्रष्टुमलपदैच्छन् ॥

अशय्यत। इत्यत्र "क्यः शिति" [७०] इति क्यः ॥

क्रीडता। इत्यत्र "कर्तरि°" [७१] इत्यादिना शव् ॥ अनन्य इति किम्। भक्ति ॥

दीव्यताम्। अत्र "दिवादेः श्यः" [७२] इति श्यः ॥

भ्रास्यमानान् भ्रासमानः। भ्लास्यमानस्य भ्लासते। भ्राम्यतः अभ्रमत्। क्राम्यतः क्रामन्। क्लाम्यन् अक्लामत्। त्रस्यत् अत्रसत्। अत्रुट्यत् अत्रुटन्। लष्यता अलषत्। यस्यत्। अयसत्। संयस्यति असयसन्। इत्यत्र "भ्रास-भ्लास°" [७३] इत्यादिना वा श्यः ॥

कुष्यत्कूर्चः कुष्यमाणावतंसोरज्यद्राजारज्यतामात्यवर्गः।
संसिन्वानेङ्केन तस्मिन्प्रसुन्वन्हर्षं कान्वा नानुरागो निराक्ष्णोत् ॥ १२ ॥

१२. तस्मिन्भीमेङ्केनोत्सङ्गेन सह संसिन्वाने संबद्धी भवति राजा दुर्लभोरज्यदरजद्रागयुक्तं राजानमकरोद्भीमः। प्रेमवशादनायासेन राज्ञो रञ्जितत्वात्प्रयोक्ता विवक्ष्यते नामुं भीमोरजत्कि तु स्वयमेवारज्यत्तथामात्यवर्गश्चारज्यत स्वयमेव रागयुक्तोभूत्। कीदृक्सन्। कुष्यत्कूर्चः कुष्णात्याकर्षति बालस्वभावेन कूर्चं भीमः। प्रयोक्ता विवक्ष्यते नामुं

१ ए सी °नेकेन.

१ डी °माद्यति°. २ ए बी सी डी °क्लम्यन्ना°. ३ बी °यसन्न°. ४ ई °न्स-केल्या° ५ सी °ना सिव् ६ ए बी शव् ॥. ७ बी सी °वादे श्य.. ८ बी °व्यत भ°. ९ ए °ने सह स°. १० सी °युक्ता°.

भीमः कृष्णाति किं तु स्वयमेव[1] कृष्यति अनरि कृष्यन्स्वयमेवाकृष्यमाण. कूर्चो[2] दाढिका[3] यस्य स । तथा कृष्यमाणावतंसः स्वयमाकृष्यमाणमूर्धमाल्यः । कूर्चेवतंसे चाङ्कस्थेन भीमेनाकृष्यमाणे राजामात्याश्च हर्षेण रञ्जिता इत्यर्थः । वा यद्वा तस्मिन्नङ्केन ससिन्वाने हर्षं प्रसुन्वन्संदधानो वर्धयन्नित्यर्थः । अनुरागस्तद्विषय आन्तरस्नेहः कान्न निराक्ष्णोन्न व्याप्नोत्कि तु सर्वा[4]नपीत्यर्थः ॥

अक्षन्प्रौढिं सोथ शृङ्गाण्यतक्ष्णोक्रीडैणानामभ्यतक्षन्नखांश्च ।

चापेस्तभ्नाच्चैप पूर्वां दृशं चा[1]स्तभ्नोत्स्तुभ्नोति स्म नोच्चैर्गुरौ स्वम् ॥ १३ ॥

१३. अथ प्रौढि शरीरोपचयमक्षन्व्याप्नुवन्स भीमश्चलैर्लक्ष्य[5][6]व्यधनाभ्यासाद्यर्थं मृगयाचिकीर्षया क्रीडैणानां हस्तलेयमृगाणां शृङ्गाण्यतक्ष्णो[7]च्चिच्छेद नखांश्च खुराग्रभागांश्चाभ्यतक्षन् । शृङ्गच्छेदे ह्येषां शरीरे कार्ष्ण्यं न स्यात् । मृगीसादृश्यं च स्यात्ततो मृग्य एता इति[8] ता नारण्यमृगा अभिसरन्ति । वर्धितनखच्छेदे त्वेषामस्खलिता गतिः स्यादिति मृगयार्थिनो हस्तलेयकृष्णसारमृगाणां शृङ्गाणि नखांश्च छिन्दन्तीति स्थितिः । तथैप भीमश्चलंलक्ष्य[9]मृगादि[10]वधा[11]र्थं चाप उपचाराद्धनुर्ग्रहविषये पूर्वां[12] च कलाचिकां चास्तभ्नान्निश्चल्यकरोद्दृशं चास्तभ्नोन्निश्चलां स्थापितवान् । एतदपि कुत इत्याह । यतो गुरौ विद्याचार्य उच्चैरत्यन्तं स्वमात्मानं[13] न स्तुभ्नोति स्म न स्तब्धं चक्रे विनीतोभूदित्यर्थः । यद्वा प्रौढिमक्षन्स भीमः क्रीडैणानां[14] शृङ्गाणि नखांश्च

१ ए सी डी चास्तुभ्नो°

१ ई °मे कु°. २ ए कूर्चो दा° ३ ए दाडिका ४ सी डी °र्वान्नपी° ५ ई °लह्लक्ष्य° ६ घी °लक्षव्य° ७ सी डी °तक्ष्यत । शृ° ८ ए सी °ति ना°. ९ ए °लक्ष्मृ°. १० सी डी ई °दिव्यधा°. ११ सी °धार्ये चा°. १२ बी सी डी °र्वां क°. १३ सी °न ते स्तु°. १४ डी क्रीडेणा°.

वाणैश्चिच्छेद यत एष चापे पूर्वां दृशं च निश्चलीं चक्रे । एतदपि कुत इत्याह । यतो गुरौ स्वं न स्तब्धं चक्रे गुरौ विनयेन धनुर्वेदोक्तकलाचिकादृढस्थापनादौ सद्भ्यस्तत्वाद्यालुत्वाच्च क्रीडामृगशृङ्गादि सूक्ष्मं क्रीडामृगनखादि सूक्ष्मतरं च निर्जीवमेव चलमपि लक्ष्यमसौ शरैर्विव्याधेत्यर्थः ॥

**इष्वास्तुभ्नाद्वेध्यमुर्व्या सहासावस्कभ्नोच्च स्कभ्नतो मल्लयुद्धे ।**
**अस्कुभ्नात्तं स्कुभ्नुवानं च नान्यः स्कुन्वानेनानेन नैवास्कुनाच्च ॥ १४ ॥**

१४. असौ भीम इष्वा वाणेन कृत्वोर्व्या सह वेध्यं लक्ष्यमस्तुभ्नान्निश्चलयकरोत् । महाबलत्वाद्वेध्यं भूमिं च युगपद्भिन्नवानित्यर्थः । तथा मल्लयुद्धे स्कभ्नतः पाशबन्धादिना बध्नतो मल्लानस्कभ्नोच्च । न च न पुनस्तं भीमं स्कुभ्नुवानं बध्नन्तमन्यो मल्लोस्कुभ्नात् । तथा स्कुन्वानेन पादादिना लवणगोण्यादिमहाभारमुद्धरमाणेनानेन भीमेन सहान्यो नैवास्कुनाच्च नैवोद्धृतवांस्तस्मादन्यस्य सर्वस्याप्यबलत्वात् ॥

कुष्यत् कुष्यमाण । अरज्यत् अरज्यत । इत्यत्र "कुषिरञ्जेः" [ ७४ ] इत्यादिना वा परस्मैपदं तत्सन्नियोगे श्यश्च ॥

प्रसुन्वन् । संसिन्वाने । अत्र "स्वादेः श्नुः" [ ७५ ] इति श्नुः ॥

निराक्ष्णोत् अक्षन् । इत्यत्र "वाक्षः" [ ७६ ] इति वा श्नुः ॥

अतक्ष्णोत् अभ्यतक्षत् । इत्यत्र "तक्षः स्वार्थे वा" [ ७७ ] इति वा श्नुः ॥

अस्तभ्नात् अस्तभ्नोत् । अस्तुभ्नात् स्तुभ्नोति । स्कभ्नतः अस्कभ्नोत् ।

---

१ सी डी स्कुभ्नाने°. २ ई °नेमाने°.

---

१ सी डी स्व स्तब्ध न च°. २ डी °गन°. ३ बी लक्षम°. ४ ए लक्षम°. ५ सी डी नपु°. ६ बी स्कुभ्नवा°. ७ ए °व । अथा. ८ सी डी स्कुभ्नाने°. ९ ए °श्च ॥ असु° १० ए मस्तुभ्नोत् । अस्तुभ्ना°.

अस्कुभ्नात् स्कुभ्नुवानम् । अस्कुनात् स्कुन्वानेन । इत्यत्र "स्तम्भू°" [ ७८ ] इत्यादिना श्ना श्नुश्च ॥

क्रीणन्[1]प्रीणन्स्वैर्गुणैः क्ष्मां गृहाणारींस्तेजोभिर्भृज्जमानस्तुदंस्त्वम् ।
तीर्थं रुन्धे कर्मपाशान्भनज्मीत्यूचे राज्ञा सोथ कुर्वन्सदाज्ञाम् ॥१५॥

१५. अथ सदाज्ञां कुर्वन्स भीमो राज्ञा दुर्लभेनोचे । कथमित्याह । हे भीम क्ष्मां गृहाणाङ्गीकुरु । कीदृक्सन् । स्वैर्निजैर्गुणैः शौर्यन्याया-दिभिः कृत्वा क्ष्मां प्रीणन्नत एव क्रीणन्[2]वशीकुर्वंस्तथारींस्तेजोभिः प्रतापैर्भृज्जमानः सन्तापयन्नत एव तुदन्पीडयन् । अहं तु तीर्थं रुन्ध आ[3]वृणोमि सेव इत्यर्थः । तथा तीव्रतपोनुष्ठानात्कर्मपाशान्[4]मोहनीयादिकर्मबन्धनानि भ[5]नज्मि त्रोटयामीति ॥

व्यातन्वानोश्रूण्यमन्वान एतन्नम्रो भ[2]क्त्येत्यब्रवीद्राजपुत्रः ।
तातासर्जि स्रक्ष्यते[3] सृज्यतेन्यां सर्वां[6] भक्तिं न त्विदं ते जनोयम् ॥ १६ ॥

१६. राजपुत्रो भीम इत्यब्रवीत् । कीदृक्सन् । अश्रूणि नेत्रजलानि व्यातन्वानो समाधिना विस्तारयंस्तथैतद्राजोक्तममन्वानोप्रतीच्छंस्तथा भक्त्या नम्रः । यदब्रवीत्तदाह । हे तातायं मल्लक्षणो जनस्ते तर्वान्यां सर्वां भक्तिमसर्ज्यकार्षीत्स्रक्ष्यते करिष्यति सृज्यते करोति च । न तु न पुनरिदं क्ष्माग्रहणमसर्जि स्रक्ष्यते सृज्यते च ॥

क्री[7]णन् । प्रीणन् । इत्यत्र "क्र्यादेः" [ ७९ ] इति श्ना ॥

गृहाण । इत्यत्र "व्यञ्जनाद्°" [ ८० ] इत्यादिना श्नायुक्तस्य हेः स्थान आनः ॥

---

१ ए क्रीडन्प्री°. २ ए भक्तेत्य°. ३ ए बी °ते स्रज्य°.

---

१ ए °त्र "मम्भू°. २ ए क्रीडन्व°. ३ ए आदृणो° ४ ए °शामोह°. ५ बी भजन्मि त्रो°. ६ ई °वाज्ञा स°. ७ ए क्रीडन् ।.

तुदन् । भृज्जमानः । अत्र "तुदादेः शः" [ ८१ ] इति शः ॥

रुन्धे । भनज्मि । इत्यत्र "रुधाम्°" [ ८२ ] इत्यादिना स्वरात्परः श्नः । प्रकृतिनस्य च लुगन्वाचीयते ॥

कुर्वन् । व्यातन्वानः । अमन्वानः । अत्र "कृग्°" [ ८३ ] इत्यादिना–उः ॥

असर्जि । सृज्यते । स्रक्ष्यतेयं भक्तिम् । अत्र "सृजः°" [ ८४ ] इत्यादिना कर्तरि ञिक्यात्मनेपदानि ॥

एतेन क्ष्मां गृहाणेति राज्ञा यदुक्तं तन्निपिध्य[1] तीर्थं रुन्धे कर्मपाशान्भनज्मीत्यनेन तपोङ्गीकरणं यत्सूचितं तत्फलं राज्येप्युपपत्त्या दर्शयंस्तपोङ्गी[3]करणं वृत्तद्वयेन निषेधन्नाह ।

**ये तप्यन्ते तत्तपस्तेपिरे वा तान्पातस्तेकारि तीव्रं तपो हि ।**
**कारिष्यन्ते सिद्धयोथ क्रियन्तेपाचिश्रेयः पच्यते पक्ष्यते वा॥१७॥**

१७. हे राजंस्तत्तीर्थसेवातीव्रत्वादिना प्रसिद्धं तपो व्रतं ये तपस्विनस्तप्यन्ते कुर्वन्ति तेपिरे वा चक्रुर्वा । उपलक्षणत्वात्तप्स्यन्ते वा तान्पातो रक्षतस्ते तव । हि यस्मात्तीव्रं तपोकारि अकार्षीस्तीव्रं तपस्त्वम् । अनायाससाध्यत्वात्प्रयोक्त्रैवं विवक्षितवान्नायमकार्षीत्किं त्वकारि तपः स्वयमेव । तपस्विरक्षकत्वेन तत्तपोविभागित्वात्ते स्वयमेव तपो निष्पन्नमित्यर्थः । तस्मात्सिद्धयो मनोरथपरिपूर्तयस्तव कारिष्यन्ते करिष्यसि त्वं सिद्धीः । कारिष्यन्ते सिद्धयः स्वयमेव । निष्पत्स्यन्ते स्वयमेवेत्यर्थः । अथ तथा सिद्धयः क्रियन्ते स्वयमेव निष्पद्यमानाः सन्तीत्यर्थः । उपलक्षणत्वात्स्वयमेव निष्पन्नाश्च । वाथ वा युक्तमे[6]वैतद्यत्सिद्धयः कारिष्यन्ते क्रियन्तेकारिषत चेति । यतस्तव श्रेयस्तपोजनितं पुण्यमपाचि अपाक्षीः श्रेयस्त्वम् । अपाचि श्रेयः स्वयमेव स्वयं परि-

---

१ प °न्वादीय°. २ प °ध्य तर्थ. ३ ई °ङ्गीकार वृ°. ४ बी सी डी °धयन्ना°. ५ सी डी रक्ष्यत°. ६ ई °मेवेत°. ७ सी° रिष्यत, डी °रिष्यन्त चे°.

पक्कम । एंव पच्यते पक्ष्यते च । कृतं क्रियमाणं करिष्यमाणं च श्रेयस्त्वाभीष्टफलदानोन्मुखमभूद्वर्तते भविष्यति चेत्यर्थः । एतेन सर्वेण राज्ञस्तपोङ्गीकारो निषिद्धः ॥

तद्वद्दुग्धे गौस्तवासौ वसूनि स्वामिन्यद्वद्वेनसूनोरदुग्ध ।
हृद्विड्ढोकोपक्त ते क्षत्रवृत्त्या नो वारुद्धामुत्र लोकः किमेतत् ॥१८॥

१८. यद्वद्यथा वेनसूनो पृथुराजस्य गौः पृथ्वी वसूनि[2] रत्नानि द्रव्याणि त्वादुग्धाधुक्षद्[3]दुग्ध वा गां वसूनि वेनसूनुः । स एवं विवक्षितवान्नाहं गामधुक्षि किंत्वदुग्ध गौः स्वयमेव न्यायपालनेन महर्द्धिकत्वात्स्वयमेव क्षारितवती तद्वत्तथा हे स्वामिंस्तवासौ गौर्वसूनि दुग्धे स्वयमेव क्षरति । तथा ते तव क्षत्रवृत्त्याभङ्गशौर्यादिना क्षत्रियाचारेण कृत्वा द्विड्ढोको हृद्धृदयमपक्त । पचिरत्र द्विकर्मकोन्तर्भूतण्यर्थो वा । अपाक्षीत्क्षत्रवृत्तिर्द्विड्ढोकं हृत । प्रयोक्त्रैवं विवक्ष्यते नेयमपाक्षीत्किं तु द्विड्ढोको हृत्स्वयमेवापक्त[6] स्वयं संतापितवानित्यर्थः । नो वा न च क्षत्रवृत्त्या कृत्वा तेमुत्र लोकः परलोकोरुद्धं नारौत्सीन्नारुधद्वा । निवर्तमानं न न्यवीवृतत्क्षत्रवृत्तिरमुत्र लोक[10] नो वारुद्ध स्वयमेव । तस्मात्किं किमर्थमेतद्राज्यत्यागेन तपोग्रहणम् । तपोग्रहणं हि निःसपत्नमहर्द्धिकभूमिस्वामित्वरूपेहलोकफलार्थं स्वर्गापवर्गादिपरलोकफलार्थं च क्रियते । तच्च तव सर्वं राज्यस्थस्याप्यप्रतिहतमस्ति तस्मात्किमनेन तपोग्रहणेनेत्यर्थः ॥

ये तपस्तप्यन्ते । तेपिरे । अत्र "तपेः॰" [ ८५ ] इत्यादिना कर्तरि ञिक्यात्मनेपदानि ॥

१ सी °ड्ढोक्योप°.

१ सी डी एव प°. २ सी डी °नि द्रव्याणि रत्नानि वा°. ३ सी डी °दधुग्ध. ४ सी °सूनु म एव वि किं त्वदु°. ए सूनुरदु°. ५ ई °दुग्ध गौः. ६ बी °यं हृदय स°. ७ सी °द्ध नोरौ°. ८ ई °द्धाऽनि°. ९ बी °न मन्य°. १० सी °क नावा°.

अकारि तपः । क्रियन्ते कारिष्यन्ते सिद्धयः । अत्र 'एकधातौ°' [८६] इत्यादिना ञिक्यात्मनेपदानि ॥

श्रेयोपाधि । पच्यते । पक्ष्यते । अपक्त द्विड्लोको हृत् । दुग्धे । अदुग्ध गौर्वसूनि । इत्यत्र "पचिदुहेः" [ ८७ ] इति ञिक्यात्मनेपदानि ॥

अपक्त द्विड्लोको हृत् । अदुग्ध गौर्वसूनि । इत्यत्र "न कर्मणा ञिच्" [ ८८ ] इति न ञिच् ॥

नो वारुद्धामुत्र लोकः । अत्र "रुधः" [ ८९ ] इति न ञिच् ॥

अथ भीमो राज्ये स्वमनधिकारिणमेवाह ।

को वाकारि व्याकृतेति स्मृतिः का पुत्रे राज्यं यत्सति भ्रातरीशे[1] ।
मैवं कार्षीगौरदुग्ध स्वयं चेद्दुग्धानर्हे सा हि नादोहि तात ॥१९॥

१९. हे तात भ्रातरीशे राज्यधुराधरणक्षमे सति विद्यमाने यत्पुत्रे राज्यं भवतीत्येवंविधा स्मृतिः का व्याकृत । व्याकार्षीदपप्रकटदेवंविधां स्मृतिं स्मृतिकारः । प्रयोक्त्रैवं विवक्ष्यते नायं व्याकार्षीत्किं त्विति स्मृतिः स्वयं व्याकृत । न काप्येवंविधा स्मृतिः प्रकाशते सेत्यर्थः । वा यद्वा भ्रातरीशे सति कः पूर्वो नृपः । इतिरत्रापि योज्यः । इतीदृशस्त्वत्सदृशः पुत्रे राज्यस्य स्थापयितेत्यर्थः । अकारि अकार्षीदित्येवंविधं पुत्राय राज्यस्य दातारं कश्चिदमात्यादिरुपदेशदानादिना । स एवं विवक्षितवान्नाहमकार्षं किं त्विति स्वयमेवायमकारि भ्रातरि समर्थे सति पुत्राय राज्यस्य दाता त्वमिव न कोपि पूर्वनृपोभूदित्यर्थः । एतेनात्मनो राज्यानर्हत्वमुक्तम् । तस्मादेवमिदं मह्यं राज्यसमर्पणं मा कार्षीः । नन्वेवं कृते को दोष इत्याशङ्क्य दृष्टान्तोपदर्शनद्वारेण दोषमुद्भावयति ।

---

१ बी °शे । मेव.

---

१ प ध °प । ब°. २ ई °विकरण°. ३ सी डी °णमाह°. ४ ई °र्षीदेवं°.

गौरित्यादि । हि यस्माद्धेतोर्दुग्धानर्हे उदररोगादिदोषेण दुग्धपानायोग्यवत्सादिनिमित्तं निमित्तसप्तमीयम् । चेद्यद्यपि गौर्धेनुः स्वयमदुग्धाधुक्षद्क्षारयद्वा वत्स एव न । किं तु स्वयमदुग्ध वत्सस्नेहादिना स्वयं क्षरितवतीत्यर्थस्तथापि सा गौर्नादोहि पूर्ववत्कर्मकर्तृत्वविवक्षायां तत्त्वतो न स्वयं क्षरितवती यदर्थमदुग्ध तस्यायोग्यत्वात् । एवं भ्रातरि समर्थे सति राज्यानर्हाय मह्यं राज्यं दत्तमप्यदत्तमित्यर्थः ॥

व्याकृत अकारि । अदुग्ध अदोहि । इत्यत्र "स्वरदुहो वा" [ ९० ] इति वा ञिच्[2] ॥

**राज्ञाथोक्तो नागराजोप्यतप्तोचे च ज्येष्ठो यत्तपोतप्त पार्थः ।**
**नो राज्यायातप्त केनापि पश्चाद्भ्रात्रायं तत्किं जनोद्यान्वतप्त ॥२०॥**

२०. अथ भीमोक्त्यनन्तरं राज्ञा दुर्लभेनोक्तो राज्याङ्गीकाराय भणितो नागराजोप्यास्तां भीम इत्यप्यर्थोतप्त राजा नागराजमताप्सीदेवं न । किं तु स्वयमेवात्मासमाधिना संतप्तस्तथोचे च । किमित्याह । यदिति यदार्थे । यदा ज्येष्ठः पार्थो युधिष्ठिरस्तपो व्रतमतप्ताकार्षीत्तदा पश्चात्केनापि भ्रात्रा भीमादिना राज्याय नो अतप्त नात्यन्तमुत्कण्ठितं किं तु सर्वैरपि तपश्चरितमित्यर्थः । तत्तस्माद्धेतोरयं जनो मल्लक्षणोद्य साप्रतं भ्रात्रा दुर्लभेन किमन्वतप्त[3] किमिति राज्यभारारोपेणानुताप्यते[4] स्म । एतेनाहं राज्य नाङ्गीकरिष्ये कि तु भ्रात्रा सह तपोनुचरिष्यामीत्युक्तम् ॥

कर्मकर्तरि । नागराजोप्यतप्त ॥ कर्तरि । अतप्त तपः पार्थः ॥ भावे । केनापि नो अतप्त ॥ कर्मणि । अन्वतप्तायं भ्रात्रा[5] । अत्र "तपः कर्तृ°" [ ९१ ] इत्यादिना न ञिच् ॥

---

१ डी °यमेवादु°. २ बी सी ञिच् ॥. ३ सी डी °प्तमि°. ४ ई रोपणाद्य°. ५ एबी °त्रा । त°.

नेत्यचीकरत न व्यकृतायं नोदशिश्रियत किं तु तदाभ्याम् ।
अभ्यषेचि स विनीय सुतः प्रास्तोष्ट खं कुसुमवर्षणतश्च ॥ २१ ॥

२१. अयं नागराज इति पूर्वोक्तप्रकारेण नाचीकरत नाकार्षीदिति प्रकार इमं राजानं प्रयोक्तैवं विवक्ष्यते नायं नाकार्षीत्किं तु नाकार्ययं स्वयमेव तं स्वयमक्रियमाणमिति प्रकारः । प्रायुं[1]क्त णिगि नाचीकरदिति प्रकार इमं राजानं पुनः प्रयो[2]क्तैवं विवँ[3]क्षते एवं न किं त्विति नाचीकरतायं स्वयमेव । यद्वा नाकार्षीदिति प्रकार इमं राजानं तमकृतवन्तं दुर्लभः प्रायुँ[4]क्त णिगि नाचीकरदिति प्रकारेणेमं राजानं दुर्लभः स एवं विवक्षितवाँ[5]न्नाहं नाचीकरं न चेति प्रकारो नाकार्षीत्किं त्विति नाचीकरतायं स्वयमेवोक्तरीत्यायं स्वयमेव राजा नाभूदित्यर्थः । राज्यँ[6]दानप्रस्तावादत्र राजेति गम्यते । तथेत्युक्तप्रकारेणायं न व्यकृत विकरोतिर्यत्[7]नानेन्तर्भूतण्यर्थः कर्मस्थक्रियः न व्यकार्षीन्न विकृत्य(त्या?)कार्षीदिति प्रकार इममेवं न किं तु न व्यकृतायं स्वयमेवोक्तरीत्या राज्यादिवाञ्छोत्थविकारवान्नाभूदित्यर्थः । तथेति नोदशिश्रियत नोदशिश्रियँ[8]न्नौद्धत्य(त्या)कार्षीदिति प्रकार इममेवं न किं तु नोदशिश्रियतायं स्वयमेव । उक्तरीत्या बृहद्भ्रातुरुचितप्रतिपत्तिकरणान्नोद्धतोभूदित्यर्थः । किं तु तदाभ्यां दुर्लभनागराजाभ्यां स सुतो भीमो विनीय मधुरालापशिक्षया संबोध्याभ्यषेचि राज्येभिषिक्तः । तथा खं व्योम कुसुमवर्षणतः पुष्पवर्षात्प्रा[9]स्तोष्ट च । अन्तर्भूतण्यर्थत्वात्सकर्मकत्वे प्रास्तावीत्कुसुमवर्षणं कर्तृ खं कर्म । एवं न किंतु प्रास्तोष्ट च खं स्वयमेव । देवताप्रभावात्पुष्पवर्षेण क्षरितं चेत्यर्थः । चस्तुल्ययोगितार्थः । यदैवं[10] सोभ्यषेचि

१ बी ई °युक्त णि° २ बी °योक्तैवं. ३ बी सी डी °वक्ष्यते. ४ बी ई °युक्त णि°. ५ बी °वान्नहं. ६ सी डी °ज्यप्रदा°. ७ ए सी डी ई °यत्नोद°. ८ ए °काषायश्चि°. ९ बी सी °त्प्रास्तोष्ट. १० डी °व स ताभ्यामभ्य°.

तदैव कुसुमवर्षणतः खं प्रास्त्नोष्टेत्यर्थः। एतेनास्य राज्याभिषेकेऽतिशुभनिमित्तोक्तिः ॥

णि । नाचीकरतायम् ॥ स्नुं । प्रास्त्नोष्ट खम् ॥ श्रि । नोदशिश्रियतायम् ॥ आत्मनेपदाकर्मक । न व्यकृतायम्। अत्र "णिस्नु°" [ ९२ ] इत्यादिना न ञिच् ॥

राट्तथालमकृताभिनवः सोऽलंकरिष्यत इतो न यथान्यः ।
स्वःपुरे पुनरवूभुषताद्योऽथानुजः सममलंकुरुते स्म ॥ २२ ॥

२२. सोऽभिनवो राड्राजा भीमस्तथालमकृतालमकार्षीत्। तथा प्रकारः । तमेवं नालमकृत स स्वयमेव राज्यश्रिया तथा रेज इत्यर्थः । यथेतो भीमादन्योऽपरोऽभिनवो राड्नालंकरिष्यते नालंकरिष्यत्यन्यं यथा प्रकार एवं न नालंकरिष्यतेऽन्यः स्वयमेव न शोभिष्यत इत्यर्थः । उपलक्षणत्वाद्यथान्यो न शुशुभे न शोभते च। सर्वराजोत्कृष्टो राजाभूदित्यर्थ.। तथाद्यः पूर्वो राट् पुनर्दुर्लभः स्वःपुरे स्वर्गनगरेऽवूभुषत । आद्यराजं स्वःपुरं कर्त्रवूभुषत्स्वमहर्ध्यालमकार्षीदेवं न स्वयमेवावूभुषत रेज इत्यर्थः । अथ तथानुजो नागराजः स्वःपुरे समं सहालंकुरुते स्म । कर्मकर्तृविवक्षा पूर्ववत् । दुर्लभनागराजौ स्वर्गे महर्द्धिकौ देवौ सहचरावभूतामित्यर्थः ॥

स्मात्र भूमिभुजि भूषयते भूर्भूषयिष्यत इवाधिवलि द्यौः ।
कीर्तिरत्र च जयिन्यचिकीर्षिष्ट स्म चाम्बुधि चिकीर्षत ऋद्धिः ॥ २३ ॥

२३. अधिवलि वलिदैत्ये रक्षकत्वेनाधारे रक्ष्यत्वेनाधेया द्यौः

१ ए सी जयन्य°.

१ सी डी °केशु°. २ डी स्नु । प्रस्नो°. ३ बी राजमी°. ४ बी सी डी °व ना°. ५ ए °न्योन्यशु° ६ सी डी तदाद्य.. ७ बी °भ. स्वपु°. ८ सी डी °षत्। आ°. ९ सी °ज स्वपु°. १० डी °षत् रे°. ११ सी °जः स्वपु°. १२ ए रक्षावे°.

स्वर्गो यथा भूषयिष्यते । बलिरिन्द्रो भविष्यतीति प्रसिद्धेर्भूषयिष्यति द्यां बलिरेवं न । स्वयमेव भूषयिष्यते द्यौर्बलेः सुप्रभुत्वाच्छोभिष्यत इत्यर्थः । तथात्र भूमिभुजि भीमे न्यायरक्षकत्वेनाधारे वर्तमाना भूर्भूषयते स्म । कर्मकर्तृविवक्षा प्राग्वत् । अत एवात्र भूमिभुजि सति जयिनी सर्वकीर्त्युत्कृष्टत्वेन विजयमाना कीर्तिश्चैतद्दानपुण्यकृता ख्यातिश्चाम्बुधि समुद्रमभिन्याप्याचिकीर्षिष्ट[1] । अचिकीर्षीदयं कीर्तिमेवं न । किं त्वचिकीर्षिष्ट कीर्तिः स्वयं भवितुमैषीद्विस्तृतेत्यर्थः । तथा ऋद्धिश्चैतदीया भूसैन्यादिसंपच्चाम्बुधि चिकीर्षते स्म । पूर्ववत्कर्मकर्तृविवक्षा ॥

यश्चकीर्ष्ट सुयशोस्य चिकीर्षिष्यन्त आद्यचरितानि तदुच्चैः ।
अञ्जसा रिपुगणश्च चिकीर्षीष्टेति तत्र किरते स्म नृणां वाक् ॥२४॥

२४. तत्र भीमविषये नृणां वाक्किरते स्म । किरन्ति स्म वाचं नर एवं न । किं तु स्वयमेव किरते स्म प्रससारेत्यर्थः । किंभूता । यद्यस्माद्धेतोरस्य भीमस्य सुयशः पराक्रमकृता ख्यातिर्व्यकीर्ष्ट । व्यकारीत्सुयशोयमेवं न । किं तु स्वयं व्यकीर्ष्ट सुयशः सर्वत्रेतस्ततो गतमित्यर्थः । तत्तस्मादुच्चैरतिशयितान्याद्यानां पूर्वेषां रामचन्द्रादीनां चरितानि दैत्योच्छेदसर्वदिग्जयादीनि चरित्राण्यस्य चिकीर्षिष्यन्ते । चिकीर्षिष्यत्याद्यचरितान्ययमेवं न । किं तु स्वयमेवाद्यचरितान्यस्य चिकीर्षिष्यन्ते भवितुं वाञ्छिष्यन्ति । यशोविस्तारादयं रामचन्द्रादिपूर्वनृपतुल्यो भविष्यतीत्यर्थः । इत्येवंविधा । अग्रेतन इतिरत्रापि योज्यः । तथास्य रिपुगणोञ्जसा सामस्त्येन चिकीर्षीष्ट । चिकीर्याद्विक्षिप्यादिस्याद्रिपु-

१ प °र्षिट कीर्तिः. २ प °भा रुद्धिश्चै°. ३ प °म्बुद्दि चि° बी °म्बुधिं चि°. ४ बी वाकिर°. ५ प °यं वाकी°. ६ प °त्यो सर्वेच्छे°. ७ प °दिग्गया°. ८ सी °ष्यन्ते भवितु वान्छिष्यन्ति ।. ९ डी °प्यादि°.

गणमयमेवं[1] न । किं तु स्वयमेव चिकीर्षीष्ट स्वयमेव विक्षेपविषयो [2]भूयादित्येवंविधो[3] च । एतेनात्यन्तं जनानुरागोक्तिः ॥

यद्यगीर्ष्ट गिरते परिगीर्षीष्टेत्यकारयत सिन्धुषु नीतिः ।
न प्रजासु पुनरुच्छ्रयते स्मास्मिन्कलिर्विकुरुते स्म न चापि ॥२५॥

२५. अस्मिन्भीमे राज्ञि सत्यगीर्ष्ट । अगारीन्महामत्स्यो मत्स्यान्तरमेवं न । किं त्वगीर्ष्ट स्वयमेव प्रकरणान्मत्स्यः स्वयमेव गलविवरेणाधो गतः । तथा गिरते[4] तथा परिगीर्षीष्ट । उभयत्रापि पूर्ववत्कर्मकर्तृविवक्षायां मत्स्य. स्वयमेव गलविवरेण संचरति सचर्योष्टेत्यर्थः । इत्येवंविधा भूतवर्तमानभाविकालत्रयविषया नीतिः स्वजातेरप्यबलिनो बलिना पराभवरूपो[5] [6]मात्स्यो न्यायो यदि[7] परं सिन्धुष्वब्धिष्वकारयत । अकुर्वन्निति नीतिं मत्स्यास्तान्कुर्वतोनुकूलाचरणेन सिन्धवः प्रायुञ्जत । णिग् । इति नीतिमकारयन्मत्स्यैः सिन्धवः । प्रयोक्तैवं विवक्षितवान्न सिन्धवो[8] [9]मत्स्यैरिति नीतिमकारयन् । न चेति नीतिं मत्स्या अकुर्वन् । किं त्विति नीतिः[10] स्वयमकारयत । समुद्रेष्वेव मात्स्यो न्यायः प्रावर्ततेत्यर्थः । न पुनः प्रजासु लोकमध्य इति नीतिरुच्छ्रयते[11] स्म । प्रजा इति नीतिं नोच्छ्रयन्ति सैवं न । किं तु नोच्छ्रयते स्मेति [12]नीतिः स्वयमेव । भीमस्यान्यायिनां शासकत्वात्प्रजासु[13] मात्स्यो न्यायो नोज्जृम्भते स्मेत्यर्थः । अत एवास्मिन्सति कलिरपि कलिकालोपि[14] कलहोपि वा न च नैव विकुरुते स्म व्यकृतेतिवत्[15]कर्मकर्तृविवक्षायां नोज्जजृम्भ इत्यर्थः ॥

१ डी °मेव न ।. २ प भूमादि°. ३ डी °धा वा च ।. ४ डी गिराते. ५ बी °पो मत्स्यो. ६ ई मात्स्यन्या°. ७ प °दिपरि प°. ८ सी °वो मात्स्यै°. ९ डी मत्सैरि°. १० सी नीतिं स्व°. ११ प °च्छूते. १२ सी नीतिं स्व°. १३ सी °सु मात्स्यो. १४ प °ठिका°. १५ डी °तिपूर्वव°.

**प्रैस्नुते स्म किल गौः स्वयमस्मिन्पर्यवारयत चास्य चमूस्ताम् ।**

**सच्छिनत्ति युधि साध्वसिरस्येयाज चारिरुधिरेण कृतान्तम् ॥ २६ ॥**

२६. किलेति सत्ये । अस्मिन्नृपे सति गौः पृथ्वी प्रैस्नुते स्म । प्रैस्नौति स्माक्षारयद्वां रत्नान्यमेवं न । किं तु स्वयमेव प्रस्नुते स्म । सुप्रभोरस्यानुरागेण स्वयमेव रत्नादिदानोन्मुखी बभूव । तथास्य भीमस्य चमूश्च तां गां पर्यवारयत । पर्यवारयत्तां चम्वा कृत्वायमेवं न । किं तु चमूः स्वयं तां पर्यवारयत रक्षार्थमेतच्चमूः पृथ्वीं परिवेष्टितवतीत्यर्थः । एतेन पृथ्वीभीमयोर्मिथ उपकार उक्तः । परिवृत्तिरलंकारः । तथास्यासिः खड्गो युधि साधु क्षत्रियोचितं यथा स्यादेवं छिनत्ति स्म । असिना साधुं च्छिनत्त्ययमरीनेवं न । किं तु साध्वसिश्छिनत्ति स्म स्वयमेव । अत एव चास्यासिररिरुधिरेण कृत्वा कृतान्तमियाजापूजयत् ॥

**कोपि नाचकमतापनिनायाप्याचकाणदिह राज्ञि परस्त्रीम् ।**

**नीतिवर्त्मनि यदेष जजागारातितिक्षत च न क्वचिदागः ॥ २७ ॥**

२७. इहास्मिन् राज्ञि सति कोपि परस्त्रीं नाचकमत नैयेष तथा नापनिनाय नापजह्रे नाचकाणदपि । अपिः समुच्चये । कामवशादार्तस्वरपूर्वं नाशब्दायर्यत् । एतेन परस्त्रीविषया मनःकायवचसां निवृत्तिरुक्ता । यद्यस्माद्धेतोरेष भीमो नीतिवर्त्मनि न्यायमार्गे जजागारोद्यतोभूत् । तथा क्वचिन्मित्रादावप्यागोपराधं नातितिक्षत नासहत ॥

१ ए प्रक्षुते.

१ डी पृथ्वीः प्रस्नु°. २ बी प्रस्नुते. ३ बी प्रश्नौति. ४ बी वृत्तिर°. ५ ए °स्यासिख°. ६ ए त तथा. ७ बी ई °धु सच्छि. ८ ए सी अपि स°. ९ डी. °ब्दायत्. १० सी डी °यत । ए. ११ बी. °हत् ॥.

लोलवीत्यपथगान्स्म स तेनाटाट्यनांटिटिपति स्म न चौरः ।
कोपि नाड्डिडिपदट्टिटिपायां सर्व उज्जिजिपति स्म यथावत् ॥२८॥

२८. स भीमोपथगान्स्तेयाद्यन्यायमार्गगाँल्लोलवीति स्म भृशमभीक्ष्णं वा चिच्छेद । तेन हेतुना चौरो नाटाट्यत चौरिकार्थं न बम्भ्रम्यते स्म । नाटिटिपति स्म न चाटितुमैच्छत् । तथा कोप्यट्टिटिपाया हिंसेच्छायामतिक्रमेच्छायां वा नाड्डिडिपन्नाभियोक्तुमैच्छत् । किं तु सर्वोपि यथावद्यथोचितमुज्जिजिपति स्म ऋजूभवितुमिच्छति स्म ॥

बाढमिन्दिदिषदर्चिचिषच्चारयंदत्र नृपचक्रमशेषम् ।
स्माजिजीयिषति नापि वृकोन्यः को ह्यजीयियिषति स्म बुभुक्षुः
॥ २९ ॥

२९. अशेषं नृपचक्रमत्र भीमेर्र्यदर्य स्वामिनमाख्यत् । कीदृक्सत् । बाढमत्यर्थमिन्दिदिषदीश्वरीभवितुमिच्छदत एवार्चिचिषदर्थाद्भीमं पूजयितुमिच्छच्च । तथात्र नृपे सति दयालुत्वेन सर्वयत्नान्निरपराधजन्तुमारिव्यसनवारकत्वाद्वृकोप्यरण्यश्वापि बुभुक्षुः क्षुधार्त्तः सन्नाजिजीयिषति स्माजेच्छां नेच्छति स्म । मोदकार्थी बुभुक्षां वाञ्छतीतिवदिच्छाया अपीच्छा । हि स्फुटमन्यः को बुभुक्षुरजीयियिषति स्म न कोपीत्यर्थः । अनेनास्यातिधार्मिकत्वोक्तिः ॥

---

१ सी. °नाट्टिटिष°. २ ए बी ई °र्दर्चिचि°. ३ ए सी °चारार्य°. ४ ए °जीजियिष°.

---

१ ए °यामिति°. २ ए सी °मेरार्य° डी °भेमार°. ३ बी °र्यदार्य. ४ ए °दर्य स्वा°. ५ बी °क्सन् । वा°. ६ बी °ढमित्य°. ७ सी °पत सा°. ८ ए °च्छाया । हि°. ९ ए °मुष्यजीजियिष°.

**जात्वजीयिषिषति स्म न कश्चिद्यच्छ्रियः क्षितिभुजीह यथेष्टम् ।**
**द्राक्स्वराद्यपरनामजधात्वेकस्वरात्रयववद्विरभूवन् ॥ ३० ॥**

३०. यद्यस्माद्धेतोरिह क्षितिभुजि राज्ञि सति श्रियो लक्ष्म्यो या या श्रीरिष्टा यथेष्टं यथेप्सितं द्विरभूवन् द्विगुणीबभूवुरर्थाल्लोकस्य । किंवत्स्वरादेरपरेन्ये व्यञ्जनादयो ये नामजधातवो नामधातवस्तेषां[1] य एकस्वरा[2] अवयवास्ते यथा । पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति । पुत्रीयिषिषति[3] । इत्यादौ यथेष्टं प्रथमाद्यवयवाना-मन्यतमा द्विर्भवन्ति द्विरुच्यन्ते तस्माद्बहुधनत्वाद्धेतोर्जातु कदाचि-दपि न कश्चित्कोप्यजीयिषिषति स्म । यदि ममाजा स्यात्तदा शोभ-नमिति छागेच्छां नेच्छति[4] स्म । एतेन प्रजोपरि राज्ञः शुभचेतस्क-त्वोक्तिः । शुभचित्ते हि राज्ञि प्रजाः[5] श्रिया वर्धन्ते ॥

भूषार्थ । अलमकृत सः । नालंकरिष्यतेन्यः । सम[म]लंकुरुते । अबूभुषताद्यः[6] । भूषयिष्यते द्यौः । भूपयते[7] भूः ॥ सन्नन्त । अचिकीर्षिष्ट । चिकीर्षिष्यन्ते[8] । चिकीर्षते ॥ किरादि । व्यकीर्ष्ट । चिकीर्षीष्टे[9] । किरते । अगीर्ष्ट । परिगीर्षीष्ट । गिरते ॥ ण्यन्त । अकारयत[10] ॥ स्नु । प्रस्नुते गौः ॥ श्रि । नोच्छ्रयते ॥ आत्मने-पदाकर्मक । विकुरुते । एषु "भूषार्थ°" [ ९३ ] इत्यादिना[11] ञिक्यौ न ॥

पर्यवारयत चमूस्ताम् । इत्यत्र "करण°" [ ९४ ] इत्यादिनात्मनेपदं क्वचि-त्स्यात् ॥ क्वचिन्न । साध्वसिश्छिनत्ति ॥

द्वितीयः ( द्वादशः ) पादः[12] समर्थितः ॥

---

१ डी ई °तवस्ते°. २ ई °राव्°. ३ बी °यिषष°. ४ सी डी °च्छन्ति स्म. ५ सी प्रजा भि°. ६ बी अबुभु°. ७ सी °षयते. ८ सी °ष्यते । चि° ९ ए °ष्टगि°. १० ए °त ॥ स्नु । प्रस्नुते. ११ सी °ना निक्यौ. १२ ई °दः लक्ष-णतः स°.

इयाज । अचकमत । इत्यत्र "द्विर्धातु." [१] इत्यादिना द्विरुक्तिः ॥

प्रागिति किम् । अपनिनाय । अत्र वृद्ध्यादेः स्वरविधेः पूर्वमेव द्वित्वं सिद्धम् ॥

जजागार । अ(आ)चकाणत् । इत्यत्र "आद्योंश[3]०" [२] इत्यादिना द्विरुक्तिः ॥

अतितिक्षत । लोलवी[2]ति[3] । अत्र "सन्यङश्च" [ ३ ] इति द्वित्वम् ॥

अटिटिपति[4] । आटाट्यत । इत्यत्र "स्वरादेर्द्वितीयः" [४] इति द्वित्वम् ॥

उब्जिजिषति । अट्टिटिपायाम् । आड्डिडिपत् । इन्दिदिषत् । इत्यत्र "न[5] बदं०" [ ५ ] इत्यादिना सयोगस्यादयो[6] बदना न द्विः स्यु ॥

अँर्चिचिपत् । इत्यत्र "अयि रः" [ ६ ] इति रस्य न द्वित्वम् ॥ अयीति किम् । आरर्यंत ॥

अजिजीयिषति । अजीयियिषति । अजीयिपिषति । इत्यत्र "नाम्नः[०]" [ ७ ] इत्यादिना द्वितीयादा[10]रभ्यैकस्वरोवयवो[11] द्विः स्यात् ॥

स्वराद्यपरनामजधात्वेकस्वरावय[12]ववद्विरभूवन्नित्युपमया "अन्यस्य" [८] इति सूत्रोदाहरणा[13]नि पुपुत्रीयिषतीत्यादीनि सूचितानि ॥

**नाभ्यसूयियिषति स न[1] चाकण्डूयियत्परधनेष्विह कश्चित् ।**
**नासुसो[2]षुपिषतैष दिवा यन्नापि सोषुपिषते स निशायाम् ॥ ३१ ॥**

३१. इह राज्ञि सति कश्चित्कोपि नरः परधनेषु विषये नाभ्यसूयियिषति स रा[14]जावग्रहपाताद्यर्थं चौर्यद्रोहोपार्जितत्वाद्यसद्दोषानु-

१ ए बी सी डी न वाक०. २ ए बी ई ०सोषपि०.

१ ए आघोश०. २ सी ०लवति. ३ सी डी ई ०ति । इत्यत्र. ४ बी सी डी ०ति । अटा०. ५ सी डी नवदनेत्या०. ई नवेत्या०. ६ ए सी डी ई ०यो वद०. ७ ई अञ्चिचि०. ८ ए अर्हति. ९ सी ०म् । अराय्यंत. १० ई ०रभ्येक०. ११ ए ०वो द्वित्या०. १२ बी ०यवद्वि०. १३ ए ०नि सुपुत्री०. १४ सी राज्ञाव०.

द्रावयितुं नैच्छन्नाकण्डूयियच्च । कण्डूयन्तं न प्रायुङ्क्त । लक्षणयाह । यद्येतानि प्राप्नोमीति वाञ्छातिरेकं कुर्वन्तमन्यं न प्रयुक्तवान् । यद्यस्माद्धेतोरेप भीमो दिवा नासुसोपुपिपतात्यर्थं स्वप्तुं नैच्छन्नापि निशायां सोपुपिषते स्म प्रजापालनायां सदोद्यतोभूदित्यर्थः ॥

अकण्डूयियत् । अभ्यसूयियिपति । इत्यत्र "कण्ड्वादेस्तृतीय" [ ९ ] इति द्वित्वम् ॥

असुसोपुपिपत । इत्यत्र "पुनरेकेषाम्" [ १० ] इति द्वित्वे कृते पुनर्द्वित्वम् ॥ एकेपामिति किम् । सोपुपिषते ॥

श्रीरिर्ष्यियिषति स्म न वाचा वागपीर्ष्यियिषति स्म तया न ।
तां जुहोति विदुषां स च जिह्रेत्युच्चकैश्च सचराचरकीर्तिः ॥ ३२ ॥

३२. इह भीमे श्रीर्वाचा सह नेर्ष्यियिषति स्म नेर्ष्यितुमैच्छद्वागपि तया श्रिया सह नेर्ष्यिषिषति स्म । अन्योन्यविरुद्धे अपि श्रीवाचौ विरोधं विहायात्रावतस्थतुरित्यर्थः । अत एव विदुषां तां लक्ष्मीं जुहोति स्म च ददौ च । तथा चराचरे सकले जगति चराचरा परिभ्राम्यन्ती वा या कीर्तिर्दानपुण्योत्था विद्वत्कृता ख्यातिः सह तया यः स तथा सन्नुच्चकैरतिशयेन जिह्रेति स्म च । एतेनास्य महापुरुषत्वोक्तिः ॥

क्रीडयापि चलितेत्र महीपाट्टूपटावर्तपतापतधूल्या ।
द्राक्कलाचलघनाघनबुद्ध्याभूद्ददावदमुखो गुहबर्ही ॥ ३३ ॥

३३. अत्र भीमे क्रीडयापि राजपाट्यापि चलिते प्रस्थिते मह्या

१ बी °र्ष्यिष°.

१ बी ई °युक्त । ल°. २ प °नि पाप्नो°. ३ बी °र्वंतम°. ४ प बी सी °सोपपि°. ५ बी °यत । अ°. ६ सी °यिष्यति. ७ प °सोषपि°. ८ बी °र्ष्यिष°. ९ ई °यात्र त°. १० बी °या रा°.

भुवः पाटूपटानि खुरप्रहारैर्विदारकाणि यान्यार्वतान्यश्वौघास्तैः पतापतोच्छलन्ती या धूली तया कृत्वा चलाचलघनाघनबुद्ध्या स्थिराम्बुदाशङ्कया गुहबर्हो स्कन्दमयूरो द्रागवदावदमुखः केकाशब्दकारिवक्त्रोभूत्। अनेनाश्वसंपदुत्कर्षोस्योक्तः॥

ऐभमस्य मदचिक्किदहस्तैश्चक्कसाचलपटूपटदन्तम्।
मीढ्वदङ्गणमसाह्वदिहाश्वान्विस्मयं जगति कस्य न दाश्वत्॥३४॥

३४. अस्य भीमस्यैभं हस्तिवृन्दमिह पृथ्व्यां कस्य विस्मयमाश्चर्यं न दाश्वन्न ददौ। यतो मदेन चिक्किदा आर्द्रा ये हस्ताः शुण्डास्तैः कृत्वाङ्गणं भूमिं मीढ्वत्सिक्तवन्मदोन्मत्तमित्यर्थः। तथा चक्कसा निर्मलाः कुटिला वाचलपटूपटा दार्ढ्येनाद्रीणामपि विदारका दन्ता यस्य तत्तथाश्वान्मेवानसाह्वत्प्रति द्विपाशङ्कयासोढवत्॥

ईर्ष्यियिषति। ईर्ष्यिषिषति। इत्यत्र "यिः सन्वेर्ष्यः" [११] इति द्वित्वम्॥

जुहोति। जिहेति। अत्र "हव. शिति" [१२] इति द्वित्वम्॥

चराचर। चलाचल। पतापत। वदावद। घनाघन। पाटूपट। इत्येते "चराचर०" [१३] इत्यादिनाचि कृतद्वित्वा निपात्या वा। पक्षे। अचल इत्यादि। केचित्तु पटूपटेति निपातयन्ति॥

चिक्किदचक्कसौ। "चिक्किद०" [१४] इत्यादिना निपात्यौ॥

दाश्वत्। असाह्वत्। मीढ्वत्। इत्येते "दाश्वत्०" [१५] इत्यादिना निपात्याः॥

---

२ ई दास्वत्.

---

१ सीडी °कानि या°. २ सी °कारव°. ३ ए °स्यैव ह°. ४ ई दास्वत्. ५ ए °दौ। ततो. ६ ए °त्वाङ्गण. ७ ए °ढ्वन्सिक्त°. ८ सी °ला वाच°. ९ ए चिक्कद°. १० वी °दचिक्कसौ. डी °दचिक्क°.

ज्ञीप्सतीप्सति सतः स्म स ईर्त्सुः[1] स्माभिधीप्सति च धिप्सति शत्रौ ।
मोक्षति स्म विमुमुक्षति चोच्चैर्[2]नामुमुक्षद[3]निमित्सति शस्त्रम् ॥ ३५ ॥

३५. स भीमः सतः साधूनीर्त्सुर्[1]न्तर्भूतणिगर्थतया वर्धयितुमिच्छुः[2] सन्नीप्सति स्म प्राप्तुमिच्छति स्म । तथा ज्ञीप्सति स्म ज्ञपयितुं तोष[3]यितुमियेष । तथा धिप्सति दम्भितुमिच्छति शत्रौ विषयेऽभिधीप्सति स्म च । तथा क्षत्रियोत्तमत्वेन[4] शस्त्रं विमुमुक्षति मोक्तुमिच्छति शस्त्रमोक्षमिच्छतीत्यर्थः । शत्रौ विषये[5] शस्त्रमुच्चैरतिशयेन मोक्षति स्म च । तथा शस्त्रमनिमित्सति[6] कातरत्वेन निमातुं प्रक्षेप्तुमनिच्छति शत्रौ शस्त्रं नामुमुक्षन्न प्रक्षेप्तुमैच्छत् ॥

न ह्य[4]मित्सदपशस्त्रममित्सत्क्ष्मां बलैर्जलधिमप्यमिमासत् ।
[5]दित्सया स[6] च स धित्सति लक्ष्मीं[7] दित्सति स[8] खलु नार्थिन आशाम्
॥ ३६ ॥

३६. स भीमोपशस्त्रं शस्त्ररहितं न हि नैवामित्सद्धन्तुमैच्छत् । तथा बलैः सैन्यैः कृत्वा क्ष्माममित्सज्जलधिमप्यमिमासद् मातुमैच्छत् । एतेन सार्वभौमत्वोक्तिः । तथा दित्सया दानेच्छया लक्ष्मीं धित्सति स्म वर्धयितुमियेष । अत एव खलु निश्चयेनार्थिन आशां मनोरथं न दित्सति स्म न खण्डयितुमैच्छत् ॥

---

१ सी डी ईत्सुः स्मा°. २ प °र्नाममुक्ष°. ३ बी °मिच्छति. ४ प °मिच्छद°. ५ प दिच्छया. ६ डी स्म स. ७ प लक्ष्मी दिच्छति. ८ डी स्म न ख°.

---

१ डी °र्धस्तया. २ बी °मित्सुः स°. ३ प °षमि°. ४ ई °न वि°. ५ प ई °वे ब्वे°. ६ प बी सी °मिच्छति. ७ प °सतुमा°. ८ सी डी °र्थिनामाशा.

धित्सति स्म न पयोप्यवितीर्णं तज्जनः कथमलिप्सत वित्तम् ।
नात्रे कोपि समरिप्सत कोपात्सोन्तकेप्यविनये यदशिक्षत् ॥३७॥

३७. यद्यस्माद्धेतोः स भीमोविनयेपन्याये सत्यन्तकेपि यमेपि विषयेशिक्षच्छक्तुमैच्छत् । अनुशासितुं समर्थोभूदित्यर्थः । तत्तस्माद्धेतोरत्र जगति जनोवितीर्णमदत्तं पयोपि जलमपि न धित्सति स्म न पातुमियेष । कथं पुनरवितीर्णं वित्तं द्रव्यमलिप्सत प्राप्तुमैच्छन्न कथमपीत्यर्थः । तथा न कोपि कोपात्समरिप्सत संरम्भं चक्रे । चौर्यं कलहं च न कोपि चक्र इति भावार्थः ॥

पित्सते स्म शरणार्थमपित्सन्नारिरात्सुरथ वा य इमं हि ।
तं स रित्सति न कोपि न कौचिद्रेधतुर्न खलु केपि च रेधुः॥३८॥

३८. यो नरोपित्सन्पतितुमनिच्छन्नभ्रंशितुकामः सन् शरणार्थं स्वरक्षायायथ वा य आरिरात्सुः सेवितुकामः सन् हि स्फुटमिमं भीमं पित्सते स्म जिगमिषति स्म तं नरं कोपि न रित्सति स्म न हिंसितुमैच्छन्न कौचित्कावपि तं रेधतुर्जघ्नतुर्न केपि च तं खलु निश्चयेन रेधुः॥

त्वं हि रेधिथ रराध तु नायं त्वं विरेणिथ विरेणुरमी तत् ।
नो यदा बभणिथाबभणुः के सोन्वशादिति विबोध्य सवादान्
॥ ३९ ॥

३९. स भीमः सहवादेन ये तान्सवादान्मिथो विवदमानान्नरा-

---

१ ए तद्घनः. २ सी °त्र कोपि. ३ बी °पिच्छन्ना° ४ बी °रेणथ.

---

१ ई सित स°. २ सी डी °च्छत् । क°. ३ ई के । कौर्य. ४ बी °हं न च को°. ५ डी °र्थः ॥ बित्स° ६ ए °पते स्म. ७ ए स न तर. ८ सी डी °र न को°. ९ डी °पि न रे°. १० बी °तुजघतु°. ११ ई च स°.

न्विबोध्य संबोध्यान्वशात्पुनरेवं न कार्यमित्यशिक्षयत् । कथं संबो[1]ध्येत्याह । अहो पुरुष हि स्फुटं त्वं रेधिथ घातं कृतवान्न तु[2] नै[3] पुनरयं नरो रराध । तथाहो यस्मात्त्वं विरणिथ विरुद्धमवोचस्तत्तस्मादमी नरा विरेणुर्यदा त्वं नो बभणिथ नावोचस्तदा क आबभणुः । न केपीषदप्यूचुरित्यर्थः । तस्मात्तवैव दोषोयमित्युक्तं स्यादिति ॥

ज्ञीप्सति । ईप्सति । इत्यत्र "ज्ञप्याप०" [ १६ ] इत्यादिना ज्ञीपीपादेशौ न च द्विः ॥

ईर्त्सुः । अत्र "ऋध ईर्त्" [ १७ ] इति-ईर्त्[4] न च द्विः ॥

धिप्सति । अभिधीप्सति । इत्यत्र "दम्भ०" [ १८ ] इत्यादिना धिप्धीपौ[5] न च द्विः ॥

मोक्षति विमुमुक्षति[6] । इत्यत्र "अव्याप्यस्य मुचेर्मोग्वा" [ १९ ] इति वा मोक् न च द्विः ॥ अव्याप्यस्येति[7] किम् । शस्त्रं नामुमुक्षत्[8] ।

डुमिंग्[9][10] । अनिमित्सति[11] ॥ मीति मींङ्[12][13] मींग्[14] शोर्ग्रहणम् । नामित्सदपशत्रुम् ॥ मेति मांक्[15]माङ्क्[16]मेङां ग्रहणम् । अमित्सत्क्ष्माम् ॥ दासंज्ञ । दित्सया । दित्सति । धित्सति लक्ष्मीम् । न धित्सति । इत्यत्र "मिमी०" [ २० ] इत्यादिना स्वरस्येस्[17] च द्विः[18] ॥ मांङ्क्मेङोरुदाहरणे स्वयं ज्ञेये । मातेर्नेच्छन्त्येके । अमिमासत् ॥

समरिप्सत[19] । अलिप्सत । अशिक्षत्[20] । अपित्सत[21] । पित्सते । अत्र "रभलभ०" [ २१ ] इत्यादिना स्वरस्येस् च द्विः ॥

---

१ ए °बोधेत्या°. २ ए तु पु°. ३ सी नर°. ४ डी ईर्त् न ५ बी धिप्धीपौ. ६ सी विमुक्ष°. ७ बी अवाप्य°. ८ ए नानामु°. ९ डी डुमेंग्ट् । अ°. १० ए बी मिंग्ट् । अ°. ११ बी °मिच्छति. १२ बी °ति मीङ्ग् मीग्शो° सी °ति मीङ्ग् मीं°. १३ डी मींङ् मीं°. १४ ए °ड्ग् मीग्शो°. १५ सी माक मां° १६ डी मांक् मे°. बी माक्मेडा. १७ सी °स्न द्विः. १८ बी °द्विः ॥ माक्मेङो°. १९ डी °प्सत् । अ°. २० डी अपि°. २१ बी °त्सत् । पि°.

रित्सति[1] । इत्यत्र "राधेर्वधे" [ २२ ] इति स्वरस्येत्त्व च द्विः ॥ वध इति किम् । आरिरात्सुः ॥

रेधतु॰ । रेधुः । रेधिथ । इत्यत्र "अवित्॰"[2] [ २३ ] इत्यादिना स्वरस्यैत्त्व च द्विः ॥ अविदिति किम् । रराध ॥

विरेणुः । विरेणिथ । इत्यत्र "अनादेशादेः॰" [ २४] इत्यादिनैत्त्व च द्विः ॥ अनादेशादेरिति किम् । आबभणुः । बभणिथ ॥

**तं चरौ रहसि भेजतुरन्येद्युः प्रफेलतुरिदं च वचस्तौ ।**

**स्वेन फेलिथ विभेजिथ[2] चाज्ञां[3] यन्निमित्तमवधारय तन्नौ ॥ ४० ॥**

४०. अन्येद्यू रहस्येकान्ते चरौ हेरिकौ तं भीमं भेजतुस्तथा तौ चराविदं वचः प्रफेलतुश्च । फलिरत्रान्तर्भूतणिगर्थः सकर्मकः । निष्पादितवन्तावूचतुरित्यर्थः[3] । तदेवाह । हे राजन्यन्निमित्त यस्य कार्यस्य हेतोस्त्व नावावयोः स्वेन धनेन कृत्वा फेलिथ फलितवानाज्ञामादेशं विभेजिथ च विभागेन दत्तवांश्च तदवधारय शृणु ॥

**आवयोस्त्वमवतेरिथ यस्मात्तेन तेरिव महीं किल पुण्ड्राः ।**

**त्रेपिरे न वचसाज्ञपयन्यत्स्वेनिथार्हमथ सस्वनिथान्यत् ॥ ४१ ॥**

४१. हे राजन्यस्मात्त्वमावयोरवतेरिथ धनादि दत्तवांस्तेन हेतुनावां महीं तेरिव तीर्णौ परिभ्रान्तावित्यर्थः[4] । किलेति सत्ये । यदर्हमुचितं संदेशाद्याज्ञपयंस्त्वं[5] स्वेनिथावोचोथाथ[6][7] वान्यदनर्हं दण्डादिर्कर्माज्ञ-[8][9]

१ सी ॰च सौ । स्वे॰. २ सी ॰भेमिथ. ३ सी ड॰ ॰थ वाज्ञां.

१ बी रिच्छति. २ बी अविव् इ॰. ३ प निष्फादि॰. ४ बी ॰रिभ्रातावि॰. ५ प सी डी ॰धाज्ञप॰. ६ डी ॰निथ वाचोचिथा॰. ७ बी ॰वोचाथा॰. ८ डी ॰कर्म ज्ञाप॰. ९ प सी ॰माज्ञप॰.

पयन्सस्वनिथ यत्तदोर्नित्या[1]भिसंबन्धात्तेन वचसाज्ञावचनेन पुण्ड्राः[2] पुण्ड्रदेशरा[3]जा न त्रेपिरे न ह्रीणा हृष्टतुष्टास्त्वदाज्ञामङ्गीचक्रुरित्यर्थः। तेरिवेत्यत्र स्मरणं सदपि न विवक्षितं किं तु तत्पूर्वकोनुभव इति कृतास्मरणाः। निह्नवे "परोक्षा" [३.३.१२] इति परोक्षा ॥

यत्र[1] बभ्रमिथ केशिनमुच्चैर्जेरिथोज्जजरिथापि च कंसम्।
भ्रेमिथाभिबलि वेमिथ वेदांस्तैत्तिरीं ववमिथापि च शाखाम् ॥४२॥
फेणिथापफणिथार्भककेल्या त्रेसिथेषदभितत्रसिथोच्चैः।
गोपु रेजिथ रराजिथ गोपैः स्येमिथापि न च सस्यमिथापि ॥४३॥
केपि नैषु विषयेषु तवाज्ञां जेरुरीश न भयं जजरुश्च।
भ्रेमुरभ्यटवि बभ्रमुरद्रौ वेमुरम्बु रुधिरं ववमुश्च ॥ ४४ ॥

४२–४४. हे ईश स्वामिन्नेषु विषयेषु देशेषु तवाज्ञामादेशं केपि नृपा न जेरुरन्तर्भूतणिगर्थत्वाज्जरितवन्तोवज्ञया न विनाशितवन्त इत्यर्थः। तथा भयं न ज[4]र्जरुश्च न व्यनाशयंश्च भीता इत्यर्थः। अत एवाभ्यटव्यटवीं ल[5]क्ष्यीकृत्याभिमुखं भ्रेमुस्तथाद्रौ बभ्रमुस्तथाम्बु स्वेदजलं वेमुरक्षरन्नित्यर्थः। तथा रुधिरं ववमुश्च। भयातिरेकेण हि स्वेद[6]स्रवणं रक्तवमनं च स्यात्। के ते विषया इत्येष्वित्यनेन ये विषया विवक्षितास्ता[7]न्विष्णुः पृ[8]थिवीपतिरिति स्मृतिवचनाद्भीमनृपे तत्तद्देशसंजातानामच्युतावदातानां वर्णनाद्वारेण ज्ञापयन्तावा[9]हतुर्यत्रेत्यादि। यत्रेति प्रतिवाक्यं ज्ञेयम्। यत्र वृन्दावनाख्ये दे[10]शे बभ्रमिथ

१ ए °त्र विभ्र° बी °त्र मिभ्र°.

१ ए °त्यापिस°. २ बी पुण्ड्र°. ३ ए बी °जानः त्रे° डी ई° जानो न. ४ ए °जरश्च. ५ ए लक्ष्मीकृ°. सी लक्षीकृ°. ६ ए बी सी डी °दमव°. ७ ए सी डी °नाह वि°. ८ सी डी पृथ्वीप°. ९ बी °वाहतु°. १० ए °शे विभ्र°.

कृष्णावतारेण केश्यादिदैत्यवधार्थं भ्रान्तः । यथोच्चैः केशिनं[1] केशिसंज्ञमश्वरूपं दैत्यं जेरिथ मुखमध्ये स्वबाहुप्रवेशेन विनाशितवान् । तथा यत्र देशे मथुरायां कंसं दैत्यमुज्जजरिथापि च । तथा यत्र देशे शोणितपुरेऽभिवालि वलिदैत्यं लक्ष्यीकृत्या[2]भिमुखं भ्रेमिथ वामनरूपेण बलिबन्धनाय[3] भ्रान्तः । तथा यत्र देशे क्षीरसमुद्रोपकण्ठे वेदानृग्यजुःसामाख्यान्वेमिथ मत्स्यरूपेणोद्गीर्णवान् । पुरा हि किल चतुर्दशभुवनप्रलये हरिर्नाभिपद्मे ब्रह्माणं निर्ममौ । स च वेदानस्राक्षीन्मानसानृ[4]षींश्च निर्ममौ । तस्य च वेदान्स्मरतो जृम्भायामागतायां मुखे विवृते कस्मा[5]च्छङ्खाख्यो दैत्यः प्रविश्य वेदानाहृत्य क्षीराब्धौ प्रविष्टस्ततश्च[6] ज्ञानवैकल्येन ब्रह्मा शून्योऽभून्मानसर्षिभिश्चामुं शून्यतावृत्तान्तं विज्ञ[7]पितो हरिर्दिव्यचक्षुषा ज्ञातपरमार्थो मत्स्यरूपेण क्षीराब्धौ प्रविश्य शङ्खं हत्वा वेदानाहृत्य ब्रह्मणो मुखे वान्तवानित्यैतिह्यम् । तथा यत्र देशे मिथिलोपवने तैत्तिरीं तित्तिरेरिमां शाखां यजुर्वेदांशं[8] ववमिथापि च याज्ञवल्क्य[9]रूपेणोद्गीर्णवांश्च । अत्र किल कस्यापि नृपतेः प्रणयिन्या निरपत्यतादुःखमपनेतुमाशिषं दातुं शाकल्यगुरोरादेशेन शान्तवेषाकारा विनेयाः सदा ययुः । कदाचिदन्येषामसंनिहिततया गुरुर्याज्ञव[10]ल्क्यमेव प्राहिणोत्तं च नववयस्तया रचितचारुवेषाकारं सविकारमिवाशिषं दातुमुद्यतं दृष्ट्वाहो अस्य महर्षेराशिषः प्रभावः स्थाणुमपि पल्लवयतीति राज्ञी सविस्मयमुपजहास । स च क्रुद्धस्तत्पुरः[11] स्थाणुमेव[12] सप्रभावतया तैरेव स्वैरक्षतैः पल्लवयित्वा गुरोः समीपमाययौ । सा च संभ्रान्ता तमानेतुं नृपेण गुरुमर्थयामास । नृपानुरोधाद्गुरुणा निर्बध्यमानोऽपि स यदा न ययौ तदा गुरुणा क्रुद्धेन स्वयमध्यापि-

---

१ सी °शिस°. २ प लक्षीकृ°. ३ सी °नादय. ४ प °नवानृ°. ५ प °सात्सङ्खा°. ६ बी °श्च तान°. ७ बी विज्ञापि°. ८ प यजुर्वे°. ९ सी °वयस्तपे°. १० प °र्याश्यव°. ११ बी °त्पुरस्था° सी °त्पुरस्था°. १२ प °व प्र°.

तानि तैत्तिरीयाणि यजूंषि प्रतीपं याचितः संस्त्यानि मूर्तानि तित्तिरिरूपाणि योगप्रभावाद्वमति स्म । वमनानन्तरं महर्षिणा तित्तिरीभूय[1] ग्रसित्वा तेषां च यजुषां शिष्येभ्यः प्रतिपादनाद्यजुर्वेद[2]प्रसिद्धा तैत्तिरी शाखा जज्ञे । तस्याश्च याज्ञ[3]वल्क्येन[4] वान्तानि तित्तिरिरूपाणि यजूंषि कारणमिति कार्यकारणयोरभेदोपचाराद्वव[5]मिथापि च शाखामित्युपपन्नं स्यात् । याज्ञवल्क्यस्य विष्णुत्वेनोपवर्णनं महाप्रभावत्वात् । यदुक्तम् ।

> यद्यद्विभूतिमत्सत्त्वं प्रभावोत्कटमेव वा ।
> तत्तदेवावगच्छेस्त्वं मम तेजोंशसंभवम् ॥ इति ॥

तथा यत्र देशे[6]षु यमुनातटेष्वर्भककेल्या गेन्दुकशङ्कुलाक्रीडादिकया बालक्रीडया हेतुना फेणिथ गोपबालकैः सह गतः । तथापफणिथागतश्च । तथेषन्मनाक् त्रेसिथ गेन्दुकादिप्रहाराशङ्कया भीतः । तथोचैरभितत्रासिथ चाभिमुख्येन भीतश्च । विष्णुर्हि कृष्णावतारे कंसभयेन बालकाले यमुनातटस्थेषु नन्द[7]गोकुलेषु गोपरूपेणोषित इत्यागमिकाः । तथा यत्र देशे यमुनातटे[8] वृन्दावने वा गोषु धेनुषु मध्ये रेजिथ गोरक्षाद्यर्थं गोवर्धना[9]द्युद्धरणाद्यवदातैः शोभितः । तथा गोपैः परिवारभूतैर्गोपालैः कृत्वा रराजिथ । तथा स्येमिथापि सिण्टाशब्दांश्चकर्थ च न च सस्यमिथांप्यन्यकार्यै[10]न्यग्रतायां सिण्टाशब्दान्न चकर्थ च । गोपा हि जातिस्वभावेनान्यकार्योऽव्यग्रतायां[11] सिण्टाशब्दा[12]न्कुर्वन्ति । केशिकंसवधादीनि वृत्तानि लोकप्रसिद्धान्येवेत्यत्र नोक्तानि ॥

---

१ बी °री भ°. २ ए °यजुर्वे°. ३ ए बी सी याज्ञव°. ४ बी सी °वल्केन. ५ सी डी °व च । त°. ६ सी डी °शे य°. ७ सी डी °न्दकु°. ८ ए °टे वन्दा°. ९ सी डी °नाम्युद्ध°. १० डी °थाकार्येप्यन्यव्य° सी °थाकार्यप्यन्यम्य°. ११ बी °या शण्टा°. १२ ए सिण्दास°.

स्वेनुरेषु पफणुस्तव मृताः सस्वनुस्तव गुणांश्च विफेणुः।
तत्रसुः स्वविषये न हि यद्वत्रेसुरत्र न चरा अपि तद्वत् ॥ ४५ ॥

४५. हे राजंस्तव सूता भट्टा एषु पूर्वोक्तेषु वृन्दावनादिविषयेषु पफणुर्जग्मुः । तथा विफेणुर्भयाभावेन स्वेच्छाचारित्वाद्विशिष्टं जग्मु । तथा स्वेनुस्त्वदाशीर्वादमूचु । तथा तव गुणान्सस्वनुश्चाकीर्तयंश्च । तथा तव चरा अपि हेरिका अपि । किं पुन सूतादय इत्यप्यर्थः । यद्वद्यथा स्वविषये निजदेशे गूर्जरत्रायां न हि नैव तत्रसुर्बिभ्युस्तद्वत्तथा-त्रैषु देशेषु वृन्दावनादिषु न त्रेसु. ॥

सस्यमुर्यदलयो यदु हंसाः स्येमुराः कुरुषु तन्न रराजे।
रेज ईश तव कीर्तनमावभ्राज इन्द्रसुतवर्णनकं वा ॥ ४६ ॥

४६. उ हे ईश स्वामिन्नलयो भृङ्गा यत्सस्यमु शब्दायिता यच्च हंसाः स्येमुस्तत्स्यमनम् । आ इति खेदे । कुरुषु देशेषु न रराजे सुखदं नाभूदित्यर्थ । खेदश्च तच्छब्दानां मधुरत्वेन सुखदानामप्य-सुखकत्वात् । तर्हि किं रराज इत्याह । तव कीर्तन वर्णनकं कुरुषु रेजे । वा यद्वा। इन्द्रसुतवर्णनकमर्जुनवर्णनावभ्राजे कर्णाह्लादकमभू-दित्यर्थः ॥

भ्रेज ऐल इति राघव आवभ्रास ईश्वरगणः परिभ्रेसे ।
भ्लेस आर्किरजभूपतिरावभ्लास इत्यनुदिशं त्वयि वादाः ॥४७॥

४७. इत्येवंविधा वादास्त्वयि विषयेनुदिशं प्रतिदिशमभूवन् । के

१ बी कीर्त्तिन°.

१ सी डी °नुस्वदा°. २ सी °नुश्चकी°. ३ बी °मन् मा १°. ४ ए °शे न°.

त इत्याह। यथा[1] न्यायित्वादिना प्रकारेण त्वं भ्राजसे तथेत्यर्थः। ऐलः पुरूरवा भ्रेजे। तथेति राघवो रामचन्द्र आबभ्रासे शुशुभे। तथेतीश्वरगण[2] ईश्वरस्य हरस्यान्तरङ्गभक्त्याराधकत्वाद्गणः श्वेताख्यो राजा[3] बाणो वा परिभ्रेसे। तथेत्यार्किरर्कस्यापत्यं कर्णो[4] मनुर्वा भ्लेसे शुशुभे तथेत्यजभूपती रघुपुत्र आबभ्लासे। इत्यैलाद्या आद्यनृपाः[5] स्वगुणैस्त्वया नृणां[6] स्मार्यन्त इत्यर्थः। परिभ्रेस इत्यत्र रसंयोगे ह्रस्वस्य गुरुत्वाभावाच्छन्दोभङ्गः[7]। यदुक्तम्। "ह्रूपविसर्गानुस्वारव्यञ्जनाह्रादिसंयोगे"। जिह्वामूलीय उपध्मानीये विसर्जनीयेनुस्वारे व्यञ्जने ह्रादिवर्जिते संयोगे च परे ह्रस्वोपि गुरुः स्यात्। अह्रादीति समस्तव्यस्तसंग्रहात् ह्लसंयोगे ह्रसंयोगे रसंयोगे च न गुरुः। आदिशब्दाद्यथादर्शनं[8] क्षादिसंयोगे च। एष्वतीव्रप्रयत्नत्वं संयोगस्य गुरुत्वाभावे[9] हेतुस्तीव्रप्रयत्ने तु स्यादेव गुरुः॥

तेरिव[10]। अवतेरिथ। त्रेपिरे। प्रफेलतुः। फेलिथ। भेजतुः। विभेजिथ। इत्यत्र "तृत्रप°" [२५] इत्यादिनैत्वं च द्विः॥

जेरुः जजरुः। जेरिथ उज्जजरिथ। भ्रेमुः बभ्रमुः। भ्रेमिथ बभ्रमिथ। वेमुः[11] ववमुः। वेमिथ[12] ववमिथ। त्रेसुः तत्रसुः। त्रेसिथ अभितत्रसिथ। विफेणुः पफणुः। फेणिथ आपफणिथ[13][14]। स्येमुः सस्यमुः। स्येमिथ[15] सस्यमिथ। स्वेनुः सस्वनुः। स्वेनिथ[16] सस्वनिथ। रेजे रराजे। [रेजिथ रराजिथ।] भ्रेजे आबभ्राजे। परिभ्रेसे आबभ्रासे। भ्लेसे आबभ्लासे। अत्र "जृभ्रम°" [२६] इत्यादिना वैत्वं न च द्विः[17]॥

---

१ सी °था न्यायि° २ सी °श्वरास्य. ३ डी राजना°. ४ प त्य वर्णो. ५ बी भाधा नृ°. ६ सी नृणा स्मा°. ७ बी °न्दो भागः। य°. ८ ई °न क्षादि.° ९ बी °भावहे° १० प °रिथः। अ° डी °रिथ। अ°. ११ प °मुः वे°. १२ सी °मिथः व°. १३ प °फलिथ. १४ सी °णिथः स्ये°. १५ प °थ स्वे°. १६ सी° निथः स°. १७ प सी डी ई °दिः॥ क्षेमि°.

श्रेथिथ श्लथमिमं किमु हारं श्रेथुरेवमपरेप्यथ न त्वम्[1] ।
ग्रेथिथेति[2] परिभर्त्स्य वधूः शश्रन्थुरन्ध्रनरपा[3] भवदर्थम् ॥ ४८ ॥

४८. अन्ध्रनरपा अन्ध्रदेशराजा[1] भवदर्थं हारं शश्रन्थुः[2] स्वयं गुम्फितवन्तः । किं कृत्वा । वधूः स्वभार्याः परिभर्त्स्य[3] प्रत्येकं संतर्ज्य[4] । कथमित्याह । इमं हारं किमु[5] किमिति श्लथं शिथिलं त्वं[6] श्रेथिथ गुम्फितवती । अथाथ[7] वा न त्वमेव हारमेवं श्लथं ग्रेथिथ । गुम्फितवती किं तर्ह्यपरेप्यन्ये मन्त्र्यादयोपि हारं श्लथं[8] श्रेथुरिति । अनेनैषां भीम आदरातिशय उक्तः ॥

ग्रेथुरद्ध्यमितिहासमथो जग्रन्थुरद्भुतकथाश्चरितैस्ते ।
मागधा न खलु देभुरतः शश्रन्थिथ स्वकगुणैः कतमं नो ॥४९॥

४९. मगधस्य राज्ञ इमे मागधा मगधराजलोकास्ते तव चरितैः कृत्वाग्र्यं प्रधानमितिहासम् । इतिहासो यथावृत्तम् । तत्प्रधानः[9] प्रबन्धोप्युपचारादितिहासः । तं वर्णनाविरहेण पुरावृत्तप्रतिबद्धं प्रबन्धभेदं ग्रेथुररचयन् । तथाद्भुतकथा अद्भुता रसालंकारैराश्चर्यकारिण्यो याः कथा धीरशान्तनायका गद्यबन्धाः पद्यबन्धा वा सर्वभाषावर्णनारूपाः प्रबन्धभेदांस्तांश्च[10] जग्रन्थुः । खलु निश्चयेन न देभुर्न दम्भं[11] चक्रुरान्तरभक्त्या चक्रुरित्यर्थः । अतो हेतोः स्वकगुणैः स्वका गुणाः शौर्यादय एव गुणा रज्जवस्तैः[12] कृत्वा कतमं नरं नो शश्रन्थिथ न बद्धवान् किं तु सर्वमपि वशीचकर्थेत्यर्थः ॥

---

१ डी °र श्रेथु°. २ ए °थेथि प°. ३ ई शश्रन्थु°.

---

१ डी °जानो भ°. २ ई शश्रन्थुः.° ३ सी °रिभर्त्स्य प्र°. ४ सी डी °तर्य । क°. ५ सी किमि°. ६ डी त्व श्रेथि°. ७ सी डी मथ. ८ बी सी डी °थ श्रेथु°. ९ सी डी °धानप्र°. १० बी सी °दांस्ताश्च. ११ ए दम्भ च°. १२ ए सी डी रघव°.

नो न देम्भिथ ददम्भिथ नो जग्रन्थिथार्जवमिवाच्युतगोपः ।
सोसि देम्भिथ पुनः किमिति त्वां संदिशन्ति यमुनातटघोषाः ॥ ५० ॥

५०. यमुनातटघोषाः कालिन्दीतटगोकुलस्थलोकास्त्वां संदिशन्ति । कथमित्याह । हे राजन् । इवो भिन्नक्रमे । अच्युतगोप इवाच्युतो विष्णुर्यो गोपो गोधुक्स यथा गोपगोप्यादिषु दम्भं चक्रे न चार्जवं चकारैवं त्वं नो न देम्भिथ न नच्छद्माकार्षीः किं तु ददम्भिथ । प्रथममयोगव्यवच्छेदे वाक्यम् । दम्भेन सहायोगो व्यवच्छिद्यते । द्वितीयं त्वन्ययोगव्यवच्छेदे । अन्यस्यापि दम्भो घटते । परं त्वमेव ददम्भिथेत्यन्यस्य दम्भेन योगो व्यवच्छिद्यते । त्वमेव शत्रुष्वनेकधा छलं चकर्थैवेत्यर्थः । दम्भवानप्ययं कदाचिदार्जवमपि कृतवान्भविष्यति नेत्याह । न जग्रन्थिथार्जवं मायाविष्णुः कदाचिदपि सरलस्वभावं नो चकर्थेत्यर्थः । यद्येवं ततः किमित्याह । असि त्वं सोच्युतगोपः । किमिति पुनः किमर्थं पुनर्देम्भिथान्यादृशरूपप्रकाशनेनाच्युतगोपो नास्मीति मायां चकर्थेत्यर्थ इति । एतेन यमुनातटघोषाणामच्युत इव भीमे भक्त्यतिशय उक्तः ॥

श्रेन्थिथोच्चिचयिथापि न पुष्पं ग्रेन्थिथ स्रज इहाखिलदिक्षु ।
कीर्तिभिः शशसिथाशु तमिस्रं दूरगान्ववणिथेव पुरस्तात् ॥ ५१ ॥

५१. हे राजंस्त्वं पुष्पं कुसुमजातिं नोच्चिचयिथ नोच्चितवान्न श्रेन्थिथापि न ग्रथितवांश्च । परमिह जगत्यखिलदिक्षु कीर्तिभिः कृत्वा

---

१ बी सी डी °सि देम्भि°. २ ए श्रेथिथो°. ३ ए °थाशु त°. ४ ए बी सी डी भिश्र दू°.

---

१ सी °गोपादि°. २ बी °रैव त्व°. ३ डी °कार्षी किं. ४ डी °त्यस्य. ५ बी ई दम्भुवन्नव्य°. ६ सी °मपि कृ°. ७ बी डी ई °विपु क°. ८ बी ई °व न च°. ९ सी डी °नर्देम्भि° १० सी °र्थे इ°. ११ बी °क्तः ॥ ग्रन्थि.° १२ बी पुष्प कु°. १३ ए °च्चियथ. १४ बी °न्न ग्रन्थि°. १५ सी श्रेथिथा°. १६ डी ग्रन्थित°.

स्रजः पु[1]ष्पमाला[2] ग्रेन्थिथ गुम्फितवान् । श्वेतत्वात्सौरभ्याच्च पुष्पमालातुल्याः कीर्तीर्दि[3]शि दिशि प्रसारितवानित्यर्थः । तथा कीर्तिभिर्दिक्ष्वाशु त[4]मिस्रमन्धका[5]रं शशसिथ व्यनाशयो दिशो निर्मलीच[6]कर्थेत्यर्थः । तथा की[7]र्तिभिर्दूरगा[8]न्दूरदेशस्थाञ्जनान्पुरस्तादिवाग्रेस्थितानिव वे[9]वणिथावोच इव । निकटस्थैरिव दूरस्थैरपि त्वं गीतकीर्तिरित्यर्थः ॥

त्वद्यशः शशसतुर्ददाते चायशः शशरतुश्च गुणांस्ते ।
ई[1]र्ष्यया ववणतुस्त्वयि दोषान्सिन्धुचेदिनृपती इह दृप्तौ ॥५२॥

५२. हे राजन्निह पृथ्व्यां सिन्धुचेदिनृपती सिन्धुदेशचेदिदेशराजौ दृप्तौ दर्पिष्ठौ सन्तावीर्ष्यया त्वत्संपत्तौ चेतसो व्यारोषेण त्वद्यशः शशंसतुर्जेगतुः । ते तवायशोवर्णवादं ददाते च । तथा ते गुणांश्च शशरतुश्च । तथा त्वयि विषये दोषान्ववणतु[11]श्च । चोऽत्रापि योज्यः ॥

श्रेथुः शश्रन्थुः । श्रेथिथ शश्रन्थिथ । ग्रेथुः जग्रन्थुः । ग्रेथि[12]थ जग्रन्थिथ । इत्यत्र "वा श्रन्थ°" [२७] इत्यादिना वैत् । एतत्संनियोगे नस्य लुप्त च द्विः ॥

देभुः । अत्र "दम्भः" [ २८ ] इत्येन्नस्य लुप्त च द्विः ॥

देभिथ ददम्भिथ । इत्यत्र "थे वा" [ २९ ] इति वैत्तत्संनियोगे च नस्य लुप्त च द्विः ॥ अन्ये तु श्रन्थिग्रन्थिदम्भीनां नलोपे सति नित्यमे[13]त्वमिच्छन्ति । नलोपं त्व[14]वित्परोक्षायां नित्यमे[15]व । तेन श्रे[16]थुः । ग्रेथुः । देभुः ॥ नलोपाभावे

१ डी ईष्यया.

१ बी पुष्फमा°. २ सी °ला ग्रन्थि°. ३ सी ई °शि प्र°. ४ ए बी सी डी °मिश्रम°. ५ ए °र शिशसि°. ६ ए °चकार्थे°. ७ सी °र्ति भूर्दूरदे°. ८ ए °रस्थादि°. ९ ए °वणि°. १० ए शस.तु°. ११ ई °श्च च यो° १२ ए °थिथः ज°. १३ डी °मेवैत्व°. १४ डी °विति परो°. १५ सी °व श्रे°. १६ डी श्रेथतुः । ग्रेथतुः । देभतुः ॥ न°.

तु शश्रन्थिथ । जग्रन्थिथ । ददम्भिथ । इत्येव स्यात् ॥ अन्यस्त्ववित्परोक्षासेट्थ-वोर्नित्यमेत्वमिच्छति नलोपं त्ववित्परोक्षायामेव । तेन श्रेथुः । ग्रेथुः । देभुः ॥ नलोपाभावेपि । श्रेन्थिथ । ग्रेन्थिथ । देम्भिथ । ईत्येवेच्छति ॥

शशसतुः । शशसिथ । ददद।ते । ववणतुः । ववणिथ । शशरतुः । उच्चिचयिथ । इत्यत्र "न शंस°" [ ३० ] इत्यादिना नैत् ॥

**देहि चाच्छलमथो अवधेहि श्रूयतां व्यधित सिन्धुपतिर्यत् ।**
**दिग्य इष्टसुरकोशमपीप्यत्त्वज्जिघांसुसुभटान्प्रजिघाय ॥ ५३ ॥**

५३. हे राजन्नच्छलं छलस्याभावं देहि वितर । यद्यपि अत्यर्थं वितर वा । आवयोर्वदतोः स्खलितं न गणनीयमित्यर्थः । चः पूर्ववाक्यार्थापेक्षया समुच्चये । अथो अनन्तरमवधेह्यवधानं कुरु । तथा सिन्धुपतिर्यद्व्यधिताकृत यत्तदोर्नित्याभिसंबन्धात्तच्छ्रूयताम् । तदेवाहतुः । त्वज्जिघांसुसुभटांस्तव घातुकान्भटान्सिन्धुपतिर्दिग्ये भूरिद्रव्यादिदानेन पालितवान् । तथेष्टः समभावत्वेनाभिमतो यः सुरो मरुचण्डीशादिस्तस्य कोशं दिव्यजलमपीप्यत् । वयं भीमं हनिष्याम एवेति तद्वचसि स्वप्रत्ययोत्पादनायेष्टदेवतां संस्थाप्य तान्स्नानजलं पायितवानित्यर्थः । तथा प्रजिघाय त्वत्पार्श्वे प्राहिणोत् ॥

---

१ ए °धे श्रू°. २ सी डी °प्यत्त्वांजि°.

---

१ बी °वो नित्य°. २ ए °मेवे । ते°. ३ डी °वे । श्रे°. ४ सी °थ । ग्रन्थि°. ५ सी °थ । दम्भि°. ६ ए इत्यवे°. ७ ए °णतु । व°. ८ ए °रतु । उ°. ९ ए ई शश इ°. १० ए स्खललि°. ११ सी डी °न्धाच्छू°. १२ सी डी °देवहेतुः. १३ ए °ज्जिघासुः सुभ°. १४ ए °र्दित्ये भू°. १५ सी °स्य को°.

तं [1]जिगाय शिवशाणपतिं प्राजीहयत्स्वकटके स च दूतैः ।
यं जिगीषति न कोपि चि[2]कीपुं वाजिभियुधि न चाप[3]चिकाय ॥५४॥

५४. तं शिवशाणपतिं शिवशाणदेशाधिपं स सिन्धुपतिर्जिगायाभिभूतवा[1]न्दूतैः कर्तृभि. स्वकटके प्राजीहयच्चा[2]नाययच्च । चो भिन्नक्र[3]मे । जित्वा सदा स्वसेवकं चकारेत्यर्थः । एतेनास्य प्रभुत्वशक्तिरुक्ता । प्रचुराश्वसाधनत्वाद्वाजिभिरश्वैश्चि[4]कीपुमुपचेतुमिच्छन्तं यं न कोपि युधि जिगीषति । तथा यं कोपि न चापचिकाय नापचितं क्षीणबलं चक्रे ॥

निश्चिका(चा)य बलमस्य न कश्चिन्निश्चिचीषति न चाशयमस्य ।
दुर्मतिस्त्वयि यदेष इयेषोवोष नः स तदियर्त्यनलत्वम् ॥ ५५ ॥

५५. अस्य सिन्धुपतेर्बलं पराक्रमं न कश्चिद्बा[5]लि[6]ष्ठोपि निश्चिका(चा)यैतावदिति नि[7]र्णीतर्वान् । एतेनोत्साहशक्तिरुक्ता । तथातिगूढहृदयत्वादस्याशयं चित्तं न कश्चिन्निश्चिचीषतीदृशमिदामिति [9]न निर्णिनीषति । एतेन तु मन्त्रशक्तिः । अत एवैष दुर्मतिर्दुष्टाशयः संस्त्वयि विषये यद्धिंसादिकमियेषैच्छत्तन्नोस्मानुवोष ददाह । अत एव तन्नोस्माकमनलत्वमग्नितामियर्ति स्म जगामाग्नितुल्यमभूदित्यर्थः ॥

---

१ ए जिघाय. २ ए °कीपु वा°. सी °कीर्पुं वा°. ३ ए °चिपाय.

---

१ सी °वान्तैः क°. २ बी °च्चान्नायच्च. ३ ई °क्रमो नि°. ४ सी डी °कीर्पुमु°. ५ ए °श्चिद्विलि°. ६ ए बी °लिष्टोपि. ७ डी ई °ति न नि°. ८ ए °वानेनो°. ९ ए न र्निर्णि°.

यस्तवारिररियर्ति तमेषोर्यर्ति तांस्त्वदुदयं न य ईपुः ।
ताञ्जहार विदुधाव चखानादिद्युतन्परिजगुर्य इह त्वाम् ॥५६॥

५६. यस्तवारिस्तमेष सिन्धुपतिररियर्त्यत्यर्थं [1] गच्छति त्वदरिं मित्रीकरोतीत्यर्थः । तथा येन्यायिनश्चरटाद्यास्त्वदुदयं तवोन्नतिं स्वविनाशाशङ्कया नेपुस्तानर्यर्ति । तथा तांस्त्वन्मित्रादीनसौ जहार सर्वस्वापहारेणालुण्टयद्विदुधावेतस्ततो [2] ऽयक्षिपच्चखान व्यदारयत् । य इह सिन्धुदेशे त्वां परिजगुर्गुणग्रहणेनाकीर्तयन्नत एवादिद्युतन्प्रकटीचक्रुः ॥

देहि । अवधेहि । इत्यत्र "हौ दः" [ ३१ ] इत्येन्न चायं द्विः ॥ न च द्विरित्युक्तेः कृतमपि द्वित्वं निवर्तते । तेन यङ्लुप्यपि देहीति स्यात् ॥

दिग्ये । अत्र "देर्दिगिः°" [ ३२ ] इत्यादिना दिग्यादेशः ॥

अपीप्यत् । इत्यत्र [4] "ङे पिबः पीप्य्" [ ३३ ] इति पीप्य् [5] ॥

प्रजिघाय [6] । जिघांसु । इत्यत्र "अङे हि°" [ ३४ ] इत्यादिना [7] मूलहस्य घः ॥ अङ इति किम् । प्राजीहयत् ॥

जिगीषति । जिगाय । इत्यत्र "जेर्गिः°" [ ३५ ] इत्यादिना गिः ॥

चिकीषु [8] निश्चिकीषति । अपचिकाय निश्चिचाय । इत्यत्र "चेः किर्वा" [ ३६ ] इति वा [9] किः ॥

इयेष । उवोष । इयर्ति । इत्यत्र "पूर्वस्य°" [ ३७ ] इत्यादिना-इयुवौ ॥ अर्तेर्यङ्लुपि द्वित्वे [10] पूर्वस्याकारे "रिरौ च लुपि" [ ४.१.५६ ] इति रिरी-आगमे तदिवर्णस्य [11] चेयभावे सति अरियर्ति । एके त्वत्रेयं नेच्छन्ति । अर्यर्ति [12] । तन्मत-

---

१ ए °रियर्त्य°. २ ए °दिगुधा°. ३ ई सी व्यक्षेप°. ४ सी °त्र दे पि°. ५ ए पीप्य ॥. ६ बी प्रतिजि°. ७ डी °ना पूर्वह°. ८ बी °कीर्षु नि°. ९ सी वा दिः ॥ इ°. १० सी °र्वस्याका°. ११ बी चेयभा°. १२ डी °र्यर्ति । त°.

संग्रहार्थं पूर्वस्येति योः समानाधिकरणं विशेषणं तेनेकारोकारमात्रस्यैव पूर्वस्येयुवौ ॥ अस्व इति किम् । ईयु. ॥

जहार । इत्यत्र "ऋतोत्" [ ३८ ]इति ऋतोत् ॥

परिजगुः । विदुधाव । इत्यत्र "ह्रस्वः" [ ३९ ] इति ह्रस्वः ॥

परिजगुः । जहार । इत्यत्र "गहोर्जः" [ ४० ] इति जः ॥

अदिद्युतन् । इत्यत्र "द्युतेरिः" [ ४१ ] इति–इः ॥

चखान । विदुधाव । इत्यत्र "द्वितीय°" [४२ ] इत्यादिनाद्यतृतीयौ ॥

**नो ऋतिच्छिषति सामनि तिष्ठेवाभ्यृचिच्छिषति किं तु स दण्डे ।**
**छीच्चकार स यदा परिटिष्ठेवाथ जीव जुक्षुवे नृपचक्रम् ॥ ५७ ॥**

५७. स सिन्धुपतिरुद्धतत्वात्सामनि सान्त्वनोपाये नो ऋतिच्छिषति । न जिगमिषति । ऋच्छ गतावप्यन्ये । तथा सामन्येव विषये तिष्ठेवावज्ञया थूच्चकार । तर्हि क जिगमिषतीत्याह । किं तु दण्डेन्त्योपायेभ्यृचिच्छिषत्याभिमुख्येन यियासति । अत एव स सिन्धुपतिर्यदा छीच्चकार चुक्षावाथाथ वा यदा परिटिष्ठेव थूत्कृतवांस्तदा नृपचक्रं जीव जुक्षुवे बभाषे । जीवेति कर्मपदमनुकरणम् । अनुकार्यानुकरणयोरभेदविवक्षया द्वितीयाया अभावः । यद्वात्रेति शब्दोगम्यः । जीवेत्युवाचेत्यर्थः ॥

तिष्ठेव टिष्ठेव । इत्यत्र "तिर्वा ष्ठिवः" [ ४३ ] इति वा तिः ॥ केचित्तु "स्वरेभ्यः" [ १.३.३० ] इति द्विरुक्तस्य छस्य द्वित्वे सति पूर्वस्य त्यादेशमिच्छन्ति । तन्मते ऋतिच्छिषति इति स्यात् ॥

---

१ बहुषु पुस्तकेषु ष्ठिव् इति धातो रूपाणां स्थानेषु ठू इत्यत्र ट इति दृश्यते ।

---

१ डी °त्रस्ये°. २ सी °ति रितो°. ३ ए ह्रस्व ॥. ४ सी डी °च्छग°. ५ ए °येभ्यचि°.

यस्तवारिररियर्ति तमेषोर्यर्ति तांस्त्वदुदयं न य ईषुः ।
ताञ्जहार विदुधाव चखानादिद्युतन्परिजगुर्य इह त्वाम् ॥५६॥

५६. यस्तवारिस्तमेष सिन्धुपतिररियर्ति[1]अत्यर्थं गच्छति त्वदरिं मित्रीकरोतीत्यर्थः । तथा येन्यायिनश्चरटाद्यास्त्वदुदयं तवोन्नतिं स्वविनाशाशङ्कया नेषुस्तानर्यर्ति । तथा तांस्त्वन्मित्रादीनसौ जहार सर्वस्वापहारेणालुण्टयद्विदुधाव[2]इतस्ततो[3]ऽक्षिपच्चखान व्यदारयत् । य इह सिन्धुदेशे त्वां परिजगुर्गुणग्रहणेनाकीर्तयन्नत एवादिद्युतन्प्रकटीचक्रुः ॥

देहि । अवधेहि । इत्यत्र "हौ दः" [ ३१ ] इत्येत्व चायं द्विः ॥ न च द्विरित्युक्तेः कृतमपि द्वित्वं निवर्तते । तेन यङ्लुप्यपि देहीति स्यात् ॥

दिग्ये । अत्र "देर्दिगिः°" [ ३२ ] इत्यादिना दिग्यादेशः ॥

अपीप्यत् । इत्यत्र[4] "ङे पिबः पीप्य्" [ ३३ ] इति पीप्य्[5] ॥

प्रजिघाय[6] । जिघांसु । इत्यत्र "अङे हि°" [ ३४ ] इत्यादिना[7] मूलहस्य घः ॥ अङ इति किम् । प्राजीहयत् ॥

जिगीषति । जिगाय । इत्यत्र "जेर्गिः°" [ ३५ ] इत्यादिना गिः ॥

चिकीषुं[8] निश्चिचीषति । अपचिकाय निश्चिचाय । इत्यत्र "चेः किर्वा" [ ३६ ] इति वा[9] किः ॥

इयेष । उवोष । इयर्ति । इत्यत्र "पूर्वस्य°" [ ३७ ] इत्यादिना–इयुवौ ॥ अर्तेर्यङ्लुपि द्वित्वे पूर्वस्या[10]कारे "रिरौ च लुपि" [४.१.५६ ] इति रिरी–आगमे तदिवर्णस्य चेयूभावे[11] सति अरियर्ति । एके त्वत्रेयं नेच्छन्ति । अर्यर्ति[12] । तन्मत-

१ ए °रिर्यर्त्य°. २ ए °दिगुधा°. ३ ई सी व्यक्षेप°. ४ सी °त्र दे पि°. ५ ए पीप्य ॥. ६ बी प्रतिजि°. ७ डी °ना पूर्वह°. ८ बी °कीर्षु नि°. ९ सी वा दिः ॥ इ°. १० सी °र्वस्याका°. ११ बी चेयभा°. १२ डी °र्यर्ति । त°.

संग्रहार्थं पूर्वस्येति योः समानाधिकरणं विशेषण तेनेकारोकारमात्रस्यैव पूर्वस्ये-युवौ ॥ अस्व इति किम् । ईयु ॥

जहार । इत्यत्र "ऋतोत्" [ ३८ ]इति[2] ऋतोत् ॥

परिजगुः । विदुधाव । इत्यत्र "ह्रस्व." [ ३९ ] इति ह्रस्वः ॥

परिजगुः । जहार । इत्यत्र "गहोर्ज." [ ४० ] इति जः ॥

अदिद्युतन् । इत्यत्र "द्युतेरिः" [ ४१ ] इति-इः ॥

चखान । विदुधाव । इत्यत्र "द्वितीय°" [४२ ] इत्यादिनाद्यतृतीयौ ॥

**नो ऋतिच्छिषति सामनि तिष्ठेवाभ्यृचिच्छिषति किं तु स दण्डे ।**
**छीचकार स यदा परिटिष्ठेवाथ जीव चुक्रुवे नृपचक्रम् ॥ ५७ ॥**

५७. स सिन्धुपतिरुद्धतत्वात्सामनि सान्त्वनोपाये नो ऋतिच्छिषति । न जिगमिषति । ऋर्च्छ गतावप्यन्ये । तथा सामन्येव विषये तिष्ठेवावज्ञया थूत्चकार । तर्हि क जिगमिषतीत्याह । किं तु दण्डेन्त्योपायेभ्यृचि[5]-च्छिषत्याभिमुख्येन यियासति । अत एव स सिन्धुपतिर्यदा छीत्कार चुक्षावाथाथ वा यदा परिटिष्ठेव थूत्कृतवांस्तदा नृपचक्रं जीव चुक्रुवे बभाषे । जीवेति कर्मपदमनुकरणम् । अनुकार्यानुकरणयोरभेदविव-क्षया द्वितीयाया अभावः । यद्वात्रेति शब्दोगम्यः । जीवेत्युवाचेत्यर्थः ॥

तिष्ठेव टिष्ठेव । इत्यत्र "तिर्वा ष्ठिवः" [ ४३ ] इति वा तिः ॥ केचित्तु "स्वरेभ्यः" [ १.३.३० ] इति द्विरुक्तस्य छस्य द्वित्वे सति पूर्वस्य त्यादेश-मिच्छन्ति । तन्मते ऋतिच्छिषति इति स्यात् ॥

---

१ बहुषु पुस्तकेषु ष्ठिव् इति धातो रूपाणां स्थानेषु ट् इत्यत्र ट इति दृश्यते ।

---

१ डी °ऋसे°. २ सी °ति रितो°. ३ ए ह्स्व ॥. ४ सी डी °च्छव ग°. ५ ए °येभ्यचि°.

अभ्यृचिच्छिषति[1] । इत्यत्र "व्यञ्जनस्य°" [ ४४ ] इत्यादिना पूर्वस्य व्यञ्जनस्यानादेर्लुक्[2] ॥

तिष्ठेव[3] । इत्यत्र "अघोषे[4] शिटः" [ ४५ ] इति शिटो लुक्[5] ॥

छीषकार । शुश्रुवे । अत्र "कङश्चञ्" [ ४६ ] इति चञौ[6] ॥

चोकवीषि किमु चीनपते कोकूयसे किमिति बर्बरराज[7] ।
कोकवीषि किमु तेजनृपेत्थं वावदीति नृपतीन्नुवतोसौ ॥ ५८ ॥

५८. यदा नृपास्तं प्रसादनाय स्तुवन्ति तदासौ लक्ष्म्यादिमदेनावहेलया[8] रे चीनबर्बरतेजदेशाधिपाः किमिति पूत्कुरुथेति निर्भर्त्सयतीत्यर्थः । वृत्तद्वयेनामुनास्यानेके नृपा दासभूताः सन्तीति दुःसाध्यत्वोक्तिः ॥

बेभिदीति स जहेति वनीवञ्चीति भेद्यपरिहेयसमर्थान् ।
जात्वनाकुलमतिर्न सनीस्रंसीति[1] चोन्नतमनोरथशैलात् ॥ ५९ ॥

५९. स सिन्धुपतिर्भेद्यपरिहेयसमर्थान् भेद्यानुपजापार्हान्नृपान्बेभिदीत्युभयवेतननरव्यापारणादिनात्यर्थमुपजपति । तथा परिहेयान्महादुर्गाद्याश्रितत्वेन बह्वायाससाध्यत्वात्साधनेप्यल्पफलत्वात्परिहार्यांस्त्याज्यान्नृपाञ्जहेत्यत्यर्थं त्यजति । तथा समर्थानधिकबलान्नृपान्वनीवञ्चीति कुटिलं याति । अन्यदिगभिमुखं यात्राकरणेन समर्थान्विश्वास्य तेष्वज्ञायमानैश्छलेन पततीत्यर्थः । अत एव शत्रुभयाभावा-

१ ए बी °नीसंस्रीति.

१ डी °च्छिष्यति. २ डी °क् न ॥. ३ ई° व । टिष्टेव । ई°. ४ सी °षे शटः. ५ डी लुक ॥. ६ ए चञौ ॥. ७ ए °कुथे°. ८ बी नहया°. ९ बी °ल्पत्वा°. १० ए °स्याजा°. ११ ए °पान्वनी. १२ बी °नच्छले°. सी डी °नस्थले°.

दनाकुलमतिर्निश्चिन्तः सन्नुन्नतमनोरथशैलाज्जातु न सनीस्रंसीति[2] च नात्यर्थं पतति च। च पूर्ववाक्यार्थापेक्षया समुच्चये। एतेनास्य नीतिशास्त्रोक्तानुसारित्वाद्दुर्जेयतोक्ता॥

द्राक्कनीकसति[1] दिक्षु दनीध्वस्यन्त आपदि पनीपतति स्म।
आपनीपदति मङ्क्षु चनीस्कन्दत्यमुष्य[2] कटकेम्बुधिभूपाः॥ ६०॥

६०. अमुष्य सिन्धुपते. कटके मङ्क्षु शीघ्रप्रयाणैश्चनीस्कन्दति[3]च्छलचारित्वेन यियासितदिग्विशेषगोपनाय कुटिलं गच्छति आपनीपदति च कुटिलमायाति चेतस्ततो भ्राम्यति सतीत्यर्थः। अम्बुधिभूपा द्वीपवासिनृपा द्राक् दिक्षु चनीकसति स्म मा स्मेदमस्मासुच्छलेन पप्तदिति भयेन कुटिलं गच्छन्ति स्म। अत एव दनीध्वस्यन्ते स्म सैन्यादिनात्यर्थ क्षीणाः। अत एव चापदि विपत्तौ पनीपतति स्मात्यर्थं पेतुः। एतेनास्य सैन्ये चलिते महादुर्गस्था अपि भयान्न सुखेन शेरत इत्युक्तम्॥

जङ्गमीति च बलैः स[3] बनीभ्रश्यन्त[4] उच्चशिखराणि गिरीणाम्।
जङ्गभत्यहिपतौ परिबम्भञ्जीति[5] जीर्णकमठोपि च पृष्ठम्[6]॥ ६१॥

६१. स सिन्धुपतिर्बलैर्जङ्गमीति दिग्जयायच्छलचारित्वात्कुटिलं गच्छति। ततश्च गिरीणामुच्चशिखराण्युन्नतशृङ्गाणि बनीभ्रंश्यन्ते चानन्तबलसंमर्देन गिरीणां कम्प्यमानत्वादत्यर्थमधः पतन्ति

१ ए डी द्राकनी°. २ ए सी डी °मुल्यक°. ३ सी डी स वनी°. ४ बी °भ्रसन्त. ५ डी °बम्भ्रञ्जी°. ६ ए बी पृष्टम्.

१ सी ई °श्चितः. २ बी °नीश्रसी°. ३ ए बी सी ई °ति छल°. ४ सी कुल°. ५ ए बी सी डी पतदि°. ६ ए °पति वलै°. ७ ए दिग्गया°. ८ ए डी °णि वनी°. ९ सी °नीम्रश्य°. १० बी °भ्रसन्ते. ११ ए °त्यर्थः म°.

नेरीनृत्यन्ते। अत्र "ऋमतारी(रीः)[2] [५५] इति रीः॥

नरिनर्ति। नर्नृतीति। नरीनृतत्[3]। इत्यत्र "रिरौ च लुपि" [५६] इति रिरौ रीश्च॥

क्ष्मामनेनिजुरवेविषुरिन्दोर्न ह्यवेविजुरिहेश यशांसि।
यानि तेन स पिपर्ति [1]बिभर्तीयर्ति तान्यहह सीम जिहीते॥६४॥

६४. हे ईश ते तव यानि यशांसि क्ष्मामनेनिजुर्[4]निर्मलीचक्रु[5]-रवेविषुर्व्याप्नुवन्नत एवेन्दोश्चन्द्रान्न ह्यवेविजुर्नैव पृथगभवन्निन्दुतुल्यानीत्यर्थः। तानि स[6] चेदिर्न पिपर्ति त्वदरिभिर्विलुप्यमानानि न रक्षति न बिभर्ति गानेन[7] न पोषयति न धारयति वा नेयर्ति न याति नाश्रयतीत्य[8]र्थः। अतश्चाहहेति खेदे कष्टं सीम सकलभूमण्डलव्याप्ति[9]लक्षणा त्वद्य[10]शोमर्यादा जिहीते याति भ्रश्यतीत्यर्थः॥

अम्बुधिं प्रसृतिभिः स मिमीते यो मिमासति तदश्वरथेभम्।
तं जिजावयिषुरत्र न कालोप्यस्य संयियविषुर्युधि कोन्यः॥६५॥

६५. यो[11] नरस्तदश्वरथेभं तस्य चेदेरश्वान्रथान् गजांश्च मिमासति संख्यातुमिच्छति सोम्बुधिं प्र[12]सृतिभि[13]श्चुलुकैर्मिमीते संख्याति। तथात्र युधि कालोपि यमोपि तं चेदिं न जिजावयिषुरस्यातिशूरत्वेन स्वमरणाशङ्कया नात्मा[14]नं गमयितुमिच्छुस्ततो युधि कोन्योस्य संयियविषुः[15] संवद्धीभावि[16]तुमिच्छुः॥

---

१ डी बिभर्ती°.

---

२ सी नरिनर्ति। नरी°. ३ ए °ता री॥ न°. ३ ए वी सी डी °नृत्यत्. ४ सी °निर्म°. ५ ए °क्रुरवेविषु°. ६ सी स चिदि° ७ ए ई °न पो°. ८ सी °त्यमोतत°. ९ सी °व्यापिल°. १० सी त्वपोशो°. ११ सी योन्यर°. १२ वी प्रभृति°. १३ सी डी °भिश्चु°. १४ ए नात्म ग°. १५ ए संनियि° १६ ए °विमि°.

क्ष्मां रिरावयिषता कटकेनारीँल्लिलावयिषतीह सहेलम् ।
को विभावयिषति स्म न सख्यं कः शुशावयिषति स्म न भक्तिम्
॥ ६६ ॥

६६. कः सख्यं चेदिना सह मैत्रीं न विभावयिषति स्म भावयितुमिच्छाति स्म। सर्वोपि मृत्युभयात्सख्यं चिकीर्षति स्मेत्यर्थः। तथा को भक्ति न शुशावयिषति स्म नाविवर्धयिषत्। क सति। इह चेदौ। किंभूते। क्ष्मां रिरावयिषता पादाघातैः शब्दायमानां प्रयोक्तुमिच्छता कटकेन कर्त्रा सहेलं लीलयैवारीँल्लिलावयिषति छेदयितुमिच्छति। एतेन यात्रारम्भिण्यप्यस्मिन्सर्वेपि नृपा वशीभूता इत्युक्तम् ॥

अनेनिजु । अवेविजुः । अवेविपुः । अत्र "निजां शित्येत्" [५७] इति पूर्वस्यैत् ॥

पिपर्ति । इयर्ति । बिभर्ति । मिमीते । जिहीते । अत्र "पृभृ°" [५८] इत्यादिना पूर्वस्य-इः ॥

मिमासति । इत्यत्र "सन्यस्य" [५९] इति-इः ॥

जिजावयिषुः । संयियविषुः । रिरावयिषता । लिलावयिषति । बिभावयिषति । इत्यत्र "ओर्जान्तस्था°" [६०] इत्यादिना-इः ॥ ननु ण्यन्तानां वृद्ध्यावादेशयोः कृतयोर्द्वित्वे सति पूर्वस्योकारान्तता न संभवति। तत्र "सन्यस्य" [५९] इत्यनेनैव सिद्धे किं गुरुणा सूत्रेण। एतावत्तु विधेयम्। ओः पयेवर्णे इति। पिपविषते। यियविषतीत्यत्र पूर्वस्योकारान्तस्येत्वं यथा स्यात्। सत्यम्। णौ यत्कृतं कार्यं तत्सर्वं स्थानिवदिति न्यायज्ञापनार्थम्। तेन शुशावयिषतीत्यादि सिद्धम् ॥

१ ए शुभाव°.

१ सी डी °था भक्ति को न. २ ए शुभावायि°. ३ ए बी °त्। इ°. ४ सी पादघा°. ५ ए °हे लील°. ६ ए °वारीछि°. ७ सी डी °यितु°. ८ ए °विपुः। अ°. ९ ए °जां सत्ये°. बी °जां शेत्ये°. १० बी °स्यैतद. ११ बी सनस्य. १२ सी °यिषु। स°. १३ ए °त्र ऊर्जा°. १४ सी ततत्स°.

अन्यभूमिपतिनाम सदा शिश्रावयिष्यत इहास्य न कैश्चित् ।
एक एव हि भवान्नृपतिः शुश्रावयिष्यत इदं स्म समग्रैः ॥ ६७ ॥

६७. इह पृथ्व्यामन्यभूमिपतिनाम सदा न कैश्चित्कैरपि नृपादिभिः शिश्रावयिष्यतेहंयुत्वेनान्यनृपनाम्नोप्यसहिष्णुत्वादस्य न संभालयितुमिष्यते किं तु हे चेदिपते हि स्फुटमेक एव भवान्नृपतिरिदमस्य समग्रैः सर्वैः शुश्रावयिष्यते स्म । इदमिति भिन्नक्रमे । अस्येत्यस्य व्याप्यत्वेपि संबन्धविवक्षया षष्ठी । एतेनायं त्वन्नामापि न सहत इत्युक्तम् ॥

तैरनेन वसु दण्डपदे सिस्रावयिष्यत इलापतिवर्गैः[1] ।
यैः किलोद्भटभुजैरभितोसुस्रावयिष्यत धनं धनदेन ॥ ६८ ॥

६८. तैरिलापतिवर्गै राजौघैः कर्तृभिरनेन चेदिना हेतुकर्त्रा दण्डपदे दण्डस्थाने वसु द्रव्यं सिस्रावयिष्यते क्षारयितुमिष्यते । किलेति सत्ये । उद्भटभुजैर्बलिष्ठबाहुभिर्यैर्हेतुकर्तृभिरभितः सामस्त्येन धनदेन प्रयोज्यकर्त्रा धनमसुस्रावयिष्यत भुजाबलेन यैर्धनदोपि दण्डं जिघृक्षित इत्यर्थः । एतेनास्य कोशसंपदतिशयोक्तिः ॥

अस्य कोपकठिनं हृदयं दिद्रावयिष्वरिकुलं चटु वक्ति ।
भक्तिवाग्भिरमुना खलु नादुद्रावयिष्यत जनः पुनरन्यः ॥ ६९ ॥

६९. अस्य चेदेः कोपकठिनं हृदयं दिद्रावयिषु प्रसिसादयिषि-

१ ए सिश्राव°. बी सिश्राव°.

१ ए °युकेना°. २ ए सर्वैपुः श्रा°. ३ डी राजौघैः ४ ए हेतुः क°. ५ ए बी °बिष्टवा°. ६ बी °बाहुभि°. ७ ए भियैहेतु°. ८ ई °भस्त्येन. ९ बी °सुस्राव°. १० सी डी भुजब°. ११ ए °क्षत. १२ ई °न हि°.

त्यर्थः । अरिकुल चटु चाटुकारान्वक्ति । अमुना चेदिना पुनरन्यो जन शत्रुलक्षणः खलु निश्चयेन भक्तिवाग्भिर्भक्तिप्रधानवचनैर्नोदुद्रावयिष्यत । एतेनामुनारीणां मानो भग्नो न त्वस्य केनापीत्युक्तम् ॥

**अस्य चाश्वबलमुद्भटमुत्पिप्रावयिष्विव रयादधिरूढान् ।**

**वीक्ष्य सप्ततुरगी ध्रुवमुत्पुप्रावयिष्यत इनेन न सापि ॥ ७० ॥**

७०. ध्रुवं सापि सकलाश्वोत्कृष्टतया प्रसिद्धापि सप्ततुरगीनेन रविणा नोत्पुप्रावयिष्यते नोर्ध्वं गमयितुमिष्यते । किं कृत्वास्य चेदेरश्वबलं वीक्ष्य । किंभूतम् । उद्भटमश्वेषूत्कृष्टमत एव रयाद्वेगादधिरूढानश्ववारानुत्पिप्रावयिष्विवोर्ध्वं गमयितुमिच्छुिव । उद्भटत्वादधिरूढानां रयेणोत्पिप्रावयिषुत्वाच्चैतदश्वबलं मत्कां सप्ताश्वीमुपरि यान्तीं मा भिपिषेणादित्याशङ्कयार्केण नैतदूर्ध्वं गमयिष्यत इति संभावयामीत्यर्थः ॥

**पर्वतप्रतिममस्य महीं पिप्लावयिष्विभकुलं मदपूरैः ।**

**चिन्तयन्स नियतं न मुदापुप्लावयिष्यत हरिः स्वगजेन ॥ ७१ ॥**

७१. स ऐरावणवाहनत्वेन सर्वत्र प्रसिद्धो हरिरिन्द्रोपि नियतं निश्चितं मुदा हेतुना स्वगजेनैरावणेन हेतुकर्त्रा नापुप्लावयिष्यत मुदा प्लवमानो हर्षावस्थां प्राप्नुवन्हरिः स्वगजेन प्रयोक्तुं नैष्यतेत्यर्थ. । कीदृक्सन् । अस्य चेदेरिभकुलं चिन्तयन्परिभावयन् । किंभूतं पर्वतप्रतिमं तथा मदपूरैर्मही पिप्लावयिषु । वृत्तद्वयेनामुनार्यमुत्कृष्टाश्वेभसंपदा दुर्जेय इत्युक्तम् ॥

---

१ सी जन श°. २ ए °ष्यथ । ए° ३ सी डी °णां मदो भ°. ४ ए नोपुप्रा°. ५ ए °ष्यति नो°. ६ सी °त्वा चे°. ७ ए बी °वोर्द्ध ग°. ८ ए °त्वाच्चेत°. ९ ई मम स°. १० सी °ष्यते मु°. ११ ए सी °मही पि°. १२ सी पिप्लव°. १३ सी °यिष्ट । पृ°. १४ ए °ययत्कृ°.

राजभिर्बहुभिरप्यसकौ चिच्यावयिष्यत उदग्रतरः कैः।
येन सोपि किल दर्पजुषा चुच्यावयिष्यत इनस्त्रिदशानाम् ॥७२॥

७२. येन चेदिना दर्पजुषा सता स[1] शौर्यादिगुणैः प्रसिद्धस्त्रिदशानामिनोपि शक्रोपि चुच्यावयिष्यत इन्द्रपदाद्भ्रंशयितुमिष्यतेसकौ[2] चैद्य उदग्रतरः पूर्वोक्तबला[3]दिसंपदोद्भटतरो बहुभिरपि राजभिः कैश्चिच्यावयिष्यते । एतेन त्वां विना त्वन्नृपैर्बहुभिरप्यसौ न साध्य इत्युक्तम् ॥

शिश्रावयिष्यते शुश्रावयिष्यते । सि[4]स्रावयिष्यते अ[5]सुस्रावयि[6]ष्यत । दिद्रावयिषु अदुद्रावयिष्यत । उत्पिप्रावयिषु उत्पुप्रावयिष्यते । पिप्लावयिषु अपुप्लावयिष्यँत । चिच्यावयिष्यते चुच्यावयिष्यते । अत्र[8] "श्रुस्रु°" [ ६१ ] इत्यादिना पूर्वोत इर्वा ॥

दीर्घनिद्रमथ सोरि[1]गणं सुष्वापयिष्वसिकरोचकथत्तत् ।
मन्त्रिणां बलमचीकरदग्रे केतुभिर्ग[2]गनमौर्णुनवद्यत् ॥ ७३ ॥

७३. अथैवं चरोक्त्यनन्तरं स भीमस्तच्चरवचनं मन्त्रिणामचकथत्तैः[9] सहामन्त्रयदित्यर्थः । कीदृक्सन् । दीर्घा कदाचिदप्यजागरणेन प्रलम्बा निद्रा मृत्युरूपा यत्र तद्यथास्यादेवमरिगणं सुष्वापयिषुः[10] शाययितुमिच्छुर[11]सिः करे यस्य सः । को[12][13]पावेशाच्छत्रूच्छेदायात्तखड्ग इत्यर्थः।

---

१ सी °रिमण सु°. २ बी °र्गमन°.

---

१ बी सी डी स सौर्या°. २ ए °तेशकौ. ३ ए °लालिस°. ४ सी सिश्राव°. ५ ए अशुश्राव. ६ बी °ष्यते । दि°. ७ सी °ष्यते । चि°. ८ ए °त्र सुस्तु १°. ९ ए °थत्ते स°. १० डी °षुः स्वापयि°. ११ सी °रसि क°. १२ डी कोपवे°. १३ सी °त्रूख°.

मापेक्षत्वेप्यत्र समासो नित्यसापेक्षत्वात् । तथा यद्बलं केतुभिर्ध्वजैः कर्तृभिर्गगनमौर्णुनवद्बृंहीयस्त्वेनाच्छादयत्तद्बलमग्रे स्वस्याग्रतोचीकरत् । शत्रवभिषेणनायासंख्यं सैन्यमग्रे कृत्वा चचालेत्यर्थः ॥

सुष्वापयिषु । इत्यत्र "स्वपो णावु°" [ ६२ ] इति पूर्वस्योत् ॥

अचीकरत् । इत्यत्र "असमान°" [ ६३ ] इत्यादिना पूर्वस्य सनीव कार्यम् ॥ असमानलोप इति किम् । अचकथत् ॥

अचीकरत् । इत्यत्र "लघोर्°" [ ६४ ] इत्यादिना दीर्घः ॥ अस्वरादेरिति किम् । और्णुनवत् ॥

तं स सिन्धुवहमाप महीं योतस्तरत्क्षितिभृतोददरच्च ।
नोत्तितीर्षुमुदतत्वरदब्धिं द्रागससरदपारपयोभिः ॥ ७४ ॥

७४. स भीमस्तं सिन्धुवहं पञ्चनदाख्यं वहनमाप प्राप यो वहो महीमपारपयोभिरपर्यन्तजलैः कृत्वातस्तरत्प्लावितवान्क्षितिभृतोद्रीनददरच्च जलाघातैर्व्यदारयच्च । अत एव द्रागब्धिमसस्मरत्स्मरयामासाथांदब्धि दृष्टपूर्विणो लोकान् । अत एव चोत्तितीर्षुमुत्तरीतुमिच्छुं नरं नोदतत्वरद्दुस्तरत्वाशङ्कया नोत्सुकमकार्षीत् ॥

द्यामपस्पशदपप्रथदम्भोमम्रदत्तटतरूंश्च तरङ्गैः ।
यस्तटानि मकरैरववेष्टद्दाविवेष्टदथ कं न भयेन ॥ ७५ ॥

७५. यो वहस्तरङ्गैः कर्तृभिर्द्यां व्योमापस्पशत्स्पर्शितवान् । तथाम्भोपप्रथद्व्यस्तारयत् । तथा तटतरूनमम्रदच्चोन्मूलयामास च । तथा

---

१ ए °दाधिवे°

---

१ सी °लक्षापे° २ डी °बद्वही°. बी ई °वद्दही°. ३ सी °सल्यसै°. ४ सी कार्ये ॥ अ°. ५ सी °दाल्यव°. ६ सी ददार°. ७ सी डी ई °रत्सार°. ८ डी त्तिरीर्षु°.

यः कूलंकषत्वेन मकरैर्मत्स्यैः कर्तृभिस्तटान्यववेष्टव्यापयामास । अथैवं सति यो भीष्मत्वाद्भयेन कर्त्रा कं नरं नाविवेष्टन् ॥

योम्बुधिर्नु जलदानचचेष्टत्स्वर्वधूः सुरसरिन्न्वचिचेष्टत् ।

न त्ववाजगणदत्र जनोयं कण्ठभूषणमजीगणदुर्व्याः ॥ ७६ ॥

७६. यो वहोम्बुधिर्नु जलदानचचेष्टज्जलग्रहणाय व्यापारितवान् । तथा यो निर्मलजलत्वेन सुरसरिन्नु व्योमगङ्गेव स्वर्वधूर्देवीरचिचेष्टज्जलक्रीडार्थं व्यापारयत् । अत एवात्र पृथ्व्यां य वहं जनो न त्ववाजगणदल्पीयान्निष्फलश्चायामिति नैवावज्ञातवान् । किं तु यं जन उर्व्याः पृथ्वीरमण्याः कण्ठभूषणं ग्रैवेयकमेतदाकारत्वादजीगणज्ज्ञातवान् ॥

असस्मरत् । अददरत् । उदतत्वरत् । अपप्रथत् । अमम्रदत् । अतस्तरत् । अपस्पशत् । अत्र "स्मृदृत्वर°" [ ६५ ] इत्यादिना पूर्वस्यात् ॥

अववेष्टत् आविवेष्टत् । अचचेष्टत् । अचिचेष्टत् । इत्यत्र "वा वेष्टचेष्टः" [६६] इति वात् ॥

अजीगणत् । अवाजगणत् । इत्यत्र "ईच्च गणः" [ ६७ ] इति-ईदच्च ॥

आदुरानृधुरथानशिरे चानञ्शुराञ्छुरभितोपि यदापः ।

वाश्छलेन गिरिराड्किमिहानाञ्छेति येन च बभूव वितर्कः ॥७७॥

७७. येन वहेन हेतुना वितर्कोर्थान्नृणां बभूव च । कथमित्याह । यद्यस्माद्धेतोरापोभितः समन्तादूर्ध्वं तिर्यग्दिक्षु चानृधुर्ववृधिरे । अथ वृध्यनन्तरमभित आनशिरे व्यापुस्तथाभित आनञ्शुश्च भ्रक्षयामासुरार्द्रीचक्रुश्चेत्यर्थः । चो भिन्नक्रमे । आञ्छुरपि दीर्घीबभूवुश्च । अपिः समु-

---

१ बी °विचेष्ट°. २ ए °नववेष्ट°. ३ ए °रविचे°. ४ सी डी °निफल°. ५ ए °पणग्रै°. ६ डी °त् । उ°. ७ ई °पस्पश°. ८ बी अचचेष्ट°. ९ डी °त् अवि°. १० ए बी ईच ग°. ११ बी सी डी °मुश्चार्द्री°. १२ ए °र्थश्चो-क्रिम°. १३ ए सी अपि स°.

न्नयार्थो भिन्नक्रमे । अत एवाभित आदुग्वि सामस्त्येन भुक्ता इव । ये हि यथाकाम भुक्ता. न्युस्ते ह्यङ्गेन वर्धन्ते । तत. स्थौल्यादिशो व्याप्नुवन्ति स्निग्धाङ्गत्वचा म्रक्षिता इव च स्युर्दीर्घीभवन्ति चेति । अतश्च वाँश्छलेनैव प्रवृद्धव्यापकदीर्घीभूतजलव्याजेनेह सिन्धुदेशे कि गिरिराड्हिमालय आनाञ्छ दीर्घीबभूवेति ॥

**किं बभूव इह चन्द्रमसा सुष्वाप किं हरिरिहेह बुभूवे ।**
**किं श्रिया भृगुसुतः किममुं विव्याध चेति जनता यमनूचे ॥७८॥**

७८. यं वहमनु लक्ष्यीकृत्य जनतोचे । कथमित्याह । चन्द्रमसा किमिह वहे बभूव उत्पन्नम् । तथा हरिर्विष्णुः किमिह वहे सुष्वाप तथेह वहे कि श्रियां बुभूवे तथा भृगुसुतः परशुरामः किममुं वहं विव्याध च शरेणाताडयच्चेति । समुद्रे हि किल चन्द्रश्रियावुत्पन्ने हरिश्च सुष्वाप रामश्च समुद्रपर्यन्तायां भूमौ विप्रेभ्यो दत्ताया स्वावासभूम्यर्थमब्धि शरेणाताडयादिति प्रसिद्धिः । अयं वहो महाप्रमाणत्वेनाब्धितुल्य इति जनतात्रैवमाशङ्कतेत्यर्थः ॥

**वर्त्म विव्ययिथ जिज्यिथ सीमां किं नु विव्यचिथ वारिधिरेव ।**
**को भ्रमादिदमुवाद न यस्मिन्विव्यथे च हृदि को न तितीर्षुः**
**॥ ७९ ॥**

७९. भ्रमात्समुद्रभ्रान्तेर्यस्मिन्वहविषय इदं को नोवाद नावदत् । किमित्याह । वर्त्म विव्ययिथातिदीर्घत्वेनाच्छादितवान्रुद्धवानित्यर्थः । तथातिविस्तीर्णत्वात्सीमामियत्प्रमाणोयमिति मर्यादां जिज्यिथ तत्य-

१ सी बुभुवे. २ सी °ज्यिवे सी°.

१ सी डी °ङ्ग्वाचाम्र°. २ ए स्युद्दीर्घा° ३ बी वाछले°. डी वा स्यले°. ४ सी °ह क श्रि°. ५ ए सी °या बभू°. ६ सी डी, पर्शुरा°. ७ ए °मः किम° सी °मः केम° ८ सी को नावा°. ९ बी °दत । कि°.

कथाप्रमाण इत्यर्थः । अतो नु[1] इति वितर्के । संभावयेहं[2] त्वं वारिधिरेवं[3] तर्त्कि विव्यचिथ वहोहं न तु वारिधिरिति व्याजं किमिति[5] चकर्थ । तथा तितीर्षुस्तरीतुमिच्छुः को हृदि न विव्यथे कथमयं[6] तरिष्यत इति चित्ते सर्वोपि तितीर्षुः पीडित इत्यर्थः ॥

आदुः । अत्र "अस्यादेर्°" [ ६८ ] इत्यादिना पूर्वस्यात् ॥

आनृधुः । आनशिरे । आनञ्जुः । अत्र "अनातः°" [ ६९ ] इत्यादिना–आ[8] बश्रान्तः ॥ अनात इति किम् । आञ्छुः । कश्चिदत्रापीच्छति । आनाञ्छ ॥

बभूव[9] । बभूवे । सुष्वाप । इत्यत्र "भूस्वपोरदुतौ°" [ ७० ] इत्यदुतौ ॥ केचित्तु कर्तर्येव भुवोकारमिच्छन्ति न भावकर्मणोः । तेन[10] बुभूवे श्रिया ॥

जिज्यिथ । विव्यधिथ । विव्याध । विव्यचिथ । विव्यथे । अत्र "ज्याव्ये°" [ ७१ ] इत्यादिना[11]–इः ॥

किं न्वियाज किमुवाश तरङ्गैर्द्यामुवाच नु च यः स्वमगाधम् ।
ऊयुरभ्रपटली[1] मिहिकास्ता यत्र याः परिववौ पवमानः ॥ ८० ॥

८०. यो वहो द्यामाकाशं तरङ्गैः कृत्वा किं न्वियाज । किं न्विति वितर्के । तरङ्गाणामूर्ध्वगामित्वेनोत्क्षिप्यमाणार्घाञ्जलितुल्यत्वात्किमानर्च । कि किं वा तरङ्गैर्द्यामुवाश तरङ्गाणां द्योभिमुखोच्छलितत्वात्साभिलाषोत्क्षिप्तभ्रूतुल्यत्वाच्चाभिललाष । नु च किं वा तर-

---

१ सी °टलीमि°.

---

१ ए नु वि°. २ सी डी °ह वा°. ३ ए बी °वारधि°. ४ सी डी °व च त°. ५ सी °मि च°. ६ सी डी °थमिय. ७ ई °ष्यते चि°. ८ वी सी ई आमश्रा° ९ सी डी °भूवे । शुष्वा°. १० ए न बुभू°. ११ वी सी °ना—इ ॥.

ङ्गैर्द्यो[1] स्वमात्मानमगाधमतलस्पर्शमुवाच । तरङ्गाणां द्योसमीपगतत्वात्सशब्दत्वाच्च तैर्द्योरग्रे स्वमगाधं किमुवाचेत्यर्थः । तथा यत्र वद्दे ता मिहि[2]का नीहारा अभ्रपटलीं धूमरीमूयुः संतेनुर्या[3] मिहिकाः पवमानो वायुः परिववौ मेलितवान् ॥

न ह्युवाय ववतुर्न न[1] चोवुः कोपि कावपि च केपि च यद्धि ।
वेधसा तदुपवाय परिज्यायाभ्यदर्शि वसनं नु य उर्व्याः ॥८१॥

८१. यद्वसनं हि स्फुटं न हि नैव कोपि तन्तुवायादिरुवार्य[4] व्युतवान् कावपि[5] च न ववतुः केपि च न चोवुरुर्व्या भूरमण्याः संबन्धि तद्वसनं नु वस्त्रमिव यो वह्नो वेधसाभ्यदर्शि ज्ञापितर्मर्थान्नृणां[6] यद्वोर्व्या अभ्यदर्शि[7] दर्शितं दत्तमित्यर्थः । किं कृत्वा परिज्याय स्वस्य हानिं कृत्वा कष्टं कृत्वेत्यर्थः । तयोपवार्य व्युत्य[8] ॥

इयाज । उवाय । उवाश । उवाच । इत्यत्र "यजादि[9]" [ ७२ ] इत्यादिना पूर्वस्य सस्वरान्तस्था य्वृत् ॥

ऊयुः । अत्र "न वयोय्" [ ७३ ] इति वयेर्यो[10] य्वृन्न ॥

परिववौ[11] । इत्यत्र "वेरयः" [ ७४ ] इति य्वृन्न ॥ अय इति किम् । उवाय ॥

ववतुः ऊवुः । अत्र "अविति वा[12]" [ ७५ ] इति वा य्वृन्न ॥ अय इत्येव । ऊयुः ॥

परिज्याय । उपवाय । इत्यत्र "ज्यश्च यपि" [ ७६ ] इतिय्वृन्न ॥

---

१ ए न वोवुः.

---

१ डी °र्द्यो स्वमा°. २ सी मिहका. ३ ए ई °र्यामहि°. ४ ई °व व्यूत°. ५ वी °पि न. ६ वी °र्थानृणां. ७ ए °दर्शि द°. ८ ई °य व्यूत्य ॥. ९ सी डी य्वृत. ॥ ऊ°. १० ए वर्यो. ११ सी °ववौ । इ°. १२ सी वा य्वृ°.

सर्वतोपि हि सरांसि किमु प्रव्याय किं नु परिवीय नदान्वा[1] ।
किं[3] नु सर्वसरितोपि परिव्याय स्थितो य उदकैः प्रतिभाति ॥८२॥

८२. यो वह उदकैः कृत्वा प्रतिभाति[1] मम मनसि प्रतिभासते । कीदृक् । स्थितः । किं कृत्वा । हि स्फुटं सर्वतोपि सरांसि किमु प्रव्यायात्मनि प्रक्षेपात्संवृत्याच्छाद्य वा कि नु कि वा नदान्वा[3] । वा समुच्चये । वहांश्च परिवीय संवृत्य कि[4] नु किं वा सर्वसरितोपि सर्वनदीश्च परिव्याय संवृत्य । अतिमात्रजलत्वात्कवेरित्याशङ्का ॥

इज्यते जलनिधिं किल संवीय स्थितः कलशभूः स मुधैव ।
उह्यते यदमुनैष न संव्यायेति यत्र नृभिरुच्यत उच्चैः ॥ ८३ ॥

८३. यत्र वहविषये नृभिरुच्चैरुच्यते । कथमित्याह । किलेत्यागमे । जलनिधिं[5] संवीय पानेन संवृत्य स्थितः स प्रसिद्धः- कलशभूरगस्त्यो मुधैवेज्यते । अब्धिः पीतोनेनेत्यचिन्त्यवैभवतया[6] लोकैर्यदयं पूज्यते तन्निरर्थकमित्यर्थः । यद्यस्माद्धेतोरेष वहः संव्याय पानेन संवृत्यामुना कलशभुवा नोह्यते स्वात्मनि न धार्यते । वहेत्रापीतेब्धिः पीतोप्यपीत इति भावार्थ इति ॥

प्रव्याय[7] । इत्यत्र "व्यः" [ ७७ ] इति सूत्रम् ॥

संव्याय संवीय । परिव्याय परिवीय । इत्यत्र "संपरेर्वा" [ ७८ ] इति वा सूत्रम् ॥

इज्यते । उह्यते । उच्यते । अत्र "यजादिवचेः किति" [ ७९ ] इति सूत्रम्[8] ॥

---

१ बी सी डी किं तु प°. २ ए °दान्वाः । किं. ३ ई किं नु स°.

---

१ बी °भासि म°. २ बी सी डी किं तु किं. ३ सी °न्वा स°. ४ बी सी डी किं तु किं. ५ ए °निधिस°. ६ ई °या कै°. ७ बी °व्याज । इ°. ८ सी सूत ॥ डी सूतः ॥.

**सोपुपीत्यहिगणोनुतटं सास्वेप्ति नक्रनिचयोपि च यस्य ।**
**पर्यसुप्यत यमेन नु नासोपुप्यत क्षणममृपुपदन्यः ॥ ८४ ॥**

८४. यस्य वह्म्यानुतटं तटसमीपेहिगणः सोपुपीति निरुपद्रवत्वादत्यर्थं शेते । तथा नक्रनिचयोपि च सास्वप्ति । एतयोश्च मृत्युहेतुत्वादुत्प्रेक्ष्यते । यमेन न्वनुतटं पर्यसुप्यत शयितम् । अत एवान्योहिनक्रेभ्य इतरो नरादिर्यस्यानुतटं क्षणं क्षणमात्रमपि नासोपुप्यत मृत्युभयेन नात्यर्थमशेत । तथान्यो नासूपुपन्न च कं चन स्वापयामास ॥

**सिन्धुराडसुषुपद्भयजीनो दुर्गमं यमजिनन्द्विडविद्धः ।**
**आशु विध्यति च विद्विष उग्रोरुव्यचा नु विचिता विचति स्म ॥८५॥**

८५. सिन्धुराडसुपुपत्स्वापमकार्षीत् । कीदृक्सन् । दुर्गम दुःखेन गम्यं यं वहमजिनन्नत्यजन्नत एव द्विडविद्धो द्विड्भिरविद्धः पराभवेनापीडितोत एव भयजीनो भयरहितः । तथोग्रोरुव्यचा नु यथा प्रचण्डो वृश्चिको विद्विषः पदादिघटनेन स्वशत्रूंन्कण्टकेनातर्कितमेव विध्यति तथायं विद्विष आश्वतर्कितं विध्यति च तीव्रप्रहारादिना पीडयति च । तथा विचिता । अत्र तृन् । श्वस्तन्यास्ता वा । वञ्चयते वञ्चयिष्यते वा । विचति स्मच्छलितवान् । एतद्दुर्गवलेनायं स्वयं सुखेन तिष्ठति शत्रूंश्च पराभवतीत्यर्थः ॥

असोपुप्यत । सोपुपीति । असूपुपत् । पर्यसुप्यत । इत्यत्र "स्वपेर्यङ्के च" [ ८० ] इति य्वृत् ॥ यङ्लुपि नेच्छन्त्यन्ये । सास्वप्ति ॥ घञन्तादपि केचिदिच्छन्ति । असुषुपत् ॥

---

१ सी °पी × × × ति निरु°. २ ए °स्वप्ति न°.

---

१ ए °मेव न्व°. २ ए गम्य य. ३ ए °भवोना°. ४ बी सी डी °पः पादा°. ५ सी °त्रूनकण्ट°. ६ बी °न् । स्वस्त°.

जीनः । अजिनन् । अविद्धः । विध्यति । इत्यत्र "ज्याव्यधः क्ङिति" [ ८१ ] इति वृत् ।

विचिता । विचति । इत्यत्र "व्यचोनसि" [ ८२ ] इति वृत् ॥ अनसीति किम् । उरुव्यचाः ॥

यद्युशन्ति पवना गरुडो वावश्यतेनुशितमन्यजनेन ।
लङ्घितुं यमगृहीतपयोन्तं संजिघृक्षुमिव सागरलक्ष्मीम् ॥ ८६ ॥

८६. यदीति संभावने । यदि परं पवना वाता अतिवेगत्वाद्यं वहं लङ्घितुमुशन्तीच्छन्ति । गरुडो वा वावश्यतेत्यर्थं वाञ्छति । यतोगृहीतपयोन्तमपर्यन्तजलमत एव सागरलक्ष्मीमब्धेरनन्ताम्भोरूपां श्रियं संजिघृक्षुमिव संग्रहीतुमिच्छुमिवाब्धितुल्यमित्यर्थः । अतएवान्यजनेन लङ्घितुमनुशितमवाञ्छितम् ॥

वृक्णमेव परिवृश्चति भृष्टं भृज्जतीह परिपृच्छति पृष्टम् ।
विश्रुतं जगति गौरवमावाव्यक्ति यस्य समुदाहरमाणः ॥ ८७ ॥

८७. यस्य गौरवं महत्त्वं समुदाहरमाणः कथयन्नरो वृक्णमेव च्छिन्नमेव परिवृश्चतिच्छिनत्ति भृष्टमेव पक्वमेव भृज्जति पृष्टमेव परिपृच्छति । यत आवाव्यक्ति वाव्यच्यादित्याशास्यमानः तिकि वाव्यक्तिरेवंनामा कश्चिज्जनमात्रम् । आङा मर्यादार्थेनाव्ययीभावः । जनमात्रस्यापीत्यर्थः । जगति विश्रुतम् । यथा छिन्नादेश्छेदनादि निरर्थकमेवमेतद्गौरवस्य जगत्त्रयेपि प्रसिद्धत्वात्कथनं निरर्थकमेवेत्यर्थः ॥

---

१ सी वृक्णमे°. २ ए भृग्यती°.

---

१ सी डी °नत् । अ°. २ सी डी °द्धः । व्यध्य°. ३ ए °धः जिति. ४ ए °त्र वाचो°. ५ सी °व्यचा ॥. ६ ए वाव°. ७ ई °तजलपर्यन्तम. ८ ई सगृही°. ९ बी °म् ॥ विवण°. १० सी °रवम°. ११ सी °भरा वृ°. १२ ई °व प°. १३ सी °र्यामा°. १४ ई °दस्य कथ°.

विव्यधुस्तटमहीरपत्रेवित्त्यंह्रिपांश्च विविधुर्यत आपः।
वेवयीति[1] नु नभः ककुभो वेवीयते[2] नु य उदूर्मिकराग्रः॥८८॥

८८. यतो यस्मिन्वह आद्य[द्यादि?]त्वात्तस्। आपस्तटमहीर्विव्यधुरभ्रंशयन्नित्यर्थः। तथा व्यचेर्यङ्लुपि वेव्रिच्यादित्याशास्यमानः तिकि वेविक्तिर्नाम कश्चिन्नरोपगतोंह्रिपाणामद्रिरुन्मूल्यमानत्वान्नष्टो वेविक्तिर्येभ्यस्ते येंह्रिपा वृक्षास्तांश्च विविधुरुन्मूलितवन्त्यः। अनेनास्य जलातिपूर्णतोक्ता। अत एव यो वह उदुच्छ्रिता ऊर्मय एव कराग्राणि पाण्यग्राणि शुण्डाग्राणि वा यस्य स तथा सन्नभो वेवयीति नु भृशमाच्छादयतीव तथा ककुभो दिशो वेवीयते नु॥

सेसिमीषि किमहो परितः सेसिम्यते जलमदेन यथाब्दः।
संस्यमन्निवति दृशा किल वाव्यत्तं नृपः प्रवबृतेथ नियन्तुम्॥८९॥

८९. अथ नृपो भीमस्तं वहं नियन्तुं सेतुना बन्द्धुं प्रववृते प्रारेभे। कीदृक्सन्। अहो वह जलमदेन जलबाहुल्यदर्पेण यथाब्दो मेघः सेसिम्यतेत्यर्थं गर्जति तथा त्वं किमिति जलमदेन सेसिमीषि। अत्यर्थं शब्दायसे। एतेन त्वज्जलमदोपनेष्यत इत्युक्तम्। इत्येवं प्रकारेण दृशा संस्यमन्नु। यात्राविघ्नोयमिति कोपाद्भ्रुकुट्या साटोपं विलोकनाद्द्रावयमान इव तथा दृशा तं किल वाव्यत्। किलेवार्थे। कोपाल्ललाटारोपितदृष्टित्वेन वहस्याखिलस्याप्याक्रामकत्वाद्दृशा वहमत्यर्थं संवृण्वन्निव लघूकुर्वन्निवेत्यर्थः॥

---

१ सी °ति तु न°. २ सी °ते तुय

---

१ सी °न्याता°. २ ए °गतोह्रि°. ३ सी डी °क्तिएभ्य°. ४ वी विव्यधु°. ५ ए वी सी डी °वन्तोने°. ६ वी उदच्छ्रि°. ७ वी पाण्याग्रा°. ८ ई °ति भृ° सी °ति तु भृ°. ९ सी °ते तु॥. १० ए सेतुबद्धुप्र°. ११ ई °दृक्। म°.

अनुशितम् । उशन्ति । इत्यत्र "वशेरयडि" [ ८३ ] इति य्वृत् ॥ अयडीति किम् । वावश्यते ॥

गृहीत । संजिघृक्षुम्[1] । वृक्णम् । परिवृश्चति । भृष्टम् । भृज्जति[2] । पृष्टम् । परिपृच्छति । इत्यत्र "ग्रह°" [ ८४ ] इत्यादिना य्वृत् ॥ व्यचिवशिव्रश्चिभ्र-[3]स्जिप्रच्छीनां पञ्चानां यङ्लुबन्तानां नेच्छन्त्यन्ये । आवाव्यक्ति ॥ अन्ये तु[4] यङ्लुप्यपि मन्यन्ते । अपवेविक्ति[5] ॥ अपरे तु विचतिवृश्चतिभृज्जतिपृच्छतीनां नित्य य्वृत् । ज्यादीनां त्वनित्यमिति मन्यन्ते । तेन विव्यधुः ॥ अन्ये तु विविधुरित्येवाहुः ॥

वेवीयते[6] । वेवयीति । सेसिम्यते । सेसिमीपि । इत्यत्र[7] "व्येस्यमो[8] यङि" [ ८५ ] इति य्वृत् ॥ यङ्लुपि नेच्छन्त्येके । वाव्यत् । संस्यमत् ॥

**आजुहावयिषति स्म च स क्ष्माचेक्यितोथ चतुरः प्रतिहारः ।**
**आजुहाव निरजूहवदाजिह्वायकीयिपत आशु चमूपान् ॥ ९० ॥**

९०. क्ष्माचेक्यितः[9] क्ष्मया पृथ्वीस्थलोकेनात्यर्थं पूजितः स भीमश्चमूपान्नृपानाजुहावयिषति स्म चाकारयितुमियेष च । यत आजिह्वायकीयिपत आह्वायकेच्छामिच्छतः । प्रागेवाह्वानमिच्छत इत्यर्थः । अथ चमूपाकारणेच्छानन्तरं चतुरो नृपाभिप्रायज्ञः प्रतिहार आशु शीघ्रं चमूपानाजुहाव[10] स्वयमाकारितवान्[11] । निरजूहवदन्यैराह्वायितवान्[12]॥

चेक्यितः । अत्र "चायः कीः" [ ८६ ] इति कीः ॥

१ ए वी डी °ह्वायिकी°.

१ सी °क्षु । वृ°. २ ए भृयति. ३ डी °व्रश्चिभ्र°. ४ सी तु जङ्लु°. ५ ए °पचेवि°. ६ सी वेव°. ७ ए °त्र वेस्य°. डी त्र वेस्यमोर्यङि ८ ई °मोर्यङि. ९ बी °चेक्ष्यतः. १० ई °पाना°. ११ बी °ह्वायिकी°. १२ सी °न् ॥ चे°.

आजुहाव । इत्यत्र "द्वित्वे ह्वः" [ ८७ ] इति सूत्र ॥ अनेनैव सिद्ध उत्तर-सूत्रकरण णेरन्यस्मिन्द्वित्वनिमित्तप्रत्ययव्यवधायके मा भूदित्येवमर्थम् । तेनेह न भवति । आह्वायकमिच्छति आह्वायकीयति ततः सनि आजिह्वायकीयिषतः ॥

निरजूहवत् । आजुहावयिषति । इत्यत्र "णौ ङसनि" [ ८८ ] इति सूत्र ॥

तेष्वशूशवदसौ क्षितिपाज्ञां सेतवे भृशमशिश्वयदोजः ।
ते शुशावयिषवश्च जयं शिश्वाययिष्वनुचराः स्म यतन्ते ॥ ९१ ॥

९१. असौ प्रतिहारस्तेपु चमूपेपु विपये क्षितिपाज्ञां[1] वहत्वन्धविषयं भीमादेशमशूशवदगमयन् । ज्ञापितवानित्यर्थः । तथासौ सेतवे सेतुबन्धार्थं तेपु विपय ओज उत्साहमशिश्वयदवर्धयत् । ते च चमूपाः सेतवे यतन्ते स्म च । चो यौगपद्ये । यदैव प्रतिहारः क्षितिपाज्ञामशूशवत्तदैवोद्येमुरित्यर्थः । यतः किंभूताः । जयं राज्ञो विजयं शुशावयिपवो विवर्धयिषवस्तथा जयं शिश्वाययिपवो[2] विवर्धयिपवोऽनुचराः[3] सेवका येषां ते । सापेक्षत्वेप्यत्र गमकत्वात्समासः ॥

अशूशवत् अशिश्वयत् । शुशावयिपवः शिश्वाययिषु । इत्यत्र "श्वेर्वा" [ ८९ ] इति वा सूत्र ॥

कथं कथं यतन्ते तत्राह ।

शिश्वियुः सपदि केपि दृपद्यस्तत्र केपि शुशुवुश्च तरुभ्यः ।
शोशवीति हनुमान्स यथा किं शेश्वयीपि न तथेति वदन्तः॥९२॥

---

१ ए डी सी °श्रावयि°. २ डी शेश्वियी°.

---

१ ए °तिप्राज्ञा. २ सी डी °श्रावयि°. ३ डी °वोनु°. ४ ई °नुचाराः. ५ ए °वः शिश्वाययिषवः शि°. ६ ए सी डी °श्रावयि°. ७ ई °तिप्र°. ८ ई °थ य°. ९ ए यत्रन्ते. १० बी °न्वेत्रा°.

९२. तत्र तेषु चमूपेषु मध्ये केपि चमूपाः[1] सपदि दृषद्भ्यः। "गम्यस्याप्ये" [ २.२.६२. ] इति चतुर्थी। शिला आहर्तुं शिश्वियु-र्जग्मुः। केपि च तरुभ्यो वृक्षानाहर्तुं शुशुवुः। किंभूताः सन्तः। यथा हनुमान् शोशवीति स्म रामेणाब्धिसेतुबन्धे दृषदाद्याहरणा-येतस्ततो भ्रमणात्कुटिलं गतस्तथा त्वं किं न शेश्वयीपीत्यन्योन्यो-त्साहनाय वदन्तः[2] ॥

शुशुवु. शिश्वियुः। शोशवीति शेश्वयीषि[3]। इत्यत्र "वा परोक्षायङि" [ ९० ] इति वा य्वृत् ॥

पिप्यिरे प्रतिरवा गगनान्तः पेप्यिताचलदरीषु च पीनाः।
पीनवत्परशुपाणिनिकृत्तोत्प्यानपादपपरापतनोत्थाः[1] ॥ ९३ ॥

९३. प्रतिरवाः प्रतिशब्दा गगनान्तः[4] पिप्यिरे वृद्धिं गतास्तथा पेप्यिता अतिवृद्धा या अचलदर्योद्रिगुहास्तासु च पीना बहूभूताः[5]। किं-भूताः। पीनवन्तः स्थूलाः परशवः पाणावेषां तैर्निकृत्तानां छिन्नानामुत्प्या-नानामतिस्थूलानां पादपानां यत्परापतनं परावृत्त्या निपतनं तस्मादु-त्तिष्ठन्ति ये ते तथा ॥

पिप्यिरे। अत्र "प्यायः पीः" [ ९१ ] इति पीः ॥ दीर्घनिर्देशो यङ्लुबर्थः। पेप्यित[6] ॥

पीनाः[7]। पीनवत्। इत्यत्र "क्तयोर्" [९२] इत्यादिना पीः ॥ अनुपसर्गस्येति किम्। उत्प्यान ॥

---

१ सी °कृत्योत्पान°.

---

१ बी °मूपा स°. २ डी शेश्वियी°. ३ डी शेश्वियी°. ४ ई °न्तः पेप्यि°. ५ डी ई बहुभू°. ६ बी °प्यितः ॥. ७ सी पीना।. डी पीन।.

स्फीतवत्तुमुलधावदनापीनान्धुसैनिकसमूहमुदीक्ष्य[1]।
स्फीतभीतिरटदाटविकापीनोध्निकागण उदत्रसदारात् ॥ ९४ ॥

९४. अटन्त्यो भ्राम्यन्त्य[1][2] आटविक्योरण्यचारिण्यो[3][4] या आपीनोध्निका अज्ञाता आपीनोध्न्यश्चमर्यस्तासां गण आरादन्तिकादुदत्रसदनश्यत्। यतः कीदृक्। स्फीतभीतिः प्रवृद्धभयः। किं कृत्वोदीक्ष्य। कम्। स्फीतवान्संततस्तुमुलो व्याकुलरवो[5] यस्य स तथा धावञ्जवेन गच्छं-स्तथानापीनोप्रवृद्धोन्धुर्व्रणं यस्य स तथा निर्व्रण इत्यर्थः। यः सैनिक-समूहस्तम्। आटविकेत्यत्र "चरति"[6] [ ६.४.११ ] इतीकण्॥

स्फातटङ्ककुलिशैः प्रसमाद्यस्तीतपङ्कमिव चिच्छिदुरद्रीन्।
स्फातवल्गुजभृतः प्रसमाद्यस्तीतवद्दृषद उद्दधिरे च ॥ ९५ ॥

९५. स्फातवल्गुजभृतः पीवरबाहुधारिणो वलिष्ठभटाः स्फाताः स्थूला ये टङ्काः पाषाणदारकास्त एव कुलिशानि तैः कृत्वाद्रींश्चिच्छिदुः। प्रसमाद्यस्तीतपङ्कमिव प्रसमाद्यस्तीतः[7] प्रसंस्तीतः कठिनीभूतो यः पङ्कस्तं यथा केचिच्छिन्दन्ति[8] तथानायासेन चिच्छिदुरित्यर्थः। तथा प्रसमाद्यस्तीतवद्दृषदोतिकठोराशिला[9] उद्दधिरे चोत्पाटितवन्तश्च ॥

अनापीनान्धु। आपीनोध्निका। इत्यत्र "आङोन्धूधसोः" [ ९३ ] इति पीः[10]॥

स्फीत[11]। स्फीतवत्। स्फात[12]। स्फातवत्। इत्यत्र "स्फायः[13] स्फी वा (स्फीर्वा?)" [ ९४ ] इति वा स्फीः॥

---

१ ए °दीक्ष। स्फी°.

---

१ बी भ्रामन्त्य. २ ए °म्यन्त आ°. ३ सी °टकिक्यो°. ४ ई °रिण्य आ°. ५ डी °कुलो र°. ६ बी डी ई °रती° सी °रतीकथा॥ स्फा°. ७ सी °माद्युस्ती-तप्र°. ८ बी °च्छिदन्ति. ९ सी °क्षोभिकवोर°. १० ई पीः॥ स्पीत। स्फीतवान्। स्फा°. ११ सी स्फीतः। स्फी°. १२ सी स्फातः। स्पात°. १३ ई स्फाय स्फी°.

प्रसंस्तीत। प्रसंस्तीवत्। इत्यत्र "प्रसमः स्त्यः स्तीः" [९५] इति स्तीः॥

शीतशीनमकरन्दलवः प्रस्तीमशीनवदुदम्बुतुषारः।
श्यानतां नृपु दिशन्पवनः प्रस्तीतघर्मसलिलानि जहार॥९६॥

९६. पवनः प्रस्तीतघर्मसलिलानि श्रमोद्भवान्संहतस्वेदविन्दूञ्जहार। कीदृक्। शीतेन शीतलगुणेन शीता द्रवीभूय कठिनतां गता यद्वा शीताः शीतला अत एव शीना मकरन्दलवाः पुष्परसलेशा यत्र सः। तथा प्रस्तीमाः संहताः शीनवन्तो द्रवीभूताः सन्तः कठिनतां गता उदुत्कटा अम्बुतुषारा वहजलसंवन्धि हिमकणा यत्र सः। तथा मृदुत्वान्नृषु श्यानतां गतिमत्तां दिशन्ददत्॥

प्रस्तीम प्रस्तीत। इत्यत्र "प्रात्तश्च मो वा" [९६] इति वा मः॥

शीन शीनवत्। स्पर्शे शीत। इत्यत्र "श्यः शी०" [९७] इत्यादिना शीः॥ द्रवमूर्तिस्पर्श इति किम्। श्यानताम्॥

प्रातिशीन्यमभिशीनमभिश्यानेन जाड्यमवशीनमथापि।
सेतुवन्धनपरत्वमवश्यानेभ्य ओज इह नाभ्यवशीनम्॥ ९७॥

९७. इह वहे सेतुवन्धनपरत्वं सेतुवन्धतात्पर्यमवश्यानेभ्यः प्राप्तेभ्यो भटेभ्यः सकाशादभिश्यानेनेतस्ततो भ्रमणेन प्रातिशीन्यं रोगित्वमभिशीनमपगतम्। अथानन्तरं जाड्यमपि रोगादिकृतालस्यम-

१ प °हारः॥ प°. २ प ओह इ°.

१ वी °मस्त्यस्ती°. २ सी °ति स्ती॥. ३ प शीता द्र°. ४ प अम्वतु°. ५ ई °वन्धि°. ६ प शीना शी°. ७ ई °नव°. ८ सी °नवात्. ९ सी °ना शी॥. १० वी °हे शेतु°. ११ वी °त्व शेतु°. १२ प °नेनैत°. १३ सी डी °शीतम°.

प्यवशीनं गतम् । इहै सेतुबन्धविषय ओज उत्साहस्तु नाभ्यवशीनम् । व्यायामेन हि रोगजाड्ये प्रायोपयात ओजस्तु वर्धते ॥

श्यानमभ्यवपरं तरुजालं ग्रावजातमभिसंपरशीनम् ।
तद्ध्रहान्तरपथैरभिसंश्यानं पयोर्धशृतदुग्धहविर्वत् ॥ ९८ ॥

९८. तद्ध्रहान्तस्तस्य ह्रदस्य मध्ये तरुजालमभ्यवेपरं श्यानमभ्यवेश्यानं[3] पतितं तथा[4] ग्रावजातं शिलौघोभिसंपरशीनम्[5][6] अभिसंशीनमत[7][8] एव पयोम्भोपथैरुन्मार्गैरभिसंश्यानं ह्रदमध्यस्य तर्वादिभिर्व्याप्तत्वोच्चज्जलमितस्ततो गतमित्यर्थः । अर्धशृतदुग्धहविर्वद्यथार्धशृते[10][11] स्वयमर्धपक्वे दुग्धहविषी क्षीरघृते अपथैरभिसंश्यायेते उत्फणनेन स्थाल्या[12] बहिर्गच्छतः ॥

[13]प्रातिशीन्यम् । अत्र "प्रतेः" [ ९८ ] इति शीः ॥

अभिशीनम्[14] अभिश्यानेन[15][16] । अवशीनम् अवश्यानेभ्यः । अत्र "वाभ्यवाभ्याम्" [९९] इति वा शीः ॥ केचित्तु समा व्यवधानेपीच्छन्ति । अभिसंशीनम् अभिसंश्यानम् । तदा वाभ्यवाभ्यामिति[17] तृतीया व्याख्येया ॥ समस्ताभ्यामपीच्छन्त्यन्ये[18] । अभ्यवशीनम्[19] अभ्यवश्यानम् ॥

शृतदुग्धहविर्वत् । इत्यत्र "श्रः शृतम्°" [ १०० ] इत्यादिना शृतेति निपात्यम् ॥

---

१ सी °ह शेतु°. २ प °वश्यान प°. ३ बी °वशान प°. ४ प °था जाग्रा°. ५ सी डी °परिशी°. ६ डी °शीतम°. ७ प °मत. ८ बी °भिशी°. ९ डी °त्वाज्ज°. १० बी °धेश्रित°. ११ बी °धेश्रिते. १२ डी स्थाल्यां ब°. १३ प °तिसंन्य°. १४ डी °शीत अ°. १५ ई अवश्यानेभ्यः. १६ प °नेभ्यः. १७ डी वाभ्या°. १८ सी °च्छन्तोन्ये. १९ डी °वश्या°.

यज्ञकृद्भिरशृतश्रपिते संवीय दुग्धहविषी इव वह्नौ ।
संजिहीर्षुरिपुचक्रजिघांसोतैर्न्यधायि वह आर्द्रमनार्द्रम् ॥ ९९ ॥

९९. श्रातः[1] श्रायतो वा दुग्धहविषी स्वयमेव ते[2] यज्ञकृद्भिः[3] प्रायुज्येतां शृते एवं श्रपिते[4] न[5] शृते अशृते[6] ते च ते श्रपिते चाशृतश्रपिते अपक्वपके दुग्धहविषी संवीय संवृत्य[9] संमिश्र्येत्यर्थः[7] । यथा[8] यज्ञकृद्भिः सर्वस्वारयागादौ वह्नौ निधीयेते तथा[10] संजिहीर्षु विनाशयितुमिच्छु यद्रिपुचक्रं तस्य जिघांसा हन्तुमिच्छा तयोतैः संबद्धैर्भीमभटैरार्द्रं[11] वृक्षाद्यनार्द्रं च काष्ठशिलादि संवीय वहे न्यधायि सेतुबन्धाय निक्षिप्तम् ॥

तत्र कैश्चिदजिगांस्यत[2] पाथः क्रान्त्व ऋक्षपतिफालतितांसैः[3] ।
बन्धकर्म विततिंसदनीकं[4] क्रान्त्व ऋद्धभुजविक्रमकान्तैः ॥ १०० ॥

१००. कैश्चिन्महाभटैस्तत्र वहेऽजिगांस्यत गन्तुमिष्टम्। किं कृत्वा। पाथो वहाम्भः क्रान्त्वा । यतः किंभूतैः[12] । ऋक्षपतेरिव जाम्बवस्येव[13][14] फालस्योत्प्लुतेस्तितांसा[15] विस्तारयितुमिच्छा येषां तैर्यथा जाम्बवोब्धि[16]मुत्प्लुत्योल्लङ्घे तथा वहमुत्प्लवितु[17]मिच्छुभिरित्यर्थः । तथा बन्धकर्म सेतुबन्धैर्कर्म सेतुबन्धक्रियां[18] विततिंसच्चिकीर्षदनीकं[19] सैन्यं क्रान्त्वो-

---

१ ए °रसत°. २ ए °जिघास्य°. ३ बी °तिरफाल°. ४ डी °तिसस°.

---

१ ए सी श्रातश्रा°. २ ए ते जक्ष°. ३ ई °द्भिः प्रयु°. ४ सी °ते श्रते ते. ५ ई °न सते असतेच. ६ ए अस ते. ७ ए सी °मिश्रेत्य°. ८ सी यज्ञ°. ९ ए बी °भीय ते. १० सी °था सजि°. ११ सी °वद्धे भीम°. १२ बी °तै. । इथ°. १३ डी जाम्बुवतस्ये°. १४ सी °वतस्ये°. १५ बी °त्तिस्तासा. सी °स्तितासा. १६ सी जाम्बूवतोब्धि° डी जाम्बुवतोब्धि°. १७ बी सी डी °मुत्प्लुवि°. १८ बी सी डी °न्धक्रि°. १९ बी °कीर्षुद°.

ङ्घ्य यत ऋद्धः[1] स्फीतो यो भुजविक्रमस्तेन कान्तै रम्यैः । अतिशूरत्वेन सैन्यात्पूर्वमेव योद्धुं कैश्चिदुह उत्प्लवितुमिष्ट इत्यर्थः ॥

**किं प्रशानसि भुजौ तव शंशान्तो वदत्यवनिवृत्रहणीत्थम् ।**
**सेतुकष्टमपि शामति सामप्रश्नपृष्टजनतासु किल स्म ॥ १०१ ॥**

१०१. सामप्रश्नपृष्टजनतासु साम्ना मधुरालापेन यः प्रश्नः[2] पृच्छा तेन पृष्टा या जनता लोकौघास्तासु विषये किलेति सत्ये सेतुकष्टमपि सेतोर्बन्धजनितं दुःखमपि शामति स्म शमिव सुखमिवाचरति स्म । क सत्यवनिवृत्रहणि पृथ्वीन्द्रे भीमे । किंभूते । वदति । कथमित्याह । अहो भट किं प्रशानसि सेतुबन्धादुपशाम्यन्भवसि । तथा तव भुजौ किं[3] शंशान्तो भृशमुपशाम्यत इत्थम् ॥

**स्योमभिः स वह आहितसेतुस्यूत उत्पथविडम्बुभरछ्यूः ।**
**हुं भुवो मम गिरीनि[1]ति सेष्योति स्म मोमकृ[2]तमूतिनिमित्तात् ॥ १०२ ॥**

१०२. स वहो मोमभिर्मवद्भिर्बन्धकैर्नरैः कृता या मूतिर्बन्धः[4] सा चासौ निमित्तं च तस्माद्गिरीन्समीपस्थानद्रीन्सेष्योति[5] स्मात्यर्थं ववन्ध सर्वतोप्लावयदित्यर्थः । कीदृक्सन् । सीव्यन्ति स्योमानो बन्धकनरास्तैः स्योमभिराहितः कृतो यः सेतुस्तेन[6] स्यूतो बद्धोत एवोत्पथानुन्मार्गोन्विच्छति गच्छति योम्बुभरस्तं छ्यवति निरस्यति यः सः । उत्प्रेक्षते[7] । न गिरीन्मोमकृतमूतिनिमित्तात्सेष्योति[8] स्म किं तर्हि हुं भुवो ममेति । इतिर्भिन्नक्रमे । इव उत्प्रेक्षाद्योतको[9] ज्ञेयः । हुमिति कोपे ।

---

१ बी सी °रीनति. २ सी °कृतिमू°.

---

१ ई ऋद्ध स्फी°. २ ए °श्नः प्रच्छा°. ३ डी किं शशा°. ४ बी °न्धः स चा°. ५ बी °द्रीनसेष्यो°. ६ ए बी °न स्यूतो. ७ बी ई °त्प्रेक्ष्यते. ८ बी °त्तात्सैष्यो°. ९ बी सी °त्प्रेक्ष्याद्यो°.

मम भुवो वन्धका एत इति हेतोरिव । गिरिपापाणैर्हि वहो वद्धस्त-तस्तज्जलमुत्पथैः प्रसरद्भिरीन्प्लावितवदित्येवमाशङ्का ॥

ओमतूर्मभिरजूर्मभिरासेपेपि किं नृभिर्नूः कृतभूते ।
श्रोमवारिणि सुजूः परितूः श्रूर्नक्रचक्र इति नूनमराटीत् ॥१०३॥

१०३. नक्रचक्रो नूनमित्येवंप्रकारेणाराटीन् । तमेवाह । कृता भुवः पृथ्व्या ऊतिरवनं येन तस्य संबोधनं हे कृतभूते भीम अजूर्मभिरज्वरद्भिर्नीरोगैस्तथा । अवन्तीत्योमानस्त्वद्रक्षकास्त्वत्सेवका इत्यर्थः । त्वरन्ते तूर्माणो वहवन्धार्थं त्वरावन्त ओमानो ये तूर्माणस्तैर्नृभिर्भटैः सहितस्त्वमनूर्ममारक्षकः सन्किं किमित्यासेपेप्यत्यर्थं वध्नास्यर्थान्मदाश्रयं वहमिति । कीदृक्सन् । श्रोमोत्पथगत्या स्तोकीभूतत्वाच्छुष्यद्यद्वारि तत्राधारे श्रूः स्तोकाम्बुत्वेन शुष्यन्नत एव सुजूः सुष्ठु पीडावान् । अत एव च परितः समन्तात्त्वरते संभ्रमेणेतस्ततो गच्छति यः स परितूः । नक्रचक्रो हि शुष्यज्जले संतप्यमानत्वादारटन्कविनैवमुत्प्रेक्षितः ॥

श्रूतितूर्तिकृतजूर्तिरमूर्भिर्मोर्ममूर्तिरिव तोर्मचमूपैः ।
प्रागतूः स वह उज्झति फेनं तूर्ण उग्रविधिपाकनियोगात् ॥१०४॥

१०४. मोर्मा मूर्छावती मूर्तिरङ्गं यस्य स इव वहः फेनमुज्झति स्म । मूर्छावान् हि मुखेन फेनमुज्झति । कीदृक्सन् । प्राक्पूर्वमविद्यमानास्तुरस्तूर्वन्तः सेतुबन्धेन पीडका यस्य सोन्तरब्धितुल्यत्वेन

---

१ बी °र्नू क्र°. २ ए °रितस्तूनक्र°.

---

१ सी डी °स्वज्ज°. २ सी °स्त°. ३ ए °न्तीतमा°. ४ ए °न्वास्त्वर°. ५ ए °मेणत°.

केनाप्यबद्धपूर्व इत्यर्थः । तथाप्युग्रोननुकूलत्वेन रौद्रो यो विधिपाको दैवपरिणामस्तस्य नियोगादवश्यंभावाद्धेतोरमूर्भिरमूर्च्छद्भिः सोढमै-त्यर्थः । तोर्मचमूपैम्नोर्माणस्तूर्वन्तः सेतुबन्धेन पीडका ये चमूपास्तै-स्तूर्णः सेतुबन्धेन पीडितोत एव श्रूतौ जलशोषे या तूर्तिः सैन्यपानां त्वरणं तया कत्र्या कृता जूर्तिर्ज्वरः पीडा यस्य सः ॥

**सोद्र्वक्रमुरुकूजमसंकोचं च मद्गुभिरनाशि तदोघात् ।**
**न्यङ्कुवञ्चमभिवञ्चति सैन्ये मेघवृष्टिवदटव्यनुयाजैः ॥ १०५ ॥**

१०५. मद्गुभिर्जलवायसैस्तदोघाद्धहप्रवाहादनाशि भयेन पलायितम् । कथम् । सहोद्र्वक्राभ्यामार्जवकौटिल्याभ्यां वर्तते यत्तत्सोद्र्वक्रं तथोरुर्महान्कूजोव्यक्तशब्दो यत्र तदुरुकूजं तथासन्संकोचोङ्गावयवानां मीलनं यत्र तच्च यथा स्यादेवम् । क सति । सैन्ये । किंभूते । न्यङ्कुर्मृगभेदस्तस्येव वञ्चो गमनं यत्र तद्यथा स्यादेवं द्रुतमित्यर्थः । अभिवञ्चति गच्छति । यथा मेघस्य वृष्टिर्यतः सा मेघवृष्टिः कारीरीष्टिस्तस्यां सत्यामटव्यामनुयाजा आहुतिविशेषा अटव्यनुयाजास्तैर्नश्यते । वृष्टिकामैर्हि कारीरीष्टिररण्ये क्रियते तस्यां चानुयाजाख्यास्त्रय आहुतिविशेषा न दीयन्त इति श्रुतिः ॥

अशृते दुग्धहविषी यज्ञकृद्भिः । अत्र "श्रपे." [ १०१ ] इत्यादिना शृभावो निपात्यः ॥ अन्ये तु श्रपिं चुरादौ पठन्ति । तस्यैव श्रपेर्निपातनम् । प्रयोजकैण्यन्तस्य त्वेकस्यापि प्रयोगं नेच्छन्ति । तन्मते श्रपिते दुग्धहविषी यज्ञकृद्भिरित्येव स्यात् ॥

---

१ बी °मुरकू°. २ बी °नुजाजै

---

१ डी °था तुणोन°. २ ई °वस्यभा°. ३ सी °मूर्त्तिर°. ४ए तृति मे°. ५ डी °पानाना. ६ डी °द्रुभिर्ज°. ई °दृद्भिर्ज°. ७ सी डी °तज्ञतम् ।. ८ डी °स्तस्येव. ९ सी डी °न तत्र. १० ई °ष्टि कर्त्री°. ११ ई °कामे हि का°. १२ ए °दीन्त. १३ सी अशृते. १४ सी °ना श्रना°. १५ ए °वसेप°. १६ ए °कस्य ण्य°.

संवीय । इत्यत्र "य्वृत्सकृत्" [ १०२ ] इति य्वृदेकवारमेव ॥ "दीर्घम्°" [ १०३ ] इत्यादिना च दीर्घः ॥ अव इति किम् । उतैः ॥

संजिहीर्षु । जिघांसा । अजिगांस्यत । इत्यत्र "स्वरहन्°" [ १०४ ] इत्यादिना दीर्घः ॥

तितांसेः वितितंसत् । इत्यत्र "तनो वा" [ १०५ ] इति वा दीर्घः ॥

क्रान्त्वा क्रन्त्वा । इत्यत्र "क्रमः क्त्वि वा" [ १०६ ] इति वा दीर्घः[3] ॥

क्विपि । प्रशान् ॥ क्किति । कान्तैः ॥ ङिति । शंशान्तः[4] । अत्र "अहन्°" [ १०७ ] इत्यादिना दीर्घः[5] ॥ अहन्निति किम् । वृत्रहणि ॥ कश्चि[6]त्वाचारक्कावपि दीर्घत्वमिच्छति । शमिवाचरति शामति ॥

प्रश्न । क्वि । उत्पथविट् ॥ धुट् । पृष्ट । स्योममिः ॥ क्वि । अम्बुभरच्छ्रूः ॥ धुट् । स्यूतः । अत्र "अनुनासिके च°" [ १०८ ] इत्यादिना छ्वोः शूटौ ॥ सिवेर्यङ्लुपि तु सेष्योति ॥ अन्ये त्वा[7]सेपेपीत्येवेच्छन्ति । तन्मतसंग्रहार्थं क्वितीत्यनुवर्तनीय यजादिसूत्रे च च्छग्रहणं कार्यम् ॥

मव् । मोर्म । मुवः । मूति ॥ अव् । ओम[10] । अनूः । ऊते ॥ श्रिव् । श्रोम ॥ श्रूः । श्रूति ॥ ज्वर । अजूर्मभिः । सुजूः[11] । जूर्तिः[12] ॥ त्वर् । अतूर्मभिः (तूर्मभिः ?) परितूः । तूर्ति[13] । अत्र "मव्यवि°" [ १०९ ] इत्यादिना[14] नोट् ॥

मुर्छा । मोर्म । अमूर्मिः । मूर्तिः[15] ॥ तुर्वै । तोर्म[16] । अतूः । तूर्णः । अत्र "शाच्छुक" [ ११० ] इति छ्वोर्लुक् ॥

---

१ बी °ना दी°. २ सी तिता सैः. ३ प ई °र्घः ॥ म°. ४ प सी °शात । अ°. डी °शान्तः । अ° ५ सी °र्घ ॥ × ×त्व°. ६ प °श्चिचाचा°. ७ सी °सेपपी°. ८ सी डी °मन् । मु°. ९ डी मूति. ॥. १० बी डी ओम् । म°. ११ सी डी तुर्जू । जू°. १२ बी डी जूर्ति ॥. १३ ई तूर्ति. ॥ म°. १४ प सी °दिनो°. १५ बी मूर्ति ॥ तु°. १६. डी तोमम् । अतु. । तू°. १७ प छ्लुक्. १८ डी °क् ॥ नि°.

पाकनियोगात् । इत्यत्र "क्तेनिटि[१]" [ १११ ] इत्यादिना चजोः कगौ ॥ क्तेनिट इति किम्[२] । असंकोचम् । कूजम् ॥

न्यङ्कु । वक्र । उद्ग । मद्गुभिः । मेघ[३] । ओघात् । इत्येते "न्यङ्कु०" [ ११२ ] इत्यादिना निपात्यौः[४] ॥

वञ्चमभिवञ्चति । इत्यत्र "न वञ्चेर्गतौ[५]" [ ११३ ] इति न कत्वम् ॥

अनुयाजै. । अत्र "यजेर्यज्ञाङ्गे" [ ११४ ] इति न[६] गत्वम् ॥

राड्हर्षयदवश्यविरेच्यावश्यभञ्ज्यवहकर्मनियोज्यान् ।
सत्प्रयोज्यनवभोज्यगणेनात्याज्ययाज्यसुभटानुपरिस्थः ॥१०६॥

१०६. राड्भीम उपरिस्थ उपरि वर्तमानः सन्नत्याज्याः सर्वभृत्यगुणोपेतत्वेनाहेया[७]. संगर्ताहा[८] इत्यर्थ. । याज्याश्च सत्कार्या ये सुभटास्तानहर्षयत्[९] । केन कृत्वा । सन्[१०] शोभनोत एव प्रयोज्यो व्यापारयितुं शक्यो नवो[११][१२] यो भोज्यगणः[१३] खण्डखाद्यादिभक्ष्यौघस्तेन[१४] । किंभूतान् । अवश्यविरेच्योवश्योदञ्चनीयोवश्यभञ्ज्यश्च[१५] सेतुबन्धेनावश्यं द्विधा कार्यो यो वहस्तस्य कर्म बन्धनक्रिया तत्र नियोज्यान्व्यापारयितुं शक्यान् ॥

न प्रवाच्यगतवाक्यवदापद्वाच्यतां भुजबलेन वहं सः[१] ।
न्युब्जजिन्नियमयन्निति से न्यग्रोधवीरुदवरोधचमूकः ॥ १०७ ॥

१०७. स भीम इत्युक्तप्रकारेण भुजबलेन वहं नियमयन्नियम्य-

---

१ ए स. । न्यब्ज०. २ सी स निग्रो०.

---

१ बी ०निट् इ०. २ सी ०ति कि. अ०. ३ सी मेघः । ओ०. ४ बी ०त्याः ॥ पञ्च० ५ ए ०श्चेगतौ ६ सी न त्व०. ७ सी ०नादेयाः. ८ ई ०तार्हा इ०. ९ सी ०टाकान०. १० सी डी सत् शो०. ११ सी नको भो०. १२ डी ०वो भो०. १३ ई ०गण ख०. १४ ए ई ०भक्षौघ०. १५ ई ०वश्य भ०.

न्सन् वाच्यतां भीमेन परिपूर्णो[1] वहो वन्द्धुं न शकित इति लोकापवादं नापत्परिपूर्णं बवन्धेत्यर्थः । यतः कीदृक् । वहवन्धे स्वयमुद्यतत्वेन न्युब्जं रोगविशेषं जितवान् न्युब्जजित्तथा[3] न्यग्रोधा वटा वीरुधो लता द्वन्द्वे सह ताभिर्या सा तथावरोधा सेतुबन्धाय वहमध्ये-वरोहन्ती चमूर्यस्य[4] सः प्रवाच्यगतवाक्यवत्प्रवाच्यः पाठविशेपस्त-द्योगाद्ग्रन्थोपि प्रवाच्यस्तद्गतं वाक्यं विशिष्टपदसमुदायो यथा वाच्यता-मत्रेदं पदं लक्षणादिदोषदुष्टमिति लोकापवादमाप[5]त्वान्न प्राप्नोति ॥

अवश्यविरेच्य । अवश्यभ[6]ज्य । इत्यत्र "घ्यण्यावश्यके" [ ११५ ] इति न कगौ ॥

नियोज्यान् । प्रयोज्य । इत्यत्र "निप्राद्°" [ ११६ ] इत्यादिना न गः ॥

भोज्य । इत्यत्र "भुँजो भक्ष्ये" [ ११७ ] इति न गः ॥

त्याज्य । याज्य । प्रवाच्य । इत्यत्र[9] "त्यज्यज°" [ ११८ ] इत्यादिना न कगौ ॥

वाच्यताम् । इत्यत्र[11] "वचोशब्दनाम्नि" [ ११९ ] इति न कः ॥ अशब्द-नाम्नीति किम् । वाक्य ॥

भुज । न्युब्ज । इत्येतौ "भुज°" [ १२० ] इत्यादिना निपात्यौ ॥

वीरुत्[12] । न्यग्रोध । इत्येतौ "वीरुत्[13]°" [ १२१ ] इत्यादिना निपात्यौ ॥ अवरोध । इत्यप्यन्ये ॥

त्रयोदशः[14] पादः समाप्तः ॥

---

१ डी °र्णो विहो. २ सी °पूर्णं व°. ३ सी °था निग्रो°. ४ सी डी °स्य सम°. ५ डी °मापन्न. ६ ए °भज । इ° ७ सी भुज्यो भ°. ८ ए भक्ष इ°. ९ डी त्याज्य । प्र°. सी त्याज्यः । या°. १० ए °त्र ज्य°. ११ बी °त्रवचो°. १२ सी °त् । निग्रो°. १३ ए बी °रुत्या°. १४ सी दशपादस°.

म्लाय मा किमपि सुम्ल वहं यत्त्वं न विर्व्ययिथ विव्यय नाहम् ।
स्फारवानिह हि भूपतितेजःस्फाल इत्यजनि वन्धकृतां वाक्
॥ १०८ ॥

१०८. वन्धकृतां सेतुवन्धकारिणां वागजनि । कथमित्याह । हे सुम्लायं वहं वद्धवानहं तु मन्दत्वान्नेति मनःसंतापेन विच्छायमुख किमपि स्तोकमपि मा म्लाय मा विच्छायमुखो भूः । यद्यस्माद्धेतोर्वहं न त्वं विव्ययिथ नाच्छादितवान्न वद्धवानित्यर्थः । अहमपि न विव्यय त्वयेव मयापि वहो न वद्ध इत्यर्थः । तर्हि केन वद्ध इत्याह । इह सेतुवन्धविषये हि स्फुटं भूपतितेजःस्फालो भीमनृपप्रतापसंचयः स्फारवान्स्फुरतीति ॥

सुम्ल । इत्यत्र "आत्संध्यक्षरस्य" [ १ ] इत्यात् ॥ अनैमित्तिकत्वादात्वस्य प्रागेव कृतत्वादाकारान्तलक्षणो डः स्यात् [ ५ १.७६. ] ॥

म्लाय । इत्यत्र "नँ शिति" [ २ ] इति नात् ॥

विव्ययिथ । विव्यय । इत्यत्र "व्यस्थव्णवि" [ ३ ] इति नात् ॥ स्फार । स्फालः । अत्र "स्फुर°" [ ४ ] इत्यादिनात् ॥

क्ष्मापगारमिव गिर्यपगोरं सोदिदासुरपि दत्तदिदीषः ।
तैर्बलैरनुपदाय ववन्धे दीनमीनकुलवार्युपदायः ॥ १०९ ॥

१०९. तैर्भीमसंवन्धिभिर्वलैरनुपदाय क्षेयमगत्वा सुखेनेत्यर्थः । स वहो ववन्धे वद्धः । कीदृक्सन् । अदिदासुरपि क्षेतु-

---

१ सी ई व्ययथ°. २ बी °पमार°.

---

१ सी डी यस्मा° २ ए °द्धेहोर्वे°. ३ सी डी °वान्वद्ध°. ४ सी °न्यपि त्वयेव स म°. ५ ए °ति ॥ सुम्ल. ६ ई °मित्तक°. ७ ए न शीति इति वात्. ८ बी सी °स्यवण°. ९ ई °त् ॥ स्पार. १० ए स्फार. । स्फा°. ११ बी °त्र स्फर. १२ ए °यगमत्वा.

मैनिच्छन्नपि दत्ता दिदीषा क्षेतुमिच्छा यस्य स तथा। किं कृत्वा क्ष्मापगारमिव क्ष्मां मृदमपगूर्येवोद्यम्येव गिर्यपगोरं गिरीनुद्यम्य। उभयत्र "द्वितीयया" [ ५.४.७८] इति णम्। यथा केनापि मृत्खण्डमुत्पाट्यत एवं वह्ने प्रक्षेपार्थं गिरीनुत्पाट्येत्यर्थः। अत एव दीनं भयेन कातरं मीनकुलं मत्स्यौघो यत्र स तथा वार्युपदायो जलक्षयो यत्र सः॥

**तैरदीयत वहः परिवद्धो द्राक्प्रमाय च निमाय च वृक्षान्।**
**तं प्रमातुमरिमाशु निमातुं दिक्षु कीर्तिमचलश्च चुलुक्यः॥११०॥**

११०. वहोदीयताक्षीयत। कीदृक्सन्। वृक्षान्प्रमाय च हिंसित्वा छित्त्वेत्यर्थः। निमाय च वह्ने क्षिप्त्वा च द्राक् तैर्वलैः परिवद्धः। तथा चुलुक्यो भीमोचलश्च। किं कर्तुं तमरिं सिन्धुराजं प्रमातुं हिंसितुं दिक्षु कीर्तिं निमातुं च निक्षेप्तुं विस्तारयितुम्॥

**सैन्धवस्य निमयः प्रमयो वास्त्वद्य दुर्निमयदुष्प्रमयस्य।**
**इत्यनामयमयाश्वचमूपा मेतुकाममभिमातुमिहोचुः॥ १११॥**

१११. आमीनातीत्यामयो रोगो मिन्वन्तीति अचि मया उष्ट्रा अनामयं नीरोगं मयाश्च मया अश्वाश्च येषां ते ये चमूपा नृपास्त इह भीमसमीप ऊचुः। किं कर्तुम्। मेतुकामं जिघांसुं सिन्धुराजमभिमातुं हिंसितुम्। किमूचुरित्याह। दुर्निमयदुष्प्रमयस्य दुःखेन क्षेप्यस्य हिंस्यस्य च सैन्धवस्य सिन्धुराभिजनो निवासोस्य "सिन्ध्वादेरञ्" [ ६.३.२१६ ] इत्यञ्। तस्य सिन्धुराजस्याद्य निमायो निरासः प्रमयो वा हिंसा वास्त्विति। सिन्धुराजोद्यास्माभिर्निरस्यो हिंस्यो वेति प्रतिज्ञां चक्रुरित्यर्थः॥

१ ए °मनच्छ°. २ डी °म्येच गि. ३ ए °तिणम। य°. ४ ए सी डी ई °युपादायोपल°. ५ सी डी °त्र सः॥. ६ सी °तुं मतरि. ७ ए प्रमातु. ८ डी ॥ अमी°. ९ सी °नामीत्या°. १० ए °या अ°. ११ ए °भिहातुं. १२ ई °दुःप्रम° १३ ई प्रमेयो°.

क्ष्मापगारं गिर्यपगोरम् । अत्र "वाप°" [ ५ ] इत्यादिना वा-आत् ॥

अदिदासुः दिदीपः । अत्र "दीङ सनि वा" [ ६ ] इत्याद्वा ॥

अनुपदाय[1] । उपदायः । अत्र "यबक्ङिति" [ ७ ] इत्यात् ॥ यबक्ङितीति[2] किम् । दीन । अदीयत ॥

निमाय[3] । निमातुम् । प्रमाय । प्रमातुम् । अत्र "मिग्मीगोखलचलि" [ ८ ] इत्यात् ॥ अखलचलीति किम् । दुर्निमयं[4] दुष्प्रमयस्य ॥ अचि । मय । अनामयं[5] ॥ अलि । निमयः । प्रमयः[6] । मिग्मीग इति किम्[7] । मीङ्[8] हिंसायामित्यस्य मा भूत् । मेतुकामम् । अस्याप्यात्वमिच्छन्त्यन्ये । अभिमातुम् ॥

**नो विलात ऋजुरद्य विलेता नो युगेष्वपि स सेतुरतर्कि[1] ।**
**बन्धसन्धिरगमन्न विलायात्राविलीय चलिते यदनीके ॥ ११२॥**

११२. ऋजुः सरलः[9] स भीमबद्धः सेतुर्लोकैरतर्कि । कथमित्याह । अद्य वर्तमानकालेयं[10] नो विलाता विश्लेक्ष्यति । युगेष्वपि कृतयुगादिष्वपि नो[11] विलेतेति । यद्यस्माद्धेतोरविलीय मिलित्वा चलितेप्यनीके भीमसैन्ये विलाय विश्लिष्य बन्धसंधिर्बन्धनसंधानमत्र सेतौ नागमन्नात्रुट्यत् । अद्येत्यनेन निकटवर्तिनो माससंवत्सरादय उपचारादुच्यन्त इति शास्त्रोक्तोद्यतनोत्र नास्तीति विलातेत्यत्र[12] श्वस्तनी न दुष्यति ॥

विलाय अविलीय[13] । विलाता विलेता । इत्यत्र "लीङ्लिनोर्वा"[14] [ ९ ] इति वा-आत् ॥

---

१ ई °तकि । व°.

---

१ प ई °दाय । उ°. २ ई °ती किम् । अ°. ३ सी °मातु°. ४ डी ई °यदु·प्रम°. ५ ई °य ॥ नि°. ६ प ई °मय ॥ मि°. ७ डी °म् । मीङ्. ८ बी मीङ् हिं°. ई मीङ्च हिं°. ९ प °रलस. १०. सी डी मानेका°. ११ प नो वेले° १२ बी सी °त्र स्वस्त°. १३ डी °विला°. १४ बी लीङ्लनो°.

क्रापयद्द्विपदसून्विशिखैरध्यापयच्च रुदितान्यरिनारीः ।
जापयत्स्वमभिसाधयदर्थं व्याप सेधयदरीशमनीकम् ॥ ११३ ॥

११३. अनीकं भीमसैन्यं व्याप सर्वत्र प्रससार । कीदृक्सत् । विशिखैः कर्तृभिर्द्विपदसून् क्रापयद्ग्राहयदत एवारिनारी रुदितान्यध्यापयच्च रोदयदित्यर्थः[1] । तथा स्वमात्मानं ज्ञातिमात्मीयं वा जापयद्विजयमानं प्रयुञ्जानम् । तथार्थं स्वकार्यं[2] देशस्वीकारादिकमभिसाधयन्निष्पादयत् । तथारीशं सिन्धुराजं सेधयदहं तवोपर्यागच्छामीति ज्ञापयत् ॥

क्रापयत् । जापयत् । अध्यापयत् । इत्यत्र "णौ क्रीजीङः" [ १० ] इत्यात् । अर्थमभिसाधयत् । इत्यत्र "सिध्यतेरज्ञाने" [ ११ ] इत्यात् । अज्ञान इति किम् । अरीशं सेधयत् ॥

स्फारयद्धनुरचापयदुच्चैः स्फोरयद्ध्वनिमचाययदेतत् ।
गाः प्रवापयति यश्च बलाका यः प्रवाययति वा स इवर्तुः ॥११४॥

११४. एतद्भीमानीकं कर्तृ धनुश्चापं स्फारयदाकर्षत्सद्धनुरेवोच्चैरचापयद्व्यस्तारयत्तथोच्चैरुदात्तं ध्वनि सिंहनादं[3] स्फोरयदुच्छालयत्सद्ध्वनिमचाययद्व्यस्तारयत्[4] । उपमामाह । य ऋतुर्गा धेनूः प्रवापयति गर्भं ग्राहयति य ऋतुर्बलाकाश्च पक्षिणीभेदांश्च प्रवाययति स ऋतुरिव वर्षाकाल इवेत्यर्थः । वर्षासु हि पुरोवाते[5] वाति गावो बलाकाश्च गर्भं गृह्णन्ति । यथा वर्षर्तुर्धनुरिन्द्रचापं[6] ध्वनि गर्जितं च विस्तारयति तथेत्यर्थः ॥

---

१ प °र्थः । स्वमात्मी°. २ सी कार्यंदे°. ३ सी °दं स्फार°. ४ ई दुत्स्राल°. ५ प वा तो वा°. ६ बी तुंधनु°.

अचापयत् अचाययत् । स्फारयत् स्फोरयत् । इत्यत्र "चिस्फुरोर्न वा" [ १२ ] इत्याद्वा ॥

गाः प्रवापयति बलाकाः प्रवाययति । इत्यत्र "वियः प्रजने" [ १३ ] इत्याद्वा ॥

धन्व रोपयत रोहयतेषुं मा विलीनयत सर्पिरिदानीम् ।
मा विलालयत वा नवनीतानीति सैन्धवजनैर्निरघोषि ॥ ११५ ॥

११५. सैन्धवजनैः सिन्धुनिवासिलोकै[1]रितीदं निरघोषि घोषितम् । तदेवाह । हे जना धन्व धनू रोपयत सज्यं कुरुत तथेषुं बाणं रोहयत संधत्तेदानीं सर्पि[2]र्घृतं मा विलीनयताग्निसंपर्केण मा द्रवीकुरुत नवनीतानि वा मा विलालयतेति ॥

भो विलापयत सर्पिरशङ्का एष सिन्धुमभिपालयितास्मि ।
प्रीणयञ्जनपदानिति धन्वोद्धूनयन्समिति हम्मुक आगात् ॥ ११६ ॥

११६. हम्मुको हम्मुकाख्यः सिन्धुपतिः समिति रण आगात् । कीदृक्सन् । जनपदान्प्रीणयन् । कथमित्याह । भो जना अशङ्का निर्भयाः सन्तः सर्पिर्विलापयत द्रवीकुरुत यत एष प्रत्यक्षोस्म्यहं सिन्धुदेशमभिपालयिता स्वयमेव [3]धायमानं सिन्धुं प्रयुञ्जानः सिन्धुरक्षाशीलोहं वर्ते इत्यर्थ इति । तथा धन्वोद्धूनयन् गुणाकर्षणेन कम्पयन् ॥

प्राययत्स्वमभिधावयदद्रीन्वाजयद्भुवमपाययदोजः ।
छाययैनमभिशा[1]र्ययं[2] वेत्थं जल्पदस्य च बलं प्रससार ॥ ११७ ॥

११७. अस्य हम्मुकस्य बलं प्रससार । कीदृक्सत् । ओजो बल-

---

१ ई °य चेत्थ. २ वी य चेत्थ.

---

१ ई °कैः रि°. २ ए °र्पिघृत. ३ सी डी पालय°.

मपाययच्छत्रुभिरखादयदशोपयद्वा प्रकाशयदित्यर्थः । अत एव भुवं वाजयद्वाढपादप्रहारैः कम्पयदत एव वाद्रीनभिधावयत्कम्पयत्तथाहो एनं भटं छाययांरीञ्छिन्दन्तं प्रयुङ्क्ष्वाभिशपर्थ वांस्त्रैरर्रास्तक्ष्णुवन्तं प्रयुङ्क्ष्वेति जल्पच्छत्रुवधार्थं स्वभटान्प्रयुञ्जानमित्यर्थः । अत एव स्वमात्मीयं ज्ञातिं वा लोकं प्राययत्प्रीणयन् ॥

ह्वाययत्समवसाययदाशु व्याययत्समभिवाययदस्त्रैः ।

व्लेपयद्भयमनर्पयदन्योन्यं चमूद्वयमरेपयदुच्चैः ॥ ११८ ॥

११८. भयमनर्पयदात्मानं भयमप्रापयंन्निर्भीकमित्यर्थः । चमूद्वयमुच्चैरतिशयेनान्योन्यं कर्मारेपयद्रमयामास मिलितमित्यर्थः । कीदृक् । अन्योन्यं ह्वाययत्सस्पर्धमाकारयत्तथान्योन्यं व्लेपयद्वरयत्तथास्त्रैरन्योन्यमाशु व्याययदाच्छादयत्तथान्योन्यमस्त्रैः कर्तृभिः समभिवाययदस्त्राणि सीव्यन्ति प्रयुञ्जानं किं बहुनान्योन्यं समवसाययदन्तं प्रापयन् ॥

क्ष्माप्यते किमु चमूरिति भीमः क्नोपयन्स्वयमह्रेपितवंशः ।

प्रापयन्समिति सिन्धुपतिश्च स्फावयन्निपुगणं प्रडुढौके ॥ ११९ ॥

११९. भीमः स्वयं संमिति रणे प्रडुढौके । कीदृक्सन् । अह्रेपितवंशोनेकावदातैरलज्जापितान्वयोत एव क्नोपयन् भट्टमुखेन हम्मुकं जल्पयन् । किमित्याह । अहो हम्मुक चमूः किमु किमिति क्ष्माप्यते

१ बी सी डी ई °स्त्रैः । व्लेप°.

१ सी डी °दप्र°. २ बी सदाहो. ३ बी यारीच्छिन्द°. ४ डी °रीञ्छिन्द°. ५ ए °दिछद-त. ६ बी ई °य चार्स्त्रै°. ७ सी वान्वेररीस्त°. ८ ए °स्तैरर्रास्त°. ९ डी °स्तक्ष्णव°. १० डी °यन्नभीक°. ११ बी सी डी ई °न्य व्लेप°. १२ ए समवि १°. १३ ए बी सी °णे डु°. १४ सी °म्मुखेन हम्मुखं. १५ सी डी °त्पन्. १६ सी °न् । कथमि° १७ डी ई °ह । हो. बी °ह । हे ह° १८ डी किमि°.

क्षयं नीयत इत्यर्थः । अहं च त्व च स्वयं युध्यावहे[1] इत्यभिप्राय इति। तथा सिन्धुपतिश्च हम्मुकोपि स्वयं[2] प्रडुढौके । कीदृक्सन् । इषुगणं प्रापयन् प्रियं कुर्वन्नत एव स्फावयन्वर्धयन् ॥

[3]रोपयत रोहयत । इत्यत्र "रुहः पः" [१४] इति वा प. ॥

विलीनयत । इत्यत्र "लियो नोन्तः°" [१५] इत्यादिना वा नः। विलाययत । इति पक्षोदाहरणं ज्ञेयम् ॥

विलालयत[4] विलापयत[5] । इत्यत्र "लो ल" [१६] इति वा ल ॥

अभिपालयिता । इत्यत्र "पाते." [१७] इति ल' ॥

धूग् धूग्श् धूग्ण् वा । उद्धूनयन् ॥ प्रीगंश्[6] प्रीग्ण् वा । प्रीणयन् । इत्यत्र "धूग्प्रीगोर्नः" [१८] इति नः ॥ यौजादिकयोर्नेच्छन्त्येके । अभिधावयत्[7] । प्राययत्[8] ॥

वाजयत् । इत्यत्र "वो वि°" [१९] इत्यादिना जः[9] ॥

पां पाने पैं वा । अपाययत् । अभिशाययत । छायय । समवसाययत् । समभिवाययत् । व्याययत् । ह्वाययत् । इत्यत्र "पाशा°" [२०] इत्यादिना यः ॥

अनर्पयत्[10][11][12] । अरेपयत्[12] । ब्लेपयत । अह्रेपित । क्नोपयन् । क्ष्माप्यते । प्रापयन् । इत्यत्र "अर्तिरी°" [२१] इत्यादिना पुः ॥

स्फावयन् । इत्यत्र "स्फायः[13] स्फाव्" [२२] इति स्फाव् ॥

---

१ ई °ध्यामहे. २ ए बी सी ई °य डु°. ३ सी रोह°. ४ बी °लालययत. डी ई °लापयत सी °ला × × × × × णयन् । इत्यत्र धूग्प्री° ५ डी °यत् वि°. ६ ए °प । इ°. ७ बी °ग्श् प्रीग्ण. ८ ई °यन् । प्रा°. ९ ई °ज ॥ प पा°. १०. बी °नपय°. ११ सी °त । व्ले°. १२ बी डी ई °त् । ब्लेप° १३ ए स्फाय् स्फा°.

शातयन्विघटयन्व्यथयन्वा[1]रोदसी ध्वनिरघाटि धनुर्भ्याम्।
खे तयोरिषुगणो[2]घटि घाटंघाटमाशु विघटंविघटं च ॥ १२० ॥

१२०. ध्वनिः क्रेङ्कारस्तयोर्भीमहम्मुकयोर्धनुर्भ्यामघाटि कृतः। कीदृग्। रोदसी शातयन्पातयन्निव विघटयन्वा[1] द्विधा कुर्वन्निव वा। विपूर्वो घटिरिनन्तो विदारणेपि वर्तते। यथा काष्ठं विघटयति। व्यथयन्वा पीडयन्निव वा। एष्विवा अवसीयन्ते। अतितीव्रध्वानो ह्युच्चशैलशृङ्गादीनि भ्रंशयति[3] पृथिव्यादीनि विदारयति नरादींश्च व्यथयतीत्यतितीव्रत्वादेवमाशङ्कितः। तथा धनुर्भ्यां कर्तृभ्यामिषुगणः खेघटि निक्षेपेण योजितः। किं कृत्वा। आशु घाटंघाटमात्मभ्यां सह संयोज्य[4] संयोज्याशु विघटंविघटं[5] च निक्षेपकाल आत्मसकाशाद्वियोज्य वियोज्य च ॥

इषुभिरनयोर्व्या[2]थंव्याथं व्यथंव्यथमव्यथि
प्रतिकगयिता कागंकागं कगंकगमाकगि।
प्रतिजर[3]यिता जारंजारं जरंजरमाजरि
क्रसयितृजनः क्रासंक्रासं क्रसंक्रसमक्रसि ॥ १२१ ॥

१२१. अनयोर्भीमहम्मुकयोरिषुभिः कर्तृभिः प्रतिकगयिता प्रतीपं हन्ता प्रत्यर्थी व्याथंव्याथं व्यथंव्यथमभीक्ष्णं[6] दुःखयित्वा[7] दुःखयित्वाव्यथि दुःखितः। तथेषुभिरेव प्रतिकगयिता कागंकागं कगंकगमभीक्ष्णं प्रहृत्य[8] प्रहृत्याकगि प्रहृतः। तथेषुभिरेव प्रतिजरयिता प्रतीपं क्षयं

१ प शान्तय°. २ सी °थ म्य°. ३ वी °रयता. ४ बी °ससम°.

१ डी °व्यादेषा. २ बी डी °रिरन°. ३ प °ति प्रथि°. ४ ई °योज्या°. ५ सी °टं च. ६ प °क्ष्ण दुख°. ७ डी °त्वाव्य°. ८ ई °हृत्या°.

नेता शत्रुर्जारंजारं जरंजरमभीक्ष्णं निर्जरय्यं निर्जरय्य विनाश्याजरि- विनाशितः । तथेपुभिः क्रसयितृजनः क्रसयिता वञ्चयिता सन्ताप- यिता वा जनः शत्रुः क्रासंक्रासं क्रसंक्रसमभीक्ष्णं वञ्चयित्वा वञ्चयि- त्वा संताप्य संताप्य वाक्रसि वञ्चितः संतापितो वा । व्यांथंव्याथमित्यादि- भिरेवाभीक्ष्ण्येत्र्गतेपि जिणम्परे णौ वा ह्रस्वोदाहरणानां लाघवेनोपन्यासार्थं व्यं- थंव्यथमित्यादीनामाभीक्ष्ण्य एव वर्तमानानां पुनः प्रयोगोतिशयेनाभीक्ष्ण्यं वक्ति । एवमन्यत्रापि ॥ हरिणी छन्दः ॥

प्रतिजनयता जानंजानं जनंजनमाग आ-
वनयितुरसून्वानंवानं वनंवनमोजसा ।
रजयसि मृगान् राजंराजं रजंरजमाः किमि-
त्यतिहसकृता भीमस्याव्याथ्यतीव मनो द्विषा ॥ १२२ ॥

१२२. ओजसा बलेन प्रयोज्यकर्त्रासून्हम्मुकप्राणान्वानंवानं वनंवनमभीक्ष्णं याचयित्वा याचयित्वावनयितुर्याचयितुर्मोहयितु- र्बलेन हम्मुकं मिमारयिषोरित्यर्थः । भीमस्य मनो द्विषा हम्मुकेनाती- वात्यर्थमव्याथि पीडितम् । यतः कीदृशा । अतिहसकृतात्यर्थं हसता । कथमित्याह । आ इति खेदे । कष्टमहो भीम किमिति मृगान् राजं- राजं रजंरजमभीक्ष्णं रमयित्वा रमयित्वा रजयसि रमयसि व्याध इव मृगतुल्यानेतान्भटान्किमिति खेलयसि ममैव पार्श्वे ढौकस्वेत्यर्थ इति ।

---

१ प सी ई °य्य वि°. २ प °शित । त°. ३ सी डी °ता ज°. ४ ई व्याथ व्या°. ५ बी °भीक्ष्योव°. सी °भीक्ष्णेव°. ६ सी °व्यथ°. ७ सी °भीक्ष्ण ए°. ८ सी हरणी. ९ प °र्त्रा तेन हम्मु° १० × The ms ई seems to have omitted one line The omission is hointidoret but not filled in. ११ प त्वाव°. १२ प °तुयाच°. सी °तुर्म्रा°. १३ प °नोद द्वि°.

तथागो दुर्वाक्यजनितमपराधं जानंजानं जनंजनमभीक्ष्णमुत्पाद्योत्पाद्य प्रतिजनयता कुर्वता ॥

किमरजि मयान्वैणोराजि त्वया न्विति जल्पता
तदजनि बलं तेजोजानि व्यकागि च तत्तथा ।
अवनि स यशोवानि प्राणानजारि च मार्गणैः
शशिकुलभुवा वक्राक्रासि द्विपन्स्त्रसयन्यथा ॥ १२३ ॥

१२३. नुशब्दो विकल्पार्थः । किं मया वैणो मृगतुल्यो भटजनोरजिं युद्धेन रमयांचक्रे किं त्वया नु भवता वैणोराजीत्येवं जल्पता शशिकुलभुवा सोमवंशोद्भवेन भीमेन तत्तत्रत्यलोकप्रसिद्धं बलं तथाजनि कृतं तत्तेजः प्रतापस्तथोजानि । तथा तद्बलं तेजश्च तथा व्यकागि च व्यापारितं यथा स द्विपन्हम्मुको मार्गणैः शरैः प्रयोज्यकर्तृभिर्भीमेन कर्त्रा यशोवनि याचितः प्राणांश्चावानि तत्संमुखप्रेरितवाणपार्श्वाद्भीमेन मह्यं स्वकीयं यशः प्राणांश्च देहीति याचित इवेत्यर्थः । अजारि च बलहीनः कारितोत एव वक्राक्रासि कुटिलीकृतः । कीदृक्सन् । मार्गणैः स्त्रसयन्भीमं निराकारयन्प्रहारयन्नित्यर्थः ॥

शातयन् । इत्यत्र "शदिः°" [२३] इत्यादिना शात् ॥

विघटयन् । अघाटि अघटि । घाटंघाटम् विघटंविघटम् । व्यथयन् । अव्याधि अव्यधि । व्याथंव्याथम् व्यथंव्यथम् । अत्र "घटादेः°" [२४] इत्यादिना णौ ह्रस्वो ञिणम्परे तु णौ दीर्घो वा ॥

१ ए °दश°.

१ सी डी तत्र°. २ ए °याजोनि. ३ ए °या वक्रा°. ४ ए °त्यर्थं श ५ ए °यि । व्या°.

प्रतिकर्गयिता । व्यकागि आकर्गि । कागंकागम् कर्गंकर्गम् । आवनयितुः । अवानि अवनि । वानंवानम् वनंवनम् । प्रतिजनयता । अजानि अजनि । जानंजानम् जनंजनम् । प्रतिजरयिता । अजारि आजरि । जारंजारम् जरजरम् । क्नसयितृं । अक्नासि अक्नसि । क्नासक्नासम् क्नसक्नसम् । रजयसि मृगान् । एणोराजि अरजि । राजराजम् रजरजम् । अत्र "कगेवनू" [२५] इत्यादिना ह्रस्वो ञिणम्परे तु णौ वा दीर्घश्च । केचित्तु ष्णसूचोपीच्छन्ति । स्नसयन् ॥

अदमि न सुरैर्नो वा दैत्यैरदामि य आहवे
स्म दमयति तं दामंदामं दमंदममोजसा ।
चुलुककुलभूः कामंकामं ह्यकामयदामय-
त्तमथ निगडं प्रामंप्रामं य आमि न केनचित् ॥ १२४ ॥

१२४. यो हम्मुक आहवे रणे सुरैर्नादमि न दमितो नो वा दैत्यैरदामि तं हम्मुकं चुलुककुलभूर्भीम ओजसा बलेन प्रयोज्यकर्त्रा दामंदामं दमंदममभीक्ष्णं दमयित्वा दमयित्वा दमयति स्म । अथानन्तरं हम्मुकं निगडं शृङ्खलां हि स्फुटं कामंकाममभीक्ष्णं वाञ्छयित्वाकामयदवाञ्छयत्तथा निगडं प्रामंप्रामं प्रापय्य प्रापय्यामयत्प्रापयद्यो हम्मुकः केनचित्केनापि निगडं नामि न प्रापितः ॥

नाचामि नाक्रामि च केनचिद्या तां सोथ चौलुक्यकुलावतंसः ।
आचाममाचाममिभाश्वसैन्यान्याचामयत्सेक्षुयवां तदुर्वीम् ॥ १२५ ॥

१२५. अथ योर्वी केनचित्केनापि स्वसैन्यपार्श्वान्नाचामि न

१ ई चुलक. २ ए °म ह्य°. ३ ए °तस । आ°.

१ सी °गयता २ ए बी नयिना. ३ ई °रि अज° ४ सी डी °तृ । आक्रा°. ५ ए °न । र°. ६ ई चुलक° ७ ए °भूमी ओ°. ८ डी निगड.

स्वादयांचक्रे नाकामि च । आस्तां तावदाचामनं नैवाभिलापयांचक्रेपि । एतैर्नीतिनिरुपद्रवत्वेन तद्भूमेरतिशार्दूलतोक्ता । तां सेक्षुयवामिक्षुवाटक्षेत्रयवोपेतां तदुर्वी हम्मुकपृथ्वीं स चौलुक्यकुलावतंसो भीम इभाश्वसैन्यानि प्रयोज्यकर्तॄण्याचाममाचामं खादयित्वा खादयित्वाचामयत् । इभैरिक्षूनश्वैश्च यवानखादयन् ॥

दमयति । अदामि अदमि । दामंदामम् दमंदमम् । इत्यत्र "अमोकमि" [२६] इत्यादिना ह्रस्वो ञिणम्परे तु णौ वा दीर्घः ॥ अकम्यमिचम इति किम् । अकामयत् । अकामि । कामकामम् । आमयत् । आमि । प्रामंप्रामम् । आचामयत् । आचामि । आचाममाचामम् ॥ इन्द्रवज्रा छन्दः ॥

॥ इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तावष्टमः सर्गः ॥

---

१ ए °नाप्रिति°. २ ए °शार्दूलिवोत्कातात्का ता से°. ३ सी °स्तात्का ता से°. ४ ए °चामं सा°. ५ डी °कामि. ६ ए °म् । अचा°. ७ डी °ममा°. ८ ई °र्गः समाप्तः ॥

# द्व्याश्रयमहाकाव्ये

## नवमः सर्गः ।



परिस्खादंपरिस्खादं परिस्खदंपरिस्खदम् ।
स परिस्खदयन्दृप्तान्भीमोथ प्रतिचेद्यगात् ॥ १ ॥

१. अथ हम्मुकवशीकरणानन्तरं स प्रसिद्धो भीमः प्रतिचेदि चेदिदेशाभिमुखमगात् । कीदृक्सन् । दृप्तान्दर्पिष्ठान्नृपान्परिस्खादंपरिस्खादं स्खदि हिंसास्थैर्ययो. । रणे स्थिरैर्भाव्यमिति स्थिरीकृत्य स्थिरीकृत्य परिस्खदंपरिस्खदं स्वसैन्यैर्घातयित्वा घातयित्वा परिस्खदयन् स्थिरीकुर्वन्घातयंश्च ॥

अपस्खादमपस्खादमपस्खदमपस्खदम् ।
यैरपास्खादि तैर्नापास्खद्यस्य वहतो बले ॥ २ ॥

२. तैश्चरटैश्चरैरस्य भीमस्य वहतो गच्छतो बले नापास्खदि मृत्युभयान्न किमपि विनाशितम् । यैरपस्खादमपस्खादमपस्खदमपस्खदमभीक्ष्णं स्वभटैर्घातयित्वा घातयित्वापास्खादि घातः कारितो यैर्नृपादयोपि गच्छन्तः प्रच्छन्नधाटीपातादिनोपद्रुता इत्यर्थ. ॥

---

१ बी सी वी अर्हन् । प°. २ ए °रिस्कादं. ३ ई बले: ॥.

---

१ सी °दिदे°. २ ए °सार्स्तयं°. ३ ए रणै स्थि° ४ सी °स्खद°. ५ वी °पास्खादि. ६ बी सी डी °क्ष्ण स्तुभ°.

पर्यस्खादि[१] च नो तेनाप्यनपस्खदयन्पथि[२] ।
किं तु प्रस्खादयन्नेव पर्यस्खदि महौजसा[३] ॥ ३ ॥

३. तेनापि न केवलं तैरस्य वहतो बले नापास्खदि[१] किं तु न्याय्यनिष्ठत्वाद्भीमेनापि पथ्यनपस्खदयन्नहिंसयन्[२]नो[३] च नैव पर्यस्खादि[४]। शिष्टं स्पष्टम् ॥

परिस्खदयन् । पर्यस्खादि पर्यस्खदि[५] । परिस्खादंपरिस्खादं परिस्खदंपरिस्खदम् । अनपस्खदयन् । अपास्खादि अपास्खदि[६] । अपस्खादमपस्खादम् अपस्खदमपस्खदम् । अत्र "पर्यपात्स्खदः" [२७] इति णौ ह्रस्वो ञिणम्परे तु णौ वा दीर्घः ॥ स्खदेर्घटादिपाठेन सिद्धे नियमार्थं वचनमन्योपसर्गपूर्वस्य मा भूत्[७] । प्रस्खादयन् ॥

न्यशामि शमयन्भिल्लान् शामंशामं शमंशमम् ।
भीमश्च चेदिना दोश्च न्यशाम्यशमि नो पुनः ॥ ४ ॥

४. चेदिना चेदीशेन भीमश्च न्यशाम्यागच्छन् श्रुतः । कीदृक् । भिल्लान् म्लेच्छभेदान् शामंशामं शमंशममभीक्ष्णमुपशमय्योपशमय्य[८] शमयन्निराकुर्वन्नित्यर्थः[९] । ततो दोश्च भुजा च न्यशामि बलावलेपात्[१०] स्वभुजसंमुखं विलोकितमित्यर्थः । नो पुनश्चेदिना दोरशम्युपशमितं सावष्टम्भं कृतमित्यर्थः[११][१२] ॥

शमयन्[१३] । न्यशामि अशमि । शामंशामम् शमंशमम् । इत्यत्र "शमोऽदर्शने" [२८] इति ह्रस्वो ञिणम्परे तु णौ वा दीर्घश्च ॥ अदर्शन इति किम् । दोर्न्यशामि[१४] ॥

१ डी °नाधन°. २ ए महेज°.

१ सी डी नापस्ख°. २ ए °सयेन्नो. सी °सन्नोनैव. ३ डी °न्नो नै°. ४ ई °दि । शेष स्प°. ५ ए °स्खदिं पारि°. ६ ए अपस्ख°. ७ ए °द् पस्खा°. ८ ए °मय्य श°. ९ ई °य्य निरा°. १० ए °मय्यन्नि°. ११ ई °पाच्चमु°. १२ सी °थः ॥ सम°. १३ सी डी °न् । निशा°. १४ ए दोर्न्यशा°.

रिपून्यमयितुर्मेद्य यामंयामं यमंयमम् ।
मैत्र्यै किमुदयंम्येपोमैत्र्यै किमुदयामि वा ॥ ५ ॥
न विधिर्यामयत्यर्कं मां चाप्रज्ञपयन्नितः ।
भीमोरीञ्ज्ञपयन्नेति ज्ञापंज्ञापं ज्ञपंज्ञपम् ॥ ६ ॥
अज्ञापि ज्ञपयित्वास्त्रं चहयित्वा तु नाज्ञपि ।
यत्पूर्वैः किं जयेत्सोयं चाहंचाहं चहंचहम् ॥ ७ ॥
न चाहिता चहिता नाज्वाल्यज्वल्यमुनेति वा ।
नाज्ञात्वा ज्वलयाम्येनं ज्वालंज्वालं ज्वलंज्वलम् ॥ ८ ॥
ज्वालयन्प्रज्वलयन्वा विग्रहं ह्वलयन्परम् ।
संधिं वा ह्वालयन्दूतं ह्मलयेद् ह्मालयन्नयम् ॥ ९ ॥
इति यावदभूच्चिन्तानमितग्लपिताननः ।
चैद्यस्तावद्रजोपश्यंन्नामयद् ग्लापयद्दिशः ॥ १० ॥

५–१०. चैद्यश्चेदिदेशाधिपश्चिन्तयानमितं नम्रीकृतं ग्लपितं च क्षीणहर्षं कृतमाननं मुखं येन स तथा यावदभूत्तावद्दिशो ग्लापयन्मलिनीकुर्वंदत एव नामयन्नीचैः कुर्वद्रजः सैन्यखुरोत्खातरेणुमपश्यन् । का चिन्तेत्याह । अद्य सांप्रतं मे मम रिपून् यामंयामं यमंयममभी-

१ ए °मेंद्य या°. २ ए °यस्येपो° ३ ए °त्यर्थं मा. ४ ए °त्वा ना°. ५ ए °नेमि वा. ६ डी °ति चा।. ७ ए सी मधि वा. ८ सी डी °ये ह्मा°. ९ ए °श्यनाम°.

१ ए पश्चाना°. २ ए °नीचै कुर्वरजा सैन्यखरो°. ३ ए °प्रत मे. ४ ई °त म°. ५ ए °मपीक्ष्ण°.

क्षणमुपरमय्योपरमय्य यमयितुरुपरमयितुस्तिरस्कुर्वत[1]: सत इत्यर्थः । मैत्र्यै बलिष्ठतयायं संप्रति शत्रून्पराभवन्मा भीममपि पराभूदिति[2] सख्याय किमेष भीम उदयमि मन्त्रिभिरुद्यमं कारितः । किं वा मैत्र्यै[3] संप्रत्ययं शत्रूञ्जयन्मा भीमस्य[4] दुःसाध्यो भूदित्याशयेन विग्रहायोदयामि । तथा विधिर्दैवमर्कं[5] न यामयति न परिवेवेष्टि परचक्रकृतराष्ट्रभङ्गादिसूचकं दुर्दैवकृतमर्कपरिवेषाद्यरिष्टं न किं चिदस्तीत्यर्थः । चः पर[6]मर्थे । परं[7] भीम इतोस्मिन्देश एति । कीदृक्सन् । अरीञ्ज्ञापंज्ञापं ज्ञपंज्ञपमभीक्ष्णं हिंसित्वा हिंसित्वा ज्ञपयन्हिंसन्नत एव मामप्रज्ञपयन्नपरितोपयन् । तथा यत्पूर्वैर्यस्य भीमस्य पूर्वजैर्मूलराजाद्यैरस्त्रं[8] ज्ञपयित्वा तीक्ष्णीकृत्याज्ञाप्यमारि शत्रुहिंसा चक्रे । भावेत्र[9] ञिच् । तुः[10] परमर्थे । परं चहयित्वा शाठ्यं कृत्वा यत्पूर्वैर्नाज्ञापि[11] न हिंसितं सोयं भीमोतर्कितमभिषेणकत्वात्किं चाहंचाहं चहंचहमभीक्ष्णं छलयित्वा छलयित्वा जयेच्छत्रुं वशीकुर्यात् । "विधिनिमन्त्रण°" [५-४-२८] इत्यादिना संप्रश्ने सप्तमी । तथैनं भीमं ज्वालंज्वालं ज्वलंज्वलं प्रत्यवस्कन्दनादि[12]नाभीक्ष्णं कोपयित्वा कोपयित्वा न ज्वलयामि न कोपयामि । किं कृत्वाज्ञात्वा । किमित्याह । अमुना भीमेन न चाहिता न शाठ्यं करिष्यते[13] चहिता वा । वा शब्दोत्रापि योज्यः । शाठ्यं करिष्यते वा । तथामुना[14] नाज्वालि कोपेनात्मा न ज्वालितोज्वलि[15] वेति । तथा परं शत्रुं ज्वालयन्प्र[16]तापैः संतापयन्प्र[17]ज्वलयन्प्रकर्षेण संतापयंश्च[18] भीमो दूतं ह्मलयेत्[19]प्रेषयेत् । कीदृक्सन् । विग्रहं वा[20] ह्वलयंश्चालयन्प्रवर्तयन्नि-

१ प °र्वतोः स°. २ सी डी °भूयादि°. ३ डी मैत्र्ये सं°. ४ प °स्य दुसा°. ५ प °मर्के न. ६ प सी डी रमार्थे°. ७ प °र चहयित्वा शाठ्य कृत्वा यत्पूर्वैर्नाज्ञपि न हिंसित सोयं भीमोतर्कितन्हि° ८ प पूर्वैर्मू°. ९ ई °वे ञि°. १० सी तु प°. ११ प °त्पूर्वैर्ना°. १२ सी °नाभी°. १३ सी डी °ते चाहि°. १४ सी डी °नाज्वा°. १५ बी °तो ज्वालिचेति. १६ प repeats from यन् to लयन्. १७ प ई °न्मज्वाल°. १८ प °पयक्ष भीमौ दू°. १९ डी °ये की°. २० प वा ह्वल°.

त्यर्थः । संधि वा ह्वालयन्प्रवर्तयन । यतः कीदृक् । नयं न्यायं ह्वाल-यन्प्रवर्तयन । यद्ययं मया सह निग्रहं सन्धिं वा चिकीर्षुः स्यात्तदा न्यायनिष्टत्वाद्दूतं मत्पार्श्वे प्रेषयेन्न तु प्रेषितवांस्तस्मान्मैत्र्यमैत्री च न कारणं किं त्वन्यत्किमपीत्यर्थ इति ॥

स्वर्णवर्मांशुभिर्व्योम स्नपयत्स्नापयद्दिशः ।
कूर्मेण वमयत्फेनं गरं शेषेण वामयत् ॥ ११ ॥
अवन्या वानयत्कम्पं निश्छद्म वनयत्तथा ।
शिखिच्छदच्छत्रचयैर्धामच्छद्भिश्छदिःश्रियम् ॥ १२ ॥
दिव्यप्रच्छदसाश्वाश्वमाल्लुलोकच्च चेदिपः ।
कालोचितं च वेत्रीशेनाशशासदचीकरत् ॥ १३ ॥

११–१३. चेदिप आश्वमश्वौघमाल्लुलोकच्च न केवलं रजोपश्यदिति चार्थः । कीदृशम् । स्वर्णवर्मांशुभिर्व्योम स्नपयदुज्ज्वलीकारकत्वेनाभिषिञ्चद्दिवैव दिशः स्नापयत । तथा कूर्मेण कर्त्रातिभाराक्रान्त्या फेनं वमयदुद्गारयत् । तथा शेषेण कर्त्रा गरं विषं वामयत् । तथावन्या कम्पं वानयदवनीं कम्पं याचमानां प्रयुञ्जानं पृथ्वीं कम्पयदित्यर्थः । तथा निश्छद्म निर्मायं यथा स्यादेवं धामातपं छादयन्ति क्विप् । तैर्धामच्छद्भिः शिखिनां मयूराणां ये छदाः पक्षास्तेषां छत्रचयैः

१ ए °यन्दिश २ ए °त्फेनं ग°. ३ बी निच्छद्म°. ४ ए °त्रत्रयै°. ५ सी डी °प्रच्छाद°. ६ ए °शाशद°.

१ ए °त्र्यमित्री २ ए सी °वल र°. ३ बी म श्रप°. ४ बी °षिञ्चदि°. ५ ई शेषक°. ६ ए गर वि°. ७ ए वनीय क°. ८ ए °चनाना. ९ बी निच्छद्म.

श्रीकरीनिकरैः कर्तृभिश्छदिः[1]श्रियं गृहाच्छादकतृणपङ्क्तिशोभां वनयद्याचयदङ्गीकारयदित्यर्थः । तथा दिव्याः प्रधानाः प्रच्छदा वस्त्राणि येषां ते तथा सादिनोऽश्ववारा यत्र तत् । ततश्च चेदिपो[2] वेत्रीशेन कर्त्रा कालोचितमाशशासदज्ञापितवानचीकरच्च[3] कारितवांश्च ॥

असस्वामत्ततो द्वास्थ आशशासच्च पर्षदम्[1] ।
स्वाधिकारमबभ्राजद्वाचं चैवमसिस्वदत् ॥ १४ ॥

१४. ततश्चेदिपेन[4] कालोचितस्य भणनकरणविषये[5] व्यापारणानन्तरं द्वास्थोऽसस्वामत्स्वामिनमाख्यद्युष्मदादिष्टमधुनैव करोमीति[6] चेदिपमुवाचेत्यर्थः । तथा पर्षदमाशशासत्स्ववचः[7]श्रवण[8]साभिलाषां चक्रे यतः स्वाधिकारं विज्ञप्य विज्ञपनरूप[9]मबभ्राजदप्रकटयत्[10] । एतदपि कुत इत्याह । यत एवं वक्ष्यमाणप्रकारेण वाचमसिस्वदच्च चारुरचनया[11] स्वाद्वीमकार्षीच्च[12] ॥

यथासौ वाचमसिस्वदत्तथाह ।

छत्रै[2]रबिभ्र[3]जद्व्योमाबीभसत्कुन्तकान्तिभिः ।
अबभासत्[4]किरीटोस्रैर्हेषारावैरबीभषत् ॥ १५ ॥
खुराग्रैरबभाषत्क्ष्मामदिदीपदपीपिडत् ।
भारेण क्रोडदंष्ट्रामप्यपिपीडददीदिपत् ॥ १६ ॥

---

१ प °म् । स्वाधि°. २ सी डी °त्रैरावि°. ३ प °भ्रमद्व्यो°. ४ प °सत्किरीटोस्रैः हेषा°.

---

१ बी °दिभि°. २ प °पो वित्री°. ३ प °रत्व का°. ४ प °दिन°. ५ प °षये व्या°. ६ प ई करिष्ये चे°. ७ प °वचश्र°. ८ सी डी °बणे सा°. ९ बी सी डी °रूप स्वव्यापारम°. १० प मवभ्राज°. ११ डी °या साध्वीम°. १२ बी साधीनम°. सी स्वाध्वीम°.

अजिजीवत्तमस्तेन रजो यदुदमीमिलत् ।
अस्त्राण्युदमिमीलत्तान्युद्द्योतं यैरजीजिवत् ॥ १७ ॥
दुन्दुभीनचकाणत्तान्यैर्निकुञ्जान्यचीकं[1]णत् ।
अरराणच्च ढक्कास्ता यकाभि[2]र्यामरीरणत् ॥ १८ ॥
काहला अववाणच्च निजोत्कर्ष[3]न्ववीभणत् ।
शङ्खानवीवणच्चोच्चै[4]रवैभाणन्नु मङ्गलम् ॥ १९ ॥
क्वापि क्षो[5]भमशश्राणद्विसयं[6] काप्यशिश्रणत् ।
अजुहावद्द्वेषयाश्वमार्के[7] चैन्द्रं[8] न्वजूहवत् ॥ २० ॥
अजिहेठदगांस्तान्भुन्यलुलोटदलूलुपत् ।
नयानजीहि[9]ठत्कश्चिदलुलोपदलूलुं[10]टत् ॥ २१ ॥
नाल्ललापन्मिथो नालीलपदन्यं तथापि हि ।
अचिकीर्तत्प्रभोः शक्तिं निजां भक्तिमचीकृतत् ॥ २२ ॥
भीमस्य दूतेन [11]सहैषोववर्तदिहागतिम् ।
अश्वायुतं चमूलेशो नोपद्रवमवीवृतत् ॥ २३ ॥

१५–२३. एष युष्माभि[1]रत्यासन्नं दृश्यमानो भीमस्य चमूलेशो-

---

१ ए °करत्. २ बी °भिस्ताम°. ३ सी बी °र्पं त्वबी. ४ ए °क्वाण°. ५ ए क्षोत्सम°. ६ बी °य काप्य°. ७ ए बी सी °र्के न्वैन्द्र. ८ डी °न्द्र त्वज्°. ९ ए °हिउत्क°. १० ए °लुपत्. ११ सी डी सहाषो°.

---

१ डी °भिरित्या°.

श्वायुतमश्वानां दशसहस्राणि दूतेन सहेह प्रत्यक्षे देश आगतिमागमनमववर्तच्चक्रे । कीदृगित्याह् । एपच्छत्रैर्महासामन्तादिमूर्धोपरिस्थितैरातपत्रैः कृत्वा व्योमाविभ्रजदशोभयन् । तथैष कुन्तकान्तिभिः कृत्वा व्योमावीभसदुद्दीपयन् । तथैष किरीटोस्त्रैर्महासामन्तशिरःस्थमुकुटांशुभिः कृत्वा व्योमावभासन् । तथैष हेषारवैः कृत्वा व्योमावीभषत्प्रतिशब्दितैरशब्दाययत् । तथैष खुराग्रैः कृत्वा क्ष्मामवभापच्छब्दायमानां प्रायुङ्क्तादिदीपत्समतापयदपीपिडत्पीडितवांश्च । तथैष भारेण कर्त्रा क्रोडदंष्ट्रामपि न केवलं क्ष्मामादिवराहदाढामप्यपिपीडद्दीदिपच्च । तथा यद्यस्माद्धेतोरेष रजो धूलिमुदमीमिलदुच्छालितवांस्तेन हेतुना तमोजिजीवदुल्लासितवानित्यर्थः । तथैष तान्यस्त्राण्युदमिमीलदप्रकटयद्यैः कृत्वैष उद्द्योतमजीजिवत् । तथैष तान्दुन्दुभीन्पटहानचकाणदवादयद्यैः कृत्वैष निकुञ्जानि गिरिगह्वराण्यचीकणत्प्रतिशब्दैः शब्दायितवान् । तथैष ता ढक्का विजयभम्मा अरराणच्चावादयच्च यकाभिः कृत्वा द्यामरीरणत् । तथैष काहला अववाणच्चावादयत् । एतत्स्वरस्यात्युदात्तत्वादुत्प्रेक्ष्यते । एष निजोत्कर्षं न्वात्मीयोत्कृष्टतामिवाबीभणदभाणयत्प्रस्तावात्काहला एव । "गतिबोध०" [ २ २.५ ] इत्यादिना णिकर्तुः कर्मता । काहलापार्श्वादित्यर्थः । तथैष उच्चैः शङ्खानवीवणच्च । एतत्स्वरस्य च मङ्गल्यत्वादुत्प्रेक्ष्यते । मङ्गलं न्ववभाणद्भाणितवान् । प्रस्तावाच्छङ्खानेव । तथैष कापि शत्रुषु क्षोभं भयेनाकुलतामशश्राणददात् । तथैष कापि नागरिकेपु ऋद्धिविशेषेण विस्मयमाश्र-

---

१ सी डी °हस्राणि. २ ए °पस्त्रैम°. ३ ए °दिमहाम्°. ४ बी सी डी °रिधृतै°. ५ ए °म्यितेरा°. ६ ए °वीसस°. ७ बी °शिरस्थ°. ८ ए °पारावः कृ°. ९ ए क्ष्मानव°. १० बी ई °युक्तादि°. ११ ए °ल क्ष्म्यानादि°. १२ ए बी डी उद्योत°. १३ ए °जिपस्तथै°. १४ ई ढक्कावि°. १५ ए विषय°. १६ ए °णच्च वा°. १७ बी सी डी कृत्वैष द्या°. १८ ए °णत्वाचा°. १९ ई णिकर्तुः. २० ए °पार्श्वदि° २१ बी °थैव उ २२ डी °ल त्वव.° २३ ए °णप्राणि°.

र्यमंशिश्रणन् । तथैष हेषयाश्वशब्दितेन कन्यर्कि रविसंवन्ध्यौश्वमश्वौघमजुहावन्नु स्वाश्वशौर्यावलेपेन सस्पर्धमाकारितवानिव । तथैष हेषया कन्यन्द्रं शक्रमंवन्धिनमश्वमुच्चैःश्रवसंमजूहवन्नु । तथैष तानगान्वृक्षानजिहे[9]ठन्मत्तगजादिभिर्बाधितवान्भुवि [10]पृथिव्यामलुलोटत्पातितवानलूलुपच्छेदितवांश्च यान्कश्चिन्ना[11]जीहिठन्नालू[12]लुटन्नालुलोपच्च । तथैष यद्यपि मिथो नाललापदहो अस्मत्प्रभोः सामर्थ्यं येनेत्थमित्थं हेलयैव हम्मुको वद्ध इति । तथा वयं स्वप्रभुकार्ये जीवितं तृणायापि न मन्यामह इत्यादिप्रकारेणान्योन्यं न सं[13]भा[14]षितवान्नचान्यं स्वस्माद्व्यतिरिक्त कं चनालीलपज्ज्ञापितवांस्तथापि हि स्फुटं प्रभोर्भीमस्य शक्ति तेजस्विताश्रीविशेषाद्याडम्बरप्रकाशनेन वलादिसामर्थ्यमचिकीर्तज्ज्ञापितवान् । तथा निजा भक्तिं तथाविधदुष्करपरराष्ट्रप्रवेशरूपभर्त्रादेशकरणेन स्वभर्तृविषयं वहुमानं[15] चाचीकृ[16]तत् । तथैष इह देश उपद्रवं नावीवृतन्न चक्रे ॥

यमधितुः । उदयामि उदयमि । यामंयामम् यमयमम् । अत्र "यमोपरि°" [ २९ ] इत्यादिना ह्रस्वादि ॥ अपरिवेषण इति किम् । यामयत्यर्कम् ॥

मारणे । अरीन् ज्ञपयन् ॥ तोषणे । मामप्रज्ञपयन् ॥ निशाने । ज्ञपयित्वास्त्रम् । अज्ञापि[18] अज्ञपि । ज्ञापज्ञापम् ज्ञपज्ञपम् । अत्र[20] "मारण°" [ ३० ] इत्यादिना ह्रस्वादि ॥

---

१ ए °मशश्राण° वी °मशश्र° २ ए कन्यार्कर°. ३ सी °न्यार्कर°. ४ सी डी °न्ध्याश्व तुरगौघ°. ५ ए शात्रम°. ६ सी डी °नमाश्व° ७ ए ई °समाजू°. ८ वी °जूहाव°. ९ ए °हेवन्म°. १० वी सी पृथ्व्याम°. ११ ए °जीहवन्ना°. १२ ए °लुठन्ना°. १३ वी सतोपि°. १४ सी डी °भावित°. १५ ए सी डी °न वाची°. १६ वी °कृत्तथै°. १७ ए सी °त्यकम्. १८ डी °पि शा°. १९ ए °प । ज्ञ°. २० ए अर मा°.

चहयित्वा[1] । चहिना चाहिता । चाहंचाहम् चहंचहम् । अत्र "चहणः शाठ्ये" [ ३१ ] इति[2] ह्रस्वादि ॥

ज्वलयामि ज्वालयन् । ह्वलयन् ह्वालयन् । ह्मलयेत्[4] ह्मालयन् । ग्लपित ग्लापयत् । स्नपयत् स्नापयत् । वनयत् वानयत् । वमयत्[5] वामयन् । नमित नामयत् । अत्र "ज्वलह्वल°" [ ३२ ] इत्यादिना वा ह्रस्वः ॥ अज्वालि अज्वलि । ज्वालज्वालम् ज्वलंज्वलम् । इत्यादिषु दीर्घविकल्पः सिद्ध एव ॥ अनुपसर्गस्येति किम् । प्रज्वलयन् ॥

इसि । छदिः ॥ मनि । छद्म[9] ॥ त्रटि । छत्रं[10] ॥ क्विपि[11] । धामच्छच्छिः । अत्र "छदेः°" [ ३३ ] इत्यादिना ह्रस्वः ॥

प्रच्छद । शिखिच्छेद[12] । इत्यत्र "एकोप°" [ ३४ ] इत्यादिना ह्रस्वः ॥

अचीकरत्[13] । इत्यत्र "उपान्त्यस्या°" [ ३५ ] इत्यादिना ह्रस्वः ॥ असमानलोपिशास्वृदित[14] इति किम् । असस्वामत् । यत्रान्त्यस्वरादिलोपस्तत्र स्थानिवद्भावेन[15] न सिध्यतीति वचनम् । यत्र तु स्वरस्यैव लोपस्तत्र स्वरादेशत्वात्स्थानिवद्भावेनैव सिध्यति । मालामाख्यदममालत् । ननु यत्रापि स्वरव्यञ्जनलोपस्तत्रावयवावयविनोरभेदनयेन[16] स्वरादेश एवेति स्थानिवद्भावेनैव सिध्यति किमसमानलोपिवचनेनेति । सत्यम् । स्थानिवद्भावस्यानित्यत्व-[17]ज्ञापनार्थं वचनम् । तेनासिस्वदत् । अत्रोकारस्य "नामिनोकलिहलेः" [ ४.३.५१ ] इति वृद्धौ कृतायामन्त्यस्वरादिलोपादसमानलोपित्वम् ॥ शासू[18] ।

---

१ ई °त्वा । चाहिता । चहिता । चाह. २ ए चाह. ३ ए ई इत्यादिना ह्र°. ४ सी डी °लयत. ५ ए °त् ह्वाल°. ६ सी °त् न°. ७ वी सी डी °ल्प सि°. ८ डी °द्ध येव. ९ डी °द्म ॥ त्रटि. १० वी सी डी ई छत्र ॥. ११ ए क्वपि. १२ ए °च्छब्द । इ°. सी डी °च्छद् इ° १३ ए °रदित्यादिल्य°. १४ वी सी डी ई °दितीति. १५ डी °न सि°. १६ सी °भेदेन.° १७ सी °वस्या°. १८ ई °सू । आश°.

अशशासत् ॥ आशामोपीच्छत्यन्य॰ । आशशासत्[1] ॥ ऋदित् । लोकृ । आलुलोकत् ॥

अविभ्रजत्[3] अबभ्राजत् । अबीभमत् अबभामत् । अबीभषत् अबभाषत् । अदीदिपत् अदिदीपत् । अपीपिडत् अपिपीडत् । अजीजिवत् अजिजीवत् । अमीमिलत् अमिमीलत । अचीकणत् अचकाणत् । अरीरणत् अरराणत् । अबीवणत् अबवाणत् । अबीभणत् अबभाणत् । अशिश्रणत् अशश्राणत् । अजूहवत् अजुहावत् । अजीहिठत्[6] अजिहेठत् । अलूलुटत् अलुलोटत् । अलूलुपत् अलुलोपत् । अलीलपत् अललापत । अत्र "भ्राजभास"[7] [ ३६ ] इत्यादिना वा ह्रस्व॰ ॥

अबीवृतत् अबवर्तत् । अचीकृतत् अचिकीर्तत् । अत्र "ऋद्वर्णस्य" [ ३७ ] इति वा-ऋत् ॥

दूतः सोजिघ्रपद्वाहान्द्वारं रत्नांशुशाड्वलम्[1] ।
तं तत्रातिष्ठिपं देवाज्ञासौरभमजिघ्रिपम् ॥ २४ ॥

२४. स भीमसत्को दूतो वाहानश्वान्द्वार सिंहद्वारमजिघ्रपत । द्वारं वाहानुद्गतहरिततृणाशङ्कया[9] जिघ्रत प्रयुक्तवान् । यतः कीदृग्द्वार रत्नांशुशाड्वल रत्नांशुभि. शाड्वलशब्दसानिध्यान्नीलमणिकान्तिभि शाड्वलमिव हरिततृणान्वितमिव द्वारदेशे दूत आयातोस्तीत्यर्थ । तं दूतं तत्र द्वारेहं प्रतीहारोतिष्ठिपं स्थापयामास । यतो देवाज्ञासौरभं

---

१ सी डी °शाद्वल°.

---

१ सी ॥ रुदि°. २ प सी °कृ । अनु°. ३ बी °विभ्राज°. ४ प अदीदिप° ५ सी °शश्रण° ६ प सी °हिवत् ७ प °जत्भाम° पी सी डी °जभ्रास°. ८ सी अची°. ९ सी डी °तृणश°. १० डी °रुमि°.

देवस्य राज्ञो याज्ञा तस्याः सौरभं गुणगौरवं प्रधानादेशमित्यर्थः । अहमजिघ्रिपं घ्रापयामास । तवाज्ञां प्रतीच्छन्तं दूतमहं प्रयुक्तवानित्यर्थः ॥

अजिघ्रिपम् अजिघ्रपत्[1] । इत्यत्र "जिघ्रतेरिः"[2] [ ३८ ] इति वा-इः ।

अतिष्ठिपम् । अत्र "तिष्ठतेः" [ ३९ ] इति नित्यमिः ॥

अदूषयद्भिः प्रतिभामदूष्यैः सोप्यदोषयन्[1] ।
धीगूहितेङ्गितैः पुम्भिरावृतोत्रैतुमिच्छति ॥ २५ ॥

२५. सोप्यदोषयन्[3] केवलं पुम्भिः प्रतिभामदूषयद्भिः किं तु दूतोपि प्रतिभां प्रज्ञां स्वामिद्रोहाद्यभिप्रायेणाकलुषयन्सन्नत्र देवपादान्तिक एतुमिच्छति । कीदृक् । पुम्भिर्नरैरावृतः । किंभूतैः । अदूष्यैः(ष्यैः) कुलीनत्वादिसद्गुणोपेतत्वेन श्लाघ्यैरत एव प्रतिभामदूषयद्भिः । तथा धिया प्रयोज्यकर्त्र्या गूहितं संगोपितमिङ्गितं चेष्टितं दुर्वचोव्यापारादि यैस्तैर्गम्भीराशयैरित्यर्थः[4] ॥

अदूष्यैः । अत्र "ऊदुषो णौ" [ ४० ] इत्यूत् ॥

प्रतिभामदूषयद्भिः[6] प्रतिभामदोषयन्[5] । इत्यत्र "चित्ते वा" [ ४१ ] इति वोत् ॥ चित्तग्रहणेन प्रज्ञाया अपि ग्रहणात् ॥

गूहित[7] । इत्यत्र "गोहः स्वरे" [ ४२ ] इत्यूत् ॥

तेन्वभूवञ्जनास्तं नु पार्थदूतो वभूव यः ।
येमुं दामोदरं द्रष्टुं जग्मुर्जघ्नुर्न संशयम् ॥ २६ ॥

२६. येमुं दूतं[8] दामोदरं दामोदराख्यं द्रष्टुं जग्मुस्ते जना यः

---

१ ए °प्यदूष°.

---

१ बी °जिघ्रिप°. २ सी डी जिघ्रिते°. ३ ए सी डी °प्यदूष°. ४ ए °वैस्तौर्ग°. सी डी °यैर्ग°. ५ ए वदोषो. ६ ए °मदो°. ७ ए गोहेः स्व°. ८ सी दूवतं°.

पार्थदूतो युधिष्ठिरसंदेशहारको बभूव तं नु दामोदरं विष्णुमिवान्वभूवञ्ज्ञातवन्तः । युधिष्ठिरेण हि युद्धात्पूर्वं पञ्चग्रामीप्राप्त्या संधानाय कौरवाणां पार्श्वे विष्णुर्दूतः प्रेषित आसीदिति भारतम् । तथा संशयमयं विष्णुः स्यान्न वेति संदेहं न जघ्नुर्नोपजहुर्विष्णुविषयः संशयोतिनैकट्येप्येषां न व्यपगत इत्यर्थः ॥

न यच्चख्नुर्न यज्जक्षुर्न यद् घ्नन्ति स्म किं चन ।
नारितामगमन्नेते तेन जज्ञे ममेति धीः ॥ २७ ॥

२७. यद्यस्माद्धेतोरेते सैनिकाः किं चन लताद्यपि न चख्नुर्नोत्पाटितवन्तस्तथा यद्यस्मादेते किं चन तृणाद्यपि न जक्षुर्नाभक्षयंस्तथा यद्यस्मादेते किं चन मृगाद्यपि न घ्नन्ति स्म तेन हेतुनैतेरितां शत्रुतां नागमन्नित्येवंविधा धीर्मम जज्ञे बभूव ॥

अन्वभूवन् । इत्यत्र "भुवो वः°" [ ४३ ] इत्यादिनोपान्त्यस्य-ऊत् ॥

किति । जग्मुः । जघ्नुः । जज्ञे । चख्नुः । जक्षुः ॥ ङिति । घ्नन्ति । इत्यत्र "गमहन°" [ ४४ ] इत्यादिनोपान्त्यस्य लुक् ॥ अनङीति किम् । अगमन् ॥

अनिन्दिताध्वस्तबलोग्लुंचत्कलचुरिर्मदम् ।
नेत्रोदक्तभ्रुवा भूपाञ्चितः प्रावेशयच्च तम् ॥ २८ ॥

२८. कलचुरिश्चेदीशः । कलचुरिर्हि चेदिदेशः । इति द्वास्थोक्त्यौ मदं हर्षमग्लुचत्प्राप । कीदृशोनिन्दितमकुत्सितमध्वस्तं चानिराकृतं

१ ए °ग्लुञ्चकल°. २ सी डी °रिर्मुद°.

१ ए °वास्वभू°. २ ए °विष्णुदूतः. ३ ए °ति पुराणम्. ४ ए °हं त जघ्नुनाप°. ५ बी °ष्णुर्विष°. ६ सी °त्यर्थे ॥. ७ ए चखुर्नोत्पादित°. ८ ए °तुनेते°. डी °तुनारि°. ९ बी धीर्बुद्धिर्म°. १० ए सी डी °मद ॥. ११ डी °देशेशः. १२ सी डी °क्त्या मुदं. १३ ए °त्मापः ।

बलं भीमसैन्यं येन । यद्वा भीमचमूलेशेनानिन्दितमविध्वस्तं च बलं यस्य सः । तथा कलचुरिर्भूपाञ्चितो नृपः पूजितः [१]स्वसेवकैर्नृपैरापूरितसभः सन्नित्यर्थः । नेत्राभ्या[२]मुदक्तोर्ध्वीकृता या भ्रूस्तया भ्रूसंज्ञया कृत्वा द्वास्थेन कर्त्रा तं [३]दूतं प्रावेशयच्च ॥

ध्वस्त । अग्लुचत् । इत्यत्र "नो व्यञ्जनस्य°" [ ४५ ] इत्यादिना नस्य लुक् ॥ अनुदित इति किम् । अनिन्दित ॥

नेत्रोदक्त । अत्र "अञ्चोनर्चायाम्" [ ४६ ] इति नस्य लुक् ॥ अनर्चायामिति किम् । नृ(भू)पाञ्चितः ॥

तेना[१]विकंपितेनाविलगितैः स्वैर्निषीदता ।
नाभाजि विनयो नाभञ्ज्यवष्टम्भः सजन्यशः ॥ २९ ॥

२९. तेन दूतेन विनयः प्रणामाद्युचितप्रतिपत्तिर्नाभाजि न भग्नः । [४]कीदृशो तेन । [५]अविकंपितेन संक्षोभोत्थस्तम्भादिविकाररहितेन । तथा[६]विलगितै रोगादिनानुपतप्तैः स्वैरात्मीयै[७]र्भटैः सह निषीदता चेदिसभायामुपविशता । तथा तेन यशः सजन्वभ्रन्नवष्टम्भ [८]और्जित्यं नाभञ्जि । तावानेव विनयः कृतो यावता स्वावष्टम्भो न भ्रष्ट इत्यर्थः ॥

द[२]र्शनक्रमुककर्पूरं सोथ रागी रजन्सदः ।
रजकक्षालितक्षौमचोक्ष[३]दन्तांशुरब्रवीत् ॥ ३० ॥

३०. अथ स दूतोब्रवीत् । कीदृक्सन् । रागी शृङ्गार्यत एव

---

१ सी डी °कम्पिते°. २ प °शनक्रमु°. ३ सी डी °दन्ताशु°.

---

१ प स्वसैव°. २ सी °क्तोद्वीक्°. डी °क्तोर्द्वीक्°. ३ वी °तम्र वे°. ४ वी सी डी °शः सतावि°. ५ सी °कम्पते°. डी °कम्पिते°. ६ प °गितौ रो°. ७ प °भैर्यैः स°. ८ प °व औ°.

क्रमुककर्परं पूगीफलानि कर्पूरं च दशन्भक्षयन्नत एव च सदश्वेदिसभां रजन्स्वऋद्धिविशेषे मस्पृहां कुर्वन् । तथा रजकेन क्षालितं धौतं यत्क्षौमं दुकूल तद्वच्छोक्षा निर्मला दन्तांशवो यस्य सः ॥

विलगितं. । विकम्पितेन । इत्यत्र "लङ्गि" [४७] इत्यादिना नस्य लुक् ॥

अभाजि अभञ्जि । इत्यत्र "भञ्जेर्जो वा" [४८] इति वा नस्य लुक् ॥

दशन । सजन । इत्यत्र "दशसञ्ज शवि" [४९] इति नस्य लुक् ॥

रजक । रागी । रजन् । इत्यत्र "अकद्" [५०] इत्यादिना नस्य लुक् ॥

स्यदिनो रजयन्त्येव मृगांस्तेपि त्वदाज्ञया ।
येषां रागोनवोदौघ्रकव्यस्य दशने परः ॥ ३१ ॥

३१. तेपि व्याधा अपि मद्देशे केनापि मृगा न घात्या इति त्वदाज्ञया कृत्वा स्यदिनस्त्वरावंतो मृगान् रजयन्त्येव रमयन्त्येव न तु मारयन्तीत्यर्थः । नास्त्यवोदः पाको यस्य तदनवोदमपक्वम् । उद्यत इति औणादिके मनि ओद्म पक्वम् । विशेषणकर्मधारये तद्यत्क्रव्यं मांसं तस्य दशने भक्षणे येषां पर प्रकृष्टो रागः स्पृहा । एतेन चेदराज्ञैश्वर्यातिधार्मिकत्वे उक्ते ॥

दग्धैधाभोयतैर्विन्ध्यस्त्वद्यशः प्रश्रथैस्ततैः ।
गतो हिमश्रथाद्रित्वमव्याहतमतेरपि ॥ ३२ ॥

३२. दग्धा य एधाः काष्ठानि तदाभैस्तत्सदृशः काल इत्यर्थः ।

---

१ ए °यन्त्यैव २ ए °श्रथैस्त°.

---

१ ए °शेषो म°. सी °शेषा स्पृ°. डी °शेषात्मस्पृ°. २ ए °र्वस्तथा. ३ सी दन्ताश° ४ °शवो य° ५ ए °गिन्ते. । ६ सी डी °कम्पिते° ७ ए °ञ्जेर्जा वा. ८ ए °कम् इ° ९ सी मम दे के°. डी मम देशे. १० ए °न स्वरा° ११ ए सी डी °वन्तो मृ°. १२ ए °व न. १३ ए °के ननि. १४ ए चेदरा° १५ ए °भत्तत्स°.

विन्ध्योऽव्याहतमतेरपि ज्ञानकारणेन्द्रियपाटवादप्रतिहतज्ञानस्यापि पुंसो हिमश्रथाद्रित्वं हिमेन श्रध्यते व्याप्यते हिमश्रथो हिमवान्योद्रिस्तद्भावं गतः। पट्विन्द्रियोप्येवं जानाति यदयं विन्ध्यो न किं तु हिमाद्रिरित्यर्थः। कैर्हेतुभिः। अयतैरनुपरतैस्ततैर्विस्तीर्णैस्त्वद्यशःप्रश्रथैर्भवदीयकीर्तिसन्दर्भैः॥

अक्षतेनौजसा काशिमवमत्य निहत्य च।
साध्वनैषीर्दशार्णेशमनारतवर्तिं नतिम्॥३३॥

३३. दशार्णेशं दशार्णदेशाधिपमनारता निरन्तरा वर्तिः सेवा यस्यां तां नतिं साधु यथा स्यादेवं त्वमनैषीः। किं कृत्वा। अक्षतेन केनाप्यविध्वस्तेनौजसा बलेन कृत्वा काशिं वाणारसीराजमवमत्य रणे तिरस्कृत्य निहत्य च॥

परितत्य प्रसत्येभान्प्रवत्यागत्य दूरतः।
त्वां प्रणत्याधिगम्याभूत्सुखी भद्रभटो नृपः॥३४॥

३४. भद्राः सुजात्येभा एव भटा यस्य स भद्रभट एवंनामा नृपो गजबन्धदेशस्य राजा सुख्यकुतोभयत्वात्सुखितोभूत्। किं कृत्वा। दूरतो दूरदेशादागत्य त्वामधिगम्य प्राप्य त्वां प्रणत्य नत्वा त्वां प्रवत्य सेवित्वेभान्हस्तिनः परितत्य विस्तार्य प्रसत्य दत्त्वा च॥

१ बी °तेनोज°. २ ए °शार्णेश°.

१ ए श्रध्याप्य°. २ ए °वानयोद्रि°. ३ ए विंध्यो न. ४ ए किं हि°. ५ ए °श्रद्रैर्भ°. ६ ए °शार्णेशं दशार्णेशा°. ७ ए सेव य°. ८ सी त्वमानेषीः. ९ डी त्वमाने°. ९ सी °ध्वस्तनौ°. १० डी °स्तेनोज°. ११ बी °शि वाणा°. १२ ए °त्य रेणे. १३ ए °त्यवः॥. १४ ए °जा मुखीश्वकु°. १५ सी °रंदे°. १६ बी °णम्य न°. १७ ए °वत्य से°.

नियत्येभान्नियम्याश्वानावासे तान्प्रणम्य च।
विरम्यास्त्राद्विरत्य त्वत्संयतो यन्तिराड्ययौ ॥ ३५ ॥

३५. यन्तिराड्यम्यादित्याशास्यमानो यन्ति. "तिक्कृतौ नाम्नि" [ ५-१-७१ ] इति तिक्। एवमन्येष्वपि रन्त्यादिषु। यन्तेर्यन्त्याख्यदेशस्य यन्तिनामा वा राड् राजा ययौ नष्टः। किं कृत्वेभानावासे हस्तिशालायां नियत्य बद्ध्वाश्वांश्चाश्वशालायां नियम्य बद्ध्वा गजानश्वांश्च मुक्त्वेत्यर्थः। तथा तान् गजानश्वांश्च प्रणम्य च नमोस्तु भवद्भ्य इति नमस्कृत्य चास्त्राद्विरम्य शस्त्रं मुक्त्वेत्यर्थः। त्वत्संयतो भवद्रणाद्विरत्य निवृत्य च ॥

रन्तिदेवाभ कीर्तेस्ते सत्परीतत्कलिङ्गगत्।
नन्तिर्गन्तिस्तथा हन्तिर्वन्तिर्मन्तिः सतन्तिकः ॥ ३६ ॥

३६. हे रन्तिदेवाभ महायागकरणादिभी रन्तिदेवाख्यपूर्वराजतुल्यकलिङ्गं गच्छति कलिङ्गगत्कलिङ्गदेशाधिपः सतन्तिकस्तन्त्याख्यनृपसहितो नन्तिर्गन्तिस्तथा हन्तिर्वन्तिर्मन्तिरेवंनामा नृपौघश्च ते कीर्तेः सद्दाता त्वत्कीर्तेरुत्कीर्तक इत्यर्थः। तथा परीतद्विस्तारयिता ॥

रजयन्ति मृगान्। इत्यत्र "णौ मृग°" [ ५१ ] इत्यादिना नस्य लुक् ॥

राग। इत्यत्र "घञि°" [ ५२ ] इत्यादिना नस्य लुक् ॥

स्यदिनः। अत्र "स्यदो जवे" [ ५३ ] इति स्यदो निपात्यः ॥

---

१ प °राधयौ. २ प नतिर्ग°. ३ प बी °न्ति स°.

---

१ प °तिक्. २ प °षु। यंतेर्य°. ३ प निगम्य. ४ बी बद्धान्गजा°. ५ प निच्छत्य. ६ प °लिङ्गगत्क°. ७ बी °नामनृ°. ८ डी त्वर्कीर्ते°. ९ प °र्तेसत्की. १० प °त्य वघ°.

दशन । अवोद । एध । ओद्म । प्रश्रथः । हिमश्रथ । इत्येते "दशन°" [ ५४ ] इत्यादिना निपात्याः ॥

अयतः । अनारत । नतिम् । गतः । अव्याहतमतेः । वतिम् । ततः । अक्षत । इत्यत्र "यमिरमि°" [ ५५ ] इत्यादिनान्तस्य लुक् ॥

निहत्य । अवमत्य । प्रवत्य । परितत्य । प्रसत्य । इत्यत्र "यपि" [ ५६ ] इत्यन्तस्य लुक् ॥

नियत्य नियम्य । विरत्य विरम्य । प्रणत्य प्रणम्य । आगत्य अधिगम्य । अत्र "वा मः" [ ५७ ] इत्यन्तस्य लुग्वा ॥

कलिङ्गगत् । संयतः । परीतत् । सत् । इत्यत्र "गमां क्वौ" [ ५८ ] इत्यन्तस्य लुक् ॥

यन्ति । रन्ति । नन्तिः । गन्तिः । हन्तिः । मन्तिः । वन्तिः । तन्ति । इत्यत्र "न तिकि दीर्घश्च" [ ५९ ] इति लुक् दीर्घश्च न ॥

अजातसातिरुत्खातोयोध्येशस्ते सिषासति ।
जञ्जन्यमानभक्तीनां धुरि जाजायते च सः ॥ ३७ ॥

३७. अजातासंपन्ना सातिर्दानं यस्य स पूर्वं केनाप्यगृहीतकर इत्यर्थः । अयोध्येश उत्खातस्त्वया राज्यादुत्पाटितः संस्ते तव सिषासति दण्डं दातुमिच्छति । तथा जञ्जन्यमानमतिशयेनोत्पद्यमानं यथा स्यादेवं भक्तिर्येषां तेषां भक्तिमतां धुर्यादौ सोयोध्येशो जाजायते च वोभवीति च ॥

१ सी °जादिसा°. डी °जातिसा°. २ ए च स ॥.

१ ए एधः । ओघ्रः । प्र°. २ ए °पात्यौ ॥. ३ ए °हत्यः । अवमन्त्यः । प्र°. ४ बी °त्यन्त्यस्य. ५ सी डी °यत् । प°. ६ बी सी डी °त्यन्त्यस्य. ७ ए यन्तिः । रन्तिः । न°. ८ ए सी डी नन्ति । ग°. ९ सी गन्ति । ह°. १० सी डी हन्ति । मन्ति । वन्ति । त°. ११ ए तिकिं दी°. १२ ए °तः सन्तिस्तव°. १३ ए दातुमिच्छन्ति । त°. १४ ए °नोत्पाद्य°. १५ ए °सोपयो°. १६ ए °ते वो°.

निखन्यासन्यमानः [१]प्राक्कोश उत्खाय सायते ।
प्राणान्सन्याः स्थितिं साया गौडेन [२]त्वेति जल्पता ॥३८॥

३८. गौडेन गौडदेशाधिपेन प्राक्पूर्वं निखन्य निधानीकृत्यासन्यमानोदीयमानः कोशो भाण्डागारमुत्खाय निखातादुद्धृत्य सायते तुभ्यं दीयते । किंभूतेन सता । त्वा त्वां जल्पता । कथमित्याह । हे[१] चेदे प्राणां[२]ञ्जीवितं सन्या देयाः स्थितिमवस्थानं देशं च साया इति ॥

उत्खात. । साति[३]ः । अजात । इत्यत्र "आ. खनि°" [ ६० ] इत्यादिनान्तस्यात् ॥

सिपासति । इत्यत्र "[४]सनि " [ ६१ ] इत्यन्तस्यात् ॥

उत्[५]खाय निखन्य । सायते सन्यमानः । जाजायते जञ्जन्यमान । इत्यत्र "ये न वा" [ ६२ ] इति वान्तस्यात् ॥ य इत्यकारान्तनिर्देशादिह [६]न स्यात् । सन्याः । अन्यथा यीति क्रियेत ॥ केचिदत्रापीच्छन्ति । [७]साया. ॥

तन्यतेर्[८]जुनवंशश्रीर्[९]यशोऽ[३]ब्धिघ्वाव तायते ।
सातेः सन्तेः सतेश्चाग्रेगान्ना[४] खान्ना द्विषां त्वया ॥ ३९ ॥

३९. [८]सहस्राजुनवंशोत्पन्नत्वात्त्वयार्जुनवंशश्रीः स[९]हस्राजुनान्वयलक्ष्मीस्तन्यते विस्तार्यते । यतो द्विषां खान्नोन्मूलकेन तथा सातेः सन्तेः सतेश्चैवंनामराजविशेषेभ्योग्रेगान्ना स्वामित्वादग्रेसरेण । अत एवाब्धिषु घो[१०]णते भ्राम्यत्यब्धिघ्वाव यशस्ताय[११]ते विस्तार्यते ॥

---

१ ए सी पाक्रोश. २ वी न त्विति. ३ ए °ब्धिष्वाव. ४ अत्र "कवर्गैकस्वरवति" [ २-३-७६ ] इति णत्वेन भाव्यमिति भाति ।

---

१ ए हे वेत प्रा°. २ ए °णाच्छीवि°. ३ ए सी डी °ति । अ°. ४ ए समि १°. ५ ए °त्खाया निखन्य । स्पेयतो । मन्य°. ६ सी न । सन्यः । अ°. ७ ए सी साया ॥. ८ ए °हश्रार्जु°. ९ सी डी ई °हश्रार्जु°. १० ए °ब्धिश्रावयवश°. ११ सी °ते ॥ ता°.

तायते तन्यते । अत्र "तनः क्ये" [ ६३ ] इत्यन्तस्यात्वं[3] ॥

सतेः । सातेः । सन्तेः । इत्यत्र "तौ सनस्तिकि" [ ६४ ] इति लुगात्वौ वा ॥

खाम्रा । अग्रेगाम्रा । ध्वाव । इत्यत्र "वन्याङ् पञ्चमस्य" [ ६५ ] इत्यात् ॥

तं[1] नृपापं[2]चितिह्लन्नं श्रीभीमो ह्लन्नवानिति ।
त्वामाह किमरिर्मित्रं वासि मे ह्लत्तिकृद्द्विधा ॥ ४० ॥

४०. तद्यस्मात्त्वं पूर्वोक्तनीत्या राजाधिराजस्तस्माद्धेतोर्नृपाणामपचितिः पूजा तया ह्लन्नं प्रमुदितं त्वां श्रीभीमो ह्लन्नवान्प्रमुदितः सन्नित्येवमाह । यथासि त्वं मे किमरिर्मित्रं वा द्विधा शत्रुत्वमित्रत्वरूपाभ्यां[2] द्वाभ्यामपि प्रकाराभ्यां त्वं मे ह्लत्तिकृदाह्लादक इति ॥

अपचिति । इत्यत्र "अपाद्°" [ ६६ ] इत्यादिना चिः ॥

ह्लन्नम्[3] । ह्लन्नवान् । ह्लत्ति । इत्यत्र "ह्लाद्°" [ ६७ ] इत्यादिना ह्लद् ॥

वितीर्णवानथ नयानुत्तीर्णं लूनसंशयम् ।
कर्णः कर्णावतीर्णिर्नु[3] यशोलीन इदं वचः ॥ ४१ ॥

४१. अथैवं दूतोक्त्यनन्तरं कर्णः कर्णाख्यश्चेदीशो नयानुत्तीर्णं न्यायादनपेतं[4] लूनसंशयं छिन्नसंदेहमिदं वक्ष्यमाणं वचो वितीर्णवान्ददौ । कीदृक् । यशोलीनो दानविक्रमोत्थकीर्त्याश्लिष्टोत एव कर्णावतीर्णिर्नु राधेयावतार इव ॥

अलूनिः सोमवंशः श्रीकृं[4]तलीनिर्जयत्यसौ ।
अधोलीनवतां तापं लूनवान्[5]पूर्तिपावनः ॥ ४२ ॥

४२. असौ सोमवंशश्चन्द्रान्वयो जयति । कीदृक् । असती लूनि-

१ सी तस्त्व नृ°. २ डी °पचति°. ३ ई °र्नुयशो°. ४ डी °कृताली°. ५ ए °वात्पूर्ति°.

१ ए °दा ॥ सेतेः. २ सी °भ्यां त्व. ३ ए ई ह्लन्नः । ह°. ४ ए °त नून.

विच्छेदो यस्य सोल्लूनिः सदा संततस्तथा श्रिया राज्यादिलक्ष्म्या कृता लीनिराश्रयणं यस्य सः। तथा[1] पूर्या लोकरक्षया पावनः[2] पवित्रोत एवाधोलीनवतां शरणार्थमध[3] आश्रितानां तापं खेदं लूनवान्। योपि वंशोल्लूनिरच्छिन्नः स्यात्सोपि[4] श्रिया पत्रलम्बौन्नत्यादिलक्ष्म्या[5] कृतलीनिरत एवाधोलीनवतां तापं लूनवान्पूर्या[6] नभोव्याप्त्या[7] पावनश्च स्यात्॥

पूर्णिक्षमबलैः पूर्तः पूर्तवान्क्ष्मां पुरूरवाः।
यशोभिः पूर्णवानाशास्तत्र पूर्णेन्दुनिर्मलैः॥ ४३॥

४३. तत्र सोमवंशे पुरूरवाः क्ष्मां पूर्तवानपालयत्। कीदृक्सन्। पूर्णौ पूँरणे व्याप्तौ पालने वा क्षमाणि समर्थानि यानि बलानि सैन्यानि तैः[8] पूर्तः परिपूर्णः। शिष्टं स्पष्टम्॥

भयं छिन्नेन्द्रशक्तेर्द्योर्नघुषश्छिन्नवानिह[1]।
मूर्तो नु तेजसां राशिः क्षात्रो धर्मो नु मूर्तवान्॥ ४४॥

४४. इह सोमवंशे नघुषो[9] नाम नृपो द्योः[10] स्वर्गस्य भयं निर्नाथत्वजां भीतिं[11] छिन्नवानिन्द्रीभूयापर्जेह्वे[12][13]। कीदृश्याः। छिन्ना वृत्रदैत्यस्य मित्रीकृतस्य विश्वस्तस्य पृष्ठलग्नया[14] हत्यया[15]च्छेदितेन्द्रस्य[16] शक्तिः प्रभुत्वं यस्यां तस्याः। यतः कीदृक्। मूर्तस्तेजसां राशिर्नु तथा मूर्तवान्क्षात्रो

---

१ ए °शक्तर्योनर्घुष°

---

१ सी °था मर्त्या. २ बी °वन प°. ३ सी डी °रर्णार्थ°. ४ ए °स्याशोपि. ५ डी °लम्बौन्न°. ६ ए °वान् पा°. ७ सी पूणव्या°. डी पूर्णव्या°. ८ ए तैम्पर्तः. सी डी तैः प°. ९ All Mss. write this name as नघुष here while they write it as नहुष in the sixth canto. १० ई द्योः सर्ग°. ११ ए भीति छि°. १२ ए °निद्रीभू°. १३ सी डी °जह्रे। की°. १४ ए °प्रवाह°. १५ सी डी °त्यया छेदि°. १६ ए °योच्छादि°.

धर्मो नु । अत्यन्तं प्रतापी विक्रान्तश्चेत्यर्थः ॥ अयं च नघुषवृत्तान्तः षष्ठे सर्गे पञ्चत्रिंशे वृत्ते प्रागेवोक्त एव ॥

रणाप्रमत्तान्दुर्मत्तवतः सूनानयानिह ।
अदूनो दूनवान्दैत्यान्भरतः सूनवान्यशः ॥ ४५ ॥

४५. इह सोमवंशे भरतो नाम नृपोदूनोनुपतप्तः सन्दैत्यान्दूनवानघानेत्यर्थः । किंभूतान् । रणाप्रमत्तान्संग्रामे सोद्यमान्दुर्मत्तवतो दुष्टमदानत एव सूनानयाञ्जनितान्यायानत एव यशः सूनवानुत्पादितवान् ॥

अनिद्राणवतः शत्रूननिद्राणोत्र वृक्णवान् ।
वृक्णपापो ध्यातधर्मः ख्यातः पूतो युधिष्ठिरः ॥ ४६ ॥

४६. स्पष्टः ॥

पूनावाग्नूनयज्ञाग्नेः समक्नाविन्द्रतक्षकौ ।
पात्रोदक्ताहुतेर्यस्मादभूत्पारीक्षितोत्र सः ॥ ४७ ॥

४७. अत्र सोमवंशे परीक्षितः परीक्षितेर्वापत्यं पारीक्षितोर्जुनप्रपौत्रो जनमेजयो नाम राजाभूत् । यस्मात्पारीक्षितात्सकाशान्मृत्युभयेनेन्द्रतक्षकौ समक्नौ मिलितौ सन्तौ पूनौ नष्टौ । यत आग्नूनः सर्पकुलकोटिभक्षकत्वेनौदरिको यज्ञाग्निर्योगवह्निर्यस्य तस्मात्तथा पात्रादाहुतिभाजनात्स्रुच उदक्तोद्धृताहुतीकार्षिप्रार्थनयोत्तारितेत्यर्थः । आहु-

१ डी °त्तान्दूर्म°. २ ए °मंतव° ई °मंत्तंव°. ३ ए °क्णमापो ध्यायत°. ४ ए सी पूतावा°. ५ ए °ज्ञाग्नेः स°.

१ सी °घमनान्दु°. २ बी सी डी °यो रा°. ३ ए °मक्नो मि°. सी डी °मक्ने मि°. ४ सी पादक्त°.

तिरिन्द्रतक्षकरूपं हव्यं येन तस्मात् ॥ किल जनमेजयस्तक्षकाहि-[1] दशेन पितरि मृते[2] सर्पेषु क्रुद्धः सर्पहोतव्य याग प्रकृतवास्तत्र[3] च यागे याचकस्येच्छाया[4] पूरितायामेवाहुतिरग्नौ क्षिप्यत इति विधिः । इतश्चर्त्विग्भि[5]. केपुचित्सर्पेषु हुतेषु[6] तक्षको भीत[7] इन्द्र शरणीचक्रे तज्ज्ञात्वातिकुपितेन जनमेजयेन सेन्द्रस्यापि तक्षकस्याह्वनायादिष्टा यायजूका यावन्मन्त्रैराकृष्य तक्षकेन्द्रावाहुतिस्रुचि न्यवेशयस्तावदास्तीकर्षिर्यज्ञवाटकाद्बहिरर्थी सन्वेदं जगौ तं श्रुत्वा जनमेजयः प्राह । यदसौ मुनिर्याचते तद्दत्त्वाहुतिरग्नौ क्षिप्यता ततस्त्व कि याचस[8] इत्युक्तोसौ मुनिराह । या काचिदधुनाहुतिरग्नौ होतुमारब्धास्ति सैव मह्यं दीयतामिति निर्बन्धात्तेनोक्ते यदा यज्ञाग्नित. साहुतिरुत्तारिता तदा तदाजातमिवात्मान मन्यमानौ[9] तौ झगिति पलायिताविति पुराणविदः ॥

क्षीणद्यूतास्तथेहान्येप्यसिनग्रासतेजसः ।

अद्याप्यक्षीणवन्तो[1] नु यशोभिः क्षितवर्जितैः ॥ ४८ ॥

४८. तथेह सोमवंशेन्येपि नृपा. क्षितवर्जितैरक्षय्यैर्यशोभिः कृत्वाद्यापि संप्रत्यप्यक्षीणवन्तो[10] न्वक्षया इव जीवन्तीवेत्यर्थः । यतः कीदृशा । क्षीणद्यूता अपगतदुरोदरव्यसनास्तथा[11] सीयते स्म सिनो बद्धो ग्रासोन्यनृपतेजोभिर्ग्रसनं यस्य तत्सिनग्रासं न तथासिनग्राससमग्रस्तं[12] तेजः प्रतापो येषा ते ॥

---

१ ए °न्तोत्थय°.

---

१ ए °हिदशे°. २ बी मृत स°. ३ सी डी °त्र या°. ४ ए °कस्मेच्छा°. ५ ए °श्चत्रिभिः के°. ६ सी डी °पु हते° ७ ए °क्षका भी° ८ डी °स्त्व कि या° ९ ई °नौ झ°. १० सी डी °वन्त एवे°. ११ ए °रस्यस°. १२ ए तथाः सि°.

अवतीर्णिः[1] । अनुत्तीर्णम् । वितीर्णवान् । अलूनिः[2] । लून[3] । लूनवान् । लीनिः । लीनः[4] । लीनवताम् । अत्र[5] "ऋल्वादेः०" [ ६८ ] इत्यादिना तस्य नः ॥ अत्र इति किम् । पूर्ति[6] । पूर्णीत्यपि कश्चित् । पूर्तः । पूर्तवान् ॥

पूरै[7] । पूर्ण[8] । पूर्णवान् । छिन्न[9] । छिन्नवान् । इत्यत्र "रदाद्०" [ ६९ ] इत्यादिना नः ॥ अमूर्छमदः[10] इति किम् । मूर्तः[11] । मूर्तवान् । अप्रमत्तान् । दुर्मत्तवतः ॥

सूनः(न) । सूनवान् । अदून्[12] (नः) । दूनवान् । वृक्ण[13] । वृक्णवान् । इत्यत्र "सूयति०" [ ७० ] इत्यादिना नः ॥

अनिर्द्राणः[14] । अनिद्राणवतः[15] । अत्र "व्यञ्जन०" [ ७१ ] इत्यादिना नः ॥ अख्याध्य इति किम् । ख्यातः[16] । ध्यात[17] ॥

पूनौ । आधून[18] । संमक्तौ[19] । इत्यत्र "पूदिवि०" [ ७२ ] इत्यादिना नः ॥ नाशा[20]द्यूतानपादान इति किम् । पूतः । द्यूताः[21] । पात्रोदक्ता[22] ॥

असिनग्रास । इत्यत्र "सेर्ग्रासे०"[23] [ ७३ ] इत्यादिना नः ॥

क्षीण । अक्षीणवन्तः । अत्र "क्षेः क्षी०" [७४] इत्यादिना नः क्षी-आदे[24]शश्च । अध्यार्थ इति किम् । क्षित । भावेत्र क्तः । ध्यणर्थश्च भावकर्मणी ॥

---

१ सी °तीर्णि । अ°. २ ई °लूनि । लू°. ३ बी सी डी लून. । लू°. ४ ए लीनिः । ली°. ५ ए °त्र ऋल्वा°. ६ सी पूर्ति पूर्त°. डी पूर्तिः । पू°. ७ ए पूरौ । पू°. ८ ए सी डी पूर्णः । पू°. ९ ए छिन्ना । छि°. सी डी छिन्नः । छि°. १० ए °दरिति°. ११ बी मूर्त । मू°. १२ बी °दूनः । अदू° सी डी °दून । अदू°. १२ सी डी वृक्णः । वृ°. १४ ए ई °द्राण । अ°. १५ सी डी °वत । अ°. १६ ए स्यातन् । ध्या°. १७ सी डी ध्यातः ॥ पू°. १८ ए °धून् । स°. बी °धूनः । स°. १९ ए सी °मक्तौ । इ°. २० डी °धूनान°. २१ बी डी धूता । पा°. २२ बी सी डी °दक्त ॥ अ°. २३ बी सेर्ग्रसे. २४ बी क्षीयादे°.

अन्यून एभ्यः पूर्वेभ्यो भीमो जयति संप्रति ।
यत्र न क्षितकः कोपि क्षीणकः केवलं कलिः ॥ ४९ ॥

४९. संप्रत्येभ्यः पूर्वेभ्यं पूर्वजेभ्य. पुरूरवआदिभ्योन्यूनोहीनो भीमो जयति । यत्र भीमे सति सर्वस्य सुखितत्वान्न कोपि क्षितकः परपराभवादिना दीनः केवलं परं कलिः कलिकालः क्षीणको धर्मोदयाद्दीनः ॥

मैत्री हि सहजा सद्भिः सतामित्यावयोरिमाम् ।
अन्यथा ख्यापयन्कोस्तु क्षितायुः क्षीणसंततिः ॥ ५० ॥

५०. हि स्फुटं सतां साधूनां सद्भि सह सहजा स्वाभाविकी मैत्रीति हेतोरावयोः सतोरिमां मैत्रीमन्यथामैत्रीप्रकारेण ख्यापयन्कः क्षीणायुः क्षीणतसंततिः क्षीणसन्तानश्चास्तु । अकृत्रिममैत्रीपवित्रयोरावयोरमैत्रीं मुमूर्षुरेव वक्तीत्यर्थः ॥

क्षीणं यद्वा स्वयं तेन किं हि तस्य क्षितेन नः ।
त्वं श्लाघाहीण नः पुण्यैर्कृतं स्वाम्यनृणागतः ॥ ५१ ॥

५१. यद्वा तेनावयोर्मैत्रीमन्यथा ख्यापयता नगेण स्वयं क्षीणं महालीकोक्तिरूपतीव्रपापपातादात्मनैव क्षयं गतम् । ततश्च हि स्फुटं तस्य स्वय क्षीणस्य क्षितेन क्षयेण नोस्माकं कि न किंचित्तत्क्षयस्य मृतमारणतुल्यत्वात्तस्मात्तद्वार्तामपि वयं न कुर्म इत्यर्थः । अथात्मानुगतमेव तात्पर्यमाह । हे श्लाघाह्रीण महापुरुषत्वात्प्रशंसया लज्जित तथा

---

१ बी सहजामि°. ए सत्यमि°  २ ए बी ई °ण्यै कृत°.

---

१ बी सी डी °भ्य. पु°. २ ए °तकोप°. ३ ए दीनो के°. ४ ए °लि का°. सी °लिकालक्षी°. ५ बी हि स्फट. ६ सी डी °हजा. ७ ई °त्रीहि हे°. ८ ए °यक्षः क्षी°. ९ ए बी ई °यु क्षितस°. १० सी °मूर्खरे°. डी °मूर्खुरे°. ११ ए °यं तेन हितस्य. १२ सी डी °स्माद्वा°.

ऋतं सत्यं यथा स्यादेवं स्वाम्यनृण स्वामिनो भीमस्य सर्वकार्यसंपादकत्वादनृण जीविकोपयोगरूपैऋणवार्जित दामोदर त्वं नोस्माकं पुण्यैरागतः । अर्थादत्र ॥

इति प्रश्नान्न किं ह्रीतो भीमस्त्वं ह्रीतवान्न वा ।
ह्रीणवानस्मि सौहार्दाघ्रात आघ्राणसत्पथ ॥ ५२ ॥

५२. हे आघ्राणसत्पथाङ्गीकृतसाधुमार्गेति प्रश्नात्किमरिर्मित्रं वेति पृच्छया किं भीमो न ह्रीतो न लज्जितो वाथ वा त्वं न ह्रीतवानस्म्यहं पुनः सौहार्दाघ्रातो मैत्र्या सामस्त्येन वशीकृतः सन्निति प्रश्नाद् ह्रीणवान् ॥

घ्रातमघ्राणमप्यत्र भीमोत्रैतीति मे मनः ।
अत्राणोत्कण्ठया नुन्नं नुत्तमत्रातया मुदा ॥ ५३ ॥

५३. मे मनोघ्राणमपि को मामभिषेणयतीति चिन्तयातृप्तमप्यनिर्वृतमपीत्यर्थः । अत्र देशे भीम एतीति हेतोरद्य त्वदागमकाले घ्रातं निर्वृतमत एवात्राणारक्षिता निरर्गला योत्कण्ठा भीमाभिगमेच्छा तया नुन्नं प्रेरितं तथात्रातया मुदा नुत्तम् ॥

अवित्तमभियाम्यद्योन्नगण्डोत्तकररिभैः ।
राज्ञा रेवा न लङ्घ्येति लोकवित्नं तु विघ्नकृत् ॥ ५४ ॥

५४. इभैः कृत्वाद्यावित्तमविचारितं निःशङ्कमित्यर्थः । अभियामि

१ बी °मोत्रेती°. २ बी °वित्त नु वि°.

१ बी °गक°. २ ए °परण°. ३ ए पुस्तके 'दूतस्य नाम' इति टिप्पणी समासे वर्तते. ४ ए सी °रिमित्र°. ५ ई त्व किं न. ६ ए सौहार्दा°. ७ बी सी डी ५३ म°. ८ बी °वृत्तम°. ९ बी °धत्वादा°. १० बी °रक्षतानिनिर°. ११ बी सी डी °गमनेच्छा. १२ ई °न्न त°. १३ ए °दा नुत्त°. १४ ए कृताद्या°.

भीमाभिमुखं गच्छामि । किंभूतैरुन्नौ मदक्लिन्नौ गण्डौ येषां ते य उत्तकरा मदक्लिन्नशुण्डादण्डा जात्यगजानां हि करा अपि मदं क्षरन्ति तैः । तु पर गङ्गा कर्णेन रेवा रेवाख्या नदी न लङ्घ्या विग्रहेतुत्वान्नातिक्रम्येत्येवंविधं लोकविन्न नैमित्तिकादिलोकविचारितं विघ्नकृद्भीमाभिगमनान्तरायकारि ॥

ओक्रोशे । क्षीणसंततिः क्षितायु. ॥ दैन्ये । क्षीणक क्षितक । अत्र "वाक्रोशदैन्ये" [ ७५ ] इति वा न ॥ अध्यार्थ इत्येव । किं तस्य क्षितेन ॥ कश्चित्तु भावेपि विकल्पमिच्छति । क्षीण तेन कि तस्य क्षितेन ॥

अनृण । ऋतम् । ह्रीण ह्रीणवान् । ह्रीन ह्रीतवान् । आघ्राण आघ्रातः । अघ्राणं घ्रातम् । अत्राण अत्रातया । उन्न उत्तं । नुन्न नुत्तम् । विन्नम् अवित्तम् । अत्र "ऋही°" [ ७६ ] इत्यादिना वा न ॥

गृहाणेभांस्तदद्रूनोन्यभगूनेपि कोपनान् ।
अशुष्कपक्वपूगाभानिर्वाणाक्षामतेजसः ॥ ५५ ॥

५५. तत्तस्माद्धेतोरद्रूनो यद्ययं भीमे भक्तस्तत्किं भीमं नाभियातीत्येवं मनःखेदरहितः संस्त्वमिभान्भीमस्य प्राभृतार्थं गृहाण । किंभूतान् । अशुष्कमार्द्रं पक्वं निष्पन्नं यत्पूग पूगीफलं तदाभमतिरिक्तम-

१ ए डी °नात् ।

१ डी उत्तक°. २ ए °क्लिन्न शु°. ३ ए °दहा जा° ४ ए °त्यराजा°. ५ डी हि म° ६ सी डी °वाख्या ७ ए रेवख्या ८ ई °तिक्राम्ये°. ९ ए °क्रोशे । क्षी° १० ए °ति पक्षि°. ११ ए क्षि-क १२ ए ई °च्छन्ति । क्षी°. १३ सी डी °नृण ऋ°. १४ डी °त । ह्री° १५ सी डी ह्रीण ह्री°. १६ डी घ्राण आघ्रात । अ°. १७ डी °त्राण अ°. १८ डी उत्त । नु°. १९ ए °त्त । नुन्न नुत्तं. २० डी नुत्त । नुत्तं । वि°. २१ ए °रनूनो २२ ए निष्कन्न. सी निष्फन्न. २३ ए °रस्कम°.

निर्व्राणमक्षीणमक्षाममकृशं तेजः प्रतापो येषां[1] तानत[2] एवान्येभगूनेपी-
वग्गजपुरीषेपि[3] कोपनानसहनान् ॥

वातनिर्वातगमनान्वातनिर्वाणजिद्रयान् ।
उल्लाघानकृशान्क्षीबान्नयाश्वान्फुल्लपद्मभान् ॥ ५६ ॥

५६. अश्वान्नय भीमपार्श्वे प्रापय । कीदृशान् । वा तस्य कर्तुर्ये[4]-
न्निर्वातं निरुपहत गमनं[5] तद्वद्गमनं[6] येषां तान् । तथा वातस्य यन्नि-
र्वाणं गमनं तज्जिद्रयो वेगो येषां तान्कांश्चिद्वातवच्छीघ्रगान्कांश्चि
वातादप्यतिशीघ्रगानित्यर्थः । तथो[7]ल्लाघान्नीरोगांस्तथाकृशा[8]न्पीनांस्तथा
क्षीबान्मत्तांस्तथा फुल्लपद्मभान्विकसितपद्मवत्सश्रीकान्[9] ॥

संफुल्लकीर्ति[1] भोजस्य स्वर्णमण्डपिका[2]मिमाम्[3] ।
श्रीवासोत्फुल्लपद्माभां हरापरिकृशश्रियम् ॥ ५७ ॥

५७. इमां[10] प्रत्यक्षां स्वर्णमण्डपिकां हर नय[11] । कीदृशीम् । श्रियो
लक्ष्म्या वासोवस्थानं यत्र तच्छ्रीवासमुत्फुल्लं स्मेरं यत्पद्मं तदा-
भामत एवापरिकृशश्रियं स्फीतशोभाम् । तथा भोजस्य मालवाधि-
पभोजराजस्य संफुल्लकीर्तिं[12] विस्मेरां कीर्तिमिव तत्कारितत्वात्[13][14] । कर्णेन
हि भोजराजं जित्वा तन्मण्डपिकेयमानीतासीदिति ॥

१ ए सी °कीर्तिभो°. २ बी °कामिमा°. ३ ए °मिनाम्.

१ ए °षां तानवमवा°. २ ई तानेवा°. ३ सी डी °पेति को°. ४ ए °ना--॥. ५ ई °न ये°. ६ ए तद्ग°. ७ ए तथोला°. ८ ए °शान्नीना°. ९ ए °न् ॥ सफु°. १० ए इम प्र°. ११ ए नर । की°. १२ ए सी °कीर्तिवि°. ई °कीर्ति°. १३ बी °रित्वा°. १४. ए °त् । कीर्णे°.

उग्रैश्च नाययोल्लाघवद्भिः प्रक्षीवितेतरैः ।
मेरुभित्ततया वित्तं स्वर्णवित्तमुपायनम् ॥ ५८ ॥

५८. जात्यत्वाद्वृंहीयस्त्वाच्च मेरुभित्ततया मेरोः खण्डमिदमिति मेरुशकलत्वेन वित्तं ख्यातं स्वर्णवित्तं स्वर्णरूपं धनमुपायनं च भीमार्थं ढौकनिकां चौड्रै कर्तृभिर्नायय । किंभूतैः । उल्लाघवद्भिर्नीरोगैस्तथा प्रक्षीवितेतरैः प्रक्षीविता इव मत्ता इवोत्कूर्दकत्वात् प्रक्षीविता अदान्तास्तेभ्य इतरैर्दान्तैः ॥

अदूनः । गून । इत्यत्र "दुगोरू च" [ ७७ ] इति न ऊश्च ॥

अक्षाम । अशुष्क । पक्क । इत्यत्र "क्षैशुषि°" [ ७८ ] इत्यादिना मकवाः ॥

निर्वाण । इति "निर्वाणमवाते" [ ७९ ] इति निपात्यम् ॥ अवात इति किम् । वातनिर्वात ॥ केचिद् वातनिर्वाण इतीच्छन्ति ॥

क्षीबान् । उल्लाघान् । कृशान् । परिकृश । फुल्ल । उत्फुल्ल । संफुल्ल । इत्येते "अनुपसर्गा°" [ ८० ] इत्यादिना क्तान्ता निपात्याः ॥ क्तवत्यपि केचित् । उल्लाघवद्भिः ॥ अनुपसर्गा इति किम् । प्रक्षीबित ॥

भित्त । इत्येतत् "भित्तं शकलम्" [ ८१ ] इति निपात्यम् । स्वर्णवित्तम् । वित्तम् । इत्येतौ "वित्तम्°" [ ८२ ] इत्यादिना निपात्यौ ॥

एतज्जुहुधि भीमस्य मित्रं मां विद्धि शाधि च ।
जहि शङ्कामेधि सज्जो निश्चिनु व्रज राध्नुहि ॥ ५९ ॥

५९. एतद्रजाद्युपायनं भीमस्य जुहुधि देहि । तथा मित्रं विद्धि

---

१ डी °रुवित्त°. २ सी वित्त°. ३ प °यन् ॥. ४ प °ञ्जुहोधि. ५ प °हि सङ्का°. ६ प राध्नहि.

---

१ प °त्वाद्वंदीय°. डी °त्वाद्वही°. २ प °का चौड्रै.. ३ सी °ताखे°. ४ प सी °गोरुच. ५ सी डी °ति तस्य न. ६ प नकश्च. ७ प °शुषीद्धि°. ८ सी डी °वा १°. ९ प °कृशान् । फु°. १० सी डी °म् । एतौ.

जानीहि शाधि च मां मित्रं भीमस्य कथयेत्यर्थः । तथा शङ्कां जहि त्यज । तथा सज्जः प्रस्थानप्रगुण एधि भव । तथा निश्चिन्वयमस्माकं मित्रमेवेति निर्णय । तथा व्रज गच्छ । तथा राध्नुहि मत्कृते भीममाराधय ॥

जुहुधि । विद्धि । इत्यत्र "हुधुट्रो हेर्धिः" [ ८३ ] इति धिः ॥

शाधि । एधि । जहि । इत्येते "शासस्°" [ ८४ ] इत्यादिना निपात्याः ॥

व्रज । इत्यत्र "अत°" [ ८५ ] इत्यादिना हेर्लुक् ॥

निश्चिनु । इत्यत्र "असंयोगादोः" [ ८६ ] इति हेर्लुक् । असंयोगादित्यो-विशेषणादिह न स्यात् । राध्नुहि ॥

यथावां तनुवः प्रीतिं तन्वोर्थान्कुर्व आर्जवम् ।
तन्मः क्ष्मां तनुमो मां शं कुर्मः कुर्यास्तथाद्य नः ॥ ६० ॥

६०. तथा तं प्रकारं नोस्माकं भीमस्य मम चाद्य कुर्या यथावां प्रीतिं तनुवः कुर्वोर्थान्कार्याणि तन्व आर्जवमकौटिल्यं कुर्वः क्ष्मां तन्मः शत्रुजयेन विस्तारयामो मां लक्ष्मीं तनुमः शं सुखं कुर्मः ॥

"अविशेषणे द्वौ चास्मदः" [ २.२.१२२ ] इत्यस्मदो बहुत्वे तन्म इत्यादिषु बहुवचनम् ॥

---

१ ए °न्वोर्थान्कु°. २ ए °न्मः क्ष्मा त°. ३ सी डी कुर्म कु°. ४ ए °थाद्य नः.

---

१ डी जानाहि. २ वी °धि मा. ३ ए ई °थ्य । श°. ४ सी शङ्कामद्वि-षयामरित्वाशङ्काज°. ५ वी °ङ्का मद्विषयामरित्वाशङ्का ज°. ६ ई °त्रमिवे°. ७ सी °श्च प्र°. ८ ए सी डी °र्थान्कार्यां°. ९ ए °र्वं. क्ष्मा त°. १० ए °नुम च. ११ डी °स्मदोब°.

तत्तनोमि करोमीति व्याकुर्वन्नाहृतोपदः ।
दामोदरोकरोद्यानं रुन्धन्क्ष्मां सत्तुरंगमैः ॥ ६१ ॥

६१. दामोदरो यानमकरोत्[1] । कीदृक्सन । यदुक्तं त्वया तत्तनोमि विस्तारयामि[2] करोमि विदधामीति व्याकुर्वन्कथयंस्तथाहृतोपदो गृहीतप्राभृतः । तथा सत्तुरंगमैर्जात्याश्वैः क्ष्मां रुन्धन्नावृण्वन् ॥

तन्वः तनुवः ।[3] तन्मः तनुम । अत्र "वम्यविति वा" [ ८७ ] इति[4]-ओर्वा लुक् ॥ अवीति[5] किम् । तनोमि ॥

कुर्याः । कुर्वः[6] । कुर्मः । अत्र "कृगो यि च" [ ८८ ] इत्योर्लुक् ॥ अवितीत्यवे । करोमि ॥

व्याकुर्वन् । अत्र "अतः शित्युत्" [ ८९ ] इत्यस्योत्[7] ॥ उकारनिमित्तत्वेनाकारविज्ञानात्कुर्या इत्यादावुकारलोपेपि स्यात् ॥ अवितीत्येव । अकरोत् ॥

रुन्धन् । सत् । इत्यत्र "श्नास्त्योर्लुक्"[8] [ ९० ] इत्यस्य लुक्[9] ॥

अद्विषुर्नोपभीमं तं मत्रिणोन्येपि नाद्विषन् ।
किं त्वभ्ययुरयान्हर्षमकार्षुः[1] प्रत्युत स्तुतिम् ॥ ६२ ॥

६२. उपभीमं भीमसमीपे वर्तमाना मन्त्रिणस्तं दामोदरं नाद्विषुर्भीममस्मांश्चानापृच्छ्यैवानेनात्मबुद्ध्येदं[10] कुसंधानं कृतमिति प्रकारेण न द्वेषं चक्रुस्तथान्येपि सामन्तादयोपि नाद्विषन्किं तु[11] तमभ्ययुरभिमुखं गतास्तथा किं तु हर्षमयान्प्रापुस्तथा[12] प्रत्युत स्तुतिमकार्षुः ॥

---

१ सी डी °मकर्षुः.

---

१ डी °त् । य°. २ सी °मि वि°. ३ ए तन्वः त°. ४ ए °ति ओर्वा. ५ बी सी डी अवितीति. ६ ए कुर्मः । अ°. ७ ए °स्योत ॥ उ°. ८ ए श्नात्योर्लु°. ९ ए लुग् ॥. १० ए °त्मबुद्धेद. ११ ई °न्कि त्वत°. १२ बी °था कि प्र°. सी °था किंपु प्र°. डी °था किं तु प्र°.

भीममेवाविदुर्भीममविदन्वा विडौजसम् ।
कृतार्थमागतं पौरा अन्वभूवंश्च मङ्गलम् ॥ ६३ ॥

६३. कृतार्थं कृतकार्यमागतं पत्तनसमीप आयातं भीमं पौरा भीममेव पाण्डवमेवाविदुर्जानन्ति स्म विडौजसं [2] वेन्द्रं [3] वाविदस्तथा मङ्गलं [5] प्रावेशिकं नगरशोभादिमङ्गलकर्मान्वभूवंश्च [6] [7] समवेदयंश्च चक्रुश्चेत्यर्थः ॥

अद्विषुः अद्विषन् । अभ्ययुः अर्यान् । इत्यत्र "वा द्विष" [ ९१ ] इत्यादिनानो वा पुस् ॥

अकार्षुः । अविदुः । अत्र "सिज्विदोभुवः" [ ९२ ] इति पुस् ॥ अविदन्नित्यपि कश्चित् । अभुव इति किम् । अन्वभूवन् ॥

[1] नृपागममशासुर्ये तथैभ्यो [2] जुहवुर्जनाः [3] ।
नादरिद्रुर्यथाजक्षुरचकासुरजागरुः [4] ॥ ६४ ॥

६४. ये नरा नृपागमं भीमागमनमशासुरभणन्नेभ्यो जनाः पौरास्तथा [11] जुहवुर्ददुर्यथा [12] [13] नादरिद्रुरीश्वरीवभूवुरित्यर्थः । अत एवाजक्षुर्बुभुजिरे [14] सविलासा जहसुर्वाचकासुर्दिव्यवस्त्रादिना [15] रेजुस्तथा [16] जागरुरुद्यता बभूवुः ॥

अजुहवुः [17] । अजक्षुः । अदरिद्रुः [18] । अजागरुः । अचकासुः [19] । अशासुः [20] । अत्र [21] "पुस्क" [ ९३ ] इत्यादिनानः पुस् ॥

---

१ ए नृपोग°. २ ए °भ्योजह°. ३ सी डी °जुहुवु°. ४ बी सी °जागुरः.

---

१ ई °जसमिन्द्र. २ ए °सं त्रिन्द्र. ३ सी वेन्द्रवा°. ४ ए वाविदस्त°. ५ ए °ङ्गम प्रा°. ६ ए °मांदिन्व°. ७ ए °व समवे°. ८ ए अजान् ९ ए °ति पुस्. १० डी °मम°. ११ ए °थाजह°. १२ सी डी °जुहुवु°. १३ बी °दुयथा. १४ ए °रिद्री°. १५ सी जहसु°. १६ ए °थाजोग°. १७ सी डी °जुहुवुः. १८ °रिद्रः । अ°. १९ए °कामुः । अ° २० सी अश्र. २१ ए °त्र पुस्क.

शासद्भिभ्रद्भुवं भीमो विशन्स्त्रैणान्युदैक्षत ।
दृशं ददन्ति जक्षन्ति वाचं ददति जक्षति ॥ ६५ ॥

६५. भुवं शासद्रक्षन्बिभ्रत्पोषयन्भीमो विशन्पुरे प्रविशन्सन्[१] स्त्रैणान्युदैक्षत[२] । कीदृंशि[३] । दृशं चक्षुर्ददन्ति भीमदर्शनाय भीमाभिमुखं[४] क्षिपन्ति सन्ति[५] जक्षन्ति रूपातिशयोत्थहर्षाद्धसन्ति । तथा वाचं ददति भीमरूपातिशयवर्णनायान्योन्यं वचनं वितरन्ति[६] सन्ति जक्षति[७] हर्षान्मिथो हसन्ति ॥

बिभ्रत् । शासत् । इत्यत्र "अन्तो नो लुक्" [ ९४ ] इति नस्य लुक् ॥

ददति ददन्ति । जक्षति जक्षन्ति । अत्र[८] "शौ वा" [ ९५ ] इति नस्य वा लुक् ॥

तस्यादरिद्रल्लावण्यं प्रीणत्प्रविशतस्तदा[१] ।
मिमते स्म न पौर्योपि मिमीतामितरः कथम् ॥ ६६ ॥

६६. तस्य भीमस्य तदा प्रविशतो लावण्यं सौन्दर्यं पौर्योपि वैदग्ध्येन प्रसिद्धा नागरिक्यो[९] अपि न मिमते स्म । एतावदिदमिति न परिच्छिन्दन्ति स्म । यतोदरिद्रत्प्रचुरं तथा[१०] प्रीणत्सर्वलोकान्हर्षयत्त-स्मादितरो ग्राम्यस्त्रीलोकः कथं[११][१२] मिमीताम् ॥

स प्रीणीते स दत्ते स धत्ते स च तथा श्रियम् ।
दरिद्रितः[२][३] स न यथा बिभितः स न रोदसी ॥ ६७ ॥

६७. स भीमस्तथौचित्यरूपेण तेन प्रकारेण श्रियं प्रीणीते स्म या-

---

१ ए तस्माद°. २ सी डी °रिद्रन ३ ए °द्रित स्म.

---

१ सी डी °शन्प्र° २ ए °णान्यद°. ३ ए कीदृशि. ४ ए °भिम्वख क्षिपनि म°. ५ सी डी °स विक्षि°. ६ वी °न्ति यक्ष ७ ई विरमन्ति ८ ए सी °क्षन्ति ह°. ९ ए °य सी वा. १० ए °काश्चपि. ११ ए °थात्प्रीण° १२ ए °थ तिमी°.

गादिविधौ तर्पयामास । तथा दत्ते स्म द्विजादिभ्यो ददौ धत्ते स्म भाण्डागारेधारयच्च । यथा रोदसी न दरिद्रितः स्म न दुःस्थ्यभूतां न विभितः स्म न भीते च । औचित्येन तेन यागादौ श्रियस्तर्पणे देवानां तृप्तत्वाद् द्यौरदरिद्राभूद्याचकानां च श्रियो दाने भूरदरिद्राभून् । श्रियः संग्रहे चायतौ यागभवनाद्युच्छित्तिसंभावनया द्यौर्न भीता । भूश्चायतौ दानसंभावनयानुचितदण्डपातपरचक्रोपद्रवाद्यसंभावनया च न भीतेति भावः ॥

विभीतः स्मेव वार्यग्नी यज्जहीतः स्म विप्लवम् ।
जहितः स न शान्तत्वं तस्मिञ् शासति मेदिनीम् ॥६८॥

६८. तस्मिन्भीमे मेदिनीं शासति रक्षति सति यद्यस्माद्धेतोर्वार्यग्नी विप्लवमतिवृष्टिपुरदाहाद्युपद्रवं जहीतः स्मात्यजताम् । तथा शान्तत्वं न जहितः स्म निरुपद्रवौ सदास्थातामित्यर्थः । तस्माज्ज्ञायते विभीतः स्मेव भीमाद्भीताविव भीतो ह्युक्तप्रकार एव स्यात् ॥

मिमते । अदरिद्रत् ॥ श्ना । प्रीणत् । अत्र "श्नश्चातः" [ ९६ ] इत्यातो लुक् ॥

मिमीताम् । प्रीणीते । अत्र "एषामी" [ ९७ ] इत्यादिनात ईत् ॥ अद इति किम् । दत्ते । धत्ते ॥

दरिद्रितः । अत्र "इर्दरिद्रः" [ ९८ ] इति-इः ॥

१ बी न सान्त°.

१ बी सी डी स्म च स्वभा°. २ ए न रि°. ३ डी °रिद्रतः. ४ ई विभत.. ५ ए °र्पणा दे°. सी डी °र्पणादेवा°. ६ डी चाययतो या°. ७ ए °यतो दा°. ८ ए °तो वार्य°. ९ बी °था सान्त°. १० ए °र्थः । न्तस्मा°. ११ ई तथा ज्ञाय°. १२ ए °विराभी°. १३ ए °मतो । अ°. १४ ए °त्र इंदारि°. बी °त्र इंदरि°. १५ ए बी सी ई °ति-इत् ॥.

विभितः विभीतः । अत्र "भियो न वा" [ ९९ ] इति वा-इः ॥

जेहित. जहीतः । अत्र "हाक." [ १०० ] इति वा-इ ॥

जहीहि मा कृपां युद्धं जहाहि जहिहि क्रुधम् ।
तव जह्यां न सेवामित्यूचे कैस्तं न पार्थिवः ॥ ६९ ॥

६९. कः पार्थिवस्तं नोचे । कथमित्याह । हे भीम कृपां मां जहीहि मा त्यज युद्धं जहाहि मुञ्च क्रुधं जहिहि तव सेवां न जह्यां नाहं मुञ्चेयमिति ॥

जहाहि । जहिहि । जहीहि । इत्यत्र "आ च हौ" [ १०१ ] इनि-आदितौ वा ॥

जह्याम् । अत्र "यि लुक्" [ १०२ ] इत्यन्तस्य लुक् ॥

निश्यञ्जानन्कलाः क्षेमराजोथाजायतास्य तुक् ।
जञ्जन्ति स्मैष किं धर्मो जाज्ञाति सेति यं जनः ॥ ७० ॥

७०. अथ क्षेमराजो नामास्य भीमस्य तुक्पुत्रोजायत । कीदृक् । कला धनुःकलाद्यास्तत्तच्छास्त्रावबोधेन जानंस्तथा निश्यन् ज्ञात्वापि सतताभ्यासेनोत्तेजयन्सस्फुराः कुर्वन्नित्यर्थः । यं क्षेमराजमतिधार्मिकत्वाज्जनो जाज्ञाति स्मात्यर्थं जानाति स्म । कथमित्याह । किमेष धर्मो जञ्जन्ति स्मात्यर्थं जात इति ॥

---

१ बी जहहि क्रु°. २ ए कर्त्त न. ३ ए °अत स्मै°. ४ ए °ति सोति त ज°. ५ सी डी °ति त ज°. ६ बी अन्त. 'त' समासे 'य'.

---

१ ए वा-ई: ॥ २ ए जहीत· जहितः । अ°. ३ सी डी मा जिही° ४ ई °श्च चक्रु°. ५ ई मुञ्चेय°. ६ बी जहहि । ज°. ७ ए लुकील°. ८ ए °जो मामास्य. ९ ए °त्रो जोयत. की°. १० बी ई °क्र वक्रा°. ११ ए °स्तच्छब्दास्त्रा°. १२ ई °च्छात्राव°. १३ ए °जमिति°.

निश्यन् । इत्यत्र "ओतः श्ये" [ १०३ ] इति–ओतो लुक्[1] ॥

जानन् । अजायत । इत्यत्र "जा ज्ञा°" [ १०४ ] इत्यादिना जादेशः ॥ अत्यादाविति किम् । जाज्ञाति । जज्ञन्ति ॥

पुनन्प्रीणञ्जगद्दक्षावतारोस्यापरः[1] सुतः ।
व्रीणन्भ्रीणञ्श्रियमभूत्कर्णः कीर्ति[2] व्रिणन्भ्रिणन् ॥७१॥

७१. स्पष्टः । किं[2] त्वतिधार्मिकत्वाद्दक्षावतारो दक्षस्यर्षेरवतार इवात एव जगत्पुनन्पवित्रयन्प्रीणंस्तोपयं[3]स्तथा[4] श्रियं राज्यादिलक्ष्मी व्रीणन्वरयन्भ्रीणन्पोषयन् राज्यार्ह इत्यर्थ. ॥

पुनन् । इत्यत्र "प्वादेर्ह्रस्वः" [ १०५ ] इति ह्रस्वः ॥ प्वादेरिति किम् । प्रीणन् । व्रीणन् । भ्रीणन् ॥ आगणान्तात्[5]प्वादय इत्यन्ये । वृत्करणं ल्वादिसमाप्त्यर्थं तन्मते । व्रिणन् । भ्रिणन् ॥

नाम्ना देवप्रसादो भूत्क्षेमराजस्य चात्मजः ।
गच्छति स्माद्भुतां ख्यातिं यच्छन्नर्थं य इच्छताम् ॥७२॥

७२. योपि देवस्य देवताया राज्ञो वा प्रसादः प्रसन्नता स्यात्सो-पीच्छतां याचकानामर्थं यच्छन्नद्भुतां ख्याति गच्छतीत्युक्तिः । मौ-[6]लार्थस्तु स्पष्टः ॥

गच्छति । इच्छताम् । यच्छन् । इत्यत्र "गमि" [ १०६ ] इत्यादिना छः ॥

१ ए पुणन्प्री°. २ ए सी कीर्तिं त्रि°.

१ ए ओलु°. २ ए किं स्वति°. ३ ए °न्प्रीणास्तो°. ४ ई °पयस्त°. ५ ए °न्तात्प्वाद°. ६ बी सी डी ई मौलोर्थ°.

येनाधावन्दिवे पूर्वाः शृण्वन्भीमोपि वर्त्म तत् ।
राज्यायोचे क्षेमराजं तदाज्ञा नाधिनोच्च तम् ॥ ७३ ॥

७३. येन वर्त्मना कृत्वा पूर्वाः पूर्वजा मूलराजादयो दिवे स्वर्गायाधावन्वेगेन जग्मुस्तद्वर्त्म तपश्चरणरूपं मार्गं शृण्वन्भीमोपि न केवलं पूर्वा इत्यपेरर्थः । क्षेमराजं राज्यायोचे राज्यं गृहाणेत्यूचे । तदाज्ञा राज्याङ्गीकारविषयो भीमादेशस्तं क्षेमराजं नाधिनोत्पितृवियोगकारित्वान्नाप्रीणात् । पितृमार्गमनुसरिष्यन् राज्यं नाङ्गीचकारेत्यर्थः ॥

न्याये तिष्ठन्सदाप्याज्ञामकृण्वन्नामनन्कलाः ।
कर्णोथ मूर्ध्नि जिघ्रद्भ्यां ताभ्यां राज्येभ्यपिच्यत ॥ ७४ ॥

७४. अथ मूर्ध्नि जिघ्रद्भ्यां प्रेमातिशयाच्चुम्बद्भ्यामित्यर्थः । ताभ्यां भीमक्षेमाभ्यां कर्णो राज्येभ्यपिच्यत । स कीदृग् । न्याये तिष्ठंस्तथा सदाप्याज्ञा भीमादेशमकृण्वन्नहिंसंस्तथा कला आमनन्नभ्यस्यन् ॥

असीदन्नूं शीयमानांहाः पश्यन्ब्रह्मामृतं पिबन् ।
तत्त्वे यच्छन्मनो भीमदेवो द्यामृच्छति स च ॥ ७५ ॥

७५. भीमदेवो द्यां स्वर्गमृच्छति स्म ययौ । कीदृक्सन् । तत्त्वे परमार्थे संसारानित्यत्वादौ मनो यच्छन्ददत् । तत्त्वं परिभावयन्नित्यर्थः । अत एव शीयमानांहा विशीर्यमाणाज्ञानादिमलोत एव च ब्रह्म परमज्ञानस्वरूपमात्मानं पश्यन्साक्षात्कुर्वन्नत एव चासीदन्नखिद्यमानः केवलसुखे निमज्जन्नित्यर्थः । अत एव चामृतमिव पिबन् । योपि देवः स्यात्सोप्युक्तविशेषणोपेतो द्यामृच्छतीत्युक्तिः ॥

१ डी °धिनाच्च २ सी डी °ज्येभिषि° ३ ए °न्नू शीयमामाहा.

१ ए °स्तप° ई °स्तत्तप°. २ बी सी °रूपमा°. ३ ई वल इ° ४ ए राज्यं रा°. ५ डी °प्रीणत्पितृ°. ६ ए °तिमयाथुम्ब°. ७ ई °शयचुम्ब°. ८ बी °याच्चम्बुम्या°. ९ सी डी °ज्येभिषि°. १० ए बी सी डी °भ्यसन्. ११ ए °पेता द्या.

ष्ठीवन्नश्रु धमञ्शोकाग्निं क्षेमोऽधिसरस्वति ।
अक्रामंस्तीर्थमक्रामदाचामंस्तपतां यशः ॥ ७६ ॥

७६. क्षेमः क्षेमराजोऽधिसरस्वति सरस्वतीनद्यां तीर्थं दधिस्थलीसमीपस्थं मण्डूकेश्वराख्यं पुण्यक्षेत्रमक्रामदयासीत् । कीदृक्सन् । वियोगाच्छोकाग्निं धमन्नुद्दीपयन्नत एवाश्रु ष्ठीवन्मुञ्चंस्तथातितीव्रवैराग्येणोत्कृष्टतपःकरणात्तपतां तपस्विनां यश आचामन्ग्रसमानस्तथाक्रामंस्तपसा ग्लायन् ॥

अधावन् । इत्यत्र "वेगे सर्तेर्धाव्" [ १०७ ] इति धाव् ॥

शृण्वन् । अकृण्वन् । अधिनोत् । पिबन् । जिघ्रन्त्याः । धमन् । तिष्ठन् । आमनन् । यच्छन् । पश्यन् । ऋच्छति । शीयमान । असीदन् । इत्यत्र "श्रौति कृवु०" [ १०८ ] इत्यादिना शृप्रभृत्यादेशाः ॥

अक्रामत् । इत्यत्र "क्रम०" [ १०९ ] इत्यादिना दीर्घः ॥

ष्ठीवन् । अक्रामन् । आचामन् । इत्यत्र "ष्ठिवू०" [ ११० ] इत्यादिना दीर्घः ॥

अताम्यतोऽस्य सेवार्थं ददौ कर्णोऽप्रमाद्यते ।
शाम्यते दाम्यते देवप्रसादाय दधिस्थलीम् ॥ ७७ ॥

७७. अताम्यतस्तपःकरणेनाखिद्यमानस्यास्य दधिस्थलीसमीपती-

१ ए °क्रामस्ती°. २ ए आता°. ३ डी °स्थलम्.

१ सी डी क्षेमरा°. २ बी °केश्वरा°. ३ डी °वाशुषी°. ४ सी °धापिबं°. ५ ए ई °पश्विना. ६ सी डी °न् अस°. ७ ए सी डी क्रामस्त°. ८ डी °क्रामस्तपसाग्ला°. ९ ए °धायव°. १० ए तेंधाव्. ११ ए धाव ॥ शृं°. १२ सी डी °न् । कृ°. १३ सी °त् । जि°. १४ डी °म् । ति°. १५ ए °मन् । सी °मन । य. १६ ए त्रश्रौति. १७ ए बी कृन्विला°. १८ ए °त्यादिशाः. १९ ए ष्ठिमिला°.

र्थस्थस्य क्षेमराजस्य सेवार्थं कर्णो देवप्रसादाय क्षेमराजपुत्राय दधिस्थलीं ग्रामं ददौ । यतः किंभूतायाप्रमाद्यते क्षेमराजसेवादौ सोद्यमाय तथा शाम्यत उपशान्ताय तथा दाम्यते जितेन्द्रियाय गुरुशुश्रूषाङ्कुशसहाय वा ॥

नाक्षाम्यद्भ्राम्यदश्राम्यत्सैन्यः कर्णोभिधामपि ।
द्विषतां फेननिष्ठीवनासृग्निष्ठेवने दिशन् ॥ ७८ ॥

७८. कर्णो द्विषतामभिधामपि नाक्षाम्यद्विपः समूलमुन्मूलितवानित्यर्थः । कीदृक्सन् । भ्राम्यत्सर्वासु दिक्षु प्रसरदश्राम्यदखिद्यमानं सैन्यं यस्य सोत एव द्विषतां फेननिष्ठीवनासृग्निष्ठेवने रणेत्यन्तं खेदान्मुखेन फेनोद्गमनरक्तोद्गमने दिशन्ददन् ॥

असीवनं कीर्तिपटं दिक्सेवनं नयामि ते ।
नयावश्च नयामश्चेत्यूचुस्तं के न भूभुजः ॥ ७९ ॥

७९ तं कर्णं के भूभुजो नोचुः । कथमित्याह । असीवनं सेवनरहितमस्फुटितमेकखण्डं वेत्यर्थः । ते कीर्तिपटं दिक्सेवनं दिग्भिः सह बन्धनं नयामि त्वद्यशः सर्वत्राहं विस्तारयामीत्यर्थः । आवां नयावो वयं नयामश्चेति ॥

शाम्यते । दाम्यते । अताम्यत । अश्राम्यत् । भ्राम्यत् । अक्षाम्यत् । अप्रमाद्यते । अत्र "शम्°" [ १११ ] इत्यादिना दीर्घः ॥

निष्ठीवन निष्ठेवने । असीवनम् सेवनम् । इत्यत्र "ष्ठिव्°" [ ११२ ] इत्यादिना वा दीर्घः ॥

---

१ ई नाक्ष्याम्य°

---

१ सी नाकाम्य° २ ए वी सी डी °मस्फटि°. ३ ए °त्यर्थकीस्तेकी°. ४ ए पटां दिक्सव°. ५ ए वी °त्यर्थ । आ°. ६ बी °ते । आता° ७ ए निष्टीव°.

नयामि । नयावः । नयामः । अत्र "मन्यस्याः" [ ११३ ] इत्यस्यात् ॥

भुवि संविद्रते[1] ये च दिवि संविदते[2] च ये* ।
समशेरत तेप्यस्याग्रे नैव निरचिन्वत ॥ ८० ॥

८०. ये[1] नरा भुवि संविद्रते व्याकरणतर्कधातुवादादिशास्त्राणि सम्यग्जानते ये च देवा दिवि संविदते तेप्यस्य कर्णस्याग्रे[3] समशेरत प्रज्ञातिशयादनेनापूर्वप्रभादौ[4] कृते तदुक्ते वा निर्लोठिते संशयं चक्रुर्नैव निरचिन्वत न निर्णिन्युः[5] । एतेनास्य सर्वेभ्योपि विद्वत्तोक्ता* ॥

निरचिन्वत । इत्यत्र "अनत" [ ११४ ] इत्यादिनान्तोर्त[6] ॥

समशेरत । इत्यत्र "शीङो रत्" [ ११५ ] इत्यन्तो रत् ॥

संविद्रते । संविदते । अत्र "वेत्तेर्न वा" [ ११६ ] इत्यन्तो रद्वा ॥

न वेद विद्व विद्माथ न वेत्थ[3] विदथुर्विद ।
नास्याग्रे वेद विदतुर्विदुः[4] केत्रेति नाब्रुवन्[5] ॥ ८१ ॥

८१. अत्र कर्णविषये के नरा नाब्रुवन्[8] । किमित्याह । अस्य कर्णस्याग्रेहं न वेद न वेदयावां[7] न विद्व वयं न विद्म । अथ[9] तथा न त्वं वेत्थ[10][11] न वेत्सि युवां न विदथुर्यूयं न विद किंबहुनान्योपि कोपि न वेद न वेत्ति कावपि न विदतुः केपि न विदुरिति ॥

१ ए °विद्रिते. २ ए विदिते. ३ ए वेत्थ वि°. ४ ए °स्याये वे°. ५ ए °विदुः के°. ६ ए नाब्रुव°. *सीपुस्तके 'च ये' इत्येतदारभ्य 'विद्वत्तोक्ता' इत्येतदन्तग्रन्थस्याक्षराणि लेखकप्रमादाद्व्युत्क्रमवन्ति जातानीति दृश्यते.

१ ए सी डी ई इत्यात्. २ बी ये च न°. ३ ए कर्णस्या°. ४ सी °पूर्वं प्र°. ५ ए °णिन्यु । ए°. ६ ए °न्तोता स°. ७ ए वेनेनं. ८ ए नाब्रुव°. ९ डी °थर् । वि°. १० ए °थपद°. ११ ए वेत्स न.

इन्दुर्दस्रौ हुताशाः स्म वेत्ति वित्तो विदन्त्यमुम् ।
वेत्सि वित्थो वित्थ वेद्मि विद्वो विद्म इतीरिणः ॥ ८२ ॥

८२. अमुं कर्णमिन्दुर्वेत्ति स्म । दस्रौ नासत्यौ वित्त स्म । हुताशा दक्षिणाहवनीयगार्हपत्याख्यास्त्रयोग्निदेवता विदन्ति स्म । किंभूताः सन्तः । वेत्सि वित्थो वित्थ वेद्मि विद्वो विद्म इतीरिणः । इन्दो त्वममुं वेत्सि स आह वेद्मि दस्रौ युवां वित्थस्तावाहतुर्विद्वो हुताशा यूयं वित्थ तेप्याहुर्विद्म इत्येवं मिथोवादिनः[७] । एतेनायं स्वर्गेपि प्रसिद्ध इत्युक्तम् ॥

वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । वेत्ति । वित्तः । विदन्ति । वेत्सि । वित्थ । वित्थ । वेद्मि । विद्वः । विद्मः । अत्र "तिवांम्°" [ ११७ ] इत्यादिना निवादीना णवादय आदेशा वा ॥

न तथाग्रे ब्रुवन्ति स्म ब्रूतः स[२] सौ[३] ब्रवीति वा ।
नाहुराहतुराहापि यथासौ सत्यमुक्तवान् ॥ ८३ ॥

८३. यथासौ कर्णः सत्यमुक्तवांस्तथाग्रे पूर्वं न कोपि[११] ब्रवीति स्म कावपि न ब्रूतः स्म केपि न[१२] ब्रुवन्ति स्म । तथा वर्तमानकाले[१३]पि न कोप्याह[१४] न कावप्याहतुर्न केप्याहुः[१५] ॥

---

१ प ताशा स. २ सी डी स म°. ३ ई स ब्रुवी°.

---

१ सी डी दक्षणा°. २ प °नीर्यगा°. ३ प सी भूता स°. ४ प विद्रो वि°. ५ प युर्वा वित्थ. वि°. ६ प °स्तादाह°. ७ प °दिना । ए°. ८ प °त्ति । वेत्तः. ९ प वित्थ । वित्थः । वे°. सी वित्था । वे°. १० वी वामेत्या°. ११ ई °पि ब्रुवी°. १२ प न ध्रुवान्ते स. १३ सी डी °ले न. १४ प कोप्योह. १५ प केणाहुः.

यथा[1]हथुः शिवा[2]विन्द्रौ ब्रूथः[3] कृष्ण ब्रवीषि च ।
ब्रह्मन्नात्थ तथासावित्याख्यत्तं दिवि नारदः ॥ ८४ ॥

८४. तं कर्णं दिवि शिवादीनां पुरो नारद आख्यत् । कथमित्याह । शिवश्च शिवा च हे शिवौ यथा यादृशममुं कर्णं युवामाहथु[1]र्वर्णयथ इत्यर्थः । तथा हे इन्द्रौ शचीन्द्रौ[2] यथामुं युवां ब्रूथो हे कृष्ण यथा[3]मुं त्वं ब्रवीषि च हे ब्रह्मन् यथामुं त्वमात्थ तथा तादृशोसौ कर्ण इति ॥

आह । आहतुः । आहुः । आत्थ । आहथुः । ब्रवीति । ब्रूतः । ब्रुवन्ति[4] । ब्रवीषि । ब्रूथः । अत्र "ब्रूग°" [ ११८ ] इत्यादिना पञ्चानां[6] तिवादीनां पञ्च[5] णवादयो[7] वा तत्संनियोगे ब्रूग आहश्च ॥

जयताज्जय जयतु विजयेतां भुजौ च[4] ते ।
राजेते यावदर्केन्दू जगौ तत्रेत्यृषिव्रजः ॥ ८५ ॥

८५. ऋषिव्रजस्तत्र कर्णविषये जगा[8]वाशिषो ददौ । कथमित्याह । यावदर्केन्दू राजेते तावद्भवांस्त्वं वा जयतात्त्वं जय भवाञ्जयतु ते तव भुजौ च विजयेतामिति ॥

भजेथे स पुरा यत्तद्भजेथा[5] माधुना धनुः ।
भजेतं कर्णपादावित्यूचुस्तदरयो भुजौ ॥ ८६ ॥

८६. तदरयः कर्णारयो भुजौ स्वबाहू ऊचुः । कथमित्याह । हे

---

१ डी °याहथु°. २ प °विन्द्रौ ब्रू° ३ सी डी ब्रूथ कृ.° ४ डी च तौ । रा°. ५ प डी °जेथा माधुना ध°.

---

१ सी डी °हथुर्वर्णयथा इ°. २ वी °न्द्रौ भमुं. ३ प सी °थामु त्व. ४ सी °न्ति । ब्रवी°. ५ सी पञ्च ण°. ६ प °नां वेति°. ७ वी सी डी °दयस्तत्स°. ८ प जगा था°.

भुजौ पुरा यद्धनुर्युवां भजेथे स्म रणायाश्रयेथे स्म तद्धनुरधुना कर्णे उदिते मा भजेथां किं त्वधुना कर्णपादौ युवां भजेतमिति ॥

जयतात् । इत्यत्र "आशिषि°" [ ११९ ] इत्यादिना तुह्योर्वा तातङ् ॥ पक्षे । जयतु । जय ॥

जगौ । अत्र "आतो णव औ" [ १२० ] इति णव[1] औः ॥

विजयेताम्[2] । राजेते । भजेथाम् । भजेथे । अत्र "आतामाते°" [ १२१ ] इत्यादिनाते[3] इः ॥

भजेतम् । अत्र "यः सप्तम्याः" [ १२२ ] इति-इः ॥

यदि श्रियः श्रयेयुस्त्वां श्रयेयं क्ष्माश्रितं कथम् ।
इति क्रुधेव[1] यत्कीर्तिर्दिशो दिशमशिश्रियत्[2] ॥ ८७ ॥

८७. यत्कीर्तिर्यस्य कर्णस्य यशो दिशः सकाशाद्दिशमशिश्रियत् । एकस्या दिशोपरदिशं ययावित्यर्थः । उत्प्रेक्षते[5] । क्रुधेव । कथं क्रुदित्याह । यदि त्वां क्ष्माश्रितं श्रियः श्रयेयुस्तत्कथं किमहं त्वां श्रयेयं नैवेत्यर्थ इति । अन्यापि[6] मानिनी सपत्न्याश्रितं पतिम् । यद्येता निरभिमानत्वात्त्वां[7] सपत्न्याश्रितमपि[8] श्रयन्ते तत्किमहमपि त्वां श्रयेयमिति कोपेनोक्त्वा[10] दिशो दिशं श्रयति तामनुनेतुं यस्यां दिशि[11] पतिरभिमुखो भवति कोपात्तस्या दिशो विमुखीभवन्त्यन्यां दिशं श्रयति ॥

---

१ ए क्रुद्धेव. २ ए °शिश्रय°.

---

१ ए सी °व औ ॥. २ ए °ता । रा°. ३ ए °त इ ॥ भ°. सी °त इति । भ°. ४ ए °शाद्दश°. ५ बी त्प्रेक्ष्यते. ६ सी डी °पि कामिनी. ७ ए °मानित्वां°. ८ डी °पत्न्यः श्र°. ९ सी °त्न्याश्रयते त°. १० ए °नोक्ता दि°. ११ सी दि······शो.

अयेयम्। श्रयेयुः। अत्र "याम्युसोर्०" [ १२३ ] इत्यादिनेयमियुसौ ॥

चतुर्दशः पादः समर्थितः ॥

अयेयम्। श्रयेयुः। अत्र "नामिनो गुणोक्ङिति" [ १ ] इति गुणः ॥ अक्ङितीति किम्। श्रितम्। अशिश्रियत् ॥

नाधूनोन्नातनोत्खड्गं तेषु येऽबिभयुर्युधि ।
हेपयन्मल्लयोद्धॄन्नामेधज्जागरितः श्रमे ॥ ८८ ॥

८८. युधि येऽबिभयुर्भीतास्तेषु भीरुषु विषये कर्णः खड्गं नातनोद्घाताय न व्यापारयत्किं बहुना नाधूनोन्नाकम्पयदपि। एतेन क्षत्रियोत्तमत्वोक्तिः। नन्वसौ कदापि शस्त्रश्रमाकरणेन यथाकामीनभोजनेन च सर्वाङ्गीणमतिमेदुरत्वादस्त्रं व्यापारयितुमेव न शक्ष्यतीत्याशङ्क्याह। नामेधन्नोपचितमेदोधातुरभून्। कीदृक्सन्। श्रमे खड्गाद्यभ्यासे जागरितः सदोद्यतोत एव मल्लयोद्धॄन्मल्लभटान्हेपयन्पराजयेन लज्जयन्। श्रमे ह्यकिंचित्करत्वहेतुर्मेदोधातूपचयो न स्यात् ॥

धर्मे जजागृवानर्थे जजागर्वान्स वेत्रिणा ।
इदं व्यज्ञपि यद्द्वारि चित्रकृत्कश्चिदासरत् ॥ ८९ ॥

८९. स कर्णो वेत्रिणेदं व्यज्ञपि। कीदृक्सन्। धर्मे जजागृवान्सोद्यमस्तथार्थे द्रव्ये जजागर्वान्स्वस्ववेलायां धर्मार्थौ साधयन्नित्यर्थः। किं

१ डी नाधुनो°. २ सी डी °बिभियु°. ३ ए श्रमो ॥. ४ ए °गृधान°.

१ डी °येयुः. २ ए सी पाद स°. ३ सी डी °बिभियु°. ४ डी °षु विषयेषु क°. ५ बी बहूना. ६ सी डी नन्वसौ. ७ ए ई °न स°. ८ ए बी सी डी °मेदभा°. ९ ए °भयहेपयत्परा°. १० ई °तुर्मेदो°. ११ ए बी सी डी °मेदधा°. १२ ए °र्वांस्व°. १३ सी डी °न्स्वबे°. १४ ए °र्मार्थोत्सा°. सी° र्मार्थो सा°.

ध्यज्ञपीत्याह । द्वारि सिंहद्वारे कश्चिदज्ञायमानश्चित्रकृच्चित्रकर आसरत्कुतोपि स्थानादाययौ ॥

स आनर्च्छ बहून्देशानदर्शच्चाद्भुतानि सः ।
यानि संचस्करुः पृथ्वीं वितरुर्यानि विस्मयम् ॥ ९० ॥

९०. स चित्रकृद्बहून्देशानानर्च्छ भ्रान्तवानत एव सोद्भुतान्याश्चर्यकारिवस्तून्यदर्शच्च । यान्यद्भुतानि पृथ्वीं[1] संचस्करुरतिशायित्वेनालं चक्रुरत[2] एव यानि विस्मयमाश्चर्यं वितरुर्ददुः । अर्थाल्लोकानाम् । एतेनासौ राज्ञोपि किंचिदद्भुतं[3] दर्शयिष्यति तस्मात्प्रवेश्यतामिति राज्ञो वेत्रिणा ज्ञापितम्[4] ॥

सोथानृच्छान्नृपादेशात्प्रणम्योचे कृताञ्जलिः ।
न के सस्मरुरारुस्त्वां तन्मया स्मर्यसेर्यसे ॥ ९१ ॥

९१. अथैवं विज्ञप्त्यनन्तरं[5] स चित्रकृन्नृपादेशात्कर्णाज्ञयानृच्छान्नृपाँन्तिकमागतः[7] सन्प्रणम्य[8] कृताञ्जलिरूचे । यथा राजन् यस्मात्त्वां के नरा न सस्मरुः के च नारुर्नाययुः[9] । न्यायपालकत्वौदार्यादिगुणोपेतत्वेन[10] सर्वैरपि त्वं स्मर्योभिगम्यश्चेत्यर्थः[11] । तत्तस्माद्धेतोर्मया[12] स्मर्यसेर्यसे गम्यसे च ॥

अरार्यमाणाः सोस्वर्यमाणास्तीर्त्वा नदीः क्रमम् ।
विसर्यासं[4] शमर्यासं कीर्तिचेच्च्येत्युपागमम्[5][6] ॥ ९२ ॥

---

१ ए °शाप्रण°. २ बी साश्चर्यं°. ३ ए नदीछ°. ४ ए विसार्या°. ५ ए चेन्येत्यु°. ६ डी °त्युपोग°.

---

१ ए सी पृथ्वी स°. २ ए °क्रुरुभ ए°. ३ ए °चिदेद्भु°. ४ ए °पिताम्. ५ बी सी °शप्यन°. ६ ए °त्रकन्नृ°. ७ ए °पातिक°. ८ ए° सत्प्रण°. ९ ए °रुनार्ययुः°. १० ए° णोपित°. ११ सी डी °र्योम्यग°. १२ बी °तोमया.

९२. हे कीर्तिचेच्य । यशसोत्यर्थमुपचायक । अहमुपागमं त्वत्समीपमागतः । किं कृत्वा । अरार्यमाणा अत्यर्थं प्रसरन्तीरत एव सास्व[1]र्यमाणा अत्यर्थं शब्दायमाना नदीस्तीर्त्वा[2]तिविषमं बहुमार्गमुल्लङ्घ्येत्यर्थः । कस्मा[3]दित्याह । क्लमं मार्गश्रमादिकृतां ग्लानिमहं विस्मर्यासं त्वद्दर्शनेन विस्मरेयं तथा शं[4] सुखमर्यासं प्राप्नुयामिति हेतोः ॥

दध्यां दधति वाचस्ते दध्ययन्त्यर्थिनश्च ताः ।
दिष्ट्या मय्यपि दीधित्र्यो[1] वेवित्र्यो[2] दधयन्तु ताः ॥ ९३ ॥

९३. हे राजंस्ते वाचो दध्यां दधीवाचरन्ति । क्विप्[5] लोपे[6] दधं[7]यनं "शंसिप्रत्ययाद्"[8] [ ५.३. १०५ ] इत्यः । माधुर्येण दध्न इवाचरणं दधति धारयन्ति । तथार्थिनश्च याचकाश्च तास्त्वद्वाचः कर्म दध्ययन्ति दानकाले माधुर्येण दधीवाचरन्तीः[9] प्रयुञ्जते । दधिशब्दा[10]त्क्विबन्ता[11]ण्णिग् । तास्त्वद्वाचो दिष्ट्यानन्दे[12]न मय्यपि दधयन्तु दधीवाचरन्तु । यू[13]यं मधुरवाग्भि[14]र्मामप्यालपते[15]त्यर्थः । कीदृश्यः सत्यो दीधित्र्यो दीप्तिमत्य ओजोगु[16]णान्विता इत्यर्थः । तथा वेवित्र्यः कान्तिगुणोपेताश्च[17] । दीधीङ् दीप्तिदेवनोः । वेवीङ् वेतिना तुल्ये[18] । वेतिना वींक् धातुना तुल्येर्थे वर्तते । एतावपरेपठितौ[19] ॥

---

१ डी °ध्यो विध्यो. २ ए °वित्रो द°.

---

१ बी साश्वर्यं°. २ ए °स्तीर्त्वा इति. ३ ए कस्मादि°. ४ ए शं सुख°. ५ सी डी क्विपि लो°. ६ ई लोपो द°. ७ डी °धन श°. ८ ए बी सी °याद इ°. ई °दा इ°. ९ ए °रन्ती प्रयुञ्जति । द°. १० ए °ब्दात्क्विपु°. ११ ए सी °न्ता-णिग्. १२ बी °न्दे म°. १३ ए यूक म°. १४ ए °ग्भिममाम°. १५ ए °ते इत्य°. १६ ए °गुणोचिता. १७ ए °श्च । दीधीङ दीप्ति°. १८ सी ल्येर्थे व°. डी °ल्येर्थे । वे°. १९ बी °पठितो. डी °पठितौ.

वेव्यते दीध्यते लक्ष्म्या भवानग्रेधुनानया।
यदि वेवीत दीधीतेत्यालेख्यपटमार्पयत् ॥ ९४ ॥

९४. चित्रकृदालेख्यपटं चित्रपटमार्पयद्राज्ञे ददौ। कथम्। इत्येवमुक्तिदानप्रकारेण। इत्युक्त्वेत्यर्थस्तमेवाह। हे नृपाग्रे पूर्वं भवांस्त्वं[2] लक्ष्म्या राज्यश्रिया कर्त्र्या वेव्यते[3] धीरललितनायकत्वात्काम्यते। तथा दीध्यते। अन्तर्भूतणिगर्थत्वाद् रम्यते च। अधुना सांप्रतं पुनरनयालेख्यपटस्थकन्यकया सहितां लक्ष्मीं यदि वेवीत[4] दीधीत च। इच्छा मे यदि कामयेत[5] रमयेच्चेत्यर्थः[6]। असंजातपूर्वसपत्नीका लक्ष्मीरधुनानया ससपत्नीका यदि भवेत्तदा ममात्यभिप्रेतं स्यादिति भावः। अत्र "कामोक्तावकच्चिति" [५. ४. २६] इति कामोक्तौ गम्यमानायां सर्वविभक्त्यपवादा सप्तमी। यदि च भवानग्र इति पाठस्थाने पूर्वमेष इति पाठः स्यात्तदा सर्वापीयमुक्तिः कवेः स्यात्ततश्च पूर्वमेष कर्णो लक्ष्म्या वेव्यते दीध्यते चाधुना त्वेषोनया सहितो[9] लक्ष्मीं यदीति[10] यथार्थे। यथा वेवीत[11] दीधीत च। वर्तमानार्थेपि सप्तमी दृश्यते[12]। ततश्च यथाभिलषति[13] क्रीडयति चेति हेतोरालेख्यपटमार्पयदिति सरल एवान्वयः स्यात्। विशिष्टाम्नायविद्भिरन्यथा[14] वैतदर्थः[15] स्वयं व्याख्येयः॥

अतनोत्। अधूनोत्। इत्यत्र "उश्नोः" [२] इति गुणः॥

अबिभयुः। ह्रेपयन्। इत्यत्र "पुस्पौ" [३] इति गुणः॥

---

१ ए ई °त देधी°.

---

१ सी डी °मुक्तदा°. २ ए सी भवास्त्व ल°. ३ ए वेव्येते. ४ ए ई °त देधी°. ५ बी °येच्च र°. सी डी °येत् र°. ६ ए °येचेत्य°. ७ बी सी डी °वकिच्चि°. ए °वकिन्चिति. ८ बी °वादः स°. ९ बी सी डी °हितां ल°. १० ए °दी य°. ११ ए ई° त देधी°. १२ ए° तेकमा°. १३ बी ई °षते क्री°. सी डी °षयते क्री°. १४ सी डी °यवद्भि°. १५ बी ई °था चैत°.

योद्धृन्। इत्यत्र "लघोरुपान्त्यस्य" [ ४ ] इति गुणः ॥

अमेद्यत्। इत्यत्र "मिदः श्ये" [ ५ ] इति गुणः ॥

जागरितः। अत्र "जागुः क्किति" [ ६ ] इति गुणः ॥ जजागृवान्। इत्यत्र कस्मान्न स्यात्। जागर्तेः क्वसुरनभिधानाद्भाषायां नास्तीत्येके॥ गुणमेवेच्छन्त्येके। जजागर्वान्॥ अपरे तु क्वसुकानयोर्गुणप्रतिषेधमेवाहुः। जजागृवान्॥

आसरत्। अदर्शत्[2]। इत्यत्र "ऋवर्णदृशोऽङि" [ ७ ] इति गुणः ॥

संचस्करुः। आनर्च्छे। वितेरुः। अत्र[3] "स्कृच्छ्रृत°" [ ८ ] इत्यादिना गुणः ॥ अकीति किम्। आनृच्छ्वान्॥

सस्मरुः। आरुः। इत्यत्र "संयोगाद्दर्त्तेः" [ ९ ] इति गुणः ॥

स्मर्यसे। अर्यसे। सास्वर्यमाणाः। अरार्यमाणाः। विस्मर्यासम्। अर्यासम्। अत्र "क्ययङाशीर्ये" [ १० ] इति गुणः ॥

वेच्य[4]। इत्यत्र "न वृद्धिर्°" [ ११ ] इत्यादिना न गुणः ॥ केचित्त्वप्रत्यये णिगि च दध्यां दध्ययन्ति इत्यत्रापि। गुणवृद्ध्योः प्रतिषेधमिच्छन्ति। तन्मत-संग्रहार्थे[6] क्विलोपे सत्यविति प्रत्यये परे गुणवृद्धी न स्यातामिति व्याख्येयम्। विति[7] तु दधयन्तु ॥ केचित्तु दीधीवेव्योरिवर्णे यकारे[8] वान्तस्य लुकमन्यत्र[9] तु गुणवृद्धिनिषेधमारभन्ते। दीधिभ्यः[10]। वेविभ्यः। दीधीत। वेवीत। दीध्यते वेव्यते[11]॥

१ प °गवान्. २ प °दर्शत्. ३ प अउ कृच्छृ°. ४ प चेच। इ°. ५ प °त्ययो णि°. ६ प °र्थे जह्रो°. ७ प °ति सु द°. ८ °बी रे चान्त°. ९ बी °त्र गु°. सी डी °त्र गुणनि°. १० बी °भ्यः। वीवि°. ११ प वेध्यते.

तत्रेक्ष्य लिखितां कन्यामुत्कोभूद्राड्ुवाच च ।
ईदृग्रत्नं सुवै रत्नगर्भाप्येवं न चिन्तयेत् ॥ ९५ ॥

९५. तत्रालेख्यपटे लिखितां कन्यामीक्ष्यालोक्य गक्कर्ण उत्कः कन्यां प्रत्युत्कण्ठितोभूत्तथोवाच च । यथेदृक्सर्वोत्कृष्टं रत्नं कन्यारूपमहं सुवै जनयितुं समर्था मतान्तरेणात्र समर्थनाया पञ्चमी । एवं कर्मतापन्नं रत्नगर्भार्यास्तामरत्नगर्भा योषिदादीनि रत्नानि गर्भे यस्याः सापि भूरपि न चिन्तयेत् । संभावनेत्र सप्तमी ॥

अभूत् । इत्यत्र "भवतेः सिज्लुपि" [ १२ ] इति न गुणः ॥
सुवै । अत्र "सूतेः पञ्चम्याम्" [ १३ ] इति न गुणः ॥

प्रमोमुदीति वंशः को जुह्वत्या श्रियमेतया ।
बन्धुतां यन्ति के चास्या नाम तेजुहवुश्च किम् ॥९६ ॥

९६. अनया कन्यया कृत्वा को वंशः प्रमोमुदीत्यत्यर्थं प्रमोदते । यतो रूपादिगुणातिशयेन वंशस्यैव श्रियं शोभां जुह्वत्या ददत्या । तथास्याः कन्यायाः के च बन्धुतां स्वजनतां यन्ति प्राप्नुवन्ति तथा ते बन्धवोस्याः किं नाम(मा)जुहवुर्ददुः ॥

अधियानस्तदेतस्या अधीयानोन्यदप्यहो ।
ब्रूह्ययानि यथा तोषं वसु ते जुहवानि च ॥ ९७ ॥

१ ई तत्रेक्ष्य. २ ए °त्रेक्ष्य लि°. ३ ए सी डी °न्धुता य°. ४ सी डी °म् ॥ एतया. ५ ए ब्रूह्यया°. ६ ए वस्तु ते.

१ ए °न्यामेख्यालो°. ई °न्यामेक्ष्या° २ डी च । ईदृ°. ३ ए °र्था गता°. ४ डी °प्यास्तां म° ५ ए बी सी डी °दी र°. ६ ए सिज्लुपि ७ ए सूते प°. ८ ए यति प्रा°.

९७. अहो चित्रकृत्[1] दस्याः कन्यायास्तद्वंशादि ब्रूहि । यतोस्यास्तद्धियानः[2] स्मर्तुं शक्तः स्मरणशीलो वा तथान्यदपि कलाकौशलाद्यधीयानो यथाहं तोपमयानि प्राप्नवानि[3] तथा ते तुभ्यं वसु[4] द्रव्यं यथा जुहवानि[5] च[6] ददानि च ॥[7]

प्रमोमुदीति[8] । इत्यत्र "व्युक्तोपान्त्य°"[9] [ १४ ] इत्यादिना न गुणः ॥

जुह्वत्या । यन्ति । इत्यत्र "ह्विण(णोः)°"[10] [ १५ ] इत्यादिना वयौ ॥ अप्विवतीति[11] किम्[12] । पुरुष[13] । अजुहवुः[14] ॥ वित् । जुहवानि । अयानि[15] ॥

अधियानः[16] । अधीयानः[17] । इत्यत्र "इको वा" [ १६ ] इति वा[18] यकारः ॥

अकुटित्वेति राज्ञोक्तोनुत्कोटो नुवितेति सः ।
वचोनुत्कोटयन्साहालेखनीयकृतां वरः ॥ ९८ ॥

९८. आलेखनीयकृतां[19] चित्रकृतां वरः श्रेष्ठ आह स्मोचे[20] । कीदृक्सन् । अकुटित्वा[21] कौटिल्यमकृत्वेत्युक्तरीत्या[22] राज्ञा कर्णेनोक्तोत एवानुत्कोटोकुटिलमनस्कोत एवं[23] वचोनुत्कोटयन्नकुटिलयन्सन्निति[24] वक्ष्यमाणरीत्या[25] नुविता कन्यावंशादेः[26] स्तोता[27] ॥

---

१ ए °यन्साहा°.

---

१ ई °दस्या क°. २ ए °याना स°. ३ ए प्रापवा°. बी सी डी प्राप्नुवा°. ४ ए वस्तु द्र°. ५ बी जुहुवा°. ६ ए °नि वदामि च. ७ सी डी च ॥ प्र°. ८ ए °ति । अत्र. ९ बी सी डी ई व्युक्त इ°. १० ए ह्विणोरप्विवितिव्यौ इति यकारवकारादेशौ ॥ अ°. ११ डी अविती°. १२ बी सी डी ई °म् । अ°. १३ ए पुरुस अहहवुः. १४ बी सी डी ई °वुः । जु°. १५ सी °नि । अधीया°. १६ ए °यानिः । अ°. १७ बी सी डी ई °नः । अत्र. १८ बी डी ई वा यः ॥. सी वा य ॥. १९ डी ई °ता व°. २० ए स्मोवाच । की°. २१ ए °टिलत्वाकौ°. २२ ए ई °त्या क°. २३ बी डी °व च व°. २४ ए °न्नि व°. २५ ई °णया री° २६ बी °शादे स्तो°. २७ ए स्तो ॥.

अवा[1]च्यां[2] स्फरिकाश्र्यस्ति नाम्ना चन्द्रपुरं पुरम् ।
कं[3]डकं[4]स्फलकस्त्रैणं धर्मानुद्विजित्प्रजम् ॥ ९९ ॥

९९. अ[1]वाच्या दक्षिणस्या दिशि नाम्ना चन्द्रपुरं पुरमस्ति । कीदृक्[2] । स्फरिका स्फुरन्ती श्रीर्लक्ष्मी[3]र्यत्र तत् । "तद्धितार्क" [ ३.२.५४ ] इत्यादिना न पुवत् । तथा कं[4]डकानि माद्यन्ति[5] स्फलकानि सविलासानि स्त्रैणानि यत्र तत् । तथा धर्मादनुद्विजित्र्योनुद्विजमानाः प्रजा य[6]त्र तत् । एतेना[7]त्रार्थकामधर्माणां संपदुक्ता ॥

अकुटित्वा । नुविता । इत्यत्र "कुटादेर्" [ १७ ] इ[8]त्यादिना प्रत्य[9]यो ङिद्वत् ॥ अ[10]ञ्णिदिति किम् । अनुत्को[11]टः । अनुत्कोटयन् ॥ कुटादेरिति किम्[12] । आलेखनीय ॥ अपरे कंडस्फरस्फुलान्कुटादौ पठित्वा पाठसामर्थ्याद् ञ्णिति वृद्धिनिषेधमिच्छन्ति । कं[13]डं[14]कं[15] । स्[16]फरिका । स्फलं[17]क ॥

अनुद्विजितृ । इत्यत्र "विजेरि[18]ट्" [ १८ ] इतीड् ङिद्वत् ॥

दिशां प्रोर्णुविता कीर्त्या द्विषां प्रोर्णवितौजसा ।
राजेह जयकेशी यं स्तुतो विचश्च रोदसी ॥ १०० ॥

---

१ प वी अपाच्या. २ सी °च्या स्पुरि°. ३ वी कट क° ई कटक°. ४ वी °कस्फुल°.

---

१ वी अपाच्या. २ प °कृ । स्फुरि°. ३ सी डी ई °क्ष्मी यत्र. ४ ई कटका°. ५ वी °न्ति स्पल° ६ प यव त°. ७ सी डी °नार्थं°. ८ प इत्योदि°. ९ डी °त्यया डि°. १० प अञ्जिदि°. ११ प °त्कोटय°. डी °त्कोट । अ°. १२ प °म् । ले°. १३ ई कटस्फ°. सी कडस्फुल°. १४ ई कटक. १५ °डका । स्फ°. १६ वी स्फरक । स्फ°. १७ प °लका । अ°. १८ प °रिडीतिड्.

१००. इह[1] चन्द्रपुरे जयकेशी नाम राजास्ति। कीदृक्। ओजसा प्रतापेन बलेन वा द्विषां प्रोर्णवित्ता छादकोत एव कीर्त्या दिशां प्रोर्णुविता[2] व्यापकोत एव च यं जयकेशिनं रोदसी स्तुत. श्लाघेते वित्तश्च जानीतश्च ॥

**कन्या जयति तस्यैषा मयणल्लेति नामतः।**
**समीधेस्या न दध्वंसे कान्तिर्निन्ये जगन्मुदम् ॥ १०१ ॥**

१०१. नामतो मयणल्लेति मयणल्लाख्यैषा[3] चित्रपटस्था तस्य जयकेशिनः कन्या पुत्री जयति सर्वस्त्रैणादुत्कर्षेणास्ति। यतोस्याः कन्यायाः कान्तिः कमनीयता समीधे दिदीपे[4] न दध्वंसे न क्षीणा। अत एवास्याः कान्तिर्जगन्मुदं हर्षं निन्ये प्रापयत् ॥

प्रोर्णुवित्ता[5]। प्रोर्णविता। इत्यत्र "वोर्णोः" [ १९ ] इतीड्वा ङिद्वत् ॥

स्तुतः। वित्तः। अत्र "शिदवित्"[6] [ २० ] इति शिद्[7] ङिद्वत् ॥ अविदिति किम्। जयति ॥

समीधे। निन्ये। अत्र[8] "इन्ध्यसम्०" [ २१ ] इत्यादिना परोक्षा किद्वत् ॥ इन्ध्यसंयोगादिति किम्। दध्वंसे[9] ॥

**यौवनेनाथ सस्वञ्जे सा विकारैर्न सस्वजे।**
**नष्ट्वा याति स्मराख्यायामास्ते नंष्ट्वालिनर्मणि[1] ॥ १०२ ॥**

१०२. अथ सा मयणल्ला यौवनेन सस्वञ्जे आलिङ्गिता परं

१ ए °लिमर्म°.

१ ए ई °ह पु°. २ ए प्रोर्णवि°. ३ ए °ययण°. ४ डी दिद्दीपे. ५ ए °ता। इ°. ६ ई शिदिति. ७ ए शिडदित्॥. ८ ए अत्रेध्यस°. बी अत्रेन्धस°. ९ ए दध्वसो ॥.

सौभाग्यदर्पात्कापि वरे चित्तस्यानिवेशनाद्धिक्कारैः सरागप्रेक्षितादिभिः स्मरविकृतिभिर्न सस्वजे । अत एव स्मराख्यायां कामप्रधानवार्तायां नष्ट्वा याति । तथालिनर्मणि सखीनां हास्यकर्मणि नष्ट्वास्ते ॥

भक्त्वापाङ्गं भ्रुवं भङ्क्त्वा प्रेक्षते पुरुषं न सा ।
आस्ते कौमारमर्तित्वा ऋतित्वापि हि यौवनम् ॥ १०३ ॥

१०३. सा मयणल्ला पुरुषमस्यानुरूपत्वान्न प्रेक्षते । किं कृत्वा । अपाङ्गमक्षिप्रान्तं भक्त्वा कुटिलीकृत्य भ्रुवं भङ्क्त्वा च । अतश्च सास्ते । किं कृत्वा । यौवनमृतित्वापि प्राप्यापि हि स्फुटं कौमारं बाल्यमर्तित्वेव । इवो लुप्तोत्र ज्ञेयः ॥

अकर्शित्वाप्यमर्षित्वापीषून्किरति मन्मथे ।
तृषित्वास्यां कृशित्वाथ मृषित्वास्थुः स्फुटं न के ॥ १०४ ॥

१०४. के राजपुत्राः स्फुटं नास्थुः । किं कृत्वा । अस्यां तृषित्वा साभिलाषीभूयात एव कामातिरेकात्कृशित्वा कृशीभूयाथ मृषित्वा मन्मथेषूनेव क्षान्त्वा च । क सति । मन्मथे शरान्किरति क्षिपति । किं कृत्वा । अकर्शित्वाप्यतनूभूयापि बलिष्ठीभूयापीत्यर्थः । तथामर्षित्वापि । कुपित्वापीत्यर्थः । यद्यप्यतितरां स्मरः प्रहरति तथाप्यस्या अनिच्छुत्वादस्या अभिलाषुकाः सर्वेपि राजपुत्राः स्मरशरान्क्षान्त्वैवास्थुः । न कोपि प्रतीकारोजनीत्यर्थः ॥

---

१ ए भक्तापा°. २ ए °व भुङ्क्त्वा. ३ ए न केः ॥

---

१ ए °र्पाकापि. २ सी °स्यावि°. ३ ए °कारा स°. ४ ए °दिभि सरे°. ५ ए भुक्ता च. ६ ए ई °त्वा कु°. ७ ए °प्यत°. ८ ए °वास्थ. । न.

वञ्चित्वालं[1] वयो जन्मालं वचित्वेतिवादिनीः ।
वृणोम्यननुरूपं किं तर्षित्वेत्याह सा सखीः ॥ १०५ ॥

१०५. सा मयणल्ला सखीराह । कथमित्याह । हे सख्यस्तर्षित्वा तृष्णां विधायाननुरूपं स्वस्यासदृशं वरं किं वृणोमीति । यतः कीदृशीर्वयो[2] यौवनं वञ्चित्वा[3] । अन्तर्भूतणिगर्थो गमनार्थोऽत्र वचिः[4] । ततो गमयित्वालं[5] वरानङ्गीकरणाद्वयोतिक्रमेण[6] सृतामित्यर्थः[7] । एवं जन्म वचित्वालमित्येवंवादिनीः ॥

रत्नैर्ग्रथित्वा ग्रन्थित्वाब्जैर्गुफित्वोत्पलैः स्रजः[2][3] ।
पुष्पैः[4] सान्यैश्च गुम्फित्वार्चत्युमां[5] सुवरेच्छया ॥ १०६ ॥

१०६. स्पष्टः । किं त्वन्यैश्च पुष्पैर्मालत्यादिभिः[8] ॥

लुचित्वा[6] श्मश्रु लुञ्चित्वा शिरो ये तेपिरे तपः ।
ते लेखित्वा मुदित्वास्या भाविनं सत्पतिं जगुः ॥ १०७ ॥

१०७. श्मश्रु दंष्ट्रिकास्थान्केशाल्लुँचित्वापनीय[9] शिरः[10] शिरःस्थान्केशाल्लुँञ्चित्वा ये बौद्धादिमुनयस्तपो व्रतं तेपिरे चक्रुस्तेस्या[11] मयणल्लाया भाविनं भविष्यन्तं[12] सत्पतिं शोभनं वरं जगुः । किं कृत्वा[13] ।

---

१ ए °ल वचि°. २ बी °ब्जैगुफि°. ३ ए स्रजा । पुष्फैरन्यै°. ४ बी. पुष्फैः सा°. ५ ए °र्चंतोमा. ६ बी °त्वा सश्रु.

---

१ ए °वचित्वा. २ सी ई वचित्वा ३ ए बी °त्वातर्भू°. ४ बी ई °त्र वचिः ५ ए बी °ल वरा°. ६ बी °योरति°. ७ बी °त्यर्थ । ए°. ८ ए बी पुष्फैर्मा°. सी डी पुष्फैर्मा°. ९ ए °कास्वान्के°. १० ई °र.स्था°. ११ सी डी °कुस्तस्या. १२ ए °ष्यतिं स°. १३ सी °त्वा । लिखत्वा. डी °त्वा । लिखि°

लेखित्वा लग्नादि गणयित्वा तथा मुदित्वा भाव्युत्कृष्टपतिलाभदर्शनेन हर्षं गत्वा । शोभनोस्याः पतिर्भविष्यतीति ज्ञानबलेनोचुरित्यर्थः ॥

मोदित्वा त्वां लिखित्वागादन्येद्युः कोपि चित्रकृत् ।
तस्या मुमुदिषोः सख्या मुमोदिष्वा स दर्शितः ॥ १०८ ॥

१०८ अन्येद्युः कोप्यज्ञातश्चित्रकृच्चन्द्रपुर आगात् । किं कृत्वा । मोदित्वा त्वद्रूपातिशयेन हर्षित्वात एव त्वा चित्रपटे लिखित्वा ततो मुमुदिषोरनुरूपवरदर्शनाज्जिहर्षिषोर्हर्षिष्यन्त्या इत्यर्थ. । तस्यां मयणझाया. सख्या स चित्रकृत्तस्या एव दर्शित ॥

तस्यालिलिखिषच्छ्लाघ्ये पश्यन्ती त्वां पटे तदा ।
दिदेविषुं तां कामोस्त्रैर्देवित्वा व्यलिलेखिषत् ॥ १०९ ॥

१०९. कामो देवित्वा क्रीडित्वा वल्गित्वेत्यर्थः । अस्त्रैः शरैस्ता कन्यां व्यलिलेखिषद्विदारयितुमैच्छत् । यत आलिलिखिषद्भिरालेखितुमिच्छद्भिश्चित्रकरैः श्लाघ्ये प्रशस्ये तस्य चित्रकृतः पटे त्वां तदा पश्यन्तीं तथा दिदेविषुं त्वया सह रिरंसुम् ॥

सस्वजे सस्वञ्जे । अत्र "स्वञ्जेर्न वा" [ २२ ] इति परोक्षा वा किद्वत् ॥

भक्त्वा भङ्क्त्वा । नष्ट्वा नंष्ट्वा । अत्र "जनशोनि°" [ २३ ] इत्यादिना क्त्वा किद्वद्वा ॥

---

१ ए °स्या मोमुदि°. २ ए °लिषिष°. ३ बी सी डी ई °श्यतीं त्वां. ४ ए °टेस्तदा.

---

१ ए °तिभवि°. २ ई °तचित्र°. ३ डी °त्वा तद्रू°. ४ ए °ध्यता इ°. ५ ए °स्या मिय°. ६ ए °खिखिष°. ७ सी डी °लेषितु°. ८ सी डी °था देदिवि°. ९ ए °क्षाद्वा वा.

ऋतित्वा अर्तित्वा । तृषित्वा तर्षित्वा । मृषित्वा अमर्षित्वा । कृशित्वा अकर्शित्वा । वचित्वा वञ्चित्वा । लुचित्वा लुञ्चित्वा । ग्रथित्वा ग्रन्थित्वा । गुफित्वा गुम्फित्वा । इत्यत्र "ऋतृष°" [ २४ ] इत्यादिना क्त्वा क्विद्वा ।

मुदित्वा मोदित्वा । मुमुदिषोः मुमोदिषत्वा । लिखित्वा लेखित्वा । आलिलिखिषत् व्यलिलेखिषत् । इत्यत्र "वौ°" [ २५ ] इत्यादिना क्त्वासनौ वा किद्वत् ॥ अय्व इति किम् । देवित्वा । दिदेविषुम् ॥

त्वयास्या द्युतितं चित्ते द्योतितं च मनोभुवा ।

सद्यः प्रद्युतिता भावाः प्रद्योतितसखीजनाः ॥ ११० ॥

११०. अस्याः कन्यायाश्चित्ते त्वया द्युतितं विलसितं मनोभुवा चास्याश्चित्ते द्योतितम् । सद्यो मनोभूद्योतनानन्तरमेव भावाः स्तम्भस्वेदादयः प्रद्युतिता उल्लसितुमारब्धाः । किंभूताः । प्रद्योतितो हर्षोत्कर्षाद्विलसितुमारब्धः सखीजनो येषु ते ॥

यया न रुदितं बाल्ये क्रीडयापि न रोदितम् ।

सा स्मरार्ता प्ररुदिता प्ररोदितसखीजना ॥ १११ ॥

१११. स्पष्टः प्रायः । किंतु क्रीडया प्रीतिकौतुकेनापि । प्ररुदिता रोदितुमारब्धा ॥

द्युतितम् द्योतितम् । प्रद्युतिताः प्रद्योतित । रुदितम् रोदितम् । प्ररुदिता प्ररोदित । इत्यत्र "उति°" [ २६ ] इत्यादिना क्तौ वा किद्वत् ॥

---

१ सी डी यथा न.

---

१ डी मृर्षित्वा. २ प मुमोदि°. ३ सी डी लेपित्वा. ४ प °लिप°. ५ प °सनो वा. ६ प अय्व इ°. ७ प °ततान°. ८ डी °म्भखेदा°. ई °म्भखेदा°. ९ प हर्षात्क°. १० प °रब्ध स°. ११ बी °जना ये°. १२ प सी प्राय । किं. १३ प °यापीति°. १४ प °तितः । रु°. १५ बी सी डी °तिता । रु.° प °त । प्र°. १६ बी सी डी °दि त प्र°. १७ सी ना क्तो वा.

शयिता पविते तल्पे स्मरबाणप्रधर्षिता ।
सा पृच्छति तवोदन्तमुदग्डयितपक्षिणः ॥ ११२ ॥

११२. सा कन्योदीच्या उत्तरस्या दिशो डयिता उड्डीना[1] ये पक्षिणस्तान्कर्णपार्श्वादमी आगता इति तवोदन्तं कुशलवार्तां पृच्छति । किंभूता सती । स्मरबाणप्रधर्षिता[2] कामास्त्रैः परिभूतात एव पविते[3][4] पवित्रे तल्पे शयिता ॥

प्रस्वेदिताप्रमेदिता धैर्याप्रक्ष्वेदितापि सा ।
न मर्षितवती तापं सेवित्वाप्यम्बुजस्थितिम् ॥ ११३ ॥

११३. सा कन्याम्बुजस्थितिं कमलपत्रशय्यायामवस्थानं सेवित्वापि तापं[5] स्मरोद्रेकोत्थं संतापं न मर्षितवती न क्षान्तवती पद्मसेवया[6] तस्यात्यन्तं समुल्लासात् । कीदृशी । प्रस्वेदिता[7] सात्विकविकारोज्जृम्भणात्स्वेदं क्षरितुमारब्धा । तथा धैर्याप्रक्ष्वेदितापि धैर्येणामुक्ताप्यप्रमेदितामेदुरा कृशेत्यर्थः ॥

डयित[8] । शयिता । पविते । प्रधर्षिता । अप्रक्ष्वेदिता । प्रस्वेदिता । अप्रमेदिता । इत्यत्र "न डीङ्०" [ २७ ] इत्यादिना[9] क्तौ न किद्वत् ॥

मर्षितवती । इत्यत्र "मृषः क्षान्तौ" [ २८ ] इति न[10] किद्वत् ॥

सेवित्वा । इत्यत्र "क्त्वा" [ २९ ] इति[11] किद्वत्त्व ॥

---

१ डी ताप से°.

---

१ ई उद्दीना २ ई °तात. ३ प पठिते. ४ सी °वित्रे. ५ प ई °पं न. ६ बी सी डी पद्मासे°. ७ प °स्वेवि°. ८ सी डी °यितः । श°. ९ प °ना क्तो न. १० प न किं द्वव. ११ प °ति विकि°.

स्यन्त्वा स्वेदमियं स्कन्त्वा मा गादिति सखीजनैः ।
अनास्कन्द्याभ्युपस्कद्य पयः प्रस्यन्द्य धार्यते ॥ ११४ ॥

११४. इयं कन्या स्वेदं प्रस्वेदं स्यन्त्वा क्षरित्वात एव स्कन्त्वा परिशुष्य मा गान्मा विने(न ?)शदित्यर्थः । इति हेतोः सखीजनैर्धार्यते जीव्यत इत्यर्थः । किं कृत्वा । अनास्कन्द्यापरिशुष्य[1] । स्नेहातिरेकादोद्रह[2]-दयीभूयेत्यर्थः[3] । अत एवाभ्युपस्कद्याभिमुख्येन[4] समीपे[5] गत्वा तथा पयो जलं प्रस्यन्द्य क्षरित्वा ॥

प्रस्यद्यालं पयः सख्यो गुधित्वालं जलार्द्रया ।
क्षुधित्वालं क्लिशित्वालमुदित्वा सेति मूर्छति ॥ ११५ ॥

११५. सा कन्या मूर्छति । कि कृत्वा । उदित्वोक्त्वा[6] । किमित्याह । हे सख्यः पयः प्रस्यद्यालं जलश्रा(स्रा)वणेन[7] सृतं तथा जलार्द्रया क्लिन्नवाससा करणेन गुधित्वालं परिवेष्टनेन सृतं तथा क्षुधित्वा बुभुक्षयालं तथा क्लिशित्वा युष्मत्क्लेशेनालमिति ॥

हृद्युषित्वा कुषित्वास्त्रं मृदित्वामूं क गच्छसि ।
अमृडित्वा[1] रुदित्वेति सख्योस्याश्चुक्रुशुः[2] स्मरम् ॥ ११६ ॥

११६. अमृडित्वासुखं[8] कृत्वा रुदित्वा चास्याः सख्यः स्मरं चुक्रुशुः[9] । कथमित्याह[10] । रे स्मरं[11] क त्वं गच्छसि । किं कृत्वा हृद्यस्या-

१ डी °त्वासु क. २ ए °त्वा रुचित्वेति सख्यास्या°.

१ डी °ष्य । स्नेहा°. २ बी °दाद्रह°. ३ ए °त्यर्थात. ४ डी °मुखेन. ५ बी °पेन ग°. ६ ई °दित्वे । कि°. ७ ए °णे निसृ°. ८ ए असृत्वित्वा°. ९ डी °क्रुशुः । क°. १० ई °ह । स्म°. ११ ए र कथं ग°. सी डी °र कथं ग°.

श्चित्त उपित्वा स्थित्वा तथास्त्रं शरं कुपित्वा पूर्वं न्यस्तं निष्क्रुष्यात[1] एवामूं मृदित्वा पीडयित्वेति ॥

मुपित्वेव मुमुपिपुः पृष्ट्वेव च पिपृच्छिपुः ।
विदित्वेव विविदिपुर्गृहीत्वेव जिघृक्षकः ॥ ११७ ॥
सुप्त्वेव च सुपुप्सुस्तामहं रुरुदिपुर्मुहुः ।
आलिख्यास्मिन्निहानीयाभूवं कृतचिकीर्षितः ॥ ११८ ॥

११७-११८. अहं कृतचिकीर्षितः कृतकृत्योभूवम् । किं कृत्वा मुहुर्वारंवारं रुरुदिपुस्तद्दुःखेन रोदितुमिच्छुः संस्ता कन्यामस्मिन्पट आलिख्य तथेह त्वत्समीप आनीय यथा मुमुपिपुश्चोरयितुमिच्छुर्मुपित्वा मोष्यं चोरयित्वा यथा पिपृच्छिपुः प्रच्छनीयं पृष्ट्वा यथा विविदिपुर्जिज्ञासुर्विदित्वा ज्ञेयं ज्ञात्वा यथा जिघृक्षको ग्राह्यं गृहीत्वा यथा सुपुप्सुः सुप्त्वा कृतचिकीर्षितः स्यात् ॥

असंशिशयिपुस्त्वेशं सा बुभुत्सुरबुद्ध च ।
तां भुत्सीष्ठाः कृपीष्ठास्तद्वैदर्भ्या यत्नलोकृत ॥ ११९ ॥

११९. सा कन्यासंशिशयिपुः संशयितुमनिच्छुर्निःसंशया सती त्वामेवेशं प्रियं बुभुत्सुर्ज्ञातुमिच्छुरभूदबुद्ध च ज्ञातवती च मम भर्ता

१ ए °पुगृही°. २ ई पुत्सुस्ता°. ३ ए सी °र्षित ॥ अ°. ४ ए °श ता बु°. ५ ए °कृत. ॥ सा.

१ ए निकृष्या°. ई नि.कृष्या°. २ ए °वास् मृ°. डी वामु मृ°. ३ ए कृXXXष्य. ४ वी सी °दुखे°. ५ ए °च्छिपु पृच्छनीय. सी °च्छिपु प्र°. ६ ए विवदिपुजिज्ञा°. ७ ए °न्याशसिश°. ८ ई °ती त्वात्वा°. ९ ए °भूतबुद्ध.

कर्ण एवेति मनसा प्रतिज्ञातुमैच्छत्प्रतिज्ञातवती चेत्यर्थः । अतश्च तां कन्यां[1] त्वं भुत्सीष्ठा[2] उक्तस्वरूपामवगम्याः । तथा नलो नैषधि[3]र्वैदर्भ्यां दमयन्त्यां विषयेकृत तत्त्वं तस्यां कृषीष्ठास्तां[4] प्राणेश्वरीं[5] क्रिया इत्यर्थः ॥

स्कन्त्वा । स्यन्त्वा[6] । अनास्कन्द्य । प्रस्यन्द्य[7] । इत्यत्र "स्कन्दस्यन्दः" [३०] इति क्त्वा किद्वन्न ॥ केचित्[8] उपस्कद्य[9] प्रस्यद्य[10] इति यपः कित्त्वमिच्छन्ति । तन्मतसंग्रहार्थं क्त्वेति द्वितकारो निर्देशस्तकारादिः[11] क्त्वेत्यर्थः ॥

क्षुधित्वा । क्लिशित्वा । कुपित्वा । गुधित्वा । अमृडित्वा । मृदित्वा । उ[12]दित्वा । उषित्वा । इत्यत्र "क्षुध[13]°" [३१] इत्यादिना[14] क्त्वा किद्वत् ॥

रुदित्वा । रुरुदिषुः[15] । विदित्वा । विविदिषुः[16] । मुषित्वा । मुमुषिषुः । गृहीत्वा । जिघृक्षकः । सुप्त्वा । सुषुप्सुः । पृष्ट्वा । पिपृच्छिषुः । अत्र "रुदविद°" [३२] इत्यादिना सन् क्त्वा च किद्वत् ॥

चिकीर्षितः । अत्र "नामिनोनिट्[17]" [३३] इति सन् किद्वत् ॥ अनिडिति[18] किम् । अ[19]संशि[20]शयि[21]षुः ॥

बुभुत्सुः । अत्र "उपान्त्ये" [ ३४] इति सन् किद्वत् ॥

अबुद्ध[22] । भुत्सीष्ठाः । अत्र "सिज्°" [३५] इत्यादिना किद्वत् ॥

अकृत[23] । कृषीष्ठाः । अत्र "ऋवर्णात्" [३६] इति किद्वत् ॥

---

१ ए कन्या त्वां भु°. २ ए °त्सीपुष्फक्त°. ३ ए °धियद्वै°. ४ ए °षीस्वास्ता. ५ ए सी° श्वरी क्रि°, ६ ए °न्त्वा । स्यन्त्वा । अ°. ७ ए प्रस्कन्द्य. ८ ए °द्वत्त ॥ के. ९ ए बी सी डी °त् अप°. १० डी °स्कथा प्र°. ११ ए °रादिक्त्वे°. १२ डी उषि°. १३ बी सी क्षुध् इ°. ई क्षुधिधेत्या°. १४ डी नाXXXसन्. १५ ए °दिषु वि°. १६ ए °षुः । नुषि°. १७ ए °नो अनडिति. १८ ए अनडि°. १९ ए अशशि°. २० सी शयषु। पु°. २१ ए °यिषु। पुमु°. २२ ए °बुद्धः । भु°. २३ ए °कृतः । कृ°.

यथा समगतोमेशे श्रीः कृष्णे समगंस्त च ।
संगंसीष्ट त्वयि तथा सा शुभैः संगसीष्ट च ॥ १२० ॥

१२०. यथेशे शंभावुमा गौरी समगत संबद्धाभूद्यथा कृष्णे श्रीः समगंस्त च तथा सा कन्या त्वयि संगंसीष्ट संबद्धीभूयात्तथा शुभैः पुत्रलाभादिभिः संगसीष्ट च ॥

समगत समगंस्त । संगसीष्ट संगंसीष्ट । इत्यत्र "गमो[1] वा [३७] इति वा किद्वत् ॥

मा ते व्याहत विघ्नोत्रेत्युक्त्वा चित्रकृति स्थिते ।
रागमन्तर्गतं राज्ञो रोमोद्गम उदायत ॥ १२१ ॥

१२१. राज्ञः कर्णस्य रोमोद्गमो रोमाञ्चोन्तर्गतं रागमुदायतासूचयत् । दोषाविष्करणं चात्र धैर्यगाम्भीर्यगुणान्वितस्य राज्ञो रागदोषस्य प्रकटनात् । क सति । चित्रकृति स्थिते । किं[2]कृत्वा । उक्त्वा । किमित्याह । हे राजन्नत्र मचणज्ञाविषये[3] ते तत्र विघ्नोन्तरायो मा व्याहत मा व्याघातं कार्षीदिति ॥

व्याहत । इत्यत्र "हनः सिच्" [३८] इति सिं[4]च् किद्वत् ॥

उदायत[5] । इत्यत्र "यमः सूचने" [३९] इति सिच् किद्वत् ॥

उपायत नृपो रत्नान्युपायंस्त च काञ्चनम्[1] ।
अदितास्मै गृहीत्वासौ प्रास्थिताधित संमदम् ॥ १२२ ॥

---

१ डी °म् । आदि°.

---

१ वी °मो विति. २ प कृत्वेक्त्वा. सी डी कृत्वेत्युक्त्वा. ३ वी सी डी ई °ये त.° ४ ई सिच कि°. ५ वी सी डी °त । अत्र.

१२२. नृपः कर्णो रत्नानि जयकेशिना प्राभृतार्थं[1] प्रेषितांश्चित्रकरे[2]णोपढौकितान्मणीनुपायत[3] स्वीकृतवान्काञ्चनमुपायंस्त च । ततो नृपो रत्नानि काञ्चनं च गृहीत्वास्मै चित्रकृते[5]ऽदित ददौ । ततश्चासौ चित्रकृत्प्रास्थित प्राचालीत् । तथा संमदं कार्यसिद्धिजं हर्षमधित दधार ॥

उपायत[6] उपायंस्त । इत्यत्र "वा स्वीकृतौ" [४०] इति सिच्[7] किद्वा ॥

प्रास्थित[8] । अदित । अधित । इत्यत्र "इश्च स्थादः" [४१] इति सिच् किद्वत्संनियोग इकारश्च ॥

अत्रान्तरे च पुष्पेषुः[1] पुङ्खान्मार्ष्टा मृजन्निषून् ।
मार्जन्धनुरधिज्यत्वमनैषीन्[2]न्यधुवीदपि ॥ १२३ ॥

१२३. अत्रान्तरे च पुष्पेषुः स्मरो धनुरधिज्यत्वमनैषीदारोपयदित्यर्थः । न्यधुवीदपि ज्याकर्षणाकम्पयच्च । कीदृक्सन्पुङ्खान्[9] शरपत्राणि मार्ष्टा करस्पर्शेन समारचनशीलस्तथेषून्मृजन्[10]नुत्तेजनेन निर्मलीकुर्वन् । तथा धनुर्मार्जं[11]श्चिरमव्यापारणादुद्भूतस्य रजोमलादिसङ्गस्यापनयनेन निर्मलयन् ॥

मार्ष्टा । इत्यत्र "मृजोस्य वृद्धिः[12]" [४२] [13]इति वृद्धिः ॥

मार्जन् मृजन् । इत्यत्र "ऋतः स्वरे[14] वा" [४३] इति ऋतो वा वृद्धिः ॥

---

१ ए °ष्पेषुर्नुखान्मार्ष्टा सृज°. सी °ष्पेषुपुषान्मा°. २ ए °षीन्नधु°.

---

१ ए °र्थं प्रकाषिता. २ ए °रेणौप°. ३ ए °य स्वी°. ४ ए °वान्काञ्चमुपाय च मु°. ५ ए °ते द°. डी °ते आदि°. ६ सी °पाय°. ७ ई सिच कि°. ८ डी °त । आदि°. ९ ए °न्पुखान्. १० सी डी °जनुत्ते°. ११ ए °र्मांजश्चि°. १२ सी डी °द्धिः । मा°. १३ बी इत्यस वृ°. १४ ए स्वरो वा.

अनैपीत्। इत्यत्र "णिश्रि" [ ४४ ] इत्यादिना वृद्धि । अङितीति किम्॥ न्यधुवीत्॥

न क्वाप्यराङ्क्षीन्नादेवीन्नारौत्सीदिङ्गितं नृपः।
प्रौर्णावीन्नाकृतिं नौत्क्यं प्रौर्णवीत्सोकणीत्परम्॥ १२४॥

१२४. कामेन धनुषि कम्पिते स नृपः क्वापि शयनासनभोजनादौ नाराङ्क्षीन्नारज्यन्नादेवीज्जलक्रीडादिक्रीडाभिर्नाक्रीडत्। तथेङ्गितं मयणल्लारूपलेखनादिस्मरविकारचेष्टितं नारौत्सीत्स्मरोद्रेकेण धैर्यभ्रंशान्न संवृतवान्। तथाकृतिं स्तम्भादिविकारान्वितमाकारं न प्रौर्णावीन्न संवृतवांस्तथौत्क्यं मयणल्लाविषयोत्कण्ठां न प्रौर्णवीत्परं केवलमकणीत्कामोत्थसंतापातिरेकेणार्तस्वरं व्यलपत्॥

सोकाणीद्यावदज्वालीदत्सारीच्च तदुत्सुकः।
आव्राजीदित्यवादीच्च तावन्ना जयकेशिनः॥ १२५॥

१२५. स कर्णस्तदुत्सुको मयणल्लायामुत्कण्ठितः सन्यावदज्वालीत्समन्तात्प्सीदत एवाकाणीदार्तस्वरं व्यलपदत्सारीच्च शून्यचित्ततयालीकगतिं च चक्रे तावज्जयकेशिनो ना पुरुष आव्राजीदाययाविति वक्ष्यमाणमवादीच्च॥

---

१ ए सी °दिगित. २ ए °कृतं नौक्ष्यं प्रौ°. ३ ए °त्सुका। आ°. सी °त्सुक। आ°.

---

१ ए क्षिषि इ°. २ ए वृद्धौ॥ अ°. ३ ई °दिमि°. ४ ए °मिर्नाक्रये°. ५ ए °नाविस°. ६ ए सी °कृतिस्त°. ७ ए °यौत्क्यं म°. वी °यौक्य म°. ८ ए °त्कण्ठा न. ९ ई °पन्॥ सो°. १० वी °दुत्सको. ११ ए °ण्ठितासन्यावददतली°. १२ डी °त्समन्तादता°. १३ वी सी डी °दार्त व्य°. १४ ए सी °रीक्ष शू°. १५ सी डी °कमर्ति. १६ वी सी डी °तिं चक्रे च ता°.

अरौत्सीत् । इत्यत्र "व्यञ्जनानामनिटि"[1] [ ४५ ] इति वृद्धिः ॥ बहुवचनं जात्यर्थं तेनानेकव्यञ्जनव्यवधानेपि[2] स्यात् । अराङ्क्षीत्[3] ॥ अनिटीति[4] किम् । अदेवीत् ॥

प्रौर्णावीत् प्रौर्णवीत् । इत्यत्र "वोर्णुगः सेटि" [४६] इति वृद्धिर्वा ॥

अकाणीत् अकणीत् । इत्यत्र "व्यञ्जनादेर्[5]०" [ ४७] इत्यादिना वा वृद्धिः ॥

अवादीत् । आव्राजीत् । अज्वालीत् । अत्सारीत् । इत्यत्र "वद[6]०" [४८] इत्यादिना[7] वृद्धिः ॥

मा शसीन्मा ग्रहीत्कश्चिन्मा श्वयीदिति तर्जता ।
भर्त्रा नः प्रेषिता रत्नोपदास्ति श्रीरिव स्वयम् ॥ १२६ ॥

१२६.[8] नोस्माकं भर्त्रा[9][10] स्वामिना जयकेशिना रत्नोपदा[11] माणिक्यढौकनं[12] जात्यत्वेनातिसश्रीकत्वात्स्वयं[13] मूर्ता श्रीरिव लक्ष्मीदेवीव प्रेषितास्ति । किंभूतेन । तर्जता । कथमित्याह । युष्मासु मध्ये रत्नोपदां मा[14] कश्चिच्छसीद्धिनीनर्शत्तथा[15][16] कश्चिन्मा ग्रहीत्तथा मा श्वयीद्युष्मत्पार्श्वादेषोपदा मा यासीदिति । अत्यादरेणैषा रक्ष्येत्यादिशतेत्यर्थः[17][18] ॥

यत्सदाजागरीः शत्रूनक्षणीः[2] साम चास्यमीः ।
नाहयीर्नाकखीस्त्वन्नः[3] स्वामीभान्प्राहिणोच्च ते ॥ १२७ ॥

---

१ ए ना. २ बी °क्षणी सा°. ३ ई °कस्वीस्तन्यः स्वा°.

---

१ ए °निदि इ°. २ ए °त्यर्थि ते°. ३ ए अर्वाक्षीत्. ४ डी °निटाविति. ५ ए °देरिना. ६ सी वदेरित्या°. ७ सी डी °ना वा वृ°. ८ बी सी ई ॥ भर्त्रा ज°. ९ ए भर्त्रो स्वा°. १० डी °र्त्रा ज°. ११ ए° पद्दा मा°. १२ ए °कन जा°. १३ ई जाजात्य°. १४ ई मा मा क°. १५ सी डी ई °सीघ्नी°. १६ ए °शस्तथा. १७ ए रक्षेत्या°. १८ सी °दिनाश°. डी दिना शपते°.

१२७. तत्तस्माद्धेतोर्नोऽस्माकं स्वामी जयकेशी ते त्वदर्थमिभान्प्राहिणोच्च । चः पूर्ववाक्यापेक्षया समुच्चये । यच्चस्माद्धेतोस्त्वं मदाजागरीरुद्यम्यभूस्तथा शत्रूनक्षणीरगर्हिमीस्तथा साम मधुरवाक्यमर्स्यमीश्रावोचश्च । प्रियवाक्यै. सर्वमप्यसुख्य इत्यर्थः । तथा नाह्यीर्विपद्यपि नाक्रमीर्न व्यपद इत्यर्थः । तथा नाकंवी. सपद्यपि नाहमीर्नाहृष्य इत्यर्थः । त्वं महाराजो महापुरुषश्चेति तात्पर्यार्थ. ॥

श्रान्तांस्तानमत्रीन्नागानभाजयन्द्रून्परिच्छदः ।
अभाजि तु मया देवोऽनायि चात्मा पवित्रताम् ॥ १२८॥

१२८. परिच्छदो मम परिवारः श्रान्तान्बहुमार्गातिक्रमेण खिन्नांस्ताञ्जयकेशिप्रेषितान्नागान् गजानमत्रीद्वृक्षेष्ववध्नात् । कीदृक्सन् । द्रून्वृक्षान्भाजयन्नागैः सेवयन् । मया तु मया पुनर्देवः कर्णोऽभाजि सेवितो देवसेवयात्मा पवित्रतामनायि नीतश्च । देवसेवया ह्यात्मा पवित्रः स्यात् ॥

तं न नापीपटद्राजापपटत्किं तु तुष्टिमान् ।
मा नागाँ जहलन्मा चकलन् गेच्छेति चादिशत् ॥१२९॥

१२९. राजा कर्णस्तुष्टिमांस्तुष्टः संस्तं जयकेशिनरं न नापीपटन्न

१ ए °यन्दून्प°. २ सी °जि त म°. ३ ए °नाय चा°. ४ सी डी °गा ह्जल°. ५ डी गच्छति.

१ बी सी डी °क्यार्थापे°. २ ए °तोस्त्व स°. ३ ए °नक्षीणर°. ४ डी °स्यमी प्रावो°. ५ ए °वोचः प्रि° ६ ई °र्थ । स्तथा. ७ ए °कपी. स°. ८ ई °पि माह° ९ ए °र्नाह्ष्य. १० ए °र्थ । त्व म°. ११ ए °क्सद्रून्वृक्षा°. १२ डी °या पु°. १३ ए कर्णोभा° १४ ई °र्णतुष्टि°. १५ ए °स्तुटिमास्तुष्टः स°. १६ ए °टन्न न.

न पटुं दक्षमा[1]ख्यत्किं त्वपपटत्पटुमाख्यन् । तथा ते[2]मादिशश्च । कथमित्याह । नागा[3] गजा मा जहलन् हालिं मह[4]द्धलं मा ग्रहीपुस्ततो मा चकलन् मा मिथः कालिं ग्रहीपुस्तस्माद्गच्छ[5] ना[6]गान्तिके याही[7]ति ॥

मा श्वयीत् । अजागरीः । मा श[8]सीत् । अ[9]क्षणीः । मा ग्रहीत् । अस्यमीः । अहयीः । अकखीः । इत्यत्र "न श्वि°" [ ४९ ] इत्यादिना वृद्धिर्न ॥ वकारान्तस्यापि प्रतिषेधमिच्छत्यन्यः । अमवीत् ॥

अभाजि । भाजयन् । इत्यत्र "ञ्णिति" [ ५० ] इति वृद्धिः ॥

अनायि । इत्यत्र "नामिनः°" [ ५१ ] इत्यादिना वृद्धिः ॥ कलिहलिवर्जं[10] ना[11]म्नोपि । तेन अपीपटत् इत्यत्र वृद्धाव[12]न्त्यस्वरादिलोपे चासमानलोपित्वात्सन्वद्भावः सिद्धः ॥ कलिहलिवर्जनं किम् । मा चकल[13]न् । मा जहलन् ॥ अन्ये तु नाम्नो वृद्धिमनि[14]च्छन्तोन्त्यस्वरस्योकारस्यैव णिचि लोपमिच्छन्तः समानलोपित्वात्सन्वद्भावप्रतिषेधेपपटदित्याहुः ॥

अजागारि यथा मार्गे जजागार त[1]था स ना ।
शतं दायीव दायार्थे यावन्नादा[2]य्युपायनम् ॥ १३० ॥

१३०. यावदुपायनं रत्नादिढौकनं तेन नादायि कर्णा[15]य न दत्तं तावत्तेन यथा मार्गेजागार्युपायनरक्षार्थमुद्यतं तथा तत्रावासेपि[16] स ना जयकेशिनरो जजागार । यथा शतं द्रम्मादिशतं दायी दास्यन्नधमर्णो दायार्थे दानं दायो योर्थः कार्यं तस्मिन्[17] शतदानविषये जागर्ति ॥

१ प तवा स. २ प सी डी °दाग्युपा°. बी °दाघुपा°.

१ प °माक्षर्तिक त्वपट° २ प तमदिशश्च । क°. ३ ई °गा राजा. ४ ई °हद्दल. ५ ई °च्छनागा°. ६ प नागीन्ति° ७ ई °ति ॥ नाम्न° ८ वी शशीत्. ९ डी मक्षीणः । मा. १० डी °जंXX न किम्. ११ ई °नाम्रो° १२ प °वन्त्यिस्व° १३ प °लत् । मा. १४ प °च्छत्योन्त्य°. १५ प °य द°. १६ प °पि ना. १७ डी शते दा°.

अजागारि । जजागार । इत्यत्र ' जागुर्ञिणवि" [ ५२ ] इति वृद्धिः ॥

दाय । शतं दायी । अदायि । इत्यत्र "आत ऐः कृञ्चो" [ ५३ ] इत्यैन् ॥

किं जातिप्रजना जन्ययोग्या व(ब?)ध्या वे(व?)धोद्यतैः ।

इतीभान्वीक्षितुं राजा छन्नोगान्सह वेत्रिणा ॥ १३१ ॥

१३१. इभान्वीक्षितुं वेत्रिणा सह राजा कर्णेछन्नो वेपपरावर्तादिना गुप्तः सन्नगात् । कस्मादित्याह । किमर्मी इभा जातौ भद्रजातौ प्रजनो जन्म येषां ते जातिप्रजना. किं जात्यास्तथा किं जन्ययोग्याः सग्रामार्हास्तथा किं व(ब?)धोद्यतैर्बन्धनोद्यतैर्गजभिव(बं?)ध्या आलानयितु योग्याः किं सुलक्षणा इत्यर्थः । इति हेतोः ॥

यत्राजनि तदावासो गजव्यूहः स चावधि ।

तत्रारामविशद्राजा शमदोशमकात्मनाम् ॥ १३२ ॥

१३२. स्पष्ट. । किं तु अवधि बद्धः । अशमकात्मनां बलाद्यवलेपेनाशाम्यतां द्विपां शमदो दर्पभङ्गेनोपशमकः ॥

न जात्वशमि यैर्यश्चाजौ क्रीडाकाम्यरामि च ।

जयश्रीकामुकोपश्यत्तान् गजान्सोविरामकः ॥ १३३ ॥

१३३. मदोत्कटत्वाद्यैर्गजैर्जातु कदाचिदपि नाशमि सदा कुपित-

---

१ प वन्धोद्यतै । इतीभीन्वी° २ प °गा सह. ३ वी °चावधि. ४ प °शम यै°. ५ प °रापि च ६ प °त्तानाजानवि°. ७ ई °रामिक..

---

१ प °जागरि. २ प दाय । श° ३ सी °यीस°. ४ प. कृन्नाविलेत् ५ प °क्षित्री वे° ६ प °र्णच्छन्नो. ७ वी °र्हाया. ८ वी° तैवन्ध° ९ प °भिर्वृद्धा आ°. १० प हेनो ॥. ११ सी °वलोपे°. १२ प °दोदाभिङ्गे°. ई °दो दोर्भङ्गे°. १३ डी °भङ्गोप°. १४ प जैजातु

मेवेत्यर्थः । अत एव यैराजौ रणे क्रीडा रणकेलिरकामि च वाञ्छिता-रामि च युद्धेनाजौ क्रीडितं च रणे यैर्निर्व्यूढमित्यर्थः । तान् गजान्स कर्णोविरामको दर्शनादनिवर्तमानः सन्नपश्यद्यतो जयश्रीकामुकः ॥

व्यायामच्छेदकामेन तेनागामि लतागृहे ।
दृष्टा चागामुका श्रीर्नु काप्यायामकचक्षुषा ॥ १३४ ॥

१३४. तेन कर्णेन लतागृहेगामि गतं यतो व्यायामच्छेदकामेन खेदापनोदेच्छुना । तत्र च कापि नायिका श्रीर्नु रूपाद्यतिशयेन लक्ष्मीरिवागामुकागच्छन्ती तेन दृष्टा च । कीदृशा सता । आयामके तद्दर्शनाद्विशेषेण दीर्घीभवन्ती चक्षुषी यस्य तेन ॥

नानाम्यायामि हर्षाम्भोवाम्याचामि सुधेव च ।
उन्नामिकाभ्रुवस्तस्य दृशा निर्नामपक्ष्मणा ॥ १३५ ॥

१३५. तस्य कर्णस्य दृशाक्ष्णा नानामि न नीचैर्भूतम् । कीदृशस्य सतः । उन्नामिके अद्भुतरूपदर्शनेन विस्मेरत्वादुन्नमन्त्यावूर्ध्वीभवन्त्यौ भ्रुवौ यस्य तस्य । यतः किंभूतया । रूपदर्शनभङ्गभयान्निर्नामानि निर्नमनानि निमीलनरहितानीत्यर्थः । पक्ष्माणि यस्यास्तया । किं त्वायामि दीर्घीभूतम् । तथा हर्षाम्भ आनन्दाश्रु । अवामि च क्षरितं च यतः सुधेवाचामि सुखेदरूपावलोकनेनामृतमिवास्वादितम् ॥

---

१ सी °च्छेदिका°. २ ए लगागृ°. ३ ए डी दृष्ट्वा चा°.

---

१ ए °त्यथो ए°. २ सी डी रणे के°. ३ ई °रकका°. ४ ए कर्णोवि°. ५ बी °के उद्भु°. ६ ए °रत्वादुन्नर्मत्यावू°. ७ बी सी डी °स्तथा । किं. ८ ई किं त्वया°. ९ ई °भयान°. १० सी डी °श्रु । आचामि. ११ ए क्षरत. १२ ए °सखरू°.

वामाचामं सुधाचामकानां मेने चमं नृपः ।
पुलकोद्दामको दृष्ट्या तस्या लावण्यचामतः ॥ १३६ ॥

१३६. पुलकोद्दामको रोमाञ्चोद्भेदवान्नृपः कर्णः सुधाचामकानाममृतास्वादकानां देवाना चमं चम्यते चमः कर्मणि घञ् । भक्ष्यं सुधां वामाचामं प्रतिकूलजेमनं मेने । कस्मात् । तस्या नायिकाया दृष्ट्या दर्शनेन कृत्वा लावण्यचामतः सौन्दर्यास्वादाद्धेतो. । तल्लावण्यमास्वाद्यामृतमवाहीलयदित्यर्थः ॥

प्रजनाः । जन्य । अजनि । बध । वध्या. । अवधि । इत्यत्र "न जनवधः" [ ५४ ] इति न वृद्धिः ॥

शम । अशमक । अशमि । इत्यत्र "मोकमि°" [ ५५ ] इत्यादिना न वृद्धिः॥ कम्यादिवर्जनं किम् । कामेन । कामुक. । अकामि । व्यायाम । आयामक । आयामि । आरामे । अविरामकः । अरामि । निर्नाम । उन्नामिका । अनामि । आगामुकां । अगामि । वाम । उद्वामकः । अवामि । आचामम् । आचामकानाम् । आचामि ॥ आचम इति किम् । चमम् ॥ अन्ये तु सामान्येन निषेधमिच्छन्ति । चामतः ॥

यस्यां विश्रामकं चक्षुर्मनो विश्रमकं च मे ।
सा श्रीविश्रमभूः केयं कामविश्राममन्दिरम् ॥ १३७ ॥

---

१ ए °नृपके. सु°. २ ए भक्ष्य सु° ३ ई ततस्या. ४ ए °वण्याचा°. ५ ई °तमिवा°. ६ ए °लअदि°. ७ ए सी °जना । ज°. ८ ई अवधि. ९ ए न द्धिः. १० डी शम । अ°. ११ ए °मका । अ° १२ ई °त्यत्रामो°. १३ ए °द्धि ॥ काम्या° १४ सी °मुक । अ°. १५ डी °म । अया°. १६ डी° मि । अ°. १७ बी °का । आगा°. १८ ए सी डी ई °मक । अ°. १९ सी डी आचाम. २० सी °मत ॥.

यया चित्रप[1]टे व्यश्राम्यथ व्यश्रमि मे हृदि ।
दृक्पथं किल नि[2]नय तां निनायोद्यमं सरम् ॥ १३८ ॥

संशयोपरमायास्या रौमि रोरोत्वसावपि ।
[3]अस्याः सखी वा रोरौतु जुहोतु मम निर्णयम् ॥१३९ ॥

वितर्क्येति य[4]थो[5]र्णौति [6]ज्योत्स्नामू[7]र्णोति चन्दनम् ।
[8]ऊर्णोनोति मधू[9]र्णोनौत्यमृतं स तथाब्रवीत् ॥ १४० ॥

१३७–१४०. स कर्णस्तथा तेनाह्लादकत्वसंतापापहारकत्वशैत्यमाधुर्याद्यतिशयरूपेण प्रकारेणाब्रवीद्यथा यः प्रकारो ज्योत्स्नामू[1]र्णौत्याच्छादयति । अधः करो[2]तीत्यर्थः । तथा चन्दन[3]मूर्णोति तथा मधू[4]र्णोनोति । अत्यर्थमधः करो[5]तीत्यर्थः । तथामृतमू[6]र्णोनौति । किं कृत्वा । वितर्क्य । किमित्याह । यस्यामित्यादि । तत्राद्यः श्लोकः स्पष्टः । किं तु विश्रामकं सुखेन स्थास्नु । तथा यया नायि[7]क[8]या चित्रपटे व्यश्रामि स्थितमथ तथा यया मे हृदि व्यश्रम्युपितम् । किलेति संभावने । संभावयामि तां नायिकामहं दृक्पथं दृग्गोचरं निनय प्रापयं तथा

१ ए °पदे व्यश्राम्यन्व्यथश्र°. २ ए °नयिता. ३ सी ई अस्या स°. ४ ई यथौर्णौ°. ५ डी °थोर्णोति. ६ ई °तिज्योंत्स्ना°. ७ डी °मूर्णौति. ८ सी डी °र्णोनौति. ९ सी डी °र्णोनोत्य°.

१ ए सी डी ई °मूर्णोत्या°. २ सी °रोति । तथा ×××मृ°. ३ ए सी डी ई °मूर्णौति. ४ डी °धूर्णोनौति. ५ ए सी डी °रोति । त°. ६ डी °र्णोनोति. ७ सी डी नायक°. ८ ए °कस्या चि°.

किल स्मरमहमुद्यममुत्साहं निनाय कृतास्मरणे परोक्षात्र। तथास्या नायिकायाः कर्मणो यः संशयो मत्कर्तृकः संदेहस्तस्योपरमाय निवृत्तय उक्तगीत्या सर्शय्यमाणा(ना)या अस्या संदेहनिवृत्तय इत्यर्थः। रौम्यहं वदाम्यसावपि नायिकापि रोरोत्वित्यर्थं वदतु। अथ वास्याः सखी रोरौतु। ततो मम निर्णयं जुहोतु ददात्विति॥

विश्राम विश्रम। विश्रामकम् विश्रमकम्। व्यश्रामि। व्यश्रमि। इत्यत्र "विश्रमेर्वा" [५६] इति वा न वृद्धि॥

उद्यमम्। उपरमाय। इत्येतौ "उद्यमोपरमौ" [५७] इति निपात्यौ॥

निनय निनाय। इत्यत्र "णिद्वान्त्यो णव्" [५८] इति णव्वा णित्॥

रौमि। इत्यत्र "उत औद्" [५९] इत्यादिना-औः॥ अद्वेरिति किम्। जुहोतु। रोरोतु॥ केचिद्यङ्लुबन्तस्यापीच्छन्ति। रोरौतु॥

ऊर्णौति ऊर्णोति। इत्यत्र "वोर्णोः" [६०] इति वा-औः॥ अद्वेरित्येव। ऊर्णोनोति॥ यङ्लुबन्तस्यापीच्छन्त्यन्ये। ऊर्णोनौति॥

सुभ्रु त्वां मा स्म भीः प्रोर्णोत्स्वं प्रोर्णोर्मा स्म वा मयि।
तृणेढि संशयं मूर्तिः कुलं चोच्चैर्ब्रवीति ते॥ १४१॥

---

१ ए °भ्रु मा स्म भीः प्रोर्णो न मा स्म वा प्रोर्णोस्त्व म°. २ ए सी मूर्ति कु°.

---

१ सी नायका°. २ ए °काया क°. ३ ए ससय्य°. ४ सी डी °शयमा°. ५ ए °श्राम· विश्रम. । व्यश्रामक न्य°. ६ डी °य। एनौ. ७ डी निना°: ८ ए णदाणि° सी डी णवो णि°. ९ ए °होतु· । रो°. १० डी ऊर्णोति ऊर्णौति ११ ए °र्णो ऊ°. १२ ए °ति। अत्र°

१४१. हे सुभ्रु भीर्दृष्टपूर्वमदर्शनोत्था भीतिः कर्त्री त्वां मा स्म प्रोर्णोद्व्यापन् । मा स्म वा । वा समुच्चये । मा स्म च मयि विषये स्वमात्मानं त्वं प्रोर्णोराच्छादयेर्यथावस्थितमात्मानं प्रकटयेरित्यर्थः । यतस्ते मूर्तिराकृतिरेव संशयमद्भुतगुणत्वादिविषयं संदेहं तृणेढ्यपनयति तथोच्चैरुन्नतं कुलं वंशं ब्रवीति च । आकृतिरेव त्वदीयं स्वरूपं वंशं चोन्नतं वक्तीति तवात्मनोपह्नवो निरर्थक एव यत इत्यर्थः ॥

मा स्म प्रोर्णोत् । मा स्म प्रोर्णोः । अत्र "न दिस्योः" [ ६१ ] इति–औत्न ॥

तृणेढि । इत्यत्र "तृह आदीत्" [ ६२ ] इति–ईत् ॥

ब्रवीति । इत्यत्र "ब्रूतः परादिः" [ ६३ ] इति–ईत् ॥

बोभवीष्यप्सराः किं किं बोभोष्युद्यानदेवता ।
यच्चे वर्वर्ति लावण्यं दिव्यतां वावदीति तत् ॥ ४२ ॥

१४२. किं त्वमप्सरा देवी बोभवीष्यत्यर्थं भवसि किं वोद्यानदेवता बोभोषि । यस्माद्यत्ते लावण्यं वर्वर्त्यतिशयेन वर्तते तल्लावण्यं ते दिव्यतां स्वर्गभवत्वं वावदीति ॥

तौषि क्व वंशे काम्बेति स्तौषि ताततेति रौषि च ।
किं तवीष्यत्र कं वा संस्तवीषि न रवीषि किम् ॥ १४३ ॥

१४३. क्व वंशे तौषि वर्तसे । क्व कस्यां स्त्रियामम्बेति मातेति

१ ए °त्र किं वा सस्त°.

१ ए °रदृष्ट°. २ बी °मदर्श°. सी °मदर्श°. ३ ए °दयोर्य°. सी डी °दययथा°. ४ ए दिश्यो. इ°. ५ ए औन ॥ तृ°. ६ ए °यानम्बे°.

स्तौषि वर्णयसि । वदसीत्यर्थः[1] । तथा कस्मिंस्तातेति जनकेति रौषि[2] च वक्षि च । तथात्रास्मिन्स्थाने किं किमिति तवीषि वर्तसे कं वा पुरुषं संस्तवीषि परिचिनोषि कस्ते बन्धुरित्यर्थः । किं न रवीषि किमिति न किंचिद्ब्रवीषि ॥

बोभवीषि बोभोषि[3] । तवीषि तौषि । रवीषि रौषि । संस्तवीषि स्तौषि । इत्यत्र "यङ्तु°"[4] [६४] इत्यादिना वा-ईत्[6] ॥ क्वचिन्न स्यात् । वर्वर्ति ॥ क्वचिन्नित्यम् । वावदीति ॥

कुतो वाव्यथितेवासीरकार्पीरश्रु[1] यत्किल ।
किमासीद्दुर्लभः कोपि यस्तेकार्षीत्पदं हृदि ॥ १४४ ॥

१४४. कुतः कस्माद्धेतोस्त्वं वाव्यथितेवात्यर्थं दुःखितेवासीरभूः । ननु कथं मे[7] व्यथा त्वया ज्ञायते तत्राह[8] । अकार्षीरश्रु[9] यत्किलेति । किलेति सत्ये[10] । यदिति क्रियाविशेषणम् । यत्त्वमश्रु नेत्राम्ब्वकार्षीर्यत्त्वमरोदी-[11] रित्यर्थः । अथ[12] व्यथाहेतुं स्वयमेवाशङ्क्य पृच्छति । यस्ते हृदि चित्ते रूपाद्यतिशयेन पदमवस्थितिमकार्षीत् स किं कोपि युवा दुर्लभ आसीत् ॥

अकार्षीत् । अकार्षीः । आसीत् । आसीः । इत्यत्र "स°" [६५] इत्यादिना-ईत्[13] ॥

---

१ ए °सीचकार्पीरस्तु य°.

---

१ ए °सि । वेद°. २ ए °षि व°. ३ डी °षि । तौपि तवीपि । र°. ४ ए रवीपि. ५ वी यङतु. ६ ए सी ईत ॥ क°. ७ ए मे यथा. ८ वी °त्रा का°. ९ ए °रस्तु य°. १० ए °त्ये । यदि°. ११ ए °त्राम्बकार्येर्य°. १२ ए अच व्य°. १३ सी °त् ॥ XXX व पोढि°.

यच्चोलकमधास्तन्नाद्यापि कन्यात्वमत्यगाः ।
आर्तेवास्था यदत्र त्वं स्मरस्त्वां शरैरदात् ॥ १४५ ॥

१४५. यत्त्वं चोलकं कन्योचितं सर्वाङ्गीणकञ्चुकविशेषमधाः परिधानेनाधारयस्तज्ज्ञायते त्वमद्यापि कन्यात्वं नात्यगा नात्यक्रमीः । तथा यत्त्वमत्र शैत्यरम्यत्वादिसुखकारिसर्वगुणोपेतकदलीगृह आर्तेव पीडितेवास्थास्तज्ज्ञायते त्वां स्मरः शरैरदादखण्डयत् । अत्र हि स्थाने कामार्तिं मुक्त्वान्या पीडा न स्यादेवेत्यर्थः । एतेन मनोभीष्टः कोपि ते दुर्लभोस्तीति द्रढितम् ॥

अथ दुर्लभमेव नामादिना स्पष्टं पृच्छति ॥

सुभगं कं दृशापास्त्वं येन तेभूदृशेदृशी ।
अङ्गोष्माश्रूण्यधासीद्यच्छ्वासोधादधरच्छविम् ॥ १४६ ॥

१४६. त्वं कं सुभगं वल्लभं दृशापा अपिवः किं नामाद्युपेतं सुभगं त्वं सतर्षमपश्य इत्यर्थः । येन सुभगेन हेतुना ते तवेदृशी दशावस्थाभूद्यत्कि यदङ्गोष्माङ्गसंतापोश्रूणि नेत्राम्बून्यधासीदपाद्गण्डस्थलोपरि पतितान्यशोपयदित्यर्थः । यच्च श्वासो दुःखान्निश्वसनमधरच्छविं सरसत्वरूपामधरशोभामधादशोपयत् ॥

अथोद्यानसंभविनावन्यावपि व्यथाहेतू आशङ्क्य पृच्छति ॥

किं वा किंपाकमच्छासीरघ्रासीश्चेह दारुणम् ।
अच्छा अघ्रा अयुक्पर्णं वाथ यत्सुभ्रु दूयसे ॥ १४७ ॥

---

१ ए °त्वसत्य°. २ ए °दव त्व. ३ ए °सीप्चेह ४ ए यसुभ्रु.

---

१ बी डी °चितस°. २ ए °मधा प°. ३ ए °स्तद्जाय°. ४ बी डी °ते त्त्वम°. ५ ए °त्यरगा. ६ बी डी °पेते क°. ७ ए °मार्तमु.° ८ सी °ति ॥ इ°. ९ ए यदश्वा°.

१४७. वा यद्वेहोद्याने दारुणंमुग्रगन्धि किंपाकं विषवृक्षफलमेच्छासी रम्यत्वेन कौतुकादत्रोटयस्तथाघ्रासीश्च । वाथ यद्वायुक्पर्णं सप्तच्छदपुष्पमच्छा अघ्राश्च । हे सुभ्रु यत्त्व दूयसे कर्मकर्तरि प्रयोगोयम् । यत्त्वमेवमार्ताभवमीत्यर्थ । किंपाकफलाघ्राणं हि मूर्च्छाहेतुत्वेन सप्तच्छदपुष्पाघ्राणं चातिमदकत्वेन पीडके स्याताम् ॥

मा नरः शात्स्मरो मा स्म शासीव्याधिश्च मा स्म सात् ।

हृत्स्थो माधिश्च सासीत्त्वां ब्रूहीति विभज व्यथाम् ॥ १४८ ॥

१४८. व्यथां सुभगस्मरणादुत्थां पीडां ब्रूहि ततो विभज मय्यपि विभागेन स्थापय । व्यथा ह्युक्ता निर्मलाशयत्वात्सज्जने दर्पण इव संक्रामति । स्वव्यथा निवेदकस्य लघूस्याच्च । यदुक्तम् । निवेद्य दुःखं सुखी भवतीति । कुत इत्याह । हृत्स्थस्त्वद्धृदयवर्ती नरः सुभगस्त्वां मा शाद्दुःखोत्पादनेन मा तनूकार्षीत्तथा हृत्स्थः स्मरो मा स्म शासीत्तथा व्याधिश्च स्मरोत्थः किंपाकाद्याघ्राणोत्थो वा संतापादिस्त्वां मा स्म सान्मान्तं नैषीत्तथाधिश्च मानसी व्यथा च त्वां मा सासीदिति हेतोः ॥

अपाः । अत्यगाः ॥ दासंज्ञ । अदात् । अधाः । अभूत् । अस्थाः । अत्र "पिबैति°" [६६] इत्यादिना सिचो लुप् ॥

अधात् अधासीत् । अघ्राः अघ्रासीः । मा शात् मा स्म शासीत् । अच्छाः

१ ए °रः स्यात्स्मरो. २ सी शास्मरो. ३ ए °सीश्चाधि°. ४ डी स्म सात्.

१ ए °णसुग्र°. २ ए °मत्सासी. ३ डी रम्यत्वे°. ४ ए वाव य°. ५ डी °घ्राणे हि. ६ ए °ण हि मूर्छाहेतुत्वेन सप्तच्छदपुष्पाघ्राण चा°. ७ ए सी °युत्था पी°. ८ सी डी मयापि. ९ ए °स्यास्व । य°. सी डी °स्यात् । य°. १० वी °य दुरक सु°. ११ ए °कार्षं त्तथाद्वत्स्थ.. १२ ए °थाविश्च. १३ सी अत्य°. १४ सी पिबेत्या°. १५ बी °बैत्या°.

अच्छासीः[१] । मा स्म सात् मा[२] सासीत् । इत्यत्र "द्वेम्रा°" [६७] इत्यादिना वा सिचो लुप् ॥

अथ प्रथम[३]मा[४]शङ्कितं[५] कंचित्सुभगमेतेनापि स्त्रीरत्नेनाभिलष्यमाणतया धन्यं मन्यमानोसौ श्लोकद्वयेन स्तौति ॥

तीर्थेतत स किं दानमतनिष्ट तपः स किम् ।
अतनिष्ठा[१] रतिं यस्मिन्नुत्कण्ठामतथास्तथा[२] ॥ १४९ ॥

१४९. स सुभगस्तीर्थे गयादौ किं दानम[६]तत ददावित्यर्थः । तथा स किं तपोतनिष्ट चक्रे[७] यस्मिंस्त्वं रतिं मनःप्रीतिमतनिष्ठास्तथा यस्मिन्नुत्कण्ठामतथाः[८] ॥

वरं कस्यासनिष्टोमा हरोसातासत स्मरः ।
असनिष्ठा दृशं यत्र मनोसाथा यशोसथाः ॥ १५० ॥

१५०. उमा गौरी कस्य वरं प्रसा[९]दमसनिष्टादात्तथा कस्य हरो वरमसात तथा कस्य स्मरो वरमसत । यत्र नरे त्वं दृशमसनिष्ठा दर्शनायादास्तथा यत्र मनोसाथा अनुरागेणादां[१०] अत एव यत्र यशो रूपगुणाद्यतिशयोत्थां[११] कीर्तिमसथाः ॥

अतत[१२] अतनिष्ट[१३] । अतथाः अतनिष्ठाः[१४] । असत[१५] असनिष्ट[१६] । असथाः असनिष्ठाः । अत्र "तन्भ्यो[१७] वा°" [ ६८ ] इत्यादिना सिचो लुब्वा[१८] । तत्संनियोगे नणयोश्च[१९] लुप् ॥

---

१ बी अतिनि°. २ ए °सिम्नुत्कण्ठात°.

---

१ ए °च्छासी । मा. २ सी डी मा स सा°. ३ बी °ममा°. ४ ए °माशसित. ५ डी °त किंचि°. ६ ए °मनत. ७ ए चक्रो य°. ८ ए °तथा ॥. ९ ए °सामद°. १० डी °दात् म°. ११ ए °योत्था की°. १२ ए °तता अ°. १३ ए °निष्टः । अ°. १४ ए °निष्टा । अ°. १५ ए °सता अ°. १६ ए °निष्टः । अ°. १७ ए तभ्यो वा. १८ ए लुप्वा । त° १९ ए णवोश्च.

अमात असत । अमाधा' अमथा । अत्र "सनस्तत्रा वा" [ ६९ ] इति लुपि सत्यां वा-आत् ॥

कृथा मय्यप्रमादं मा विरुद्धा मेति वादिनि ।
भूपेऽकृत ह्रियं वक्तुं सोपारुद्ध सखीं भ्रुवा ॥ १५१ ॥

१५१. सा मयणल्ला ह्रियं लज्जामकृत । ततो भ्रुवा भ्रूसंज्ञया सखीं सन्निहितवयस्यां वक्तुमुपारुद्ध प्रेरितवती । क सति । भूपे कर्णे । किंभूते । मयि विप्रियेऽप्रसादं मा कृथा मयि मा विरुद्धा विरोधं मा कृथा इति वादिनि ॥

सख्यूचे त्वमभाषिष्ठा अभाषिष्ट यथा सुहृत् ।
इमामन्वग्रहीः पृच्छन्यच्च सत्सु चकाधि तत् ॥ १५२ ॥

१५२. सख्यूचे । हे महापुरुष त्वमिमां तथा भाषिष्ठा यथा सुहृन्मित्रमभाषिष्टावादीत् । यच्च यत्पुनः पृच्छन्कुलादिकं प्रश्नयन्निमां कन्यामन्वग्रहीः । अस्यां यत्त्वं प्रसादं चकर्थेत्यर्थः । तत्सत्सु सज्जनेषु त्वमेव चकाधि शोभस्व ॥

चकाध्यवहितः श्रोतासि चेदेषा हि नः सखी ।
अनया द्योतयामाहे कदम्बकुलमुज्ज्वलम् ॥ १५३ ॥

१५३. चेद्यदि त्वं श्रोतासि भवसि तदावहितः सावधानः संश्रकाद्धि शोभस्व सावधानो भवेत्यर्थः । एषा कन्या हि स्फुटं नोऽस्माकं

१ ए कृत्वा म°. २ डी °नि नृपे°. ३ ए सखी भ्रु°.

१ सी डी °साव अ°. २ डी सतस्त° ३ वी °तस्तवो. ४ ए °मुदारु°. ५ ए कर्मे । किं°. ६ ए °पये:प्र°. ७ सी °षास्तथा म°. ८ ए विरुद्ध मा कुद इ°. ९ ए °ख्यूचो । हे. १० ए °न्यायाम°. ११ ए चकार्येत्य°.

सखी। तथानयास्मत्सख्योज्ज्वलं निष्कलङ्कं कदम्बकुलं कदम्बाख्यवंशो द्योतयामाहे स्त्रीरत्नत्वेनाशोभ्यत ॥

दक्षिणा द्योतयामासे येन योऽब्धिमधुक्षत ।
अदिग्धादुग्ध[1] गां तस्य पुत्रीयं जयकेशिनः ॥ १५४ ॥

१५४. तस्य जयकेशिनो राज्ञ[2] इयं कन्या पुत्री येन दक्षिणा दिग् द्योतयामासे स्वामित्वेनाशोभ्यत तथा योऽब्धिमधुक्षत[3] प्रभुत्वाद्रत्नान्यक्षारयत्तथा[4] यो गां पृथ्वीमदिग्ध दिह उपचय इत्येके। न्यायपालनेनोपचितीचक्रे[5] तथादुग्ध रत्नान्यक्षारयच्च।

अदृष्टेष्टवरा नान्नमलीढाधुक्षताशयम्[2] ।
न्यगूढाकारमेषा को न यथा समधिक्षत[3] ॥ १५५ ॥

१५५. एषा कन्या दृष्टेष्टवरा सती तथान्नं नालीढ नाभुक्त तथैपाशयमिष्टवराप्राप्त्यसमाहितं चित्तं तथा महाकष्टेनाधुक्षत संवृतवती। तथैषाकारमिष्टवराप्राप्तिदुःखोद्भवं मुखविकारादि तथातिकष्टेन न्यगूढ यथा को न समधिक्षत न संदिग्धवान्। किं तु सर्वोऽप्येवंविधावस्थासौ किं जीविष्यति न वेति संदेहे[6] पपातेत्यर्थः ॥

नैषालिक्षत यत्तन्नालिक्षातां पितरावपि ।
सुखेदरिद्रीत्स्वजनोदरिद्रासीत्सखीजनः[4] ॥ १५६ ॥

१५६. यद्यस्मादेषा कन्या नालिक्षत नाभुक्त तत्तस्माद्धेतोः पितरा-

---

१ प अदुग्धा°. २ धी °म्। न्यगू°. ३ प °क्षता ॥. ४ डी °जना· ॥.

---

१ प °म्यास्पदं°. २ प राज १° ३ प योऽद्धिम°. ४ वी °धा १°. ५ डी °चिता च°. ६ प °हे पपाते°.

वपि नालिक्षा[1]तामत एव स्वजन एतद्बन्धुवर्गः सुखेदरिद्री[2]द्दरिद्रोभूत्सुखरहितोभूदित्य[3]र्थः । तथा सखीजनः सुखेदरिद्रासीत् ॥

उपारुद्ध । मा विरुद्धा । अकृत । मा कृथा[4] । अत्र "धुड्°" [ ७० ] इत्यादिना सिचो लुक् ॥ अनिट इति किम् । अभाषिष्ट । अभाषिष्ठाः ॥

अन्वग्र[5]हीः । इत्यत्र "इट ईति" [ ७१ ] इति सिचो लुक् ॥

चकाधि चकाद्धि । इत्यत्र "सो धि वा" [ ७२ ] इति सस्य वा लुक् ॥

असि ॥ हस्वेति । द्योतयामाहे । अत्र "अस्तेः सि हस्त्वेति" [ ७३ ] इ[6]ति सस्य लुगेकारे तु हः ॥ परोक्षाया एकारे नेच्छन्त्यन्ये । द्योतयामासे ॥

अदुग्ध अधुक्षत[7] । अ[8]दिग्ध समधिक्षत। अलीढ[9] अलि[10]क्षत । न्यगूढ अ[11]घुक्षत । इत्यत्र "दु[12]हदिह°" [ ७४ ] इत्यादिना सको लुग्वा ॥

अलिक्षाताम् । अत्र "स्व[13]रेतः" [ ७५ ] इति सकोस्य लुक् ॥

अदरिद्रीत् अदरिद्रासीत् । इत्यत्र "दरिद्रोद्यतन्यां वा" [ ७६ ] इत्यन्तस्य लु[14]ग्वा ॥

दरिद्रांच[1]क्रुषामन्तर्दरि[2]द्रामीति कोप्यदात् ।
कर्णरूपं लिखित्वास्या अदरिद्रायकोन्यदा ॥ १५७ ॥

१५७. कोपि चित्रकरोन्यदा कर्णरूपं लिखित्वास्याः कन्याया अदात् । कीदृक्सन् । दरिद्रांच[15]क्रुषामन्तर्द[16]रिद्राणां मध्ये दरिद्राम्यहं दरिद्रो[17]स्मीति हेतोरदरिद्रायको दरिद्रिण्यन्नीश्वरीभवितुमित्यर्थः ॥

---

१ प °चक्षुपा°. सी °चक्षपा°. २ डी °रिद्रोमी°.

---

१ प °क्षाता त. २ सी °द्रीभू° ३ प °त्यथा. । त°. ४ प °पिष्ट । अ°. ५ प सी °ग्रहीदित्य°. ६ प °ति तस्य. ७ डी °तम् । अ°. ८ प अली°. ९ सी °ढन् अ°. १० सी डी °क्षत । न्य°. ११ प अधुक्ष°. १२ प दुहिदुह. १३ वी हे °रे ह°. १४ प लुग्व ॥. १५ प °चक्षुष्वा°. १६ प °दलिद्रा°. १७ प °सी हे°.

एषादरिद्राणमुद्यददरिद्रायिका ददौ ।
तस्यातोदिदरिद्रासोर्न दरिद्रायिकाभवत् ॥ १५८ ॥

१५८. एषा कन्या यद्रव्यादि ददौ । कीदृक्सती । अदरिद्रायिको-दारा तथाविधमानं दरिद्राणं दारिद्र्यं यस्याः सा तथा मुत्कर्णरूपदर्श-नोत्थो हर्षो यस्याः सा तथा । अतस्तस्माद्दानाददिदरिद्रासोरीश्वरीवुभू-षोस्तस्य चित्रकृतो दरिद्रायिका दारिद्र्यं नाभवत् ॥

कान्तेरददरिद्रावद्रूपमेषाविभश्च तत् ।
न नाचकाः किं त्वचकादमुनेति न कोन्वशात् ॥१५९॥

१५९. तत्कर्णरूपमेषा कन्याविभश्चात्मपार्श्वेधारयच्च । यतः कान्तेः सौन्दर्यादिशोभायाः सकाशाददददरिद्रावददरिद्रितं परिपूर्णकान्तीत्यर्थः । ततश्चैतां को नान्वशान्नावदत् । कथमित्याह । हे कन्येमुना कर्णरूपेण कृत्वा त्वं न नाचका न नाशोभथाः किं त्वचकादत्यन्तं त्वमेवाशोभथा एवेत्यर्थ इति ॥

मां रुणो विरुणन्मा स्म मां भिनः संभिनत्स्म मा ।
वशं जङ्गमिता तेस्मीत्येषावावद्यत स्मरम् ॥ १६० ॥

१६०. कर्णरूपदर्शनेन स्मरपरवशत्वादेषा कन्या स्मरमेवावावद्यता-भीक्ष्णमवोचत् । कथमित्याह । हे स्मर त्वं मां मा स्म रुणो मा बाधि-ष्ठास्तथा मा स्म मां विरुणन्मा विद्विक्षस्तथा त्वं मां स्म मा मां स्म भिनो

---

१ प बी सी ई °द्रायका. २ सी डी °त् ॥ कर्ण°. ३ प °रुणोन्मा. ४ प °नत्समा.

---

१ प यद्रव्यदि. २ प बी सी ई °द्रायको°. ३ सी डी °द्राणा दा°. ४ प सी °द्रासोरी°. ५ बी °रीवभू°. ६ प °भूपास्त° ७ प कान्त सौ°. ८ सी °त्वा त्वमे°. ९ प °भयाः किं. १० प °भया ए°. ११ प ई °नि ॥ ना रु°. १२ प °रपवरश°. १३ प °षा कन्या. १४ डी °रमेवावाव°. १५ प °त्या हे°. १६ प मा साभि°.

वार्णैर्विदारयस्तथा स्म मा संभिनत्सम्यग्विदार्यो यतोस्म्यहं ते तव वशमायत्ततां जङ्गमिता कुटिलं गन्ता नृत्यन्ती [नृत्यं ?] करिष्यामीत्यर्थ इति ॥

कर्णे शाशयिताहे शाशय्यिताहेथ पावके ।
संमिधिष्यति समिधिष्यमाणेत्याग्रहीदियम् ॥ १६१ ॥

१६१. इयं कन्याग्रहीन्निर्बन्धं चक्रे । कथमित्याह । कर्णे कर्णसमीपेहं शाशयिताहेत्यर्थं स्वप्स्याम्येथाथ वा यदि कर्णसमीपे शयनं न स्यात्तदाहं सम( मि ? )धिष्यति प्रज्वलितत्वात्काष्ठान्यभिलषिष्यमाणे पावकेग्नौ शाशय्यिताहे । कीदृक्सती । संमिधिष्यमाणा । काष्ठतुल्यीभविष्यन्तीति ॥

संमिध्यिष्यति कामाग्नौ द्राक्संमिध्यिष्यते ह्यसौ ।
नान्यो भिषजिताात्रार्थे कर्ण एव भिषाज्यिता ॥ १६२ ॥

१६२. हि स्फुटमसौ कन्या समिध्यिष्यति काष्ठान्यभिलषिष्यमाण इव । अतिप्रज्वलिष्यतीत्यर्थः । कामाग्नौ द्राक्समिध्यिष्यते समिदिवाचरिष्यति । कामाग्निसंतापेनासौ भस्मसाद्भविष्यतीत्यर्थः । अत्रार्थे कामाग्निसंतापरोगविषयेन्यो न भिषजिता न चिकित्सिता । भिषँजिधातुः कण्ड्वादौ चिकित्सितार्थः । किं तु कर्ण एव भिषज्यिता ॥

दरिद्रांचक्रुपाम् । अत्र "अशिति" [ ७७ ] इत्यादिनान्तस्य लुक् ॥ अशितीति किम् । दरिद्रामि ॥ स्सनादिवर्जनं किम् । सनि । अदिदरिद्रासोः ॥

---

१ ए बी सनधि°. २ बी समध्यि°. ३ ए °क्समिध्येक्ष्यते.

---

१ सी डी गता नित्य क° २ ए °म्यथथ वा. ३ ए °धिष्टाति. ४ ए °शयिता°. ५ बी सी डी समधि°. ६ ए °कित्मता ७ ए °षजधा°. बी °षज्धा°. ८ बी सी डी °कितसार्थ ९ ए °शिशीत्या°. १० ए डी ई °मि । स्सनादि°. सी °मि । स्मना°. ११ सी डी °द्रासो ॥ ण°.

णकचि । अदरिद्रायकः ॥ "पर्यायार्ह°" [ ५.३. १२० ] इत्यादिना णके । दरिद्रायिका ॥ "णकतृचौ" [५.१.४८] इति णके । अदरिद्रायिका ॥ अनटि । अदरिद्राण ॥ केचिद्दरिद्रातेरनिटि कसावालोपं नेच्छन्ति । तन्मत इट् आम् चाभिधानाच्च स्याताम् । अददरिद्रावत् ॥

अन्वशात् । अविभ. । अत्र "व्यञ्जनाद्°" [ ७८ ] इत्यादिना देर्लुक् यथासंभवं धातुसस्य च दः ॥

अचकास्त्वम् अचकास्त्वम् । स्म मा भिनः स्म मा संभिनत् । मा स्म रुणः मा स्म विरुणत् । इत्यत्र "सेः सद्धां च रुर्वा" [ ७९ ] इति सेर्लुक् सकारदकारधकाराणां च वा रुः ॥

जङ्गमिता । शाशयिताहे । अत्र "योशिति" [ ८० ] इति यस्य लुक् ॥ शीङो (ङ ?) शयादेशे व्यञ्जनान्तता ॥ अन्ये तु लाक्षणिकव्यञ्जनान्तेभ्यो यलोपं नेच्छन्ति । तेन शाशय्यिताहे । तन्मतसंग्रहार्थं व्यञ्जनान्ताद्धातोर्विहितस्येति विहितविशेषणं कार्यम् ॥ अशितीति किम् । अवावर्धत ॥

समिधिष्यति समिध्यिष्यति । समिधिष्यमाणा समिध्यिष्यते । अत्र "क्यो वा" [ ८१ ] इति क्यन्क्यङोर्वा लुक् ॥ केचित्तु यकोपि लुग्विकल्पमिच्छन्ति । भिषजिता भिषज्यिता । तन्मतसंग्रहार्थं केनोपलक्षितो यः क्य इति व्याख्येयम् ॥

---

१ डी °द्राक.. २ ए कनृचौ अति. ३ ए °यिक । अनदि । द°. ४ ए सी डी ई °टि । ए°. ५ डी °रनटि. ६ डी आमचा°. ७ ए °णः मा स्म रुणः मा. ८ सी सेः स द्धा च. ९ ए शासवि°. १० ए °वच ॥ स°. ११ सी °ष्यते. १२ ए °मिधिष्य°. १३ ए °क्यो ष्यति. १४ ए °क्यनोर्वालुक्. १५ ए सी °तो य क्य. डी °तो य् क्य.

वरयित्रीमिमां कर्णं तद्देशेत्राटिटत्पिता ।
उपायनं प्रेपितवान् गजैरगणितैस्तथा ॥ १६३ ॥

१६३. तत्तस्माद्धेतो. । कर्णं वरयित्रीमीप्सन्तीमिमां कन्यामत्र देशे गूर्जरत्राया पिता जयकेश्याटिटत्प्रेषितवान्। तथागणितैरसंख्यातैर्गजैः सहोपायनं रत्नोपदां प्रेषितवान् ॥

वरयित्रीम् । अत्र "अतः" [ ८२ ] इत्यस्य लुक् ॥

आटिटत् । इत्यत्र "णेरनिटि" [ ८३ ] इति णेर्लुक् ॥ अनिटीति किम् । वरयित्रीम् ॥

अगणितै. । प्रेपितवान् । इत्यत्र "सेट्क्तयोः" [ ८४ ] इति णेर्लुक् ॥

स्पृहयालुः स्पृहयाय्यं वरयामास यं सखी ।
भूमण्डयन्तो घोषेण गदयित्नुर्न सोसि किम् ॥ १६४ ॥

१६४. स्पृहयालुरभिलापुका सती सख्यस्मद्वयस्या स्पृहयाय्यं स्पृहयालुं यं कर्णं वरयामासेप्सामास स त्वं कर्णः किं नासि। कर्ण एव त्वमित्यर्थः । यतः कीदृक् त्वम् । भूमण्डयन्तो रूपादिगुणातिशयेन पृथ्व्या भूषणम् । तथा महापुरुषत्वाद्घोषेण कृत्वा गदयित्नुर्मेघो मेघगम्भीरस्वर इत्यर्थः ॥

वरयामास । मण्डयन्तः । स्पृहयालुः । स्पृहयाय्यम् । गदयित्नु. । अत्र "आमन्त" [ ८५ ] इत्यादिना णेरयादेश ॥

---

१ ए °शेवाटि°.

---

१ ए °त्राया पिता के°. २ ए °वा तथागणितै° ३ ए °होपय°. ४ ए °टिवत् ५ ए डी °यालु य ६ डी °मासंप्मा°. ७ सी डी °यतो रू°. ८ ए °गुणोनि° ९ ए °यितुर्मे°. १० सी °यन्त । स्पृ° ११ ए °हयाय्यतोरू°. १२ ए बी सी °यित्नु । अ°.

नृपानवगणय्यान्यान्खेदं प्रापय्य नः सखी ।
कर्ण प्राप्य मनोत्रागादप्रमित्य वचोसि किम् ॥ १६५ ॥

१६५. नोस्माकं सख्यत्र गूर्जरत्रायामागात्[1] । कि कृत्वा । अन्यान्नृपानुद्वोढुमिच्छून् राज्ञोवगणय्यावज्ञाय । अत एव तान्खेदं प्रापय्य ततो मनः स्वचित्त कर्ण प्राप्य नीत्वानुरागेण कर्ण मनसि[2] कृत्वेत्यर्थः । तस्माद्वचोहं कर्ण इति वचनमप्रमित्याप्रतिदाय [3]किमसि किमिति तिष्ठसि । प्रतिवचनं दत्त्वेत्यर्थः ॥

अप्रमाय करं कर्णश्चेत्[1]स्मराजय्यतां भजेत् ।
अयशोक्रय्यमक्षय्यमेषा प्रक्षीय दास्यति ॥ १६६ ॥

१६६. चेत्[4]कर्णः करमप्रमायैतत्करग्रहणपूर्वं [5]स्वपाणिमदत्त्वैतामप[6]रिणीयेत्यर्थः । स्मराजय्यतां स्मरस्य कर्तुर्जेतुमशक्यतां भजेद्धैर्यातिशयात्स्मरेण जेतुमशक्यो यदि स्यादित्यर्थः । तदैषा कन्या प्रक्षीय विनश्यायशो दास्यत्यर्थात्कर्णस्य । किंभूतम् । अक्रय्यमकस्मादुपनतमित्यर्थः । अक्षय्यमनेकावदातैरपि क्षेतुमशक्यम् ॥

[7]अवगणय्य । इत्यत्र "लघोर्यपि" [ ८६ ] इत्यय् ॥
प्रापय्य प्राप्य । इत्यत्र "[8]वाप्नोः" [ ८७ ] इति [9]वाय् ॥
अप्रमित्य अप्रमाय । इत्यत्र "मेङो वा मित्" [ ८८ ] इति वा मित् ॥
प्रक्षीय । इत्य[11]त्र "क्षेः क्षी(क्षीः)" [ ८९ ] इति क्षीः ॥
अक्षय्यम्[12] । अजय्यताम् । अत्र "क्षय्य[13]जय्यौ[14]" [९०] इत्यादिना निपात्यौ ॥
क्रय्यम् । इति "क्रय्यः क्रयार्थे" [ ९१ ] इति निपात्यम् ॥

---

१ ए °श्वेत्सरा°.

---

१ ए °जरात्रा°. २ ए बी °सिकृत्येत्य°. ३ बी सी किमि°. ४ सी डी °त्करग्र°. ५ ए स्वप्राणि°. ६ डी °णीयो इ°. ७ ए बी डी अनव°. ८ ए °त्यव ल°. ९ बी वाप्नोतिरिति. १० ए वाइय्. सी वाडय्. ११ डी °त्र क्षः क्षी. १२ सी °म् । भजय्यम् । अ°. १३ ए °जयौ क्षय्य इ°. १४ बी °य्यौ क्षय्य इ°.

शृण्वत्यत्रात्सीदिति राज्ञि चिन्तासौ मे दिदीयानधृतिर्दिदीये ।
नाल्यः पपुस्त्वा[1]मवितास्मि कर्णः कष्टे हहो[2] तस्थिथ चेत्यथाह्वत् ॥ १६७ ॥

१६७. शृण्वति पूर्वोक्तमाकर्णयति राज्ञि कर्णे इत्येवंविधा चिन्तात्रात्सीदुवास । चिन्तामेवाह । असौ मयणल्ला दिदीयाना मद्वियोगेन क्षीणा धृति स्वास्थ्य यस्याः सा तथा सती मे मदर्थं दिदीये क्षीणा । अथैवं चिन्तानन्तरं मयणल्लामाह्वच्चावदच्च[1] । कथमित्याह । हे मयणल्ले । हहा खेदे । त्वं कष्टे[2] दुःखे तस्थिथ स्थितवती । परमाल्यः सख्यस्त्वां न पपुर्न ररक्षुर[3]धुनाहं कर्णस्त्वामवितास्मि रक्षिष्यामीति । इन्द्रवज्राछन्दः ॥

पाणिं ते व्यतिले नतभ्रु गुरवो यत्त्वामदुर्मे ततो
ग्लेयाद्भूपजनस्त्वदिच्छुरखिलो ग्लायाच्च दिव्यो जनः ।
धेयास्त्वं महिषीपदं मम[3] रतिं दध्या[4] विहेयास्त्रपां
निष्पेया[5] मधुपर्कमित्यभिदधत्तां पर्यणैषीन्नृपः ॥ १६८ ॥

१६८. नृपः कर्णस्तां पर्यणैषीत् । कीदृक्सन् । अभिदधद्वदन् । किमित्याह । हे नतभ्रु यद्यस्मात्ते गुरवः[4] पितरस्त्वां मे मह्यमदुस्ततस्तस्मादहं ते पाणिं[5] व्यतिले विनिमयेन[6] गृह्णामि । ततस्त्व[7]त्पाणिग्रहणानन्तरं त्वदिच्छुरखिलो भूपजनो ग्लेयात्क्षीणहर्षो भूयात्तथा त्वदिच्छुर्दिव्यो जनो देवौघो ग्लायाच्च । तथा त्वं मधुपर्कं[8] दध्ना संयुक्तं मधु निष्पेयाः । विवाहकाले हि वधूवरौ मधुपर्कं पिबत इत्याचारः । मत्पत्नी भूया इत्यर्थः । तथा महिषीपदं पट्टराज्ञीपदवीं धेया धार्या-

१ ए °पुस्त्वाम°. २ ए °हा वस्थि°. ३ ए मग र°. ४ ए देया वि°. ५ ए निष्फेया. बी निप्पेया.

१ ए °ह्वत् । अवदस्व क°. २ ए °ष्टे त°. ३ ए °रक्षताद्द. ४ ए गुरुवः. ५ ए ाणि व्य°. ६ सी डी विनम°. ७ ए तस्त्व°. ८ ई °पर्क द°.

स्तथा [1]त्रपां रतिकाले लज्जां विहे[2]यास्त्यज्या अत एव [3]रतिं सुखं देया इति । शार्दूलविक्रीडितं छन्दः ॥

गेयासं गीतैर्वा सुसूत्रेण [1]मेयासं स्थेयासं चाग्रेऽवसेया[2]स[3]मंहः ।
[4]अभ्यागात्तत्राथेति जेगीयमानं बन्धूनां स्त्रैणं कुङ्कुमापीतपा[5]र्ष्णि
॥ १६९ ॥

१६९. अथेत्यारम्भे । अथ विवाहारम्भकाले बन्धूनां [4]वधूवरस्वजनानां स्त्रैणं तत्रोद्वाहस्थानेऽभ्यागात् । कीदृग्जेगीयमा[5]नमत्यर्थं गायद्व[6]द्वा । किमित्याह । हे [7]वधूवरौ वां युवा[8]महं गीतैर्विवाहोचितगानै[9]र्गेयासं गायानि । तथाहं सुसूत्रेण सुष्ठु कुमारि[10]काकर्तितत्वात्त्रुटितत्वादि[11]शास्त्रो[12]क्तगुणोपेतत्वाच्छोभनं यत्सूत्रं तेन कृत्वा मेयासं [13]पुङ्खणं क्रियासमित्यर्थः । तथाहमग्रे लवणोत्तारणाद्यर्थं युवयोः पुरः स्थेयासं तथा[14]हमंहश्चक्षुर्दोषाद्युद्भवं पापं कष्टमित्यर्थः । अवसेयासं लवणा[15]द्युत्तारणेनान्तं नयेयमिति । तथावृत्त्या व्याख्याने [16]जेगीयमानं कुटिलं गच्छत्सलील[17]गामीत्यर्थः । तथा कुङ्कुमेनापीता आरक्ताः [18]पार्ष्णयो घुटिकाधोभागा अपि यस्य तत्कुङ्कुमपिञ्जरितसर्वाङ्गमित्यर्थः । एतेनास्या[19]विधवत्वोक्तिः । वै[20]श्वदेवी छन्दः ॥

---

१ ई मेषास. २ सी °समह । अ°. ३ ई °मह । अ°. ४ ए भभ्यगात्तथे° ५ ए °पार्ष्णिः ॥. ई °पाष्णि ॥.

---

१ ए त्रपा र°. २ बी सी डी °यास्त्याज्या ३ बी रतिसु°. ४ ई वरवधूस्व°. ५ ए °नमित्यर्थः गा°. ६ ई °दत् । कि°. ए °दद्य कि°. ७ ए वधौव°. ८ ए °महंगी°. ९ ए °सगीया°. सी °स गेया°. १० ई °काकीतितत्वात् त्रुटित्वादि° ११ ए °दिशोक्तो°. १२ ए °गुणापे°. १३ ए पुखण. सी पुस्वण. १४ ए °हमहचक्षु°. १५ बी सी °णादुत्ता°. १६ ई °गीअमा°. १७ ई °गामित्य°. १८ ए पाष्णयो. १९ ई °विधिवत्वोक्तिः. २० ई °वी छं ॥.

तेष्ठीयेते तौ स पेपीयमानौ दृष्ट्यान्योन्यं धाम देधीयमानौ ।
देदीयन्तेर्थानमेमीय्यमानान्स्मात्माश्चाचारानसेपीयमाणाः ॥१७०॥

१७०. धामोद्वाहसंवन्धोत्थं श्रीविशेषं देधीयमानावत्यर्थं विभ्रतौ तौ वधूवरौ तेष्ठीयेते स्मात्यर्थं स्थितौ । कीदृशौ सन्तौ । दृष्ट्या कृत्वान्योन्य पेपीयमानावत्यर्थं पिवन्तौ । तारामेलकं कुर्वाणावित्यर्थः । तथाप्ता वधूवरयोः प्रत्ययिताः स्वजना अमेमीय्यमानानत्यर्थमसंख्यानर्थान्द्रव्याणि देदीयन्ते स्मात्यर्थमन्योन्यं वितेरुर्यत आचारान्दानादीनि विवाहकर्माण्यसेपीयमाणा अत्यर्थमविनाशयन्तः । शालिनी छन्दः ॥

जेहीयन्ते ये मदं नैव येद्रीन्मामायन्तेङ्गैरहीनैर्गजांस्तान् ।
चौलुक्यः संवन्धिभिर्दीयमानानादायाथामीयमानांश्चचाल
॥ १७१ ॥

१७१. अथ विवाहविध्यनन्तरं चौलुक्यः कर्णश्चचाल । किं कृत्वामीयमानानप्रतिदीयमानांस्तर्था संवन्धिभिः श्वशुरवर्गलोकैर्दीयमानांस्तान् गजानादाय ये मदं नैव जेहीयन्ते नात्यर्थं परिहरन्ति न कदापि मदरहिता इत्यर्थः । तथा येहीनैश्चत्वारिंशद्वर्षत्वेन परिपूर्णैरङ्गैः कृत्वाद्रीन्मामायन्तेत्यर्थं मिमते येद्रिप्रमाणाङ्गा इत्यर्थः ॥

अमीयमानैरविपीयमाणैर्निधीयमानैः पथि पौरलाजैः ।
आस्थीयमानः स नवोढवध्वा तया सहोच्चैर्निजहर्म्यमागात्
॥ १७२ ॥

१७२. स कर्णस्तया नवोढवध्वा सहोच्चैरुन्नतं निजहर्म्यमागात् । कीदृक्सन् । पौरलाजैर्नागैराक्षतैः पथ्यास्थीयमान आश्रीयमाणः । किं-

---

१ प °नौ । दिदी°. २ प °र्थानिमे°. ३ ई °राम्रसे°. ४ प वी सी °माणा ॥. ५ प °न्मानाय°. ६ प °नैगजा°. ७ प °लुक्य स° ८ प °भिदीय°. ९ प °चालः ॥ अ°.

---

१ सी °न्धोत्थश्री°. २ वी °यिता स्व°. ३ प °र्थंस°. ४ प °ख्यामर्था°. ५ डी °नान्प्र°. ६ ई °थाXXXयेहीनैश्च. ७ प °वगलो°. सी °वर्गलो°. ८ सी डी ये गजा म°. ९ वी सी डी °गरिकाक्ष°.

भूतैः । अमीयमानैरसंख्यैरविपीयमाणैः प्रचण्डवातादिनाविनाश्यमानै-र्निधीयमानैर्निक्षिप्यमाणैः[2] ॥

अवात्सीत् । इत्यत्र "सस्तः सि" [ ९२ ] इति सस्य तः ॥

दिदीये । दिदीयान । इत्यत्र[3] "दीय्°" [ ९३ ] इत्यादिना दीय्[4] ॥

पपुः । आह्वत् ॥ इट् । तस्थिथ ॥ एत् । व्यतिले ॥ पुस्[6] । अदुः । इत्यत्र "इडेद्[7]°" [ ९४ ] इत्यादिनातो लुक् ॥

ग्लेयात् ग्लायात् । अत्र "संयोगा°" [ ९५ ] इत्यादिना वा-एत् ॥

गेयासम्[8] । निष्पेयाः । स्थेयासम् । अवसेयासम् । दासंज्ञ[10] । देयाः । धेयाः ॥ मेयासम् । विहेयाः[11] । अत्र "गापा°" [ ९६ ] इत्यादिना-एत्[12] ॥

गै गौङ्[13] । जेगीयमानम्[14] । गीतैः ॥ पा । पेपीयमानौ । आपीत[15] ॥ स्था । आस्थीयमानः । तेष्ठीयेते[16] ॥ सो । अविपीयमाणैः । असेपीयमाणाः ॥ दासंज्ञ[17] । दीयमानान्[18] । देदीयन्ते । निधीयमानैः[19] । देधीयमानौ[20] ॥ मा इति मामाङ्मेङां त्रयाणां ग्रहणम्[21][22] । मा माङ् । अमीयमानैः । अमेमीय्यमानान्[23] ॥ मेङ् । अमीयमानान् । हाक् । जेहीयन्ते । अहीनैः । अत्र "ईर्व्यञ्जनेयपि"[24] [९७] इति-ईः ॥ मातेर्नैच्छन्त्यन्ये । मामायन्ते । अयपीति किम् । आदाय ॥ उपजातिश्छन्दः[25] ॥

॥ इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तौ नवमः सर्गः ॥

---

१ ई °माणैर्नि°. २ सी डी °णैः ॥ आवा°. ३ ई °त्र देयील्या°. ४ प दीया ॥ प°. ५ प °स्थिथा ॥ ए°. ६ प पुरु । अ°. ७ प ई °डेत्या°. ८ सी गेयाः । से°. ९ प °यासाम्. १० प °सज्ञः । दे°. ११ प °हेया । अ°. १२ प °त् । गौगाङ्वी । जगी°. डी °त् । गैगा°. १३ ई गाङ्च । जे°. १४ प °मानाम्. १५ प °पीता ॥ स्था. १६ प °ते ॥ सौ । अ°. १७ प °सज्ञा । दी°. १८ ई °न् । दिदी°. १९ प ई °मानौ । दे°. २० प ई °मानैः ॥ मा. २१ प °हणाम् । मोमोङ्वा ।. २२ सी °म् । माङ्वा. २३ सी डी °न् । हा°. २४ प बी ईव्यञ°. २५ बी सी डी ई° तिश्छन्दः.

# द्व्याश्रयमहाकाव्ये

## दशमः सर्गः ।



जेघ्रीय्यमाणोरुयशा[1] नृपः सा दे[2]ध्मीय्यमानैकसतीव्रता च ।
जेघ्रीत उच्चैः शिवयोः श्रियं स जाघ्रीत[3] आभां[4] स च विष्णुलक्ष्म्योः ॥ १ ॥

१. नृपः कर्णः सा च मयणल्ला च शिवयो[2]र्हरगौर्यो[3]रुच्चैरतिशयि[4]तां श्रियं शुभसंबन्धरूपां शोभां जे[5]घ्रीतः स्मात्यर्थं जिघ्रतः स्म । जगृहतुरित्यर्थः । तथा विष्णुलक्ष्म्योराभां च जाघ्रीतः स्म । कीदृग्नृपः । जेघ्रीय्यमाणं सुरभित्वादत्यर्थं लोकैराघ्रायमाणम् । संकी[6]र्त्यमानमित्यर्थः । उरु महद्यशो यस्य सः[7] । सा च कीदृशी । दे[8]ध्मीय्यमानं निर्मलत्वा[9]ल्लोकैरत्यर्थं संकीर्त्यमानमेकमसाधारणं सतीव्रतं यस्याः सा ॥

जेघ्रीय्यमाण[10] । देध्मीय्यमान[11] । इत्यत्र "घ्राध्मोर्यङि" [ ९७ ] इति-ईत् ॥ यङीति किम्[12] । जाघ्रीतः । अत्र "एषामीर्व्य[13]ञ्जनेदः" [ ४ २.९८ ] इति-ईः ॥ अ[14]न्ये यङ्लुप्यपीच्छन्ति । जेघ्रीतः ॥ सर्गेस्मिन्नुपजातिश्छन्दः ॥

---

१ प °घ्रीयामा°. बी °घ्रीयमा°. २ ई देध्मीय्य°. ३ प आभा स. ४ सी °भां सि च. डी °भां स च.

---

१ ई सा म°. २ प °योर्हर°. ३ बी °शयतां. ४ प °यिन श्रि° ई °यिता श्रि°. ५ प जेघ्रीःत सा°. ६ प °कीर्यमा°. ७ प स. । स च. ८ ई देध्मीय्य°. ९ प °ल्लोकैर°. १० प बी °माणा । दे°. ११ सी डी °ध्मीयमा°. १२ प °म् । जोघ्री°. १३ प °मीन्यञ्ज°. १४ प अङ्के य°.

जेघ्नीयते यां न हि नो जघानं तां मे प्रजां जङ्घनिता नु कोपि।
आसीदमूनोरिति धैर्यघाती नृपस्य चिन्ताकुलिशाभिघातः ॥ २ ॥

२. धैर्यघाती धैर्यं व्यसनेप्यकातर्यं तद्विनाशी नृपस्य कर्णस्य चिन्ताकुलिशाभिघातश्चिन्तैवातिदुःखकत्वाद्वज्राघातोभूत् । कथमित्याह । तां मे ममासूनोर्निष्पुत्रस्य सतः प्रजां लोकम् । नु इति संभावने । संभावयेहं कोपि जङ्घनिता मत्तोनन्तरं कुटिलं गमिष्यत्यभिषेणयिष्यतीत्यर्थः । अत्यर्थं हनिष्यति वा । यां न हि नैव कोपि जेघ्नीयतेत्यर्थं हिनस्ति न जघानं वेति ॥

योनेशदाघानि मया स नाजौ नश्यामि नो नाप्यनशं स्वयं च ।
परस्त्रियो नाश्वमवोचमास्थं कथं न्वपप्तं विप्लुतत्वदुःखे ॥ ३ ॥
त्वमात्मजेनाभ्युदियाः प्रतीयास्तत्स्पर्शसौख्यं प्रतियाः प्रमोदम् ।
मयीत्यसंशय्य समुह्यते स्म यैर्ध्यानशय्यैस्तदु किं नु शेते ॥ ४ ॥
मां संततीयन्नधियासमास्तूयासं शुचीभूय भृशायमानः ।
चेचीयमानः परिचीयमानं वल्गूयदोजास्तदहं समाधिम् ॥ ५ ॥

१ सी डी जेघ्नीय°. २ प हि भोज°. ३ प °न ता मे. ४ सी °ता न को°. ५ सी डी °नोरति. ६ ई °कुलशा°. ७ प °नि यमा स. ८ ई °भ्युदयाः. ९ प °तिया प्र°. १० प यद्धानशय्योथर्त्कि नु. ११ ई शेतम् ॥ मा. १२ प °न्न--स°. १३ बी °समास्तू°. १४ प °मान प°. १५ प °स्तमह. १६ प °धि ॥ मा°.

१ प °कातर्यं तद्वि°. २ ई °कुलशा°. ३ प °द्वजाघा°. ४ प °नोनिष्पु°. बी °नोनिष्पुत्र°. ५ ई °र्नित्पुत्र°. ६ प °तामुत्तो°. ७ बी °णयषती°. ८ प न दि नै°. ९ प सी डी जेघ्नीय°. १० बी ई °न चेति.

मात्रीयतामापदि यात्र मात्रीयतेऽथ[1] मात्रीभवति क्रियाभिः[2] ।
क्रियात्कृपामह्रियमाणभक्तेर्जेह्रीय्यमाणा[3] तपसाद्य सा मे ॥ ६ ॥
इत्थं सुतीयन्स वितर्क्य[4] दीप्रीकृतैर्दिवाभूतनिशं प्रदीपैः ।
श्रीवेश्म मालीकृतकेतु यातोदन्याशनायो विधनाय आपत्[5] ॥७॥

३–७. स कर्णः श्रीवेश्म लक्ष्मीदेवताभवनमापत्प्राप[2] । कीदृक्सन् । सुतीयन्पुत्रमिच्छन्नत[3] एव याते विगते उदन्याशनाये[4] भोजनेच्छोदकेच्छे[5] यस्य सः । तथा विगता[6] धनाया[7] धनेच्छा यस्य स निर्लोभश्च । कीदृशं श्रीवेश्म । दीप्रीकृतैः प्रज्वालितैः प्रदीपैः कृत्वा दिवाभूता[8] दिवसीभूता निशा यत्र तत् । तथा मालीकृतकेतु पङ्क्तीकृतध्वजम् । किं कृत्वा । वितर्क्य । कथमित्याह[9] । आजौ रणे योनेशन्नष्टः स मया नाघानि न हतस्तथाहं स्वयं[10] चाजौ नो नश्यामि नाप्यनशं न नष्टस्तथाहं परस्त्रियो[11] नाश्वं नागमं नावोचं[12] नालपं[13] न चास्थं सतीत्वेन मद्वचोमन्यमाना नाह तिरश्चक्रे । नष्टप्रहारादीनि क्षात्रधर्मबाधकानि महापापानि मया न कृतानीत्यर्थः । ततो नु इति संशये । संशयितोस्मि कथमहं[14] विसुतत्वदुःखेपुत्रत्वकष्टेपप्तं पतितः । तथा ध्यानमेव सदा विश्रामसुखहेतुत्वाच्छय्या येषां तैर्योगिभिरसंशय्य सम्यग्ज्ञानेन[15] निश्चित्य मयि विषये यत्समुह्यते स्म चिन्तितम् ।

---

१ ए °तेस मा°. २ ई °भिः । कृया°. ३ ए °क्तेयेह्री° ४ ए °तर्का दी. ५ सी डी °त् । पञ्चभिः कुलकम् । स.

---

१ बी °तामुव°. २ ए °त्प्राप् । कीदृन्. ३ सी डी °यत्पुत्र°. ४ ए °न्याराना°. ५ ए बी °दकोच्छे. ६ ए °ता या ध°. ७ ई °नाय ध°. ८ ए दित्वाभू°. ९ बी °मिथ्याह. १० ई °य आजौ. ११ ए परिस्त्रियो. १२ बी °भ नोवाच. १३ ए नालप न. १४ सी °ह वसु°. १५ ए °म्यग्जाने°.

कथमित्याह । आत्मजेन पुत्रेण कृत्वा त्वमभ्युदिया अभ्युदितपुत्रो भूया इत्यर्थः । तथा[1] तत्स्पर्शसौख्यं[2] पुत्रस्पर्शसुखं प्रतीया अनुभवे[3]-जीर्वेन्पुत्र[4]सुखं[5] पश्येरित्यर्थः । तथा प्रमोदं पुत्रराज्याभिषेकाद्युद्भवं हर्षं प्रतिया इति । उ इति संबोधने । तत्[6]किं नु शेते यन्नाद्यापि पुत्रो भवतीत्यर्थः ॥ तत्तस्माद्धेतोरहं वल्गूयच्छोभनमोजः सत्त्वं यस्य सोतिसात्त्विकोत एव शुची[7]भूय बाह्याभ्यन्तरमलप्रक्षालनेन निर्मलीभूय परिचीयमानमभ्यस्य[8]मानं समाधिं[9] चित्तैकाग्र्यं चेचीय[10]मानोत्यर्थं पोष-यन्[11]सन्मां लक्ष्मीदेवतामधियासं संस्मर्यासमास्तूयासं संकीर्तयेयम्। यतः कीदृशोहं संततीयन्संततिमिच्छंस्तथा भृशायमानः संततिप्राप्तौ त्वर-माणः । तथात्र जगति या लक्ष्मीरापदि मात्रीयतां मातरमिच्छतां नृणां क्रियाभिः पालनपोषणा[12]दिभिः कृत्वा मात्रीयते मातेवाचर[13]त्यथ[14]वा मात्रीभवति जनन्येव स्यात् सा लक्ष्मीर्ह्याह्रियमाणभक्तेर्नि[15]श्चलभ-क्तेर्मे मम तपसा जेह्रीय्यमाणात्यर्थमावर्ज्यमाना सती कृपां दयां क्रियान्ममैवेत्थम् ॥

जेघ्नीयते[16] । अत्र "हनो[17] घ्नीर्वधे[18]" [ ९९ ] इति[19] घ्नीः ॥ वध इति किम् । गतौ जङ्घनिता ॥ केचिद्धन्तेर्वधे घ्नी-आदेश[20] बाहुस्तन्मते वधार्थेपि जे[21]घ्ननितेति स्यात् ॥

अभिघातः । धैर्य[22]घाती । इत्यत्र[23] "ञ्णिति घात्" [ १०० ] इति घात् ॥ अघानि । जघान । इत्यत्र "ञिणवि घन्[24]" [ १०१ ] इति घन् ॥

---

१ ई °था स्तत्स्प°. २ सी °सौत्यर्थः । तत्त°. ३ ए °वेजीर्वन्पु°. ४ बी डी °वत्पुत्र°. ५ ए ई °त्रसुख. ६ ए तत्क नु. ७ ए° चीय. ८ डी °मस्य°. ९ सी °माधिं. १० बी °यमनो°. ११ ई °न्समां ल°. १२ ए °णा मा°. १३ बी °चरित्य°. १४ डी °त्यथ°. १५ बी °निश्चिल°. १६ ई °यत । अ°. १७ ए °नोघ्नी वधे. १८ बी घ्नीवधे. १९ ए °ति घ्नी ॥ व°. बी सी डी °ति घ्नी ॥ व.° २० ए °श चाहु°. ई °श नाहु°. २१ बी जघनि°. २२ ए ई धैर्यघा°. २३ ए °त्र ञिणति. २४ ए घञ् इ°.

अनेशन् अनशम्। अत्र "नशेर्नेश्वाङि"[1] [ १०२ ] इति वा नेश्[2]॥ अङीति किम्। नश्यामि॥

अश्वम्। आस्थम्। अवोचम्। अपप्तम्। अत्र "श्वयति°" [ १०३ ] इत्यादिना श्व-अस्थ-वोच-पप्ता[3]॥

शेते। अत्र "शीङ एः शिति" [ १०४ ] इत्येत्॥

असशय्य। ध्यानशय्यै[4][5]। अत्र "क्ङिति यि शय्"[6] [ १०५ ] इति शय्॥

समुह्यते। अत्र "उपसर्गाद्°" [ १०६ ] इत्यादिना ह्रस्वः॥

अभ्युदियाः। अत्र "आशिषीणः" [ १०७ ] इति ह्रस्वः॥ ननु प्रतीयाः इत्यत्र समानलक्षणे दीर्घे सति कथं न ह्रस्वः। न। दीर्घे सत्युपसर्गात्परस्येणोऽभावात्। केचिदत्रापीच्छन्ति। प्रतियाः॥ इकोपि समानदीर्घत्वमिच्छन्त्येके। अधियासम्[7]॥

च्वि। शुचीभूय॥ यङ्। चेचीयमानः॥ यक्। वल्गूयत्॥ क्यन्। संततीयन्॥ क्यङ्। भृशायमानः॥ क्य। परिचीयमानम्[8]॥ आस्तूयासम्। अत्र "दीर्घश्च्वि°"[9] [ १०८ ] इत्यादिना दीर्घः॥ बहुवचनात्क्यशब्देन क्यन्क्यङ्[10] क्यङ्च्य(?)क्यानामविशेषेण ग्रहणम्॥

मात्रीभवति। जेह्रीय्यमाणा[11]। मात्रीयताम्[12]। मात्रीयते[13]। अत्र "ऋतो री'(री.)' [ १०९ ] इति[14] रीः॥

क्रियाभिः। अह्रियमाण। क्रियात्। इत्यत्र[15] "रिः श°" [ ११० ] इत्यादिना रिः॥

---

१ ई °शेर्नेश्वा°. २ प नेश॥ अ°. ३ प सी °पप्ता॥ शे°. ४ प °नशाय्यैः. ५ ई °शय्यै। अक्रि°. ६ वी यि शिय् ७ प ई °म्। च्वि। शु°. ८ प सी डी °म्। अ°. ९ प °दीर्घश्च्वि ई°. १० प क्यच्क्य°. ११ सी डी °ह्रीयमा°. १२ प सी °ता। मा°. १३ डी °यन्ते। अ°. १४ प वी सी ई °ति री॥ क्रि°. १५ प °त्यत्र रिःशदित्या°.

दीर्[१]घ्रीकृतैः। मालीकृत। इत्यत्र "ईश्च्वौ°" [ १११ ] इत्यादिना-ईः ॥ अनव्ययस्येति[२] किम्। दिवाभूतं[३] ॥

सुतीयन्। इत्यत्र "क्यनि[४]" [ ११२ ] इति-ईः ॥

अशनायोदन्याधनायाः[६][७]। "क्षुत्तृड्°" [ ११३ ] इत्यादिना निपात्या ॥

**तत्रावृषस्यन् गुरुणाप्यनश्वस्यता रहोध्यापितलक्ष्मिमन्त्रः।**
**वारिस्यतां विस्मयमप्यवार्यस्यंस्तापसानां नृपतिस्ततान ॥ ८ ॥**

८. तत्र श्रीवेश्मनि नृपतिः कर्णोवार्यस्यन्वार्यपि[८] पातुमनिच्छंन्सन्वा[९][१०]रिस्यतां वारि पातुमिच्छतां तापसानामपि। अपिरत्र योज्यः। आस्तामन्येषामित्यप्यर्थः। विस्मयमाश्चर्यं[११] ततान चक्रे। कीदृशः। अवृषस्यन्। वृषं[१२] मैथुनमनिच्छन्। तथा गुरुणापि मन्त्राचार्येणाप्यनश्वस्यताश्वं मैथुनमनिच्छता सता रह एकान्तेध्यापितलक्ष्मिमन्त्रः पाठितलक्ष्मीदेवतामन्त्रः ॥

अवृषस्यन्। अनश्वस्यता। इत्यत्र "वृष°" [११४] इत्यादिना[१३] सो(स्सो?)न्तः ॥

वारिस्यताम्[१४]। अवार्यस्यन्। इत्यत्र "अस्[१५] च लौल्ये" [ ११५ ] इति सो(स्सो?)स् चान्तः ॥

पञ्चदशः पादः संपूर्णः ॥

---

१ प दीघ्रीकृ°. २ प °नाई ॥ अ°. ३ प °व्ययः। स्ये°. ४ प °त ॥ स्तुती°. ५ प सी क्यति इ°. ६ बी °दन्यध°. ७ प बी सी °नाया। क्षु°. ८ प °न्वापि. ९ बी °च्छन्वा°. १० प °न्सस्वारि°. ११ प °मामनि°. १२ बी वृप मै°. १३ प इण्णादि°. १४ प °ता। अ°. १५ प °स् चालोल्यति.

न पर्यभूत्कं चने न व्यवोचज्जपाक्षरं स्मास्ति रहो ब्रुवाणः ।
स्त्रीणां समाजे समजे त्वजानां विवाय दृष्टिं स वशी न जातु ॥९॥

९. स कर्ण उपशमिततमोगुणत्वेन कं चन शत्रुमपि न पर्यभून्न न्यक्कृतवांस्तथा कं चन न व्यवोचन्न विरुद्धं भाषिवांस्तथोपशमितरजोगुणत्वाद्वशी जितेन्द्रियः सन्सोजानां छागीनां समजे नु समूह इव स्त्रीणां समाजे वृन्दे जातु दृष्टिं न विवाय रागेर्ण न चिक्षेप किं तु रह एकान्ते जपाक्षरं जापवर्णं मन्त्रं ब्रुवाण उच्चारयन्नस्ति स्म तस्थौ ॥

स द्विट्स्मज्यां तनुगां प्रवेतांहः प्राजिता प्राजनवत्तपोभिः ।
द्राक्प्रावयण्यं कलयद्भिरब्जैर्विघ्नान्प्रवेतुं श्रियमर्चति स्म ॥ १० ॥

१०. स कर्णोब्जैः कृत्वा श्रियमर्चति स्म । किंभूतैः । विघ्नानन्तरायान्प्रवेतुं क्षेप्तुं प्रावयण्यं तोत्रदण्डता कलयद्भिर्धारयद्भिः। सौरभोतिशयेन विघ्नविनायकानां वशीकारित्वाद्विघ्नक्षेपदक्षैरित्यर्थः । कीदृक्सन् । प्राजनवत्तोदनतुल्यैरतितीक्ष्णैरित्यर्थः । तपोभिः कृत्वा तनुगामन्तरङ्गां द्विट्स्मज्यां कामाद्यरिषड्कसभां द्राक्प्रवेता क्षेप्तात एवांहः पापं प्राजिता ॥

---

१ ए °र्यभुक्त च. २ ए न च व्य°. ३ डी °जे त्वजा°. ४ ए विचार्य दृष्टिं स. ५ ए जातुः ॥ स. ६ डी प्रवार्ता°. ७ ए °क्प्राचवण्य. ८ ए °रद्धैर्वि°. ९ ए °मर्थति

---

१ बी °ना छगी°. २ ए °जे वन्दे. ३ ए विवरनवविर्मेणचि°. ४ सी डी °ण चि°. ५ ए °न्ते पा° ६ सी °वर्णं म°. ७ ए °न्त्र ब्रुवा°. ८ ए °यन्वस्ति स तस्थौ. ९ ए र्णोब्जैकृ°. १० ए °मर्थति. ११ ए °यद्भि । सौ°. १२ डी °भाविजये°. १३ ए °द्विस्रक्षे°. १४ ए °रत्ता द्वि°. १५ ए एवाहः.

क्शाता न हि प्राजितुमप्यनिष्टख्यातारमों[1] ब्रह्म स किं नु चक्शे ।
ब्रह्मा न चख्शे मुरजिन्न चख्ये न चाचचक्षे[2][3] च यथेन्दुमौलिः
॥ ११ ॥

११. स कर्ण उपशान्तत्वादनिष्टख्यातारमप्यप्रियवक्तारमपि नरं प्राजितुं निराकर्तुं न हि नैव क्शाता वक्ता किं तु ब्रह्म परमध्येयमोमो[1]ङ्कारं तथा चक्श उच्चारितवान् यथा ब्रह्मा न चख्शे[2] यथा[3] मुरजिद्विष्णुर्न[4] चख्ये यथेन्दुमौलिश्च हरश्च नाचचक्षे ॥

पर्यभूत् । व्यवोचत् । इत्यत्र "अस्ति°" [ १ ] इत्यादिना भूवचौ[5] ॥ अशितीति किम् । अस्ति[6] । ब्रुवाणः[7] ॥

विवाय । इत्यत्र "अघञ्°" [ २ ] इत्यादिना वीः ॥ अघञ्[8]क्यबलचीति[9] किम् । समाजे । समज्या[10]म् । समजे । अजानाम् ॥

प्रवेता[11] प्राजिता । प्रावयण्यम्[12] प्राजन । इत्यत्र "अने वा" [३] इति वा वीः ॥ अन्ये त्वने प्रत्यये यकाररहिते व्यञ्जनादौ[13] चाविशेषेण विकल्पमिच्छन्ति । प्रवेता प्राजिता । प्रवेतुम् प्राजितुम् ॥

क्शाता[14] । ख्यातारम् । अत्र "चक्षो वाचि°" [ ४ ] इत्यादिना क्शाङ्ख्याङौ ॥

चक्शे[15] । चख्शे । चख्ये । अत्र "न वा°" [ ५ ] इत्यादिना वा क्शाङ्ख्याङौ ॥ पक्षे । आचचक्षे ॥ चख्शे[16] । अत्र "शिड्याद्यस्य द्वितीयो वा" [ १.३.५९ ] इति कस्य खः ॥

---

१ प बी °ख्शे मुर°. २ बी °चक्ष्ये च. ३ प °क्षेथ य°.

---

१ प °मो ओङ्कार त°. सी °मो आकार. २ सी °ख्शेन चख्शे मु°. डी ख्शे मु°. ३ प °थामुर°. ४ बी °चख्शे य°. ५ प °चौ ॥ अशि°. ६ प °स्ति । ब्रुवा°. ७ सी डी °णः ॥ व्यवा°. ८ प °घड् इ°. ९ प बी ई °क्यवल°. १० प °ज्या । समजो । अ°. ११ प प्रचेता. १२ प प्रायवण्यम् प्रोज°. १३ बी °दौ मावि.° १४ प °ता । ख्योता°. १५ बी चक्शौ । च°. डी चक्षे । च° १६ प चख्शे । अ°.

भर्ष्टुं बलिं भ्रष्टुमथाज्यमाज्ञां प्रत्तः प्रदत्तः कुसुमानि राजा ।
नीत्ताहुतिस्तैर्गुरुवीत्तमन्त्रैर्देव्यै विदत्तासन आवभासे ॥ १२ ॥

१२. राजा कर्ण आवभासे शुशुभे । कीदृक्सन् । गुरुणाचार्येण विशेषेण दीयन्ते स्म गुरुवीत्ता ये मन्त्रास्तैः कृत्वा देव्यै लक्ष्म्यै विदत्तासनो वितीर्णपीठस्तथा बलिमुपहारं भर्ष्टुं पक्तुमथ तथाज्यं घृतं भ्रष्टुं विलीनयितुमाज्ञामुत्तरसाधकानामादेशं प्रत्तः प्रदातुमारब्धस्तथा देव्यै कुसुमानि प्रदत्तः प्रदातुमारब्धस्तथा तैर्बल्याज्यकुसुमैः कृत्वा देव्यै नीत्ताहुतिर्दत्तहव्यः । पीठमन्त्रोच्चारपूर्वं देवीं पीठे स्थापयित्वा बलिभिः पुष्पैराहुतिभिश्च पूजयन् राजाभादित्यर्थः ॥

जजाप नासाग्रनिदत्तनेत्रोक्षमूत्रमूत्ताङ्गुलिकः क्षितीशः ।
सुदत्तचित्खे विदवत्तमन्त्रैरनूत्तपुष्पैरनुदत्तहोमैः ॥ १३ ॥

१३. क्षितीशः कर्णो जजाप । कैः कैः कृत्वा विदवत्तमन्त्रैर्विदा गुरुणावत्ता दत्ता ये मन्त्रास्तैस्तथानूत्तपुष्पैर्दत्तकुसुमैस्तथानुदत्ता ये होमा अग्नौ तिलादिहवनानि तैश्च मन्त्रजापं पुष्पजापं होमजापं च चकारेत्यर्थः । कीदृक्सन् । नासाग्रनिदत्तनेत्रस्तथाक्षसूत्रसूत्ताङ्गुलिको जपमालिकाया सस्थापिताङ्गुलिकस्तथा खे आकाशे सुदत्तचित्सन्निवेशितचित्तोखिलेन्द्रियविषयव्यावृत्त्या निराकारध्यानं कुर्वन्नित्यर्थः ॥

---

१ ए °माज्ञा प्र° २ ए नीत्याहु°. ३ सी डी °से ॥ म रा°. ४ ए नाशाग्र°. ५ बी डी °पुष्पैर°.

---

१ सी डी °ण हीय°. २ ए °यते स्म. ३ ए सी डी °वीत्ता म°. ४ ए भष्टुं प°. ५ ए °त स्रष्टुं. ६ ए °व्यैर्नीत्वाहु°. ७ ए °मन्त्रोच्चा°. ८ ए बहुलि°. ९ ए °मन्त्रैर्वि°. १० बी °माऽग्नौ. ११ सी डी °नादि तै°. १२ ए °क्षमूत्रसूत्राङ्गुलि°. १३ ए °पनालि°. १४ ए °चित्तसनि°. १५ बी °त्तोखले°.

आ[1]त्तावदत्तैर्बलिभिः स इत्थं समाहितो धीतसुधारसो नु ।
स्थित[2]ः सितांहा अदि[3]तामितौजा दिनान्यमातानि तपःशिताङ्गः ॥ १४ ॥

१४. स कर्णोमातान्यसंख्यानि दिनानि स्थितः । कीदृक्सन् । इत्थमुक्तगी[1]त्यात्तावदत्तैरात्ताः पूर्वमुत्तरसाधकेभ्यो गृहीता येवदे[2]त्ताः पश्चाल्लक्ष्म्यै प्रदे[3]त्तास्तैर्बलिभिः पू[4]जोपकरणैः कृत्वा सितांहा विनाशितविघ्नस्तथा तपःशिताङ्गस्तपश्चरणकृशदे[5]होत एवादितामितौजा अप्रतिहतासंख्यत[6]पःप्रभावस्तथा समाहितः समाधिवानत एव धीत[7]सुधारसो नु पीतपी[8]यूष इव ॥

अन्येद्युरच्छातनिशातबुद्धौ हि[4]त्वान्यकर्मा[5]च्छितसंशितेस्मिन् ।
अभूज्जहित्वा समयं स्वसामग्रिकामजाहित्व ऋतुर्घनानाम् ॥ १५ ॥

१५. अन्येद्युर्घनानामृतुर्वर्षाकालोभूत् । किं कृत्वा । समयं स्वकालं जहित्वा त्यक्त्वाकाल इत्यर्थः । तथा स्वसामग्रिकां विद्युदादिसंपदमजाहि[9]त्वा गृहीत्वा । क सति । अस्मिन्कर्णे । किंभूते । अच्छाताखण्डिता निशाता तीक्ष्णा बुद्धिर्ज्ञानं यस्य तस्मिन् । तथान्यकर्म तपस इतरद्राज्यादि कार्यं हि[10][11]त्वाच्छितमखण्डितं संशितमसिधारातीक्ष्णं व्रतं यस्य तस्मिन् । यद्वा । अकर्मकत्वविवक्षा[12]यां संश्यति स्म [13]संशितो व्रते यत्नवान् । [14]अच्छितो यः संशितस्तस्मि[15]न् ॥

---

१ प बी सी आत्तावदत्तैर्व°. २ प °तः सता°. ३ प °तासितौ°. ४ प हितान्य°. ५ सी डी °र्मास्थित°.

---

१ प बी सी °त्यात्तावदत्तैरात्ताः पू°. २ डी °दत्ताः प°. ३ डी °दत्तास्तै°. ४ प पूजौप°. ५ प °देशोत°. ६ प °तपप्र°. ७ प °तमुधा°. ८ बी °यूख इ°. ९ प त्वा इका°. १० सी डी °त्वा क्व. ११ प °त्वा इच्छि°. सी डी °त्वा स्थित°. १२ प °क्षाया स°. १३ प ससितो. १४ प अस्थितो. १५ प °न् ॥ अहं अ°.

भर्ष्टुम् भ्रष्टुम् । अत्र "भृज्जो भर्ज्" [ ६ ] इति वा भर्ज्[1] ॥

प्रत्तः[2] प्रदत्तः । अत्र[3] "प्राद्दाग॰" [ ७ ] इत्यादिना वा त्त ॥

नीत्त निर्दत्त[4] । वीत्त विदत्तं[5] । सूत्त सुदत्त । अनूत्त अनुदत्त । अवत्त[6] अवदत्तैः[7] । अत्र "निवि॰" [ ८ ] इत्यादिना वा त्त ॥

आत्त । इत्यत्र "स्वराद्॰" [ ९ ] इत्यादिना त्तः ॥ अध इति किम् । समाहितः ॥

अवदत्तै । अत्र "दत्" [ १० ] इति दत् ॥ अध इत्येव । धीत ॥

अदित । सित । अमित । स्थितः । अत्र "दोसोमास्थ इः" [ ११ ] इति-इः ॥ गामादाग्रहणेष्वविशेष इति मा-माङ्-मेङां ग्रहणम् । अन्यस्तु माङ्मेङो[8]-रेवेच्छति । मातेस्तु । अमातानि ॥

अच्छित[10] । अच्छात । शित निशात । इत्यत्र "छाशोर्वा" [ १२ ] इति[11] वा-इः ॥

सशिते । अत्र "शो व्रते" [ १३ ] इति-इः[12] ॥

हित्वा । इत्यत्र "हाको हिः क्त्वि" [१४] इति हि ॥ यङ्लुपि । जहित्वा ॥ हित्वे[13] पूर्वदीर्घत्वमपीच्छन्त्येके । अजाहित्वा । उभयत्रेटि-आतो[14] लुक् ॥

जग्धप्रकाशा विहितान्धकारा दिवं प्रजग्ध्याभिजिघत्सवः[1] क्ष्माम् ।
मेघा जलौघैरघसन्सघासैः स्फुटप्रवासिप्रघसैर्दिगन्तान्[2][3] ॥ १६ ॥

१६. मेघा जलौघैर्दिगन्तानघसन्व्यापुः । कीदृशाः सन्तः । जग्ध-

---

१ ए °वः क्ष्म्याम् । २ ए जलोघै° . ३ ए °प्रकामि°.

---

१ ए भर्जे ॥ प्र°. २ डी °त्त· अ°. ३ ए °त्र प्रद्दा° ४ डी °दत्त. । वी°. ५ ए ई °त्त । सुत्त. ६ डी °वद°. ७ ए °दत्तेः । अ°. ८ ए माङो°. ९ ए डी अस्थितः । अ°. १० सी °च्छितः । अच्छात. । शि°. ११ बी °ति–इः ॥. १२ बी °ति । हि°. १३ ए °त्वे दीर्घपू°. १४ ए डी °टि–अतो.

प्रकाशा भक्षितोद्योताः । अत एव विहितान्धकारास्तथा दिवमाकाशं प्रजग्ध्य व्याप्येत्यर्थः । क्ष्मामभिजिघत्सवो व्याप्तुमिच्छवः । कीदृशैर्जलौघैः । सघासैर्विद्यमानतृणैस्तथा स्फुटं प्रवासिनां पान्थाना प्रघसैः पीडकैः प्रादन्तीत्यच् । यद्वा । प्रादनम् अत्ति प्रघसः । स्फुटः प्रवासिनां प्रघसः पीडा येषु तैः ॥

विहित । इत्यत्र "धागः" [ १५ ] इति हिः ॥

जग्ध । प्रजग्ध्य । इत्यत्र "यपि°" [ १६ ] इत्यादिना जग्धः ॥

अभिजिघत्सवः । अघसन् ॥ कर्मणि घञि । घासैः । प्रघसैः । अत्र "घस्लृ°" [ १७ ] इत्यादिना घस्लृः ॥

श्रुतीर्जघासाद दृशो यथाब्दस्तथा ववौ नादमुवाय वज्रम् ।
नदीः पुपूर्वान्पपृवान्सरांसि स्थलीः शिशीर्वाञ्शशृवान् गिरींश्च ॥ १७ ॥

१७. अब्दो मेघस्तथा नादं गर्जां ववौ संवृद्धवान् । यथा श्रुतीः कर्णाञ्जघासाभक्षयदिव । तथा वज्रं विद्युतं तथोवायारचयद्यथा दृशोक्षीण्याद गर्जां विद्युतं चातितीव्रां चकारेत्यर्थः । उत्तरार्धं स्पष्टम् ॥

योद्रीन्दिदीर्वान्ददृवान्बलं तं वध्याः स्मरास्त्रैरथ घानिषीष्ट ।
त्वया वियोगी मरुतापि कोपि त्वां मा वधीदित्यरसन्नुमेघः ॥१८॥

१८. मेघ इति न्विदमिवारसदवोचत् । किं तदित्याह । हे स्मर योद्रीन्दिदीर्वान्वज्रेणादारयत् । तथा यो बलं बलाख्यं दैत्यं ददृवांस्त-

१ ए बी °न्गिरींश्च°. २ सी डी गिरीश्च. ३ डी °रवघा°.

१ ए °जिघित्सिवो व्याप्तुमि°. २ ए सी °ति हि ॥ ज°. ३ ए बी सी °जग्ध । इ°. ४ डी °जग्ध् ॥ अ°. ५ ए घञि । घा°. ६ ए बी घस्तृः ॥ श्रु°. ७ ए °नरवा°. ८ ए सी डी °तीव्र च°.

मिन्द्रं त्वमस्त्रैः शैर्वैध्या अर्थं तथा वियोगी कर्मतापन्नस्त्वया कर्त्रा मरुताप्यासतामस्त्राणि पुरोवातेनापि कृत्वा घानिषीष्ट हन्यता तथा त्वां कोपि हरादिरपि मा वधीदिति । वर्षासु हि मेघा गर्जन्ति स्मरश्चातिजैत्रः स्यादित्येवमाशङ्का ॥

**पुष्पैः स्मरो व्याहृत नावधिष्ट शस्त्रैर्न मन्त्रायुधमध्यगाद्वा ।**
**प्रत्यायय॑ञ्शक्तिमगाज्जयं स वशं त्रिलोकीं गमयंस्तथापि ॥१९॥**

१९. यद्यपि स्मरः पुष्पैर्व्याहृत प्राहरन्न तु शस्त्रैरयोमयास्त्रैरावधिष्ट न च मैन्त्रायुधं मन्त्रप्रधानमस्त्रं वायव्याद्यध्यगादस्मरत्तथापि स स्मरो वर्षामाहात्म्येन जयंमगात्प्राप । कीदृक्सन् । शक्तिं स्वसामर्थ्यं प्रत्यायय॑ञ्ज्ञापयन्नत एव त्रिलोकीं वशं स्वायत्ततां गमयन्प्रापयन् ॥

**केकारवैस्तन्त्र्यधिगम्यते यैर्व्यराविं पड्जाधिजिगांसया तैः ।**
**सद्यश्च हंसैरजिगांस्यतार्थं स मानसस्याधिजिगांस्यते च ॥ २० ॥**

२०. यैर्मयूरैः केकारवैः कृत्वातिमाधुर्यात्तन्त्री वीणाधिगम्यते स्मार्यते तैर्मयूरैः पॅड्जाधिजिगांसया पॅड्जस्वरपिपठिपया व्यराविं पॅड्जस्वरः कृत इत्यर्थः । मयूरा हि पॅड्जस्वरं कुर्वन्ति । तथा सद्यः केकाश्रवणकाल एव हंसैर्श्चाजिगांस्यत गन्तुमिष्टमर्थानन्तरं मानसस्य सॅरसोधिजिगांस्यते स च सुस्मूर्षितम् ॥

जघास आद् । इत्यत्र "परोक्षायां न वा" [ १८ ] इति वा घॅस्लृः ॥

उवाय ववौ । अत्र "वेर्वय्" [ १९ ] इति वा वय् ॥

---

१ डी °ध्यगीद्वा. २ वी °थ सा मा°.

---

१ ए °थ यथा. २ सी °न्न शार्स्त्र°. ३ सी °स्त्रैरव°. ४ वी मत्रायु°. ५ डी °ध्यगीद°. ६ सी जमागा°. ७ ए °यमापत्प्रा°. डी °यमागा°. ८ डी पन्नाधि°. ९ डी पन्नस्व°. १० वी डी षड्जस्व°. ११ वी डी पन्नस्व°. १२ सी डी °श्चाधिजि°. १३ ए °मब्दान°. १४ डी सरोधि°. १५ सी घस्लृ ॥ उ°.

शश्रवान् शिशीर्वान् । ददवान् दिदीर्वान् । पपृवान् पुपूर्वान् । अत्र "ॠः शृदृप्रः" [ २० ] इति [ वा ] ऋः ॥

वध्याः । अत्र "हन°" [ २१ ] इत्यादिना वधः । अञ्चाविति किम् । घानिपीष्ट ॥

मा वधीत् । इत्यत्र "अद्यतन्यां वा°" [२२] इत्यादिना वधः । वा त्वात्मने । आवधिष्ट । व्याहत ॥

अगात् । अध्यगात् । इत्यत्र "इणिकोर्गाः" [ २३ ] इति गाः ॥

गमयन् । अधिगम्यते । अत्र "णौ°" [ २४ ] इत्यादिना गमुः ॥ अज्ञान इति किम् । प्रत्याययन् ॥

इङ् । अधिजिगांसते ॥ ईक् । अधिजिगांसया ॥ इण् । अजिगांसत । इत्यत्र "सनीङश्च" [ २५ ] इति गमुः ॥

**स्वनद्घनेनाधिजिगापयिष्यमाणो मयूरोधिजगे सुनृत्तम् ।**
**तेनैव चाध्यापिपयिष्यमाणामध्यापिपत्स्वां दयितां च हृष्टः॥२१॥**

२१. मयूरो नृत्तमधिजगेधीतवांश्चकारेत्यर्थः । यतः स्वनद्घनेन गर्जता मेघेन कर्त्रा नृत्तमधिजिगापयिष्यमाणो गर्जया पाठयितुमिष्यमाण इव । तथा तेनैव च स्वनद्घनेनैव च नृत्तमध्यापिपयिष्यमाणां शिक्षयितुमिष्यमाणां स्वां दयितां च मयूरीं च हृष्टः सन्मयूरो नृत्तमध्यापिपदपाठयत् । मेघगर्जां श्रुत्वा मयूरदम्पती नृत्ताविति तात्पर्यार्थः ॥

१ ए शृदृप्रः. २ डी °यद् । अ°. ३ सी डी इक । अ°. ४ ए सी डी अधिजि°. ५ डी °सते । इ°. ६ ए ई पाठितु°. ७ ए ई °व स्व°. ८ ई स्वनृद°. ९ ए °प XXX दपा°. १० बी °यिनां च. ११ ई च हृ°.

अध्यैष्ट यांस्तान्पुनरध्यगीष्टाध्यजीगपत्स्त्रैणमितश्च रासान् ।
हल्लीसमध्येष्यत चेद्भवत्यध्यगीष्य इत्याशु मिथो ब्रुवाणम् ॥२२॥

२२. इतोस्मिन्वर्षाक्रतौ स्त्रैण यान् रासानध्यैष्टापाठीत् । तान्रासान् गेयकाव्यविशेषान्पुनर्भूयोप्यध्यगीष्टाध्यजीगपच्चान्यस्त्रैणमेव कर्मापीपठच्च रासान्स्वयं द्विस्त्रिर्वोच्चार्यान्यस्त्रैणेनोच्चारयामासेत्यर्थः । वृष्टौ हि स्त्रियः प्रमुदिता रासान्ददति । कीदृक् । मिथोन्योन्यं ब्रुवाणम् । किमित्याह । चेद्यदि भवती त्व हल्लीस नागीणा मण्डलीनृत्तमध्यैष्यताशिक्षयिष्यत तदाहमपि हल्लीसमाश्वध्यगीष्ये शिक्षिष्य इति । केचिद्भूतेपि हेतुफले क्रियातिपत्तिमिच्छन्ति तन्मतेत्र क्रियातिपत्तिः ॥

मूर्छीत्प्रिया मेत्यवदंश्चिरायाध्यायन्निरायन्पथि कष्टमासन् ।
पान्थास्तदा व्योम्नि यदा पयोद आटीद्बलाकाततिराटदारात्
॥ २३ ॥

२३. यदा व्योम्नि पयोदो मेघ आटीत्प्रससार तथारान्निकटे बलाकाततिराटद्भ्राम्यत्तदा पान्थाश्चिरायाध्यायन्नस्मरन्नवदंश्च । किमित्याह । प्रिया जातावेकवचनम् । वल्लभा मा मूर्छीदस्मद्वियोगे मा विचेतीभूदिति । अत एव निरायन्यस्मिन्देशे गता आसंस्ततो निर्गता अत एव च पथि जलदुर्गत्वात्कष्टमासन् ॥

न चेद्धनाटिष्य इहाभविष्यं कथं तृषाहं भविता विहस्तः ।
चिरं तदास्स्वेति वदन्किलास्ते स्म चातकः पत्रपयोपि लिप्सुः॥२४॥

२४. चातक आस्ते स्म तस्थौ । कीदृक्सन् । वदन् किल मेघदर्श-

---

१ ई °पस्त्रैण°. २ प सी °मध्येष्य°. ३ वी °यत्पथि.

---

१ प °षात्पुन°. २ प °मध्येष्य°. ३ ई °यिक्षत. ४ सी °ष्यति तदा°. ५ प °शिष्य°. ६ ई °ते कि°. ७ सी °त्प्रशसा°. ८ वी तदारा°. ९ सी °दवभ्रा°. १० प °म्यस्तदा. ११ प तस्थौ । की°.

नोत्थकूजितैर्भणन्निव । किमित्याह । हे घन चेत्त्वमिहाकाशे नाटिष्यस्तदाहं तृपा कृत्वा विहस्तो भविता व्याकुलो भवन्कथमभविष्यंस्तत्तस्माद्धेतोस्त्वं चिरं बहुकालमास्स्व तिष्ठति[1] । यतः पत्रपयोपि वृक्षपर्णात्पतज्जलबिन्दुमात्रमपि मेघोन्मुक्तजलकणभ्रान्त्या लिप्सुः । एतेनास्य तृष्णाधिक्यमुक्तम् ॥

अधिजगे । अत्र[2] "गा°" [ २६ ] इत्यादिना गाः ॥

अधिजिगापयिष्यमाणः अध्यापिपयिष्यमाणाम्[3] । अध्यजीगपत् अध्यापिपत् । इत्यत्र "णौ सन्ङे वा" [ २७ ] इति वा गाः ॥

अध्यगीष्ट अध्यैष्ट । अध्यगीष्ये अध्यैष्यत[4] । इत्यत्र "वाद्यतनी°" [ २८ ] इत्यादिना वा गीङ् ॥

अवदन् । अध्यगीष्ट । अध्यगीष्ये । अत्र "अड् धातोर्°" [२९] इत्यादिना-अडादिः ॥ अमाङेति किम् । मा मूर्च्छीत् ॥

निरायन् । अध्यायन्[5] । आसन् । इत्यत्र "एति°" [ ३० ] इत्यादिना वृद्धिः ॥

आटीत् । आटिष्यः । आटत् । इत्यत्र "स्वरादेस्तासु" [ ३१ ] इति वृद्धिः ॥

अभविष्यम् । भविता । इत्यत्र "स्तादि°" [ ३२ ] इत्यादिना-इट् ॥ अशित इति किम् । आस्स्व । आस्ते ॥ अत्रोणादेरिति किम् । पत्र[7] । उणादि । विहस्तः ॥

चक्रे धनुष्कम्पि[1]तिसंगृहीतीर्जयं[2] ग्रहीतुं शमसंवरीता ।
शरैर्जगत्प्रावरिता वरीता प्रीते रतेर्वा वरिता स देवः ॥ २५ ॥

२५. शमसंवरीतेन्द्रियजयस्याच्छादयिता[8] प्रीतेर्वरीता वरो रतेर्वा

१ ई धनुःकम्पि°. २ सी डी °य गृही°.

१ ई °ष्ठेत । य°. २ सी अत्र. ३ प बी °माणम्. ४ डी अधैष्य°. ५ ई भट्टतो°. ६ सी °ध्यास°. ७ सी डी पत्र । उ°. ८ सी डी °यसच्छा°.

वरिता स[1] प्रसिद्धो देवः कामो धनु[2]ष्कम्पितिमंगृहीनी· अल्पस्वरत्वात्कम्पितेः प्राग्निपाते धनुषः संग्रहणानि कम्पनानि[3] च चक्रे । यतो जयं[4] ग्रहीतुं वर्षावलेन प्राप्तु शरैर्जगत्प्रावरिता व्याप्नुवन् ॥

तटान्दरित्रीर्विटपान्दरीत्रीर्नदीः सुखं तेरिथ नाथ कच्चित्[1] ।

सद्यो रतिस्त्वां वरिषीष्ट विस्तरिषीष्ट चेत्थं पथिकं प्रियोचे ॥२६॥

२६. प्रिया पथिकमूचे । कथमित्याह । कच्चिदिष्ट[5]परिप्रश्ने । हे नाथ नदीः सुखं सुखेन तेरिथ । कीदृशीरतिजलापूर्णत्वेन तटान्दरित्रीर्विदारयित्रीस्तथा विटपान्वृक्षान्दरीत्रीः । तथा सद्यो नदीतरणानन्तरमेव त्वां रतिः सुखं निधुवनं वा वरिषीष्ट सेवतां तथा रतिर्विस्तरिषीष्ट[6] च विस्तृणीयाश्च[7]ेति ॥

व्यस्तारिषुः षट्चरणाः कदम्बान्यावारिषुर्वासवकार्मुकं च ।

समा[2]स्तरिष्टाम्बरमावरिष्ट व्यस्तीर्ष्ट गां प्रावृत शाड्वलं च ॥ २७ ॥

२७. षट्चरणा भृङ्गा व्यस्तारिषुर्बाहुल्याद्विस्तृता अत एव कदम्बानि कदम्बतरु[10]पुष्पाणि कर्मावारिषुराच्छादयन । वर्षासु हि धारा[11]कदम्बाः पुष्प(ष्प्य?)न्ति । तथा वासवकार्मुकं चेन्द्रधनुश्च समास्तरिष्ट विस्तृतमत एवा[12]म्बरं व्योमावरिष्ट व्याप । तथा शाड्वलं च । जातावेकवचनम् । सस्येन हरितानि स्थानकान्युपचाराद्धरित[13]तृणानि वा व्यस्तीष्टात एव गां पृथ्वीं प्रावृ[14]त ॥

१ ई कश्चित्. २ ए °भासरि°.

१ ए °ता सः प्र°. २ बी °ष्कम्पति°. ३ ए सी डी °नि चक्रे. ४ सी डी °य गृही°. ५ डी °ष्टप्र°. ६ ए °ष्ट वि°. ७ ए °याश्चेति. ८ ए °णाभ्यङ्गा. ९ ए °दम्बोनि. १० ए बी सी °पुष्फाणि. ११ सी डी °राभि· क°. १२ ए °वान्तर. १३ ए °तनृणा°. १४ सी °वृत· ॥. ए °वृतः ॥ नृपी°.

वृषीष्ट केकां मृदु लास्यमास्तीर्षीष्ट[1]आशु ते चेद्भवतास्मृषाताम् ।
पुरा हि ये व्यसरिपूर्[2]वषाता[3] शिखण्डिनीतीव[4] ललाप कान्तम्
॥ २८ ॥

२८. शिखण्डिनी मयूरी कान्तं मयूरं ललापेव मेघदर्शनोत्थस्वरेणोवाचेव । कथमित्याह । हे कान्त भवता ये केकालास्ये हि स्फुटं पुरा वर्षाकालात्पूर्वं व्यस्मरिपूर्वषातां[1] व्यस्मरिषातां चिरं[2] त्यागाद्विस्मृ[3]ते ते केकालास्ये चेद्भवतास्मृषातां मेघालोकेन स्मृते तदाशु केकां भवान्वृषी[4]ष्टाश्रीयात्तथा मृदु लास्यं[5] नृत्तमास्तीर्षीष्ट विस्तीर्यादि[6]ति ॥

स्मृषीष्ट गोप्त्री भवतेष्टदेवी प्रगोपिना वा स्मरिषीष्ट देवः ।
यत्ते धवित्री[5] तरुखण्ड[6]धोत्री भोः पान्थ झञ्झेत्यरसन्नु मेघः ॥२९॥

२९. मेघोरसन्नु गर्जयावोचदिव । किमित्याह । भोः[7] पान्थ[8] तरुखण्डधोत्री वृक्षवनस्य कम्पिका झञ्झा सशीकरो[9] वातो यद्यस्मात्ते धवित्री[10] कामोद्दीपकत्वेन कम्पिका तस्माद्भवता गोप्त्री रक्षिके[11]ष्टदेवी स्मृषीष्ट स्मर्यतां प्रगोपितेष्टदेवो वा[12] भवता[13] स्मरिषीष्टेति ॥

ररान्धिमै[7]नं[8] न न किं तु[9] रेध्मा[10]पिस्फायिषुर्यो[11] मदनं न चाता ।
पिस्फासुरस्त्वस्य निचायिता[12] तत्केतक्य इत्यूचुरि[13]वालिनादैः[14]
॥ ३० ॥

१ प °र्षीष्टांशु. २ डी °ता कान्तललापेव शिषण्डिनीति ॥ शिषण्डिनी म°. ३ प शिषण्डि°. ४ सी °नी म°. ५ प धरित्री. ६ डी ई °रुषण्ड°. ७ ई °न्धिमेन. ८ वी °मैत न. ९ प वी डी ननु किं. सी न तु किं. १० डी रेध्मापि°. ११ प °पिस्पायि°. १२ प °चायता. १३ सी इत्युचूरि°. डी इत्युचु°. १४ प °नादौ ॥ के°.

१ प °रिपूर्वषातां चप त्या°. २ सी चिरत्या°. ३ प °द्विसरिते. ४ प सी °वान्नृषी°. ५ प लास नृ°. ६ वी विस्तार्यां°. ७ प भो भ्यान्ध. ८ डी पान्था त°. ९ वी ससीक°. १० सी डी धरित्री. ११ प ई रक्षके°. १२ वी वा स°. १३ प भविता.

३०. केतक्योलिनादैरूचुरिव । किमित्याह । अपिस्फायिपुर्वर्धितुमनिच्छुः सन्यो मदनं न चाता न पूजयत्येनं मुन्यादिजनं वयं नैनं न ररन्धिम न न हतवन्त. किं तु रध्म वयमेव त हतवन्त एवेत्यर्थः । तत्तस्मात्. पिस्फासुर्जीवितव्यादिना वर्धितुमिच्छति सोस्य मदनस्य निचायिता पूजकोस्त्विति ॥

प्याता घनः प्यायितृकाम एवं मनांसि निष्कोष्टुमलं जनानाम् ।
ध्यानक्रियानिष्कुपितं तु राज्ञो मनो न निष्कोपितुमीपदासीत्
॥ ३१ ॥

३१. एवमुक्तरीत्या प्याता वर्धिष्णुर्घनो जनानां मनांसि निष्कोष्टुमाकृष्टु कामवासनया व्याकुलीकर्तुमित्यर्थः । अलं समर्थ आसीत् । यतः प्यायिता वर्धिष्णुः कामो यत्र सः । राज्ञस्तु कर्णस्य पुनर्मनो निष्कोपितुमीपन्मनागपि नालमासीत् । यतो ध्यानक्रियानिष्कुपितं प्रणिधानेनाकृष्टं वशीकृतमित्यर्थः ॥

सगृहीती. । कम्पिति । इत्यत्र "तेर्" [ ३३ ] इत्यादिना-इट् ॥

ग्रहीतुम् । सगृहीतीः । अत्र "गृह्ण" [ ३४ ] इत्यादिना दीर्घः ॥

वृग् । सवरीता प्रावरिता । वृङ् । वरीता वरिता । ऋदन्त । वरीत्रीः

---

१ वी °यिनृका°. २ ई °कास ए°. ३ ए मनामि. ४ वी नि कोष्टु° ५ ए ई °ष्कुपिन. ६ ए °ष्कोपितु°.

---

१ वी सी °त्येत मु°. २ ए ई न र°. ३ ए वयमे° ४ ए °जीवत° ५ ए °र्धित्तमि°. ६ ए पूजितो कोस्तिति. ७ डी °धिष्णुर्घ° ८ ए मनासि ९ ई °ष्टुका°. १० ए सी °धिष्णुका° ११ ए °ष्कोपितु°. १२ ए °कृष्ण व°. १३ बी °हीती । क°. १४ डी °ट्॥ गृही°. १५ ए °रीत्या व°. १६ ए °ता । ऋद°. १७ ए ई °दन्ता । द°. १८ ई दरित्रीः दरीत्री । अ°.

दरिद्रीः। अत्र "वृतो न वा°" [ ३५ ] इत्यादिना वा दीर्घः॥ परोक्षादिवर्जनं किम्। तेरिथ। वरिषीष्ट। विस्तरिषीष्ट। आवारिषुः। व्यस्तारिषुः॥

प्रावृत आवरिष्ट। व्यस्तीर्ष्ट समास्तरिष्ट। वृषीष्ट वरिषीष्ट। आस्तीर्षीष्ट विस्तरिषीष्ट। इत्यत्र "इट्°" [ ३६ ] इत्यादिनेड्वा॥

अस्मृषाताम् व्यस्मरिषाताम्। स्मृषीष्ट स्मरिषीष्ट। इत्यत्र "संयोगादृतः" [ ३७ ] इतीड्वा॥

धोत्री धवित्री। गोप्त्री प्रगोपिता। इत्यत्र "धूगौदितः" [ ३८ ] इतीड्वा॥ स्ताद्यशित इत्येव। रधौच्। ररन्धिम॥ अन्यस्त्वत्रापि विकल्पमिच्छति। रेध्म॥ एके तु चायिस्फायिप्यायीनामपि विकल्पमिच्छन्ति। चाता निचायिता। पिस्फासुः अपिस्फायिषुः। प्याता प्यायितृ॥

निष्कोष्टुम् निष्कोषितुम्। अत्र "निष्कुषः" [ ३९ ] इतीड्वा॥

निष्कुषितम्। अत्र "क्तयोः" [ ४० ] इतीट्॥

व्रश्चित्व ऋद्धं तिमिरं जरित्वा देवित्व ऋक्षाध्वनि हार्युषित्वा।
घूत्वास्तभूभृत्युषितः क्षुधित्वेवात्रान्तरे प्रोषितवान्दिनेशः॥ ३२॥

३२. अत्रान्तरेस्मिन्प्रस्तावे दिनेशो रविः क्षुधित्वेव बुभुक्षितीभूयेव प्रोषितवान्देशान्तरं ययौ। यतोस्तभूभृत्यस्ताचले घूत्वा विलस्योषितः स्थितः। पूर्वं कीदृग्भूत्वापि। ऋद्धं स्फीतं तिमिरं व्रश्चित्वा

१ ए °श्चित्त ऋ°.

१ ए °त्र वृगो. २ वी °ना दी°. ३ वी °ष्ट। अवा°. ४ ए °रिपु। व्य°. ५ ई °स्तीष्ट। स°. ६ सी डी °मातरि°. ७ ए इतोड्वा. ८ सी डी ड्वा॥ धात्री. ९ ई °न्धिन्॥ अ°. १० सी डी °ध्म॥ अपरे तु. ११ सी °ष्कोषि°. १२ ए ई नि कुष°. १३ ए ई नि·कुषि°. १४ सी डी °षितुम्. १५ ए ई °तीट्॥. १५ ए क्षुधित्वेव पुभु°. १६ ए °त्वा। ऋ°.

खण्डशः कृत्वा जरित्वा क्षयं नीत्वा च तर्थर्क्षाध्वनि व्योम्नि देवित्वा क्रीडित्वा तत्रैव हारि मनोज्ञं यथा स्यादेवमुषित्वा स्थित्वापि । योपीश ईश्वरः पृथ्व्यां हार्युषित्वास्तभूभृति क्षीणनृप आधारे द्यूत्वा व्यवहृत्य स्थितः स्यात्स क्षुधित्वा सर्वार्द्धिक्षयाद्बुभुक्षितो भूत्वा देशान्तरं यातीत्युक्तिलेशः ॥

गुहासु यद्वावसितं वने वा वावस्तवत्तत्क्षुधितं नु रक्षः ।
दृशो लुभित्वा लुभितालकश्रि शक्राञ्चिताशां तिमिरं निराश ॥ ३३ ॥

३३. यद्गुहासु वावसितमत्यर्थं स्थितं यच्च वने वा वनगहने वावस्तवत्तत्तिमिरं दृशोक्षीणि लुभित्वा व्याकुलीकृत्य शक्राञ्चिताशा पूर्वां निराशाभक्षयद्व्यापेत्यर्थः । कीदृक्सन् । लुभिता आकुलीकृता येलकाः केशास्तद्वच्छ्रीर्यस्य तत्सर्वदिक्षु प्रसृमरं कृष्णं चेत्यर्थः । अत एव क्षुधितं नु रक्षो बुभुक्षितराक्षस इव । तदपि हि गुहासु वने वावसति विसंस्थुलवालं च स्यादत एव रौद्राकारत्वाल्लोकदृशो व्याकुलीकरोति दिशा-द्यप्यत्ति च ॥

दिशो ध्वजैरञ्चितवद्रमाकोञ्चित्वाभिपूतं परिपूतवत्क्ष्माम् ।
वपुः पवित्वा सुकलाश्च पूत्वाप्सरोगणोथो पवितः प्रपेदे ॥ ३४ ॥

३४. अथो तिमिरप्रसरणानन्तरं पवितो रूपादिश्रिया पवित्रोप्स-

१ ए ई वा चाव॰. २ ए ॰त्क्षुधि॰. सी ॰त्पुधि॰ ३ डी त तु र॰ ४ ॰कोरिञ्जत्वा॰ ५ ए ॰वक्ष्याम्. सी ॰वतक्ष्मा॰. ६ सी डी ॰त्वा स्वक॰. ७ ए ॰पेदे: ॥ अ॰.

१ सी डी तथार्क्षा॰. ई तथाध्व॰. २ ए ॰थक्षाध्व॰. ३ ए ॰तमित्य॰. ४ सी वा वावस्त॰. ५ ए बी ॰ने वा वाव. ६ ई ॰क्षद्या॰. ७ ए ॰द्याप्येत्य॰. ८ ए ॰भित्वा आ॰. ९ बी सी ॰लका के॰. १० ए हि सुगुहासु भुव॰. ११ ई ॰हाव॰. १२ ई ॰स्थुल वा॰. १३ बी सी डी ॰व च रौ॰. १४ ए ॰त्वालोक॰. १५ ई स्याधिप्य॰. १६ बी ॰विता रू॰. १७ ॰विवोप्स॰.

रोगणो रमौको लक्ष्मीभवनं प्रपेद आगतः । किं कृत्वा । रमौको-[1]ऽश्चित्वा पुष्पगन्धादिभिः पूजयित्वा । किंभूतम् । ध्वजैः कृत्वा दिशो[2]ऽश्चितवत्पूजितवत्सर्वदिग्व्यापकध्वजान्वितमित्यर्थः । तथाभिपूतं[3] चन्दनच्छटादिना पवित्रम् । तथा क्ष्मां पृथ्वीस्थं लोकं परिपूतवद्दारि-द्र्यमलोच्छेदेन[5] पवित्रितवत्[6] । तथा वपुः स्वाङ्गं पवित्वा वेषेण संस्कृत्य । तथा कलाश्च गीतनृत्तादिकाः पूत्वा[7] सतताभ्यासेन निर्मलीकृत्य ॥

**तन्त्र्या करावक्लिशितौ क्लिशित्वा क्लिष्ट्वांसमक्लिष्टमथेह काचित्[1] ।**
**भावैर्वपुः क्लिष्टवती विलोभित्र्यलोभधरि[2] क्ष्माभुजि दत्तदृष्टिः ॥३५॥**

३५. अथेह रमौकसि काचिद्देवी भावैः सात्त्विकै[8] रत्यादिभिर्वा कृत्वा वपुः[10] क्लिष्टवत्यपीडयत् । राज्ञि भावानां निरर्थकत्वाद्वपुःक्लेशमेव चकारेत्यर्थः । किं कृत्वा । अक्लिशितावपीडितौ[11] मृदू इत्यर्थः । करौ तन्त्र्या वीणया कृत्वा क्लिशित्वा वादनाय तन्त्र्याघातेन पीडयित्वा तथाक्लिष्टमंसं स्कन्धं वीणादण्डस्थापनेन क्लिष्ट्वा वीणां वादयित्वेत्यर्थः । कीदृक्सती । विलोभित्री[12] साभिलाषात एवालोभधरि वशित्वान्निःस्पृहेपि क्ष्माभुजि कर्णे दत्तदृष्टिः ॥

**न नैष सोढा सहितेव किं त्वेषित्रीरनेष्टाप्यविरोषिता[3] नः ।**
**रोष्टाथ[4] चेन्नौग्यत एष रेष्टेति भीतिरेषित्र्यपरा ननर्त ॥ ३६ ॥**

३६. अपरा काचिद्देवी ननर्त । कीदृक्सती[13] । भीतिरेषित्री मर-

१ डी क्लिष्ट्वास°. २ ए °तीवलो°. ३ सी °ता न । रो. ई °ता ना° । रो°. ४ ए °ष्टाप्य चे°. सी °ष्टा चे°

१ ए °मौकाश्चि°. २ ए दिशोश्चित°. ३ ए °भिभूत. ४ ए ई °तंच्छ°. ५ ए °च्छेदन. ६ ए °वत । त°. ७ ई पूर्त्वा स°. ८ ए भावे सा°. ९ सी °कैरित्या°. १० ए वपु क्लि°. ११ ए °तौ पूदू. ई °तौ पदूइ°. १२ ए °भिची सा°. १३ ए °ती रे°.

णादिभयस्यापनायिका । कथमित्याह । एष कर्णोनेष्टोपि वशित्वान्निः-स्पृहोपि नोस्मानेषित्री साभिलाषाः सतीर्न न सोढा किं तु सहितैव क्षमिष्यत्येवेत्यर्थः । यतोविगोपिताक्रोधनोथाथ वा चेद्यदि रोष्टा क्रोत्स्यति तदाप्येष कर्णोतिदयालुत्वाद्रौष्यतो रौद्रेणास्मान्न रेष्टा न हंनिष्यतीति ॥

भर्तासि शच्या भरिता नु भानां व्योमाशिताष्टा च दिशस्त्विषेति ।
जगावसंस्तोव्यपरा स्तवित्री वर्व्युत्तरीयं वसनं वसित्री ॥ ३७ ॥

३७. असंस्तोव्यपरिचिताहष्टपूर्वेत्यर्थः । अपरा देवी कर्णं जगौ गायति स्म । कीदृशी सती । उत्तरीयमुपरितनं वस्त्रं वर्व्येकेन करेण परिदधाना । तथा वसनं पारिशेष्यादधोवस्त्रमपरकरेण वसित्री । कर्णस्य मनःक्षोभनाय वस्त्रपरिधानमिषेण स्तनाद्यवयवान्दर्शयन्तीत्यर्थः। तथा स्तवित्री कर्णं स्ववशीकर्तुं गीतमध्ये वर्णयन्ती । कथमित्याह । हे राजंस्त्वं त्विषा कृत्वा व्योमाशिता अंसिता व्यापक इत्यर्थः । दिशश्चाष्टा व्यापकस्तदसि त्वं शच्या भर्ता नु किमिन्द्रः । भानां नक्षत्राणां भरिता नु भर्ता वा किं वा चन्द्रोसीत्यर्थः । इन्द्रचन्द्रौ हि व्योम दिशश्च त्विषा व्यापुत इति ॥

शोक्रीमदोत्रीं दवितासि किं मां न शोचिता किं रविता न किं वा ।
रोत्री प्रणोत्रीति च वेणुगीत्योपालब्ध तं श्रीनवितारमन्या ॥३८॥

३८. अन्या देवी श्रीनवितारं लक्ष्मीदेव्याः स्तोतारं तं कर्णमुपा-

---

१ ए भर्त्र्यासि. २ ए सी °तासि किं. ३ ई च वीणु° ४ बी लब्ध त.

---

१ ई °णादलयस्याप°. २ ए °ष्टाभि व°. ई °ष्टा व°. ३ सी डी ई °त्वान्निःस्पृ°. ४ ए °तीना न. ५ ई क्रोस्यति. ६ ई °तो रोद्रेण नोस्मा°. ७ सी डी रौद्रेणा°. ८ए °द्रेणोस्मान्ना रे°. ९ ए न हिंनि°. १० सी डी हरिष्य°. ११ ए °परिक°. १२ ए °मासिता. १३ सी डी अशिता. १४ ए भत्ता नु. १५ ए °षा वामु°.

लब्ध[1] सेनिन्दमवोचन्[2] । यैत[3]: कीदृशी । वेणुगीत्या वंशस्य गानेन कृत्वा रोत्री वदन्ती प्रणोत्री च परमार्थतः कर्णरूपसौभाग्यादि स्तुवती[4] च । कथमित्याह । हे राजन् शोक्त्री त्वद्विरहदुःखेन सशोकां तथादोत्री[5]मसन्तापिकां त्वमेव मे प्रिय इति प्रतिज्ञया ते सुखयित्रीमित्यर्थः । मामसि त्वं किं दवितानङ्गीकारेण किमिति संतापयसि तथा[6] त्वं[7] मां न[8] किं शोचिता हा मद्विरहेणासौ वराकी दुःखितेत्येवं किं न शोचसि किं वा मां न रवित्वा नालपसीति[10] ॥

**सोतैष कोपं सविता क्षमां[1] वा दुद्यूपुरस्मानदिदेविषुर्वा ।**
**इतीर्त्सदूहार्दिधिपुस्मरान्या[2] सस्मार नाधीतमपीह[3] गीतम् ॥ ३९ ॥**

४०. अन्या देवीह कर्णविषयेधीतमपि[11] पूर्वपठितमपि गीतं न सस्मार । यतः कीदृशी । ईर्त्सन्[12]विवार्धिपुरूहो यस्याः सा वितर्क[13]कुला । कथमित्याह । एष कर्णः कोपं मद्ध्यानस्य विघ्नाधायिका एता[14] इति क्रोधं[15] सोता[16] जनयिता[17] सु प्रसव[18]ैश्वर्ययोः । वाथ वा संप्रति प्रशान्तत्वात्क्षमां सविता तथैषोस्मान्दुद्यूपू रिरंसुरदिदेविषुर्वेति[19] । तथार्दिधिपुः कर्णरूपदर्शनाद्विवर्द्धिषु[20]ः स्मरो यस्याः सा कामविह्वला च ॥

---

१ ए °मा व दु°. ई °मा च दु°. २ ए °तीत्सपूहा°. ३ ए °ह गतिम्.

---

१ डी °ब्ध तमिदम°. २ सी समिदम°. ३ ए यत की°. ४ ए °तीत । क°. ५ डी °त्रीससन्ता°. ६ ए °था त्व गा न. ७ सी त्व मा किं न शो°. ८ डी मा किं न शो° ९ वी न शो°. १० ए °ति ॥ सौवै°. ११ ए °पि गी°. १२ वी ईर्च्छन्वि°. १३ ए °तकांकु°. १४ ए एसा इ°. १५ ए क्रोध सो°. १६ डी सोता ज°. १७ वी सी डी ई °ता सु प्र°. १८ सी डी प्रशवै°. १९ डी °सुरादि°. २० वी °र्द्दिपु स°.

अधिप्सुमाशिश्रयिषुं युयूषुं शिश्रीषसे किं न दिदम्भिषो माम् ।
विभ्रक्ष्यमाणां यियविष्वनङ्गानलेन विभ्रज्जिषसि त्वमाः किम् ॥ ४० ॥

धार्ष्ट्यं वुभूर्षुर्विभरिष्वलज्जामितीङ्गितं काचिदनूर्णुनूषुः ।
भावैर्बलात्प्रोर्णुनविष्यमाणा तालं विभर्षुः सहसा तमूचे ॥ ४१ ॥

४०. ४१. काचिद्देवी सहसा रत्यादिपरवशत्वेनापर्यालोचितमेव तं कर्णमूचे । कीदृक्सती । कर्णदर्शनाद्भावै रत्यादिभिर्बलात्प्रोर्णुनविष्यमाणा व्याप्तुमिष्यमाणात एवालज्जां निर्लज्जतां विभरिषुं पोषयितुमिच्छु धारयितुमिच्छु वा धार्ष्ट्यं प्रागल्भ्यं वुभूर्षुरत एव चेङ्गितं स्मरचेष्टितमनूर्णुनूषुः प्रकटयितुमिच्छुरत एव च तालं चच्चपुटादि विभर्षुर्धारयितुमिच्छुस्तालं वादयन्तीत्यर्थः । कथमूच इत्याह । हे दिदम्भिषो दम्भितुमिच्छो मां किमिति न शिश्रीषसे न सेवितुमिच्छसि । किंभूतामधिप्सुं दम्भितुमनिच्छुं तथाशिश्रयिषुं सिसेविषुं तथा युयूषुंमालिङ्गितुमिच्छुं तथा आः खेदे यियविष्वनङ्गानलेन संव-

१ ई °शिश्रियि°. २ ए °यिषु यु°. ३ ए न विद°. ४ सी ई °भ्रजिष°. ५ ए त्वमा कि°. ६ ए °र्ष्ट्यं विभू°. ७ डी वुर्भूर्षु° ८ ई °भूपुर्वि°. ९ ए °र्षुविभ°. १० डी °मिताङ्गि°. ११ ए °नूर्णनू°.

१ ए कर्म्ममू°. २ ई °भिवला°. ३ बी °र्णुनंवि°. ४ ए माणो व्याप्नुमि°. ५ सी °मिच्छुरतXXएव च ता°. ६ डी °लज्जा नि°. ७ सी ई रिपु पो°. ८ ई °पु प्रोष°. ९ ए °तुनिच्छु. १० ए °मिच्छ वा. ११ ए धाष्ट्य प्रा°. १२ ए °भूपुर°. १३ ए °मचूर्णनूपुः. १४ ई °नूर्णनू°. १५ बी सी डी °व ता°. ई °वथ ता°. १६ ए °षोर्दम्भि°. १७ ई दन्दम्भि°. १८ ए °निच्छुत°. १९ ए ई °शिश्रीषु २० ई °षु त°. २१ ए °षुना लि°. २२ सी डी °मालङ्गि°. २३ ई °ङ्गितमि°. २४ ए °था आ खे°. २५ बी °दे ययिवि°. २६ ए °नङ्गनले°.

ह्वीभवितुमिच्छुना कामाग्निना[1] विभ्रक्ष्यमाणां दग्धुमिष्यमाणां[3] मां किमिति विभ्रज्जिपस्यनङ्गीकारेण [4]दग्धुमिच्छसीति । अलज्जामित्यत्रेतिशब्दो भिन्नक्रमेत्र योज्यः ॥

मानाद्यया जिज्ञपयिष्यसे न वुवूर्ष्यसे[1] नापिपतिष्यसे न ।
ह्रीप्सुः प्रपित्सुर्विवरीपुरास्तां[2] ध्यातासि चित्ते सिसनिष्व[3]लज्जः ॥ ४२ ॥

ततः सिषास्वा तितनिष्यमाणमुदा[4] मया शुष्कधुनीं[5] तितीर्षा[6] ।
तितंस्यतेनुत्तितरीषु चक्षुर्मुधा[7] त्वयीत्येष[8] कया चिदूचे[9] ॥ ४३ ॥

४२. ४३. कयाचिद्देव्या[5] एष कर्ण ऊचे । कथमित्याह । यस्मात्त्वं यया सुभगया[6] मानात्सौभाग्याहंकारान्न जिज्ञपयिष्यसे न तोषयितुमिष्यसे[7] न वुवूर्ष्यसे याचितुं सेवितुं वा नेष्यसे[8] न चापिपतिष्यस आगन्तुमपि नेष्यसे । आः खेदे कोपे वा । तां नायिकां सिसनिषुः सेवितुमिच्छुरलज्जा यस्य[9] स निर्लज्जोसि त्वं चित्ते ध्याता स्मरंसि[10] । कीदृक्सन् । ता[11] ह्रीप्सुस्तोषयितुमिच्छुः[12] प्रपित्सुर्गन्तुमिच्छुर्विवरीषुः[13] सेवितुमिच्छुश्च[14] । ततस्तस्माद्धेतोस्तितनिष्यमाणा[15] त्वद्रूपातिशयदर्शनाद्विस्तारयितुमिष्यमाणा[16] मुद्यया तया । अत एवं[17] रागोल्लासेन सिषास्वा त्वां

१ ए °वूर्प्से. २ डी °पुरीस्ता. ३ ए °निष्टल°. ४ ए °माणः मु°. ५ ई शुष्कधु° ६ ए °तीर्षा । ति°. ७ ए °क्षुर्मधान्वयी°. ८ डी त्वयाल्ये°. ९ बी सी डी °चे ॥ एष कर्णः क°.

१ ए °ना विवक्ष्य°. २ ई दग्नुमि°. ३ ई °णा कि°. ४ ई दग्नुमि°. ५ बी सी डी ई °देव्योचे. ६ ई °भया. ७ ए °ष्यते न. ८ ए °ष्यते न. ९ ए °स्य नि°. १० ए °रसि । कीदृक्सशास्ता ह्री°. ११ ई ता जीप्सु°. १२ ए °मित्सु प्र° सी °मिच्छुर्वि°. १३ ई °पिच्छुर्ग°. १४ सी डी °च्छुस्तत°. १५ बी ततस्मा°. १६ ए °द्विस्तर°. १७ सी डी °व च रा°.

सेवितुमिच्छन्त्या मयानुत्तितरीष्वगाधलावण्यामृतनिमग्नत्वेनोत्तरीतुमनिच्छु चक्षुस्त्वयि विषये मुधा निरर्थकं तितस्यते दर्शनाय विस्तारयितुमिष्यते । यतः कीदृश्या । शुष्कधुनीं निर्जलनदीं तितीर्ष्वानुरागरसरहितत्वाच्छुष्कनदीतुल्यं त्वा दुःखकारि निरर्थकं चाभिलषन्त्येत्यर्थ इति ॥

दिभाग्दरिद्रासुतनुस्तपोभिर्लक्ष्मीं भजेतादिदरिद्रिपुर्ना ।
विसिस्मयिष्वा पिपविष्यमाणोरिरिष्यसेङ्गेशिशिपुश्रिया त्वम् ॥४४॥

तेजस्तमिस्रं चिकरीषदाजिगरीषदास्त्वाञ्जिजिपत्यधीशम् ।
त्वया तपः किं दिधरिष्यते तद्बिभ्रक्षुकैरादिदरिष्यते हि ॥ ४५ ॥

पिपृच्छिषुं मां निहनिष्यसि त्वं करिष्यसे नोत्तरमुच्चिचृत्सुः ।
चिचर्तिपुरुछन्न च चेत्तितृत्स्वा तंदिप्यसेऽनेन मयामुना तत् ॥४६॥

चिकर्तिषूनप्यचिकृत्समुच्चिच्छृत्सावचिच्छिर्दिषुमित्यमुं द्राक् ।
उक्त्वा निनृत्सुः प्रनिनर्तिषुभ्रूः काचिद्बिलक्षाब्जदलान्यकर्तीत्
॥ ४७ ॥

---

१ ए °ग्दरिद्रा°. २ ए °क्ष्मीं भुजे°. ३ ए ई °जेथादि°. ४ ए वि स°. बी ई विसस्म°. डी वि जिस्म° ५ सी डी °रिरष्य°. ६ ई °रिषिसे°. ७ ए सी °मिश्रा चि°. बी °मिश्रं चि°. ई °मिश्रा चि° ८ ई दिधिरि°. ९ ए बी ई °चिभृत्सु १० डी तर्हिष्य°. ११ ए °चिच्छर्दि°. १२ ए उक्ता नि°. १३ ई निनित्सुः. १४ ई °चिद्दल°. १५ ए बी ई °तान् ॥ का°.

---

१ ए °त्वेन त्वत्त°. सी °त्वेनत्त°. ई °त्वेन तूत्त°. २ ए °ष्कधनीं. ३ सी डी °तीर्ष्वानु°. ४ ए °ममहि°. ५ ए दुःखका°. बी दुरखका°. ६ बी °भिलाप°. ७ ए °षन्तेत्य°. ई °षन्तीत्य°.

४४–४७. काचिद्देवी कर्णक्षोभलक्षणकार्यासिद्धे[1]र्विलक्षा सत्यब्ज-दलानि क्रीडाकमलपत्राण्यकर्तो[2]च्चिन्छेद । विलक्षो हि पत्रकर्तनभू-वि[3]लेखनादि कुरुते । किं कृत्वा । विलक्ष्ये[4]मुं कर्णमुक्त्वा । कीदृक्सती । कर्णमनःक्षो[5]भनार्थं[6] निनृत्सुर्नर्तितुमिच्छुस्तथा प्रं[7]निनर्तिषू[8] नर्तितु-मिच्छू भ्रुवौ यस्याः सा[9] च । कीदृशममुम् । चिकर्तिषूनपिच्छेत्तुमि-च्छूनपि रोद्धुमिच्छूनपि[10] वा शत्रूनपीत्यर्थः । अचिकृत्सुं[11] जितद्वेषत्वात्प्र-तिकर्तुं[12]मनिच्छुं तथोच्चिच्छृत्सावपि । अपिरत्रापि योज्यः[13] । क्रीडितुमि-च्छावपि मित्रेपीत्यर्थः । अचिच्छर्दिषुं जि[14]तरागत्वात्क्रीडितुमनिच्छुम् । कथमुक्त्वेत्याह । हे राजन्नदिदरिद्रिषु[15]र्दरिद्रः सन्नदरिद्रीभवितुमिच्छुर्ना नरो ल[16]क्ष्मीं देवतां दारिद्र्योच्छेदाय भजेत सेवितुमर्हति । कीदृक्सन् । तपोभिः कृत्वा दिप्राग्दरिद्रा[17]सुर्दिदरिद्रा[18]सुः कृशीभवितुमिच्छुस्तनु[19]रङ्गं यस्य स त्वं तु वि[20]सिस्मयिष्वाश्चर्यभूत[21]याशिशिषुश्रिया सर्वाङ्गं व्याप्तु-मिच्छन्त्या लक्ष्म्या राज्यश्रिया पिपविष्यमाणः पवित्रीकर्तुमिष्यमा[22]णः सन्नङ्के[23]रिरिष्य[24]से गन्तुमिष्य[25]से सेवितुमिष्यस इत्यर्थः । अत एव । आ विस्म[26]ये । त[27]मिस्रं तिमिरं चिकरी[28]षत्क्षेप्तुमिच्छज्जिगरीष[29]द्ग्रसि-तुमिच्छु प्रचण्डमित्यर्थः । तेजोङ्गदीप्तिस्त्वा त्वामधीशं राजानमञ्जि-जिषति प्रकटयितुमिच्छति तस्माद्धि स्फुटं यत्तपो भिक्षुकैर्भिक्षाचरै-रादिदरिष्य[30]तेङ्गीचिकीर्ष्यते तत्तपस्त्वया किं केन हेतु[31]ना दिधरिष्यते ।

१ प °द्धे विल°. २ प र्तोचिच्छे°. ३ प सी डी °लेपना°. ४ °क्षाम्रु क°. ५ सी °क्षोभाय. ६ प वी ई °य ननृ°. ७ प प्रतिनि°. ८ प पूर्नेच्चितु°. ९ ई सा । की°. १० ई °पि श°. ११ प °त्सु चित°. १२ ई °तुंमिच्छु १३ ई °ज्यः । क्रीडि°. १४ प जिगत°. १५ वी °पुदरि°. १६ ई लक्ष्मीदे°. १७ डी °द्रासु° कृ°. १८ प °द्रासुकृमीभ°. १९ प °स्तमुरग य°. २० प ई विसस्म°. २१ प °तयाः शि°. २२ प वी °माण स°. २३ ई °रिरष्य°. २४ वी °से रन्तु°. सी °से पन्तु°. २५ प °से इ°. २६ ई °ये । तिमि°. २७ प °मिस्रा ति°. सी ई °मिश्रा ति°. २८ प °रीपत्क्षेपु-मिच्छाजि°. सी रीपुत्क्षे°. २९ प °पद्ग्रसि°. ३० सी डी °तेत°. ३१ वी °ना दधिरि°.

धेट्[1] अन्तर्भूतणिगर्थः सकर्मक । धेर्तुमिष्यते चरितुमिष्यत[2] इत्यर्थः । तथा चेत्त्वमुच्चिघृत्सु[3] कोपेन हन्तुमिच्छु[4] सन् पिपृच्छिषुमुक्तरीत्या प्रष्टुमिच्छुं[5] मां निहनिष्यसि चपेटादिना ताडयिष्यसि । तथा चेत्त्व छद्म ध्यान्यहं मौन्यहमित्येव[6][7] मायां[8] चिचर्तिपुर्ग्रन्थितुमिच्छुश्चिकीर्षुः[9][10][11] सन्नुत्तरं[12] पूर्वपृष्टप्रतिवचनं[13] न करिष्यसे च[14][15] तत्तदा तितृत्स्वा जिघास्वा मयामुना प्रत्यक्षेणाव्जेन कृत्वा[16] त्वं तर्दिष्यसे[17] हनिष्यस इति ॥

जरित्वा । व्रश्चित्वा । इत्यत्र "जृव्रश्च[18] क्त्वः [ ४१ ] इतीट् ॥

देवित्वा द्यूत्वा । इत्यत्र "उदितो वा" [ ४२ ] इति वेट् ॥

क्षुधितम् । क्षुधित्वा[19] । उषित[20] । प्रोषितवान् । उषित्वा । इत्यत्र "क्षुध०" [ ४३ ] इत्यादिना-इट् ॥ यङ्लुपि वावसितम् । यङ्लुपि नेच्छन्त्यन्ये । वावस्तवत् ॥

लुभित । लुभित्वा । अञ्चित । अञ्चितवत् । अञ्चित्वा । इत्यत्र "लुभि०" [४४] इत्यादिना-इट् ॥

अभिपूतम्[21] परिपूतवत् पूत्वा पवितः पवित्वा । अक्लिष्टम्[22] । क्लिष्टवती क्लिष्ट्वा अक्लिशितौ क्लिशित्वा । इत्यत्र "पूङ्०" [ ४५ ] इत्यादिना वेट् ॥

सोढा सहिता । अलोब्धरि विलोभित्री । अनेष्टा[23] एषित्री:[24] । रोष्टा अविरोषिता ।

---

१ वी धृङ्ग अ° २ प धर्तुमि°. ३ प °च्चिभृत्सु को°. वी ई °च्चिभृत्सु. ४ प वी °मित्सु स°. ५ प °मिच्छु मा. ई °मिच्छ मां. ६ प मौनाह°. ७ प °त्येव मा°. ८ सी ई °या विवर्ति°. ९ प °पुग्रन्थि° १० डी °ग्रंथित्तु°. ११ मित्सुश्चि°. १२ प समुत्त° १३ ई °न क°. १४ सी डी °ष्यसि च. १५ प च वत्त°. १६ प °त्वा स्व तदिष्य° १७ प सी °से ह°. १८ वी सी °व्रश्च क्त्वः. १९ प क्षुपित्वा. २० ई °षित । प्रो°. २१ प सी °त । प°. २२ प अश्लिष्ट°. २३ प °ष्टा पषि°. २४ प °त्रीः । रौष्टा । रोषित्रीश्च वि°. डी °त्रीः । राष्टा.

रेष्टा रेषिष्टी[1] । इत्यत्र "सहलुभ°" [ ४६ ] इत्यादिना वेट् ॥ कश्चित्तु पठति । अशिभृग्रस्तुशुचि[2]वस्तिभ्यस्तकारादौ वेट् । अष्टा अशिता[3] । भर्ता भरिता । अमंम्नोत्री म्नवित्री[4] । शोक्रीम्[5] शोचिता[6] । वस्त्रो वसित्री ॥ तथा[7] रु[8]-नु-सु-दुभ्योपरोक्षायां वेट् । रोत्री रविता । प्रणोत्री नवितारम् । सोता सविता । अदोत्रीम् दविता ॥

इवन्त[9] । दुद्यूषुः अदिदेविषुः । ईर्त्सत् अर्दिधिषु । विभ्रक्ष्यमाणाम्[10] बिभ्रजिषसि । अधिप्सुम् दिदम्भिषो । शिश्रीषसे आशिश्रयिषुम् । युयूषुम्[11][12] यियविषु । अनूर्णुनूषु[13] प्रोर्णुनविष्यमाणा[14] । बुभूर्षुः बिभरिषु । ज्ञीप्सुः जिज्ञपयिष्यसे । सिषास्वा सिसनिषु[15] । तितंस्यते ततनिष्यमाणं[16][17] । प्रपित्सुः[18] आपिपतिष्यसे । बुवूर्ष्यसे[19] विवरीषुः[20] । ऋदन्त । तितीर्ष्वा अनुतितरीषु[21] । दिदरिद्रासु[22] । अदिदरिद्रिषुः[23][24][25] । अत्र "इवृध०" [ ४७ ] इत्यादिना वेट् ॥ भरेति[26][27] शवा निर्देशो यङ्लुपो बिभर्तेश्च निवृत्त्यर्थः । बुभूर्षुः । बिभर्तेरपीच्छन्त्येके । इडभावपक्षे गुणमपि । बिभर्षुः बिभरिषु[28] । तन्मतसंग्रहार्थं कृतगुणस्य भृगो[29] निर्देशस्[30]तेनेडभावपक्षेपि गुण स्यात् ॥

अरिरिष्यसे । विसिस्मयिष्वा[31] । पिपविष्यमाणः । अजिजिषति ।

---

१ षी °षिती । इ°. २ प °चिव्यस्ति°. ३ प °ता । सर्ता. ४ वी °श्रीम् । शो°. ५ सी डी °क्री शो°. ६ प शोतिता. ७ प °था ऋतुपुसु°. डी °था ऋनु°. ८ सी रुतुदु°. ९ प इद च । दु°. १० प °भ्रक्षमाणा वि°. ११ वी युयूपुम् । यियवि°. १२ प °यूर्षु यि°. १३ प °नूषुः प्रार्णु°. १४ प °माणो । बु°. १५ डी °निषु. । ति°. १६ डी °माणा प्र°. १७ प °ण । प्रेपित्सु आ°. १८ सी °पित्सु आ°. १९ बुभूर्ष्यं°. २० प सी °रीषु । ऋ°. २१ प °षु । दद°. २२ डी °द्रासुः अ°. २३ प अदद°. २४ सी °रिद्रषु । अ°. २५ प °द्रिषु । अत्र इ°. २६ प भरति. २७ प वी सी डी °तिशिवा. २८ डी °रिषुः । त°. २९ डी °गोनिर्दे°. ३० सी निदेश°. ३१ प °यिषा । पि°.

अशिशिपु[1] । चिकरीषत् । आजिगरीषत् । दृङ् । आदिदरिष्यते । धृङ्[2] । दिधरिष्यते । पिपृच्छिषुम्[3] । अत्र "ऋस्मि०" [ ४८ ] इत्यादिना-इट् ॥

निहनिष्यसि । करिष्यसे । अत्र "हन्नृत. स्यस्य"[4] [ ४९ ] इतीट् ॥

कृतैत कृतैप् वा[5] । चिकृत्सुम् चिकर्तिषून्[6] । उच्चिचृत्सुः[7] । चिचर्तिषु[8] । निनृत्सुः[9] प्रनिनर्तिषु[10] । उच्चिच्छृत्सौ अचिच्छर्दिषुम्[11] । तितृत्स्वा तर्दिष्यसे । अत्र "कृतैचृत०"[12] [ ५० ] इत्यादिना वेट् ॥ असिच इति किम् । अकर्तीत् ॥

स्वस्त्वं गमिष्यस्युत गंस्यतेधिजिगांसुनान्तः[1] किमपीह मोक्षः ।
यत्तेधिपूर्व जिगमिष्वभिख्यां[2] स्त्रैणं प्रतिप्रैस्नविताासि[3] नान्तः ॥४८॥

उक्ष्णा यदा स्नोष्यत[4] आशु शैलैस्तत्क्रंस्यतेऽधेः[5] क्रमिताथ वौर्वः[6] ।
भूर्वा क्रमित्री क्रमितासि मां त्वं तदा प्रकँल्प्तासि रतौ विवृत्साम्[7] ॥ ४९ ॥

पाता न मां त्वं[8] शकिताप्यशक्त्रीमखेदिता यद्यधुनातिखेत्रीम् ।
क वेदिता मां ननु मृत्युवेत्रीं यत्कृत्यबोद्धापि न बोधिता किम् ॥ ५० ॥

क्ष्वेत्ता त्वमक्ष्वेदितृवन्मयासि वृतः श्रितः कीर्णहियैरत्युदित्वा ।
स ऊर्णुतो ध्यानयुतो जिघृक्ष्वा करेण निर्लूनभिया[9] कया चित् ॥ ५१ ॥

---

१ ए °गामुना°. २ ए °भिख्या स्त्रै°. ३ ए प्रस्नवि°. ४ सी °दा स्तोष्य°. ५ ए °स्तकस्य°. ६ ए °तानचौर्वः. ७ ए °कस्तफामि. ८ ए त्व शकि°. ९ ए °नभया.

---

१ ए °शिपु । चिक°. २ बी °ते । धृंङ्. ३ ए सी °पु । अ°. ४ ए °नृत स्य°. ५ बी °तैपु वा. ६ बी चिकिर्ति°. ७ ए °चिमृत्सुः. ८ ए °र्तिपु । नि° ९ ए °त्सुः नि°. १० ए डी र्तिपुः । उच्चिनृत्सौ अचिच्छ°. ११ ए डी °पु । ति°. १२ ए °तमृत्यत्सा°. सी °तमृतेत्सा°.

४८–५१. कया चिद्देव्या निर्लूनभिया निर्भययात एव करेण कृत्वा जिघृक्षवा तं[1] ग्रहीतुमिच्छन्त्या सत्या ध्यानयुतो योगी स कर्ण ऊर्णुत आच्छादितः स्वाङ्गेन व्याप्त आश्लिष्ट इत्यर्थः । किं कृत्वा[2] । उदित्वा[3] । किमित्याह । हे राजंस्त्वद्गतचित्तत्वा[4]त्तेभिरल्यां कर्ण इति नामान्तै[5]श्चित्तेधिपूर्वं जिगमि[6]ष्वधिजिगमिषु पठितुमिं[7]च्छु स्मर्तुमिच्छु वा [8]क्षणं देवाङ्गनौघं प्रति लक्ष्यीकृत्य यदसि त्वं न [9]प्रश्नविता नार्द्र-हृद[10]यीभवसि न प्रसीदसीत्यर्थः । तत्त्वं किं स्वर्ग[11]मिष्यस्युताथ वेह लक्ष्मी-गृहे[12]न्तश्चित्ते किमर्थ्यै[13]ज्ञेयं रहस्यमधिजिगां[14]सुना पिपठिषुणा जपतेत्यर्थः । त्वया मोक्षो[15] गंस्यते । ईदृशैस्तपोजपैः स्वर्गापव[16]र्गौ स्वप्नेपि ते दुर्लभा-वित्यर्थः । अथ[17] वा यदोक्ष्णा बलीवर्दे[18]न स्तोष्यते पयः क्षारिष्यते[19]थ वा यदा शैलै[20]रांशूत्कंस्यत ऊर्ध्वं यास्यतेथ वा यदौर्वो वडवाग्निरब्धेः सका-[21]शाक्रमिता गन्ता निःसरिष्यतीत्यर्थः । वा यद्[22]। भूः पृथ्वी[23] क्रमित्री स्वपदाभ्यां संचरिष्यतीत्यर्थः । तदा त्वं[24] मां क्रमितास्मि गमिष्यसि से[25]वि-ष्यस इत्यर्थः । तथा तदा रतौ निधुवनविषये विसृ[26]त्सां प्रवर्त[27]नेच्छां प्रकल्प्तासि विधास्यसि[28] क्लृप् अन्तर्भूतणि[29]गर्थः सकर्मकः । यदो[30]क्षादीनां [31]प्रश्न(स्न)वादि भवि[32]ष्यति तदानया देव्या सहाहं रंस्य इति त्वया

---

१ बी तं गृही°. २ सी °त्वादित्वादिशकि°. ३ प °दित्वा । कि°. ४ प °त्वाभि°. ५ बी सी डी °न्तश्चेतस्यधि°. ६ प °मिषु प°. ७ प °मित्सु स°. ८ प लक्ष्मीकृ°. ९ प प्रश्नवि°. १० प °दयाभ°. ११ बी °गंक्रमि°. १२ प °हेतश्चि°. १३ प °र्थ्यजेय. १४ प °गासना. १५ प °क्षो गम्यते. १६ प °वर्गो स्व°. १७ प °थवा-यवोक्ष्णा. १८ प सी डी °न स्तोष्य°. १९ प °तेय वा. २० प °राश्रुत्कं°. २१ प °शाक्रमि°. २२ बी सी °दा यदा भू.. २३ प °थ्वी क्रमि° २४ प त्व ना क°. सी त्व मा क°. २५ प सेधिष्य°. २६ प विमृत्सा. २७ प °नेच्छाप्र°. २८ सी °सि क्लृप्. प °सि कृ इ म°. २९ प °न्तभूत°. ३० प यदाक्षादीना प्र°. ३१ सी प्रस्तवनादि. डी प्रस्तवनादि. ३२ प °ष्यसि तयान°.

तीव्रोभिर्ग्रहः कृतोथ वेत्यहं जानामीत्यर्थः । परमधुना संप्रति मां यदि त्वं न पाता स्वाङ्गसङ्गामृतास्वादनेन न रक्षसि । कीदृशीम् । अशक्तीं कामशरैर्जर्जरीकृतत्वात्किंचिदपि कर्तुमसमर्थामत एवातिखेत्रीमत्यन्तं दीनीभवन्तीं परितप्तीभवन्ती वा । यत खिद्यत्परिताप इति केचित्पठन्ति । कीदृशः सं्स्त्वं शकितापि समर्थोपि । अत एवाखेदितापयदीनोपि । तदा नन्विति प्रश्ने । पृच्छामि त्वां मां क वेदिता लभसे यतो मृत्युवेत्री त्वदुपेक्षायां कामाग्निदाहातिरेकेण मरणे वर्तमाना मृत्योर्लब्ध्रीं वाद्य श्वो वा मे मृत्युर्भावीति मृत्योर्विचारिकां वा । तस्मात्त्वत्कृत्यवोढापि यच्च तत्कृत्यं च यत्कृत्यं स्वयमखिन्नशक्तेन खिन्नाशक्तपालनलक्षणं महाधर्मकृत्यं तस्य वोढापि सर्वशास्त्रेषु लोके च प्रसिद्धत्वाज् ज्ञातापि सन्किमिति न बोधिता न जानासि तस्याकरणात् । तस्मान्मा रक्षेति तात्पर्यार्थः । यद्वा किं बहूक्तेन क्षेत्तापि । अपिरध्याहार्यः । जाप्यवशेनाव्यक्तं वदन्नर्थं नङ्गीकारान्मां त्यजन्नपि वाक्षेदितृत्वव्यक्ताक्षरं मामालपन्निवात्यजन्निव वा त्वं मया वृतो भर्तृत्वेन वरितः श्रितश्चासि यतः कीर्णह्रिया त्यक्तलज्जयेति ॥

**कोपं जुगुक्षन्निजुगूहिषुः स्वं नृपः पुपूर्षन्नतितिक्षतैतत् ।**
**उड्डीनवद्विघ्नभयः स लग्नो ब्रह्मण्यनुड्डीनसमाधिशून्यः ॥ ५२ ॥**

५२. नृपः कर्ण एतदप्सरःकृतमनुकूलोपसर्गवृन्दमतितिक्षताक्षाम्यत् । कीदृक्सन् । कोपं जुगुक्षन्निरुन्धंस्तथा स्वमात्मानं निजुगूहिषु-

१ ए °षन्निति°. २ सी उदीन° डी उडीन°. ३ ए °भवः स. ४ ए °ण्यमुड्डी°.

१ सी °ग्रह कृ°. २ ए °ह कुतो°. ३ ए °मर्थीम°. ४ बी सी °वन्ती वा. ५ ए °भते य°. ६ ए °त्योप्त्रीं वा°. ७ ए °पि त्वत°. ८ बी सी °त्य य°. ९ ए °न्किगिति. १० ए डी °क्तेनाक्षे°. ११ ए °पव्यसेना°. १२ ए °व्यनदगीकारान्यात्य°. १३ बी °ङ्गीकरा. १४ ए डी ई °पि क्षे°. १५ ए °दिश्चव°. १६ ए डी °रं नामाल°. १७ ए° न्निर्वा त्व. १८ ए °रिता श्रि°. १९ बी सी डी निजगू°.

वंशीचिकीर्षुरित्यर्थः । अत एव स्वमेव पुपूपन्पवित्रीचिकीर्षुः[1] । यतः स कर्णो ब्रह्मणि परमध्येये[2] लग्न आसक्तोभूत् । कीदृक्सन् । अनुड्डीनोक्षीणो यः समाधिश्चित्तैकाग्र्यं तेन शूनो[3] वृद्धोतिस्फीतसमाधिरित्यर्थः । अत एवोड्डीनवन्नष्टं विघ्नभयं[4] यस्य सः ॥

गम्लृ । गमिष्यसि । इक् इङ्वा । अधिजिगमिषु । अत्र "गमोनात्मने[5]" [ ५१ ] इतीट् ॥ इङो नेच्छन्त्येके । अधिजिगांसुना[6] ॥ अनात्मने इति किम्[7] । गंस्यते[8] ॥

प्रस्नविता । इत्यत्र "स्नोः" [ ५२ ] इतीट् ॥

क्रमितासि । इत्यत्र "क्रमः" [ ५३ ] इतीट् ॥ अनात्मन इति किम् । उत्क्रंस्यते[10] ॥

क्रमिता । क्रमित्री[11] । इत्यत्र "तुः" [ ५४ ] इतीट् ॥

विवृत्साम् । प्रकल्प्तासि । इत्यत्र "न वृद्भ्यः" [ ५५ ] इति नेट् ॥

पांक् । पाता ॥ शंकृत्[12] शकींद्वा । अशक्रीम् ॥ विदिंच् विदंती विदिंष्वा[13] । वेत्रीम्[14] ॥ खिदिंच् खिदंत्[15] खिदिंष्वा[16] । अतिखेत्रीम् । अत्र "एकस्वरा[17]" [ ५६ ] इत्यादिना नेट् ॥ शक्यतिविन्दतिखिन्दतीनामिटमिच्छन्त्येके[18] । शकिता । वेदिता । अखेदिता ॥ अनुस्वारेत इति किम्[19] । ञिक्ष्विदाँ[20] ञिक्ष्विदाङ्[21][22] ञिक्ष्विदाँष्वा[23] ।

---

१ ए °पुं· । यंतः. २ बी °ध्येयल°. ३ ए तेम शू°. ४ सी विघ्न भ°. ५ ए °त्म इ°. ६ ए सी °गामुना. ७ बी °त्म इ°. ८ डी °म् । गम्यते. ९ ए गम्यते. १० ए उक्रस्य°. ११ ए डी °मिती । इ°. १२ बी सी डी शकृट् शकींच्वा । अ°. १३ ए विदिप्वा. १४ बी वेत्रीम्. १५ ए °दित्. १६ ए खिदिस्वा । अ°. डी °दिंस्वा । अ°. १७ बी सी डी °स्वरादित्या°. १८ बी सी °खिदती°. १९ ए °म् । निक्ष्वि°. २० सी °दाच्वा । क्ष्वे°. २१ डी ञिदाङ् निक्ष्विदाच्वा । क्ष्वे°. २२ ए °दाद्वा । क्ष्वे°. २३ बी °दाध्वा । क्ष्वे°.

क्ष्वेदितृ ॥ अस्मादपीट नेच्छन्त्येके । क्ष्वेत्ता ॥ वुधृग् वुध वा । बोधिता । आभ्याम पीट नेच्छन्त्येके । बोद्धा ॥

वृतः । कीर्ण (र्णं) । श्रित । ऊर्णुतः । अत्र "ऋवर्ण°" [५७] इत्यादिना नेट् ॥

युतः । लून । इत्यत्र "उवर्णात्" [ ५८ ] इति नेट् ॥

जिघृक्षवा । जुघुर्क्षन् । पुपूषन् । इत्यत्र "ग्रहै°" [ ५९ ] इत्यादिना नेट् ॥ गुहेरिटमिच्छत्यन्य. । निजुगूहिषुः ॥

अतितिक्षत । इत्यत्र "स्वार्थे" [ ६० ] इति नेट् ॥

अनुड्डीन । उड्डीनवत् । शूनः ॥ एदित् । लग्न. । अत्र "डीय°" [६१] इत्यादिना नेट् ॥

**सुव्यक्तमित्यस्तरुचिः स्मरास्त्रासितैः समर्णो द्युवधूजनोथ ।**
**नभोर्दितैरुत्पतितो विमानैर्न्यर्णस्त्रपां व्यर्णरुगर्णवुद्धिः ॥ ५३ ॥**

५३. अथ कर्णस्य ध्यानाचलनानन्तरं द्युवधूजनो नभोर्दितैर्व्योमप्राप्तैर्विमानैः कृत्वोत्पतितः । कीदृक्सन् । स्मरास्त्रासितैः कर्णरूपदर्शनोत्थकामशरक्षेपै. समर्णः पीडितस्तथेत्युक्तरीत्या सुव्यक्तमस्तरुचिर्भग्नमनोरथोत एव त्रपा लज्जा न्यर्ण प्राप्तस्तथा व्यर्णरुग्विच्छायस्तथार्णवुद्धिर्गतधीः ॥

१ ए °त्स्तरु°. ए °रास्त्रासि° ३ ए °नोव । न°. ४ वी नेन्यर्ण°. ५ ए °पा त्यर्णरगरुर्णवु°.

१ ए वी सी वुधृग् २ वी डी वुध् वा. ३ ए °पीटा ने° ४ डी °क्षत् । पु°. ५ सी °त्र गुह°. ६ डी °हगुह इ° ७ ए निजगू°. ८ ए °त्सव स्वा°. ९ ए शून् ॥ ए°. १० ए °र स्युव°. ११ ए नम्योर्दि°. १२ ए °रास्त्रासि°. १३ ए °मर्थपी°. १४ सी डी °यरुचिस्त°.

अर्णः । सुव्यक्तम् । अंसू । अम्न । इत्यत्र "वेटोपतः" [ ६२ ] इति नेट् ॥ केचिदस्यतेर्भावे क्ते नित्यमिटमिच्छन्ति । असितः ॥ अपत इति किम् । उत्पतितः ॥

समर्णः । न्यर्णः । व्यर्ण । इत्यत्र "संनि°" [ ६३ ] इत्यादिना नेट् ॥ संनिवेरिति किम् । अर्दितः ॥ कश्चित्केवलादपीच्छति । अर्णं ॥

अभ्यर्णमागादथ वृत्तमन्त्रे नृपे विशस्तौजसि कोपि धृष्टः ।
कष्टः पुमान्घुष्टगुणावबद्धातिकष्टकेशो घुषितानि कुर्वन् ॥ ५४ ॥

५४. अथ देव्युत्पातानन्तरं कोप्यज्ञातः पुमान् पुंरूपधारी सुरोऽभ्यर्णं कर्णसमीपमागात् । क सति । विशस्तौजसि प्रौढप्रतापे नृपे कर्णे वृत्तमन्त्रे जपितलक्ष्मीमन्त्रे । कीदृग् । धृष्टः प्रगल्भस्तथा कष्टः कषिष्यति कष्टं कृच्छ्रं तस्य हेतुस्तथा घुष्टेन संबद्धावयवेन निबिडेनेत्यर्थः । गुणेन रज्ज्वावबद्धाः संयमिता अतिकष्टा अतिगहनाः केशा यस्य सः । तथा घुषितानि नानाशब्दितानि कुर्वन् ॥

अभ्यर्णम् । अत्र "अविदूरेभेः" [ ६४ ] इति नेट् ॥

वृत्तमन्त्रे । अत्र "वृत्तेः(तेः?)°" [ ६५ ] इत्यादिना वृत्तेति निपात्यम् ॥

धृष्टः । विशस्त । इत्यत्र "धृष°" [ ६६ ] इत्यादिना नेट् ॥

कष्टः । अतिकष्ट । इत्यत्र "कषः°" [ ६७ ] इत्यादिना नेट् ॥

घुष्टगुण । इत्यत्र "घुषेः°" [ ६८ ] इत्यादिना नेट् ॥ अविशब्द इति किम् । घुषितानि ॥

---

१ ए °माथावथ. २ ए °पि सृष्टः ।.

---

१ ए अमू । अ°. २ ए °र्णः । व्य°. ३ सी अर्णम् ॥ अ°. डी अर्णः ॥ अ°. ४ सी डी °र्णे स°. ५ ए °सि नृ°. ६ बी निबद्धे°. ७ ए रज्ज अव°. ८ ए केनाय°. ९ बी सी डी °शा येन सः. १० ए बी ई °त्र वर्त्तेः इ°. ११ ए °ल ॥ धृ°. १२ ए अधिष्टेत्यकष्टेत्य°.

ध्वान्ताकृतिर्वाढदृढाचलेन्द्रक्षुब्धाम्बुधिश्लिष्टविरिब्धकण्ठः ।
स पारिवृढ्यं नु दधन्नृपं स्म दुःस्वान्त इत्याह समाधिलग्नम् ॥५५॥

५५. स पुमान्समाधिलग्नं ध्यानलीनं नृपमिति वक्ष्यमाणनीत्याह स्माब्रवीत् । कीदृक्सन् । ध्वान्ताकृतिः । तथा बाढं भृशं दृढो वली स्थूलो वा योचलेन्द्रो मन्दराद्रिस्तेन क्षुब्धो मथितो योम्बुधिस्तस्येव श्लिष्टमस्पष्टं विरिब्धं स्वरो यस्य स तथा कण्ठो गलो यस्य सः । तथा दुःस्वान्तो दुष्टचेतास्तथा पारिवृढ्यं नु प्रभुत्वमिव दधत्स्वामीव निःशङ्क इत्यर्थः ॥

फाण्टं नु मिन्नो विदितोसि मिन्नं मम क्रुधा मेदितमीर्ष्यया च ।
प्रमेदितव्याज तव प्रमिन्नं वपुः किमत्तुं शकितं मया न ॥ ५६ ॥

५६. प्रमेदितं स्निग्धीकर्तुमारब्धमाश्रितमित्यर्थः । व्याजं तपोजपरूपं छद्म येन हे प्रमेदितव्याज फाण्टं त्वनायाससाध्यमश्रपितमपिष्टमुदकसंपर्कमात्राद्विभक्तरसमौषधं कषायादि फाण्टं तदिव मिन्नः स्निग्धोत्युपचित इत्यर्थः । असि त्वं मया विदितो दृष्ट इत्यर्थः । अतश्च मिथो विरुद्धाङ्गोपचयतपोध्यानावलोकेन तव मायित्वावगत्या मम क्रुधा कत्र्या मिन्नमुपचितमीर्ष्यया चाक्षमया च मेदितमतश्च प्रमिन्नमुपचेतुमारब्धं तव वपुरत्तुं किं मया न शकितं न शक्ष्यते । अत्र "वा हेतुसिद्धौ क्तः" [ ५.३.२ ] इति भविष्यति क्तः । चेन्मम कोपेन मिन्नं तदा त्वद्वपुरत्तुं शक्ष्यत एवेत्यर्थः ॥

१ ए °ढभृढा°. २ ए °विरसक°. बी °विरब्ध°. ३ °प स्व दुः°. ४ डी दुःखान्त. ५ ए नु सिन्नो. ६ ए °या त ॥.

१ °न् । कान्ता°. २ ए °थार्वाढ. ३ ए °तोयोधि°. ४ ए बी विरब्ध. ५ सी डी °लोस्य. ६ सी डी दु.खान्तो. ७ ए °रत्व मा. ८ ए तज°. ९ ए °द्म जेन १० ए °समोप°. ११ ए °मीर्षया. बी °मीर्ष्यया. १२ डी °या वाक्ष°. १३ ए °रत्तु किं. १४ ए शप्यते. डी शक्यते. १५ ए °ते। तत्र. १६ ए रत्व शप्यतः

न शक्तमास्थातुमशान्तदान्तैः श्रीवेश्म मे स्पष्टमदासितार्चैः ।
ततस्त्वमच्छन्नमदस्तपूर्णबलिर्मया स्पाशित एवमन्ये ॥ ५७ ॥

५७. श्रीवेश्मास्थातुमाश्रयितुं न शक्तं न शक्यते स्म । कैः कैरित्याह । अशान्तदान्तैरजितेन्द्रियतपःक्लेशासहैस्तथा मे मह्यं स्पष्टमदासितार्चैरदत्तपूजैश्च । तत्तस्माद्धेतोरच्छन्नं प्रकटमदस्तपूर्णबलिर्मह्यमदत्तपर्याप्तपूजोपचारस्त्वं मया स्पाशित एव भक्षणाय गृहीत एवेति मन्ये । यद्यपि राज्ञः स्पशनं भावि तथाप्यनेनातिस्वाधीनत्वेन कृतमिव संभावितमित्यतीते क्तः ॥

रक्षोभिराच्छादितपूरितं प्राक् संज्ञप्तविश्वैर्दमितामरैर्हि ।
विश्वस्तया पातुमिदं श्रियौक आज्ञापितोहं शमितान्यशक्तिः ॥५८॥

५८. इदं प्रत्यक्षमोको लक्ष्मीगृहं पातुं रक्षितुं विश्वस्तया मयि कृतविश्वासया श्रियाहमाज्ञापितो नियुक्तः । यतः कीदृशम् । प्राक्पूर्वं संज्ञप्तविश्वैर्मारितलोकैर्दमितामरैः परिभूतदेवै रक्षोभिर्हि स्फुटमाच्छादितपूरितमाक्रान्तं संभृतं च । यतः कीदृशोहम् । बलिष्ठत्वेन शमितान्येषां राक्षसादिशत्रूणां शक्तिर्येन सः ॥

कथमाज्ञापित इत्याह ॥

जप्तापि मन्त्रैर्जपितापि पुष्पैस्तूर्णं भवाम्युच्छ्वसिता न तस्य ।
न ते बलिं यस्त्वरितो दिशेत्प्राग्बलिः स भावी रुषितस्य ते च
॥ ५९ ॥

---

१ प °क्रमस्था°. २ प °वेशने स्प°. सी °वेस्म मे. ३ प °र्णर्वलि°. ४ बी °या स्फाशि°. ५ ई °प्ताभिम°. ६ प °जैप्तापि. ७ बी पुष्फैस्तू°. ८ प °मुच्छसि°. ९ प °वी ऋषि°.

---

१ सी °वेस्मास्था°. २ सी शक्य°. ३ बी °न्तदीतैर°. ४ बी ततस्तस्मा°. ५ प राज्ञ स्प°. ६ प सी डी °र्व सक°.

अभ्यान्तरक्षो[1]वमितास्त्र[2]रुष्टा वा[3]न्ताश्रुरास्वान्तवतीति वृत्तिम् ।
संघुष्टवा[4]गमेभ्यमितस्य देवी प्रतिज्ञया संघुपितस्वनस्य ॥ ६० ॥

५९,६०. देवी लक्ष्मीर्मे वृत्तिं जीविकामास्वान्तवत्युवाच । कीदृक्सती । अभ्यमन्ति[1] स्माभ्यान्तान्यभिमुखमागतानि यानि रक्षांसि तैर्वमितमरुच्योद्गीर्णं यदस्त्रं पूर्वपीतं मनुष्यादिरक्तं[2] तेन रुष्टात एव वान्ताश्रुः[3] कोपावेशेन नेत्रेभ्योऽश्रूणि क्षरन्ती । कीदृशः सतो मेऽभ्यमितस्य दे[4]व्यभिमुखं गतस्य तथा प्रतिज्ञया त्वद्वेश्म मया सर्वदुष्टेभ्यो र[5]क्ष्यमेवेत्य[6]भ्युपगमे[7]न संघुपितस्वनस्य नानोच्चारितशब्दस्य । कां वृत्तिमित्याह । यो नरस्त्वरित उत्सुकः[8] संस्ते[9] तुभ्यं प्राग्बलिं न दिशेन्न दद्यात्तस्य प्राक्तुभ्यं बलेरदातुर्नोच्छ्वसिता न प्रसन्ना भवामि[10]। कीदृशी । मन्त्रैस्तूर्णं जप्ता[11]पि स्मृतापि पुष्पैर्मन्त्रपूतकुसुमैर्जपितापि मन्त्रोच्चारपूर्वं करवीरादिपुष्पक्षेपेण स्मृतापीत्यर्थः । तथा स प्राक्तु[12]भ्यं बलेरदाता[13] रुषितस्यापूजया क्रुद्धस्य[14] ते बलिर्भावी च स त्वया प्रसनीय इत्यर्थ इति । न[15] च वाच्य[16]मवहेलया प्रतिज्ञात सकृ[17]च्चैतां वृत्तिं देवी तवोचदिति । यतः संघुष्टवागेवंविधा ते वृत्तिरेवेति प्रतिज्ञातवचनैवंविधा ते वृ[18]त्तिरित्यसकृदुच्चारितवचना वा ॥

---

१ ए °क्षोवामिताश्रु°. २ ई °ताश्रुरु°. ३ ए सी वान्ताश्रु°. सी वाताश्रु°. ४ ए °वाग्मभ्य°.

---

१ ए °न्तिमासमाभ्या°. २ ए °रक्ता तेन रष्टा°. ३ ए वाताः श्रु.°. ४ ए देभ्योभि°. ई देव्या अभि°. ५ ए रक्षमे°. ६ ए °त्यभ्यप°. ७ सी डी °गमनेन. ८ ए °त्सुकस°. ९ ई °कः मॆस्ते. १० सी डी °वामीनि । की°. ११ ए ई °प्ता स्मृ°. १२ ई प्राक् बलेर°. १३ ए °ता रुषि°. १४ ई क्रुधस्य. १५ वी नवा°. १६ ए °च्यमव°. १७ ए वी डी °कृचेता. सी °कृत्वेती वृत्ति दे°. १८ वी सी °त्तिरेवं विधा ते वृत्तिरि°.

तद्भोक्तुमित्यास्वनितं श्रिया त्वामहृष्टदन्ताहृपिताग्रदंष्ट्रः ।
सज्जोसि धार्ष्ट्याद्धृषिताग्रकेशलोमन्प्रहृष्टोन्नतकेशलोमा ॥ ६१ ॥

६१. तत्तस्माद्धेतोर्हे धाष्टर्यान्न तु सत्त्वातिरेकाद्धृपिताग्रकेशलोमन्नुद्धृषितवालरोमाग्रेत्युक्तरीत्या श्रियास्वैनितमादिष्टं दत्तमित्यर्थः । त्वां भोक्तुं ग्रसितुमहं सज्जोस्मि । कीदृक्सन् । प्रहृष्टोन्नतकेशलोमा त्वत्सदृशापूर्वभक्ष्यप्रापणोत्थहर्षातिरेकादुच्छ्रमितोच्चकेशलोमा तथाहृष्टा अप्रतिहता दन्ता यस्य स योहृपिताग्रदंष्ट्रोप्रतिहतदंष्ट्राग्रः स तथा ॥

किं चासि हृष्टो हृपितो न को वा ससर्जिथाद्यापचितं न यन्मे ।
ससृष्ठ देव्या अपचायितं त्वं न मां तु दद्रष्ठ ददर्शिथाः किम् ॥६२॥

६२. किं चेति विशेषे । अद्य यत्त्वं मे ममापचितं पूजां न ससर्जिथ न चकर्थ तेनास्म्यहं हृष्टो विस्मितो वाथ वा को न हृपितः किं त्वभिनवः कोप्ययं ध्याता यः प्राक्पूज्यममुं व्यन्तरमपूजयित्वा मन्त्रध्यानफलं साधयिष्यतीति सर्वोपि साश्चर्योभूदित्यर्थः । ननु मयान्योपि कोपि नार्चितस्ततस्ते कोपमानो येनैवं वक्षीत्याह । त्वं देव्या लक्ष्म्या अपचायितं पूजां ससृष्ठ चकर्थ मां तु मां पुनर्न दद्रष्ठ पूजायै न स्मृतवानतस्त्वम् । आः कोपे । किं ददर्शिथ मूलस्मरणीयास्मरणान्न किमप्यस्मर इत्यर्थः ॥

१ ई °त्दष्टान्न°. २ ए °यित्व त न.

१ सी °तोर्हि धा°. ई °तोहे धाष्ट्यान्न. २ ए °ग्रकेशलोम°. ३ बी °न्नुद्धृषि°. ४ बी सी डी °तवाल°. ५ ए °स्वमित°. ६ ए °ष्ट्राग्र स. ७ ए मप°. ८ ए °कथ ते°. ९ ए विस्मृतो. १० ए किं तु भि°. ११ सी डी °स्ततः स को°. १२ ए °यिता पू°. १३ ए °कथमा तु. १४ ए °नन द°. १५ ए° यै स्मृ°. १६ ई कोपि। किं. १७ ए °णान्ना कि°,

मन्त्रेण संचस्करिथाथ संचस्कर्थाभ्यनत्रैः स्वमु शेकिथास्त्रैः ।
शशक्थ दोर्भ्यामथ चेत्ततोपि क्षयं ययाथाययिथात्र यत्त्वम् ॥ ६३ ॥

६३. उ हे राजंश्चेद्यद्यपि त्व मन्त्रेणाङ्गरक्षामन्त्रेण स्वमात्मान मचस्करिथ । अथ तथाभ्यनत्रैः संप्रभावैरङ्गरक्षाहेतुमुद्राविशेषादितन्त्रैश्च स्वं यद्यपि सचस्कर्थाथ तथा यद्यपि त्वमस्त्रैर्वारुणादिभिः शेकिथ समर्थोभूस्तथा यद्यपि दोर्भ्यां शशक्थ ततोपि तथापि यत्त्वमत्र श्रीगृह आययिथागास्ततस्तस्मात्क्षयं ययाथ प्राप्त एव ॥

जहर्थ यच्छिश्रयिथारिथाथ ससर्थ विप्रागवरिथादिथापि ।
त्वं यच्च संविव्ययिथापसस्वरिथेह तद्गर्हय तेसि मृत्युः ॥६४॥

६४. हे राजन्निह जन्मनि यद्धार्य देवद्रव्यादि जहर्थापहृतवान यच्चासेव्यमसत्सङ्गादि शिश्रयिथाथ तथा यद्गम्य परस्त्रयादि रिथ गतो यच्चावाच्यं ससर्थोक्तवान्यदपीड्यं साध्वादि पीडितवान्वा यच्चायाच्यमधिककरादि विप्रागवरिथ विवरिथ याचितवान्यच्चाभक्ष्यमादिथापि भक्षितवांश्च यच्चानाच्छाद्यं प्रच्छन्नपापं संविव्ययिथाच्छादितवान्यच्चापसस्वरिथ विरुद्धमवोचस्तत्त्वं गर्हय निन्दय यतस्तेहं मृत्युर्मरणहेतु-

---

१ ए °र्थाभ्यन° २ ई °मु शोकि°. ३ ए शकथा°. ४ ई °च्छिश्रियि°. ५ ए सस्वथ. ६ डी °रिनेह.

---

१ वी सभा° २ ई °भावनेर°. ३ डी °मन्त्रेणा°. ४ ए ई °मि॰ शोकि°. ५ ए °शकुन°. ६ ई नत्रापि. ७ ए °यिप्रामास्त°. ८ ए °हाय दे°. ९ ए यथाम°. १० ए °धमत्वाथ त°. ११ ई °तोयावा° १२ ए °न्नर्पा°. १३ ए °ध्वायिदर्पा°. १४ ए °तन्वा. १५ ई °वान् य°. १६ ए सी डी °थ या° १७ ए °नथाच्चन्नाम° १८ ए यच्च ना°. १९ ए °पापम°. २० ए ई मन्य°. २१ ए °दिववा°. २२ ए ई °य त°. २३ वी °त्युमर°.

वर्ते[1]। मृत्युकाले हि पापगर्हा[2] क्रियते। यद्यप्यत्र विशेषानुक्तेर्यच्छब्देन[3] निन्द्यमनिन्द्यं चोच्यते[4] तथापि तद्गर्हयत्[5]युक्तेर्निन्द्यमेवोच्यते ॥

दृढ। इति "बलि°" [ ६९ ] इत्यादिना निपात्यम् ॥

क्षुब्ध। विरिब्ध[6]। स्वान्तः[7]। ध्वान्त[8]। लग्नम्[9]। म्लिष्टे। फाण्टम्[10]। बाढं[11] पारिवृढ्यम्[12]। एते "क्षुब्ध°" [ ७० ] इत्यादिना निपात्याः ॥

मिन्नः[13]। अत्र "आदितः" [ ७१ ] इति नेट् ॥

मिन्न[14] क्रुधा मेदितमीर्ष्यया। प्रमिन्नम् प्रमेदित। इत्यत्र "न वा°" [ ७२ ] इत्यादिना नेड्वा ॥

शक्तम् शकितम्। अत्र "शकः कर्मणि" [ ७३ ] इति वा नेट् ॥

दान्तैः दमितै[15]। अशान्त[16] शमित। पूर्णं[17] पूरितम्[18]। अदस्त अदासित। स्पष्टम्[19] स्पाशितः। अच्छन्नम् आच्छादित[20]। सज्ञप्त[21] आज्ञापितः[22]। एते "णौ दान्त°[23]" [७४] इत्यादिना वा निपात्याः ॥

विश्वस्तया उच्छ्वसिता[24][25]। जप्ता जपिता[26]। वान्त[27] वमित। रुष्टा[28] रुषितस्य। तूर्णम् त्वरितः[29]। संघुष्टवाक् संघुषितस्वनस्य। आस्वान्तवती आस्वनितम्[30]। अभ्यान्त अभ्यमितस्य। इत्यत्र "श्वसजप°" [ ७५ ] इत्यादिना वा नेट् ॥

---

१ ए °र्ते। का°. २ ए °र्हां क्रय°. ३ ए °क्तेच्छ°. ४ ए °मनन्द्य व्योच्य°. ५ सी डी °पि गर्ह°. ६ ए बी ई विरब्ध. ७ डी ई स्वान्त।. सी स्वान्त। धात। ल°. ८ ए °न्त.। ध्वन्त. ९ ए सी °ग्न। म्लि°. १० सी °ष्टन्। फा°. ११ ए डी °ण्ट। वा°. १२ सी °ढम्। पारिवृट्य। ए°. १३ ए मिन्न। अ°. १४ सी मिन्न क्रु°. १५ ए डी ई °मितः। अ°. १६ सी °शान्तः श°. १७ ए पूर्णा पू°. १८ सी °त। स्फष्ट स्फाशि°. १९ डी °शित। अ°. २० ए डी ई °दिता। स°. २१ डी °ज्ञप्तः आ°. २२ सी °पित। ए°. २३ बी णौ दान्त° २४ ई उच्छ्वमि°. २५ ए बी ई °सित। ज°. २६ ई °पित। वा°. २७ सी डी वान्ता व°. २८ ई रुष्ट रु°. २९ सी °रित। स°. ३० ए °म्। आभ्या°.

प्रहृष्टोन्ननकेगलोमा हृषिताग्रकेशलोमन् । हृष्टोस्मि हृषितो न कः । अहृष्टदन्त अहृषिताग्रदष्ट । अत्र "हृष." [ ७६ ] इत्यादिना वा नेट ॥

अपचितम् । इति 'अपचित' [ ७७ ] इति निपात्यं वा । पक्षे । अपचायितम् ॥

ससष्ठ ससर्जिथ । ददष्ठ ददर्शिथ । सचस्कर्थ सचस्करिथ । स्वर । ययार्थ आययिथ । अत्वन् । शशक्थ शेकिथ । अत्र "सृजिदशि" [ ७८ ] इत्यादिना वेड् ॥ तृजिति किम् । किति नित्यानिटो मा भूत् । शिश्रयिथ ॥ अनिट इति किम् ॥ शिश्रयिथ ॥

जहर्थ । इत्यत्र "ऋत." [ ७९ ] इति नेट् ॥ तृज्नित्यानिट इत्येव । अपरस्वरिथ ॥ अत्रापि निषेधमिच्छन्त्येके । सस्वर्थ ॥

आरिथ । विवरिथ । संविव्ययिथ । आदिथ । इत्यत्र "ऋवृ" [ ८० ] इत्यादिनेट् ॥

**यत्तुष्टुमाथादधिमाहितास्थिशाणेषु संचस्करिमायुधं प्राक् ।**
**शुश्रोथ यत्त्वं बभृमाधुना तद्धन्तुं भवन्तं बहमान्तकत्वम् ॥ ६५ ॥**

६५. प्राग्यदायुधं वयमहितास्थिशाणेषु । आहितास्थीन्येव तेजोहेतुत्वाच्छाणा निकषोपलास्तेषु । आदधिम संस्थापितवन्तोथ तथा

१ ए सी °द्धन्त भ°.

१ ए सी डी °मा ऋषि° २ सी ई अहृष्ट° ३ ए बी डी °दन्ता ह°. ४ ए ई हृषत्या°. ५ डी इत्यत्र अ°. ६ सी °म् ॥ अत्र°. डी °न् ॥ अत्र°. ७ ए ददृष्ट. ८ ए °थ ययथि°. डी ई °थ य°. ९ ई °त् । अशशक्थ. १० बी °वथ शकि° ११ सी °किथ । अ°. १२ ए तृजित्या°. १३ ए °परस्व°. १४ डी °त्रापीट् नि°. १५ ए °त्र अन् इ°. १६ ए °यमाहि°. सी डी °यमाहि°. १७ सी डी °षु । आहि°. १८ ए °स्थात°.

संचस्करिम सततव्यापारेणोत्तेजितवन्तश्च । येनारयो हता इत्यर्थः । अत एव यत्तुष्टुम आचितवन्तोत एवं च सर्वत्र प्रसिद्धत्वाद्यत्त्वं शुश्रोथ जनवार्तयाशृणोस्तदायुधमधुना भवन्तं हन्तुं वयं वभृम धृतवन्तो यतो भवन्तं हन्तुमन्तकत्वं वयं वधृमाङ्गीचक्रम ॥

सुस्रोथ दुद्रोथ ससर्थ न त्वं यज्जग्लिवान्नैव न चोचिवान्वा ।
तज्जक्षुषो जघ्निवदस्त्रमुज्जग्मिवन्ममोत्पश्य मदं जगन्वान् ॥ ६६ ॥

६६. यद्यस्मात्त्वं न सुस्रोथ मृत्युभयेन नामूत्रयो न दुद्रोथ न स्विन्नो न च ससर्थ न क्वापि नष्ट इत्यर्थः । नैव च जग्लिवान्न क्षीणहर्षोभून्न चोचिवान्वा न च दीनवचनान्युक्तवान् । त्वं शूर इत्यर्थः । तत्तस्माज्जक्षुषस्त्वां ग्रस्तवतो मम जघ्निवद्धातकमस्त्रमुज्जग्मिवत्त्वन्मारणायोद्यतं सत्त्वं पश्य । कीदृक्सन् । मदं हर्ष जगन्वान्प्राप्तः । मम प्रहारः शूरेष्वेव त्वं च शूरस्तस्माद्धृष्टः सन्मत्प्रहारं पतन्तं पश्येत्यर्थः ॥

प्रोच्येति पादेन भुवं जघन्वान्स वैविशुष्यं क चनापि भेजे ।
तदाददृशुष्यं प्रति वैविदुष्यमाञ्जीचुलुत्त्यश्च समाधिलग्नः ॥ ६७ ॥

६७. इति पूर्वोक्तं प्रोच्योक्त्वा भयोत्पादाय कोपाटोपात्पादेन भुवं

१ ए सी डी ई न वोचि°. सी डी न वोचि°. २ सी डी °पो जिघ्नि°. ३ ए °न्सवैवि° ४ ए ई °शुष्क क. ५ ई °दातृशु°. ६ बी °माञ्जीच्चु°. ७ सी डी °धिमग्न:. ८ ए °लग्न ॥.

१ सी डी °त्यर्थो अ°. २ ई यत्तुष्ट°. ३ सी डी °न्तो अत. ४ ए °व स°. ५ सी डी °न्त हेतु व°. ६ ए वयववृम. ७ ई धृत°. ८ सी °न्त हेतुम°. ९ ए हन्तुम°. १० ई न शुश्रोथ. ११ ए °यो दु°. १२ ए °थ सस्वि°. १३ सी डी न स्विन्नो. १४ डी न न स°. १५ बी °र्षाभून चो°. ई °र्षो न चो°. १६ ए °र्थः । स्तत्त°. १७ बी ई °द्धातुक°. १८ ई °वन्मा°. १९ डी °त सत्त्व. २० सी °न् । मदह°. २१ ई °न्वात्प्राप्तः. २२ ए °हार शू°.

जघन्वान्हतवान्स सुरः क चनापि क्वापि स्थाने वैविशुष्य प्रवेशं भेजे कर्णस्य स्वध्यानाचलनेन विलक्षः सन्क्वाप्यन्तर्हित इत्यर्थः। समाधिलग्नो ध्यानस्थश्चुलुक्यश्च कर्णोपि तद्वाद्दशुष्यं देवदर्शनं कर्माज्ञीश्चाञ्जितवान्। कथम्। वैविदुष्यं लाभं प्रति लक्ष्यीकृत्य अन्तर्भूतणिगर्थोञ्जिः सकर्मकोत्र। यथा व्यनक्ति पदार्थान् रवि। देवदर्शनं विफलं न स्यादिति देवदर्शनादात्मनः फलसिद्धिं ज्ञातवानित्यर्थः॥

संचस्करिमं॥ स्वाद्यन्येभ्य.। आञ्चिम। इत्यत्र "स्क्रसृ" [ ८१ ] इत्यादिना–इट्॥ स्वादिवर्जन किम्। समर्थ। वत्रूम। बभ्रूम। तुष्टुम। दुद्रोथ। शुश्रोथं। सुस्तोथ॥

जक्षुप॥ एकस्वर। ऊचिवान्। जग्लिवान्। इत्यत्र "घसेक" [ ८२ ] इत्यादिना–इट्॥

उजग्मिवन। जगन्वान्। जघ्निवन्। जघन्वान्। वैविदुष्यम्। वैविशुष्यम्। दादशुष्यम्। अत्र "गमहन" [ ८३ ] इत्यादिना वेट्॥ इव्यनिटि च ध्यण्येकरूपत्वाद्विकल्पपक्षेपि विदविशदशा वैविदुष्यमित्याद्येवोदाहरणम्॥

आञ्जीत्। इत्यत्र "सिचोञ्जे." [ ८४ ] इतीट्॥

**लक्ष्मीर्व्यधावीत्स्वशिरो नृपं चास्तावीदसावीच्च मुदश्रुपूरैः।**
**विघ्नाञ्चरंसीद्दुरितं न्ययंसीन्मुदोदनंसीत्सविधेभ्ययासीत्॥ ६८॥**

६८. लक्ष्मीः स्वशिरो व्यधावीदाश्चर्यकारितद्धैर्यदर्शनादकम्पय-

१ सी डी °न्वान्म°. प °न्वाह्ननवान्स सु°. २ बी °पि स्था°. ३ डी °ने वि°. ४ ई °स श्चलु°. ५ सी °क्यक°. ६ ई °द्वानृशु°. ७ प सी ई लक्षीकृ°. डी लक्षी कृ°. ८ सी °लसुद्धिं. डी °लशुद्धिं. ९ प °द्धि जात°. १० ई °म॥ श्राच°. ११ प ई °घनेभ्य.. १२ सी डी °ददिम. १३ प स्क्रमिसा°. सी स्क्रमिता°. ई स्क्रश्रिता°. १४ प °ट्। × × × वि°. १५ ई °थ। ज°. १६ ई जघ्नवान्. १७ सी °घस्वान्. १८ प ई दानृशु°. १९ प ध्यण्येक°. सी डी ध्यणैक°. २० प °त्यादेवो°.

तथा नृपं कर्णमस्तावीच्च । तथा मुदश्रुपूरैर्मुदा कर्णधैर्यानिश्चयदर्शनोत्थानन्देन येश्रुपूरास्तैरसावीच्च स्नाता च । तथा विघ्नादनुकूलप्रतिकूलान्नरायांव्यरंसीन्निवृत्ता । तथा दुरितं कष्टं न्ययंसीन्नियन्त्रयत् । तथा मुदा कृत्वोदनंसीदुदश्वसीत् । तथा सविधे कर्णसमीपेभ्ययासीदभिमुखं गता ॥

न्यधावीत् । असावीत् । अस्तावीत् । इत्यत्र "धूग्सु" [ ८५ ] इत्यादिनेट् ॥

न्ययंसीत् । व्यरंसीत् । उदनंसीत् । अभ्ययासीत् । अत्र "यमि" [ ८६ ] इत्यादिना सिच आदिरिट् । एषां च सोन्तः ॥

ईशिध्वमीशिध्व उ चेदथोचेदीडिध्व ईडिध्वमु मातरोमुम् ।
ईशिष्व चेदीशिष ईडिषे चेदीडिध्व चण्डि स्वपिषीह किं त्वम् ॥ ६९ ॥

किं रोदिषि प्राणिहि जक्षिहि क्ष्मे धर्मे श्वसिह्यद्य हि मा स्म रोदीः ।
त्वं मार्थ रोदः स च किं तु जक्ष्या गीर्मा स्म रोदीच्च वृथा ह्यरोदत् ॥ ७० ॥

विघ्नेद्द स्म मादः स्वयशोस्य विघ्नैर्मा स्मादर्दन्योपि यदद्य लक्ष्मीः ।
वरैः सुसंस्कारममुं परिष्करोतीत्यथाभाष्यत वेत्रवत्या ॥ ७१ ॥

७१. अथ वेत्रवत्या लक्ष्मीप्रतीहार्या कर्त्र्याभाष्यतोक्तम् । किमि-

१ ए °ध्वनु मा°. २ ए °शिष्व चे°. ३ ए °डिथ च°. ४ ए °ण्डि ध्वपि°. ५ ए किं त्वाम् ॥ सी किं वि ॥ किं. ६ ए °र्म श्वसिद्य हि. ७ सी डी °रोदीत्. ८ ए °घ्नेत्प्रमादस्वेय°. ९ बी °दन्यौपि. १० बी सी डी °रिस्करो°.

१ ए °वीस्व । त°. २ ई °रैमुदा. ३ ए °याद्वार°. ४ ए °दनसी.° ५ ए °पेभ्याया°. ६ ए सी डी °ता ॥ न्यधा°. ७ ए सी डी °त् । अर°. ८ ए यसि इ°. ९ बी सिच् । आ°. १० ए एसो°. ११ सी ७१ ल°.

त्याह । उ हे मातरो[1] [2]ब्राह्याद्या. सप्त मातृदेवताश्चेदमुं कर्णं यूयमीशिध्वे पालयथेत्यर्थं । तदेशिध्वं पालयत । अत्रार्थे ममानुज्ञेत्यर्थः । अथ तथा हे मातरश्चेदमुमीडिध्वे निर्व्यूढधैर्यादिगुणावर्जितत्वात्स्तुथ्[5]पीडिध्वे तदेडिध्वं स्तुत । तथा हे चण्डि गौरि त्व चेदमुमीशिषे[6] पासि[7] तदीशिष्व[8] चेदीडिषे तदेडिष्व किं किमिति त्वमिह कर्णस्य पालने[9] स्तवने च विषये स्वपिषि निरुद्यमीभवसि। तथा हे क्ष्मे भूदेवते किं रोदिषि मम भर्ता कर्णोनेन दुष्टसुरेण भक्ष्यते लग्न इति शोकेन किमित्यश्रूणि मुञ्चसि किं तु प्राणिहि मद्भर्ता विजयमानोस्तीत्युज्जीव तथा जक्षिहि स्वभर्तुरभ्युदयदर्शनेन हस । तथा हे धर्म हि स्फुटमद्य मा स्म रोदीः किं [10]तु श्वसिहि तथा हे अर्थ[11] त्वं मा स्म रोदः[12] किं तु [13]जक्ष्या हस तथा गीः सरस्वत्यद्य मा स्म रोदीश्च हि निश्चितं वृथा निरर्थकं गीः पूर्वमरोदीन्[14] । तथा हे विघ्नेड्[15] विघ्नविनायकास्य कर्णस्य विघ्नैः कृत्वा स्वयशो मा स्मादो मा[16] विनाशय[17]: । अत्रोपसर्गा[18] अकिंचित्करत्वात्तवायश एव करिष्यन्तीति[19] भावः । तथान्योपि यक्षराक्षसादिरप्यस्य विघ्नैः[20] [21]स्वस्यायशो मा [22]स्मादद्यद्यसाद्धेतोः सुसंस्कारं स्थिरवासनममुं कर्णं [23]लक्ष्मीरद्य [24]वरैः प्रसाददानैः परिष्करोत्यलंकरोतीति[25] ॥

ईशिषे । ईशिध्वे । [26]ईशिष्व । ईशिध्वम् । ईडिषे । ईडिध्वे । ईडिष्व । ईडिध्वम्[27] । अत्र "[28]ईशीड." [ ८७ ] इत्यादिनेट् ॥

---

१ प °रो ब्रह्माद्या . २ सी ब्राह्माद्या. ३ प °थतीश्वा°. सी डी °यतेत्यत्रा°. ४ वी °त्वात्स्तुथ त°. ५ प °त्सुधेनटिध्व. ६ प °मुनीशि°. ७ प °सि च चेशीष्व. ८ सी डी °दर्शीष्व. ९ सी डी °लनस्त°. १० वी तु स्वसि°., ११ प °थ ह मा. १२ प रोद किं. १३ प जक्षा हमा त°. १४ वी °रोदत्त। त°. १५ वी °घ्नेट वि°. १६ वी मा स्म वि°. १७ डी °शय। अ°. १८ प °र्गा किं. १९ प °ष्यतीति.२० प विस्तैः स्व°. २१ प वी स्वय° २२ प सानद्य°. वी स्मादाद्य°. सी डी °सादद्यसा°. २३ प °लक्ष्मीर°. २४ प वचै. प्र°. २५ वी सी डी °रिस्करो°. २६ प ईसिष्व. २७ डी °म्। ईडिषे ईडिध्वे । ईडिष्व । ईडिध्वम् । अ°. २८ प °शीड् इ°.

रोदिषि । स्वपिषि । प्राणिहि । श्वसिहि । जक्षिहि । इत्यत्र "रुत्पञ्च०" [८८] इत्यादिना-इट् ॥ अय इति किम् । जक्ष्याः ॥

मा स्म रोदीन् । मा स्म रोदीः । इत्यत्र ' दिस्योरीट्" [ ८९ ] इतीट् ॥ दिस्योरिति किम् । प्राणिहि ॥ दिसाहचर्यात्सिर्ह्यमन्या गुत्र । तेन रोदिषि ॥

मा स्मादत् । मा स्मादः । अरोदत् । मा स्म रोदः । अत्र "अद्श्चाट्" [९०] इत्यट् ॥

संस्कारम् । परिस्कु(ष्क ?)रोति । इत्यत्र "स" [ ९१ ] इत्यादिना स्सट् ॥

देवी स्मितज्योतिरुपस्कृतेनोपस्कुर्वती द्यामनुपस्कृतं तम् ।
नृपं प्रसन्ना रभसादुपस्कुर्वाणानुपस्कारमिदं बभाषे ॥ ७२ ॥

७२. देवी लक्ष्मीरनुपस्कारं वाक्याध्याहाररहितं यथा स्यादेवमिदं वक्ष्यमाणं बभाषे । कीदृक्सती । प्रसन्नात एवानुपस्कृतं रागद्वेषादिविकाररहितं तं नृपं कर्णं रभसादौत्सुक्येनोपस्कुर्वाणा पुत्रलाभवरेण विशेषयन्ती । अत एवं स्मितज्योतिरुपस्कृतेन स्मितस्य प्रसादोद्भवहसितस्य ज्योतिषां कान्तीनामुपस्कृतेन समुदायेन कृत्वा द्यां व्योमोपस्कुर्वत्यलंकुर्वती ॥

द्यामुपस्कुर्वती । ज्योतिरुपस्कृतेन । तमुपस्कुर्वाणा । अनुपस्कृतम् । अनुपस्कारम् । अत्र "उपाद्" [ ९२ ] इत्यादिना स्सट् ॥

---

१ ए डी °पकुर्व°. २ ए °भस्मादु°. ३ ए °णामुप°. ४ ए °भाषेः ॥.

---

१ ए °हि । स्वसि°. २ ए रुत्पञ्च°. ३ सी डी °श्वक इ°. ४ बी जक्ष्या ॥. ५ ए रोदीत् । इ°. ६ ए °दिसाहरनस्या ए°. ७ ए सी °पि ॥ सा स्मा°. ८ बी °स्कार । प°. ९ ए देवीं ल°. १० ए °र व्याक्या°. ११ ए °त्सुकोनो°. १२ बी सी डी °व च स्मि°. १३ डी °तस्य. १४ ए °तस्म प्र°. १५ सी °पस्का°. १६ सी °ना स्मट्. १७ ए स्स इ॥ तु°.

तुष्टास्म्युपस्कीर्य लुनामि तेघं मा भूत्प्रतिस्कीर्णमतः परं ते ।
यदप्युपस्कीर्णमिहोपसर्गैस्तैस्ते तपः प्रत्युत दीपितं हि ॥ ७३ ॥

७३. हे राजन्नस्म्यहं तुष्टा सती ते तवाघं कष्टमुपस्कीर्य विक्षिप्य लुनामि । अतश्चातोस्मादिनात्परं पश्चात्ते प्रतिस्कीर्णं हिंसानुबन्धी विघ्नेट्कृतो विक्षेपो मा भूत । यदप्युपसर्गैर्विघ्नेट्कृतोपद्रवकर्तृकैमुपस्कीर्णं हिंसानुबन्धी विक्षेप इह स्थानेभूत्तेन परीक्षानिर्वाहशाणभूतेनोपस्कीर्णेन तैरुपसर्गैः कर्तृभिर्हि स्फुटं प्रत्युत विशेषेण ते तपो दीपितमुज्ज्वालितम् ॥

उपस्कीर्य लुनामि । इत्यत्र "किरो लवने" [ ९३ ] इति स्सट ॥

प्रतिस्कीर्णम् । उपस्कीर्णम् । अत्र "प्रतेश्च वधे" [ ९४ ] इति स्सट ॥

अपस्किरन्ते श्वकविष्किरोक्षाणः क्षेत्रपालाच्युतशंकराणाम् ।
प्रस्तुम्पति स्वर्गिगवीं च वत्सो यत्रास्तु तत्राप्यहता तवाज्ञा ॥७४॥

७४. तत्रापि स्वर्गेपि तवाज्ञाहता मत्प्रसादादस्खलितास्तु । यत्र स्वर्गे क्षेत्रपालाच्युतशंकराणाम् । अज्ञातः श्वा श्वकः कुंकुरः । विष्किरः पक्षी । अर्थाद्गरुडोत्र । उक्षा वृषभः । द्वन्द्वे ते वाहनान्यपस्किरन्ते विक्षिपन्तीति सामान्यार्थः । विशेषस्त्वयम् । श्वा आश्रयार्थी सन् विलिख्य भस्म विक्षिपति । विष्किरो भक्ष्यार्थी सन् विलिख्याव-

१ डी °पस्कार्य. २ सी तेपमा. ३ ए °विष्करो°. सी डी विस्करो°. ४ डी °म् । प्रास्तु°.

१ ए °वाय क°. २ ए °स्माद्दिना°. ३ ए यदिप्यु°. ४ सी °विघ्नकृतो°. डी °विघ्नकृतो°. ५ ए °कर्णिक°. ६ ए सी °स्कीर्णे हिं°. ७ ए °सर्गेक°. ८ ए प्रत्यन. ९सी डी °नाति । इ°. १०सी °निष्कीर्ण । उ°. ११सी °ति स्सट॥ अ°. १२ए कुक्कुरः. सी कुकुरः. डी कुर्कुरः. १३ ए °भ. । थीदेते. १४ ए °परिकर°. १५ ए °मान्यर्थः. १६ ए °लिष्यति स. सी °लिष्य भ°. १७ वी विष्करो. १८ ए सी डी भक्षार्थी.

स्करं विक्षिपति। उक्षा हृष्टः सन् विलिख्य तटं विक्षिपति तथा यत्र च वत्सः स्वर्गिगवीं कामधेनुं प्रस्तुम्पत्युत्तुण्डयति । पयःपानायोध आघातपूर्वं लेढीत्यर्थः ॥

प्रस्तुम्पतिर्गौरपि मास्तु देशः प्रस्तुम्पको नन्दतु तेद्य वत्स ।
मा सिञ्च मुञ्चाद्य समाधिमुद्रामुम्भामि यत्तेन्यदभीप्सितं वा ॥७५॥

७५. हे वत्स पुत्र ते गौरपि धेनुरपि वृषोपि वा प्रकृष्टस्तुम्पतिर्हिंसा यस्य स प्रस्तुम्पतिर्मास्तु । तथा तव देशश्च प्रगतस्तुम्पोस्मात् क्वचि प्रस्तुम्पकः परचक्रोपद्रवादिरहितः सन्नन्दतु । अत एवाद्य समाधिमुद्रां योगनिरोधं मा सिञ्च मा वर्धयेत्यर्थः । किं तु मुञ्च । वा यद्वा यत्तेन्यत्स्वर्गेप्यस्खलिताज्ञाभवनादेरपीतरदभीप्सितं समाधिमुद्राया अमोक्षलिङ्गेनाभिलषितमस्ति तदप्युम्भामि पूरयामि ॥

शुम्भन्नदम्फन्नुधयेव तृम्फन्गुम्फन्नु हारान्वचनैरजम्भः ।
आरम्भरन्धोन्मुदितोथ लक्ष्मीं स रेधुषीमारभतेति नोतुम् ॥७६॥

७६. अथैवंभणनानन्तरं स कर्णो रेधुषी संसिद्धां फलदानोन्मुखीमित्यर्थः । लक्ष्मीमिति वक्ष्यमाणरीत्या नोतुं स्तोतुमारभत । कीदृक्सन् । अजम्भो मैथुनरहितो ब्रह्मचारीत्यर्थः । अत एवारम्भरन्धोन्मु-

---

१ ए °तिर्गोर°. २ ए स्तुम्यको. ३ ए ते व°. डी तेद्य व°. ४ डी तृफन्गु°. ५ डी नैरज°. ६ ए °न्धोमुदितोथ ल°. ७ ए नोत्तुम्.

---

१ बी विक्षप°. २ ए °ति विष्किरो भक्षार्थी सन्विलिख्यावस्कर विक्षिपति उ°. ३ बी विक्षप°. ४ ए सी °गवी का°. ५ डी °कृष्टा स्तु°. ६ ए °स्तुन्तिर्मा°. ७ बी °गत. स्तु°. ८ ए °रहि. स°. ९ ए °रोध मा. १० ए °लपत°. ११ ए °थवभ°. १२ ए °न्तरस स. १३ ए वक्षमा°. १४ ए नोत्तु स्तो°. १५ डी °भत । की°.

दितः कार्यस्य संसिद्ध्या हृष्टोत एव चाहम्फंस्तपोध्यानादिनाक्लिश्य-[1] मानोत एव च शुम्भन् शोभमानोत एव च सुधया तृम्फन्निवात[2][3] एवं[4] च वचनैः[5] कृत्वा ह्रागानिव गङ्गोतिहृष्टत्वेन वचसां स्मितसितत्वात्सुसंवद्धत्वाच्च[6] मुक्ताकलापानिव[7] गुम्फन् ग्रथ्नन्[8] ॥

**आरेभ आलम्भ्यपशूननालम्भयन्पुरो यः करुणां लभन्तीम् ।**[1][2]
**त्वामर्चितुं[3] तेन यशांसि लम्भं लम्भं विभोलम्भ्युपलम्भ्यसिद्धिः ॥ ७७ ॥**

७७. हे विभो स्वामिनि यस्त्वामर्चितुमारेभे । कीदृक्सन् । पुरस्तात्त्वाग्रत[9] आलम्भ्यपशून्[10][11][12]वध्यांश्छागादिपशूननालम्भयन्नहिंसन् । यतः किंभूतां त्वाम् । करुणां लभन्तीं[13][14] प्राप्नुवतीम् । तेन पुंसा कर्त्रा यशांसि लम्भं लम्भमुपलम्भ्यसिद्धिः[15] प्रशस्यकार्यनिष्पत्तिरलम्भि[16] प्राप्ता ॥

**अमूपलम्भां मतिमत्र लाभं लाभं[4] तवालाभि[5] पदार्चनं यैः ।**
**प्रालम्भि नात्मा हि कलिं प्रलम्भं[6][7] प्रलम्भमेभिः सशिवोपलम्भैः ॥ ७८ ॥**

७८. यैर्नरैरसूपलम्भां[17] दुःप्रा(दुष्प्रा)पां मतिं ज्ञानं लाभं[18] लाभमत्र जगति[19] तव पदार्चनमलाभि[20][21] । सज्ज्ञानैर्यैस्त्वत्पादपूजा प्राप्तेत्यर्थः[22] । ए-

---

१ ए आम्भप°. २ वी °लम्भप°. ३ ए °र्चित ते°. ४ डी °भ नवा°. ५ ए तवाला°. ६ ए प्रलिम्भ°. ७ वी लभ प्र°. ८ ए प्रलिम्भ°.

---

१ डी °दितोक्ति°. २ ए तृफन्नि°. ३ बी °वा तृप्यन्निवात. ४ सी डी °व व°. ५ ए चनै.. ६ डी °सवद्ध°. ७ ए मुक्ताक°. ८ ए बी सी ई प्रथन् ९ ए °त्तथाग्र°. १० बी °लम्भप°. ११ ए °पशून्व°. १२ बी °शून्वध्या°. १३ ई °भती प्रा°. १४ बी °वन्तीम्. १५ ए बी सी डी °लम्यसि°. १६ बी °निप्पत्ति°. १७ डी °रैरस्°. १८ सी लाभम°. १९ सी डी °ति नव. २० ए °दार्थन°. २१ ए °लापि । स°. २२ ई °त्यर्थ । ए°.

भिन्नरैः कलिं पापयुगं प्रलम्भं प्रलम्भमभीक्ष्णं वञ्चयित्वा हि स्फुटमात्मा न प्रालम्भि पर[1]मपुरुषार्थमोक्षप्रापणेन न वञ्चितः। किंभूतैः। सशिवोपलम्भैः परमात्मदर्शनयुक्तैः[2]। ते परमज्ञानिनः सन्तः सिद्धा इत्यर्थः॥

अपस्किरन्ते श्वकवि[3]ष्किरोक्षाणः। अत्र "अपात्॰"[4] [९५] इत्यादिना[5] स्सट्॥

विष्किर[6]। इत्यत्र "वौ विष्किरो वा" [९६] इति वा स्सट् निपात्यः[7]॥

प्रस्तुम्पति वत्सः स्वर्गिगवीम्[8]। अत्र "प्रात्॰" [९७] इत्यादिना स्सट्॥ अन्ये तु प्रात्परस्य तुम्पतिशब्दस्य[9] गव्यभिधेये स्सडादिः स्यात्। प्रस्तुम्पतिगौः[10]। तुम्पतिधातोस्तु[11,12] स्सट् न स्यादिति मन्यन्ते॥ एके तु प्रात्तुम्पतेः कपीत्यारभन्ते[13]। कपि हिंसायां कच्पर्याये[14] वा कपि समासान्त इति[15] च व्याचक्षते। प्रस्तुम्पति वत्सः[16] स्वर्गिगवीम्। दुग्धक्षारणायोधसि हिनस्तीत्यर्थः। प्रस्तुम्पकः॥

नन्दतु। इत्यत्र "उदितः॰" [९८] इत्यादिना नोन्तः[17]॥

मुञ्च। सिञ्च। तृम्फन्[18]। अतृम्फन्। गुम्फन्। शुम्भन्। उम्भामि[19]। इत्यत्र "मुचादि॰" [९९] इत्यादिना नोन्तः॥

अजम्भः[20]। अत्र "जभः स्वरे" [१००] इति नोन्तः॥

रन्ध। इत्यत्र "रध॰" [१०१] इत्यादिना नोन्तः॥ इटि तु परोक्षायां[21] रेधुषीम्[22,23]। अत्र नस्य लुक्॥

आरम्भ। इत्यत्र "रभ॰" [१०२] इत्यादिना नः[24]॥ अपरोक्षाशवीति किम्। आरेभे। आरभत॥

---

१ डी °रपुषा°. २ ई °क्तैः । प°. ३ ई °विष्करो. ४ बी अपीत्या°. ५ ए इना. ६ ए सी डी °ष्किरो. ७ ए स्सड्विपा°. ८ ए स्वागिग. डी स्वर्गग°. ९ ए स्तुपति°. १० ई °तिगौः । तु°. ११ ए °तोस्स°. १२ सी डी °स्तु न. १३ बी °रम्भे । क°. १४ ए कन्यर्या°. सी कल्यर्या°. ई कभ्यर्या°. १५ सी डी °ति व्या°. १६ ए दत्त्वास्व°. १७ डी °न्तः ॥ मुञ्च. १८ ए तृफत् । अ° १९ ए उमान्त्य°. सी डी उम्भन् । इ°. २० ए अतजभस्व°. २१ डी °क्षाया रे°. २२ ए रेधुषी°. २३ ए सी डी °षी । अ°. २४ ए °नः ॥ स्वप°.

अनालम्भयन् । इत्यत्र "लभ." [ १०३ ] इति नः ॥ लभेः परस्मैपदस्याप्यभिधानाल्लभन्तीमिति केचित् ॥

आलम्भ्य । इत्यत्र "आङो यि" [ १०४ ] इति नः ॥

उपलम्भ्य । इत्यत्र "उपात्स्तुतौ" [ १०५ ] इति नः ॥

अलाभि अलम्भि । लाभ लाभम् लम्भ लम्भम् । इत्यत्र "ञिख्णमोर्वा" [१०६] इति वा नः ॥

खल् । असूपलम्भाम् । घञ् । उपलम्भैः ॥ ञि । प्रालम्भि । प्रलम्भं प्रलम्भम् । अत्र "उपसर्गात्" [ १०७ ] इत्यादिना नः ॥

**अभक्तिभाजां त्वमिहातिदुर्लम्भतोतिदुर्लम्भ ऋतं ब्रवीमि ।**
**भक्तात्मनां चातिसुलम्भतोतिसुलम्भ ऋद्ध्यास्पदमस्यजस्रम्**
**॥ ७९ ॥**

७९. हे प्रभो अहमृतं सत्यं ब्रवीमि । किं तदित्याह । इह भुव्यभक्तिभाजामभक्तानां त्वमतिदुर्लम्भतोप्यतिशयदुःप्रा(दुष्प्रा)प्यादपि वस्तुनोतिदुर्लम्भा तथा ऋद्ध्यास्पदमणिमादिमहर्द्धीनां स्थानमसि त्वं भक्तात्मनां चातिसुलम्भतोप्यतिसुलम्भा ॥

खल् । अतिसुलम्भतः । अतिदुर्लम्भतः ॥ घञ् । अतिसुलम्भा । अतिदुर्लम्भा । इत्यत्र "सुदुर्भ्यः" [ १०८ ] इति नः ॥

---

१ ए °जा त्वमि°. २ ए ऋम ब्रवीमि । भ°. ३ बी सुम्भतो°. ४ ए °लम ऋ°.

---

१ डी °स्याभि°. २ बी °धान्नाल्ल°. ३ ए °भन्तः । मि°. ४ बी डी °लम्भ । इ°. ५ सी °त्र उपा°. ६ बी लम्भ । इ°. ७ ए °पात्सुतौ. ८ ई नः ॥ ला°. ९ ए लाभ लाभ ल°. १० बी लभ लभम् ।. ११ ए इत्रत्य लिख्ण°. १२ ए °म्भाः ॥. सी डी °म्भा ॥ १३ सी डी उपाल°. १४ डी °लम्भेः ॥. १५ ए °लम्भि. । प्र°. १६ बी °भ्भि । ल्लणम् । प्र°. १७ सी डी °त्याना. १८ ई °मि । किंत°. १९ ए त इत्याह । दुह भु°. २० ए °क्तिराजामाभ°. २१ ई °धास्प°. २२ ए सी डी °लभा ॥. २३ ए °दुर्लभ्य इ°.

नंष्ट्रीं च मंक्त्रीं च यदाम्बुधौ त्वां स्रष्टापि नं द्रष्टुमलं तंदा हि ।
दृष्टं निसृष्टं जगतोपि दौस्थ्यं स्पष्टुं विमर्ष्टा तव कः कलां तत् ॥८०॥

८०. स्रष्टाप्यास्तामन्यो जनो ब्रह्मापि यदा नालं न समर्थोभूत् । किं कर्तुम् । त्वां द्रष्टुम् । किंभूतां सतीम् । नंष्ट्रीं च ऋषिशापेन जगतो नश्यन्तीं च । तथाम्बुधौ मंक्त्रीं च मज्जन्तीं च । तदा हि स्फुटं जगतोपि सकलविश्वस्यापि निसृष्टं स्वाभाविकं दौस्थ्यं दारिद्र्यं दृष्टम् । अब्धिमथनात्पूर्वं किल दुर्वासोमुनिनात्यादरेण दत्तायां सन्तानकपुष्पमालायामिन्द्रेणैरावणकुम्भस्थले क्षेपेणावज्ञातायां क्रुद्धेन शापो दत्तो यथा लक्ष्मीगर्वेणैवमवज्ञेति निःश्रीकं जगद्भूयादिति । ततो लक्ष्मीरब्धौ तथा निलीना यथा स्रष्टापि न द्रष्टुं शकिता जगच्चातिदुःस्थमासीदिति पुराणम् । तत्तस्मात्तव कलां माहात्म्यं स्पष्टुं ज्ञातुं को विमर्ष्टा विमृशति । अहं लक्ष्मीमाहात्म्यं ज्ञास्यामीति चिन्तामपि न कोपि करोतीत्यर्थः ॥

स्प्रष्टास्त्रमास्रष्ट ऋतं च शास्त्रं स्रष्टा गिरीन्वारिनिधींश्च स्रष्टा ।
अस्त्वग्निचिद्वा यजमान औदासीन्यं भवत्या यदि तन्मुधैतत् ॥८१॥

८१. अस्त्रं धनोपार्जनार्थं चापादि शस्त्रं स्प्रष्टो स्वविद्यानैपुणेन

१ सी ई नष्ट्रीं च. २ बी मङ्क्त्री च. ३ बी न दृष्टु°. ४ ए तथा हि. ५ सी डी स्प्रष्टास्त्र°. ६ ई °श्च स्रष्टा ।. ७ ए °द्वा जयमा°.

१ ई °ह्मादि य°. २ सी डी °ल स°. ३ ए सी डी °ष्ट्रीं ऋ°. ४ ए सी डी ई °ङ्क्त्रीं म°. ५ बी °द्य द्रष्ट°. ६ ए दृष्टा अब्धिम°. ७ ई °र्वासामु°. ८ ए सन्तान°. ९ बी °पुष्पमा°. १० सी डी °स्थलक्षे°. ११ ए शापाद°. १२ ए लक्ष्मीं ग°. १३ ए °ना स्र°. १४ ए °गत्वाति°. १५ ई °स्मात्ते क°. १६ बी °ला महा°. १७ ई °त्म्य स्प्रष्टु ज्ञा°. १८ ए बी स्पष्टु ज्ञा°. १९ ए °मी चि°. २० बी °नार्थे चा°. २१ सी स्प्रष्टाः स्वविं°. २२ बी °द्यात्रवि°. डी ई °द्यास्त्रवि°. २३ सी °पुण्येन. डी °पुण्येन. २४ ई °न गृही°.

ग्रहीता नरोस्तु । ऋतं सत्यं शास्त्रं[1] शब्दे[2]शास्त्राद्याम्रष्टा च यथा[3]वस्थितार्थावगमेन विचारयिता वा नरोस्तु । उद्यमित्वाद्रिरीन् रोहणादिशैलान् स्रष्टा वा गन्ता वा नरोस्तु । वारिनि[4]धीन्सप्र्ता च गन्ता वास्तु । यजमानोग्निचिद्वा धनवृद्धिहेतुयागस्य कारयिता वास्तु । परं यदि भवत्या औदासीन्यमुपेक्षानाराधितत्वे[5]नो[6]स्त्रस्प्रष्टा(ष्ट्रा)दिषु चेन्नानुकूलासीत्यर्थः । तत्त[7]थै[8]तदस्त्रस्पर्शनादि[9] मुधा विफलम् ॥

नष्ट्रीम् । अत्र "नशो धुटि"[10] [ १०९ ] इति नः ॥

मङ्क्ष्ीम् । अत्र "[11]मस्जे[12]ः सः" [ ११० ] इति[13] सस्य [14]नः ॥

स्रष्टा । द्रष्टुम् । अत्र "अः सृजि°" [ १११ ] इत्यादिना-अः । [15]अकितीति किम्[16] । निसृष्टम्[17] । दृष्टम् ॥

स्प्रष्टा स्पर्ष्टुम् । आम्रष्टा विमर्ष्टा । त्रप्ता सर्प्ता । इत्य[18]त्र "स्पृश°" [ ११२ ] इत्यादिना[19] वा-अः ॥

अग्निचित् । इत्यत्र "ह्रस्वस्य°" [ ११३ ] इत्यादिना[20] तोन्तः ॥

यजमानः । अत्र "अतो म आने" [ ११४ ] इति मः ॥

औदासीन्यम् । अत्र "आसीनः" [ ११५ ] इत्य[21]ासीनशब्दो निपात्यः ॥

**वचः सुधामुद्गिरति न्यकी[1]र्ण मुखं च[2] पूर्तेन्दुरु[3]चिं जिहीर्षु ।**
**पोपूर्यते कौस्तुभतां नखश्रीः शिष्टः करौ स्वर्द्रुमपल्लवत्वम् ॥८२॥**

१ प °कीर्णं मु°. २ प च मूर्ते°. ३ प °रुचि जि°.

---

१ सी शाद्या°. २ प °ब्ददशब्दशा°. ३ वी °थाम्थि°. ४ प सी °धीन्सुप्तां°. ५ प °नास्वस्प्र°. ६ सी °स्त्रस्पृष्टा°. ७ वी °त्तदैत°. ई °त्तदेतत्त्वद°. ८ प थैदतदस्त्रस्प°. ९ प °दि सुधा. १० ई °टि नः. ११ वी मस्जे श इति शस्य. १२ प °स्जेः श इ°. १३ प °ति शस्य मः ॥. १४ प सी डी न. ॥ स्प्रष्टा. १५ प अती°. १६ सी डी °म् । स°. १७ ई म् । द्रष्ट°. १८ सी डी °त्र दृश°. १९ वी °ना अः. २० सी °ना नोतः ॥ य°. डी °ना नोन्त.. २१ वी °त्याशीन°.

इयं विशिष्टाशिषदब्जवासे तवार्यशीः कामगवीत्वमाशीः ।
अकूतमक्ष्मापितपादमेतद्गजेन्द्रयानं दिदिवत्प्रयातम् ॥ ८३ ॥
किं कूय्यते वा विनिपेव्यसे त्वं सहोदरैः कीर्तितसेवनैर्नु ।
मूर्ध्ना प्रणिस्ते घनघात्यविघ्नो दानीय एषोपि जनस्तवांह्री ॥८४॥

८२–८४. हे अब्जवासे लक्ष्मि अकीर्णं संवद्धं ते वचस्तुष्टास्मीत्यादिगीराह्लादकत्वात्सुधां न्वमृतमिवोद्गिरति क्षरति तथा ते मुखं पूर्तेन्दुरुचि परिपूर्णचन्द्रलक्ष्मीं जिहीर्षु पूर्णेन्दुतुल्यं मुखमित्यर्थः । तथा नखश्रीरत्यारक्तत्वादिगुणैः कौस्तुभतां कौस्तुभमणित्वमात्मनः पोपूर्य्येतेत्यर्थं पोपयति । तथा करौ मार्दवादिगुणैः स्वर्द्रुमपल्लवत्वं पारिजातकिशलयतां स्वस्य शिष्टो वदतः । तथार्यान्पुण्यवतः शास्ति वक्तयार्यशीः । पुण्यपात्रेषु भवन्तीत्यर्थः । इयं प्रत्यक्षा विशिष्टा साधितविशेषकार्याशीरस्तु तत्राप्यहता तवाज्ञेत्यादिनोक्तपूर्वं मङ्गलशंसनं कामगवीत्वं सर्वकार्यसाधकत्वात्स्वस्य कामधेनुतामशिषदवोचत् । तथैतत्प्रत्यक्षमकूतं निःशब्दमक्ष्मापितपादमकम्पितांह्रि प्रयातं मत्समीपेभिगमनं कर्तृ गजेन्द्रयानमैरावणगतिं दिदिवंजितवत् । वा यद्वा किं कूय्यते वचः सुधामुद्गिरतीत्यादि किमित्युच्यते । उपमानोपमेयतोक्त्या यद्वचनादेः सकाशाद्भेदो मयोक्तः सोयुक्त एवेत्यर्थः । यतो नु शङ्के कीर्तितसेवनैर्वचनादिव्याजेन ज्ञापितसेवैः सहोदरैः सुधादिभिरेव साक्षात्त्वं सेव्यसे सर्वसहोदरेषूत्कृष्टत्वादाश्रीयसे । न तु ते सुधादितुल्यं वचनादि किंचिदस्तीत्यर्थः । सुधेन्दुकौस्तुभस्वर्द्रुमपल्लवकामधेनु-

१ सी डी तथार्य॰. २ ए विनेषे॰. ३ बी णिस्तै घ॰. ४ ई ॰ही ॥ अ॰.

१ ए ॰कीर्ण स॰. २ ए ॰सीदि॰. ३ ए ॰धा तमृ॰ ई ॰धा त्वमृ॰. ४ ई ॰वोद्गर॰. ५ ए ते सुख. ६ ए सी ॰लक्ष्मी जि॰. ७ ई ॰मात्मानः. ८ डी ॰आहते त॰. ९ बी ॰पूर्वम॰. १० ई ॰ङ्गलश॰. ११ डी ॰वन्जित॰. १२ ए सी डी ॰दो नयो॰. १३ ए ॰दिरे॰.

गजेन्द्रा अब्धेरुत्पन्नत्वाल्लक्ष्म्याः सहोदरा इति । अतश्चैषोपि मल्लक्षणो जनस्त्वाह्वी मूर्ध्नो प्रणिस्ते चुम्बति नमतीत्यर्थः । यतः कीदृक् । घनै-र्लोहघनैर्घात्या हन्तुं शक्या विघ्ना निष्पुत्रत्वाद्यन्तराया यस्य सः कृच्छ्रो-त्तार्यविघ्न इत्यर्थः । तथा दीयते यस्मै स दानीयः प्रसाददानयोग्यः ॥

अकीर्णम् ॥ डिति । गिरति । अत्र "ऋतां क्ङितीर्" [ ११६ ] इतीर् ॥ बहुवचनं लाक्षणिकस्यापि परिग्रहार्थम् । जिहीर्षु ॥

पूर्त । पोपूर्यते । अत्र "ओष्ठ्यादुर्" [ ११७ ] इत्युर् ॥

अशि । अशिषत् ॥ क्ङिति व्यञ्जने । शिष्टः । विशिष्टा । इत्यत्र "इसासः°" [ ११८ ] इत्यादिना-इस् ॥

आर्येशीः । अत्र "क्वौ" [ ११९ ] इतीस् ॥

आशीः । अत्र "आङः" [ १२० ] इतीस् ॥

अक्ष्मापित । अक्रूतम् । दिदिवत् । इत्यत्र "य्वोः°" [ १२१ ] इत्यादिना यवयोर्लुक् ॥ यवर्जनं किम् । क्रूय्यते । विनिपेव्यसे ॥ व्यञ्जन इति किम् । सेवनैः ॥

कीर्तित । इत्यत्र "कृतः कीर्तिः" [ १२२ ] इति कीर्त् ॥

षोडशः पादः समाप्तः

---

१ ई अब्धरु°. २ प °लक्ष्म्या स°. सी °लक्ष्मा स°. ३ ई °र्ध्नो पर्णि°. ४ प °स्ते युवति. बी °स्ते स्पृशति न°. ५ प यता की°. ६ प सी °नीय प्र°. ७ प °र्णे ॥ ङि°. ८ प गिरिति. ९ प °अ ऋतान्तिती°. १० सी °तीर । ब°. ११ डी °र् । ब°. १२ प °तीरा । ब°. १३ ई बहुव°. १४ ई जिजिही°. १५ ई °र्तम् । पो°. १६ डी र्यत्ते । अ°. १७ प °द । त्विति. १८ बी °ने । विशिष्ट्या । शिष्टः । इ°. १९ सी डी इशासः. ई इः सा°. २० प °दिन् इ°. २१ ई इम् ॥ आर्यसी । अ°. २२ सी °त । दि°. २३ प °त्र घोः इ°. २४ प °म् । क्नूय्य°. २५ प °त्र कृतः. २६ प बी सी ई कीर्त्त ॥. डी कीर्त्त् ॥. २७ सी षोडः पा°. २८ सी पादस°. २९ ई °दः ॥.

धनवात्य । इत्यत्र "आतुमः°" [ १ ] इत्यादिना प्रत्ययः क्तन् ॥ अन्योदि-रिति किम् । प्रणिस्ते ॥

दानीयः । अत्र "बहुलम्" [ २ ] इत्युक्तादर्थादन्यत्रापि कृत् ॥

त्वन्नन्दनस्यास्य पुरापि मातर्न न्यूनमंहश्छिदुरेस्ति किंचित् ।
यत्कृष्टपच्यान्नमयी धरित्री भिदेलिमं भङ्गुरधैर्यमारम् ॥८५॥

८५. हे अंहश्छिदुरे पापच्छेदिके मातस्त्वन्नन्दनस्य मल्लक्षणस्य पुरापि साक्षात्त्वदाशीर्दानात्पूर्वमपि न किंचिन्न्यूनमस्ति । यद्यस्मात्त्वत्प्रसादप्रतापमात्रादपि पृथ्वी कृष्टपच्यानि कृष्टे स्वयं पक्कान्यन्नानि प्राचुर्येण प्राधान्येन वा यस्यां "अस्मिन्" [७.३.२] इति मयटि कृष्टपच्यान्नमय्यस्ति । तथारमरिसमूहो भङ्गुरधैर्यं स्वयंविशीर्यमाणधैर्यमत एव भिदेलिमं स्वयमेव विदीर्यमाणमास्ते ॥

नन्दनस्य । इत्यत्र "कर्तरि" [ ३ ] इति कर्तरि कृत् ॥

भङ्गुर । छिदुरे । भिदेलिमम् । कृष्टपच्य । इत्यत्र "व्याप्ये°" [ ४ ] इत्यादिना घुरकेलिमौ प्रत्ययौ कृष्टपच्यशब्दश्च कर्मकर्तरि स्युः ॥

१ ए °हस्छिदु°. सी °हस्यिदु°. २ ए °पश्चान्न°. ३ बी भिदिलि°. ४ ए °लिमुर°.

१ डीपुस्तके समासे—'धनघात्य इत्यत्र कारक कृतेति समासः'. २ ए °घात । इ°. ३ ए °दिनाः प्र°. ४ बी °त्यादेरि°. ५ डी पुस्तके समासे—'प्रणिस्त इत्यत्र कृत्सञ्ज्ञायां निसनिक्षेति णत्वविकल्पः स्यात्स तु न'. ६ बी °हश्छिदु°. सी °हस्यिदु°. ७ बी त्प्रतापप्रसा°. सी °त्प्रसात्वत्प्रसा°. ८ ए °य—न्य°. ९ सी डी पच्यान्य°. १० ए स्वयं वि°. ११ सी डी °णमस्ति ॥. १२ सी °तंरी क°. १३ ए °रिरिति. बी °रि कृत् इ°. १४ ए सी डी °दुर । भि°. १५ ए °ब्दस्य क°. १६ सी °रि स्यु ॥. डी °रिस्युः ॥.

धत्से[1]जर्यं[9] रुच्यमव्यथ्यभव्ये वास्तव्या चेन्मेसि चित्ते तदानीम् ।
जन्यं रम्यं सूनुना जन्यरम्यापात्याप्लाव्यैस्[2]फातिना[3]पात्यमङ्के ॥८६॥

८६. अव्यथ्येषु मुनिषु भव्या रक्ष्[1]कत्वेन प्रधाना यद्वाव्यथ्या निर्भया च सा भव्या च हे अव्यथ्यभव्ये लक्ष्मि चेत्त्वं रुच्यं मनोज्ञमजर्यमार्यसंगतं धत्से तथा चेन्मे चित्ते वास्तव्या वसन्त्यसि भवसि तदानीं सूनुना जन्यमुत्पत्तव्यं तथा[3]ङ्के ममोत्सङ्गे पात्यं पतनीयं रम्यं च कूर्चाकर्षणादिना क्रीडनीयं च । किंभूतेन सता । जन्या जायमा[4]ना रम्या मनोहरापात्यागच्छन्त्याप्लाव्योच्छलन्ती स्फातिर्वृद्धिर्यस्[5] तेन त्वत्प्रसादात्पुत्रस्योत्पत्ति[6]र्वृद्धिश्[7] स्तादित्यर्थः । शालि[8]नी छन्दः ॥

गान्धारगेयैर्[4]जनगेययशोभिराप्ला-
व्याशेन वत्स भवतस्तनयेन[6] भव्यम् ।
लक्ष्मीरिति प्रवचनीय ऋतोक्त्युपस्था-[7]
नीया जगत्प्रवचनीयगुणा तिरोभूत् ॥ ८७ ॥

८७. लक्ष्मीस्तिरोभूत् । कीदृशी । ऋतोक्तयः सत्यवचनान्युपस्थानीयाआराधिका यस्याः सा । यद्वा ऋतोक्तिभिरुपस्थानीयाराध्या । तथा जगतां प्रवचनीयाः कीर्तनीया गुणा यस्याः सा । तथा प्रवचनीया वदन्ती सती । किमित्याह । हे वत्स भवतस्तनयेन भव्यमुत्पत्तव्यम् ।

---

१ बी °त्सेर्जय रु°. २ ए °व्यसरफा°. ३ सी °स्फाटिना°. ४ ए °ययन°. ५ ए °भित्तप्लान्याशैन. ६ ए °येयेन. ७ सी ऋत्योच्यु°.

---

१ ए °कक्षो प्र°. २ बी °गते ध° ३ ए तथोङ्के समो°. ४ सी °मान्या र°. ५ ए °स्य—व°. ६ ए बी °त्तिवृद्धि°. ७ ए श्च तादि°. ८ ए °लिनी छ°.

कीदृशा। गान्धारस्य तृतीयग्रामस्य गेयो गाता यो जनो देवलोकस्तेनैव गान्धारस्य गेयत्वात्तेन गेयानि यानि यशांसि तैः कृत्याद्गाव्यादेन पूर्णायदिपेनेति ॥

अजर्यम्। इति "संगतेऽजर्यम्" [ ५ ] इति निपात्यम् ॥

रप्यम्। अवपव्य। पाकोव्या। एते "रप्य०" [ ६ ] इत्यादिना कर्तरि निपात्याः ॥

भव्ये। गेय। जन्य। रम्य। आपात्य। [आ?]ग्राव्य। इत्येते "भव्य०" [ ७ ] इत्यादिना कर्तरि वा निपात्या. ॥ पक्षे। सनयेन भव्यम्। जनगेय। सुजुना जन्यम्। रम्यम्। आपात्यम्। आह्राव्यायोमें ॥

प्रवचनीयोपस्थानीयादावर्द्धा "प्रवचनीयादय." [ ८ ] इति कर्तरि वा निपात्यौ ॥ पक्षे। प्रवचनीयगुणा ॥ लघुरूपे। कतोपसुपस्थानीया। वसन्ततिलका छन्द. ॥

आश्लिष्टैर्दयितां नभोधिशयितैः स्वं यानमध्यासितै-
र्लक्ष्मीं शश्वदनूषितैर्मुदमुपारूढैस्त्वरामास्थितैः।
पुष्पक्षेपमिषात्तदामरजनैरारूढहर्षो नृपः
किं श्लिष्टः किमुपासितोधिशयितः किं वाथ वानूषितः॥८८॥

८८. तदा लक्ष्म्या वरप्रदानकाल आरूढ आश्रितो हर्षो येन स आरूढहर्षो नृपः कर्णः पुष्पक्षेपमिषात्कुसुमवर्षव्याजादमरैः किं श्लिष्टो

१ बी शश्वद°. २ ए °पास्तदा°. ३ ए °पोन्नृप.. ४ ए °वाशितो°.

१ बी सी डी °नि य°. २ बी डी °दिपेने°. ३ ए डी ई °ह्राव्य। ए°. ४ ए °त्याः ॥ सव्ये. ५ ए रम्या। पा°. ६ बी °रि नि°. ७ सी डी °न ४°. ८ सी डी °स्थापनी°. ९ ए °पोन्नृपः. १० बी पुष्पक्षे°. ११ ए °जनैः.

मित्रैरिव स्नेहातिरेकादालिङ्गितः । किं वोपासितो बान्धवैरिव सदा समीपावस्थानेन सेवितः । किं वाधिशयितः परिचितलोकैरिव सुखवार्तालापेनाश्रितः । अथ वानूषितः प्रेष्यैरिवानुगमनादिनानुसृतः । किंभूतैर्दयितामाश्लिष्टैः सभार्यैरित्यर्थः । तथा नभोधिशयितैराश्रितैस्तथा स्वं यानं विमानमध्यासितैस्तथा लक्ष्मीं श्रीदेवीं शश्वदनूषितैरनुसृतैस्तथामुदमुपारूढैराश्रितैस्तथा त्वरामौत्सुक्यमास्थितैराश्रितैः ॥ शार्दूलविक्रीडितं छन्दः ॥

अविभक्तचित्तैः सुजनैरुपस्थितो
जननीविजातैर्न्वनुजीर्णकल्मषः ।
स विजात उर्व्या प्रविभक्त उन्नतिं
न तपोनुजीर्णः प्रकृतो न च स्वयम् ॥ ८९ ॥

८९. स कर्णः सुजनैः पुरप्रधानलोकैरुपस्थितो वर्धापनकसूचकवस्त्राद्युपढौकनेनाश्रितः । किंभूतैः । सद्भिः । जननीविजातैर्नु । एकमात्रा प्रसूतैरिव सहोदरैरिवाविभक्तचित्तैर्मिथोभिन्नमनोभिः । यतः कीदृक् सः । उर्व्यामुन्नतिमभ्युदयं विभक्तो विभागेन स्थापितवान् । ईदृक्कुत इत्याह । यत उन्नतिं पुत्रलाभैवररूपमभ्युदयं विजातः प्रसूतः । ईदृशोपि कुत इत्याह । यतो नु जीर्णं लक्ष्मीप्रसादेन क्षयं नीतं कल्मषं

१ ए न विस्म॰.

१ ए वाभूषि॰. २ ए ॰वामुग॰. ३ बी ॰नुश्रितः. सी डी ॰नुधृतः. ४ ए ॰तागाश्लि॰. ५ ए ॰श्रियितैतथा. ६ ए ॰नुमृते॰. बी ॰नुश्रिते॰. ७ ए सी डी ॰र्णः स्वज॰. ८ ए ॰नीनुजा॰. ९ ए ॰मात्रोन्न॰. १० ए ॰र्व्यांपुन्न॰. ११ सी ॰न् । इदृक्कुत॰. ए ईकुत. १२ बी ॰दृकुत. १३ ए ॰भपुत्रलाभव॰. १४ ए सी ॰जात प्र॰. १५ ए यं कल्मष निपु॰. १६ सी ॰ष निपु॰.

निःपु(निष्पु)त्रत्वरूपं पापं येन सः । ईदृशोपि कुत इत्याह । यतस्तपो नानुजीर्णः[1] सात्त्विकत्वात्तपः प्राप्य न क्षीणस्तथा महापुरुषत्वात्स्वयं लक्ष्मीसाक्षात्करणाद्गर्वं[2] न प्रकृतो न कर्तुमारब्धवान् । योपि[3] तपो नानुजीर्णः स्वयं च न प्रकृतोत एवानुजीर्णकल्मषो[4] निष्पापो मुनिः स्यात्सोपि सुजनैस्तपःप्रभावान्निवर्तितवैरत्वाज्जननैर्वि[5]-जातैरिवाविभक्तचित्तैः[6] सद्भिः सेव्यत उन्नति प्रभावनां विजातः सन्नु-न्नतिमुर्व्यां[7] विभजतीत्युक्तिः[8] ॥ सुदन्तं छन्दः । स्यौ स्जौ गः[9] सुदन्तम् ॥

प्रकृतोत्सवैः सोनुगतो मुदं गतैरमृतं नु पीतैर्विनिपीत ईक्षणैः ।
रुचिरासितः कुञ्जरपृष्ठ आसितः सदनं प्रयातोभ्यनुयातवासवः ॥ ९० ॥

९०. स कर्णः[10] सदनं राजभवनं प्रयातः । कीदृक्सन् । मुदं गतैर्हृष्टैरतः[11] प्रकृतः कर्तुमारब्ध उत्सवो नगरशोभादिमहो[12] यैस्तैः[13] पौरैरनुगतस्तथामृतं नु पीतैः[14] स्वस्वामिदर्शनानन्देन[15] सुधां पीतैरिवेक्षणैर्विनिपीतः सहर्षं[16] दृष्टस्तथा कुञ्जरपृष्ठ आसितः स्थितस्तथा रुचिरमासितमासनबन्धो यस्य सोत एवाभ्यनुयातवासवोनुकृतेन्द्रः[17][18] ॥

आश्लिष्टैर्दयितास् नृपः श्लिष्टः । नभोधिशयितैः[19][20] नृपोधिशयितः[21] । स्वरामास्थितैः उपस्थितः सः । यानमध्यासितैः नृप उपासितः । लक्ष्मीमनूषितैः[22]

१ ए °वैः सानु°.

१ ए °र्णः स्वत्वि°. २ ए °णादूर्वं. ३ ए योति त°. ४ ए जीर्णःक°. ५ ए °नमैवि°. ६ ए °भाविना जा°. ७ ए °न्नतनु°. ८ ए °क्तिः । मुद°. ९ ए °गः मुद°. १० ए कर्ण स°. ११ बी °रत एव प्रकृतः प्रक°. १२ बी °दिर्महो. १३ ए °होदयै°. १४ बी °तैः सुस्वा°. १५ ए °नातिदेन सुधा. १६ ए °हष दृ°. १७ ए एङानु°. १८ सी डी °वानु°. १९ ए °शयैः नृ°. २० बी °यितः नृ°. २१ ए °यितैः । नृपोधिशयिता । त्व°. २२ ए °मभूपि°.

नृपोनूपितः । उन्नति त्रिजातः जननीत्रिजातैः । मुदमुपारूढैः आरूढहर्षैः । तपो नानुजीर्णः अनुजीर्णकल्मषः । उन्नतिं प्रविभक्तः अविभक्तचित्तैः । अत्र "श्लिष°"[1] [ ९ ] इत्यादिना कर्तरि वा क्तः ॥

स्वयं न प्रकृतः प्रकृतोत्सवैः । अत्र "आरम्भे" [ १० ] इति कर्तरि वा क्त[2] ॥

गत्यर्थे[3] । मुदं गतैः[4] सोनुगतः । सदनं प्रयातः अभ्यनुयातवासव[5] ॥ अकर्मक । आसितः रुचिराम्भितः[6] ॥ पिब । अमृत पीतैः स विनिपीत[7] । अत्र "गत्यर्थ°" [ ११ ] इत्यादिना क्तो वा कर्तरि[8] ॥

॥ इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचिताया श्रीसिद्ध-हेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तौ दशम सर्ग ॥



१ सी डी श्लिष्य इ°. २ ए सी °रि क्तः. ३ बी °त्यर्थः । मु°. ४ ए °गतैं सो°. ५ ए अत्यनु°. ६ बी °मित । रु°. ७ बी °पीत । अ°. ८ ए °र्तरिः ॥.